abhinava gadā is a reply to Appayya Dixita's criticism of Dvaita doctrines. His Abhinavāmṛta is a commentary on Pramāṇapaddhati. His commentary on Ṛgbhāṣyatīkā is named as Rūpāvatāra. A special feature of his commentaries is that he traces the interpolations and deletions in the Bhāṣya and Tīkā. He also traces the variant readings. His arguments are forceful and his approach is novel.

**Chalāri Narasimhāchar's sub-commentary on Ṛgbhāṣyatīkā** (1620-74 A.D.)

He was a contemparory of Sri Satyanātha tīrtha. He has written commentaries on Sadāchārasmṛti, Yamaka bhārata etc. smaller treatises of Sri Ānandatīrtha. He has a useful work on Brahmasūtra viz. Brahmasūtra adhikarnārtha sangraha. The sub-commentary on Ṛgbhāṣyatīkā is his major work. It is very elaborate. It gives a lot of references in support of interpretation offered in Bhāṣya and Tīkā. It is very helpful for the full understanding of the observations in the Bhāṣya and Tīkā. It is widely used by the scholars and the students.

All these are included in this volume. In addition to the above there are a few more sub-commentaries on Ṛgbhāṣya tīkā written by Kambaluru Ramachandratīrtha. Tāmraparṇi Āchārya etc. It would have been very unwieldy if these sub-comentaries were also to be included in this edition. As it is this edition is issued in two volumes.

To prepare this edition manuscripts were procured from Sri Uttarādimath Library, Pandurangi family collection, and one or two other sources. Earlier printed books were also consulted in the case of Tīkā, Mantrārtha manjari and chalāri.

I take this opportunity to record my appreciation of the assistance given by three young scholars Sri Ramakanta Joshi, Sri Krishnāchārya Upādhyāya and Sri H.P. Nagaraj.

I thank Sri N. Narasimha Rau the Chairman of Dvaita Vedanta Foundation for entrusting the editing of this valuable work to me.

*Mahāmahopādhyāya*
**Prof. K.T. Pandurangi**
Hon. Director,
Dvaita Vedanta Studies and
Research Foundation, Bangalore

# विषयानुक्रमणिका

## प्रथमोध्यायः

# ऋङ्मन्त्रानुक्रमणिका

✤ ✤ ✤

# सूक्तानां ऋषिदेवता छन्दोनुक्रमणिका

**सूक्तसङ्ख्या**

१. मधुच्छन्दा वैश्वामित्रः । अग्निः । गायत्री ।

२. मधुच्छन्दावैश्वामित्रः । १-३ वायुः, ४-६ इन्द्रवायू;
७-९ मित्रवरुणौ । गायत्री ।

३. मधुच्छन्दावैश्वामित्रः । १-३ अश्विनौ; ४-६ इन्द्रः;
७-९ विश्वेदेवाः; १०-१२ सरस्वती । गायत्री ।

४. मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री ।

५. मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री ।

६. मधुच्छन्दा वैश्वामित्रः । १-३ इन्द्रः; ४-६, ८,९ मरुतः;
५-७, मरुत इन्द्रश्च; १० इन्द्रः । गायत्री ।

७. मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री ।

८. मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री ।

९. मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री ।

१०. मधुच्छन्दा वैश्वामित्रः । इन्द्रः । अनुष्टुप् ।

११. जेता मधुच्छन्दसः । इन्द्रः । अनुष्टुप् ।

१२. मेधातिथिः काण्वः । अग्निः,
६ प्रथमपादस्य (निर्मथ्याहवनीयौ) अग्नी । गायत्री ।

१३. मेधातिथिः काण्वः । (आप्रीसूक्तं, अग्निरूपा देवताः) १ इध्मः; समिद्धोऽग्निर्वा,
२ तनूनपात्, ३ नराशंसः, ४ इळः, ५ बर्हिः, ६ देवीर्द्वारः, ७ उषासानक्ता,
८ दैव्यौ होतारौ प्रचेतसौ, ९ तिस्रो देव्यः सरस्वतीळाभारत्यः,
१० त्वष्टा, ११ वनस्पतिः, १२ स्वाहाकृतयः । गायत्री ।

१४. मेधातिथिः काण्वः । विश्वेदेवाः (विश्वैर्देवैः सहितोऽग्निः)
३ इन्द्रवायुबृहस्पतिमित्राग्निपूषभगादित्यमरुद्गणाः,
१० विश्वेदेवाग्नीद्रवायुमित्रधामानि, ११ अग्निः । गायत्री ।

१५. मेधातिथिः काण्वः (प्रतिदैवतं ऋतुसहितं) १ इन्द्रः, २ मरुतः,

३ त्वष्टा, ४ अग्निः, ५ इन्द्रः, ६ मित्रावरुणौ, ७-१० द्रविणोदाः,
११ अश्विनौ, १२ अग्निः । गायत्री ।

१६. मेधातिथिःकाण्वः । इन्द्रः । गायत्री ।

१७. मेधातिथिः काण्वः । इन्द्रावरुणौ । गायत्री,
४-५ पादनिचृत् (५ ह्रसीयसी वा) गायत्री)

१८. मेधातिथिः काण्वः । १-३ बृह्मणस्पतिः,
४ इन्द्रो बृह्मणस्पतिः सोमश्च, ५ ब्रह्मणस्पतिः सोम इन्द्रो दक्षिणाच,
६-८ सदसस्पतिः, ९ सदसस्पतिर्नराशंसोवा । गायत्री ।

१९. मेधातिथिः काण्वः । अग्निर्मरुतश्च । गायत्री ।



श्रीः

श्री आनन्दतीर्थभगवत्पादाचार्यविरचितं

# ऋग्भाष्यम्

ॐ नारायणं निखिलपूर्णगुणार्णमुच्चसूर्यामितद्युतिमशेषनिरस्तदोषम् ।
सर्वेश्वरं गुरुमजेशनुतं प्रणम्य वक्ष्याम्यृगर्थमतितुष्टिकरं तदस्य ॥

ओमशेषगुणाधार इति नारायणोप्यसौ ।
पूर्णो भूतिवरोनंतसुखो यद्व्याहृतीरितः ॥
गुणैस्ततः प्रसविता वरणीयो गुणोन्नतेः ।
भारतिज्ञानरूपत्वाद्भर्गो ध्येयो खिलैर्जनैः ।
प्रेरकोशेपबुद्धीनां स गायत्र्यर्थ ईरितः ॥
सपूर्णत्वात्पुमान्नाम पौरुषे सूक्त ईरितः ।
स एवाखिलवेदार्थः सर्वशास्त्रार्थ एव च ।
स एव सर्वशब्दार्थ इत्याहोपनिषत्परा ।
तावा एता ऋच इति विशेषेणाप्यृगर्थताम् ।
यो देवानामिति श्रुत्या देवनाम्नां विशेषतः ।
स्पष्टत्वात्तद्गतत्वेन तत्राहाग्रेऽग्निनामकम् ।
अग्रणीत्वं यदग्नित्वमित्यग्रे नाम तद्भवेत् ।
एवमेवाह भगवान्निरुक्तिं बादरायणः ।
यथैवाग्न्यादयः शब्दाः प्रवर्तन्ते जनार्दने ।
तथा निरुक्तिं वक्ष्यामो ज्ञानिनां ज्ञानसिद्धये । इति तेन ।

## श्रीजयतीर्थविरचिता ऋग्भाष्यटीका

हरिः ॐ । नारायणाभिधं ज्योतिः प्रत्यूहध्वान्तशान्तिकृत् ।
कमलाकमलानन्दमन्तः स्वान्तमुपास्महे ॥ १ ॥
ऋचां पदान्युपादाय तेषां भाष्यपदैः सह ।
कुर्मः संवादितामात्रं यथाधीतं यथामति ॥ २ ॥

इहखलु संसाराकूपारपारं जिगमिषतां प्रार्थनीयस्य भगवत्प्रसादस्य तज्ज्ञानमन्तरेणा-
न्भवात्तदर्थं प्रवृत्ता अपि वेदा अप्रतिपत्तिविप्रतिपत्तिभ्यां न तत्करणतामश्नुवते । अतस्तेषां

भगवत्परत्वप्रकारप्रदर्शनार्थं कासांचिदृचां भाष्यं करिष्यन्नाचार्यः प्रारिप्सितस्या विघ्नेन परिसमाप्तये प्रचयायन नारायणप्रणामस्तवने कुर्वन्प्रयोजनं च दर्शयति ॥ नारायणमिति ॥ अनवधारितस्वरूपस्य प्रणामायोगात्स्वरूपावधारणस्य च लक्षणेन विनाऽसम्भवान्नारायणस्य लक्षणमाह ॥ निखिलेति ॥ निखिलाः निःशेषाः । पूर्णाः प्रत्येकम् । तेच ते गुणाश्च । अर्ण इत्युदकनाम ततो मत्वर्थे तद्धिता इति ड प्रत्ययः । निखिलपूर्णगुणैरर्णः समुद्र इव निखिल पूर्णगुणार्णस्तम् । केते गुणा इत्यतो लेशेन दर्शयति ॥ उच्चेति ॥ अमिताश्चते सूर्याश्च सूर्यामिताः कडाराः कर्मधारय इति विशेषणस्य परनिपातः । उच्चाः सामस्त्येनाविर्भूतप्रकाशाश्च ते सूर्यामिताश्च तेषां द्युतिरिव द्युतिर्यस्यासौ तथोक्तः । यद्वोच्चाश्च ते सूर्याश्च तैरमिता अपरिच्छिन्ना द्युतिर्यस्येति व्याख्येयम् । लक्षणान्तरमाह ॥ अशेषेति ॥ अशेषेण निरस्ता दोषा यस्मात्सोशेषनिरस्तदोषः तम् । लक्षणद्वयं केवलव्यतिरेकिणा साधनीयमिति भावेनाह ॥ सर्वेश्वरमिति ॥ अस्वतन्त्रस्य प्रपञ्चस्येश्वरेण भाव्यमिति प्रसिद्धमेव । ऋकुप्रतिपाद्यतया नतं गुरुत्वेनापि नमति ॥ गुरुमिति ॥ तदुपपादयति ॥ अजेति ॥ ऋगर्थं वक्ष्यामीत्यनेन सन्निधापितमृगर्थस्य वचनं श्रवणं ज्ञानं च तदिति परामृशति । यस्मात्तदृगर्थ-वचनादिकमस्य नारायणस्यातितुष्टिकरं तस्मात् । तदस्येत्येकं वा पदम् । तस्योक्तलक्षणस्यास्य प्रतिपिपादयिषिततया बुद्धिसन्निहितस्येति ।

नन्वेवं चेत्कथं कृतनारायणनुतिप्रणामस्यापि भाष्यकारस्य वक्ष्याम्यृगर्थमिति प्रतिज्ञा न पारंगतेति । मैवं भोः । उक्तमेतत् कासांचिदृचामेव व्याख्या प्रतिज्ञातेति । अत एव ह्युपक्षत्रमिति परमेश्वरस्य भयादि दोषराहित्यं तत्प्रसादाद्भयाभावलक्षणं मोक्षं च प्रतिपादयंतीं सर्वशास्त्रार्थोप-संहाररूपामृचं व्याख्याय समापितो ग्रन्थः । प्रसिद्धं धनमेव हीत्यन्ते माङ्गलिकं पदं चोपनिबद्धम् । असमस्तव्याख्यानप्रतिज्ञासूचनाय मध्य एवैको वर्गो न व्याख्यातः । नकिर्माकिरित्यादि व्याख्यानप्रकारशिक्षणं चैतमेवार्थं प्रकाशयतीति ।

नन्वग्न्यादिप्रतिपादनपराणामृचां व्याख्यानादिकं कथं नारायणस्यातितुष्टिकरम् ? न । सकलवेदानां मुख्यतो भगवत्प्रतिपत्तिहेतुत्वात् । कुत एतदित्यत आह ॥ ओमिति ॥ असौ परमेश्वरः । ॐकारार्थस्तावत् । केन निमित्तेन । अशेषगुणाधार इति । इतिशब्दो हेतौ । यथोक्तं ओतत्ववाचीह्योंकार इति । कुत इत्यतश्चोक्तमशेषेति । ॐकारो ह्यशेषगुणाधारत्वं वक्ति । तथाभूतश्च परमेश्वर एवेति स एवोंकारार्थः । किं च नारायणशब्दो हि भगवति प्रसिद्धः स च तस्य गुणपूर्तिवाची तत्समाख्यानादोंकारोपि तत्पर इति निश्चीयत इत्याह ॥ नारायणोप्यसाविति ॥ किमतो

यद्येवमित्यत आह ॥ पूर्णइति । यद्यस्मादेवमोंकारार्थस्तस्माद्व्याहृतीरितः स एव । प्रणवार्था व्याहृतय इति वचनात् । किन्निमित्तम् । यद्यस्मात्पूर्णो भूतिवरोनन्तसुखश्च तस्माद्व्याहृतीरितः । भूबहौ बहुः पूर्णतायामित्युक्तत्वाद्भवतेः कि(पि)प् पूर्णत्वाद्भूः । भूत्यैश्वर्येण वरो महैश्वर्यवानिति भुवः । भवतेरौणादिको डुप्रत्ययः । वरशब्दस्यान्तलोपश्च निरुक्तत्वात् । यथोक्तं वर्णागमो वर्णविपर्ययश्च तथा परौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तमिति । सु शोभनम् वः सुखं यस्य । शोभनताच्च सुखस्यानन्ततयेत्यनन्तसुखत्वात्सुवः । स्वरिति पक्षे निरुक्तत्वादुकारलोपः । शब्दस्वाभाव्यादव्ययत्वम् । किं तथापीत्यत आह ॥ गुणैरिति ॥ यस्माद्व्याहृतीरितस्तस्मात्स एव गायत्र्यर्थ ईरितः । व्याहृत्यर्थत्वाद्गायत्र्याः । केन निमित्तेन । गुणैस्तत इति तत् त्यजियजितनिभ्यो डिदिति तनातेरदिप्रत्ययः । योग्यतया गुणानां सम्बन्धः । प्रसविता जगतो जनक इति सविता । षूङ्प्राणिप्रसव इत्यस्मात्तृच् । वरणीयो भजनीय इति वरेण्यः । वृञ एण्य इति वृणोतेः कर्मण्येण्यः । गुणोन्नतेर्हेतोर्वरणीय इति तद्वरेण्यशब्दार्थयोर्हेतुहेतुमद्भावो दर्शितः । भा दीप्तिः । रतिः क्रीडा । गत्यर्थानां ज्ञानार्थत्वाद्गमेर्ज्ज्ञानार्थता । भादीप्तौ रमुक्रीडायां गम्लृगतौ धातुसमुदायादसुन् । उणादयो बहुलमित्युक्तत्वात् । अदिभूम्यां डुतजिति यथा । असुन्प्रत्ययसंयोगेन भातेर्ह्रस्वता रमेर्गमेश्च टिलोपः । देवशब्दस्तूत्तरत्र व्याख्यास्यते । धीमहीत्यस्य तात्पर्यं ध्येय इति । ध्यायतेः सम्प्रसारणं विकरणलोप आत्मनेपदं च्छांदसम् । व्यत्ययो बहुलमिति वचनात् । अखिलैर्जनैरिति बहुवचनार्थः ।

तृतीयपादतात्पर्यं प्रेरक इति । न इति बहुवचनप्रयोगादशेषेत्युक्तम् । चुदप्रेरण इत्यस्माल्लेट् । एवं योजनीयम् । यो नोस्माकमशेषजीवानां धियो बुद्धीः प्रचोदयात् प्रेरयेत् । तस्य सवितुर्देवस्य नारायणस्य तद्गुणैस्ततं तस्मादेव वरेण्यं भर्गो रूपं धीमहि चिन्तयाम इति । गायत्र्यर्थत्वेपि भगवतः किमायातं प्रकृते अत आह ॥ स इति ॥ यतो गायत्र्यर्थस्तस्मात्सहरिरेव पौरुषे सूक्त ईरितः प्रतिपादितः । गायत्र्यर्थत्वात्तस्य । न च पुरुषसूक्ते पुरुषः प्रतिपाद्यो न विष्णुरिति वाच्यम् । यतः पूर्णत्वात्पुमान्पुरुषोनाम स एव । पॄपालनपूरणयोः अस्मात्पुरः कुषन्निति कुषन्प्रत्ययः । तथापि किमित्यत आह ॥ स एवेति ॥ यतः पुरुषसूक्तार्थो भगवांस्तस्मात्स एवाखिलवेदार्थः । पुरुषसूक्तार्थत्वात्तेषाम् । वेदार्थत्वात्स एव सर्वशास्त्रार्थश्च । स्मृतीनां श्रुतिमूलत्वात् । ततश्च स एव सर्वशब्दार्थः । तेषां वैदिकत्वादित्ये तद्द्वयं प्रसङ्गादुक्तम् ।

एवमनुमानेन परमेश्वरस्य सर्ववेदार्थत्वं प्रसाध्य श्रुत्यापि साधयति ॥ इत्याहेति ॥ इत्येतमुक्तमर्थं परमेश्वरस्य सर्ववेदार्थत्वं तावा एताः सर्वाऋचः सर्वेवेदाः सर्वेघोषा एकैव व्याहृतिः प्राण एवेति परोत्कृष्टा विस्पष्टवादिनीति यावत् उपनिषदप्याह । अनेनैव मन्त्राणां कर्मणि विनियुक्ता-नामविवक्षितार्थत्वेनाव्याख्येयत्वमित्यपि परास्तम् । नन्वेवं सर्ववेदानां भगवत्परत्वाद्यस्य कस्यापि वेदस्य व्याख्यानादिकं तस्य तुष्टिकरमिति किमृचामेव व्याख्यानेनेत्यत आह ॥ विशेषेणेति । सर्वेवेदा इत्युक्त्वा यदृच इति पुनरभिधत्ते तेन जानीमो विशेषेणाप्यृगर्थतामीश्वरस्याहोपनिषदिति । अन्यथा तद्वैयर्थ्यात् । अतस्तद्व्याख्यानादिकं तस्यातितुष्टिकरमिति तदेव क्रियत इति । तावा एता ऋच इतीत्यस्यावृत्त्या योज्यम् । वेदांतराद्विशेषतः कथमृचां परमेश्वरपरत्वमिति तं प्रकारमाह ॥ य इति । यो देवानां नामधा एक एवेति श्रुत्याऽग्न्यादिदेवनाम्नां तद्गतत्वेन भगवद्वाचित्वेन कारणेनर्चां तद्गतत्वेन विशेषतः स्पष्टत्वाद्विशेषेणाप्यृगर्थतामाहेति ।

इदमुक्तं भवति । वेदांतरस्य खल्वापाततः कर्मादिप्रतिपत्तिपरस्य भगवत्परताज्ञानं मन्दानां दुःशकं भवति । ऋचां त्वग्न्यादिगुणवर्णनपराणामग्न्यादिनाममात्रस्य भगवद्वाचित्वज्ञानमात्रेण भगवत्परत्वावधारणं सुकरमिति तासां विशेषतः परमेश्वरपरत्वमुच्यत इति । तदुक्तम् । ऋचस्तु विशेषत इन्द्रादिनामवतो विष्णोर्गुणानल्पज्ञानामपि प्रकाशयन्तीति प्राणे नारायण एवेति विद्यादिति ।

एवम् ऋगर्थव्याख्यानमुपपाद्य सूक्तस्य तात्पर्यं तावदाह ॥ तत्रेति । तत्र ऋक्षु । अग्रे प्रथम सूक्ते । अग्निनामकं भगवन्तमाह प्रतिपादयति वेदः । अग्निनामवतः प्रथमप्रतिपादने को हेतुरित्यत आह ॥ अग्रणीत्वमिति ॥ यद्यस्मादग्रणीत्वमग्नित्वम् अग्निशब्दाभिधेयम् इति तस्मात् । तन्नाम अग्निनाम । अग्रे प्रथमसूक्ते । प्रयुक्तं भवेत् । सह्यग्रणीर्नाम यःस्तुत्यादावग्रे वर्तते । तथात्वं चेश्वरस्याग्निशब्दो वक्ति । अतस्तन्नाम्नैवाग्रे स्तुतिरुपपन्नेति । अत्र वृद्धसंमतिमाह ॥ एवमेवेति । अनेनैवा-भिप्रायेणाग्निशब्दमादिं कृत्वा भगवान्बादरायणः सर्वशब्दानामीश्वरपरतया निरुक्तिं निर्वचनमाह । तदेव कुत इत्यत आह ॥ यथैवेति । यथा येन प्रकारेण निरुक्तौ कृतायाम् । इति भगवतः प्रतिज्ञावाक्येनाग्निशब्दमादिं कृत्वा निरुक्तिमाहेति ज्ञायत इत्यर्थः ।

नहि भगवतो यादृच्छिकी प्रवृत्तिः नाप्येतद्विहाय निमित्तान्तरकल्पने प्रमाणमस्ति यत एवमग्निशब्दस्य प्रथमत्वमुपपन्नं तेन कारणेन तत्राहाग्रे ग्निनामकमिति सम्बन्धः । एवमुत्तरत्रापि सूक्तादिक्रमनियमे कारणानि विशेषशास्त्रबलेन ज्ञातव्यानीति प्रदर्शनार्थमिदमुक्तम् । चिरंतन-

निरुक्त्याद्यनुसारेण प्रवृत्तेऽस्मद्व्याख्यानेऽर्वाचीननिरुक्त्यादिविसंवादो नादरणीय इत्येतदप्यनेन सूचितं भवति। ऋगर्थश्च त्रिविधो भवति एकस्तावत्प्रसिद्धाग्न्यादिरूपः अपरस्तदन्तर्गतेश्वरलक्षणः अन्योध्यात्मरूपः। तत्त्रितयपरं चेदं भाष्यम्।

## श्री राघवेन्द्रतीर्थविरचिता मन्त्रार्थमञ्जरी

अशेषगुणसम्पूर्णं सर्वदोषविवर्जितम्॥
अनन्ताम्नायसंवेद्यं वन्देऽहं कमलापतिम्॥ १॥
प्रणम्य श्रीमदानन्दतीर्थादिगुरुशेखरान्॥
सङ्ग्रहीष्यामि ऋग्भाष्यप्रोक्तानर्थानृचां स्पुटम्॥ २॥

ऋक्शाखागतैकोत्तरसहस्रसूक्तमध्ये कानिचिच्चत्वारिंशत्सूक्तानि भगवत्पादैरग्न्यादिदेवतापरत्वेन तदन्तर्गतविष्णुपरत्वेनाध्यात्मपरत्वेन चेत्येवं त्र्यर्थपरतया व्याख्यातानि॥ तत्रैके चोदयन्ति– ''तत्तत्कर्मणि विनियुक्तानां मन्त्राणामर्थविवक्षावत्त्वस्य पूर्वतन्त्रीयाध्यायद्वितीयपादे 'तदर्थशास्त्रात्' इति मन्त्राधिकरणे सिद्धत्वेन मीमांसकाभिमतशब्दसामर्थ्यरूपलिङ्गेन तत्तत्प्रकरणेन च तत्तद्देवतार्थकत्वमेवोचितम्। न तु विष्ण्वाद्यर्थत्वमपि। मानाभावात्। अनेकार्थत्वस्यान्याय्यत्वाच्च। सर्वसूक्तानां विष्णुसूक्तत्वापत्त्या आग्नेयादिसूक्तव्यवस्थानुपपत्तेश्च। अनेकार्थत्वे तन्निबन्धनवाक्य-भेदापत्तेश्च। 'अर्थैकत्वादेकं वाक्यम्' (२।१।४६) इति जैमिन्युक्त्या अर्थैकत्वनिमित्तक-त्वादेकवाक्यताया इत्यादि॥'' तत्र ब्रूमः– 'ओंकारस्तावद्ब्रह्मवाची' 'ओमिति ब्रह्म' (तै०उ०१) इत्यादिश्रुतेः। 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' (गी० १७।२३) इत्यादिस्मृतेः॥ ब्रह्मोंकारवाच्यम्। गुणपूर्तिरूपोंकारप्रवृत्तिनिमित्तवत्त्वात्। यत् यच्छब्दप्रवृत्तिनिमित्तवत् तत् तच्छब्दवाच्यम्। यथा घटादिपदवाच्यं घटादिकमिति वा। ओंकारो ब्रह्मवाची। तन्निष्ठधर्म-प्रवृत्तिहेतुकत्वात्। सामान्यव्याप्त्या संमतवदिति वा। इत्यनुमानाच्च॥ ओतत्ववाची ह्योंकारः' (१।१।१) इत्यनुव्याख्यानसुधयोरोंकारस्य गुणपूर्तिनिमित्तकत्वम्, ब्रह्म च गुणपूर्णमिति, तदेव विष्णुरिति च, व्यक्तम्॥

वेदाश्चोंकारस्य व्याख्यानम्। 'ओंकारेण सर्वा वाक् संतृण्णा' (२।१३) इति छन्दोगश्रुतेः॥ तथा च, विष्णुः सर्ववेदप्रतिपाद्यः। तद्व्याख्येयोंकारार्थत्वात्। यो यद्व्याख्येयार्थः स तद्व्याख्यानप्रतिपाद्यः। यथा संमत इति वा। वेदा विष्णुपराः। विष्णुपरोंकारव्याख्यानत्वात्। यो

यत्परशब्दव्याख्यानं स तत्परः । यथा संमत इति वा । इत्यनुमानेन सर्ववेदानां विष्ण्वर्थत्वसिद्धेः 'मानाभावात्' इत्ययुक्तम् ॥ वेदानामोंकारस्य व्याख्यानव्याख्येयभावश्च साक्षादेव वा, अनुव्याख्यानऋग्भाष्ययोरुक्तदिशा व्याहृतिगायत्रीपुरुषसूक्तद्वारा वा, इति ध्येयम् ॥

किं च, 'अदुःखमितरत्सर्वं जीवा एव तु दुःखिनः ॥ तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते' इति (परमश्रुत्या) श्रुतेर्जीवानां दुःखप्रहाणरूपबन्धनिवृत्तिलक्षणमोक्षार्थं प्रवृत्तत्वात् । सत्यबन्धनिवृत्तेश्च 'यस्य प्रसादात्' इत्यादि (नारायण) श्रुत्या राजप्रसादसाध्यनिगडबन्धनिवृत्तिदृष्टान्तेन च परमपुरुषप्रसादसाध्यत्वात् । प्रसादस्य च 'प्रियो हि ज्ञानिनोऽत्यर्थम्' (गी० ७।१७) इत्यादिना ज्ञानसाध्यत्वात् । शास्त्रैकसमधिगम्यपुरुषज्ञानस्य च वेदैरेवोत्पाद्यत्वात्, वेदानां विष्ण्वर्थत्वसिद्धिः ॥ तथा च प्रयोगः सर्वे वेदा विष्णुज्ञानजनकाः । तत्साध्यमोक्षार्थं प्रवृत्तत्वात् । यो यत्साध्ययदर्थं प्रवृत्तः स तज्जनकः । यथा भोजनक्रियासाध्यतृप्त्यर्थं प्रवृत्तो भोजनक्रियाजनक इति वा । यः शब्दो यत्साध्ययदर्थं प्रवृत्तः स तज्जनकः । यथा घटादिज्ञानसाध्यघटादिव्यवहारार्थं प्रवृत्तो घटादिशब्द इत्यादिरूपेण वा ध्येयः ॥ अपि च, नापातप्रतीत एव श्रुत्यर्थः । तथात्वे, कर्मतन्त्रे नामपादीयचित्राज्याधिकरणे 'आज्यैः स्तुवते' इति वाक्यस्थाज्यपदस्य 'यदाजमीयुस्तदाज्यानामाज्यत्वम्' इति वाचनिकनिरुक्त्यादिबलेन मन्त्रार्थत्वं नोच्येत । ब्रह्मतन्त्रे चाकाशाधिकरणादौ 'आकाश इति होवाच' (छा० उ० १।९) इत्यादिवाक्यस्थाकाशादिशब्दस्य 'स एष परोवरीयान्' (छा० उ० १।९) इत्यादिवाक्यशेषस्थलिङ्गादिबलेन विष्ण्वर्थत्वं नोच्येत । किं तु मीमांसित एव । मीमांसा चोपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्तीनां श्रुतिलिङ्गवाक्य-प्रकरणस्थानसमाख्यानां चानुगुण्यानुसंधानम् । उपपत्तिश्च । मानान्तरोपबृंहितत्वमानान्तर-विनियुक्तत्वादिका प्रागुक्तानुमानरूपा च, 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' (गी० भा० उदा० स्मृ०) इत्यादेः ॥ तथा च, अग्न्यादिशब्दानां निगमनिघण्ट्वादिरूपानुशासनबलेनाग्नेयादि कर्मादिसिद्धिरूपप्रयोजनबलेन च प्रसिद्धाग्न्यादाविव 'ॐ चमसवदविशेषात् ॐ' (१।४।९) इत्यादौ भाष्योक्तदिशा 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' (भाल्ल०) इति 'हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्ति' (१।४।२४ सू० भा० उदा०) इति 'सर्वनामा सर्वकर्मा सर्वलिङ्गः' (म० उ०) इति यो देवानां नामधा एक एव' (ऋ० म० १०।८२।३) इत्यादि श्रुतिभिः 'सर्वच्छन्दोभिधो ह्येष सर्वदेवाभिधो ह्यसौ' (वाम० पु०) इत्यादिस्मृतिभिश्च सामान्यतः' 'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्' (ऋ० म० १।१६४।४६) इति 'यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः' (आ० उ० भा० २ उदा०) इत्यादिश्रुतिभिः

'बृंहणाद्ब्रह्मनामासावैश्वर्यादिन्द्र उच्यते। एवं नानाविधैः शब्दैरेक एव त्रिविक्रमः। वेदेषु सपुराणेषु गीयते पुरुषोत्तमः' (ब्रह्मा० पु०) इत्यादिस्मृतिभिश्च विशिष्यानुशासनरूपाभिर्विष्णावपि शक्तेः सिद्धत्वेन विष्णवर्थत्वस्यापि मन्त्रेषु न्याय्यत्वात्।

एवं हि तत्त्वविदां मतं द्विविधा ह्यग्न्यादिशब्दाः। नीरसंवलितक्षीरवत् अयःपिण्डसमारूढवह्निवच्च। अग्न्यादितत्तज्जीवचिता संवलितं यद्भगवच्चिद्रूपं विशिष्टं सपिण्डं तद्वाचिनः केचित्। केवलशुद्धचिद्वाचिनः केचिदिति॥ शुद्धचिद्वाचिनोऽपि क्वचिद्भगवच्चिद्वाचिनो जीवचिद्वाचिनश्चेति द्वेधा॥ तत्राद्याः– 'अग्निमीळे' (ऋ० म० १।१।१) इत्यादौ प्रसिद्धाग्न्यादिदेवं विष्णुं च वक्ष्यमाणपरममुख्यमुख्यवृत्तिभ्याम्, 'गङ्गायां मीनघोषौ' इत्यत्र मुख्यामुख्यवृत्तिभ्यां प्रवाहतीररूपार्थद्वयं गङ्गापदमिव, 'राजा कुवलयोल्लासी' इत्यादौ रूढियोगाभ्यां कुमुदभूवलयरूपार्थद्वयं कुवलयपदमिव, युगपदेव व्युत्पत्तिमतः प्रत्याययन्ति॥ अन्त्यास्तु– 'अव्यक्तात्पुरुषः परः' (का० उ० १।३।११) इत्यादावव्यक्तादिपदं प्रकृतीश्वराविव 'शरीररूपकविन्यस्तगृहीतेः' (१।४।१) इति न्यायात् 'अयमग्निर्वैश्वानरः' (७।९) इति काण्वश्रुत्यादौ भगवच्चिन्मात्रवाचिनस्तदेव प्रत्याययन्ति। 'इन्द्रस्यात्मा' (तै० आ० ३।११।३) 'वायोरात्मानम्' (तै० आ० ३।११।४) इत्यादौ 'परिम्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निः' (ऐ० ब्रा० ८।५।२८) इत्यादौ 'भयादस्याग्निस्तपति' (का० उ० २।३।३) इत्यादौ च केवलाग्न्यादिचिद्वाचिनस्तन्मात्रमेव प्रत्याययन्तीति, तत्रापि तदधीनत्वन्यायानुसंधाने तु विष्णवर्थत्वधीरस्त्येव, उक्तं ह्यनुव्याख्याने– 'तेषु तेषु पदार्थेषु रूढिरङ्गीकृता यतः॥ प्रयोजनबहुत्वेन तस्य तस्याविरोधतः॥ उपदेशादिसामर्थ्याद्विष्णौ शक्तिश्च गृह्यते॥ तथाप्येतद्विरोधे तु तद्वाचित्वमपोद्यते' (१।४।११) इत्यादि, तथा– 'स्वातन्त्र्यार्थमभिप्रेत्य शेषशब्दाश्च विष्णवि' (१।४।३) इति च। ननु च 'नामानि सर्वाणि' इति (भाल्ल०) श्रुतिरप्रसिद्धा। 'यो देवानाम्' (ऋ० म० १०।८२।३) इत्यादिका तु विश्वकर्मसूक्तस्था। कथं विष्णोः सर्वदेवनामवाच्यतया नामधारकत्वोक्तिपरा? सूक्तानां विष्णवर्थत्वे विवदमानं प्रति तद्वाक्यस्य विष्णुपरत्वासिद्धेः। अन्यथान्योन्याश्रयात्। इति चेन्मैवं वोचः– अर्वाचीनानामप्रसिद्धत्वेऽप्यनेकशाखाभिज्ञभाष्यकाराद्युक्तवाक्ये श्रुतित्वासंदेहात्। अन्यथा, शाबरभाष्यादावौदुम्बराद्यधिकरणेषु 'ऊर्जपशूनाप्नोत्यूर्जोऽवरुध्य' इत्यवरुध्यान्तवाक्यस्याप्रसिद्धस्योक्तिर्न स्यात्। परभाष्ये च 'ॐ अत एव चोपमा सूर्यकादिवत् ॐ' (३।२।१८) इत्यादौ 'यथा ह्ययं ज्योतिरात्मा विवस्वान्' इत्याद्यप्रसिद्धश्रुत्युक्तिर्न स्यात्। श्रीभाष्ये च 'ॐ ज्योतिश्चरण' (१।१।२४) इत्यत्र 'इन्द्रः शचीपतिर्बलेन पीडितः॥ दुश्च्यवनो वृषा समुत्ससास हि'

इत्याद्यप्रसिद्धवाक्योक्तिर्न स्यात् ॥ यद्यपि 'नामधा' (ऋ० म० १०।८२।३) इति वाक्यं विश्वकर्मसूक्तस्थम्, इति तत्रोक्तः समाधिः 'नापातप्रतीत एव श्रुत्यर्थः अपि तु मीमांसित एव' इति। तथा च तत्र सूक्ते अजस्य नाभावध्येकमर्पितम्' (ऋ० म० १०।८२।६) इति वाक्यशेषोक्तेन 'अजस्य नाभाविति यस्य नाभेरभूत् श्रुतेः पुष्करं लोकसारम् ॥ तस्मै नमो व्यस्तसमस्तविश्वविभूतये विष्णवे लोककर्त्रे' इति स्कान्दस्मृतिसिद्धपद्मनाभत्वलिङ्गेन निरवकाशेन विश्वकर्मश्रुतिसूक्तयोर्विष्णौ दत्तपदत्वात् ॥

न चैवमपि 'तत्रापि यौगिको मुख्यः सर्वत्रास्ति स वैदिके' इति कर्मनिर्णयोक्त्या वक्ष्यमाणादिशा च विष्णौ शब्दानां यौगिकत्वाद्योगाद्रूढे रथकाराधिकरणन्यायेन बलवत्तया न मन्त्रेष्वग्न्यादिशब्दैर्विष्णुधीरिति वाच्यम्। अज्ञरूढितो वाचनिकयोगस्य निरवकाशत्वेन 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायेन बलवत्त्वात्। अत एव 'ॐ कम्पनात् ॐ' (१।३।३९) इत्यत्र 'महद्भयं वज्रमुद्यतम्' (का० उ० २।३।२) इति वाक्ये वज्रशब्देन रूढ्यैवेन्द्रायुधस्य कृत्रिमाकृत्रिमयोः कृत्रिमस्य ग्राह्यत्वात्, 'यू स्त्र्याख्यौ नदी' इति सांकेतिककृत्रिमनद्या एव 'अण्वद्याः' इत्यादौ ग्रहणमिव, अन्यथा संज्ञाकरणानर्थक्यादित्युक्तम्। तदुक्तं चन्द्रिकायाम् 'श्रुत्यर्थनिर्णयार्थत्वात्स्मृतेस्तत्र निरूपितः ॥ अर्थो ग्राह्यो वेदवाक्ये तदभावे तु लौकिकः' इति। अत्र वक्ष्यमाणाग्न्यादिशब्दयोगस्य वेदव्यासकृतनिरुक्त्यादि स्मृतिसिद्धत्वादिन्द्राग्न्यादिशब्दप्रवृत्तिनिमित्तस्य परमैश्वर्यादेरनन्याधीनत्वनिरवधिकत्वाभ्यां 'न ते विष्णो जायमानो न जातः' (ऋ० म० ७।९९।२) इत्यादिश्रुतिस्मृतिबलेन विष्णावेव मुख्यतः सम्भवेन योगस्य महायोगरूपत्वाच्च हरौ योगोऽपि बलवानेव। निमित्ताधिक्ये नैमित्तिकोत्कर्षस्य न्याय्यत्वात्। किं च, 'इन्द्रं मित्रम्' (ऋ० म० १।१६४।४६) इत्यादिश्रुतौ 'आहुः' इत्युक्तप्रयोगबाहुल्यरूपलिङ्गबलेन हरौ विद्वद्रूढेरनुमानाच्च। सा च पूर्वतन्त्रस्थाद्याध्यायतृतीय पादीयव्यवहाराधिकरणोक्तदिशा अज्ञरूढितो बलवती, योगवृत्तावल्पत्वमहत्त्वयोः शब्दप्रवृत्तिनिमित्तस्याल्पत्वमहत्त्वाभ्यामेव सिद्धत्वात्। रूढावज्ञरूढिर्विद्वद्रूढिरिति द्वैविध्यस्य तु 'ॐ समाकर्षात् ॐ' (१।४।१६) इत्यधिकरणे चन्द्रिकादौ समर्थनात्।

न च 'इन्द्रम्' (ऋ० म० १।१६४।४६) इत्यादिकमभेदोक्तिपरम्, न शब्दवाच्यत्वोक्तिपरमिति वाच्यम्। ऐतरेयभाष्येऽन्तर्नयचन्द्रिकायां चास्य निरासात्। अपि च, ऐतरेये– 'तं यच्छतं वर्षाण्यभ्यार्चत्' (२।२।१) इत्यादौ 'सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव

विद्यात्' (२।२।२) इत्यन्तवाक्ये 'एतम्' इत्यनेन 'प्राणस्तम्' (२।१।८) इत्यत्र ब्रह्मत्वेन निर्णीतं 'प्राणो ह्येष य एष तपति' (२।२।१) इति पूर्ववाक्यस्थं प्राणं परामृश्य पुष्कलावयवार्थोक्त्या महायोगेन 'आचक्षते' इत्युक्त्या विद्वद्रूढ्या च लौकिकरूढिप्राबल्यप्रसक्तमन्येषां मुख्यत्वमवधारणेन निरस्य 'तस्माच्छतर्चिनस्तस्माच्छतर्चिन इत्याचक्षते' (२।२।१) इत्यादिरूपेणाभ्यासेन सतात्पर्यं विष्णौ सर्वशब्दमुख्यार्थत्वस्योक्तिपूर्वं सर्ववेदानां विष्णुपरत्वस्योक्तत्वेन मन्त्रेष्वग्र्यादावज्ञप्रसिद्धिमात्रेण विष्णुप्रतीत्यपहारो न शक्यः । तदुक्तमनुव्याख्याने 'आचक्षत इति ह्यत्र सन्तमित्यवधारणात् । योगस्य रूढेः प्राबल्यं विद्वद्रूढिं च तत्र गाम् । बहुशो दर्शयत्यञ्जस्तात्पर्यात्सनिरुक्तिकम्' (१।४।११) इति।

'अर्व स्वराति गर्गरो गोधा परि सनिष्वणत् ॥ पिङ्गापरि चनिष्कददिन्द्राय ब्रह्मोद्यतम्' (ऋ० म० ८।६९।९) इति श्रुतौ गर्गरगोधादिशब्दानामपीन्द्रशब्दिते परमेश्वरे विष्णौ मन्त्रशास्त्रसिद्धनादरूपवर्णाभिव्यक्तिद्वारा वाचकत्वमुक्त्वा ब्रह्मशब्दार्थस्य वेदस्य विशिष्य तद्वाचित्वोक्तेश्च ॥ न चेन्द्रशब्दः पुरंदरपरः । प्रागुक्तमहायोगविद्वद्रूढिविरोधात् । इन्द्रस्य गोधादिशब्दवाच्यत्वस्य मुख्यतो वेदादिबोध्यत्वस्य च बाधाच्च । 'मत्सि सोम वरुणं मत्सि मित्रं मत्सीन्द्रमिन्दो पवमान विष्णुम्' (ऋ० म० ९।९०।५) इति सामानाधिकरण्येन विशिष्येन्द्र शब्दस्य विष्णौ सिद्धत्वाच्च 'णकारो बलं षकारः प्राण आत्मा' (३।२।६) इति विष्णुशब्दान्तर्गत णकारषकारयोर्बलचेष्टार्थकत्वमुक्त्वा ''सयोहेतौ णकारषकारावनुसंहितमृचो वेद'' (३-२-६) इत्यैतरेयश्रुतौ णकारषकारार्थो वेदे सर्वत्र पूर्वोत्तरवर्ण संहितार्थ इत्युक्तत्वाच्च । 'अः इति ब्रह्म' (ऐ० उ० २।३।८) इति ब्रह्मवाचितयोक्तेनाकारेण सह सर्वशब्दानां समानार्थत्वस्य 'अकारो वै सर्वा वाक्' (ऐ० उ० २।३।६) इति श्रुतौ 'अकारः सर्ववागात्मा परब्रह्माभिधायकः' (गरु० पु०) इति स्मृतौ चोक्तत्वाच्च । 'सृजतो हि ते श्रुतयोऽनुवर्तन्ते नैवासृजतः कं वा विदधते कं वा निषेधन्ति स्तुतिमात्रा एव ते स्युः' इति श्रुतिगीतातात्पर्योक्त(शाण्डिल्य)श्रुतौ विध्यादिभागस्यापि भगवतः स्तुतित्वोक्तेश्च । 'यद्वै किंचैतदध्यगीष्ठा नामैवैतन्नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थः' (१) इत्यादिना 'नामैवैतत्' (१) इत्यन्तेन च्छान्दोग्ये सप्तमाध्याये नारदसनत्कुमार संवादे 'यद्वाच ओमिति यच्च नेति यच्चास्याः क्रूरं यदु चोल्बणिष्णु तद्विपूय कवयोऽन्वविन्दन्नामायत्ता समतृप्यञ्छ्रुतेऽधि' (२।३।८) इत्यैतरेये च सर्ववैदिकशब्दानां भगवन्नामतोक्तेश्च । तथा च सूत्रम्– 'ॐ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॐ' (३।३।९) इति 'सोऽहं (भगवो) नामविदेव' (छा० उ० ७।१ शा०) इति श्रुत्या सर्वविद्यानां भगवत्संज्ञात्वाद्भगवद्गुणाभिधायकत्वात्सर्ववेदोक्तगुणोपसंहारः कार्य इति चेत्तदुक्तमुपसंहारसूत्र इति व्याख्यानात् ।

अपि च, 'कश्छन्दसां योगमा वेद धीरः' (ऋ० म० १०।११४।९) इति श्रुतौ 'मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य इत्यहम् ॥ इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन' (भाग० ११।२१।४३) इति स्मृतौ विधिभागदेवताभागादिरपि मामेव बोधयतीत्यर्थस्य दुर्ज्ञानत्वोक्तेश्च। 'नारायणपरा वेदा देवा नारायणाङ्गजाः' (१५) इति द्वितीयस्कन्धपञ्चमाध्याये 'वासुदेवपरा वेदा वासुदेवपरा मखाः' (२९) इति प्रथमस्कन्धद्वितीयाध्याये 'वेदे रामायणे चैव पुराणे भारते तथा। आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते' इति (ह० वं०) स्मृतौ च सर्वत्र विष्णुपरत्वोक्तेश्च। 'वेदैश्च सर्वैरहमेव वेद्यः' (गी० १५।१५) इत्यवधारणेन कृष्णेन स्वस्यैव परममुख्यत्वेन सर्ववेदप्रतिपाद्यतोक्तेश्च। 'सर्वे वेदा यत्पदमामनन्ति' (का० उ० १।२।१५) इत्यत्राऽऽस्य मुख्यतोऽशेषवेदवेद्यत्वमुक्त्वा 'तद्विष्णोः परमं पदम्' (१।३।९) इत्युपसंहाराच्च काठके। समन्वयसूत्रे सूत्रकृताप्यशेषवेदसमन्वयं हरौ प्रतिज्ञाय 'ॐ आनन्दमयोऽभ्यासात् ॐ' (१।१।१२) इत्यादिनाध्यायेन तस्य। प्रपञ्चनाच्च। 'ॐ ज्योतिश्चरणाभिधानात् ॐ' (१।१।२४) इत्यत्राशेषसूक्तोपलक्षकत्वेन 'वि मे कर्णा पतयतो वि चक्षुर्वीऽदं ज्योतिर्' (ऋ० म० ६।९।६) इत्यग्निसूक्तस्य कर्णादिविदूरत्वादि रूपान्यत्रानवकाशविष्णुलिङ्गेन विष्णुपरत्वसमर्थनाच्च। विष्ण्वर्थत्वे वेदानामपूर्वतारूपस्य तात्पर्यलिङ्गस्य प्रतीत्या मोक्षपरत्वाच्च। 'तात्पर्यं नैव दूषणे' (१।२।२) इत्यनुव्याख्यानाद्युक्तदिशा 'न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात्। तत्प्रीणनान्मोक्षमाप्नोति सर्वस्ततो वेदास्तत्पराः सर्व एव' इति (सौपर्ण) श्रुत्या 'प्रियो हि ज्ञानिनोऽत्यर्थमहम्' (गी० ७।१७) इति स्मृत्या च विष्णुप्रतिपादने तज्ज्ञानसाध्यमोक्षाख्य महाफलवत्त्वरूपस्य 'यस्तन्न वेद किमृचा करिष्यति' (ऋ० म० १।१६४।३९) इत्यादेर्विपक्षे निन्दारूपार्थवादस्य 'य इत्तद्विदुस्त इमे समासते' *ऋ० म० १।१६४।३९) इति स्तुतिरूपार्थवादस्य च भावाच्च। अनुक्रमणिकायामपि 'एकैव वा महानात्मा देवता' (२) इति सर्वसूक्तानां परमात्मदेवतात्वस्योक्तत्वाच्च॥

यत्तु– एवं सति, विष्ण्वर्थत्वेनैवालम्। किमग्न्यादि देवतापरत्वेनापि ? गौरवात्। इति, तन्न 'ॐ कल्पनेपदेशात्' (१।४।११) इति सूत्रतात्पर्यनिरूपणपरेऽनुव्याख्याने– तेषु तेषु पदार्थेषु रूढिरङ्गीकृता यतः॥ प्रयोजनबहुत्वेन तस्य तस्याविरोधतः। उपदेशादिसामर्थ्याद्विष्णौ शक्तिश्च गृह्यते' इत्यत्राग्न्यादिदेवतास्वरूप सिध्यादिबहुप्रयोजनाय तत्तद्देवतार्थकत्वस्याप्यावश्यकक-त्वोक्तेर्निगमनिघण्टुव्याकरणादि सिद्धव्युत्पत्तिलभ्याग्न्यादि देवतार्थकत्वस्य त्यागायोगाच्च। 'त्रयोऽर्थाः सर्ववेदेषु दशार्थाः सर्वभारते। विष्णोः सहस्रनामापि निरन्तरशतार्थकम्' इति

स्कान्दस्मृत्या त्र्यर्थत्वस्योक्तत्वाच्च। 'ॐ अन्यार्थं तु जैमिनिः' (१।४।१९) इत्यादौ सूत्रकृता ब्रह्मज्ञानार्थत्वेन कर्मदेवतारूपार्थान्तर स्योक्तत्वाच्च ॥

ननु एवं 'नामानि विश्वाभि न सन्ति लोके' इति (भाल्ल०) श्रुतावन्यस्य वाच्यत्वनिरासपूर्वकं विष्णुवाचित्वोक्तिविरोधः। तथा, 'वेदैश्च सर्वैरहमेव वेद्यः' (गी० १५।१५) इति स्मृतावधा-रणोक्तिविरोधः। तथा 'ॐ तत्तु समन्वयात् ॐ' (१।१।४) इत्यत्रावधारणार्थक'तु'शब्देन विष्णवाख्यं ब्रह्मैव सर्वशास्त्रप्रतिपाद्यमिति प्रतिज्ञाय 'ॐ आनन्दमयोऽभ्यासात् ॐ' (१।१।१२) इत्यादिना 'ॐ एतेन सर्वे व्याख्याता व्याख्याताः ॐ' (१।४।२९) इत्यन्तेन प्रतिनयं समन्वयसूत्रात् 'तत्तु' इति पदमनुवृत्यानन्दमयादि शब्दार्थो विष्णुरेव, इन्द्रादि शब्दार्थो विष्णुरेव, आकाशप्राणाग्निसूक्तस्थज्योतिरादि शब्दार्थो विष्णुरेव, इति प्रमाणोक्तिपूर्वं सर्वशब्दानां विष्णुमात्रार्थत्वसमर्थनाच्च तद्विरोधः। वैश्वानरनये वैश्वानरनामसूक्तादि सर्ववैश्वानरविद्यासु 'ॐ अत एव न देवता भूतं च ॐ' (१।२।२७) इति सूत्रकृता कण्ठरवेणैवान्यस्य प्रतिपाद्यत्व निरासात्तद्विरोधश्च। 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ' (आ० उ० १।३।१५) इत्यन्यस्य ज्ञेयत्वनिरासविरोधश्च। अत एव अन्यप्रतिपादनस्य क्वाप्यनभिमतत्वादेव ''अनाद्यनन्तं महतः परं ध्रुवम्'' (का० उ० १/३/१५) इति वाक्ये महत्परत्वलिङ्गेन प्रधानं प्रतिपाद्यत इति प्राप्ते 'ॐ ज्ञेयत्वावचनाच्च ॐ' (१।४।४) इति सूत्रे मुमुक्षुज्ञेयत्वं क्वापि विष्णोरन्यस्य नोच्यत इत्युक्तम्। इति चेन्मैवम्। मुख्यवृत्त्यान्यार्थकत्वेऽपि परममुख्यवृत्त्यैवान्यार्थकत्वस्य श्रुतिसूत्रादौ निरासात्। 'अन्यावाचो विमुञ्चथ' (आ० उ० ४।५) इत्यादि श्रुतिसूत्रयोः प्राधान्येनान्यस्य ज्ञेयत्वनिरासपरत्वोपपत्तेः। अत एव। 'ॐ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॐ' (३।३।५७) इत्युपासनापादीयाधिकरणे ब्रह्मरुद्रेन्द्रमित्रावरुणाद्यङ्गदेवतावबद्धास्तद्विषया इति यावत्, उपासना नमनपूजनमननादयः कर्तव्या इत्युक्त्वा 'ॐ मन्त्रादिवद्वा विरोधः ॐ' (३।३।५८) इति गुणसूत्रे यथाऽधमदेवतापरमन्त्रास्तदुत्तमदेवतापरत्वेन ज्ञेयास्तथाऽधमदेवता-गुणास्तदुत्तमदेवतासु ज्ञेया ध्येयाश्च, उत्तमदेवतागुणा अधमदेवतासु न ध्येया न ज्ञेयाश्च यथोत्तमदेवतापरत्वेन प्रतीता मन्त्रा अधमदेवतापरत्वेन न ज्ञेयास्तथेति चोक्तम्। न चानेकार्थत्वे वाक्यभेदः। ॐ समाकर्षात् ॐ' (१।४।१६) इति नयसिद्धेन परममुख्यमुख्यवृत्तिभेदेन विष्ण्वर्थत्वतदन्यार्थत्वयोरभ्युपगमात्। तुल्यवृत्त्यानेकार्थत्वेऽक्षादि शब्दवदनेकार्थत्वापत्त्या वाक्यभेदादिदोषः स्यात्। तदुक्तमनुव्याख्याने– 'तस्मात्परममुख्यत्वं विष्णावन्यत्र मुख्यता'

(१।४।११) इति । अत एव न सूक्तस्य व्यवस्थानुपपत्तिदोषः । अग्न्यादिदेवतापरत्वस्यापि सत्त्वेनाग्न्यादि सूक्तव्यवस्थोपपत्तेः ॥

न चैवमुभयत्र तात्पर्ये तात्पर्यभेदात्तन्निबन्धन वाक्यभेदः शङ्क्यः । महातात्पर्यार्थस्यैकत्वात् । 'सर्वोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यं नैव चान्यत्र सत्यम् । अवान्तरं तत्परत्वं तदन्यत्सर्वागमानां पुरुषार्थस्ततोऽतः' इति (पैङ्गि) श्रुतौ 'सर्वज्ञं सर्वकर्तारं नारायणमनामयम् । सर्वोत्तमं ज्ञापयन्ति महातात्पर्यमत्र हि । सर्वेषामपि वेदानामितिहासपुराणयोः ॥ प्रमाणानां च सर्वेषां तदर्थं चान्यदुच्यते' इत्यादिनारदीयपुराणादौ च महातात्पर्यावान्तरतात्पर्यभेदेनानेकार्थकत्वोक्तेः । अग्न्यादि सूक्तैर्भगवदुपासकानामग्न्याद्यधिष्ठानेष्वेव भगवतोऽनुस्मर्तव्यत्वाभि व्यज्यमानत्वप्राप्यत्व-रूपनिमित्तत्रयेणेदमग्निसूक्तमिदं वायुसूक्तमित्यादि व्यवस्थाया वैश्वानरनयान्ते सूत्रकारेणैव समर्थनाच्च ॥ न चैवं सौरसावित्रादिसूक्तभेदायोगो हरिसूक्तविष्णुसूक्तादि भेदायोगश्च, तत्र भगवदभिव्यक्त्यादिकं प्रत्यधिष्ठानभेदस्याप्यभावात्, हरिसूक्तादावधिष्ठानस्यैवाभावादिति शङ्क्यम् । एवं तर्हि, 'पृथग्रूपाणि विष्णोस्तु देवतान्तरगाणि च ॥ अग्न्यादि सूक्तवाच्यानि नाम्ना सूक्तभिदा भवेत्' इति ऋग्भाष्योक्तदिशा अग्न्यादिमानभेदादग्न्यादि सूक्तव्यवस्थास्तु ॥

यापि इदमग्निसूक्तमेव न तु विष्णुसूक्तमित्याद्यध्यापकप्रसिद्धिः, सापि हि सूक्तव्य-वस्थापकविष्ण्वादिनाम्नां व्यवस्थितत्वेनाग्न्यादि सूक्तेष्वभावादिदं हि हरिसूक्तं न तु विष्णुसूक्तमिति प्रसिद्धिवदज्ञानमूलेति 'ॐ ज्योतिश्चरणाभिधानात् ॐ' (१।१।२४) इत्यत्र चन्द्रिकोक्तदिशा युक्ता । यदप्यग्न्यादि सूक्तानां विष्ण्वर्थकत्वेऽभिमते सति 'नारायणो वा इदमग्र आसीत्' इत्यादाविव 'विष्णुंमीळे पुरोहितम्' (ऋ० म० १।१।१) 'विष्णवायां हि दर्शत' (ऋ० म० १।२।१) इत्यादिरूपेण प्रसिद्धविष्ण्वादिशब्दप्रयोगः स्यादिति चोद्यम्, तदप्यग्न्यादि देवतापरत्वस्यापि सत्त्वादग्र्यत्वादि शब्दप्रवृत्तिनिमित्ताग्र्यत्वादि गुणविशिष्टत्वेनोपासनार्थ मग्न्यादि शब्दप्रयोग इति च्छन्दोनये सूत्रकृतैव 'तथा चेतोर्पणनिगदात्' (१।१।२५) इति समाधानाद्वा निरस्तं ध्येयम् । न चात्रोपासनाया अश्रवणं शङ्क्यम् । 'ईळे' इतयुक्तस्तुतेर्गुणानुसंधानपूर्वकत्वात् । 'ॐ आध्यानाय प्रयोजनाभावात् ॐ' (३।३।१५) इति न्यायाच्च । तत्र हि सर्वत्र गुणोक्तेः प्रयोजनान्त-राभावेनाध्यानार्थ त्वज्ञानार्थत्वयोरुक्तेरिति संक्षेपः ।' इति श्रीमन्मन्त्रार्थमञ्जर्यां सर्वतन्त्रस्वतन्त्र श्रीसुधीन्द्रगुरुपादशिष्यश्रीराघवेन्द्रयतिविरचितायामुपोद्घातः ।

## श्रीनिवासतीर्थविरचिता पदार्थप्रकाशिका

व्यासं पूर्णमतेर्विदोषहृदयाम्भोजे सदा वासिनम्
श्रीशं कंजभवादिवन्द्यचरणं तर्काभयेतं मुहुः ।
पूर्णप्रज्ञजयार्यपूर्वकमुनीन् वेदेशसद्योगिनो
वन्देऽहं सकलेष्टदान् स्मरणतो विघ्नौघविद्रावकान् ॥ १ ॥

श्रीमन्न्यायसुधाया यैर्भावः सम्यक् प्रकाशितः ।
तान् वन्दे यादवाचार्यान् सदा विद्यागुरून् मम ॥ २ ॥

अथैतत्कृपया श्रीनिवासाख्यायुतसूरिणा ।
वित्रीयते बुद्धिशुद्ध्यै ऋचां भाष्यस्य पञ्चिका ॥ ३ ॥

सर्वज्ञकल्पाष्टीकाकाराः जयतीर्थश्रीमच्चरणाः समुचितविशिष्टेष्टदेवतोपासनरूपं मङ्गलं मनसि कृत्वा शिष्यशिक्षणाय ग्रन्थादौ तदुपनिबध्नन्ति । नारायणाभिधमिति । क्षयादिदोषरहिततया नाराः वेदाः प्रतिपाद्यतया तदयनत्वान्नारायण इत्येवं निर्दोषवेदप्रतिपाद्यार्थकनारायणपदमुख्यवाच्यत्वोक्त्या वन्द्यत्वप्रयोजकसमुचितत्वमाचष्टे । ज्योतिः सूर्यम् । तद्दर्शयति प्रत्यूहेत्यादिना । 'विघ्नोऽन्तरायः प्रत्यूह' इत्यभिधानात् प्रत्यूहा विघ्ना एव ध्वान्तानि तेषां शान्तिकृदित्यनेन वन्द्यत्वोपपादकमिष्टत्वम् । कमला श्रीर्हरिप्रिया इत्यभिधानात् लक्ष्म्याख्यं यत्कमलं तदानन्दयति सुखयतीति कमलाकमलानन्दम् । प्रसिद्धकमले आनन्दो नाम विकास इति द्रष्टव्यम् । अनेन वन्द्यत्वप्रयोजकं विशिष्टत्वमाचष्टे । एतेनैव सकलवाङ्मनसदेवताया रमायाः पृथगुपासने दोषश्रवणात् सापि नारायणाख्यज्योतिषो विशेषणत्वेनोपासितेति ज्ञातव्यम् ।

स्वान्तं हृन्मानसं मन इत्यभिधानात् । स्वान्तस्य मनसोऽन्तः अन्तः स्वान्तमिति स्वान्तशब्दस्य परनिपातः । शिष्यान् अनुजिघृक्षुः स्वव्याख्यानप्रकारं सूचयन् प्रतिजानीते । ऋचामिति । आदावृचां पदानीति करणं विनोपादाय तथैवोपात्तैर्भाष्यपदैः सह संवादितामात्रम् ऐक्यार्थ प्रदर्शनमात्रं कुर्मः प्रकटीकरिष्यामः । वर्तमानसामीप्याद्वर्तमानवद्व्यपदेशः । भगवत्पादैः ऋक्पदानि यत्र प्रतिविविच्य व्याख्यातानि तत्रैवायं प्रकारोऽन्यत्र तु वस्तर्दिनं नरौ तावविनाशित्वादित्यादौ रीत्यन्तरमप्यस्तीति द्रष्टव्यम् । सर्वेषामपि पदानां सम्यक् साधनं तेषां प्रयोजनसंकीर्तनं च न क्रियत इति मात्रशब्दार्थः । तथाचान्ते वक्ष्यति 'शब्दानां साधनं सम्यक् तत्प्रयोजनकीर्तनम् । नाकार्षं

विस्तरभयादिह तत्क्षम्यतां बुधै'रिति यथाऽधीतमित्युक्त्या अधीतमात्रस्योक्तिरत्रेति भ्रांतिं वारयति यथामतीति । अनेन आनन्दतीर्थभगवद्वचसां विशिष्टव्याख्यानकर्मणि सुराणामधिकारस्यान्यत्र स्वैरेवोक्तत्वात् पुनस्तद्वचसां व्याख्यानाय प्रवृत्तौ स्ववचनव्याहतिरिति शंकाप्यपास्तेति ज्ञातव्यम् । नन्वाद्यपद्यं व्यर्थम् । न च प्रणामस्तवनकरणार्थत्वेन सार्थकमिति वाच्यम् फलप्रमाणयोरभावात् । किंच अनुबन्धचतुष्टयाभावाद्ग्रन्थ एवायं नारम्भणीयो यदर्थं प्रणामस्तवनयोः कर्तव्यता स्यादित्याशंकापरिहारायाद्यपद्यमवतारयति । इह खल्विति । खलु वाक्यालङ्कारे । इह जगतीति केचित् । इह अधिकार्यनधिकारिवर्गे इति सम्प्रदायविदः । अकूपारः समुद्रः । समुद्रोऽब्धिरकूपार इत्यभिधानात् । तथाच संसाराख्यसमुद्रस्यान्तं गन्तुमिच्छतां मोक्षमिच्छतामिति यावत् । अधिकारिणामिति शेषः । कर्तरि षष्ठी । तदर्थं प्रसादजनकभगवद्ज्ञानार्थम् ।

ननु कासांचिदृचां भाष्यकरणे कथं सकलवेदानां भगवत्परत्वप्रदर्शनमित्यत आह ॥ प्रकारेति । तथाच भाष्योक्तरीत्या कासांचिदृचां भगवत्परत्वं ज्ञात्वा तन्न्यायेन सकलवेदानामपि भगवत्परत्वं ज्ञास्यन्तीति भावः । प्रारिप्सितस्येत्यतः पूर्वमन्येषामिति शेषः । निरन्तराय भाष्यकारकृत-नारायणप्रणामादेर्निर्विघ्नसमाप्त्यादि फलकत्वाभावात् । प्रचयाय चेत्यनन्तरं हेतुतया शिष्टाचारपरम्परावगते इति शेषः । तथाचान्येषां प्रारिप्सितस्याविघ्नपरिसमाप्तये प्रचयाय च हेतुतया शिष्टाचारपरंपरावगते नारायणप्रणामस्तवने कुर्वन्निति तयोः स्वरूपसङ्कीर्तनम् । णमु प्रह्वत्वे शब्दे चेति धातुव्याख्यानात् प्रणामस्तवनयोर्नमनशब्दार्थत्वादिति ज्ञेयम् । प्रयोजनं चेति । भाष्यकरणस्येति शेषः । प्रयुज्यते प्रवर्त्यते पुरुषोऽनेनेति व्युत्पत्त्या अनुबन्धचतुष्टयमपि प्रयोजनशब्देनोच्यते । विषयादेरप्यनेन सूचनादिति भावः । केचित्तु चशब्देन विषयादिसमुच्चय इत्याहुः । ननु निखिलम् अल्पं न भवतीति निखिलपदेनैव पूर्णत्वलाभात् पुनः पूर्णपदं पुनरुक्तमतस्तयोरर्थभेदमाह । निखिला इति । निःशेषाः अनन्ताः असंख्याता इति यावत् । पूर्णा अपरिच्छिन्नाः प्रत्येकं निरवधिका इत्यर्थः । ते च ते गुणाश्चेति । निखिलाश्च ते पूर्णाश्चेति विग्रह इत्यर्थः । ननु अर्ण इति कथम् । अर्णस् इत्यस्मात् अर्णसो लोपश्चेति सूत्रात् अर्णसः सकारस्य लोपे चकारात् मत्वर्थे वप्रत्यये कृते अर्णवमिति स्यादित्यत आह । अर्ण इत्युदकनामेति । सकारान्तो अर्णः शब्द इत्यर्थः । अर्णः क्षोदः क्षद्मेत्येकशतोदकनामसु पाठादिति भावः । ततो मत्वर्थ इति । अर्णस् शब्दात् अर्णांसि विद्यन्तेऽस्मिन्निति मत्वर्थे डप्रत्यये कृते टेरिति सूत्रेण डिति परे टिभूतस्य स् इत्यस्य लोपे प्रत्ययाकारसम्बन्धे च सति अर्ण इति रूपमित्यर्थः । यद्यपि तद्धितेषु मत्वर्थे डप्रत्ययो न विहितः । तद्धिताः इति सूत्रं चापञ्चमाध्यायान्तविहितप्रत्ययानां तद्धितसंज्ञाविधायकमेव न

डप्रत्ययविधायकम्। तथापि कर्मण्यण् इत्यादावधिकारसूत्रे सर्वत्र एकवचनप्रयोगवदत्रापि तद्धित इत्येव वक्तव्ये यत्तद्धिता इति बहुवचनं प्रयुक्तं तद्व्यर्थं सत् किंचिदिष्टं ज्ञापयतीति न्यायेनानुक्तप्रत्ययपरिग्रहार्थमिति व्याख्याातत्वेनानुक्तोऽपि मत्वर्थे डस्तद्धिता इति बहुवचनबलात् ज्ञातव्य इति भावेन तद्धिता इति डप्रत्यय इत्युक्तमिति भावः।

ननु अमिताश्च ते सूर्याश्चेत्यत्र विशेषणं विशेष्येण बहुलमित्यनेन समासे प्रथमानिर्दिष्टं समासउपसर्जनमिति विशेषणस्योपसर्जनसंज्ञायाम् उपसर्जनं पूर्वमिति पूर्वनिपाते अमितसूर्यद्युतिमिति स्यादित्यत आह। कडारा इति। बहुवचनमाद्यर्थे। तथाच कर्मधारयसमासे कडारादयश्शब्दाः परतो निपतन्तीति सूत्रात्। 'कडारः कपिलः पिंग' इत्यभिधानात्। कडारजैमिनिः जैमिनिकडार इत्युदाहरणम्। एवं च कडारश्चासौ जैमिनिश्च जैमिनिकडारः इतिवत् अत्रापि विशेषणभूतामितपदस्य पूर्वपदात्परतो निपातनमित्यर्थः। सूर्यस्योच्चत्वं नाम मेषाद्युच्चराशिस्थितत्वमित्यन्यथाप्रतीति निवारणायोच्चशब्दार्थं वदन्नेव विग्रहं दर्शयति। उच्चा इत्यादिना। सामस्त्येनेति। तेन संशमनं चास्य विश्वकर्मा चकार ह। भूमिमारोप्य सूर्यं तु तस्य तेजो विनाशनम्॥ (भूमिं तक्षणार्थं शाणाचक्रे विशातनम्) कृतमष्टमभागं च न व्यशातयताऽव्ययमिति विष्णुपुराणानुसारेण सूर्यस्य सामस्त्येनार्विभूतप्रकाशत्वाभावो द्रष्टव्यः। विशातनाभावदशायां सामस्त्येनेत्यर्थः॥

कडारादिष्वमितशब्दस्य पाठाभावात् कथं परनिपात इत्यस्वरसादाह। यद्वेति। तैरमितेति। अमिताः परिमिता न भवन्तीत्यर्थः। तल्लब्धार्थमाह। अपरिच्छिन्नेति। सूर्यादिद्युतेः परिच्छिन्नत्वादिति भावः। नन्वशेषदोषाणां निरासस्य वक्तव्यत्वेन निरस्ताशेषदोषेति वक्तव्यम्। निरस्तशब्दस्य क्तप्रत्ययान्तत्वेन निष्ठान्तत्वात्। क्तक्तवतू निष्ठेति वचनात्। निष्ठान्तानां प्राक् प्रयोज्यत्वनियमात् 'समस्तदोषोज्झितः' 'निरस्ताशेषदोषवान्' 'विज्ञातार्थोऽपि गोविन्द' इत्यादौ दर्शनाच्चेत्यत आह॥ अशेषेणेति। साकल्येनेत्यर्थः। तथा च नाशेषत्वं दोषाणां विशेषणम्। किं नाम दोषनिरासप्रकारोऽनेन कथ्यतेऽतो नोक्तशंकावकाश इति भावः। केवलव्यतिरेकिणेति। नारायणो निखिलगुणपूर्णो (अशेष) निरस्तदोषश्च सर्वेश्वरत्वात् व्यतिरेकेण अस्मदादिवदिति केवलव्यतिरेक्यनुमानेनेत्यर्थः।

ननु सर्वप्रपञ्चेश्वररूपो हेतुः स्वरूपासिद्ध इत्यत आह। अस्वतन्त्रस्येति। प्रपञ्चस्य सत्ताप्रतीत्यादावस्वतन्त्रतया तन्नियामकेन भाव्यम्। अन्यथा नित्यसुखप्रसङ्गात्। यथोक्तम्। 'यदि

नाम न तस्य वशे सकलमित्यादि। स त्वन्यो न भवति नारायण एवेति सामान्यसिद्धिपरिशेषाभ्यां नारायणस्य सर्वेश्वरत्वं सिद्धमस्तीति न स्वरूपासिद्धिरिति भावः। ऋक्प्रतिपाद्यतयेति। निर्दोषवेदप्रतिपाद्यत्वार्थकनारायणपदप्रयोगेनैव ऋक्प्रतिपाद्यत्वलाभादिति भावः। यद्वा भाष्ये वक्ष्यामीति किं वचनक्रियाकर्मभूतस्यापि ऋगर्थमित्यस्य ऋक्प्रतिपाद्यमित्यस्य नारायणविशेषणत्व-मप्यभिप्रेतमित्याशयेनाह। ऋक्प्रतिपाद्यतयेति।

ननु तदित्यनेन कस्य परामर्शः? न तावदृगर्थस्य। तस्य पुल्लिङ्गेन प्रकृतस्य नपुंसकलिङ्गेन परामर्शायोगात्। नापि ऋगर्थवचनस्य। वक्ष्यामीत्याख्यातार्थभूतकर्त्रुपसर्जनतया तस्य प्रस्तुतत्वेन तदित्यनेन प्राधान्यतः परामर्शायोगादित्यत आह। ऋगर्थमिति। तथा च ऋगर्थवचनमेव तदिति परामृश्यते। न चोक्तदोषः। 'भावप्रधानमाख्यात'मित्यभियुक्तवचनबलाद्धात्वर्थस्यैव प्राधान्यावग-माद्वक्ष्यामीत्यनेन प्राधान्यतो ऋगर्थवचनमेव सन्निधापितम्। तदेव परामृश्यते। तत्सङ्गतम् ऋगर्थश्रवणं ज्ञानं च सन्निधापितम्। ऋगर्थवचनस्य ज्ञानपूर्वकत्वात्। परेषां श्रवणार्थ-त्वाच्छ्रवणस्यापि ज्ञानार्थत्वाच्चातो नोक्तदोष इति भावः।

तदित्यस्यावृत्तिमभिप्रेत्याह। यस्मात्तस्मादिति। तस्मादित्यस्य वक्ष्यामीत्यनेन सम्बन्धः। एवम् ऋगर्थं वक्ष्यामीत्येकं वाक्यं यस्मात्तदस्यातितुष्टिकरम् इति अपरं वाक्यम् इति वाक्यभेदं तदित्यस्यावृत्तिं चाङ्गीकृत्य व्याख्यायेदानीं मा भूद्वाक्यभेदो मा च भूदावृत्तिरित्यभिप्रेत्य व्याचष्टे। तदस्येत्येकं वा पदमिति। स चासावयं चेति तदयम्। अभिप्रेत्य तदर्थमाह तस्येत्यादिना। तथा च तदस्य नारायणस्यातितुष्टिकरम् ऋगर्थं वक्ष्यामीत्येकमेव वाक्यम्। ऋगर्थस्य चेदं विशेषणं तस्य नारायण तुष्टिकरत्ववचनादिद्वारा मन्तव्यम्। यद्वा तदप्यस्य नारायणस्यातितुष्टिकरं (यथा) स्यात्तथा ऋगर्थं वक्ष्यामीति क्रियाविशेषणमिति मन्तव्यम्। न पारङ्गतेति। तथा च नारायणप्रणामस्तवनयोः प्रारिप्सितविघ्नपरिसमाप्त्यादि हेतुत्वमसदिति भावः। उक्तमेतदिति। कासांचिदृचामेव व्याख्याप्रतिज्ञानात्सर्वासामृचामित्येतदाद्यपद्यावतारिकासमये 'कासांचिदृचां भाष्यं करिष्यन्' इत्यादिनोक्तमिति नोक्तदोष इति भावः। कासांचिदृचामेव व्याख्या प्रतिज्ञातेत्यत्रैवोपष्टम्भकान्तरमाह ॥ अत एवेति ॥ कासांचिदृचामेव व्याख्यायाः प्रतिज्ञातत्वादेवेत्यर्थः। उपक्षत्रमित्यस्यामृचि 'नास्य वर्ता न तरुता महाधने नार्भे अस्ति वज्रिण' इत्यनेन युद्धादौ वर्तृपदोक्ताभिगन्तुः तरुतृपदोक्तजेतुश्चाभावोक्त्या परमेश्वरस्य समाधिकराहि-त्यस्यैवाभिप्रेतत्वात्। 'भये चित्सुक्षितिं दध' इत्यनेन भक्तानां भये प्राप्ते शोभनाश्रयदातृत्वाभिधानेन

परमेश्वरप्रसादेन भयाभावलक्षणमोक्षप्रतिपादनेन सर्वशास्त्रस्योपसंहृतत्वात्। 'सर्वोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यं नैव चान्यत्र सत्यम्। तत्प्रीणनान्मोक्षमाप्नोति सर्वः ततो वेदास्तत्पराः सर्व एवे'ति श्रुतेरिति भावः।

ननु कथं ग्रन्थः समापित इत्युच्यते ? अन्ते मङ्गलस्यानाचरितत्वात् इत्यत आह। प्रसिद्धमिति। पदं धनपदम्। मध्य एवेति। एकविंशद्वर्गाधिकाध्या यद्वयं तावद्व्याख्याय ते तन्मध्य एव तृतीयाध्याये यदा 'त्रिर्नो अश्विने'ति पञ्चमो वर्गो न व्याख्यातः तदा तेनाप्यसमस्तव्याख्यानप्रतिज्ञा सूचितेति भावः। पुनस्तत्रोपष्टम्भकान्तरमाह। नकिर्माकिरित्यादीति। अन्यथा यत्रेयम् ऋगायास्यति तत्रैव तद्व्याख्यानं कर्तव्यं न त्वत्रातो 'नकिर्माकिस्मसीत्यादि प्रोक्ताधिक्यविवक्षयेत्यादिना शिक्षित-व्याख्यानप्रकाराणां पदानां केषाञ्चिद्व्याख्या तास्वृक्षु अभावादसमस्तव्याख्यानं प्रतिज्ञायत इति भावः। कथं नारायणस्येति। किंतु अग्न्यादिदेवानामेवेति भावः। उत्तरमाह। सकलेति। नन्वग्न्यादि प्रतिपत्तिहेतुत्वमपि देवनामस्ति । अन्यथा तदसिद्धिप्रसङ्गादित्यत उक्तं मुख्यत इति । मुख्यतोऽग्न्यादि प्रतिपत्तिहेतुत्वमप्यस्तीति नोक्तदोष इति भावः। आहेति। भगवान् मुख्यतः सर्ववेदप्रतिपाद्यः ॐकारप्रतिपाद्यत्वादित्याशयेनाहेत्यर्थः। निमित्तेनेति। प्रवृत्तिनिमित्तेनेत्यर्थः। अशेषगुणाधारत्वेन निमित्तेन ॐकारार्थः परमेश्वर इत्येव भाष्यं व्याख्येयमित्यत्रानुव्याख्यानं प्रमाणयति । यथोक्तमिति । एवमशेषगुणाधारत्वेन निमित्तेन भगवानेव ॐकारार्थ इति निष्कृष्टप्रमेयस्योपरि शङ्कते। कुत इति। अशेषगुणाधारत्वेन निमित्तेन भगवानेव ॐकारप्रतिपाद्य इति कुतः? अन्य एव तथा किं न स्यादित्यर्थः । तथाभूतोऽशेषगुणाधारः स एवेति अशेषगुणाधारत्वेन निमित्तेन स एव भगवान् ॐकारार्थो नान्य इत्यर्थः। नारायणोऽपीत्यपिशब्दो गुणपूर्णत्वेन निमित्तेन भगवानेव ॐकारप्रतिपाद्य इत्यत्र युक्त्यन्तरसमुच्चायक इति भावेनाह केञ्चेति। गुणपूर्तिवाचीति। अरा दोषाः तद्विरुद्धा गुणाः नाराः तदाश्रयेति व्युत्पत्त्येत्यर्थः। तत्समानाख्यानादिति । गुणपूर्णत्वरूपप्रवृत्तिनिभित्तकनारायण शब्दस्य भगवत्परत्वे सिद्धे तत्समाख्यानात् गुणपूर्णत्वरूप प्रवृत्तिनिमित्तक ॐकारोऽपि भगवत्पर इति निश्चीयत इत्यर्थः। क्रमतो यद्येवमिति। भगवतः ॐकारप्रतिपाद्यत्वेऽपि सर्ववेदप्रतिपाद्यत्वं कुतः न ह्योंकार एव वेदा त्यर्थः। तथा चोक्तानुमाने अप्रयोजकतेति भावः। प्रणवार्था इति। 'प्रणवार्था व्याहृतयो व्याहृत्यर्था गादयः' इत्यागमेन तिसृणां व्याहृतीनां वर्णत्रयात्मक ॐकार व्याख्यानरूपताऽवगमे(न) ाख्यानव्याख्येययोरेकार्थत्वादिति भावः। किं निमित्तमिति। केन प्रवृतिनिमित्तेन व्याहृतीरित यर्थः। तस्य धातोः प्रकृतोपयोगमाह। बहुरिति। भवतेः क्विबिति। पूर्णत्वरूपबहुत्वार्थकस्य

भूधातोः क्विप्रत्यये तस्य सर्वस्यापि लोपे भूरित्येवं रूपं द्रष्टव्यम्। पूर्णत्वस्यैवैश्वर्यरूपत्वादित्यर्थः। भूधातोर्भावे औणादिके डुप्रत्यये डकारलोपे डितिपरे टिभूतस्य डकारस्य लोपे भू उ भू इति रूपम्। अन्तलोप इति। रकारस्थस्याकारलोपेत्यर्थः। तथा च भुवर् इति जाते विसर्गे च सति भुव इति रूपम्।

निरुक्तत्वादन्तलोप इत्यत्र वार्तिकोक्तं श्लोकं पठति। यथोक्तमिति। हसतीति हस इति भाव्ये पूर्वस्य वर्णस्यानुस्वारस्यागमे हंस इति भवति। हिसि हिंसायाम् इत्यस्मात् हिंस इति प्राप्ते वर्णविपर्ययेण सिंह इति भवति। गूढात्मेति भवति। पृषत् उदरं यस्य तत् पृषदुदरमिति भाव्ये तकाररूपवर्णस्य नाशे गुणे पृषोदरमिति भवति। धातोस्तदर्थातिशयेन योगः। धातोर्यस्तदर्थः स चासावर्थश्चेति तदर्थः प्रसिद्धार्थः तं अतिशयेन अतिशयित्वा अतिक्रम्येति यावत् योगः अन्यार्थेन योगः अन्यार्थत्वेन वर्णनं प्रसिद्धार्थातिरिक्तार्थान्तरवाचित्वमित्यर्थः।

यथा भिदिधातोर्विदारणार्थत्वेऽपि संयुक्तयोरोष्ठयोभिन्नावोष्ठावित्यत्र धातूनामनेकार्थत्वाद-न्यत्वमेवार्थतया स्वीक्रियते। इत्यादीन्युदाहरणानि द्रष्टव्यानि। एवं चोत्तरत्रानेकार्थत्वाद्धातूनामिति यत्र व्यवह्रियते तत्र सर्वत्र धातोस्तदर्थातिशयेन योगरूपं निरुक्तं द्रष्टव्यमिति सम्प्रदायः। सङ्ग्रहेऽपि। 'भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात्। गूढोत्मा वर्णविकृतेः वर्णनाशात्पृषोदरम्' इति। एवं च पृषोदरमित्यत्रेव वरशब्दस्यान्ते विद्यमानस्य रकारस्थस्याकाररूपवर्णस्य नाश इति भावः। स्वरिति पाठ (पक्ष) इति। ऋग्वेदिनां पाठ इत्यर्थः। उकारलोप इति। तथाच सु इत्यत्रत्योकाररूपवर्णस्य नाशे स् वः स्वरिति रूपम्।

नन्वेवं व्युत्पत्तौ भूरित्यादीनाम् अव्युत्पन्नशब्दत्वाभावात् अव्ययगणमध्येऽपाठेनाव्ययत्वं न स्यादित्यत आह। शब्दस्वभावादिति। भूरादिशब्दानां स्वभावएवायं यदव्ययत्वमित्यर्थः। तथाच 'कृन्मेजन्त' इति कृदन्तत्वमेजन्तत्वादीनाम् अव्ययत्वनिमित्तानामभावेऽपि अव्ययत्वमित्याशयः। अत्र शब्दस्वाभाव्यादव्ययत्वे प्रकृतिप्रत्ययव्युत्पादनं कस्मात्कृतमिति न विचार्यम्। किं तथापीति। भगवतो व्याहृतिप्रतिपाद्यत्वेऽपि सर्ववेदप्रतिपाद्यत्वे किमायातम्? नहि व्याहृतय एव वेद इत्यर्थः। व्याहृत्यर्थत्वादिति। व्याहृतित्रिगुणा पुनः वेदमाता तु गायत्रीति त्रिपदगायत्र्याः व्याहृदि-त्रयव्याख्यानरूपताऽवगमात्। व्याख्यानव्याख्येययोश्च एकार्थत्वादिति भावः। तनोतेर्डप्रत्यय इति। तथाच तनु विस्तारे इत्यस्मात् डप्रत्यये डकारलोपे टिभूतस्यानु इत्यस्य लोपे त् अत् तत् इति रूपम्। अत्र यद्यपि 'त्यजियजितनिभ्य' इति सूत्रेण अदिप्रत्यय एव विहितो न डप्रत्ययः तथापि

'सडिच्चे'त्यनुवृत्तेरदिप्रत्ययस्य टित्कारित्वमभिप्रेतम्। अन्यथा तनु इत्यत्र डिनिमित्तकटिलोपो न स्यात् । अत एतदभिप्रेत्यार्थानुवादोयमित्यदोषः । षूञ्प्राणीत्यादि । षूञ्प्राणिप्रसवे अत्र ञकारोऽनुबन्धार्थः । एवमुत्तरत्रापि । तथाच षूञ् अस्मात् तृच् प्रत्यये चकारलोपे 'आर्धधातुकस्येड्वलादे'रिति सूत्रेण षकारस्य वल्प्रत्याहारांतर्गतत्वेन षूञ्धातोः वलादित्वादिडागमे षु इ तृ इति जाते 'सार्वधातुकार्धधातुकयोः' इति उकारस्य गुणे षोइतृ इतिजाते 'एचोऽयवायावः' इत्यनेन अवादेशे षव् इतृ इति जाते 'धात्वादेः षः सः' इति षकारस्य सकारे सवितृिति प्रातिपदिकनिष्पत्तौ सत्यां पश्चात् स्वाद्युत्पत्तौ सवितेति भवतीति द्रष्टव्यम्। वृञ एण्य इतीति। इति सूत्रेणेत्यर्थः। तथा च वृञ् वरणे इत्यस्मात् व्रियते इति कर्मणि एण्यप्रत्यये सार्वधातुकेत्यनेन ऋकारस्य गुणे तस्य रपरत्वे वर् एण्य वरेण्य इति रूपम् । तत् वरेण्यशब्दार्थयोरिति । तच्छब्दार्थ वरेण्यशब्दार्थयोरित्यर्थः।

ननु 'प्रत्ययः परश्च' इत्यनेन प्रत्ययस्य धात्वव्यवहितपरत्वस्योक्तत्वात् कथं धातुसमुदायादेकः प्रत्ययः ? अदृष्टत्वादसम्मत इत्यत आह अदिभूभ्यामिति। अदभक्षणे, भूसत्तायाम् इति धातुद्वयात् इनच् प्रत्यये टिलोपे च सति अद्भुतमिति रूपमुणादिसूत्रेण साधितं दृष्टमित्यर्थः। नन्वदिभुवो डुतजित्येवोणादि सूत्रपाठः। तस्य चादिउपपदे भुवोडुतच् प्रत्ययो भवतीति व्याख्यानात् कथमेतन्निदर्शनं कृतमिति चेन्न। धातुद्वयादेकस्य प्रत्ययस्य प्रायशोऽदर्शनेन आधुनिकैरेवं सूत्रपाठस्य कल्पितत्वात्। अदिभूभ्यामित्येव पूर्वतनः पाठः। मूलकोशे वृत्यन्तरे च तथा दर्शनात्। अत एव निघण्टुभाष्ये धातुसमुदायात् प्रत्ययो बहुषु स्थलेषु व्याख्यात इति द्रष्टव्यम्। ह्रस्वतेति। अत्रापि टिलोपकरणे भर्ग इति स्यादिति भावः।

ननु भातेः कथं ह्रस्वता । न च पृषोदरादित्वेन निरुक्तत्वाद्वर्णविकार इति वाच्यं साक्षात्प्रत्ययसन्निधानादेव तत्र वर्णविकारादेर्व्याख्येयत्वेनात्र तदभावादित्यत आह । त्ययसन्नियोगेनेति। साक्षात्प्रत्ययसन्निधानाभावेऽपि धातुसमुदायात् प्रत्ययविधानस्यापि कृतत्वेन त्ययसन्निधानमात्रं त्वस्त्येवेति युक्तस्तन्मात्रेण वर्णविकार इति भावः इत्याहुः । वस्तुतस्तु त्ययसन्नियोगेनेत्यस्योणादिप्रत्ययसन्नियोगेनेत्यर्थः। पूर्वमुणादिप्रत्ययस्यानियतत्वादुणादि त्ययानां चोणादयो बहुलमि'ति बाहुलिकत्वाभिधानात् । 'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः चिद्विभाषा क्वचिदन्यदेव। इत्येव सर्वे मुनयस्त्वभिज्ञाः चतुर्विधं बाहुलिकं वदन्ती'ति वचनात् चित्स्यात्, क्वचिन्नस्यात्, क्वचिदन्यदेव स्यादिति चोक्तत्वात् । अत्र क्वचिदन्यदेवेत्युक्त

बाहुलिकत्वमाश्रित्य तादृशोणादिप्रत्ययसन्नियोगेन भातेर्ह्रस्वतोच्यमानोपपद्यत इति भावः। रमेर्गमेश्चैति। अत्र यद्यपि साक्षात्प्रत्ययसन्नियोगस्य गमेः सत्वेन तत्र टिलोपसम्भवेऽपि रमेस्तदभावात् टिलोपासम्भवः। तथापि रमे इत्यत्रापि प्रत्ययसन्नियोगेनेति पूरणीयम्। एवं चोणादीनां बाहुलिकत्वात्तन्मात्रेणैव (ल)टिस्तत्र एवं च भातेर्ह्रस्वत्तायां भेतिजाते गमेष्टिलोपे रमेष्टिलोपे भर् ग् अस् इति जाते सकारस्य रुत्वे विसर्गे च सति भर्ग इति रूपं भवतीति द्रष्टव्यम्।

नन्वत्र देवस्येत्युक्तो देवशब्दः कस्मान्न व्याख्यात इत्यत आह। देवशब्दस्त्विति। यज्ञस्य देवमृत्विजमित्येतद्व्याख्यानसमये 'द्योतनाद्विजयात्कान्त्या स्तुत्या व्यवहृतेरपि। गत्या रत्या च देवाख्यमि'त्यत्र व्याख्यास्यत इत्यर्थः। तात्पर्यमिति। अन्यथा तिङन्तपदेनैव व्याख्येयत्वात् ध्यायेमेति वक्तव्यमिति भावः। ननु ध्यै चिन्तायामित्यस्य परस्मैपदित्वात्तत्रोत्तमपुरुषबहुवचने मस् प्रत्यये शब्विकरणे तस्य लोपेनाकारमात्रे उर्वरिते सति ध्यै अ मस् इति जाते 'एचोऽयवायाव' इत्यनेन अचि परे एकारस्य आयादेशे ध्याय् अ ध्याय मस् इति जाते पश्चात् 'यासुट् परस्मैपदेष्वि'ति यासुडागमे उडित्यस्य लोपे ध्याय या मस् इति जाते 'अतो येयः' इति अतः परस्य याकारस्य इयादेशे ध्याय इया मस् इति जाते अकारेकारयोर्गुणे ध्यायेया मस् इति जाते याकारलोपे 'नित्यं ङितः' इति मस्प्रत्ययस्थसकारलोपे ध्यायेम इति स्यात्, धीमहीति कथमित्यत आह। ध्यायतेरिति। सम्प्रसारणमिति इक् स्थाने यण् भवतीति प्रसिद्धम्। तत्र यणां चेदिको भवन्ति तर्हि तत्सम्प्रसारणमित्युच्यते। ततश्चेति। वेदार्थत्वादेवेत्यर्थः।

सर्वशब्दार्थ इति। लौकिकार्थवाचित्वेन प्रसिद्ध घटपटादि संस्कृतसर्वशब्दार्थ इत्यर्थः। कुत इत्यत आह तेषामिति। उक्तसर्वशब्दानामित्यर्थः। य एव लौकिकास्त एव वैदिका इति न्यायादिति भावः। भगवता सर्ववेदार्थ(त्व)पर्यन्तमुपपादनस्यैव नन्वग्र्यादिप्रतिपादनपराणामृचामित्युक्त शंकानिरासौ पयोगित्वात् सर्वशास्त्रार्थत्वं सर्वशब्दार्थत्वं चेति द्वयमधिकं कस्मादुपपादितमित्यत आह। इत्येतद्द्वयमिति। अनुमानेनेति। भगवान् सर्ववेदार्थः परम्परया सर्ववेदार्थोङ्कारार्थत्वात् यो यद्व्याख्येयार्थः स तदर्थः यथा सम्प्रतिपन्न इति वा। सर्वे वेदाः ईश्वरपराः उक्तरीत्या तत्परोङ्कारव्याख्यानत्वात् इत्यनुमानेनेत्यर्थः। अनेनैवेति। 'ता वा एताः सर्वाऋचः सर्वे वेदा' इति मन्त्रब्राह्मणादि सर्ववेदानां मुख्यतो भगवत्परत्वप्रतिपादकोपनिषद्वाक्योदाहरणेनेत्यर्थः। विनियुक्तानां ब्राह्मणेनेति शेषः। अविवक्षितार्थत्वेनेति। हुं फडित्यादिविषहरमन्त्रस्येवोच्चारण मात्रेणादृष्टार्थत्वमेव न दृष्टार्थत्वमित्यर्थः। अयं भावः। उरुप्रथा उरु प्रथस्वेति पुरोडाशं प्रथयतीति

ब्राह्मणम् उरु प्रथेति मन्त्रं पुरोडाशप्रथनरूपे कर्मणि तावद्विनियुङ्क्ते । न हीदं मन्त्राणां विवक्षितत्वे सम्भवति । पुरोडाशप्रथनरूपार्थस्य उरु प्रथेत्यादि मन्त्रेणाप्रतिपादनात् । एवमेव ब्राह्मणवाक्यम् अग्निमीळ इत्यादिमन्त्रं यस्मिन् कर्मणि विनियोक्ष्यते तत्रैव तात्पर्यं न स्वार्थे इत्येवं मन्त्राणामविवक्षितार्थत्वादव्याख्येयतेत्येतदपि एतेनैव निरस्तम् । मुख्यतः पदसमन्वयन्यायेनैतेषां भगवत्परताया उदाहृतोपनिषद्वाक्यसिद्धत्वात् । वाक्यान्वयपक्षेऽपि भगवत्प्रीत्यर्थमेवामुख्यतः कर्माद्यभिधायकत्वात् । ब्राह्मणेन यत्रार्थे यो मन्त्रो विनियुज्यते तदर्थप्रतिपादनस्य तस्मिन् मन्त्रेऽभावे तदंशे अदृष्टार्थत्वमेव कल्प्यम् । तदभावे तु दृष्टादृष्टार्थोभयार्थत्वमेव स्विष्टकृदादिवदिति न स्वार्थे विवक्षाया अभाव इति युक्ता व्याख्येयतेति ॥

यस्य कस्यापि वेदस्येति । यजुर्वेदादेरित्यर्थः । ईश्वरस्य ऋगर्थताम् ऋक्प्रतिपाद्यतामित्यर्थः । अन्यथेति । ईश्वरस्य विशेषेण ऋगर्थत्वाभावे 'ता वा एताः सर्वा ऋचः' इत्यस्य वैयर्थ्यमेव स्यात् । सर्वे वेदा इत्युक्त्यैव ऋचामपि भगवत्परत्वलाभादिति भावः । आवृत्त्येति । ता वा एता ऋच इत्यस्यावृत्तिर्द्रष्टव्या । इति तं प्रकारमिति । इत्याशङ्कायां तं प्रकारम् इत्यर्थः । ऋचामित्यस्याध्याहारं तद्गतत्वेनेत्यस्यावृत्तिं चाभिप्रेत्याह । ऋचां तद्गतत्वेनेति । अग्न्यादिनामोपेतानाम् ऋचां भगवद्गतत्वेन विशेषतो अनायासेन स्पष्टत्वादित्यर्थः । एवं भाष्यं योजयित्वा तात्पर्यमाह । इदमुक्तं भवतीति । वेदान्तरस्य यजुर्वेदादेः । सुकरमितीति । अग्न्यादिनाम्नां भगवत्परत्वेतद्गुणत्वे भगवन्निष्ठत्वप्राप्त्या तद्वर्णनपराणामृचां भगवत्परत्वमनायासेनैव प्राप्तमित्यर्थः । तासामृचाम् । विशेषतो यजुर्वेदाद्यपेक्षया । अत्रार्थे प्राण ऋच इत्येव विद्यादित्यं शव्याख्यानपरं महैतरेयोपनिषद्भाष्यं संमतित्वेनोदाहरति तदुक्तमिति ॥

## श्री पाण्डुरङ्गि केशवाचार्यविरचिता पदार्थदीपिका

सकलसुगुणपात्रं सर्वदोषैकजैत्रं
सुमतिसुगतिदात्रं सुष्ठुसुज्ञाननेत्रम् ।
निखिलजनिजनित्रं नित्यदुष्टैकवेत्रं
नवनवसुचरित्रं नौमिलक्ष्मीकलत्रम् ॥ १ ॥

शुभगुणगणगात्रं शुद्धविज्ञाननेत्रं
श्रुतिविततचरित्रं श्रान्ततापातपत्रम् ।

श्रमजलधिवहित्रं शान्तिमन्तःपवित्रं
श्रयत विबुधमित्रं शक्तियोगीन्द्र पौत्रम् ॥ २ ॥
निरस्य दुर्मतध्वान्तसुसिद्धान्तप्रकाशकम् ।
श्रीमदानन्दतीर्थार्यसूर्यं सम्यगुपास्महे ॥ ३ ॥
बुद्धिमन्दरमन्थेन मध्वसिद्धान्तसागरम् ।
विमथ्य यो बुधेभ्योऽदात् सुधां जयमुनिं भजे ॥ ४ ॥
वेदव्यासमतापगापतिवरं श्रीमज्जयप्रोक्तसत्
सर्पाविष्टितमध्वसन्मुनिवरग्रन्थगवर्येण यः ।
सल्लोड्याखिलसन्नयामृतवरं तत्वादिसद्दीपिकां
सत्तात्पर्यसुचन्द्रिकां तरुवरं यस्तर्कसत्ताडवम् ॥ ५ ॥
निष्क्रास्याद्भुतखण्डनत्रयमुखव्याख्यानरत्नोच्चयं
दृष्ट्वा कुत्सितयुक्त्यरातिपिहितं श्रीव्यासतीर्थं बुधः ।
स्वोक्तिं रक्षितुमत्र यः प्रतिपदं सम्यग्विशेषार्पको
विद्याधीशसुतीर्थसद्गुरुवरः किं नावतीर्णः सहि ॥ ६ ॥
श्रीमद्विद्याधीशतीर्थं सर्वविद्यास्वधीश्वरम् ।
विद्यागुरुं कुलगुरुं नौमि तं मे जगद्गुरुम् ॥ ७ ॥
यद्धस्ताम्बुजरङ्गतोहमभवं गुर्वोः कटाक्षाश्रयो
यद्व्याख्यानदिवाकरेण विदुषामन्तस्तमः संहृतम् ।
ये प्रीता भुविचन्दनद्रुम इव स्वीयं स्ववत्कुर्वते
तातान् श्रीनिलयान् भजामि मुनिपानानन्दतीर्थाभिधान् ॥ ८ ॥
यः श्रीनिवासमृगराट् सकलान् मदांध
मायाविसिंधुरसु कुम्भगिरीन् विदार्य ।
सत्तर्कतीक्ष्णनखरैर्विरराज मध्व-
सिद्धान्तचारुविपिने तमलं भजेऽहम् ॥ ९ ।
निशम्य सकलं शास्त्रं विद्याधीशाज्जगद्गुरोः ।
क्रियते केशवेनेयं शिष्टवाक्यार्थदीधितिः ॥ १० ॥

ऋग्भाष्यविवृतेर्भावगूढाया भावसिद्धये।
पंचिका क्रियते विद्याधीशशिष्येण शक्तितः ॥ ११ ॥

अधीत्य केशवार्येण विद्याधीशान् मुहुर्मुहुः।
स्मारं स्मारं तदुक्तांश्च प्रकारांस्तत्कृपाबलात् ॥ १२ ॥

स्पष्टार्थं यत्पदं वाक्यं तन्न व्याक्रियतेऽत्र हि।
ग्रन्थगौरवभीरुत्वात्वान्नचोद्ग्रन्थं बहूच्यते ॥ १३ ॥

यद्यपि गुरुचरणैरवायं ग्रन्थः व्याख्यातः तथापि अग्निंदूतमित्यादेरुत्तरस्य पूर्वग्रन्थेऽपि स्पष्टतया व्याख्यातस्य भूयसो ग्रन्थस्य सत्वात् तद्व्याख्यानार्थोऽयमारम्भः । तर्हि अव्याख्यात ग्रन्थमात्रव्याख्यानमेव कर्तव्यं न समस्तव्याख्यानमपीति चेत् । सत्यं तथासत्यसमस्तग्रन्थ व्याख्यानतया ग्रन्थद्वयस्य अनुपादेयत्वं अल्पतयागुरुचरणीयग्रन्थस्य विच्छेदश्च स्यादिति तदुभयनिरासार्थं यथास्थितगुरुग्रन्थानुवादपूर्वकं एकीकृत्यावशिष्टं ग्रन्थव्याख्यानं क्रियत इत्यदोषः ।

ग्रन्थादौ मङ्गलमाचरति । नारायणाभिधामिति । नारायणरूपमिति वक्तव्ये यन्नाराय-णाभिधमिति वचनं तत्परपक्षनिराकरणसूचनायेति ज्ञेयम् । वंद्यत्वप्रयोजकविशिष्टत्वेष्ट त्वाधिकृत-त्वसूचनायेदं विशेषणत्रयम् । तत्राद्येन निर्दोषवेदप्रतिपाद्यतया नारायणपदाभिधेयत्वोक्त्या समुचितताम‍ाचष्टे । ज्योतिः सूर्यम् ॥ अत्र सूर्यामितद्युतिमिति भाष्ये विशेषणदानात्तदनुसारेण ज्योतिरित्युक्तम् । प्रत्यूहाः विघ्नाः त एव ध्वान्तानि तेषां शांतिकृदित्यनेनेष्टत्वमभिप्रैति ।

कमला श्रीरेव कमलं आनन्दयति सुखयति विकासयति वेत्यानन्दं कमलाकमलस्यानन्दं कमलाकमलानन्दम् । अनेन श्रीपतित्वोक्त्या विशिष्टतोच्यते । टुनदी समृद्धाविति धातोर्विका-सरूपकमलानन्दहेतुत्वमानमित्यस्येति द्रष्टव्यम् । अनेनैव सकलवाङ्मनसदेवतात्वात् आदाववश्यवन्दनीयायाः रमायाः पृथग्वंदनानौचित्या तत्सहायत्वेनैव नारायणवन्दनमुचितमिति भावेन तथैव नारायणोविशेषितो बोध्यः ।

स्वान्ते मनसि अन्तः अन्तःस्वान्तं विभक्त्यर्थेऽव्ययीभावः । शिष्यानुजिघृक्षया स्वव्या-ख्यानप्रकारं सूचयन्नेव चिकीर्षितं निर्दिशति । ऋचामिति । आदौ ऋचां पदानीतिकरणं विनोपादाय तथैवोपात्तैर्भाष्यपदैः सह संवादितामात्रं ऐकार्थ्यमात्रं कुर्मः । प्रकटीकरिष्यामः ।

वर्तमानसामीप्याद्वर्तमानव्यपदेशः । सम्यक् शब्दसाधनतत्प्रयोजनकीर्तनादिव्यावृत्यर्थं संवादितामात्रमिति मात्रपदम् । अतएवान्ते शब्दानां साधनमित्यादिना तथैव वक्ष्यतीति ध्येयम् । व्याख्यानद्योतकपदाद्युपादानव्यवच्छेदाय मात्रपदं भाष्यकृता ऋक्पदानि प्रतिबिम्बभावेन यत्र व्याख्यातानि तत्रैवायं प्रकारोऽन्यत्र तु रीत्यन्तरमपीत्यभिप्राय इत्याहुः । अगाधबोधभगवत्पादविरचितभाष्यस्यातिबह्वर्थकत्वात् तद्व्याख्यानप्रतिज्ञायां वंध्यत्वपरिहाराय यथाधीतमिति विशेषणम् । अनेनाधीतमात्रोक्तिभ्रान्तिं वारयति । यथामतीति । अध्ययनलब्धं मननलब्धं योज्यत इति भावः ।

ननु नारायणं निखिलपूर्णगुणार्णमिति भाष्याद्यपद्यं व्यर्थम् । न च ऋगर्थव्याख्यान प्रतिज्ञापरं तदिति वाच्यम् । ऋगादिशास्त्रस्य विषयादिशून्यत्वेन प्रेक्षावदनुपादेयतया उपादेयत्वेऽपि वा सुगमार्थतयाऽव्याख्येयत्वेन तत्प्रतिज्ञानस्याप्यकर्तव्यत्वात् । किं च न तावत्सर्व ऋगर्थवचनप्रतिज्ञापरमेतदङ्गीकर्तुं शक्यम् । सर्वासां ऋचां भाष्येऽव्याख्यातत्वेन तत्प्रतिज्ञाया वंध्यत्वप्रसङ्गात् ।

नापि कतिपयऋगर्थवचनप्रतिज्ञापरमेतत् । व्याख्येयत्वप्रयोजकस्य सर्वत्र साम्ये कस्यचिदेकदेशस्यैव व्याख्यानस्य निष्प्रयोजनत्वेनायुक्तत्वात् । अस्तु वा ऋगर्थवचनप्रतिज्ञापरत्वं कथंचित् तथापि ऋगर्थं वक्ष्यामीत्येतावतैव प्रतिज्ञासिद्धेरितरेतरवैय्यर्थ्यमेव । न च ऋगर्थवचन प्रयोजनप्रदर्शनपूर्वकं तत्प्रतिज्ञापरमेतदिति वाच्यम् । तत्प्रयोजनस्याप्यतितुष्टिकरं तदस्येत्येतावतैव सिद्ध्या नारायणमित्यारभ्य प्रणम्येत्यन्तस्य वैय्यर्थ्यनिरासात् । न चैतदपि नाति स्तुतिरूपमङ्गळार्थत्वान्नानर्थकमिति वाच्यम् । प्रयोजनाभावेन तयोरप्यकर्तव्यत्वादित्याशङ्कां परिहरन्नेवाद्यपद्यमवतारयति । इहेति । खलुर्वाक्यालंकारे । अकूपारपारं समुद्रपारम् । करिष्यन्नित्यत्र प्रतिज्ञापुरस्सरमिति शेषः । प्रतिज्ञायाः ग्रन्थोपनिबन्धप्रयोजनं च गीताभाष्यटीकोक्तप्रकारेणानुसंधेयम् ।

प्रयोजनं चेति । आद्यपद्येन विषयादेरपि सूचनान्नप्रयोजनशब्दः प्रयोजनमात्रपरः किं तु प्रयुज्यते प्रवर्त्यतेऽनेन पुरुष इत्यनुबन्धचतुष्टयपरः । चशब्देन विषयादिकं समुच्चिनोतीत्यप्याहुः । कासांचिदेव ऋचां भाष्यकरणेन कथं सकलवेदानां भगवत्परत्वप्रदर्शनपरमित्यत उक्तम् । प्रकारेति । कासुचिद्दक्षु व्युत्पन्ना बुद्धिमन्तः सर्वानपि वेदान् शक्नुवन्ति भगवत्परत्वेन बोद्धुमिति भावः । अनवधारितेति । यद्यपि प्रणामस्तवने कुर्वन्निति पूर्वं पक्षद्वयोक्त्या विशेष्यप्रशंसापरतया विशेषणपदानां योजना-

प्रदर्शनपूर्वकमेव प्रणामस्तवनोपपादकार्थविशेषसमर्पकतया तद्योजनाप्रदर्शनमनुचितं अत एव सुधायां तथैव कृतम् । तथापि प्रणामस्तवनोपपादकहेतुविशेष योजनायां प्रदर्शितायामर्थात् विशेष्यप्रशंसापरत्वस्यापि सिद्धेः किं पृथक् प्रदर्शनेनेति भावेन प्रणामस्तवनोपपादकहेतु-विशेषसमर्पकतयैव विशेषणपदानां योजनाप्रदर्शितेति ध्येयम् । पौनरुक्त्यपरिहाराय निखिलपूर्णपदयोरर्थभेदमाह । निखिला इत्यादिना । निःशेषाः सर्वे । उदकनामेति । उदकेनुट्चेत्युदकेऽभिधेयेऽर्त्तेरसुन् प्रत्यये तस्य च नुडागमस्ततोऽर्ण इति सकारान्तमुदकनाम । क्वचिन्नुकुचेत्यपि पठन्ति । तदुत्तरानुवृत्तिविरोधात् उपेक्ष्यम् । अत एवार्णः क्षोदः क्षद्मेत्येकशतोदकनामसुपाठ इति भावः ।

ततो मत्वर्थे इति ॥ अर्णांसि विद्यन्ते यस्मिन्निति मत्वर्थ इत्यर्थः । तद्धिता इति ड इति । यद्यपि मत्वर्थे डप्रत्ययो न विहितः । तद्धिता इति योगश्च आपञ्चमाध्यायान्तविहितप्रत्ययानां तद्धितसंज्ञाविधायको न डप्रत्ययविधायकः सुतरां मत्वर्थे डप्रत्ययविधायक इति तद्धिता इति ड इत्यनुपपन्नमिवाभाति । तथापि सर्वत्राधिकारसूत्रे प्रत्ययः समासान्त इत्याद्येकवचनान्तप्रयोगस्यैव दर्शनात्तद्वत्प्रकृतेऽपि तद्धित इत्येकवचन एव वक्तव्ये यत्तद्धिता इति बहुवचनं तेन संज्ञितां बहुत्वसूचनादनुक्तोऽपि तद्धितः परिगृह्यत इति भावेन बहुवचनमनुक्ततद्धितपरिग्रहार्थम् । ततश्च पृथिव्या अग्रपश्चादिमन्नित्येवमादिलब्धं भवतीति वृत्तिकारेणोक्तत्वात् मत्वर्थेऽनुक्तोऽपि डप्रत्ययः तद्धिता इति बहुवचनलभ्य इत्यभिप्रायेण मत्वर्थे तद्धिता इति ड इत्युक्तमिति ध्येयम् । ततश्च मत्वर्थे अर्णस् शब्दाड्डप्रत्यये टेरिति डित्वाट्टिलोपे च विवक्षितरूपसिद्धिरिति भावः । गुणैरर्णः समुद्र इवेति मयूरव्यंसकादित्वात् समास इति भावः ।

प्रकृत्यादिभ्य उपसंख्यानमिति । तृतीया तत्कृतार्थेति सूत्रे तृतीयेति योगविभागद्वा कर्तृकरणे कृताबहुलमिति बहुलग्रहणाद्वा समास इति भावेनाह । गुणैरित्यादि । अत एव शशिकर पल्लवितः ध्वनिमुखरितः इत्यादावनेनैव प्रकारेण तृतीया तत्कृतार्थेति सूत्रे तत्रपञ्चकारैः समासः समर्थित इति द्रष्टव्यम् । अत एवामरकोशस्थ यस्य ज्ञानदयासिंधोरिति पदस्य तट्टीकाकृताऽयमेव समास उक्तरीत्यैव समर्थित इत्यप्याहुः ।

पूर्णशब्देन गुणानां प्रत्येकं पूर्णत्वोक्त्या प्रत्येकगुणपूर्णत्वस्यैव लक्षणत्वं मन्वानस्तदुपपादकतया योजयति ॥ के ते इति । नन्वमितशब्दस्य विशेषणत्वात् विशेषणानां च विशेषणं विशेषेण बहुलमिति समासशास्त्रे प्रथमानिर्दिष्टत्वात् प्रथमानिर्दिष्टं समास उपसर्जनम् इत्युपसर्जनत्वात्

उपसर्जनं पूर्वमिति पूर्वनिपातेन भवितव्यमित्यतः विशेषणानां पूर्वनिपातनियमव्यवच्छेदार्थं प्रवृत्ते कडाराः कर्मधारय इति सूत्रे बहुवचनस्याद्यर्थकत्वेनाभियुक्तैर्व्याख्यातत्वादादिशब्दस्य चाभियुक्त-प्रयुज्यमानविशेषत्वात् युक्तोऽमितशब्दस्य विशेषणत्वेऽपि परनिपात इत्याह । कडारा इति । सूर्यस्योच्चत्वम् ऊर्ध्वत्वं मेषराशिस्थत्वं नात्रप्रयोजकमित्यभिप्रेत्य प्रकृतोपयोगितया योजयति सामस्त्येनेति । अभियुक्तप्रयोगत्वे विप्रतिपद्यमानं प्रत्याह ॥ यद्वेति । अत्र ततोऽप्यर्थातिशय इत्यतिहृदयम् । कडारादिष्वमित शब्दपाठाभावात्कथं परनिपात इत्यत आह । यद्वेतीत्यन्ये । लक्षणान्तरमिति । अनेकलक्षणोक्तिश्च विभवादित्यवधेयम् । अशेषत्वविशिष्टदोषाणां निरासे वक्तव्ये निरस्ताशेष दोषेति भवितव्यम् अशेषनिरस्तदोषमिति तु कथमित्यत आह । अशेषेणेति । प्रकृत्यादिभ्य इति तृतीया अशेषेणेति निरसनक्रियाविशेषणं न दोषविशेषणम् इति नोक्तदोष इति भावः । ननु सिद्धसर्वेश्वरत्वे तेन हेतुनाऽस्मदादिव्यतिरेकदृष्टान्तेन नारायणस्य निखिलपूर्णगुणत्व-मशेष निरस्तदोषत्वं चानुमेयं तदेव कुत इत्यत आह ॥ अस्वतंत्रस्येति । योदेवः सादेवतेत्यादिना देवदेवताशब्दयोः पर्यायत्वस्य सर्वसिद्धत्वात् प्रतिपाद्याया एव देवतात्वात् तदेव विशेषवाचक-नारायणपदेनैव ऋक्प्रतिपाद्यत्वलाभ इति भावेनाह । ऋक् प्रतिपाद्यतयेति ॥

ननु तदित्यनेन न तावदृगर्थस्य परामर्शः । तस्य पुल्लिङ्गेन प्रकृतस्य तदिति नपुंसकलिङ्गेन परामर्शायोगात् । नाप्यर्थवचनस्य । तस्याख्यातार्थकर्त्रुपसर्जनत्वेन प्रसक्ततया तदित्यनेन परामर्शायोगादित्यत आह । ऋगर्थमिति । श्रवणं ज्ञानं चेति कारणवाचकशब्देन कार्यमपि सन्निधापितमिति भावः । तदित्यस्यावृत्तिमभिप्रेत्याह । यस्मात्तस्मादिति । माभूद्वाक्यभेदः माच भूदावृत्तिगिति भावेनान्यथा व्याचष्टे । तदस्येत्येकं वा पदमिति । तदस्यातितुष्टिकरमृगर्थं वक्ष्यामीत्येकवाक्यतया योजन इत्यर्थः । ऋगर्थस्यातितुष्टिकरत्वं च वचनादिद्वाराऽवगन्तव्यम् । भाष्यस्थस्य ऋगित्यस्यावतारिकायां यत्कासांचिदृचामिति व्याख्यानमभिप्रेतं तद्व्यावर्त्याशंका-प्रदर्शनपूर्वकं विवृणोति । नन्वेवमिति । आभिमुख्यकरणे भोःशब्दः । समाधिकराहित्यमिति । अत्र मन्त्रे नास्यवर्त्तेति युद्धादौ कर्तृपदोक्ताभिगन्तुः न तरुतेति तरुत् पदोक्तजेतुश्चाभावोक्त्या परमेश्वरस्य समाधिकराहित्यस्यैवाभिप्रेतत्वादिति भावः । भयाभावेति । भयेचित्सुक्षितिं दध इत्यनेन भक्तानां भये प्राप्ते शोभनाश्रयदातृत्वाभिधानेन परमेश्वरप्रसादेन भयाभावलक्षणमोक्षप्रतिपादनमिति भावः । सर्वशास्त्रार्थेति । सर्वोत्कर्षे देवदेवस्य विष्णोर्महा तात्पर्यं नैव चान्यत्र सत्यम् तत्प्रीणनान्मोक्ष माप्नोति सर्वस्ततो वेदास्तत्पराः सर्व एवेति श्रुतेः सर्वेत्कृष्टत्वादेरेव समस्तशास्त्रार्थत्वात्तत्प्रतिपादकस्यो-पक्षत्रमिति मन्त्रस्य समस्तशास्त्रार्थोपसंहारत्वमित्याशयः ।

ननु यदि समापितो ग्रन्थस्तर्ह्यन्ते न मङ्गलं दृश्यत इत्यत आह । प्रसिद्धमिति । ननु वित्तं हिरण्यमित्यादौ मध्ये हिरण्यादिपदवत् व्याख्यानार्थमेव धनपदं भविष्यतीति नैतत्समाप्ति-ज्ञापकमित्यरुचेराह । असमस्तेति । स्पष्टार्थत्वेन ऋगादिमात्रस्याव्याख्यानोपपत्तावपि त्रिर्नो अश्विनायजता दिवेदिव इत्यादि वर्गाव्याख्यानस्यासमस्तव्याख्यानप्रतिज्ञासूचनं विनाऽनुपपत्तेरिति भावः ।

ननु च स्पष्टार्थत्वेन ऋगादिमात्रस्येव वर्गस्यापि भाष्यकारेणाव्याख्यानोपपत्तेर्नैतदपि नियामक-मित्यरुचेराह । न किरिति । नकिर्माकिस्मसीत्यादि प्रोक्ताधिक्यविवक्षयेत्यादिना शिक्षित-व्याख्यानप्रकाराणां पदानां केषांचित् व्याख्यातास्वृक्ष्वभावादिति भावः । उत्तरमाह । सकलेति । अमुख्यतोऽग्न्यादिप्रतिपादनपरत्वेऽपि मुख्यतो भगवत्परत्वस्य निराबाधत्वादिति भावः । किमोंशब्दप्रवृत्तिनिमित्तं येनायं तदर्थ इत्याशङ्कते । इतिशब्द इति । एवं चाशेषगुणाधारत्वेन प्रवृत्तिनिमित्तेनेत्यर्थः । सम्पद्यत इति भावः । यथोक्तमिति । अनुव्याख्यान इति शेषः । अस्तु तत्प्रवृत्तिनिमित्तं भगवति तस्याभावे कथं स एतदर्थ इत्यभिप्रेत्य शङ्कते । कुत इत्यतश्चेति पदावृत्ति बललब्धवाक्ययोजनां दर्शयति । ओंकारो हीत्यादिना । नारायणोऽपीत्यपिशब्दो युक्त्यन्तर समुच्चयार्थ इति भावेनाह । किं चेति । हेत्वर्थकेति शब्दस्यावृत्तिमभिप्रेत्याह । तत्समाख्यानादिति । नारायणमात्रप्रसिद्धगुणपूर्तिवाचकनारायणशब्दसमानार्थकत्वादित्यर्थः । यथास्थितयोजनायाः प्रकृतानुपयोगात्तद्विरुद्धत्वाच्च प्रकृतोपयोगितया योजयति । यद्यस्मादिति । प्रणवार्थ इति । प्रणवार्था व्याहृतयो व्याहृत्यर्था ऋगादय' इत्यागमेन तिसृणां व्याहृतीनां वर्णत्रयात्मकौंकार व्याख्यानत्वावगमादिति भावः ।

इत्युक्तत्वादिति । बहुः पूर्णतायामित्युक्तत्वात् । पूर्णत्वरूपबहुत्वार्थाद्भवतेः क्विप् प्रत्यये पूर्णत्वाद्भूरित्यन्वयो दृष्टव्यः । भवतेः क्विबिति । सर्वधातुभ्यः सोपपदेभ्यो निरुपपदेभ्यः छंदसि भाषायां च क्विप् विधायकेन क्विप् चेति सूत्रेण भवतेरपि कर्तरि क्विबित्यर्थः । न च यदि भूरिति क्विपि रूपं तर्हि भूरिति भूरादिनामिति कथं रेफांततया व्यवहार इति वाच्यम् । उकारान्तस्य रेफान्तस्य च पर्यायत्वाभिप्रायेण व्युत्पादनादित्यदोषात् । डुप्रत्यय इति । अश्वादित्यश्चेत्युणादिसूत्रेणेत्यर्थः । अन्तलोपश्चेति । अन्तलोपस्त्वित्यर्थः । निरुक्तशास्त्रे निरुच्यमानानां शब्दानां पृषोदरादित्वादेव साधुत्वमित्यत्र यः श्लोको वृत्तिकृता पठितस्तमुदाहरति । यथोक्तमिति । अपूर्वस्य वर्णस्यागमनं वर्णागमः । यथा कौजीर्यत इति कुंजर इत्यत्र नकारस्य वर्णस्यागमः । हिनस्तीति सिंह

इत्यत्राद्यन्तवर्णयोर्हकारसकारयोर्व्यत्यासः वर्णविपर्ययः । अन्यथा हिसि हिंसायामित्यस्मात् पचाद्यचि स हिंस इति स्यात् । गूढोत्मेत्यत्राकारस्य उकाररूपापत्तिरूपोवर्णविकारः । पृषत् उदरं यस्यासौ पृषोदर इत्यत्र तकारादिलोपो वर्णविनाशः । यस्य धातोर्यो अर्थः प्रसिद्धस्तस्य तस्मादर्थान्तरेण योगस्तदर्थातिशयेनयोग इति यत्पञ्चविधं निरुक्तं निर्वचनप्रकारः शब्दानां तदनेन सूत्रेणोच्यत इति संमतिश्लोकार्थः । तथाच निरुक्तत्वादित्यस्य पृषोदरादेराकृतिगणत्वात् । यथोपदिष्ट एवायं पृषोदरादीनि यथोपदिष्टमित्यनेन साधुरित्यर्थः ।

नन्वेवं व्युत्पत्तौ व्याहृतीनामव्युत्पन्नशब्दत्वाभावादव्ययत्वं न स्यादित्यत आह । शब्देति । आद्यव्याहृतिव्यतिरिक्त व्याहृतिद्वयस्येति शेषः । आद्यव्याहृतेरुक्तरीत्या क्विबन्त प्रातिपदिकत्वेनानव्ययत्वादिति द्रष्टव्यम् । यद्यप्यव्ययेषु पठितत्वादव्ययत्वमित्यपि वक्तुं शक्यम् । तथापि तत्र पाठोऽपि स्वाभाव्यादेवेति तदनुसरणमिति द्रष्टव्यम् । यद्वा ननु सुवरिति वा स्वरिति वा शब्दस्य बहुव्रीहित्वेन बहुव्रीहेर्विशेष्यनिघ्नत्वादव्ययत्वं न स्यादित्यत आह । शब्देति । तत इति तदर्थकथनमेतत् । व्युत्पत्तिस्तु तन्यत इति तदिति द्रष्टव्यम् । तनोतेरदिप्रत्यय इति । शृदृभसोऽदिरिति पूर्वसूत्राददिरित्यनुवृत्तेस्तस्य च त्यजीत्यादिना त्यजादिभ्यो डित्वविधानात्तनोतेरदिप्रत्ययो डिन्नेत्यर्थः । इकारो दकारोऽभिव्यक्त्यर्थः । चर्त्वन्तु स्फुटमेवेति भावः । उदुप्रत्यय इति । क्वचित्पाठस्तु श्रुतानुवृत्तिलब्धार्थानुवादोयमिति समाधेयः । भजनीय इति वृङ् संभक्ताविति धातोरिति भावः । वृञ् वरण इत्येव धातुर्वरेण्यं च भजनमेवेति भावेनैवमुक्तमिति वा । वृञ एण्य इति । न च वृञ एण्य इति पाठादनुक्तानुवादोऽयमिति वाच्यम् । अदिभूभ्यां डुतजिति मूलपाठेऽपि अदिभुवोडुतजिति कल्पनावदत्रापि वृञ इत्यस्यैव मूलपाठत्वेऽपि वृङ् इत्यस्यापि कल्पितत्वात् । अत एव वेदभाष्येऽपि वृञ एण्य इत्येव पठितमिति द्रष्टव्यम् । वृत्यन्तरे तथा पाठदर्शनादेवमुक्तमित्यप्याहुः । न चैण्यप्रत्यये प्रत्ययस्वरेणाद्युदात्ते सति विशिष्टस्वरेण मध्योदात्तं सदेण्यपदं स्यात् । नाद्युदात्तमिति वाच्यम् । वृषादीनां चेत्याद्युदात्तत्वसम्भवात् । न च वृषादिष्वस्यापाठात्कथमाद्युदात्तत्वं तस्याकृतिगणत्वादिति ध्येयम् ।

ननु धातुसमुदायान्तप्रत्ययविधायकमित्यत आह । उणादय इति । ननु परश्चेत्यनेन प्रत्यये धात्वव्यहितपरत्वस्योक्तत्वात् धातुसमुदायात् कथं प्रत्यय इत्यतो वाह । उणादय इति । अन्यत्र तथा नियमेऽपि उणादिषु बाहुलकान्न नियम इति भावः । ननु परश्चेति चशब्देन परत्वविकल्पाभावस्योक्तत्वात् कथं न तत्र तन्नियम इत्यत आह । अदिभूभ्यामिति । तथाच चशब्दबलात् परत्वनियमोऽपि नाव्यवधाननियमः । धातुसमुदायादपि प्रत्ययदर्शनादागमव्यवधान दर्शनाच्चेति

भावः । यद्यप्यत्र वृत्तिकृता अदिभुवोडुतजिति सूत्रं पठित्वा अद्युपपदभूधातोर्डप्रत्यये भवतीति व्याख्यातम् । उदाहृतं चाद्भुतमिति । तथापि अदिभूभ्यामित्येव मूलकोशेषु पाठदर्शनात् वृत्यन्तरेऽपि अदिभूभ्यामित्येव पठितत्वात्तथैव व्याख्यातत्वाद्दातु व्यतिरिक्तस्यादित्युपपदस्याभावाच्च अदिभुवोडुतजिति पाठः कल्पित एव । अत एव निघण्टुभाष्ये धातुसमुदायात्प्रत्ययो बहुषु स्थलेषु व्याख्यात इति भावः । ननु कथं भातेर्ह्रस्वत्वम् । न च निरुक्तत्वेन पृषोदरादित्वात् वर्णविकार इति वाच्यम् । प्रकृतिप्रत्ययसन्निधान एव वर्णविकारादेस्तत्र व्याख्याततत्वादित्यत आह । प्रत्ययेति । साक्षात्प्रत्ययसन्निधानाभावेऽपि धातुसमुदायादेव प्रत्ययविधानात् । प्रत्ययसन्नियोगमात्रेण वर्णविकारोपपत्तिरिति भावः ।

ननु रमेः कथं टिलोपः । नचास्तु नो डित्वव्याख्याने युक्तः टिलोप इति वाच्यम् । तथापि तादृशप्रत्ययसन्निधानेन गमेष्टिलोपेपि रमेस्तदभावादित्यत्राह । रमेरिति । प्रत्ययसन्नियोगेनेत्यत्राप्यनुवर्तते । साक्षाड्डिप्रत्यय सन्नियोगाभावेऽपि डिप्रत्ययसन्नियोगमात्रेण रमेरपि टिलोप इत्यर्थः । न चैवं यथाकथंचिड्डिप्रत्ययसन्नियोगात् भ्रान्तेरपि टिलोपः स्यादिति वाच्यम् । बहुवचनेन तद्बाधसम्भवादिति भावः । उत्तरत्रेति । अग्निमीळ इत्येतन्मन्त्रव्याख्यानावसरे द्योतनाद्विजयात्कान्त्येत्यादिना देवशब्दो व्याख्यात इत्यर्थः ।

ननु ध्यायतेः शब्विकरणस्य परस्मैपदिनो लिङि ध्यायेमेति रूपेण भवितव्यं तत्कथं धीमहीति रूपमित्यत्राह । ध्यायतेरिति । हल इति सम्प्रसारणस्य दीर्घ इति बोध्यम् । व्यत्यय इति । अत्र बाहुलकविषयसङ्ग्राहके ''सुप् तिङुपग्रहलिङ्गनराणां कालहलश्च स्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोपि च सिध्यति बाहुलकेनेति'' श्लोके हलश्च ग्रहणे न सम्प्रसारणस्य यङ् ग्रहणेन विकरणलोपस्योपग्रहग्रहणेनात्मनेपदस्य च सङ्गृहीतत्वादिति भावः । बहुवचनार्थ इति । धीमहीति बहुवचनार्थ इत्यर्थः । लेडिति । णिजन्ताच्चुदेर्लेटि लेटो डाटौ इत्यडागमे इतश्च लोप इतीकारलोपे गुणायादेशयोश्चोदयादिति रूपसिद्धिः । तस्य च लिङर्थे लेडिति लिङर्थत्वादुत्तरत्र लिङन्तत्वेन व्याख्यानं युक्तमिति ध्येयम् । गायत्र्यर्थात्वात्तस्येति । वर्गत्रयात्मकस्य तस्य त्रिपदगायत्रीव्याख्यानतायाः तद्भेदः पौरुषं सूक्तमित्यागमेन पुरुषसूक्तस्य वेदमातातु गायत्रीति कृतगायत्रीभेदत्वोक्त्या सिद्धत्वादिति भावः ।

कुषन् प्रत्यय इति । पुरः कुषन् प्रत्यये कित्वाद्गुण प्रतिषेधे उदोष्ठ्यपूर्वस्येति ऋत उत्वे रपरत्वे च पुरुषशब्दनिष्पत्तिरिति भावः । विदि पुरोः कुषन् इत्येव सूत्रपाठेऽपि प्रकृतोपयुक्तमात्र-

ग्रहणाभिप्रायेण वा पाठान्तराभिप्रायेण वेदं ग्रहणम् अत एव गीताभाष्ये तथैव पाठो धृतः इति द्रष्टव्यम् । पुरुषसूक्तार्थत्वादिति । वेदाः पुरुषसूक्तगाः इत्यागमेन सर्ववेदानां पुरुषसूक्तार्थतया अवगतत्वादिति भावः । सर्ववेदार्थत्वेऽपि भगवतः कुतः स्मृत्यादि सर्वशास्त्रार्थत्वमित्यत आह । स्मृतीनामिति । तेषां सर्वशब्दानां द्वयमिति । सर्वशास्त्रार्थत्वं सर्वशब्दार्थत्वं चेत्येतद्वयमित्यर्थः । प्रसङ्गादिति । सर्ववेदार्थत्वपर्यन्तस्यैव प्रकृतोपयोगेन सर्वशास्त्रार्थत्वसर्वशब्दार्थत्वयोः प्रकृतानुपयोगादिति भावः । एवमोमित्यादि भाष्यमृगर्थव्याख्यानादेः परमेश्वरातितुष्टिकरत्वाक्षेपपरिहारार्थत्वेन व्याख्याय विषहरादिमन्त्रवदविवक्षितार्थत्वात् ऋचो न व्याख्येया इत्याक्षेपपरिहारार्थत्वेनापि व्याख्येयमित्याह । अनेनैवेति । मन्त्राणां कर्मणि विनियुक्तत्वेन कर्माङ्गत्वात्तस्य चोच्चारणमात्रेणादृष्टद्वारैव सम्भवादर्थप्रकाशनरूपदृष्टार्थत्वे उपायान्तरेणापि प्रयोगवेळायां तस्य सम्भवेन नित्यत्ववन्मन्त्रोच्चारणस्याग्निर्मूर्धेत्यादिमन्त्राणां मूर्धाग्निरित्येवमुच्चारणेऽप्यर्थप्रत्यय सम्भवेन क्रमनियमस्यानर्थक्यप्रसङ्गात् नियतक्रमवन्मन्त्रोच्चारणजन्यार्थप्रकाशनेनादृष्टकल्पेन पुरुषप्रयत्नगोचरमन्त्रोच्चारणजन्मादृष्टकल्पनस्यैव न्याय्यत्वात् । सति तूच्चारणे स्वयमेव भवतार्थप्रत्ययेनादृष्टं भवतीति कल्पनस्यायुक्तत्वान्मन्त्राणामविवक्षितार्थत्वमित्येतदपि सर्ववेदानां मुख्यतो भगवत्प्रतिपत्तिहेतुत्वस्य श्रुत्यादिनोपपादितत्वेन निरस्तमित्यर्थः ।

अन्यथेति । विशेषेण भगवतो ऋगर्थत्वाभावे प्राण ऋच इत्येव विद्यादिति पुनरुक्तिर्व्यर्था स्यादित्यर्थः । आवृत्या योज्यमिति । पूर्वोत्तरवाक्याभ्यां योज्यमित्यर्थः । तावा एता ऋच इति सर्ववेदार्थतामाह । विशेषेण ऋगार्थतामप्याहेति । नन्वेतावताऽपि कथं वेदान्तगाद्विशेषतो ऋग्वेदस्य परमेश्वरपरत्वमुपपादितं स्यात् भगवद्वाचकाग्न्यादिनाम्नां वेदान्तरेऽपि सद्भावादित्यत आह । इदमुक्तं भवतीति । मन्दान् प्रति स्पष्टं भगवत्प्रतिपादकत्वमेव वेदान्तरापेक्षया ऋक्षु विशेष इत्यत्र भाष्यकारीयं ज्ञापकमाह । तदुक्तमिति । ऐतरेयभाष्य इति भावः । भगवत्प्रवृत्तेर्यादृच्छिकत्वनिमित्तान्तरमूलकत्वस्योक्तनिमित्तमूलकत्वरूपसम्भावितपक्षत्रये स्वोक्तनिमित्तमूलकत्वं व्यवस्थापयितुं इतरनिमित्तद्वयं दूषयति । न हीत्यादिना । विशेषशास्त्र बलेनेति । चिरन्तनवेदव्यासकृतशास्त्रबलेनेत्यर्थः ।

नन्वस्य भाष्यस्याग्न्यादिदेवतामात्रपरत्वे प्रतिज्ञाविरोधः । अनन्यसाधारणगुणप्रतिपादनविरोधश्च भगवन्मात्रपरत्वे कचिद्देवतान्तरसाधारणार्थप्रतिपादनात्तद्विरोधः अतः कथमेतत् भाष्यं न पूर्वोत्तरविरुद्धमित्यत एवं स्थितेऽग्निगंविष्णुमग्निनामानमेव चेत्याद्युत्तरभाष्यं मनसि निधाय

समाधत्ते । ऋगर्थ इति । तत्र हेतुमाह । त्रिविधः खलु वेदार्थ इति । वेदार्थः त्रिविध इत्येतत् प्रसिद्धम् । तथा प्रमाणादिति भावः ।

ननु त्रिविध एव ऋगर्थ इत्युक्तम् । प्रसिद्धाग्न्यादिदेवतदन्तर्गतपरमात्मेन्द्रियादि रूपाग्न्यान्तर्गतपरमात्मरूपार्थत्रयापेक्षया भगवतोऽग्न्यादिनामकपृथग्रूपाणामपि सत्वात् । तेषामपि अग्न्यादिशब्दवाच्यत्वेन सम्प्रतिपन्नत्वात् यद्वक्ष्यति पृथग्रूपाणि विष्णोस्तु देवतान्तरगाणीति । तथाच चातुर्विध्यमेव वक्तव्यमिति चेत् । न । अग्न्याद्यन्तर्गतानामिव तदनन्तर्गत रूपाणामग्न्यादिशब्दवाच्यत्वेन रूपेणात्रापि ग्रहणेन न्यूनत्वाभावात् । अध्यात्मरूपेतराग्न्यादि शब्दमुख्यार्थत्वस्य सङ्ग्रहोपाधित्वात् तस्य चाग्न्यन्तर्गततानन्तरर्गतसाधारण्यादिति सम्प्रदायः । अध्यात्मरूपः इति । शरीरान्तर्गतपरमेश्वरादिलक्षण इत्यर्थः । मुख्यत्वामुख्यत्वाभ्यामिति । हरेर्मुख्यताग्नेस्त्वमुख्यता इति विवेकः । तद्धितोनिप्रत्यय इति । तद्धिता इति सूत्रेणेति शेषः । यद्यप्यत्र निप्रत्यय इत्येव वक्तव्यं तथापि निप्रत्ययविधायकमपि तद्धिता इति सूत्रमेवेति सूचयितुं तद्धित इत्युक्तमिति ध्येयम् ॥

### छलारीनरसिंहाचार्यविरचिता

## टीकाविवृतिः

श्रीब्रह्मवंद्यं सुगुणं मुकुन्दं द्वैपायनं मध्वमुनिं जयार्यम् ।
विद्याद्यधीशान्स्वगुरून्प्रणम्य ऋग्भाष्यटीकाविवृतिं करिष्ये ॥

ग्रन्थादौ मङ्गलमाचरति । नारायणेति । वयं नारायणाभिधं ज्योतिः नारायणनामकमादित्यम् । उपास्महे ध्यायेमेत्यन्वयः । नारायणस्य ज्योतिस्साद्दश्यं दर्शयितुं विशेषणद्वयम् । प्रत्यूहध्वान्तशान्तिकृत् । प्रत्यूहाः विघ्नाः ध्वान्तानीव अन्धकारा इव तेषां शान्तिं नाशं करोतीति तथोक्तम् । विघ्नानां ग्रन्थप्रवृत्तिप्रतिबन्धकत्वादंधकारस्य च बाह्यप्रवृत्तिबाधकत्वात्साम्यम् । कमलाकमलानन्दं कमला लक्ष्मीः कमलानीव पद्मानीव कमलाकमलानि तान्यानन्दयति सुखयतीत्यानन्दम् । कमलायाः सकलप्रियत्वात्पद्मानां च तथात्वात्साम्यम् । सूर्यस्य पद्मानन्दप्रदत्वं नाम तद्विकासकत्वमेव । विष्णोस्तु मुख्यमेव लक्ष्म्यानन्दप्रदत्वम् । अनेन विशेषणद्वयेन सर्वानिष्टनिवर्तकत्वं सर्वेष्टसाधकत्वं चध्वन्यते । तेनोपास्यत्वोपयोगिविशिष्टत्वमिष्टत्वं च सूचितम् । एतेनैव सकलवाङ्मनसदेवतायाः लक्ष्म्या अपि परिवारत्वेन वंदनं सूचितम् ।

सूर्यज्योतिषोपेक्षया नारायणज्योतिषोतिशयं वक्तुमन्तःस्वान्तमिति विशेषणम् । स्वान्ते मनसि अन्तःस्वान्तं विभक्त्यर्थेऽव्ययीभावः । अनेन सूर्यस्य दूरे स्थितत्वाद्बाह्यप्रवृत्त्युपयोगित्वात्तदपेक्षया विष्णोरतिशयस्तस्य मनसि स्थितत्वादन्तःप्रवर्तकत्वाच्चेत्युक्तं भवति । नारायणाभिधमित्यनेनाधिकृतत्वं सूच्यते । नारायणशब्दस्योंकारसमानार्थत्वेन विष्णोः सर्ववेदार्थत्वस्य वक्ष्यमाणत्वात् । एवं कृतं मङ्गलं शिष्यशिक्षार्थं ग्रन्थादौ निबध्य चिकीर्षितं प्रतिजानीते । ऋचामिति । वयं ऋचां पदान्युपादाय इति शब्दं विनाऽनूद्य । तेषां पदानां भाष्यपदैः सह संवादितामात्रं इतिकरणं विनैव संयोजनमात्रं कुर्मः । भाष्य स्यछायाव्याख्यानरूपत्वादित्याशयः। प्रायिकं चैतत् । क्वचित्प्रतीकग्रहणेन च व्याख्यानात् । तत्रास्तिमूलत्वद्योतनायोक्तं यथाधीतं यथामतीति । यथाधीतं अध्ययनं गुरूपदेशपरंपरामनतिक्रम्य । तथा यथामति स्वबुद्धिमनतिक्रम्य। नतु विप्रलिप्सादिनेत्यर्थः । अथवा सर्वस्य ऋग्भाष्यार्थस्य रुद्रादिभिरेव ज्ञातुं वक्तुं च शक्यत्वाद्भवतस्तादृशभाष्यटीकाकरणं न युज्यत इत्यत इदमुक्तम् । उपदेशानुसारेण स्वबुद्ध्यनुसारेण ऋक्पदभाष्यपदयोः संयोजनमात्रं मया क्रियते नतु सर्वभाष्यार्थः कथ्यत इत्याशयः ।

नन्वेतत्संयोजनं नयुज्यते । तथाहि । वेदार्थज्ञानार्थं भाष्यं तावन्नकर्तव्यम् । वेदानां निष्फलत्वेनाप्रामाण्यात् । नतावदैहिकम् । तस्यादर्शनात् । प्रसिद्धकृष्यादि साधनसाध्यत्वाच्च । नाप्यामुष्मिकम् । स्वर्गादेः कर्मादिसाध्यत्वान्नश्वरत्वाच्च । मोक्षस्य तु भगवत्प्रसादसाध्यत्वेन वेदानपेक्षणात् । न च प्रसादसाधनज्ञानार्थत्वम् । प्रसादस्य कर्मादिनैव सिद्धेः । अस्तुवा कथंचिज्ज्ञानार्थत्वम् । तथापि वेदार्थज्ञानस्य वाच्यवाचकभावसमयग्रहादि नैव सिद्धेर्भाष्यानपेक्षणात् । अपेक्षायां वा भाष्यान्तरादेव तत्सिद्धेः ।

अस्तु वाभाष्यं कथंचित् । तथापि प्रथमश्लोकस्य ऋग्व्याख्यानरूपत्वाभावेन वैयर्थ्यम् । नच मङ्गलार्थत्वम् । तस्य प्रयोजनाभावात् । न च विघ्नध्वंसः प्रयोजनम् । श्रीमदाचार्याणां देवोत्तमत्वेन विघ्नाभावात् । नारायणं प्रणम्येत्येतावता मङ्गलस्य कृतत्वाद्विशेषणवैयर्थ्याच्च । प्रतिज्ञाभागे अतितुष्टिकरं तदस्येत्यस्यापि वैयर्थ्यमित्यत आह । इहेति । इह जनेषु मध्ये । अकूपारः समुद्रः । इहेत्यादि वेदा इत्यंतेन वेदानां मोक्षसाधनप्रसादसाधनज्ञानप्रयोजनकत्वान्नाप्रामाण्यम् । कर्मादीनां मोक्षसाधनप्रसादसाधनत्वाभावस्यान्यत्रोक्तत्वादिति पूर्वशङ्कापरिहारः । सर्ववेदानां भगवत्परत्वाप्रदर्शनात्कासांचि दृचां भाष्यं व्यर्थमित्यत आह । प्रकारेति । कासांचिदृचां भगवत्परत्वे ज्ञाते सर्वोपि वेदस्तत्परो बुद्धिमता व्याख्यातुं शक्यते इति भावः ।

अप्रतिपत्तीत्याद्याचार्य इत्यन्तेन तथापि तेषां गहनार्थत्वेनाप्रतिपत्त्या परभाष्याणां च विपरीतार्थप्रतिपादकत्वेन विप्रतिपत्त्या च ज्ञानार्थत्वासम्भवाद्यथावद्व्याख्यानस्यैव भाष्यत्वात्तादृशं भाष्यं सार्थकमिति द्वितीयशङ्कोद्धारः । प्रारिप्सितस्येत्यनेन मंलगस्याविघ्नसमाप्तिफलकत्वेना-वश्यकत्वात्प्रथमपद्यस्य सार्थक्यमुक्तम् । प्रचयायचेत्यनेन स्वस्य विघ्नाभावेपि शिष्याणां विघ्नसम्भवात्प्रचयो न स्यादतः प्रचयार्थं मङ्गलमिति मङ्गलस्य प्रयोजनान्तरमुक्तम् । स्तवने इति विशेषणानां सार्थक्यम् । प्रयोजनं चेत्यतितुष्टीत्यादेः सार्थक्यमुक्तम् । प्रयोज्यते प्रवर्त्यतेऽनेन पुरुष इत्यनुबन्धचतुष्टयमपि प्रयोजनशब्देन ग्राह्यम् ।

ननु निखिलपूर्णशब्दयोः पौनरुक्त्यमित्यत आह । निखिला इति । अर्णं इतीति । उदकेनुट् चेत्युणादि सूत्रेणार्त्तेरसुन्प्रत्ययो नुडागमश्च जले वाच्ये विधीयते अतोर्णं इत्युदकनाम । अम्भोर्णस्तोय पानीयेत्यमराच्चेति भावः । ततो मत्वर्थ इति । अयं भावः । प्रत्यय इत्याद्यधिकारसूत्रवत्तद्धित इत्येकवचनान्ते प्रयोक्तव्ये यत्तद्धिता इति बहुवचनं प्रयुक्तं तेन तद्धिताधिकारानुक्ताः प्रत्ययाश्च सन्तीति ज्ञाप्यते इति । तथाच काशिका । बहुवचनमनुक्ततद्धितपरिग्रहार्थम् । तेन अग्रपश्चादि मन्नित्येवमादिलब्धं भवतीति । तेन मत्वर्थे डप्रत्यये तस्य डित्वादर्णसूशब्दस्य सान्तत्वाट्टेरिति टिलोपे अर्णं इत्युदकवान्समुद्र इत्यर्थो भवति ।

अमितशब्दस्य सूर्यविशेषणत्वादमितसूर्यद्युतीति भाव्यमित्यत आह । कडारा इति । कडारादेराकृतिगणत्वादिति भावः । सूर्यस्योच्चत्वमूर्ध्वदेशस्थत्वं मेषराशिस्थत्वं वेति भ्रान्तिनि-रासायाह । सामस्त्येनेति । सूर्यद्युतेः सूर्यनिष्ठत्वान्नारायणनिष्ठत्वं कथमित्यत आह । द्युतिरिवेति । उष्ट्मुखादिवदुत्तरपदलोपोऽग्निर्माणवक इत्यादिवद्गौणोवा व्यवहार इत्याशयः । कडारादेराकृतिगणत्वाश्रयणमगतिकगतिकमित्यत आह । यद्वेति । अपरिच्छिन्ना तैरुपमातुम-शक्येत्यर्थः । अशेषनिरस्तदोषमित्यत्राशेषशब्दस्य दोषविशेषणत्वात्तेन कर्मधारये पश्चान्निर-स्तशब्देन बहुव्रीहौ निरस्ताशेषदोषमिति भाव्यमित्यत आह । अशेषेणेति । अशेषेण सामस्त्येन प्रकारेण निरस्ता इति निरासे प्रकारकथनम् । न तु दोषविशेषणमित्यभिप्रायः ।

ननु सर्वेश्वरमित्यनेन कथं लक्षणद्वयसिद्धिर्नारायणस्येश्वरत्वासिद्धिरित्यत आह । स्वतंत्रस्येति । प्रपञ्चं पक्षीकृत्य प्रत्यक्षसिद्धेनास्वातंत्र्येण हेतुनेश्वरवत्त्वं साध्यते । तेन ईश्वरत्वेनास्मादादिव्यतिरेकदृष्टान्तेन विष्णुरनन्तकल्याणगुणो निर्दोष एवैतत्प्रेरकः सिध्यतीति भावः । ननु तदिति शब्देन ऋगर्थपरामर्शे पुल्लिङ्गेन भाव्यमित्यत आह । ऋगर्थमिति ।

वक्ष्यामीत्यत्र प्रकृत्यर्थभूतं वचनं तथावचनस्य शिष्यश्रवणज्ञानार्थत्वाच्छ्रवणं ज्ञानं चाक्षेपलभ्यं तदित्यनेन परामृश्यत इति भावः । तच्छब्दस्यावृत्तिं द्वितीयस्य तस्मादिति हेत्वर्थत्वमभिप्रेत्य तद्वाक्यं योजयति । यस्मादिति । तस्मात् वक्ष्यामीत्यन्वय इति भावः । प्रकृत्यर्थ परामर्श आक्षेपलभ्यपरामर्शो वा जघन्य इत्यत आह । तदस्येत्येकमिति । अनेन सचासावयंचेति तदयं तस्य तदस्येति विग्रहः सूचितः । तच्छब्देदंशब्दविषयं दर्शयति । तस्योक्तेति । तदस्यातितुष्टिकरमृगर्थं वक्ष्यामीत्येकान्वयेन योज्यम् । ननु यदि कासांचिदृचां व्याख्या प्रतिज्ञाता तर्ह्यध्यायांते समाप्तिः कृता स्यात् अतो मध्ये समापनाद्विघ्नः सम्भाव्यत इत्यत आह । अत एवेति । उपक्षत्रं पृंचीत हन्ति राजभिर्भयेचित्सुक्षितिं दधे । नास्य वर्ता नतरुता महाधने नार्भे अस्ति वज्रिण इत्यत्र स इन्द्रः परमेश्वरः क्षत्रं मन्वादिकं उपपृंचीति आविष्टोभूत् । तैर्मन्वादिराजभिः शत्रून्हन्ति । भक्तानां भये प्राप्तेच सुक्षितिं शोभनाश्रयं दधे ददौ इति विष्णुप्रसादात् भयाभावलक्षणमोक्ष प्रतिपादनं (कऽतम्) तथाद्वितीयार्धेऽस्य वज्रिणः वर्ता प्रति योद्धा नास्ति महाधने युद्धे अर्भे अल्पेच ऐश्वर्यादौ तरुता जेतावा नास्तीति परमेश्वरस्य समाधिकराहित्यमुक्तम् । तच्च गुणोत्कर्षे देवस्य विष्णोर्महातात्पर्यं नैवचान्यत्र सत्यम् । तत्प्रीणानान्मोक्षमाप्नोति सर्वस्ततो वेदास्तत्पराः सर्व एवेति श्रुतेः सर्वशास्त्रार्थो-पसंहाररूपमित्यतोऽध्यायान्ते एतादृशार्थ प्रतिपादनाभावात्तावत्पर्यन्तं न व्याख्यातमिति भावः । तर्हि भाष्यान्ते मङ्गलं कुतो नानुष्ठितमित्यत आह । प्रसिद्धमिति । नहि नमस्कार एव मङ्गलं किन्तु धनादिमङ्गल वाचिशब्दप्रयोगोऽपीति ज्ञापनार्थं धनमित्येव प्रयुक्तमिति भावः । मध्ये इति । तृतीयाध्याये पञ्चमोवर्ग इत्यर्थः । ऋगादिमात्राव्याख्यानस्यतु स्पष्टार्थत्वेनोपपत्तावपि त्रिर्नो अश्विनायजतादिवेदिव इत्यादि वर्गस्याप्रसिद्धार्थपदव-त्त्वादस्याव्याख्यानस्या समस्तव्याख्यानप्रतिज्ञां विनानुपपत्तेरिति भावः । ज्ञापकांतरमाह । नकिरिति । एषां पदानां व्याख्यातऋक्ष्वभावेपीति शेषः ।

ननु ऋगर्थव्याख्यां प्रतिज्ञायाग्निमीळ इत्यादिव्याख्यां विहाय ओ मशेषेत्याद्योंकारा-द्यर्थकथनमसङ्गतं स्यादित्यतस्तत्संगमयितुं शंकते । नन्विति । उत्तरमाह । सकलेति । निमित्तेनेति । प्रवृत्तिनिमित्तेनेत्यर्थः । इति शब्द इति । यस्मात् विष्णुः सर्वगुणाश्रयस्तस्मात्तेन प्रवृत्तिनिमित्तेनोंकार वाच्य इत्याशयः । ओंकारस्य सर्वगुणाधारत्ववाचकत्वे हि तेन निमित्तेन विष्णुवाचकत्वं स्यात्तदेव कुत इत्यतोऽनुव्याख्यानसंमतिमाह । यथोक्तमिति । ओतत्ववा-चीह्योंकारो वक्त्यसौ तद्गुणोततामिति वाक्ये ओतत्वं प्रविष्टत्वं सर्वगुणाधारत्वमुक्तमिति भावः ।

कुत इतीति । अशेषगुणाधारत्वस्योंकारार्थत्वेपि विष्णुरोंकारार्थः कुत इत्याशंकायामप्योम शेषगुणाधार इत्येतदेवावृत्त्या योज्यमित्यर्थः ।

तत्प्रकारं दर्शयति । ॐकारोहीति । ॐ ओंकारः । अशेषगुणाधारः अशेषगुणाधारत्वप्रतिपादकः । विष्णुश्चाशेषगुणाधारोहि यस्मात्तस्मात्तत्प्रति पादक इति भावः । नारायणोपीत्येतदपि शब्दस्वारस्याय युक्त्यंतरपरत्वेन व्याचष्टे । किं चेति । तत्रामाख्यानादिति । अनेन हेत्वर्थकेति शब्दस्यात्राप्यन्वय इत्युक्तं भवति । प्रणवार्था इति । प्रणवार्था व्याहृतयो व्याहृतित्रिगुणा पुनः । वेदमाताच गायत्रीति स्मृत्या व्याहृतित्रयस्योंकारस्थवर्ण त्रयव्याख्यानरूपत्वस्यावगमादिति भावः । एवमेव त्रिपादात्मकगायत्र्याः व्याहृत्यर्थत्वं ज्ञेयम् । यद्यस्मादिति । यस्मात्पूर्णत्वादिमान्व्याहृतीरितः तथाभूतश्च परमेश्वरस्तस्माद्व्याहृतीरित इत्यावृत्त्या योज्यमित्याशयः । भूबहौ बहुः पूर्णतायामिति । उक्तत्वात् महाव्याकरण इति शेषः । भवतेः क्विबिति । ततश्च क्विपः कित्वात्सार्वधातुकेति न गुण इति भावः । भूत्येति हेतौ तृतीया । ऐश्वर्येण निमित्तेन वरः श्रेष्ठः । महैश्वर्यवानिति तात्पर्यार्थकथनम् । डुप्रत्यय इति । मृगय्वादयश्चेति कुप्रत्यये बहुलग्रहणाड्डित्वमिति भावः । तदुक्तं महाभाष्ये । संज्ञासुधातुरूपाणि प्रत्ययाश्च ततः परे । कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिष्विति । वरेति । पृषोदरादीनि यथोपदिष्टमिति सूत्रेण निरुच्यमानानां साधुशब्दानां लक्षणान्तरेणानुक्तसर्वकार्यविधानादिति भावः ।

अत एवाह । निरुक्तत्वादिति । निरुक्तं कीदृशमित्यतस्तत्प्रभेदान् शाब्दिककारिकयाह । यथोक्तमिति । वर्णागमः वर्णरूप आगमः । यथा भूवादय इत्यत्र वकारः । यथावा गवेन्द्र इति । इदमेकं निरुक्तम् । वर्णविपर्ययः पूर्वोत्तरवर्णयोः विपर्ययः । पूर्वस्योत्तरत्वमुत्तरस्य पूर्वत्वम् । यथासिंह इत्यत्र हि सि हिंसायामिति धातुवर्णयोर्हकारसकारयो- र्विपरीतता । इदं द्वितीयं निरुक्तम् । तथापरौ पूर्वोक्तादन्यौ वर्णविकारनाशौ अन्यस्य वर्णस्य प्रयोगे प्राप्ते तत्स्थाने वर्णान्तरप्रयोगो वर्णविकारः । वर्णनाशः वर्णलोपः । इत्येतौ च निरुक्तरूपौ । द्वौचापरौ वर्णविकारनाशाविति क्वचित्पाठः । यथागूढात्मेति प्रयोक्तव्ये गूढोत्मेति । आत्मशब्दादिवर्णस्य उकारो वर्णविकारः यथा च पृषदुदरमित्यत्र दकारनाशे पृषोदरमिति । धातोः तदर्थातिशयेन तत्त्वर्थोत्कर्षेण योगः सम्बन्धः ।

इदं पञ्चमं निरुक्तम् । यथा सदेव सोम्येदमग्र आसीदित्यत्र सदित्यस्य विद्यमानत्वमात्रमेव यद्यपि धात्वर्थः । अस् धातोः शत्रंतात् श्नसोरल्लोप इत्यकारलोपे सदितिरूपस्य जातत्वात्तथापि

विद्यमानत्वस्य सर्वसाधारण्यात्प्रलयनिष्ठवस्तुनि सच्छब्दप्रयोगस्य प्रयोजनाभावादतिशयित-विद्यमानत्वमर्थो भवति। तच्च स्वातन्त्र्येण विद्यमानत्वं वा सदा विद्यमानत्वं वा इत्येवं प्रसिद्धं निरुक्तं पञ्चविधमिति शाब्दिक कारिकार्थः। वः सुखमिति। बवयोरभेदात् बशब्दस्य मदार्थत्वान्मदहर्षे इत्युक्तेर्वः सुखमिति भावः। तदुक्तमेकाक्षरमालायाम्। बःपुमान्वरुणे कुम्भे विकल्पे गगने गुरौ। कलभे खगगर्भे च मदे बाल्ये च कर्मणीति।

ननु स्वर्गवाचिस्वर्शब्दस्य स्वरादिनिपातमित्यव्ययत्वादनन्त सुखवाचिस्वर् शब्दस्य कथमव्ययत्वमित्यत आह। शब्देति। अव्ययत्वेनार्थविशेषः प्रयोजकः किं तु शब्दस्वभाव एवेति भावः। यद्व्याहृतीरित इत्यस्य पुनरावृत्तिं सगायत्र्यर्थ ईरित इत्यनेनान्वयं चाभिप्रेत्याह। यस्मादिति। केन निमित्तेनेत्यस्योत्तरं गुणैस्तत इत्यादि। ततश्च यस्माद्गुणैस्ततः प्रसविता गुणोन्नतेर्वरणीयः भारतिज्ञानरूपः अखिलैर्जनैर्ध्येयः अशेषबुद्धीनां प्रेरकः अतः स एव गायत्र्यर्थ ईरित इति सगायत्र्यर्थ ईरित इत्यस्यावृत्त्या योज्यमित्याशयः। त्यजीति। शृदृभसोऽदिरि-त्यतोऽदिरित्यनुवर्तमाने त्यज्यादिभ्योऽदिः स्यात्सडिच्चेति सूत्रार्थः। ततश्च तनोतेरदिप्रत्यये डित्वाट्टिलोपे खरि चेति चर्त्वे इदं रूपमिति भावः। त्यजियजितनिभ्योडिदिति तनोतेर्ड त्प्रत्यय इति क्वचित्पाठः। तस्मिन्पाठेऽदिप्रत्ययानुवृत्तिक्लेशो नास्ति। अस्मिन्पाठे दकारस्य हलंत्यमितीत्संज्ञाभावार्थं डदः परमिकारानुबन्धो बोध्यः। सवितृत्वं न सूर्यसाधारणमित्यभिप्रेत्य प्रसवितेत्युक्तं भाष्ये। तस्याशयमाह। जगत इति। षूञिति। अस्मात्तृजिति। सार्वधातुकेति गुणेऽवादेशेच सवितेति रूपमिति भावः। वृणोतेरिति। वृञ् वरण इति धातोः कर्मण्येण्यप्रत्यये गुणे रपरत्वे च वरेण्य इति रूपमिति भावः। धातूनामनेकार्थत्वाच्च पूर्वं वरणीयो भजनीय इति व्याख्यातम्। गुणोन्नतेरित्यस्य वरेण्यशब्दप्रवृत्तिनिमित्तत्वभ्रान्तिं वारयति। गुणोन्नतेर्हेतोरिति। तदिति। तच्छब्दार्थवरेण्यशब्दार्थयोरित्यर्थः।

ननु भर्गशब्दव्याख्याने भारतिज्ञानरूपत्वादित्यत्रोक्तभावाच कत्वं भशब्दस्य रतिवाचकत्वं च रेफस्य यद्यपि वक्ष्यमाणधातुव्याख्यानबलात् सेत्स्यति तथापि ग शब्दस्य ज्ञानवाचकत्वं कथं गमिधातुरूपत्वांगीकाराद्गमेश्च गत्यर्थत्वादित्यत आह। गत्यर्थानामिति। धातुसमुदायादिति। यद्यपि भातेरौणादिके डप्रत्यये भ इति रूपं तथा रमेः क्विप्रत्यये डित्वेच रेफमात्रं गमेरसुनिडिति ग इति एवं भर्ग इति रूपं साधयितुं शक्यते तथापि प्रकारविशेषप्रदर्शनायैवमुक्तमिति ज्ञेयम्।

ननु धातोरित्येकवचनस्य पशुना यजेतेतिवद्गुणे संख्या विवक्ष्यत इति न्यायेन विवक्षितत्वादेकस्मादेव धातोः प्रत्ययेन भाव्यमतः कथं धातुसमुदायात्प्रत्यय इत्यत आह । उणादय इति । क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव । विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्तीत्युक्तेर्बहुलग्रहणस्य क्वचिदन्यदेवेत्येतदर्थकत्वादयं न्यायो बाध्यत इति भावः । अनुपलंभबाधितमेतदित्यत आह । अदिभूभ्यामिति । नचादिभुवोड्डुतजित्येव पाठमाश्रित्याद्युपपदे भुवोड्डुतच्प्रत्ययः स्यादिति वृत्तिकारैर्व्याख्यातत्वात्कथं धातुसमुदायात्प्रत्ययस्योदाहरणमिति वाच्यम् । प्रसिद्धार्थकपदस्यैव सूत्रेषूपपदत्वदर्शनाददृशब्दस्यार्थविशेषे प्रयोगादर्शनादुपपदत्वाभावात् । कृदरादयश्चेत्यत्र कृदृन्जाभ्यामच्प्रत्ययनिपातनादादिशब्दाद्वृत्तिकारैः मृदरं सृदरः इत्याद्युदाहरणाद्धातुद्वयात्प्रत्ययसिद्धेश्चादिभुव इत्यपपाठ एव । विशेषस्तु मत्कृतशाब्दिककण्ठमणौ कृदंतप्रकाशे द्रष्टव्यः ।

ननु धातुत्रयादसुनि भारं गम इति स्यान्नतु भर्ग इत्यत आह । असुन्प्रत्ययेति । पृषोदरादित्वाद्धातेर्ह्रस्वत्वं रमेर्गमेश्च टिलोपश्च । तत्र यं चासुन्प्रत्ययसम्बन्धे नैवेति भावः । ननु ध्यैचिंतायामित्यस्य भ्वादिगणस्थत्वात्परस्मैपदित्वाच्च विध्यादिलिङि ध्यायेमेति स्यात्कथं धीमहीत्यत आह । ध्यायतेरिति । व्यत्ययो बहुलमिति बहुलग्रहणात्सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां चेति वक्ष्यमाणश्लोकोक्तानां व्यत्ययोक्तेर्हल्रूपयकारस्थले इकाररूपसंप्रसारणं तिङ्स्थाने तङ् भवति । विकरणलोपस्त्वदिप्रभृतिभ्यः शपः बहुलं छं दसीत्यनेनेति भावः । बहुवचनेति । धीमहीत्यत्रेति शेषः । न इति बहुवचनेति । अहं चान्येचेति विग्रहे त्यदादीनि सर्वैर्नित्यमित्यस्मदः शेषेन इति बहुवचनस्यार्थोऽशेषेत्याद्युक्तं भवतीति भावः ।

ननु प्रपूर्वात् चुदसंचोदन इति चौरादिकणिजंताद्विधिलिङि प्रचोदयेदिति स्यादशीर्लिङिप्रचोद्यादिति स्यात्कथं प्रचोदयादितीत्यत आह । चुदेति । सञ्चोदन इत्यस्यैव प्रेरण इत्यर्थानुवादोयम् । चुदेर्णिचि गुणे लेटि तिपि शपि लेटोडाटावित्याडागमे इतश्चलोपः परस्मैपदेष्वितीकारलोपे णिचो गुणायादेशयोः प्रचोदयादिति रूपमिति भावः । एवं तात्पर्यार्थकथनेन कथमक्षरयोजनेत्यत आह । एवमिति । यः सविता तदित्यस्यैवावृत्तिसहितस्य व्याख्यानत्रयं तस्येति षष्ठ्यन्तं तद्गुणैस्ततमिति प्रथमान्तं तस्मादेवेति पञ्चम्यंतं चेति । तत्र षष्ठीपञ्चम्योः सुपांसुलुगिति स्वादेशे तदितिरूपं भवतीति भावः । गायत्र्यर्थत्वादिति । तद्भेदः पौरुषं सूक्तमिति वाक्ये वेदमातातु गायत्रीति प्रकृतत्रिपदगायत्रीव्याख्यानरूपत्वं वर्गत्रयात्मकपुरुषसूक्तस्योक्तमिति भावः ।

भाष्ये पुमान्नामेत्यस्य वैयर्थ्यपरिहाराय तन्निवर्तनीयशंकां प्रदर्श्यार्थमाह । न चेति । पुरुषसूक्ते पुम् शब्दस्याभावात्तद्व्याख्यानं भाष्ये व्यर्थमित्यत आह । पुरुषो नामेति । पुम्शब्द-पुरुशब्दयोरेकार्थत्वात्पुम्शब्देन पुरुषशब्द एव विवक्षित इत्यर्थः । पॄ इति । पुरः कुषन्निति पुर अग्रगमन इत्यस्मादुक्तोपि बहुलोक्तेरस्मादपि कुषन् तस्य कित्वाद्गुणाभावे उदोष्ठ्यपूर्वस्येत्युत्वे रपरत्वे च पुरुष इति रूपमिति भावः । पुर इत्यनेन उदोष्ठ्यपूर्वस्येत्यनेन कृतोत्वस्य ऋकारान्तस्यैव ग्रहणम् । न वृत्तिकारोक्तरीत्या पुर अग्रगमने इत्यस्येति भाव इत्याहुः । पुरुषसूक्तार्थत्वादिति । वेदाः पुरुष सूक्तगा इति वचनादिति भावः । एवचेत्येवचशब्दौ भिन्नक्रमौ स इति चानुवर्तत इत्यभिप्रेत्याह । स एव सर्वशास्त्रार्थश्चेति । ततश्चेति । सर्वशास्त्रार्थत्वादेवेत्यर्थः । एतद्द्वयमिति । सर्वशास्त्रार्थत्वं सर्वशब्दार्थत्वं चेत्यर्थः । विष्णोः सर्ववेदार्थत्वस्यैव प्रकृतोपयोगादिति भावः ।

ननु इत्याहोपनिषत्परेति भाष्ये यदोमशेषेत्यादिवाक्यं तत्परोपनिषन्नामकग्रन्थस्थमिति प्रतीयते । न तद्युक्तम् । तावाएता ऋच इतीत्युत्तरवाक्यासङ्गतेः परोपनिषन्नामकग्रन्थस्या-प्रसिद्धेश्चेत्यतो नेदं भाष्यमोमशेषेत्यादिशेषभूतं किं तु तावा एता इत्यादि शेषभूतमित्यभिप्रेत्य पूर्वग्रन्थेन इत्याहेत्यादिकं सङ्गमयन्नवतारयति । एवमिति । ईश्वरः सर्ववेदार्थः तद्व्याख्येय-पुरुषसूक्तार्थत्वात् यो यद्व्याख्येयार्थः स व्याख्यानरूपग्रन्थार्थः । यथा रामायणार्थो रामस्तट्टीकार्थ इत्येवं रूपेणानुमानेनेत्यर्थः । ननु नमन्त्राः व्याख्येयाः अविवक्षितार्थत्वात् विषहरमन्त्रवत् । अविवक्षितार्थत्वं च कर्मणि विनियोगेन कर्माङ्गत्वात् । नच मन्त्राणां कर्माङ्गदेवताप्रक-ाशनार्थत्वमिति वाच्यम् । अग्निर्मूर्धेत्यादावर्थविवक्षायां मूर्धाग्निरित्युच्चारणेनाप्यर्थप्रतीति-गम्भवात्क्रमनियमवैयर्थ्याददृष्टकल्पनस्यैवाङ्गीकार्यत्वान्न विवक्षितार्थत्वम् । तदुक्तं मन्त्राधि-करणपूर्वपक्षे जैमिन्याचार्यैः । बुद्धशास्त्रादिति । वाक्यनियमादिति च । बुद्धे ऋत्विजाऽऽग्नीध्रे-णाध्ययनसमय एव स्वकर्तव्यत्वेन ज्ञातेऽग्निविहरणादावर्थे पुनरग्नीदग्नीन् विहरेत् प्रोक्षणीरासादयेत् इत्यादिमन्त्रोच्चारणशासनाद्वाक्ये च पदानां क्रमनियमाच्च मन्त्राणामविवक्षितार्थत्वमिति सूत्रद्वयार्थः । अतो नव्याख्येयत्वमग्निमीळ इत्यादिमन्त्राणामित्यत आह । अनेनेति । सर्ववेदानां मुख्यतो भगवत्प्रतिपादकत्वस्यानुमानादि नोपपादितत्वेनैतच्चोद्यं परास्तमित्यर्थः । न च मन्त्राणां कर्मणि विनियोगाददृष्टार्थत्वादविवक्षितार्थत्वम् । देवताप्रकाशनरूपदृष्टार्थत्वे सम्भवत्य-दृष्टकल्पनाया अन्याय्यत्वात् । एवं पदनियमवता मन्त्रेणैव देवताज्ञापनेऽगत्याऽदृष्टमङ्गीक्रियते । अतो मन्त्राणां विवक्षितार्थत्वाद्युक्तं व्याख्यानमिति भावः । विशेषेणापीत्यस्य

प्रकृतासङ्गतिमाशंक्य अतितुष्टिकरमित्यत्रत्यातिशब्दार्थविवरणार्थत्वान्नासङ्गतिरिति भावेन तन्निवर्तनीयाशङ्काप्रदर्शन पूर्वकमवतार्य व्याचष्टे । नन्विति । तथाचाद्यश्लोकेऽतीत्यस्यै-तच्छंकानिरासकत्वमुक्तं भवतीति भावः ।

ननु तावा इत्यादेरित्याहोपनिषत्परेत्येतच्छेषभूतत्वात्कथं विशेषेणापीत्यनेनान्वय इत्यत आह । तावा एता ऋच इत्यस्यावृत्त्येति । पूर्ववाक्यशेषत्वमात्रत्वे तु तावा एता इत्येवप्रतीकग्रहणं स्यात् न तु भिन्नक्रमस्य ऋच इत्यस्यापि । तत्क्रियमाणमुभयशेषभूतमिति ज्ञापयतीति भावः । ऋचामित्यस्याध्याहारेण तद्गतत्वेनेत्यस्यावृत्त्या व्याख्यानेपि कथमृचां वेदान्तराद्विशेषतो भगवत्परत्वमागतम् । वेदान्तरेप्यग्न्यादिनाम्नां विद्यमानत्वेन ऋक्साम्यादित्यत आह । इदमुक्तं भवतीति । अयमाशयः । वेदान्तरेहिं वसन्तादिसर्वशब्दानामर्थान्तर- कथनेन विनाग्न्यादिदेवता शब्दव्याख्यानमात्रेण भगवत्परत्वज्ञानं दुःशकम् । तत्रापाततः कर्मकालद्रव्यदेवतादिपरत्व-प्रतीतेः । ऋक्षुतु तत्तद्देवतागुणप्रतिपादकत्वाद्देवताशब्दस्य भगवत्परत्वे उक्ते तत्तन्मन्त्रोक्तगुणानां भगवत्परत्वं स्वत एव सिध्यतीति ऋचां भगवत्परत्वेऽतिप्रयत्नाकाङ्क्षा नास्तीति ।

ऋचां त्वग्न्यादीत्यादि नोपपादितार्थे प्राण ऋच इत्येव विद्यादित्यंशव्याख्यान-रूपमैतरेयोपनिषद्भाष्यं संवादयति । तदुक्तमिति । ऋचस्त्वल्पज्ञानामपि पुरुषाणामिन्द्रादि-नामवतो विष्णोर्गुणान् विशेषतः प्रकाशयन्तीति कृत्वा ऋचः प्राणे नारायण एव भवन्तीति विद्यादिति भाष्यवाक्यान्वयः । न च वाच्यं कर्मणा विना शुद्ध्यभावात् यजुर्वेदस्यैव कर्मज्ञापकस्य प्राधान्यान्मुख्यतो व्याख्येयत्वं न ऋग्वेदस्येति । कर्मणा ज्ञानमातनोतीति श्रुतेः कर्मणां भगवज्ज्ञानार्थत्वात्तस्य च गुणोत्कर्षज्ञानरूपत्वात्तस्यैव भगवत्प्रसादद्वारा मोक्षार्थत्वस्य तादृशी प्रीतिरीड्यस्येतिश्रुतिसिद्धत्वाद्गुणोत्कर्षज्ञानापेक्षया कर्मणामप्राधान्यात्कर्मप्रतिपादक-जुर्वेदस्य गुणप्रतिपादकऋग्वेदादमुख्यत्वात् । अत एव पुरुष सूक्ते ऋचः सामानिजज्ञिरे इति चां सर्ववेदेभ्यः प्रथमं प्रादुर्भाव उक्तः । एतेन मन्दानामपि सुबोधार्थकऋग्वेदादुर्बोधयजुर्वेदस्यैव ख्यतो व्याख्येयत्वमित्यपि निरस्तम् । ऋचां स्फुटं गुणप्रतिपादकत्वेन भगवत्तुष्ट्यर्थत्वेन याख्येयत्वस्योक्तत्वात् । एवं व्याख्यातव्यऋग्वेदस्य चतुर्विंशतिभेदभिन्नस्येयं शाकलशाखा । दध्यायाश्चतुःषष्टिर्मण्डलानिच वै दश । वर्गाणां परिसंख्यातं द्वे सहस्रे षडुत्तरे । सहस्रमेकं क्तानामित्युक्तप्रकारायाः शाखाया आद्ये मण्डले आद्येऽध्याये आद्यानुवाके त्रिषु सूक्तेष्वाद्यसूक्ते ाख्यातव्ये तत्राहेति भाष्येण किमुच्यत इति न ज्ञायत इत्यतस्तदवतार्य व्याचष्टे ॥

एवमिति । सूक्तादि लक्षणमृष्यादिकं चाग्रेवक्ष्यति । अग्रणीत्वमिति भाष्ये यत्तच्छब्दौ हेत्वर्थावित्यभिप्रेत्य व्याचष्टे । यद्यस्मादिति । युक्तमिति शेषोक्त्या देवसेनामग्रे नयतीति व्याख्यानस्यायुक्ततामाह । ऋक्प्रतिपाद्यस्तुत्याग्रभावित्वेनैवाग्निशब्दनिर्वचने लब्धेऽप्रसक्त देवसेनाग्रनयनरूपार्थस्य कल्पनानुपपत्तेः । एवमेवाहेत्यत्रैवंशब्दस्याग्निशब्दनिरुक्तिपरामर्शकत्व भ्रान्तिं वारयन्नुत्तरवाक्यसङ्गत्यर्थं कानिचित्पदान्यध्याहृत्य तद्वाक्यं व्याचष्टे । अनेनैवेति । यथैवाग्र्यादय इत्यत्र यथाशब्दः सादृश्यार्थ इति भ्रांतिं निवारयितुमाह । यथायेनेति ।

ननु व्यासेन प्रमादेनोक्तं यथैवाग्र्यादय इति तस्योक्ताभिप्रायकल्पनेऽति- प्रसङ्गः स्यादित्यत आह । न हीति । निरवधिकज्ञानादेर्भगशब्दार्थ- त्वात्तद्वतः कथं प्रमाद इति भावः । नन्वग्रेः षोडशकर्माङ्गत्वात्तदन्तर्गत- भगवतस्तन्नाम्ना प्रतिपादनं प्रथमत इति किं न स्यादित्यत आह । नापीति । इति तेनेत्यत्र तेनेत्यस्यान्वयाप्रतीतेर्यच्छब्दाध्याहारपूर्वकमन्वयं दर्शयति । यत इति । आद्यसूक्ततात्पर्योक्तेः प्रयोजनमाह । एवमिति । नन्वग्र्यादिशब्दानामग्रणीत्वादिनिर्वचनं यास्कोक्तनिरुक्तपाणिनीयव्याकरणविरुद्धम् । तत्र प्रकारान्तरेण निर्वचनात् । अङ्गेर्नलोपश्चेत्युणादिसूत्रेणागिधातोर्निप्रत्ययविधानादग्रणीत्वाद्यर्थायोगादित्यत आह । चिरन्तनेति । आदिशब्दान्महाव्याकरणादि गृह्यते । अनेन व्यासोक्तनिरुक्तोदाहरणेन । ननूत्तरत्राग्र्यादि शब्दैः प्रसिद्धाग्र्यादि ग्रहणेग्र्यत्व मग्रनेतृत्वमिति विष्ण्वेकनिष्ठव्याख्यानं नयुज्यते । विष्णुग्रहणेतु विष्णोरग्रेश्च बहिष्ठत्वादंगनेतृतामिति शरीरप्रेरकत्वव्याख्यानं न युज्यते । विरोधादित्यत आह । ऋगर्थश्चेति ।

## ऋक्संहिता पदपाठसहिता

(१) ओ३म् ॥ अ॒ग्निमी॑ळे पु॒रोहि॑तं य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म् ॥ होता॑रं रत्न॒धात॑मम् ॥१ ॥

(प०) अ॒ग्निम् । ई॒ळे॒ । पु॒रःऽहि॑तम् । य॒ज्ञस्य॑ । दे॒वम् । ऋ॒त्विज॑म् ॥ होता॑रम् । र॒त्न॒ऽधात॑मम् ॥ १ ॥

(२) अ॒ग्निः पूर्वे॑भि॒र्ऋषि॑भि॒रीड्यो॒ नूत॑नैरु॒त ॥ स दे॒वाँ एह व॑क्षति ॥ २ ॥

(प०) अ॒ग्निः । पूर्वे॑भिः । ऋषि॑ऽभिः । ईड्यः॑ । नूत॑नैः । उ॒त ॥ सः । दे॒वान् । आ । इ॒ह । व॒क्ष॒ति॒ ॥ २ ॥

(३) अग्निनां रयिमंश्नवत्पोषंमेव दिवेदिवे ॥ यशसं वीरवंत्तमम् ॥ ३ ॥

(प०) अग्निनां । रयिम् । अश्नवत् । पोषंम् । एव । दिवेऽदिवे ॥ यशसंम् । वीरवंत्ऽतमम् ॥ ३ ॥

(४) अग्नेयं यज्ञमंध्वरं विश्वतंः परिभूरसिं । स इद्देवेषुं गच्छति ॥ ४ ॥

(प०) अग्नें । यम् । यज्ञम् । अध्वरम् । विश्वतंः । परिऽभूः । असिं ॥ सः । इत् । देवेषुं । गच्छति ॥ ४ ॥

(५) अग्निर्होतां कविक्रंतुः सत्यश्चित्रश्रंवस्तमः ॥ देवोदेवेभिरागंमत् ॥ ५, १ ॥

(प०) अग्निः । होतां । कविऽक्रंतुः । सत्यः । चित्रश्रंवःऽतमः ॥ देवः । देवेभिः । आ । गमत् ॥ ५, १ ॥

## ऋग्भाष्यम्

अग्निशब्दोयमग्र एवाभिपूज्यताम् ।
अग्र्यत्वमग्रनेतृत्वमत्तिमङ्गागनेतृताम् ।
आह तं स्तौम्यशेपस्य पूर्वमेव हितं प्रभुम् ।
ऋत्विङ्नियामकत्वेन यज्ञानामृत्विजं सदा ।
द्योतनाद्विजयात्कांत्या स्तु त्या व्यवहृतेरपि ।
गत्या रत्याच देवाख्यं होतृसंस्थं विशेषतः ।
अग्निसंस्थेन रूपेण यतोग्निर्होतृदेवता ।
इन्द्रियाग्निषु चार्थानां यद्धोता होतृनामकः ।
रतिधारकोत्तमत्वात्स रत्नधातम ईरितः ॥ १ ॥

सपूर्वैर्नूतनैरेप्यैर्विज्ञानादृषिनामकैः ।
ईड्यो देवादिभिस्सर्वैस्सच देवानिहानयेत् ॥२॥

तेनैव रयिमाप्नोति वित्तं विद्याधनात्मकम् ।
दिवसे दिवसे नित्यं पुष्टिमेव नहीनताम् ।
यशश्च पुत्रसंयुक्तं वीर्यवत्तममेववा ॥ ३ ॥

यं यज्ञं परितो भूत्वा रक्षसि त्वं सदैवच।
विधिमार्गस्थितं देवान्स एवाप्नोत्यसंशयम् ॥ ४ ॥

सोखिलग्रहणप्रज्ञः सद्गुणैः सन्ततोऽखिलम्।
यमयत्यग्र्यकीर्तीनाम् उत्तमो विबुधैः सह।
आगन्ताऽखिलभक्तानां पूजास्वीकारतत्परः ॥ ५ ॥ १ ॥

## ऋग्भाष्यटीका

तत्राग्निमीळ इत्याद्यामृचं व्याचक्षाणोग्निशब्दार्थं तावन्निर्वक्ति। अग्निशब्दोऽयमिति। अयमादितः प्रयुक्तोऽग्निशब्दोग्नेस्तदन्तर्गतहरेश्च बाह्ययज्ञे अध्यात्मं च हरेर्ज्ञानयज्ञे मुख्यामुख्यत्वाभ्यामग्र एवाशेषपूज्येभ्यः पूर्वमेवाभिपूज्यतामभिपूज्यत्वमाहेति सम्बन्धः। अग्रशब्दात्सप्तमीसमर्थादभिपूज्य इत्यर्थे तद्धितो निप्रत्ययो रशब्दलोपश्च तथाग्र्यत्वमग्रेभवत्वमुत्तमत्वम्। पूर्ववद्भवार्थे निप्रत्ययो रशब्दलोपश्च। तथाग्रनेतृत्वं प्रथमप्रवर्तकत्वम्। अग्रशब्दोपपदान्नयतेः कर्तरि डिप्रत्यय उपपदरशब्दलोपश्च। तथात्तिमत्तृत्वं धातुनिर्देशोयम्। तेन तदर्थस्य कर्ता लक्ष्यते। बहिः संहर्तृत्वं हविषोत्तृत्वं च। अध्यात्मं विषयाणाम्। अत्तेः कर्तरि निप्रत्ययो दस्यच गः। तथाङ्गनेतृताम् अध्यात्मं विष्णोरग्नेश्च सर्वशरीराणां प्रवर्तकत्वम्। अङ्गशब्दोपपदान्नयतेर्डिप्रत्यय उपपदानुस्वाराकारलोपश्च। तथाऽगनेतृतां स्वतो न गच्छति न प्रवर्तते यद्विश्वं तस्य प्रवर्तकत्वम्। पूर्ववन्निरुक्तिः। नेतृशब्दस्तृन्नन्तः तेन द्वितीयायाः समासः। अग्निमीळ इत्यस्य व्याख्यानं तं स्तौमीति। ईडस्तुतौ। ऋक्षु डस्य ळः प्रायेण। कुतः पुरोहितं पुरः पूर्वमेवानादित एव हितम्। प्रतिसम्बध्यपेक्षायामशेषस्येति शेषोक्तिः। बहुलं छन्दसीति चतुर्थ्यर्थे षष्ठी। प्रभुमित्युदात्तस्वरार्थः। उदात्तस्योच्चतार्थतेति हि वक्ष्यति। हितो हि स्तुत्यो भवति।

किंच यज्ञस्य ऋत्विजम्। जातावेकवचनम्। यज्ञानां बाह्यानामाध्यात्मिकानां च ऋत्विजम्। तत्कथमित्यत आह। सदा ऋत्विङ्नियामकत्वेनेति। तदधीनत्वादर्थवदिति सूत्रात्। अध्यात्ममिन्द्रियदेवा ऋत्विजः। कर्माङ्गत्वादृचामृत्विग्वाक्यतायामात्मनो नियामकस्य ज्ञानप्रदस्य च स्तुतिरुपपन्नैव। किञ्च देवं द्योतनाद्विजयात्कांत्या व्यवहृतेरपि गत्या रत्याचेति द्योतनादेः कर्तृत्वात्तथा स्तुत्या स्तुतिकर्मत्वाद्देवाख्यम्। दीव्यतेर्द्योतनाद्यर्थात्कर्तरि पचाद्यच्। स्तुत्यर्थात्कर्मणि घञ्। गुणाधिको हिस्तुत्यःस्यात्। किंच होतारं होतृसंस्थम्। ऋत्विजमित्युक्तत्वाद्धोतारमिति पुनरुक्तिरित्यत आह॥ विशेषत इति॥ तत्कथमित्यत आह॥ अग्निसंस्थेनेति॥ ऋत्विक्षु परमेश्वरः

सन्निहित एव। होतरि पुनरत्र स्तुत्येनाग्निसंस्थेनैव रूपेणेति विशेषतो (ऽग्निसंस्थता) होतृसंस्थता। अनयाच विवक्षया न पुनरुक्तिरिति। एतदपि कुत इत्यत आह ॥ यत इति ॥ होतृदेवतासन् यतोग्निर्होतरि स्थितोऽतोऽग्निसंस्थेन रूपेण होतृसंस्थता युक्तैवेत्यर्थः। एवं विष्णौ होतृशब्दं व्याख्यायाग्नौ व्याख्याति ॥ यत इति ॥ अतो होतोच्यत इति शेषः। तथाच श्रुतिः। तद्येयं वाक् सोयमग्निः सहोतेति। ऋग्वेदिनोहि होतृत्वापेक्षिणो होतृसंस्थस्य स्तुतिर्युक्तैव। अध्यात्मं होतृशब्दं व्याख्याति ॥ इन्द्रियेति ॥ यद्यस्मादिन्द्रियाख्येष्वग्निष्वर्थानां तत्तदिन्द्रियविषयलक्षणानां हविषां होता हरिस्तस्माच्च होतृनामकः। भोगप्रदस्य स्तुतिः कर्तव्यैव। परमसुखत्वाच्च तस्य स्तुतिः सुखार्थिनां युक्तेति। रत्नधातमशब्दं व्याख्याति ॥ रतीति ॥ रमतेर्भावे क्तप्रत्ययः। रत्नं रतिं धत्त इति रत्नधाः। आतो मनिन् क्वनिब्वनिपश्चेति विच्। अतिशयेन रत्नधाः रत्नधातमः। नवा एकेनाक्षरेण छन्दांसि वियंतीति वचनान्न छन्दोभङ्गः। यद्यपि रत्नशब्दो धननामसु पठितः तथापि तदपरित्यागेनार्थान्तरस्योक्तत्वान्न दोषः ॥ १ ॥

आचारोप्यस्तीत्युच्यते ॥ अग्निः पूर्वेभिः। सपूर्वैः। सोग्निस्तद्व्रतोध्यात्मगतो हरिश्च। पूर्वेभिः पूर्वैः। बहुलं छन्दसीति भिस ऐस्त्वाभावः। अतीतैः। नूतनैः नूशब्दोऽद्यपर्यायः। ततः सायं चिरमिति तनः। वर्तमानैः। उतशब्दादेष्यैरागामिभिरपि। लृटः सद्वेत्यत्र योगविभागे- नाकारोप्यादेशो व्याख्यायते। एवं सर्वैः ऋषिभिर्विज्ञानाद्विशिष्टज्ञानवत्त्वादृषिनामकैः ब्रह्मादिभिरीड्यः स्तुत्यः। ऋषज्ञान इत्यस्मात्किप्रत्ययः। स्तुतश्च सोग्निरिह तेषां बाह्ययज्ञे देवान् हविर्भुजः आवक्षति आनयेत्। ज्ञानयज्ञे चेन्द्रियदेवांस्तेषां विशेषेणोपकारिणः करोति। दीर्घादटिसमानपाद इत्यतो देवानिति नकारस्य रुः। आइत्युपसर्गस्य व्यवहिताश्चेति व्यवहितेन वक्षतीत्याख्यातेन सम्बन्धः। एवमुत्तरत्रापि ज्ञातव्यम्। वक्षतीति वहतेर्लेट्। वहतिनयत्योः प्रापणार्थत्वाल्लेटश्च लिङर्थे लेडिति लिङर्थत्वादानयेदित्युक्तम् ॥ २ ॥

किं च। अग्निना रयिम्। तेनैव स्तोता तेनैवाग्निना तत्प्रसादेन रयिं बाह्ये धनात्मकम् अध्यात्मं विद्यात्मकं वित्तमश्नवदाप्नोति। अनेन पोषमेवेत्येवशब्दस्याग्निनेत्यनेनापि सम्बन्धः सूचितः। अश्नवदित्यश्नोतेर्व्याप्तिकर्मणो लडर्थे व्यत्ययो बहुलमिति पञ्चमो लकारः परस्मैपदं च। सिब्बहुलं लेटीति बहुलग्रहणात्सिबभावः। प्राप्तस्य तस्य वित्तस्य दिवेदिवे दिवसे दिवसे नित्यमिति यावत्। पोषमेव पुष्टिमेव प्राप्नोति। न पुनर्लोकवद्धीनतामित्येवशब्दव्यावर्त्यकथनम्। किञ्च यशसं यशश्चाप्नोति। यशःशब्दादमोऽलुक् पुँलिङ्गत्वं वा छान्दसम्। कथं भूतम्। वीरवत्तमं वीरः पुत्रः।

सोस्मिन्नस्तीति वीरवत् अतिशयेन वीरवदिति वीरवत्तमं पुत्रेण सम्यग्युक्तम् । सामर्थ्यात्सम्यक्ता पुत्रविशेषणम् । इदं बाह्ये । अध्यात्मं वीरशब्दो भावप्रधानः । वीरवत्तमं यशो वीर्यवत्तमं ज्ञानं सुखं च । एवेति बाह्यपुत्रादिव्यावृत्तौ । वेति व्यवस्थितो विकल्पः ॥ ३ ॥

एवं स्तुतेरुपपत्तिं तृचेनोक्त्वा स्तौति ॥ अग्ने यम् । यं यज्ञम् । हे अग्ने त्वं यमध्वरं यज्ञमिति पृथग्वचनादध्वनि रतम् । ञमन्ताड्ड इतिडः । विधिमार्गस्थितं विहितप्रकारेणानुष्ठितं यज्ञं बाह्यमान्तरं च । विश्वतो विश्वस्मिन् काले । सदैव । परितो भवतीति परिभूः । असि भवसि । परितो भूत्वा रक्षसीति यावत् । ततोन्यत्रापि दृश्यत इति परियोगे द्वितीया । स इत्सएव यज्ञो देवेषु गच्छति देवानाप्नोति । असंशयमित्येवशब्दतार्त्यम् । परमेश्वररक्षितमेव यज्ञं देवाः स्वीकुर्वन्ति । तादृशस्यैव ज्ञानस्य देवादिकं विषयो भवतीति ॥ ४ ॥

अग्निर्होता । सोखिल ॥ सोग्निः । होता पूर्ववत् । कवित्वेऽखिलग्रहणे सर्वज्ञानाय क्रतुः प्रज्ञा यस्यासौ कविक्रतुः । सद्भिर्गुणैस्ततः सन्ततो खिलं विश्वं यमयतिचेति सत्यः । सद्भावे साधुभावे चेति वचनात्सच्छब्दो गुणवाची । सदुपपदात्तनोतेः क्विप्प्रत्ययो डिच्च । यमेश्चडः । सच्चासौ यश्चेति सत्यः । यमयतीति स्वार्थे णिच् । चित्रमद्भुतं श्रवः कीर्तिर्यस्यासौ चित्रश्रवाः अतिशयेन चित्रश्रवाश्चित्रश्रवस्तमः । अग्र्यकीर्तीनां पुरुषाणां मध्ये उत्तम इति यावत् । देवः पूर्ववत् । एवं भूतो भगवान्देवेभिर्विबुधैर्यज्ञ भुग्भिरिन्द्रियाभिमानिभिश्च देवैः सहयज्ञस्थानं भक्तशरीरं च प्रत्यागमत् । सार्वकालिको लुङ् लेड्वा । आगन्ता भवति । तत्र विशेषतः सन्निहितो भवति । अखिलभक्तानां बाह्याध्यात्मिकपूजास्वीकारतत्परःसन्निति शेषः । आगमनं न हविराद्याशया किंतु भक्तप्रियतयेति भावः ॥ ५, १ ॥

## मन्त्रार्थमञ्जरी

ऋषिच्छन्दोदेवतोक्तिपदार्थान्वयपूर्वकम् ।
मन्त्रार्थसङ्ग्रहं कुर्मो बालानां बोधसिद्धये ॥ ३ ॥

'ऋषिच्छन्दोदैवतानि ज्ञात्वार्थं चैव भक्तितः ॥ स्वाध्यायेनैव मोक्षः स्याद्विरक्तस्य हरिस्मृतेः' (ऋ० भा० उदा०) इति स्मृत्या 'यो ह वाविदितार्षच्छन्दोदैवत ब्राह्मणेन मन्त्रेण यजति याजयत्यध्यापयति वा स्थाणुं वर्च्छति गर्ते वा पद्यते प्रवा मीयते' (छ० ब्रा० शे०) इति श्रुत्या च ऋष्यादिज्ञाने सत्येव मन्त्रार्थज्ञानस्य फलवत्त्वम् । अन्यथा त्वनर्थ इत्यस्यावगमेन ऋष्यादि ज्ञानस्यावश्यकत्वम् । छन्दोज्ञानमावश्यकमित्यत्र न वर्णसमावेशरूपच्छन्दोज्ञानमात्रं विवक्षितम् ।

किं तु, तदभिमानिदेवताज्ञानं च । श्रुतौ स्मृतौ च च्छन्दःपदस्य 'ॐ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॐ' (२।१।६) इत्यत्रोक्तदिशा मुख्यामुख्यवृत्तिभ्यामभिमान्यभिमन्यमानोभयपरत्वात् । श्रुतौ ब्राह्मणशब्दो विनियोगार्थकः द्वन्द्वगर्भो बहुव्रीहिः, मन्त्रोऽन्यपदार्थः । तत्र– आद्यं नवर्चं वर्गद्वयात्मकमाग्नेयं सूक्तं गायत्रीछन्दस्कमग्निदेवताकं तदन्तर्गततन्नामकविष्णुदेवताकं च । वेदस्य मूलवेदोपवेदावान्तरवेदरूपेण त्रैविध्यान्मूलवेदे ऋचां यः क्रमस्तत्रर्चोऽनन्तरिताः कृत्वा यावत्पठितं तावदुपवेदे सूक्तमुच्यते । उपवेदगतसूक्तान्तर्गतऋक्प्रबन्धोऽवान्तरवेदे सूक्तमिति ज्ञेयम्, 'सूक्तं त्वनारतं प्रोक्तम्' (ऋ० भा०) इत्युक्तेः । वर्ग इति तु सांकेतिकं नाम । तत्र - अग्निसूक्तस्य प्राथम्ये बीजं तु 'अग्रणीत्वं यदग्नित्वमित्यग्रे नाम तद्भवेत्' इति भाष्योक्तदिशा अग्रशब्दात्सप्तमीसमर्थात् 'अभिपूज्यः' इत्यर्थे 'तद्धिताः' इति सूत्रेण निप्रत्यये रशब्दलोपे सिद्धस्याग्निशब्दस्य प्रथमपूज्यताभिधायित्वं ध्येयम् । ऋषिस्तु 'अ॒ग्निमी॑ळे' इत्यारभ्य 'अ॒ग्निं दू॒तम्' इत्यतः प्राक्तनस्य दशोत्तरऋक्शतस्य मधुच्छन्दा एव ज्ञेयः । विनियोगो विष्णुप्रीतिद्वारा मोक्षे । अवान्तरविनियोगः कर्मणि ॥ अ॒ग्निमी॑ळे' इत्यारभ्य 'गाय॑न्ति त्वा' इत्यतः प्राक्सूक्तनवकं गायत्रीछन्दस्कम् ।

गायत्रीछन्दसोऽभिमानिदेवतास्तु– श्रीर्ब्रह्माणी भारती गरुडः स्वाहेति पञ्च । पुरोहितम्, अनादितः सर्वप्राणिनामनुकूलम्, 'उदात्तस्योच्चतार्थता' (ऋ० भा०) इत्युक्तेरुदात्तस्वरेणोच्चत्वलाभात्प्रभुम् । यज्ञस्य ऋत्विजं, जातावेकवचनम्, यज्ञानां ज्योतिःष्टोमादीनां कर्तृतया ऋत्विङ्नामकेष्वध्वर्युहोत्रुद्गातृप्रभृतिषु नियामकतया स्थिततया 'ॐ तदधीनत्वादर्थवत् ॐ' (१।४।३) इत्युक्तन्यायेन ऋत्विङ्नामकम् । होतारम्, 'तद्येयं वाक्सोऽयमग्निः स होता' (बृ० उ० ५।१।३) इति श्रुत्या होतृनियामकतया विशिष्य तत्र सांनिध्यात् 'ॐ तदधीनत्वात्' (१।४।३) इति प्रागुक्तन्यायेनैव होतृनामकम् ऋत्विजं होतारम्' इति कुरुपाण्डवन्यायेन (भाग० १०।१।६) सामान्यविशेषभावादपुनरुक्तिः ।

रत्नधातमम्, रमेः औणादिके क्त्नप्रत्यये 'लशक्वतद्धिते' इति ककारलोपे 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' इति धातोर्मकारलोपे 'रत्न' इति रूपत्वाद्रत्नं सुखं धत्त इति रत्नधाः 'डुधाञ् धारणपोषणयोः' इत्यतः 'आतो मनिन्क्वनिब्वनिपश्च' इति चाद्विच्प्रत्यये रूपत्वात्, अतिशयेन रत्नधा रत्नधातमस्तम् 'अतिशायने तमबिष्ठनौ' इति तमप्प्रत्ययः, निरवधिकानन्दमित्यर्थः, 'ॐ उभयव्यपदेशात्त्वहिकुण्डलवत् ॐ' (३।२।२८) इति नये 'ॐ

प्रतिषेधाच्च ॐ' (३।२।३१) इति सूत्रे गुणगुणिभेदस्य निवारणेऽपि, 'ॐ प्रकाशाश्रयवद्वा तेजस्त्वात् ॐ' (३।२।२९) 'ॐ पूर्ववद्वा ॐ' (३।२।३०) इति सूत्रद्वये विशेषबलाद्गुणगुणिभाव इत्युक्ते रतिधारकोत्तमत्वोक्तिर्भाष्ये नायुक्तेति ज्ञेयम् । रत्नशब्दस्य धननामसु पाठाद्धनाढ्यमिति वार्थः । देवम्, 'द्विवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुति मोदमदस्वप्नकान्तिगतिषु' इत्युक्तेः क्रीडाद्यर्थकाद्दीव्यतेः कर्तरि 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इत्यनेन पचादेराकृतिगणत्वादच्प्रत्यये 'पुगन्तलघूपधस्य च' इति गुणे 'देवम्' इति निष्पत्तेः क्रीडादिकर्तारमित्यर्थः, तथा–स्तुत्यर्थाद्दीव्यतेः कर्मणि 'अकर्तरि च कारके संज्ञायाम्' इति घञ्प्रत्यये गुणे च 'देवम्' इति रूपसिद्धेः स्तुत्यमित्यर्थः । अग्निम्, प्रागुक्तव्युत्पत्त्या सर्वपूज्येभ्यः प्रथमपूज्यम्, 'अग्रे भवः' इत्यर्थे तद्धितनिप्रत्यये रशब्दलोपे 'अग्निः' इति सिद्धेः अग्निमग्रेभवं सर्वोत्तममिति वा, अग्रशब्दोपपदान्नयतेः डिप्रत्यये टिलोप उपपदरशब्दलोपे च अग्निः इति सिद्धेः प्रथमप्रवर्तकं वा, 'अग्निनाग्निः समिंध्यते' इति वक्ष्यमाणत्वेनाग्निनियन्तृत्वात्तदधीनत्वन्यायेन चाग्निनामकं विष्णुं तदधिष्ठानं प्रसिद्धाग्निं वा । ईळे, स्तौमि, 'ईडस्तुतौ' ऋक्षु डस्य ळः प्रायेण । अत्रोक्तगुणानां हरौ निरवधिकत्वम्, तदधिष्ठानेऽग्नौ तु यथायोग्यम् ।

एवमग्रेऽपि ॥ अत्र विशेषणानां कृत्यम्– अग्निनाम्नोऽस्य स्तुत्यत्वोपपादनमेव, ऋचां कर्माङ्गत्वेन ऋत्विग्वाक्यतयात्मनियामकस्य सर्वदा हितरूपस्य ऋग्वेदिनो होतृत्वापेक्षितया होतृस्थितस्य सुखाद्यर्थिनः पूर्णसुखरूपस्य धनाढ्यस्य देवशब्दोक्तगुणाढ्यस्य च स्तुतेः कार्यत्वात्तस्य स्तुतिर्युक्तेति ॥ अत्र सर्वापेक्षितसुखप्रदोपासन विषयनिरतिशयसुखस्वरूपत्वमहागुण प्रतिपादकत्वादस्य मन्त्रस्यादित्वं ध्येयम् । तदधीनत्वन्यायसिद्धं स्वातन्त्र्यं शब्दप्रवृत्तौ निमित्तं भवति न वेति सन्देहे भृत्यगतबन्धमृतिदुःखादे राजाधीनत्वेऽपि भृत्ये बद्धे मृते दुःखिनि 'राजा बद्धो मृतो दुःखी' इत्यप्रयोगाद्व्यभिचारेण न निमित्तमिति प्राप्ते, भृत्यजयस्य राजाधीनत्वेन भृत्ये जयिनि 'राजा जयी' इति प्रयोगदर्शनेन 'यदधीनो गुणो यस्य तद्गुणी सोऽभिधीयते' (स्कां० पु०) इति स्मृत्या च भवति स्वातन्त्र्यं शब्दप्रवृत्तौ निमित्तम् । राज्ञि बद्धादि शब्दाप्रयोगस्तु सत्यपि निमित्तेऽमङ्गलत्वादि-भयेन प्रतिरोधादिति ॥

अध्यात्मपरत्वे त्वयमर्थः – पुरोहितम्, अनादितः सर्वानुकूलम् । यज्ञस्य, ज्ञानयज्ञस्य । ऋत्विजम्, ऋत्विग्भूतेन्द्रियाभिमानिनि यामकतया तत्र स्थितत्वेन ऋत्विङ्नामकम् । होतारम्, इन्द्रियाख्याग्निषु विषयलक्षणहविषां होतारम्, 'हु दानादनयोः' इत्युक्तेर्दातारम्, विषयभोगप्रदमिति

यावत्। अग्रिम्, अङ्गं शरीरं नयति प्रेरयतीत्यङ्गशब्दोपपदान्नयतेः डिप्रत्यय उपपादानुस्वाराकारलोपे 'अग्रिः' इति रूपसिद्धेः सर्वशरीरप्रवर्तकम् । ईळे इति । अत्राध्यात्मं सर्वत्र मोक्षसाधको यः कश्चित्सात्त्विक एव यजमानो ज्ञेयः । शिष्टं प्राग्वद्व्याख्येयम् ॥ अत्रापि विशेषणानां कृत्यं तु– ज्ञानार्थिनः सर्वेन्द्रियप्रेरकस्य यथोचितभोगप्रदस्य च स्तुत्यता युक्तेति स्तुत्यत्वोपपादनमेवेति ॥ १ ॥

आचारबलादप्यग्रेः स्तुतिर्युक्तेति भावेनात्राचार उच्यते– अग्निः। पूर्वेभिः, पूर्वैरतीतैः। नूतनैः, अद्यतनैर्वर्तमानैरिति यावत् । उतशब्दादागामिभिरपि । ऋषिभिः, ज्ञानितया ऋषिनामकैर्दे-वादिभिः। ईड्यः, स्तुत्यः ॥ सः, स्तुतोऽग्निस्तद्गतोऽध्यात्मगतो हरिश्च। इह, बाह्ययज्ञे। देवान्, हविर्भुजो देवान्। आ वक्षति, आनयेत्। इह, ज्ञानयज्ञे। देवान्, इन्द्रियाभिमानिनो देवान्। आ वक्ष्यति, अनयेत्। विशेषेणोपकारिणः करोत्वित्यर्थः ॥ 'बहुलं छन्दसि' इत्युक्तेः 'अतो भिस ऐस्' इत्यैस्त्वाभावात् 'पूर्वेभिः' इति साधु। एवमग्रेऽपि ॥ 'ऋष ज्ञाने' इत्यतः किप्रत्यये 'क्ङिति च' इति गुणाभावे 'ऋषिभिः' इति रूपम् ॥

अद्यशब्दपर्यायात् 'नू' इत्यव्ययात् 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युटयुलौ तुट् च' इति ट्युल्प्रत्यये तस्य तुडागमे 'युवोरनाकौ' इत्यनादेशे 'नूतनैः' इति रूपम्। 'वह प्रापणे' इत्यस्मात् 'लिङर्थे लेट्' इति लेटि तस्य तिपि 'लेटोऽडाटौ' इत्यडागमे 'सिब्बहुलं लेटि' इति सिप्प्रत्यये 'हो ढः' इति हस्य ढत्वे 'षढोः कः सि' इत ढस्य कत्वे 'इण्कोः' इति सस्य षत्वे कषयोगे 'क्ष' इति 'वक्षति' इति रूपम् । आङः 'व्यवहिताश्च' इति सूत्रेण क्रियान्वयः ॥ 'दीर्घादटि समानपादे' इति 'देवान्' इति नकारस्य रुः । 'अत्रानुनासिकः पूर्वस्य तु वा' इति रोः पूर्ववर्णस्यानुनासिकः । 'भोभगोअघो' इत्यादिना रोर्यत्वम्। 'लोपः शाकल्यस्य' इति यलोपः । 'देवाँ' इति सिद्धिः ॥ २ ॥

अभीष्टदातृत्वाच्चाग्रेः स्तुतिर्युक्तेति भावेनात्राभीष्टदातृत्वमुच्यते– एवशब्दोऽग्निनैवेत्यप्यन्वेति। (स्तोता) । अग्निना (एव), अग्निनामकयोः प्रसादेनैव । रयिम्, बाह्ययज्ञे– धनात्मकम्, अध्यात्मम्, ज्ञानाख्यम्, वित्तम्। अश्नवत्, प्राप्नोति ॥ (प्राप्तस्य वित्तस्य) दिवेदिवे, दिवसे दिवसे नित्यमिति यावत्। पोषम् एव, पुष्टिमेव। (अश्नवत्), प्राप्नोति, न तु लोकवद्धीनतामित्यर्थः। वीरवत्तमम्, वीरः पुत्रोऽस्यास्तीति वीरवत्, अतिशयेन वीरवद्वीरवत्तमम्, अतिशयितत्वं योग्यतया वीरेऽन्वेति, अतिशयितपुत्रवत्। यशसम् (च), यशश्च कीर्तिं च। (अश्नवत्), प्राप्नोतीत्यर्थः। वीरपदं भावप्रधानं कृत्वा वीर्यवत्तमं यशो ज्ञानं सुखं चाश्नवदित्यध्यात्ममर्थो ज्ञेयः ॥ 'अशू व्याप्तौ' इत्यतः 'व्यत्ययो बहुलम्' इति लडर्थे लेटि परस्मैपदे च सति 'स्वादिभ्यः श्नुः' इति श्नुप्रत्यये

'लेटोऽडाटौ' इत्यडागमे बहुलग्रहणात्सिब्भावे 'सार्वधातुकार्धधातुकयोः' इति गुणेऽवादेशे तिप इकारस्य लोपे 'अश्नवत्' इति रूपम् ॥ 'यशसम्' इति यशस्शब्दादमोऽलुक्त्वं पुंलिङ्गत्वं वा छान्दसम् ॥ ३ ॥

एवं स्तुतेरुपपत्तिं तृचेनोक्त्वाधुनाग्निं स्तौति– (हे) अग्ने (त्वम्) अध्वरम्, अध्वनि मार्गे रतं विधिमार्गस्थितं विहितप्रकारेणानुष्ठितम्। यम्। यज्ञम्, बाह्यमान्तरम्। विश्वतः, विश्वस्मिन्काले सदेति यावत्। परितो भवतीति परिभूः। असि भवसि। परितो भूत्वा रक्षसीति यावत्, 'ततोऽन्यत्रापि दृश्यते' इति परियोगे 'यज्ञम्' इति द्वितीया ॥ सः इत्, स एव यज्ञः। देवेषु गच्छति, देवानाप्नोति, परमेश्वररक्षितमेव यज्ञं देवाः स्वीकुर्वन्ति, तादृशस्यैव ज्ञानयज्ञस्य देवादिकं विषयीभवतीत्यध्यात्ममभिप्रायो ध्येयः ॥ ४ ॥

होता, प्रागुक्तदिशा होतृप्रेरकतया विशिष्य होतरि स्थितत्वेन 'होता' इत्युक्तः। कविक्रतुः, कवित्वे सर्वविषयकज्ञानाय क्रतुः प्राज्ञायस्यासौ कविक्रतुः। सत्यः, सद्भिर्गुणैस्त ततः, यो नियामकः, सञ्चासौ यश्चेति सत्यः, 'सद्भावे साधुभावे च। सच्छब्दः पार्थ युज्यते' (गी० १७।२६) इति वचनात्सच्छब्दो गुणवाची, 'तनु विस्तारे' इति धातोः क्विप्प्रत्यये तस्य डित्त्वे च 'त्' इति व्याप्तवाची, यच्छति नियमयतीति यमेः डप्रत्यये डित्त्वादभस्यापि टेर्लोपे 'य' इति रूपम्, साधुगुणव्याप्तो नियन्ता चेत्यर्थः। चित्रश्रवस्तमः, चित्रमद्भुतं श्रवः कीर्तिर्यस्यासौ चित्रश्रवाः, अतिशयेन चित्रश्रवाश्चित्रश्रवस्तमः, अग्र्यकीर्त्तीनां पुंसां मध्य उत्तम इति यावत्। देवः, क्रीडाविजयादिकर्ता स्तुतिविषयश्चेति पूर्ववत् अर्थो ज्ञेयः। एवंभूतः, अग्निः। देवेभिः, देवैर्यज्ञभाग्विबुधैः, अध्यात्मम्– इन्द्रियाभिमानिभिश्च। आ गमत्, सार्वकालिको लुङ् आगन्ता भवति, यज्ञस्थानं भक्तशरीरं वा प्राप्नोति, एवं भूतो भगवान्भक्तानां बाह्याध्यात्मिकपूजास्वीकारतत्परः सँस्तत्र विशेषतः संनिहितो भवतीत्यर्थः ॥ ५ ॥

## पदार्थप्रकाशिका

अग्निनामवतो भगवतः। तथात्वम् अग्रणीत्वम्। तन्नाम्ना अग्निनाम्ना। अत्रेति। अग्रणीत्वं यदग्नित्वम् इत्यग्रे नाम तद्भवेदित्यत्रेत्यर्थः। अनेनैवाभिप्रायेणेति। अग्रणीत्वम् अग्निशब्दप्रवृत्तिनिमित्तमित्यनेनैवाभिप्रायेणेत्यर्थः। तदेव कुत इति। अग्निशब्दमादिं कृत्वा निरुक्तिमाहेत्येतत्कुतो ज्ञापकात्प्रतिपत्तव्यमित्यर्थः। नन्वग्रणीत्वम् अग्निशब्दप्रवृत्तिनिमित्तमित्यभिप्रायेणैवाग्निशब्दमादिं कृत्वा निरुक्तिमाहेति कुतः? किन्नाम यदृच्छया वा निमित्तान्तरेण

वा किन्न स्यादित्यत आह । न हीत्यादिना । यादृच्छिकी अबुद्धिपूर्वा । भगवत्परत्वभङ्गापत्तेरिति भावः । एतत् अग्रणीत्वम् । निमित्तान्तरकल्पने । अग्निशब्दमादिं कृत्वा निरुक्तिकथन इति शेषः ।

नन्वग्रणीत्वं यदग्नित्वं इत्यग्रे नाम तद्भवेदिति युक्त्यैवाग्निनाम्नः प्राथम्ये सिद्धे यत्तत्र भगवद्वाक्योदाहरणं तस्य तात्पर्यमाह । एवमिति । वायवायाहीत्यादौ वाय्वादिसूक्तक्रमनियम इत्यर्थः । विशेषशास्त्रबलेनेति । बादरायणप्रणीतनिरुक्तिरूपविशेषशास्त्रबलेनेत्यर्थः । अग्रणीत्व-वाचकत्वादग्निनाम्नः प्राधान्यमित्यत्र यास्कप्रणीतनिरुक्तवाक्यस्यापि संमतित्वेनोदाहर्तुं शक्यत्वात् तदनुदाहृत्य भगवत्प्रणीतनिरुक्तोदाहरणस्य तात्पर्यमाह । चिरन्तनेति । बादरायणीय-निरुक्तादीत्यर्थः । आदिपदेन महाव्याकरणसङ्ग्रहः । अर्वाचीननिरुक्तादीति । यास्कपाणिन्यादि-प्रणीतनिरुक्तव्याकरणादीत्यर्थः । क्वचित्तद्यास्कादिनिरुक्ताद्यनुसरणं तु संवादायेति भावः । अत एवोक्तं विसंवादोऽनादरणीय इति ।

सङ्कीर्णस्य भाष्यस्य सुबोधाय अर्थत्रयं विभज्य दर्शयति त्रिविध इति । अध्यात्मरूपः शरीरान्तर्गतेश्वरादिरूपः । एवं स्थिते अग्निगं विष्णुं इत्यादि भाष्य एव स्पष्टमेतदिति भावः । अग्निमीळे पुरोहितम् । मुख्यामुख्यत्वाभ्यामिति । बाह्ययज्ञे अमुख्यत्वेन अग्नेर्बाह्ययज्ञे तदन्तर्गतस्य हरेरध्यात्मं च ज्ञानयज्ञे हरेर्मुख्यत्वेनेति विवेकः । रशब्दलोप इति । तथा अगनि अग्नीति रूपम् । पूर्ववदिति । अग्निशब्दात् सप्तमी समर्थात् इत्यर्थः । भवार्थे विद्यमान इत्यर्थे । नयतेः नीङ्प्रापण इति धातोः । डिप्रत्यय इति । डकारलोपे डित्वाट्टिभूतस्य ईकारलोपे रशब्दस्य लोपे अग् न् इ अग्नीति रूपम् । अयमिति । अत्तिरित्ययं शब्दो अदभक्षण इति धातुनिर्देशपर इत्यर्थः । तेन धातुनिर्देशेन । तदर्थस्य अदधात्वर्थस्यादनस्य । बहिर्बाह्ययज्ञे । विषयाणामिति । 'श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च । अधिष्ठाय मनश्चायं विषयानुपसेवते' इत्युक्तत्वादित्यर्थः । अत्तेरिति । अद भक्षणे अस्मान्निप्रत्यये निरुक्तत्वेन वर्णविकारमङ्गीकृत्य दस्य गकारादेशे दकारस्थस्याकारस्य लोपे अग्निरिति रूपम् । अङ्गशब्देति । अङ्गशब्दोपपदात् नीञ् प्रापणे अस्मात् डिप्रत्यये डित्वाट्टिभूत-स्येकारस्य लोपे अकारस्यानुस्वारस्य लोपे गकारस्थाकारलोपे अग् न् इ अग्नीति रूपम् । 'शैल वृक्षौ नगावगा' वित्यभिधानात् शैलादिमात्रप्रवर्तकत्वप्रतीतिवारणायाह । स्वत इति । पूर्ववदिति । नगशब्दोपपदान्नयतेः डिप्रत्यये अनुस्वारलोपे व्यतिरेकेणोपपददकारस्थाकारलोपे नाग्निरिति पूर्ववत्प्रकृतिप्रत्ययादिभिर्निरुक्तिरित्यर्थः ।

ननु अङ्गागयोर्नेता तस्य भावस्तत्ता तामिति षष्ठ्याः समासो न युक्तः। नेतृशब्दस्य तृजन्तत्वात् तृजन्तेन च 'कर्तरिच' कर्त्रर्थकतृजकाभ्यां योगे न षष्ठी समस्यत इति षष्ठ्याः समासनिषेधात्। अत एवापां स्रष्टा, सतामर्चक इत्युदाहृतमित्यत आह। नेतृशब्दस्तृन्नन्त सति। ननु तृन्नन्तस्यापि 'न लोकाव्ययनिष्ठाखलर्थतृनामि'ति षष्ठ्याः प्रतिषेधेनाप्राप्तौ कथमत्र षष्ठीसमास इत्यत आह तेनेति॥ तृन्नन्तनेतृशब्देनेत्यर्थः। तृजन्ते कर्तरि चेति समासप्रतिषेधवत्तृन्नन्तसमासप्रतिषेधकं किमपि नास्तीति भावः। तथा चाङ्गागाविति द्वितीयायाः द्वितीयाश्रितातीतेत्यनेन नेतृशब्देन समासे सत्यङ्गागनेतृतामिति युक्तम्। श्रितादिषु गमिगम्यादेरुपसङ्ख्यानात्। गमिगम्यादेश्चाकृति-गणत्वादिति द्रष्टव्यम्। नन्वत्र द्वितीयाप्राप्तिरेव कथमिति चेदुच्यते। कर्मणि द्वितीयेति द्वितीयाप्राप्तिं बाधित्वा 'कर्तृकर्मणोः कृती'ति षष्ठी प्राप्तौ तस्याश्च न लोकेत्यनेन निषेधे पुनः 'कर्मणि द्वितीये'ति द्वितीयाया एव प्राप्तिः। अपवादस्यापवादे पुनरुत्सर्गस्यैवोत्थितिरिति न्यायात्। द्वितीयान्तेन च समासप्रतिषेधकाभावात् 'द्वितीया श्रितातीतेत्यनेन समासोपपत्तिरिति।

ननु तर्हि ईड इति स्यात् ईळ इति तु कथमित्यत आह। ऋक्षु डस्य ळ इति। 'ईड्यो नूतनैरुत' 'षडपूक्त अनुसेषिधत्' इत्यादावभावात्प्रायेणेत्युक्तम्। यथोक्तम्। 'अज्मध्यस्थडकारस्य लकारं बह्वृचा जगुः। अज्मध्यस्थढकारस्य ळ्हकारं वै यथा क्रममि'ति। द्वितीयोदाहरणं तु न्याविध्यदिलीविशस्यदृळ्हेत्यत्र दृढे (इति) भाव्ये दृळ्हेति भवति। एवमपगूढ इति भाव्ये अपगूळ्हं गुहाहितमिति भवतीत्यादि द्रष्टव्यम्। कुत इति। स्तुत्यत्वं कुत इत्यर्थः। प्रतिसम्बन्धीति। कस्य हितमिति प्रतिसम्बन्ध्यपेक्षायामित्यर्थः। ननु 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः' इति हितशब्दयोगे चतुर्थ्या विधानादशेषाय हितमिति भाव्यम्, अशेषस्येति षष्ठी कथमित्यत आह। चतुर्थ्यर्थ इति। छन्दसि चतुर्थ्यर्थे षष्ठी बहुलं भवतीत्यर्थः। उदात्तस्वरेति। रो इत्यत्र स्थितेत्यर्थः। प्रभुत्वस्य उदात्तस्वरार्थत्वं कुत इत्यत आह। उदात्तस्येति। उच्चत्वं प्रभुत्वं चैकमेवेति भावः।

नन्वेतावता पुरोहितत्वेपि स्तुत्यत्वं कुत इत्यत आह। हितो हीति। किं चेति। भगवतः स्तुत्यत्वे पुनर्हेत्वन्तरं कथ्यत इत्यर्थः। जाताविति। सिद्धान्ते अनुगतजातेरभावाज्जातिशब्दः समुदायपरः। तथा च समुदायापेक्षमेकवचनमित्यर्थः। तत्कथमिति। ऋत्विग्भिन्नस्य भगवतः कथम् ऋत्विक्त्वमित्यर्थः। ऋत्विङ्नियामकत्वेऽपि तच्छब्दवाच्यत्वं कुत इत्यत आह। तदधीनत्वादिति। अन्यत्रैव प्रसिद्धशब्दजातं भगवत्येवार्थवत् अन्यगतशब्दप्रवृत्तिनिमित्तानां भगवत्येव मुख्यत्वादिति सूत्रार्थः। तथाच ऋत्विङ्नियामकत्वेन ऋत्विक्शब्दवाच्यत्वं भगवतो युक्तमित्यर्थः। यज्ञद्वये

ऋत्विग्द्वयनियामकत्वं कथं स्तुत्यत्वोपपादकमित्यत आह । कर्माङ्गत्वादिति । ऋचामित्यस्य पूर्वोत्तराभ्यां सम्बन्धः । आत्मनो ऋत्विक् समुदायस्येत्यर्थः । नन्वात्मनियामकत्वेऽपि कथमेताभिः ऋग्भिः ऋक् स्तुत्यत्वमित्यत आह । ऋचाम् ऋत्विग्वाक्यतयेति । ऋचाम् ऋत्विग्वाक्यत्वं कुत इति तत्राह । ऋचां कर्माङ्गत्वादिति । ऋत्विग्भिस्तावत् ऋग्भिः स्तुतिः क्रियते । एवं कर्माङ्गभूतानां मन्त्राणाम् ऋत्विग्वाक्यत्वेन प्रसिद्धत्वात् स्ववाक्यप्रेरकस्तुतिरुपपन्नेति भावः ।

आध्यात्मिकयज्ञऋत्विगपेक्षया ज्ञानप्रदस्य चेत्युक्तम् । किं चेति । भगवतः स्तुत्यत्वे पुनर्निमित्तान्तरं कथ्यत इत्यर्थः । भगवतः स्तुतिकर्तृत्वाभावादाह स्तुतिकर्मत्वादिति । पचाद्यजिति । दिव् अस्य पचादित्वा'न्नन्दिग्रहिपचादिभ्यो ल्युणिन्यच' इत्यनेन कर्त्रर्थेऽच्प्रत्यये चकारलोपे गुणे देवेति रूपम् । स्तुत्यर्थत्वादिति । स्तुत्यर्थाद्दिव् धातोः कर्मणि घञ्प्रत्ययस्तद्धितः कृदन्तश्चास्ति । तत्राचोञ्णितीति सूत्रविहितवृद्धेस्तद्धितप्रत्ययविहितत्वात् अत्र च घञः कृत्वाश्रयेण देवशब्दस्य कृदन्तशब्दत्वेन वृद्धिप्राप्त्यभावात् देवेति युक्तमिति द्रष्टव्यम् । देवत्वस्य स्तुत्यत्वे निमित्तमुपपादयति । गुणाधिक इति । द्योतनादिगुणाधिक्यं च देवशब्दो वक्तीति भावः । किं चेति । भगवत एव स्तुत्यत्वे पुनरपि हेत्वन्तरमुच्यत इत्यर्थः । पुनरुक्तिरिति । होतुरपि ऋत्विग्विशेषत्वादिति भावः । इत्येवेति । न तु विशेषसन्निधानमस्तीत्यर्थः । तत्र यज्ञे अग्निसंस्थेन रूपेण परमेश्वरो होतरि सन्निहित इत्यर्थः । इति विशेष इति । इत्यभिप्रायेण परमेश्वरस्य विशेषतो होतृसंस्थतोच्यत इत्येवमनया विवक्षया न पुनरुक्तिरिति योजनीयम् । अग्निसंस्थितेति पाठे अग्नेः तद्गतपरमेश्वरस्य संस्थता होतृसंस्थतोच्यत इत्यर्थो द्रष्टव्यः । एतदपीति । अग्निसंस्थेन रूपेण होतृसंस्थत्वमित्यर्थः । यतोऽग्निरिति । अग्नेर्होतृसंस्थत्वे तदन्तर्गतस्य हरेः तत्स्थत्वं प्राप्तमेवेति भावः । अग्नौ व्याख्यातीति । प्रसिद्धाग्नेरप्येतदृगर्थत्वादिति भावः । स होतेतीति । अग्नेर्होत्रभेदासम्भवेन तद्देवतात्वाभिप्रायेणैव तदभेदोक्तिरिति भावः ।

ननु होतृत्वं कथं भगवतो अग्नेश्च स्तुत्यत्वोपपादकमित्यत आह । ऋग्वेदिनो हीति । होतृत्वापेक्षिणो यतोऽत इति शेषः । षष्ठ्यन्तं वा । यतो ऋग्वेदिभिरेव होत्रं कर्म कर्तव्यं यतश्चाग्निसंस्थेन रूपेण हरिः होतृसंस्थो यतश्चाग्निर्होतृदेवताऽतः स्वसंस्थस्य हरेरग्नेश्च स्तुतिस्तेषां युक्तेत्यर्थः । व्याख्याति हराविति शेषः । तस्माच्चेति चशब्दः आध्यात्मिकव्याख्यानापेक्षयेति ध्येयम् । नन्वध्यात्मम् इन्द्रियाग्निष्वर्थानां होतृत्वं कथं हरेः स्तुत्यत्वोपपादकमित्यत आह । भोगप्रदश्चेति । सुखार्थिन(नां)इति । बाह्यान्तरयज्ञसाध्यसुखार्थिन(नां) इत्यर्थः । युक्तेतीति ।

ननु अङ्गागयोर्नेता तस्य भावस्तत्ता तामिति षष्ठ्याः समासो न युक्तः। नेतृशब्दस्य तृजन्तत्वात् तृजन्तेन च 'कर्तरिच' कर्त्रर्थकतृजकाभ्यां योगे न षष्ठी समस्यत इति षष्ठ्याः समासनिषेधात्। अत एवापां स्रष्टा, सतामर्चक इत्युदाहृतमित्यत आह। नेतृशब्दस्तृन्नन्त सति। ननु तृन्नन्तस्यापि 'न लोकाव्ययनिष्ठाखलर्थतृनामि'ति षष्ठ्याः प्रतिषेधेनाप्राप्तौ कथमत्र षष्ठीसमास इत्यत आह तेनेति॥ तृन्नन्तनेतृशब्देनेत्यर्थः। तृजन्ते कर्तरि चेति समासप्रतिषेधवत्तृन्नन्तसमासप्रतिषेधकं किमपि नास्तीति भावः। तथा चाङ्गागाविति द्वितीयायाः द्वितीयाश्रितातीतेत्यनेन नेतृशब्देन समासे सत्यङ्गागनेतृतामिति युक्तम्। श्रितादिषु गमिगम्यादेरुपसङ्ख्यानात्। गमिगम्यादेश्चाकृति-गणत्वादिति द्रष्टव्यम्। नन्वत्र द्वितीयाप्राप्तिरेव कथमिति चेदुच्यते। कर्मणि द्वितीयेति द्वितीयाप्राप्तिं बाधित्वा 'कर्तृकर्मणोः कृती'ति षष्ठी प्राप्तौ तस्याश्च न लोकेत्यनेन निषेधे पुनः 'कर्मणि द्वितीये'ति द्वितीयाया एव प्राप्तिः। अपवादस्यापवादे पुनरुत्सर्गस्यैवोत्थितिरिति न्यायात्। द्वितीयान्तेन च समासप्रतिषेधकाभावात् 'द्वितीया श्रितातीतेत्यनेन समासोपपत्तिरिति।

ननु तर्हि ईड इति स्यात् ईळ इति तु कथमित्यत आह। ऋक्षु डस्य ळ इति। 'ईड्यो नूतनैरुत' 'षडपूक्त अनुसेषिधत्' इत्यादावभावात्प्रायेणेत्युक्तम्। यथोक्तम्। 'अज्मध्यस्थडकारस्य ळकारं बह्वृचा जगुः। अज्मध्यस्थढकारस्य ळ्हकारं वै यथा क्रममि'ति। द्वितीयोदाहरणं तु न्याविध्यदिलीविशस्यदृळ्हेत्यत्र दृढे (इति) भाव्ये दृळ्हेति भवति। एवमपगूढ इति भाव्ये अपगूळ्हं गुहाहितमिति भवतीत्यादि द्रष्टव्यम्। कुत इति। स्तुत्यत्वं कुत इत्यर्थः। प्रतिसम्बन्धीति। कस्य हितमिति प्रतिसम्बन्ध्यपेक्षायामित्यर्थः। ननु 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः' इति हितशब्दयोगे चतुर्थ्या विधानादशेषाय हितमिति भाव्यम्, अशेषस्येति षष्ठी कथमित्यत आह। चतुर्थ्यर्थ इति। छन्दसि चतुर्थ्यर्थे षष्ठी बहुलं भवतीत्यर्थः। उदात्तस्वरेति। रो इत्यत्र स्थितेत्यर्थः। प्रभुत्वस्य उदात्तस्वरार्थत्वं कुत इत्यत आह। उदात्तस्येति। उच्चत्वं प्रभुत्वं चैकमेवेति भावः।

नन्वेतावता पुरोहितत्वेपि स्तुत्यत्वं कुत इत्यत आह। हितो हीति। किं चेति। भगवतः स्तुत्यत्वे पुनर्हेत्वन्तरं कथ्यत इत्यर्थः। जाताविति। सिद्धान्ते अनुगतजातेरभावाज्जातिशब्दः समुदायपरः। तथा च समुदायापेक्षमेकवचनमित्यर्थः। तत्कथमिति। ऋत्विग्भिन्नस्य भगवतः कथम् ऋत्विक्त्वमित्यर्थः। ऋत्विङ्नियामकत्वेऽपि तच्छब्दवाच्यत्वं कुत इत्यत आह। तदधीनत्वादिति। अन्यत्रैव प्रसिद्धशब्दजातं भगवत्येवार्थवत् अन्यगतशब्दप्रवृत्तिनिमित्तानां भगवत्येव मुख्यत्वादिति सूत्रार्थः। तथाच ऋत्विङ्नियामकत्वेन ऋत्विक्शब्दवाच्यत्वं भगवतो युक्तमित्यर्थः। यज्ञद्रये

ऋत्विग्द्वयनियामकत्वं कथं स्तुत्यत्वोपपादकमित्यत आह । कर्माङ्गत्वादिति । ऋचामित्यस्य पूर्वोत्तराभ्यां सम्बन्धः । आत्मनो ऋत्विक् समुदायस्येत्यर्थः । नन्वात्मनियामकत्वेऽपि कथमेताभिः ऋग्भिः ऋक् स्तुत्यत्वमित्यत आह । ऋचाम् ऋत्विग्वाक्यतयेति । ऋचाम् ऋत्विग्वाक्यत्वं कुत इति तत्राह । ऋचां कर्माङ्गत्वादिति । ऋत्विग्भिस्तावत् ऋग्भिः स्तुतिः क्रियते । एवं कर्माङ्गभूतानां मन्त्राणाम् ऋत्विग्वाक्यत्वेन प्रसिद्धत्वात् स्ववाक्यप्रेरकस्तुतिरुपपन्नेति भावः ।

आध्यात्मिकयज्ञऋत्विगपेक्षया ज्ञानप्रदस्य चेत्युक्तम् । किं चेति । भगवतः स्तुत्यत्वे पुनर्निमित्तान्तरं कथ्यत इत्यर्थः । भगवतः स्तुतिकर्तृत्वाभावादाह स्तुतिकर्मत्वादिति । पचाद्यजिति । दिव् अस्य पचादित्वा'न्नन्दिग्रहिपचादिभ्यो ल्युणिन्यच' इत्यनेन कर्त्रर्थेऽच्प्रत्यये चकारलोपे गुणे देवेति रूपम् । स्तुत्यर्थत्वादिति । स्तुत्यर्थाद्दिव् धातोः कर्मणि घञ्प्रत्ययस्तद्धितः कृदन्तश्चास्ति । तत्राचोञ्णितीति सूत्रविहितवृद्धेस्तद्धितप्रत्ययविहितत्वात् अत्र च घञः कृत्वाश्रयेण देवशब्दस्य कृदन्तशब्दत्वेन वृद्धिप्राप्त्यभावात् देवेति युक्तमिति द्रष्टव्यम् । देवत्वस्य स्तुत्यत्वे निमित्तमुपपादयति । गुणाधिक इति । द्योतनादिगुणाधिक्यं च देवशब्दो वक्तीति भावः । किं चेति । भगवत एव स्तुत्यत्वे पुनरपि हेत्वन्तरमुच्यत इत्यर्थः । पुनरुक्तिरिति । होतुरपि ऋत्विग्विशेषत्वादिति भावः । इत्येवेति । न तु विशेषसन्निधानमस्तीत्यर्थः । तत्र यज्ञे अग्निसंस्थेन रूपेण परमेश्वरो होतरि सन्निहित इत्यर्थः । इति विशेष इति । इत्यभिप्रायेण परमेश्वरस्य विशेषतो होतृसंस्थतोच्यत इत्येवमनया विवक्षया न पुनरुक्तिरिति योजनीयम् । अग्निसंस्थितेति पाठे अग्नेः तद्गतपरमेश्वरस्य संस्थता होतृसंस्थतोच्यत इत्यर्थो द्रष्टव्यः । एतदपीति । अग्निसंस्थेन रूपेण होतृसंस्थत्वमित्यर्थः । यतोऽग्निरिति । अग्नेर्होतृसंस्थत्वे तदन्तर्गतस्य हरेः तत्स्थत्वं प्राप्तमेवेति भावः । अग्नौ व्याख्यातीति । प्रसिद्धाग्नेरप्येतदृगर्थत्वादिति भावः । स होतेतीति । अग्नेर्होत्रभेदासम्भवेन तद्देवतात्वाभिप्रायेणैव तदभेदोक्तिरिति भावः ।

ननु होतृत्वं कथं भगवतो अग्नेश्च स्तुत्यत्वोपपादकमित्यत आह । ऋग्वेदिनो हीति । होतृत्वापेक्षिणो यतोऽत इति शेषः । षष्ठ्यन्तं वा । यतो ऋग्वेदिभिरेव होत्रं कर्म कर्तव्यं यतश्चाग्निसंस्थेन रूपेण हरिः होतृसंस्थो यतश्चाग्निर्होतृदेवताऽतः स्वसंस्थस्य हरेरग्नेश्च स्तुतिस्तेषां युक्तेत्यर्थः । व्याख्याति हराविति शेषः । तस्माच्चेति चशब्दः आध्यात्मिकव्याख्यानापेक्षयेति ज्ञेयम् । नन्वध्यात्मम् इन्द्रियाग्निष्वर्थानां होतृत्वं कथं हरेः स्तुत्यत्वोपपादकमित्यत आह । भोगप्रदश्चेति । सुखार्थिन(नां)इति । बाह्यान्तरयज्ञसाध्यसुखार्थिन(नां) इत्यर्थः । युक्तेतीति ।

युक्तेत्यभिप्रायेणेत्यर्थः । रमतेरिति । रमु क्रीडायामस्मात् भावे क्त्नप्रत्यये ककारलोपे कित्वादनुनासिक मकारस्या'नुदात्तोपदेशवनतितनोत्यादीनामि'त्यनेन लोपे रत्नेति रूपम् । रतिं रमणं सुखमित्यर्थः । विजिति । नकाराद्विच्प्रत्ययः । 'विजुपे छन्दसी'ति पूर्वसूत्रोक्तविच्प्रत्ययस्या'तो मनिन्नि'ति सूत्रे चानुकृष्टत्वादित्याशयः । तथाच धारणार्थकस्य धाधातोः विच्प्रत्यये तस्य सर्वक्विब्लोपे रत्नधमिति स्यादित्यतो विच्करणमिति द्रष्टव्यम् । अतिशयेनेति तमपोऽर्थः । ननु 'रतिधारकोत्तमत्वात्सः' इति पादस्य नवाक्षरत्वेनाष्टाक्षरपादवत्त्वरूपानुष्टुप्छन्दोबद्धत्वभङ्ग इत्यत आह । न वेति । एकेनाक्षरेण न्यूनेनाधिकेन वेत्यर्थः । वियन्ति नश्यन्ति । एवं द्वाभ्यामित्यस्यापि न्यूनाभ्याम् अधिकाभ्यां वेत्यर्थः धननामस्विति । मघमित्यष्टाविंशति धननामसु श्वात्रं रत्नं रयिमिति पठित इत्यर्थः । तथाच धनधारकोत्तमत्वात्स इति भाषितव्यमिति भावः । तदपरित्यागेनेति । तथाच सोऽप्यर्थोऽत्र विवक्षित इत्यभिप्रायः ॥ १ ॥

अग्निः पूर्वेभिः ऋषिभिरितीमाम् ऋचमवतारयति । आचारोऽपीति । अग्नेस्स्तुत्यत्वेनेत्यर्थः । उच्यते ऋग्द्वयेनेति शेषः । ऋक्प्रतीकं गृह्णाति अग्निः पूर्वेभिरिति । भाष्यप्रतीकं गृह्णाति स पूर्वैरिति । एवमेवोत्तरत्रापि द्रष्टव्यम् । अर्थत्रयसङ्ग्रहात्तच्छब्दार्थमाह । सोऽग्निरित्यादिना । तद्गतः प्रसिद्धाग्निगतः । ननु पूर्वशब्दाद'तो भिस ऐस्' इति सूत्रेण भिस ऐस्त्वे सस्य रुत्वे विसर्गे च पूर्वैरिति स्यात्पूर्वेभिरिति कथमित्यत आह । बहुलमिति । तत इति । अद्यपर्यायान्नूशब्दा- दव्ययात् 'सायं चिरं प्राह्णे प्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् चे'ति ट्युल्प्रत्यये टकारलकारलोपे युकारस्य 'युवोरनाका'वित्यनादेशे तुडागमे टित्वादादौ जाते उट् इत्यस्य लोपे नू त् अन् नूतनेति प्रसिद्धरूपस्य तन इत्यनुवाद इति ज्ञेयम् । तथाच नूतनैरित्यस्याद्यतनैरित्यर्थः सम्पन्नस्तदर्थमाह । वर्तमानैरिति । उतशब्दादिति । समुच्चयार्थकश्रौतोतशब्दसद्भावाद्भाष्ये एष्यैरिति यदुक्तं तस्यार्थः आगामिभिरपीति योज्यम् ।

नन्वेष्यैरिति कथम्? 'लृटः सद्वा' लृटः सदादेशः स्यात् । सदिति शतृशानचोः संज्ञा । 'तौ सत्' इत्यत्र शतृशानचौ सत्संज्ञौ भवतः इत्युक्तत्वात् । तथाच इण् गतावस्माल्लृट् परस्मैपदिनि तस्य शत्रादेशे अत् इत्येतावन्मात्रं विहाय शकारऋकारयोर्लोपे इकारगुणे णकार लोपे ए अत् इति जाते 'स्यतासी लृलुटोः' लृलुटोः परयोः सतोर्धातोः स्यतासी इत्येतौ प्रत्ययौ स्त इत्यनेन स्य प्रत्यये ए स्य अदिति जाते 'अतो गुण' इति पररूपे सस्य षत्वे एष्यदिति शत्रन्तप्रातिपदिकनिष्पत्यनन्तरं

स्वाद्युत्पत्तौ एष्यद्भिरिति वक्तव्यमत आह। लृटः सद्वेत्यत्रेति। योगो वाक्यम्। लृट इत्येकं वाक्यं। तस्यायमर्थः। लृटः अकारादेशः स्यादिति। सद्वेत्यपरं वाक्यम्। लृटः सदादेशो वेति तदर्थः। एवं च इण् धातोः लृट् प्रत्यये तस्याकारादेशे गुणे स्यप्रत्यये सस्य षत्वे एष्य अ इति जातेऽप्यकारस्थाकारलोपे एष्य् अ एष्येत्यकारान्तप्रातिपदिकं निष्पन्नम्। पश्चात्स्वाद्युत्पत्तौ एष्यैरिति साध्विति भावः।

किप्रत्यय इति। ऋष ज्ञाने अस्मात् इगुपधात्किरि(दि)ति सूत्रेण किप्रत्यये ककारलोपे षकारस्थाकारलोपे ऋष् इ ऋषीति प्रातिपदिकम्। कित्वात् गुणाभावो द्रष्टव्यः। अन्यथा ऋषीति स्यादिति भावः। तेषां स्तोतॄणाम्। नन्विन्द्रादिदेवानां हविर्भुजां दूरे स्थितानां बाह्ययज्ञे आनयनसम्भवेपि इन्द्रियदेवानां समीप एव सत्त्वात्तेषामानयनं नाम ज्ञानयज्ञे कीदृशमित्यत आह। तेषां विशेषेणोपकारिण इति। दीर्घादटीति। दीर्घात्परस्य नकारस्य रुः स्यादटिपरे स चेन्नकार एकस्मिन्नेव पादे स्यादिति सूत्रार्थः। नकारस्य रुरिति। तथाच देवान् आ इहेति स्थिते दीर्घादिति सूत्रेण नकारस्य रुत्वे देवारु आ इहेति जाते 'आतोऽटि नित्य'मिति सूत्रेण अटिपरे रोः पूर्वस्याकारस्यानुस्वारागमे कृते देवां रु आ इहेति जाते 'भो भगो अघो अ पूर्वस्य योशि' एतत्पूर्वस्य रोर्यादेशोऽशिपर इत्यनेन रोर्यकारादेशः। अवर्णस्य स्वाष्टादशभेदग्राहकत्वेन आकारस्याप्यकारान्तर्भावात्। एवं च देवाँ य आ इहेति जाते 'लोपः शाकल्यस्ये'ति यकारलोपे आ इहेत्यत्र गुणे जाते देवाँ एहेति संहिता निष्पन्नेति भावः। ननु 'ते प्राग्धातो'रिति उपसर्गाणामव्यवधानेन धातोः पूर्वप्रयोगस्य निमित्तत्वात् कथम् आ इत्युपसर्गस्य इहेत्यनेन व्यवधानमित्यत उक्तम्। व्यवहिताश्चेति। छन्दसि परेऽपि व्यवहिताश्चेति सूत्रेण आख्यातव्यवहितानामप्युपसर्गाणां छन्दसि प्रयोगस्योक्तत्वादित्यर्थः। एवमुत्तरत्रापीति। 'उत नः सुभगो अनिमहो अ इन्द्र' इत्यादौ दीर्घादटीति नकारस्य रुत्वादिकमङ्गीकृत्य संहिता निष्पत्तिकरणं द्रष्टव्यमित्यर्थः।

यद्वा 'येन्द्रसानसि'मित्यादौ उपसर्गस्य व्यवहितेनाख्यातेन सम्बन्धकरणं च ज्ञातव्यमित्यर्थः। वहतेर्लेडिति। वह प्रापणे अस्मल्लेट् तस्य परस्मैपदिनि तिबादेशे पकारलोपे वहतीति जाते 'सिप् बहुलं लेटि' इति सिप् प्रत्यये इप् इत्यस्य लोपे वह स् तीति जाते 'हो ढ' इति हस्य ढत्वे वढस् तीति जाते 'षढोः कः सि' इति सकारे परे ककारादेशे वक् स् तीति जाते 'आदेश प्रत्ययो'रिति ककारात्परस्य पदान्तस्य सस्य षत्वे वक्षतीति जाते कषयोर्योगे क्ष इति जाते वक्षतीति रूपम्। ननु

प्रापणार्थस्य वहतेरानयनार्थकधातुना कथं व्याख्यानम्? तयोर्भिन्नार्थत्वादित्यत आह । वहतिनयत्योरिति । वह प्रापणे नीञ् प्रापणे इति धातुव्याख्यानादिति भावः । ननु तथापि वक्षतीति लेडन्तशब्दस्य आनयेदिति विधिलिङन्तशब्देन कथं व्याख्यानम्? आनेष्यतीति वक्तव्यत्वादित्यत आह । लेटश्च लिङर्थत्वादिति । तत्र नियामकं सूत्रमाह । लिङर्थे लेडिति । लिङर्थे विध्यादौ धातोर्लेट् स्यादिति लेटो लिङर्थकत्वविधानेन तयोरैकार्थ्याल्लिङन्तशब्देन लेडन्तशब्द-व्याख्यानमुपपन्नमिति भावः ॥ २ ॥

अग्निना रयिमिति ऋचमवतार्य प्रतीकं गृह्णाति । किं चेत्यादिना । अग्नेः स्तुत्यत्वे बाह्ये अध्यात्मं च धनादिप्रापकत्वरूपं निमित्तान्तरं कथ्यत इत्यर्थः । पूर्वसंगत्यर्थं प्रयुक्तस्य तेनेत्यस्यार्थः स्तुतेनैवाग्निनेति । बाह्ये धनात्मकं प्रसिद्धहिरण्यात्मकम् । अनेनेति । तेनैव चेति वचनेनेत्यर्थः । अश भोजन इत्यश्नातेर्भोजनार्थत्वप्रसिद्धेरश्नवदित्यत्र तदर्थप्रतीतिवारणाय भाष्ये आप्नोतीति प्राप्त्यर्थकत्वमुक्तम् । तदुपपादयितुमुक्तं व्याप्तिकर्मण इति । विशेषेणाप्तिः प्राप्तिः तदर्थकस्येत्यर्थः । अशू व्याप्ताविति धातोरिति भावः । नन्वशिधातोर्लेटि तस्य परस्मैपदिनि तिबादेशे पकारलोपे इतश्चेतीकारलोपे, अश् त् इतिस्थिते श्नुविकरणे शकारलोपे अश् नु त् इति जाते 'लेटोऽडाटौ' इत्यडागमे अश् नु अ त् इति जाते गुणे अश्नो अ त् इति जाते तस्यावादेशे अश्नव् अत् अश्नवदिति लेटि रूपं भवति । तथा च लिङर्थे लेडिति विहितत्वात् विधिलिङन्तशब्देन लेडन्ताश्नवदित्यस्य व्याख्यानं कर्तव्यम् । आप्नोतीति लटा व्याख्यानं तु कथमित्यत आह । लडर्थे पञ्चमो लकार इति । पञ्चमो लकार इति लेटः संज्ञा । तत्र नियामकमाह । व्यत्ययो बहुलमिति । नन्वथाप्यश्नवदित्ययुक्तम् । अश्नोतेरनुदात्तङित आत्मनेपदमित्यनेनात्मनेपदित्वाल्लेटः आत्मने-पदिनि तादेशे पूर्ववदेव रूपनिष्पत्तौ अश्नवतेति स्यादित्यत आह । परस्मैपदं चेति । व्यत्ययो बहुलमिति ज्ञापकाभावेति द्रष्टव्यम् । नन्वथापि अश्नवदित्ययुक्तम् । लेडन्तत्वे सिब्बहुलं लेटीति सिपि इप् इत्यस्य लोपे अश्नवसदिति जाते सस्य षत्वे अश्नवषदिति भवेदित्यत आह । सिब्बहुलं लेटीति । लोकवदिति । सप्तम्यर्थे वतिः । लोके यथेत्यर्थः । ननु यशसमिति कथम् । नपुंसकात् यशस्शब्दात् द्वितीयैकवचने अमि 'स्वमोर्नपुंसकात्' इति अमो लोपे सस्य रुत्वे विसर्गे च यश इत्येव भाव्यत्वादित्यत आह । अमोऽलुगिति ।

समाधानान्तरमाह । पुल्लिङ्गत्वं वेति । सकारान्तपुल्लिङ्गत्वे चामो लोपप्राप्तिरेव नास्तीति भावः । अस्मिन् यशसि । तमपोऽर्थः अतिशयेनेति । सम्यक्तेति । ऋचि तमपोक्त्या भाष्ये च संशब्दोक्त्या

इत्यर्थः । तमपोक्ता सम्यक्ता वीरशब्दोक्तपुत्रविशेषणं कथं स्यादसङ्गतत्वादित्यत आह । सामर्थ्यादिति । अर्थाबाधरूपयोग्यतयेत्यर्थः । तथा बुद्ध्या विवेकेनार्थातिशयलाभाय योज्यमित्याशयः । तथाच यशः पुत्रं च प्राप्नोतीत्यर्थो द्रष्टव्यः । भावप्रधान इति । वीरशब्दो वीरत्वापरपर्यायवीर्यपरः । वीरत्ववीर्यशब्दयोरेकार्थत्वं शुक्लत्वं शौक्ल्यमितिवत् द्रष्टव्यम् । ज्ञानं सुखं चेति यशःशब्दार्थकथनम् । प्रापणार्थकयाधातुजस्य येत्यस्य ज्ञानार्थत्वाच्छकारस्य सुखवाचि-त्वादिति द्रष्टव्यम् । एकास्मिन्नेव बाह्यार्थे वीरवत्तममित्यस्य पुत्रसंयुक्तं वीर्यवत्तममेवेति विकल्पेनार्थद्वयकल्पनं प्रतीयते नत्वध्यात्मं तत्पदस्यार्थकथनमित्यत आह । वेतीति । यदा बाह्यार्थविवक्षा तदा वीर्यवत्तममित्यर्थमित्येव व्यवस्थितविकल्पोऽतः अध्यात्ममेवेदं तदर्थकथनं युक्तमित्यर्थः ॥ ३ ॥

अग्ने यं यज्ञमध्वरमिति ऋचमवतारयति । एवमिति । तृचेनोक्त्वेति । तिसृणाम् ऋचां समाहारः तृचं तेनेत्यर्थः । अत्र तृचेनेति रूपसाधनमित्थम् । 'त्रिचतुरोः स्त्रियां तिसृचतसृ' (एतयोरेतावादेशौ स्तो विभक्तौ परतः) इति सूत्रेण त्रिशब्दस्य तिसृ इत्यादेशे तिसृणाम् ऋचामित्यत्र 'समासप्रत्यययोः' (समासान्तर्गतायाः विभक्तेः प्रत्यये परे लोपः स्यात्) इति सूत्रेण षष्ठीविभक्तिलोपे 'निमित्तापाये नैमित्तिकस्याप्यपाय' इति न्यायेन विभक्तिनिमित्तक तिसृ इत्यादेशस्य लोपे त्रि ऋचेति स्थिते ऋचि त्रेरुत्तरपदादिलोपः स्यादपि अभिधेये यत्र त्रिशब्दात् यदुत्तरपदं तदादेर्लोपः । चशब्दात् पूर्वपदस्य सम्प्रसारणम् । तथा च त्रिशब्दादुत्तरस्य ऋक्पदस्याद्यपदस्याद्यभूत ऋवर्णस्य लोपे त्रि चेति जाते त्रीत्यत्रत्यरकारस्य ऋवर्णरूपे सम्प्रसारणे सति तृ इ चेति जाते 'सम्प्रसारणाच्च' (सम्प्रसारणादचि परतः पूर्वरूपमेकादेशः स्यात्) इति सूत्रेण सम्प्रसारणभूत ऋवर्णादिकाररूपेऽचि परेपूर्वरूपं जातम् । तथा च तृचेत्यकारान्त प्रातिपदिकं निष्पाद्यत इति ज्ञातव्यम् । अग्निमीळ इति स्तुतिं प्रतिज्ञाय तस्य स्तुत्यत्वं कुत इति प्रतिज्ञाय पुरोहितमित्याद्यवशिष्टेन ऋचेन तदुपपाद्य इदानीं प्रतिज्ञातां तां स्तुतिं करोतीत्यर्थः । पृथग्वचनादिति । अध्वरशब्दस्यापि रूढार्थाङ्गीकारे यज्ञमिति पृथग्वचनात्पुनरुक्तिः स्यादिति भावः । अध्वरशब्दात्कथमयमर्थो लभ्यत इत्यत आह । ञमन्ताड्ड इति । अत्र ञमिति प्रत्याहारं (रो)ग्राह्यं (ह्यः) । ञमङणनम् । तथा च ञमन्तात् धातोर्डप्रत्ययो भवतीति उणादिसूत्राणामादि-सूत्रार्थः । दम्यतेऽनेनेति दण्डः, रम्यतेऽसाविति रण्डेत्याद्युदाहरणं द्रष्टव्यम् । तथा चानेन सूत्रेणाध्वशब्दोपपदाद्रमुक्रीडायामिति धातोर्डप्रत्यये डित्वाट्टिभूतस्यामित्यस्य लोपे प्रत्ययाकारसम्बन्धे सति अध्वरेति रूपम् ।

ननु ञमन्तादित्यनेन विहितस्य न डित्वं वैयाकरणानामभिमतम् । डकारस्यानुबन्धसंज्ञा नास्तीत्युणादिवृत्तावेवोक्तत्वात् । अन्यथा रण्डेत्याद्युदाहरणानुपपत्तेः । तथाच टिलोपाभावात् अध्वरम् ड इत्येव रूपं स्यान्नत्वध्वर इति रूपमिति चेत्सत्यम् । उणादयो बहुलमिति बहुलग्रहणादेव एतस्यापि डस्य क्वचित् डित्वमपि प्रयोगबलादङ्गीकार्यम् । कथमन्यथा आनन्दरूपो निष्परीमाण इति रामशब्दनिर्वचनपरायां श्रुतौ रश्चासावमश्चेति विग्रहसूचनमुपपन्नं स्यात् । तत्रानन्दात्मकस्य रमतेरेवाभिप्रेतत्वात् । अप्रसिद्धधात्वन्तरकल्पनस्य च गौरवपराहतत्वादित्यादिकमस्मदाचार्य-कृतसुधाटिप्पण्यां द्रष्टव्यम् ।

परितः सर्वतः असीत्यस्य रक्षसीत्येतत्तात्पर्यकथनमित्यभिप्रेत्याह । असीति । ननु यज्ञं परिभूरिति कथम्? परियोगे द्वितीयाया अविहितत्वात् इत्यत आह । ततोऽन्यत्रापीति । द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यत इति वचनादित्यर्थः । आम्रेडितम् अभ्यस्तम् । आम्रेडितं द्विस्त्रिरुक्तं स्यात् । वृक्षं वृक्षं प्रति प्रतिवृक्षमित्याद्याम्रेडितान्तेषु द्वितीया दृश्यते । ततोऽन्यत्रापि पर्यादिशब्दयोगे द्वितीया दृश्यत इति वचनात् इत्यर्थः । सप्तमी द्वितीयार्थ इत्यभिप्रायेणाह । देवानिमिति । तमेव यज्ञं देवाः स्वीकुर्वन्तीति भावः । एवशब्देनेति । इच्छब्दस्यैवार्थत्वादिति भावः ।

ननु भगवद्रक्षितस्य यज्ञस्यैव देवान् प्रति गन्तृत्वं कुत इत्यत आह । परमेश्वररक्षितमेव हीति । यज्ञं बाह्यम् । आन्तरयज्ञविवक्षयाऽऽह । तादृशस्यैव हीति । परमेश्वररक्षितस्यैवेत्यर्थः । अध्यात्मं परमेश्वररक्षितज्ञानयज्ञस्वीकर्तृत्वं देवादीनां कीदृशमित्यत उक्तम् । विषयो भवतीति । 'त्वां सुन्वतां सुरकृता बहवोऽन्तरायास्तान् को विलंघ्य भगवन् व्रजतात्पदं ते । नान्यस्य बर्हिषि बलिर्दधतः स्वभागं धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि' इति भागवते नरनारायणं प्रति कामपुरःसराणां वचनं प्रसिद्धवाचक हिशब्देन सूचितं ज्ञातव्यम् ॥ ४ ॥

अग्निर्होता । पूर्ववदिति । होतृसंस्थं विशेषत इति पूर्वोक्तरीत्या होतृशब्दार्थो द्रष्टव्यः । ऋत्विक कविशब्दो भावप्रधान इत्येतत् व्याचष्टे । कवित्व इति । अखिलेति योग्यतया सम्बन्धः । प्रज्ञा प्रतिभा ज्ञानस्य प्रतिभासाध्यत्वप्रसिद्धिरेवं व्याख्यातमिति ध्येयम् । अखिलं विश्वमिति योग्यतया सम्बन्धः । यमयतीत्येव सत्यशब्दस्यार्थः । सद्भिर्गुणैरिति व्याख्यानमुपपादयति । सद्भाव इति । सदित्येतत्प्रयुज्यत इति वाक्यशेषो द्रष्टव्यः । भगवद्गुणा एव च साधव इति भावः । ततः स्वतन्त्र इति तच्छब्दार्थः । तमुपपादयति । सदुपपदादिति । तृतीयासमर्थात्सच्छब्दोपपदात् तनु विस्तारे अस्मात्क्विप्रत्यये तस्य सर्वस्य लोपे तस्य डित्कार्यकारितायाः विवक्षितत्वाट्टिभूतस्य अन् इत्यस्य लोपे

सत् तु इति रूपं निष्पन्नम् । यमयतीति यम् शब्दार्थमुपपादयति । यमेश्चेति । यम् नियमे अस्मात् डप्रत्यये डित्वाट्टिभूतस्य म् इत्यस्य लोपे प्रत्ययाकारसम्बन्धे येति रूपम् । विग्रहं दर्शयति । सच्चासाविति ।

ननु कथमेतत् सत् तु चासाविति वक्तव्यत्वादिति चेत्सत्यम् । सत् तु इत्यत्र तकारद्वयस्यापि 'स्तोः श्चुना श्चुरि'ति श्चुत्वे सच् च् चासाविति जाते 'झरो झरि सवर्णे' इति सूत्रेण हलः सकारात्परस्य चकारस्य च सवर्णे चकाररूप झरि परे लोपे सच् इति भवति । तथा च सच्चासाविति विग्रहः सम्भवतीति ध्येयम् ।

ननु यमयतीति प्रयोजकव्यापारार्थकणिच्प्रयोगेन अन्यकर्तृकनियमनप्रयोजकत्वमेव हरेः प्रतीयते, न साक्षान्नियन्तृत्वमत आह । यमयतीति । तथाच यमयतीति नियच्छत्यर्थो द्रष्टव्यः । चित्रमद्भुतमिति । चित्रमालेख्यमद्भुतमित्यभिधानस्य वक्ष्यमाणत्वादित्यर्थः । पूर्ववदिति । द्योतनादित्यादि पूर्वोक्तरीत्या देवशब्दार्थो द्रष्टव्य इत्यर्थः । बाह्ययज्ञस्थानम् । अन्तभक्तशरीरम् । नन्वागमदिति भूतार्थकस्य लुङः आगन्तेति वर्तमानार्थकतृन्नन्तशब्देन कथं व्याख्यानमित्यत आह । सार्वकालिक इति । लेड्वेति । आगमदित्यस्य लेट्त्वे तस्य वर्तमानार्थत्वादागन्ता भवतीति व्याख्यानं युक्तमित्यर्थः । ननु तर्हि 'सिब्बहुलं लेटि' इति सिपि आगमिष्यदिति भवेत् इति चेत्सत्यम् । बहुलग्रहणात् सिबभावो द्रष्टव्यः । ननु भगवतः सर्वदा यज्ञस्थाने भक्तशरीरे च सत्वात्कथमागन्ता भवतीति कादाचित्कमागमनं घटत इत्यत आह । तत्रेति । विशेष सन्निधानापेक्षया न दोष इति भावः । ऋचि शेषपूरणस्य तात्पर्यमाह । आगमनमिति ॥ १ ॥

## पदार्थदीपिका

रशब्दलोपश्चेति । निरुक्तत्वादिति भावः । एवमेवोत्तरत्रापि यत्र लाक्षणिको लोप उच्यते तत्र सर्वत्र द्रष्टव्यम् । पूर्ववदिति । अग्रशब्दात्सप्तमीसमर्थादित्यर्थः । कर्तरि डिप्रत्ययः इति । उणादयो बहुलमित्यनेनेत्यर्थः । नन्वदनमत्तिरिति भावेक्तिन् प्रत्ययान्तत्वेनात्तिशब्दस्य अदनरूपार्थ-निर्देशाभिप्रायकत्वात् । अदो जग्धिर्ल्यप्ति किति, तादौ किति अदेर्जग्ध्यादेशविधानात् जग्ध्यादेशे जग्धिमिति भवितव्यं तत्कथमत्तीत्युक्तमित्यत आह । धातुनिर्देशोऽयमिति । नायं क्तिन् किंतु इक्श्तिपौ धातुनिर्देश इति इक्स्तिपोरेव विधानात् तथाच कित्वाभावात् न जग्ध्यादेश इति भावे निप्रत्यय इति उणादयो बहुळमिति सूत्रेणेति शेषः । दस्य च ग इति । निरुक्तत्वाद्वर्णविकार इति भावः । उपपदेति । उपपदेंगशब्दे यावनुस्वाराकारौ तयोर्लोप इत्यर्थः । पूर्ववदिति । अत्राग

शब्दस्यैवोपादानादनुस्वारलोपातिरिक्तं सर्वं समानमित्यर्थः । अङ्गागनेतृतामित्यत्र नेतृशब्दस्य तृजन्तत्वे तस्य याजकादिष्वपाठेन याजकादिभ्यश्चेति प्रतिप्रसवाप्रसक्त्या तृजकाभ्यां कर्तरीति तृजन्तेन षष्ठीसमासप्रतिषेधेन षष्ठीसमासानुपपत्त्या तृन्नन्तत्वे वाच्ये तृन्योगे नलोकाव्ययेति षष्ठ्या एव निषेधात् तत्समासस्याप्यनुपपत्तिरित्यतो द्वितीयान्तेन अङ्गागे इत्यनेन नेत्रशब्दस्य श्रितादिषु गम्यादीनामुपसंख्यानमित्युक्तेर्द्विश्रितातीतेत्यादिना द्वितीयासमासोऽयमित्याह । नेतृशब्दस्तृन्नन्त इत्यादिना । यद्यपि याजकादिषु पाठमापाद्य तृजन्तत्वेऽपि याजकादित्वात् षष्ठीसमास एवोपपद्यत इति शक्यते वक्तुं अत एव गीताभाष्यटीकायां विष्णुबोधकमित्यत्र सुधायां च तत्तच्छक्तिप्रबोधक इत्यत्र याजकादित्वमाश्रित्य कप्रत्ययान्तस्य बोधकशब्दस्य षष्ठीसमास एव दर्शितः । तथापि तृनस्ताच्छिलिकत्वेन अङ्गागनयनशीलत्वरूपार्थविशेषस्य भगवति लाभादन्यथा तदलाभात् तृन्नन्तताश्रयणेनैव समाहितम् । अत एव चिचेत्ययन्तेत्यत्रापि तृन्नन्तत्वाश्रयणेनायमेवाभिप्राय इति बोध्यम् ।

अग्निमीळे इत्यस्य व्याख्यानं तं स्तौमीत्येवाकरे पाठः । ळः प्रायेणेति । अज्मध्यस्थडकारस्य लकारं बह्वृचा जगुरित्युक्तत्वात् । अनज्मध्यस्थस्येड्यो नूतनैरुतेत्यादेर्व्यावृत्तये प्रायेणेत्युक्तम् । ननु बलिहितयोगेचेति हितशब्दयोगे चतुर्थ्या विधानादशेषस्येति कथं षष्ठीत्यतः ऋषिप्रयोगेषु छान्दसत्वेन समाधानस्य बहुलमुपलम्भात् । ऋष्युत्तमाचार्यप्रयोगेऽपि तथैव समाधानमुन्नितमित्यभिप्रेत्याह । चतुर्थ्यर्थे इति । हितशब्दयोगे चतुर्थीप्राप्तावपि तस्य उपपदविभक्तित्वेन कारकविभक्तित्वा-भावात् षष्ठ्यर्थभूतसम्बन्धसामान्यस्यैव चतुर्थीप्रयोगेऽपि प्रतीतिरिति सूचयितुमाचार्यैः षष्ठ्येव प्रयुक्तेति हृदयम् ।

ननु चतुर्थ्यर्थः सम्प्रदानत्वं तस्मिन् छन्दसि चतुर्थ्यर्थ इत्यनेन सूत्रेण षष्ठीविहिता । नचाशेषस्य हितमिति स्थले शेषपदार्थे सम्प्रदानत्वमस्ति किं तु सम्बन्धित्वमेव तत्कथमेतत्सूत्रोदाहरणमिति चेत् दानकर्मणेत्यस्यानाश्रयणेन क्रिया कर्मणा यमभिप्रैति ससम्प्रदानम् इत्येव निर्णीतत्वात् परमात्मा हितकरणरूपक्रियाकर्मणा शेषमभिप्रैतीति युक्तमेवाशेषस्य सम्प्रदानत्वमित्येके । चतुर्थ्यर्थे चतुर्थीनिमित्ते सति छन्दसि षष्ठी भवतीति सूत्रार्थमभिप्रेत्यैवमुक्तम् । चतुर्थीनिमित्तं च क्वचित्सम्प्रदानत्वं क्वचिद्बलिहितादियोग इति तु रहस्यम् । उदात्तस्वरार्थ इति अग्निमित्युदात्तस्वरस्यार्थः ।

ननु कुत इति प्रश्नस्य पुरोहितमित्यनेन कथं परिहार इत्यत आह । हितोहीति । जातावेकवचनमिति । जातौ विवक्षितायाम् एकवचनस्य बहुवचनस्य च जात्याख्यामेकस्मिन् बहुवचनमन्यतरस्यामिति साधुत्वानुशासनात् । अत एव जाताविदं बहुवचनमित्यापि टीकाकारीयोक्तिरन्यत्र युज्यत इति भावः । तदधीनत्वादिति । अन्यत्रैव प्रसिद्धशब्दजातं भगवत्येवार्थवत् अन्यगतानां तत्र शब्दप्रवृत्तिनिमित्तानां भगवदधीनत्वादिति बादरायणेनोक्त-त्वादिति भावः । अन्यवाक्यत्वे ऋत्विङ्नियामकतया स्तुतेरनुपपत्या ऋत्विग्वाक्यत्वस्यावश्यकत्वेन तदुपपादयितुमाह । कर्माङ्गत्वादिति । पराद्यजितनिच दीव्यतेरिगुपधत्वात् कर्तरि इगुपधलक्षणेन कप्रत्ययेन भाव्यम् । तत्कथमचृप्रत्ययो व्याख्यायत इति वाच्यं देवसेवमेषादथः पचादौ पठितव्या इत्युक्तेः कर्तरिपचाद्यजेव न कप्रत्यय इत्याशयात् । कर्माणिघञिति । अकर्तरिचकारके संज्ञायामिति कर्मण्यपि घञ् विधानादिति भावः ।

ननु देवशब्दस्याजन्तत्वे चित इति चितोन्तोदात्तत्वेन देवशब्दस्यान्तोदात्तत्वसम्भवेऽपि घञन्तत्वे ञित्स्वरेणाद्युदात्तत्वापत्या कथमन्तोदात्तत्वमिति चेन्न । उंछम्लेंछादि शब्दानामजंतत्वेऽपि उंछादीनञ्चित्यन्तोदात्तत्ववत् देवशब्दस्याप्यन्तोदात्तत्वापत्तेः । देवमित्युक्त्या कथं स्तुत्यत्वसमर्थ-नमित्यत आह । गुणाधिकोहीति । ऋत्विक्ष्विति । ऋत्विक्षु ऋत्विङ्नियामकं तत्तच्छब्दवाच्यम् अग्निनियामकाग्निशब्दवाच्यरूपातिरिक्तं तिष्ठति। होतुरिति अग्निनियामकमृ अग्निशब्दवाच्यमेव रूपं तिष्ठति । तद्विवक्षया परमेश्वरस्य विशेषतो होतृसंस्थतोक्तेरिति भावः ।

अग्निसंस्थितेति । होतृसंस्थमग्निसंस्थमित्युक्ते ऋत्विजमित्यनेन पौनरुक्त्ये प्राप्ते विशेषत इत्यनेन होतृसंस्थस्यानेन विशेषेणाग्निसंस्थतोच्यत इत्युच्यत इति भावः । एवं च तत्कथमित्यत इत्यस्य तत् होतृसंस्थं कथं विशेषतोऽग्निसंस्थमित्यर्थः । होतृसंस्थतेति पाठः सुगम एव । केचित्तु अग्नेस्तद्गतस्य परमेश्वरस्य संस्थता होतृसंस्थतोच्यत इत्यर्थ इत्याहुः । एतदपीति । अग्निनियामकाग्नि शब्दवाच्यपरमेश्वररूपस्य होतृसंस्थत्वमपीत्यर्थः । अग्निः प्रसिद्धः अतोग्निसंस्थेनेति पूर्वेणान्वय इति भावः । शेष इति । अस्मिन् व्याख्याने पूर्वेणान्वयायोगादिति भावः । अग्नेर्होतृदेवतात्वे श्रुतिमाह ॥ तथाचेति ॥ स होतेति । सोऽग्निर्होतृदेवतेत्यर्थः । न चैवं होतृशब्दव्याख्यानेऽपि अग्नौ कथमृत्विक् शब्दव्यवस्थेति वाच्यम् । अस्मदादिसाधारण्येन तत्वाभिमानित्वेन ऋत्विजामपि नियामकतया ऋत्विङ्नियामकत्वेनेत्यादिनैव तद्व्यवस्थापनात् । तथा सति अग्निसंस्थस्यैव रूपस्य ऋत्विक्संस्थतया विशेषतो होतृसंस्थतानुपपत्तिरिति चेत् न । तादृशरूपस्य होतर्यपि सत्वेन

ऋत्विगन्तरेष्वविद्यमानहोतृदेवताभूताग्निसंस्थरूपस्य होतृसंस्थत्वेन विशेषसम्भवादित्याहुः । अर्थानामिति । यद्यपि तृन्विधौ ऋत्विक्षु चानुपसर्गस्येति तृन् विहितः । तथा च होतृशब्दस्य तृन्नन्तत्वे कथमर्थानामिति षष्ठी न लोकाव्ययेति तृन्योगे षष्ठीनिषेधात् । अथौणादिको जुहोतेस्तृन् इति षष्ठ्यनुपपत्तिस्तर्हि चित इत्यन्तोदात्तत्वापत्या आद्युदात्तत्वानुपपत्तिरेव नत्वाभावे न ञ्नित्यादिर्नित्यमित्यस्याप्राप्तेस्तथापि बाहुलकादेव चित्वेऽपि आद्युदात्तत्वमिति द्रष्टव्यम् । रत्नधातमशब्दं व्याख्यातीति । अत्र रत्नधातमशब्दस्य भाष्ये प्रतिपदरूपेण व्याख्यानाभावात् । पूर्ववत् किं चेत्यादि रूपेण न व्याख्यातमिति द्रष्टव्यम् ।

प्रत्यय इति । अत्र क्तप्रत्यय इति पाठमाश्रित्य रमेस्तचेत्यनेन धापृवस्य जतिभ्यो न इत्यतोऽनुवर्तमानं नप्रत्ययं तृषिसुषिरसिभ्यः किदित्यतोऽनुवर्तमानं कित्वं चशब्देनानुकृष्य रमेःक प्रत्यये कित्वादनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोप इति मकारलोपे रत्नशब्दनिष्पत्तिरिति भाव इति केचित् । तन्न रमेस्तचेत्यत्र रमेर्नप्रत्ययस्य तकारान्तादेशस्य च वृत्तिकृता व्याख्यानेन रमेर्नप्रत्यये मकारस्य च तकारे रत्नशब्दनिष्पत्युपपत्तौ कित्वादनुदात्तेति मकारलोपव्युत्पादनस्यानर्थक्यात् । मूलकोशे लप्रत्यय इत्यत्राप्यर्थानुवाद इत्येवार्थः । विजिति ॥ सौत्रशब्देन विजुपेः छन्दसीत्यतोनुवर्तमानो विच्प्रत्ययश्च भवतीति भावः ॥ वेरपृक्तस्येति वकारलोपो द्रष्टव्यः । नछन्दोभङ्ग इति ॥ रतिधारकोत्तमत्वात्स इति तृतीयपादस्य नवाक्षरत्वेऽपि न गायत्रीछन्दोभङ्ग इत्यर्थः ॥ १ ॥

आचारोऽपीति ॥ अग्निनामकभगवत्स्तुताविति शेषः । भाष्ये विशेषमनुक्त्वा प्रतिपादनग्रहणतात्पर्यमाह ॥ बहुळमिति ॥ ऐस्त्वाभाव इत्यनन्तरम् इति भाव इति शेषः । अतोभिस ऐसित्येतदुत्तरत्वात्सूत्रस्येति भावः । तन इति नूशब्दादव्ययात्कालविशेष वचनात् । सायंचिरंप्राण्हे प्रगेऽव्ययेभ्यः ट्युट्युलौतुट्चेति । शैषिके ट्युप्रत्यये तस्यच तुडागमे च सति युवारेनाकाविति योरनादेशे च तनशब्दनिष्पत्तिभागमस्य च प्रत्यय भक्तित्वमभिप्रेत्यायमनुशब्द इत्यवधेयम् । न च सति शिष्टप्रत्ययस्वरेण नूतनपदं मध्योदात्तं स्यादिति वाच्यम् । वृषादित्वेन ग्रामादित्वेन चाद्युदात्तत्वसंभवात् । अत्रर्चितुनुघमक्षु तङ् कुत्रोरुष्याणामिति नुशब्दस्य दीर्घे तूर्वन्नयामन्येत शस्यन् रण इतिवत्साधुता नूतनशब्दस्येति ज्ञेयम् । न च पददशायां ह्रस्वस्य संहितायां दीर्घत्वविधायकस्य ऋचीति सूत्रस्य कथमत्र प्रवृत्तिः । तत्र संहितायामित्यनुवृत्ते नूतन इत्यत्र च पदकाले विच्छेदाभावेन पदकालेऽपि दीर्घत्वादिति वाच्यम् । वैदिकानां नूरण इत्यादिवत् । पृथक् पदत्वेन पाठभावेऽपि

स्वादिष्वित्यत्र प्रत्ययपर्यन्तेषु परेषु पूर्वस्य पदस्य संज्ञाविधानेन द्युद्युलोस्तन्मध्यत्वेन तयोः परयोर्नू इत्यस्य पदत्वात् पदकाले च ह्रस्वत्वात् विश्वमित्रस्य रक्षतीत्यादिवद्युक्तं दीर्घत्वमित्यत्र तात्पर्ययात्। केचित्तु स्वरादिषु नुशब्दस्यैव पठितत्वेऽपि अन्येषामपि दृश्यते इति कृतदीर्घास्यात्र ग्रहणमित्याहुः। नुशब्द एव कालविशेषवाची स्वरादिषु ज्ञेयः। स्वरादेराकृतिगणत्वादित्यप्याहुः। यद्यपि चात्र नवशब्दस्य नु इत्यादेश ननूप्रत्ययश्च महावार्तिके अभिहितः। तथापि भूतभविष्यत्समभिव्याहारेण वर्तमानत्वस्यैव वक्तव्यत्वात्। तल्लाभायैवमुक्तमिति ध्येयम्। उतेति। समुच्चयार्थाच्छ्रोतोतशब्दात् भाष्ये एष्यैरिति भाष्ये यदुक्तं तस्यार्थः। आगामिभिरपीत्यर्थ इत्यर्थः। यद्यप्युतशब्दो विकल्पार्थे प्रसिद्धस्तथापि निपातत्वेनानेकार्थत्वादौचित्येनात्र समुच्चयार्थो व्याख्यात इति द्रष्टव्यम्।

ननु लृटः सद्वेति लृटः स्थाने सत्संज्ञयोः शतृशानचयोर्विहितत्वादिणो धातोः परस्मैपदिनि लृटः शत्रादेशे एष्यद्भिरिति भवितव्यं भाष्ये एष्यैरिति कथमुक्तमित्यतः सत्संज्ञकयोः शतृशानचोरप्रथम समानाधिकरणे नित्यं प्रथमा समानाधिकरणे च विकल्प इति व्यवस्थितविभाषया लृडादेशत्वप्रतिपादके अस्मिन् सूत्रे विधेयसमुच्चयार्थकेनापि नाशब्देन अकार प्रश्लेषानुमानात् लृटः सत्संज्ञिकौस्तः अवाकारश्च स्यात् इति व्याख्यानात्। यथाह भाष्यकारः प्राप्तापन्नचद्वितीययेत्यत्र चकारेण विधेयसमुच्चयार्थेनाकारप्रश्लेषानुमानात् प्राप्तापन्ने द्वितीयया समस्येते अत्वं चतयोः स्यात्। तेन जीविकां प्राप्तास्त्री प्राप्तजीविका आपन्न जीविकेति सिध्यतीति तद्वदित्याशयेनाह। लृटः सद्वेति। योगविभागेनेति। योगस्य संहिताया विभागेनाकारविश्लेषेणेत्यर्थः। क्विप्रत्यय इति। नित्यत इतीत्यस्यानुवृत्तेः इगुपधात् किदिति सूत्रेणोन्प्रत्ययः। तस्य च कित्वमित्यभिप्रेत्यायमनुवाद इति भावः। नकारस्य रूरिति। देवान् इत्यत्र नकारस्य संहितायां दीर्घादटीति रुत्वे अत्रानुनासिकः पूर्वस्यतु वेति पूर्वाकारस्य सानुनासिकत्वे भोभगो अधोरिति रोर्यत्वे लोपः शाकल्यस्येति च लोपेच पूर्वत्रासिद्धन्यायेन तदसिद्धेः पुनः संध्यभावे देवाँ एहेति संहितोपपद्यत इति भावः। ननु प्राक् धातोरिति गत्युपसर्गसंज्ञानां धात्वपेक्षया व्यवहितपूर्वप्रयोगस्यैव विहितत्वात् कथमा इत्यस्य व्यवहितस्य प्रयोग इत्यत आह। आ इत्युपसर्गस्येति। वदतेर्लेडिति। ततश्च वहतेर्लेटि सिब्बहुलं लेटीति सिपिलोटो डाटावित्यडागमे वोढ इति वहतेर्हकारस्य ढत्वे षढोः कसीति कत्वे आदेश प्रत्ययोरिति सस्य षत्वे कषयोगे क्षेच सति वक्षतीति रूपनिष्पत्तिरिति भावः॥ २॥

नन्वशूव्याप्तावित्यस्यानुदात्तत्वेनात्मनेपदित्वात् लडर्थेस्यैव प्रकृतसंगतत्वाच्च कथमश्नवदिति प्रयोग इत्यत आह। अश्नवदितीति। लडर्थ इति लिडर्थे विहितस्यापि लेटो बाहुलकात् लडर्थत्वमिति

भावः । अलुगिति । स्वमोर्नपुंसकादिति विहितस्य लुकोऽभाव इत्यर्थः । पुल्लिङ्गत्वं वेति । व्यत्ययो बहुलमित्युक्तेरिति भावः । ज्ञानं सुखं चेति यशब्दस्य गत्यर्थधातुजत्वेन शशब्दस्य शंशब्दपर्यायत्वेन च यश इत्यस्य ज्ञानं सुखं चेति व्याख्यानमुचितमेवेति भावः । ननु वीर्यवत्तममेवेत्यत्रैवकारेण स्वान्विततातिरिक्तस्य सर्वथा व्यावृत्तित्वात् । वाशब्देन पाक्षिकाभ्यनुज्ञानात् विरोध इत्यतः एवकारव्यावर्त्यं तावद्दर्शयति । एवेतीति । इदानीं विरोधं परिहरति । वेतीति । एवं चाध्यात्मव्याख्याने बाह्यपुत्रादेर्व्यावर्तित्वात् बाह्यव्याख्याने चाभ्युनुज्ञानान्न विरोध इति भावः । अत एवेदं बाह्ये अध्यात्मवीरशब्दोभावसाधन इति पूर्वमुक्तम् इदानीमपि बाह्यपुत्रादीत्युक्तमिति ध्येयम् ॥ ३ ॥

मूले तृचेनेति । आद्यास्तृचो वायव्य इत्युत्तरमूलटीकायां तिस्रः ऋचोऽस्मिन् समुदाये इति च इत्यादि वक्ष्यतीति ध्येयम् । अध्वरमित्यस्य प्रसिद्धयज्ञार्थत्वपरित्यागे कारणं दर्शयन् भाष्योक्तं तदर्थं व्युत्पादयति । यज्ञमितीति । ञमन्ताड्ड इति ड इति । अत्र ञमिति प्रत्याहारः ञमङणनां तेभ्यो धातुभ्यो डप्रत्ययो भवतीति मान्तादस्माड्डप्रत्यय इत्यर्थः । अत्र ञमित्यस्य प्रत्याहारग्रहणत्वेऽपि ञ्ङयोरुदाहरणाभावात् । दण्डो वण्डो रण्डेति मान्तनान्तणान्तोदाहरणेष्वपि बाहुलकादेव प्रत्ययगत डकारेत्वाभावस्याश्रयणीयत्वात् चुटू इति लक्षणप्राप्तडकारेत्वमाश्रित्या- ध्वरशब्दः साधुरिति भावः । उभसर्वतसोः कार्याधिगुपर्यादिषु त्रिषु । द्वितीयाऽऽम्रेडिता तेषु ततोऽन्यत्रापि दृश्यत इत्यत्र तसिलन्तस्योभशब्दस्याभावात् । एकदेशग्रहणेनोभयशब्दस्यैव ग्रहणात् तसिलन्तोभयसर्वशब्दयोः धिक्शब्दस्य च प्रयोगे द्वितीयां विधाय कृतद्विर्वचनेषु उपर्यधः शब्देषु अपि प्रयुज्यमानेषु द्वितीयां विधाय ततोऽन्यत्रापि दृश्यते इति प्रापकलक्षणान्तराभावेऽपि यत्राभियुक्तः प्रयोगानुसारेण द्वितीया दृश्यते । तत्र द्वितीयाभ्यनुज्ञानात् कृत्तिकारेणाभितः परितः समया निकषा हा प्रतियोगेष्विति अन्यत्र शब्दस्य व्याख्यातत्वेऽपि तत् व्याख्यानस्यापि प्रयोगमूलकत्वात् अस्यापि प्रामाणिकप्रयोगत्वात् । अन्यत्र शब्दार्थतया परिशब्दयोगोऽपि व्याख्यातुं शक्यते इति भावेनाह ॥ ततोऽन्यत्रापीति ॥ ४ ॥

पूर्ववदिति । व्याख्यातत्वाद्धोतृशब्दो भाष्ये न व्याख्यात इत्यर्थः । ननु भगवतो नियामकत्वरूपगुणलाभाय यच्छतीति भाष्यकारेण वक्तव्यम् । तत्कथं नियमयतीत्युक्तमित्यत आह । स्वार्थेणिजिति । तथाच नियच्छतीत्यर्थः । आगन्तेति भाष्यपदेन संवादयितुमागमदिति श्रौतं पदं व्युत्पादयति ॥ सार्वकालिक इति । नानद्यातवदिति सूत्रे नानद्यतवत्प्रतिषेधे लुङ् लुटोः प्रतिषेधः अद्यतनवद्वचनेहि विधानं तत्र लङ्विधिप्रसङ्गः लुङ् लृटोश्च यथाकालमित्यादिना नञद्वयप्रयोजन-

प्रतिपादकवार्तिकैः क्रियासातत्यानुष्ठानरूपक्रिया प्रतिबन्धे द्योत्येऽनद्यतनवत् प्रत्ययान्निषिध्य भूतवर्तमानभविष्यदद्यतनप्रत्ययात् लुङ् लट् लृट् एव स्वस्वकालप्राप्तानभ्यनुज्ञातुं नञद्वयमित्यर्थस्य प्रतिपादितत्वात् सार्वकालिको लुङ् युक्त इति भावः । अत्र च्लेरङ् बहुलं छन्दस्यमाङ्योगेपीत्यडभाव इति ज्ञेयम् । लेड्वेति । सार्वकालिके इत्यनुवर्तते । छन्दोऽसि लुङ् लङ् लिट् इति सूत्रेऽन्यतरस्यामित्यनुवर्तनात् लेटः सार्वकालिकत्वमित्याहुः ।

अत्र पक्षे लेटोडाटावित्यडागमः । इतश्च लोपः परस्मैपदेष्वितीकारलोप इति ध्येयम् । तत्परः सन्निति शेष इति भाष्यकारेण ऋचि पूर्यत इति शेषः ॥ ५ ॥

## टीकाविवृतिः

अयमादित इति । बाह्ययज्ञे अग्रेस्तदन्तर्गतस्य हरेश्चेति सम्बन्धः । अध्यात्ममिति । आत्मनिशरीरे इत्यध्यात्मं विभक्त्यर्थेऽव्ययीभावे अनश्चेति टचि नस्तद्धित इति टिलोपे निष्पन्नाध्यात्म शब्दस्यनाव्ययीभावादत इति न लुक् सुपोऽम् भावश्च । तद्धितोनिप्रत्यय इति । तद्धिता इति बहुवचनाच्छैषिको निप्रत्ययः पृषोदरादित्वाद्रेफसहिताकारलोपश्चेति भावः । कर्तरिडिप्रत्यय इति । णीञ्प्रापण इत्यत अच इरित्यत अच इरित्यजंताद्धातोरिप्रत्ययोक्तेरौणादिक इप्रत्यय उणादयो बहुलमिति बहुलग्रहणाड्डिदिति भावेनोक्तं डिप्रत्यय इतिं । धातुनिर्देशोयमिति । अद् धातोरिक्श्तिपौधातुनिर्देश इति श्तिपि अदिप्रभृतिभ्य इति शब्लुकि अत्तिशब्दः कृदंत इति द्वितीयान्ततोपपन्नेति भावः । बहिरिति । अध्यात्मापेक्षया बाह्यार्थे हरौ संहर्तृत्वम् अग्नौ तदन्तर्गतहरौ च हविरत्तृत्वमित्यर्थः । अत्तेरिति । वीज्याज्वरिभ्योनिरिति बाहुलकादत्तेरपि निः । पृषोदरादि-त्वाद्दस्य गकार इत्यर्थः । पूर्ववदिति । नयतेर्डिप्रत्ययः उपपदाकारलोपश्चेत्यर्थः ।

नन्वंगनेतृतामिति कथम् । नेतृशब्दस्य तृजंतत्वे तृजकाभ्यां कर्तरीति षष्ठीसमासनिषेधात् । तृन्नंतत्वेतु नलोकाव्ययेत्यादिना षष्ठ्या एवनिषेधादित्यत आह । नेतृशब्द इति । तेनेति । याम्यादीनामुपसंख्यानमित्यनेनेति शेषः । तथाचाङ्गागौ नेतेति विग्रहः सूचितः । अग्निमीळे त्यस्येति । ऋग्रूपवाक्यस्येति शेषः । एवमुत्तरत्रापि ज्ञातव्यमिति सूचयितुमिदमुक्तम् । डस्यळ इति । ळित्थेत्यादि बहुप्रयोगादिति भावः । यजुर्वेदे अग्निमीळे पुरोहितमित्यादौ डकारस्यैव-योगाद्दक्ष्वित्युक्तम् । तातापिण्डानाम् अग्निः पूर्वेभिर्ऋषिभिरीड्य इत्यादिव्यावृत्त्यर्थं प्रायेणेति । त्र पूर्वस्मिण्डकारस्य हलः परत्वात् । उत्तरवाक्ये हलः पूर्वत्वात् । तदुक्तम् । अज्मध्यस्थडकारस्य कारं बह्वृचा जगुरिति ।

ननु चतुर्थीतदर्थार्थबलिहितेति हितशब्देन चतुर्थीसमासविधानाज्ज्ञापकाच्चतुर्थ्या भाव्यमतोऽशेषस्येति षष्ठीकथमित्यत आह । चतुर्थ्यर्थे इति । जाताविति । जातिश्छन्दसि सामान्ये मालत्यामोघजन्मनोरिति विश्वकोशोक्तेर्जातिः समुदायस्यैकत्वादेवैकवचनं नतु सामान्यरूपजातेः । तस्या अस्मन्मते प्रत्येकपर्यवसानेन व्यक्तितुल्यत्वादित्यर्थः । तदधीनत्वादिति । तत्तच्छब्दप्रवृत्तिनिमित्तानामवरत्वादीनां तदधीनत्वाद्विष्ण्वधीनत्वात्तत् अवरादिशब्दजातं तस्मिन्नेवार्थवत्सार्थकमिति सूत्रार्थः । तथाच ऋत्विगादीनां विष्ण्वधीनत्वादृत्विगादिशब्दवाच्यत्वं विष्णोरिति भावः ।

ऋत्विङ्नियामकत्वं कथं स्तुत्यत्वोपयोगीत्यत आह । कर्मांगत्वादिति । ऋत्विजां शस्त्रशंसनादि कर्मकरत्वादृचां च कर्मांगत्वादृत्विग्वाक्यत्वमित्यर्थः । आत्मनः होत्रादेरिति शेषो बाह्ययज्ञे । ज्ञानप्रदस्येत्यत्र त्वध्यात्ममिति शेषः । दिवुक्रीडाविजिगीषाव्यवहारद्युतिस्तुति मोदमदस्वप्नकान्तिगतिष्विति धातुव्याख्यानेषु विष्णोः परस्तुतिकर्तृत्वासम्भवात् स्तुत्यर्थं विहायान्येष्वर्थेषु पचादिपाठात्कर्तरिपचाद्यच् । स्तुतावकर्तरि चकारकेसंज्ञायामिति कर्मणि घञिति भावेनाह । दीव्यतेरिति । भाष्ये उपलक्षणत्वेन गृहीतानां क्रीडामदस्वप्नानां मध्ये मदस्वप्नार्थ योर्ण्यन्तत्वं बोध्यम् ।

होतरि पुनरिति । अत्र अग्निमीळे इत्यादौ यत्स्तुत्यमग्निसंस्थं भगवद्रूपं तदेव होतर्यप्यस्तीति ऋत्विगपेक्षया विशेषतोग्निसंस्थता अग्न्यंतर्गतभगवतो होतृसंस्थतेत्यर्थः । अनेन विशेषत इत्यस्य तथाऽग्निसंस्थेन रूपेणेत्यस्यापि होतृसंस्थमित्यनेनैवान्वय इति दर्शितम् । होतृसंस्थतेति पाठे त्वर्थः स्पष्टः । ऋत्विक्षु ऋत्विङ्नियामकं ऋत्विक्शब्दवाच्यं भगवद्रूपं होतरि त्वग्नि नियामकाग्निनामकमेव रूपमस्तीत्यतो विशेषतोग्नेर्होतृसंस्थतेति भावः । अनयाचेति । चस्त्वर्थः । होतारं ऋत्विजं होतृरूपं ऋत्विजमिति सामानाधिकरण्येन व्याख्यानन्तु ऋत्विक् शब्दे वैयर्थ्यादपास्तम् । एतदपीति । अग्निनामकविष्णोर्होतृसंस्थत्वमित्यर्थः । होतृदेवतेति । होत्रभिमानित्वात्प्रसिद्धाग्निर्यतो होतर्यस्त्यतोऽग्निगतविष्णोर्होतृस्थतेत्यर्थः । यतोग्निर्होतृदेवतेति भाष्यं प्रकारान्तरेणावतार्य पूर्वेणान्वयायोगादपेक्षितं पूरयति । एवमिति । तद्येयमिति । अभिमन्यमानाभिमानित्वसम्बन्धादभेदव्यवहारः । अत्र येयं वाक् वागिन्द्रियं अग्निः सोयं तदभिमानी । एवं सहोता होतुरभिमानीत्यर्थः । अथवा सुपां सुलुगिति तच्छब्दे होतृशब्दे च षष्ठ्याः सुरादेशः छान्दसम्पुंस्त्वं च । तथाच अयमग्निः सः तस्याः वाचः सम्बन्धी अभिमानी । तथा सः अग्निः होता होतुः सम्बन्धी

अभिमानीत्यर्थः । अग्नौ ऋत्विक्शब्दवाच्यत्वं वागाद्यभिमानित्वा दृत्विङ्नियामकत्वेनैव नतु ऋत्विक्षु ऋत्विक्त्वोपयोगिरूपविशेषस्थापनेन होतरि त्विंद्रियाभि मानिरूपमेकं होतृत्वोपयोगिचान्यदिति विशेषादग्निसंस्थेन रूपेणेत्युक्तमिति भावः । किं चेत्युक्तं घटयति । ऋग्वेदिन इति । षष्ठीयम् । होतृत्वं हि ऋग्वेदिनामेवेत्याशयः ।

हविषां होतेति तृजंतो होतृशब्दो भाष्ये प्रयुक्तः । तेनार्थानामित्यत्र नलोकेति निषेधाभावात्षष्ठ्युपपत्तिः । एतेनैवाशयेन याजकादिषु होतृशब्दः पठितः । ऋचितु ऋत्विक्षुचानुप सर्गस्येति तृन्नंतत्वात् ञ्नित्यादिर्नित्यमित्याद्युदात्तता । तत्रार्थानिति द्वितीयान्तेनान्वयो ज्ञेय इत्याशयः । तस्माच्चेति । न केवलं होतृऋत्विक्स्थत्वाद्धोतृनामकः किंत्विन्द्रियेष्वर्थाह्वानाच्चेत्यर्थः । अग्निविशेषणांतराणां स्तुतौ युक्त्यन्तरत्वद्योतनाय तत्र तत्र किं चेत्युक्तम् । अत्र तु तदेव शब्दान्तरेण द्योतयति । परमसुखत्वादिति । रमतेरिति । रमेस्तचेति सूत्राद्रमेर्न प्रत्यये धातुमकारस्य तकारादेशे च रत्नमिति कर्तरि यद्यपि सिध्यति तथापि तस्यार्थस्य प्रकृतासंगतत्वादुणादयो बहुलमिति वचनाद्भावे रमेः क्त्नप्रत्ययः कृतः । तदुक्तं महाभाष्ये । संज्ञासुधातुरूपाणि प्रत्ययाश्च ततः परे । कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिष्विति । तस्य कित्वादनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपोझलिक्ङितीति मकारलोपे रत्नमिति रूपम् । विजिति । आतोमनिन्नित्यत्र चकारेण विचोनुकर्षणादित्यर्थः । रतिधारकोत्तमत्वात्स इति भाष्ये वर्णाधिक्यादनुष्टुप्त्वं कथमित्यत आह । नवा इति । अक्षरेण न्यूनेनाधिकेन वेतिशेषः । वियन्ति गच्छन्ति । ननु निघण्टौ रत्न शब्दस्य धनपर्यायेषु रत्नं रयिः क्षत्रमिति पठितत्वाद्रत्यर्थाङ्गीकारे तद्विरोधः स्यादित्यत आह । यद्यपीति । एतेन रत्नधातमं रमणीयानां धनानां दातृतममिति निरुक्तिविरोधोप्यपास्तः । तदुक्तार्थस्याप्यपरित्यागात् ॥ १ ॥

अग्निः पूर्वेभिरित्यस्या ऋचः सङ्गतिमाह । आचारोपीति । अग्न्यन्तर्गताध्यात्मगताग्निनामक रिस्तोत्र इति शेषः । अग्निः पूर्वेभिरिति ऋक्प्रतीकम् । सपूर्वैरिति भाष्यप्रतीकम् । एवं सर्वत्रेति शब्दं नेनाऽदौ ऋक्प्रतीकं पश्चात्तद्व्याख्यानरूपभाष्यप्रतीकं ज्ञातव्यम् । पूर्वेभिरित्यादिश्रौतपदानि भाष्यपदैः संवादयति । पूर्वेभिरित्यादिना । एवमुत्तरत्रापि ज्ञेयम् । नूशब्द इति । यद्यपि नुमक्षुद्रवत् ति क्षिप्रनामसु नुशब्दः पठितस्तथापि पूर्वैरित्यतीतकालार्थकशब्दसमभिव्याहारात्क्षि प्रकालार्थक यभिप्रेत्याद्यपर्याय इत्युक्तम् । तत इति । सायं चिरं प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् चेति ट्युलूतस्य डागमः । युवोरनाकावित्यनादेशे ऋचितुनुघमंक्षुतङ्कुत्रोरुष्याणामिति नु शब्दस्यदीर्घ इति भावः ।

नूतनशब्दस्यैकपदत्वात्पदकालेपि संहितायाः नित्यत्वान्नित्यमेव दीर्घो नतु नूमर्तो दयत इत्यादि वत्पदकाले ह्रस्वताशंक्या। नूमर्त इत्यत्र नु इत्यस्य भिन्नपदत्वात्। तदुक्तम्। संहितैकपदेनित्या नित्याधातूपसर्गयोः। नित्यासमासे वाक्येतु सा व्यपेक्षामपेक्षत इति। क्वचिदेकपदेपि संहितायां दैर्घ्ये पदकाले ह्रस्वता चेत्तदा छांदसत्वं तत्रागत्याश्रयणीयम्। यथापुरूतमं पुरूणामित्यत्र परुशब्दस्य तमप्रत्यये परतः अन्येषामपि दृश्यत इति दीर्घः संहितायामेव न पदकाले।

ननु एष्यैरिति कथम्। इण् गतावित्यतो लृटः शत्रादेशे स्यप्रत्यये एष्यद्भिरिति भाव्यमित्यत आह। लृट इति। लृटः सद्वा अ इति योगं विभज्य द्वितीययोगस्य लृटोकारादेशः स्यादित्यर्थे कृते स्यप्रत्यये गुणे षत्वे च एष्य इत्यकारान्तोपि भवतीत्याशयः। सर्वैरिति भाष्यस्थपदं पूर्वेभिरित्यादिपदानां तात्पर्यपरमित्याह। एवं सर्वैरिति। किप्रत्यय इति। सर्वधातुभ्य इन् इगुपधात्किदिति ऋषेरिगुपधत्वादिन्प्रत्ययः कित् जातः। कित्वात्पुगन्तलघूपधस्येति गुणो नेति भावः। स्तुतश्चेति। तेषां स्तावकानामृषीणां सम्बन्धिनि बाह्ययज्ञे देवान् हविर्भोजनार्थमानयतु। ज्ञानयज्ञे त्विन्द्रिय देवानां सदा विद्यमानत्वेपि तेषामानयनं नाम ज्ञानभक्त्यादिविशेषोप-कारकत्वमेवेत्याशयः।

दीर्घादटीति। दीर्घात्परस्य नस्य रुः स्यादेकपादस्थाटिपर इति सूत्रार्थः। आतोटि नित्यमित्याकारस्यानुनासिकः। रोर्भोभगो इति यत्वे लोपः शाकल्यस्येति लोपश्चेति शेषः। एवमुत्तरत्रापीति। उपत्वाग्न इत्यादावुपेत्याद्युप सर्गस्य एमसीति व्यवहिते नाप्यन्वय इत्यर्थः। वक्षतीति श्रौतपदस्यानयेदिति व्याख्यानं कथमित्यत आह। वहतेर्लेडिति। वहधातोर्लेटः तिपि लेटोडाटावित्यडागमे सिब्बहुलं लेटीति शबपवादसिब्विकरणे च होढ इति ढत्वे षढोः कः सीति ढस्य कत्वे सिपः सस्य षत्वे इतश्चलोपः परस्मैपदेषु लेटइत्येव। लेट् सम्बन्धिन इकारस्य परस्मै पदविषयस्य वालोप इत्युक्तेः पक्षे तदभावे च वक्षतीति रूपमिति भावः॥ २॥

अग्निनारयिम्। अश्नवदित्यस्याप्नोतीति व्याख्यानं कथमित्यत आह। अश्नोतेरिति। कर्मक्रिया। व्याप्तिकर्मणः व्याप्त्यर्थकादित्यर्थः। अशू(ङ्) व्याप्ताविति धातोः पञ्चमो लकारो लेडिति प्राप्त इति शेषः। परस्मैपदं चेति। ङित्वा (अनुदात्तेत्त्वा) दात्मनेपदे प्राप्त इति शेषः। लेटोडाटावित्यडागमे इतश्चलोपः परस्मैपदेष्वितीकारलोपे स्वादित्वात् श्नुप्रत्यये सार्वधातुकार्धधातुकयोरिति गुणेऽवादेशे रूपमिति भावः। दिवेदिवे इति। दीव्यतेरिगुपधज्ञेति कप्रत्ययेऽकारान्तत्वात्सप्तम्ये कवचने वीप्सायां द्विर्वचने दिवेदिवे इति रूपमिति भावः। वकारान्तदिव्शब्दात्सुपां सुलुगिति शेभाव इति व्याख्याने

तु अस्मे इन्द्रा बृहस्पती इत्यादिवत् शे इति प्रगृह्यत्वात्तद्द्योतकेतिकरणं स्यात् । यशः शब्दादिति । स्वमोर्नपुंसकादित्यमोलुक् न भवति सर्वे विधयश्छंदसि विकल्प्यंत इति वचनादित्यर्थः । पुँल्लिङ्गत्वं वेति । सुप्तिङुपग्रहलिङ्गनराणामित्युक्तेरिति भावः ।

सामर्थ्यादिति । श्रौततमबुत्त्या भाष्ये समित्युत्त्येति शेषः । तथाच पुत्रलाभस्याग्नि प्रसादफलत्वायोगात् समीचीनपुत्रसहितमिति यशोविशेषणमिति भावः । ज्ञानं सुखं चेति । याप्रापणे कप्रत्ययः प्राप्त्यर्थानां ज्ञानार्थत्वात् यंज्ञानं शंसुखं यं च शंचेति द्वंद्वात्समासांता इति बहुवचनात्समासान्ते डसि यश इति रूपम् । वीर्यवत्तमं ज्ञानमपरोक्षम् । तादृशं सुखं मौक्तम् । परोक्षज्ञानस्य विद्याशब्देन गृहीतत्वात् । व्यवस्थित इति । द्रव्यपुत्रकीर्तिप्राप्तिर्बाह्याग्नितद्गत विष्णुप्रसादेनैव । रयिशब्दोक्तपरोक्षज्ञानमपरोक्षज्ञानं मुक्तिसुखं चाध्यात्मगतविष्णुप्रसादेनैवेति व्यवस्थितो विकल्प सत्यर्थः ॥ ३ ॥

पूर्वतृचस्योत्तरग्रन्थेन सङ्गतिमाह । एवमिति । अग्रेयम् । यज्ञे रूढस्याध्वरशब्दस्य विधिमार्गस्थितमिति व्याख्या कुत इत्यत आह । यज्ञमितीति । ञमन्ताड्ड इति । ञमङणनं एतदन्ताद्धातोर्ड प्रत्यय इत्यर्थः । नच रण्डेत्यादि रूपासिद्धिः । उणादयोबहुलमिति बहुलग्रहणेन डप्रत्ययस्य डित्त्वविकल्पनाड्डित्वपक्षे अध्वरमित्यादिरूपसिद्धेः । डित्वाभावे रण्डादण्डे त्यादिरूपसिद्धेः । विस्तरस्तुमत्कृतशाब्दिककण्ठमणौ बोद्धव्यः । भाष्ये सदैवचेति च शब्दस्वारस्यार्थमाह । बाह्यमाभ्यन्तरश्चेति । विश्वत इति ऋक्पदम् इतराभ्योपि दृश्यन्ते इति सूत्रेण तसेः सार्वविभक्तिकत्वात्सप्तम्यंतं काले इति विशेष्याध्याहारं चाभिप्रेत्य सदैवेति भाष्ये व्याख्यातमिति भावेनाह । विश्वस्मिन्निति ।

ऋचि यं यज्ञमिति द्वितीयाकथम् । लक्षणाद्यर्थत्वाभावेन परिशब्दस्य लक्षणेत्थंभूताख्यानेति कर्मप्रवचनीयत्वाभावेन कर्मप्रवचनीययुक्ते द्वितीयेति द्वितीयाया अप्रसक्तेः । असीत्यस्याकर्मकत्वात्तं प्रति कर्मत्वाभावेन कर्मणि द्वितीयायाश्चाभावादित्यत आह । ततोन्यत्रापीति । उभसर्वतसोः कार्याधिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितांतेषु ततोन्यत्रापि दृश्यत इति वार्तिकशेषेण चतुर्थपादेनेत्यर्थः । एवं भाष्येपि परितः शब्दयोगे द्रष्टव्या । स इत्युत्तरार्धस्याध्यात्मपक्षे तात्पर्यार्थमाह । तादृशस्यैवेति ॥ ४ ॥

अग्निर्होता । पूर्ववदिति । अग्निशब्दो होतृशब्दश्च पूर्वव्याख्यानुसारेण व्याख्येय इत्यर्थः । कविः काव्यकरेसूरावित्यभिधानात्कविर्ज्ञानीक्रतुरसुर्धीरिति प्रज्ञानामसु पाठात्क्रतुः प्रज्ञा

एतयोरन्वयसिध्यर्थं कविशब्दस्य भावप्राधान्यं समस्तविशेषविषयसम्प्रयंतत्वं बहुव्रीहिसमासंचाभिप्रेत्याह। कवित्व इति। सत्यशब्दे सत् य इति पदत्रयमभिप्रेत्याह। सद्भिर्गुणैरिति। सृष्टिकर्तृत्वादि धर्मैरित्यर्थः। सद्भाव इति। सद्भावे सत्त्वे साधुः समीचीनो भावो धर्मः तत्र च सदित्येतत्प्रयुज्यते इत्युत्तरेणान्वयः। क्विप् प्रत्यय इति। तन्धातोः क्विपः ककारेकारपकाराणामित्संज्ञायां वकारस्य वेरपृक्तस्येति लोपे ङित्त्वेन धात्वनोलोपे संज्ञापूर्वकस्यानित्यत्वाज्जश्त्वाभावे तकारमात्रं सिद्ध्यतीति भावः।

यमेश्चड इति। अमन्ताड्ड इत्युणादिसूत्रेणेति भावः। स्वार्थे णिजिति। चुरादिषु बहुलमेतन्निदर्शनमित्युक्तेर्गणान्तरपठितधातूनामपि स्वार्थे णिजित्यर्थः। तथाच यम उपरम इत्यत इषुगमियमांछ इति छत्वे यच्छतीति भाष्ये प्रयोक्तव्यं कथं यमयतीति शंका परास्ता। मूले आगमदित्यस्य भाष्ये कथमागन्ता भवतीति वर्तमानार्थक प्रयोग इत्यत आह। सार्वकालिको लुङिति। छन्दसिलुङ्लङ्लिट इति सूत्रेणेति शेषः। गमेर्लृदित्वादङि छांदसत्वादडभावे गमदिति रूपम्। लेड्वेति। लिडर्थेलेडित्युक्तेर्लिङोवर्तमानार्थत्वाल्लेटोपि वर्तमानार्थत्वं कालव्यत्ययो वेति भावः। अखिलभक्तानामित्यादिशेषोक्तेर्भावमाह। आगमनमिति॥ ५॥

अथास्मिन्वर्गे स्वरसंचारमार्गः कथ्यते। अग्निमीळे। अग्निम्। अव्युत्पत्तिपक्षे फिष इत्यन्तोदात्तः। व्युत्पत्तिपक्षेतु अग्रशब्दोपपदादंगांगशब्दोपपदाद्वा नयतेर्डिप्रत्यय इति पक्षे अग्रशब्दस्य फिट् स्वरेणान्तोदात्तत्वे नयतेर्धातोरित्यन्तोदात्तत्वे डिप्रत्ययस्याप्याद्यु-दात्तश्चेत्याद्युदात्तत्वे च त्रयाणामुदात्तत्वे प्राप्ते अनुदात्तं पदमेकवर्जमिति परिभाषया एकस्योदात्तत्वे तत्रापि सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति प्रत्ययस्य सतिशिष्टत्वात्प्रत्य-यस्वरेणान्तोदात्तोग्निशब्दः। निप्रत्ययपक्षेपि स्वरविधौ व्यञ्जनमविद्यमानवदिति नकारस्या-विद्यमानत्वात्प्रत्ययस्वरेणान्तोदात्तः। ततोऽमि अमिपूर्वत्वेचामः सुप्स्वादनुदात्तौ सुप्पिता-वित्यनुदात्तत्वे एकादेश उदात्तेनोदात्त इत्येकादेश उदात्तः अकारस्य तु उदात्तस्वरितपरस्य सन्नतर इत्यनुदात्ततरः। ईळे ईडस्तुतौ अस्मादुत्तमपुरुषे इटि टित आत्मनेपदानां टेरे इत्येत्वम्। अत्रतिङ्ङतिङ इति सर्वानुदात्तत्वम्। संहितायां उदात्तादनुदात्तस्य स्वरित इतीकारः स्वरितः। स्वरितात्संहितायामनुदात्तानामित्येकारः प्रचयः। पुरोहितम्। पूर्वशब्दात्पूर्वाधरावराणामित्य सिप्रत्यये पुरादेशे च पुर इति प्रत्ययस्वरेणान्तोदात्तः। धाञोनिष्ठायां दधातेर्हिरिति ह्यादेशे हितमित्यं तोदात्तः। पुरोव्ययमिति गतिसंज्ञस्य पुरःशब्दस्य कुगतीति समासे समासस्येत्यन्तोदात्तापवादे

तत्पुरुषे तुल्यार्थेत्यादिना पूर्वपदप्रकृतिस्वरे प्राप्ते तदपवादस्य गतिकारकोपपदात्कृदिति कृदुत्तरपदप्रकृतिस्वरस्यापवादो गतिरनन्तर इति पूर्वपदप्रकृतिस्वरः । कर्मणि क्तांतस्य हितशब्दस्योत्तरपदत्वात् । पु इत्युकारस्य सन्नतरः । हितशब्दयोः स्वरितप्रचयौ ।

यज्ञस्य । यजेर्यजयाचेति नङ्प्रत्ययस्वरेणोदात्तः । ङसस्स्यादेशः सुप्त्वादनुदात्तत्वात्स्वरितः । देवम् । दीव्यतेः पचाद्यच् प्रत्ययस्वरेण चित्वाद्वान्तोदात्तः । घञ्पक्षे व्यत्ययेनान्तोदात्तः । ऋत्विजम् । ऋतूपपदाद्यजेः ऋत्विग्दधृगिति क्विन्निपातनाद्गतिकारकेति धातुस्वरः । अमः सुप्त्वादनुदात्ते स्वरितः । होतारम् । जुहोतेस्तृन् ञ्नित्यादिर्नित्यमित्याद्युदात्तः । रत्नधातमम् । रत्नशब्दोमालादीनां चेत्याद्युदात्तः । धाशब्दो धातुस्वरेणोदात्तः । तयोः समासे समासस्वरापवादेन तत्पुरुषे तुल्यार्थेति रत्नशब्दस्य द्वितीयान्तत्वात्प्राप्तकृदुत्तरपदप्रकृतिस्वरः । तमपः पित्त्वादनुदात्तत्वे स्वरितप्रचयौ ॥ १ ॥

अग्निः पूर्वेभिः । अग्निशब्दः प्रागुक्तः । पूर्वेभिः पूर्वशब्दः स्वांगशिटामदंतानामित्याद्युदात्तः । शिडिति सर्वादीनां संज्ञा । उत्तरयोःस्वरितप्रचयौ । ऋषिभिः । ऋषधातोरिन्प्रत्ययस्य नित्वादाद्युदात्तता । ईड्यः । ईडेर्ण्यति तित्स्वरितमित्यंतस्वरितत्वे पूर्वस्यानुदात्तपरिभाषयानु-दात्तत्वे सन्नतरे च प्राप्ते ईडवन्दवृशंसदुहाण्यत इत्याद्युदात्तत्वम् । नूतनैः त्नप्तुलोलित्वाल्लितीति प्रत्ययात्पूर्वोनू शब्द उदात्तः । उत्तरयोः स्वरितप्रचयौ । उत । स्वरादिष्वन्तोदात्तो निपातितः । सः । फिषित्यन्तोदात्तः । देवान् । चित्स्वरः । आ । निपाता आद्युदात्ता उपसर्गाश्चाभिवर्ज-मित्याद्युदात्तः । इह । इदमः सप्तम्यन्तादिदमोह इति हप्रत्यये इदम इशादेशेच रूपम् । प्रत्ययस्वरः । वक्षति । तिङ्ङतिङ इति निघातः संहितायां स्वरितप्रचयौ ॥ २ ॥

अग्निनारयिम् । रयिशब्दः फिट्स्वरेणान्तोदात्तः । अश्नवत् । तिङ्ङतिङ इति निघातः । संहितायां त्वाद्ययोर्वर्णयोः स्वरितप्रचयौ । तृतीयस्योदात्तपरत्वात्सन्नतरः । पोषम् । पुषेर्घञ् । ञित्वादाद्युदात्तः । एव । निपातत्वादाद्युदात्तत्वे प्राप्ते एवादीनामन्त इत्यन्तोदात्तः । दिवेदिवे । कारान्त दिव्शब्दात्सप्तम्ये कवचनस्य सुपां सुलुगिति शेभावे सावेकाच इति ऊडिदमिति वा विभक्तिरुदात्ता । ततो नित्यवीप्स योरिति द्वित्वे अनुदात्तं चेति । द्वितीयदिवेशब्दस्यानुदात्तत्वे वरितप्रचयौ । यशसम् । यशेरसुन् नित्स्वरं बाधित्वा व्यत्ययेन प्रत्ययस्वरः । डसूपक्षेतु प्रत्ययस्वर व । अमः स्वरितः । वीरवत्तमं वीरशब्दः फिट्स्वरेणान्तोदात्तः । मतुप्तमपौ च पित्वादनुदात्तौ । तस्तेषां वर्णानां स्वरितप्रचयौ ॥ ३ ॥

अग्नेयं यज्ञम्। अग्ने आमन्त्रितस्येति षष्ठाध्यायस्थसूत्रेणाद्युदात्तता। यम्। फिट्स्वरः। यज्ञम्। अन्तोदात्तः प्रत्ययस्वरेण। अध्वरम्। डप्रत्यय उदात्तः। पूर्वमध्ययोरनुदात्तत्वे ध्वशब्दाकारः सन्नतरः। संहितायां तु पूर्वस्य स्वरितः। विश्वतः। विशेः अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्निति क्वनि नित्वात्सांगशिटामितिवाद्युदात्ततायां तसिलिप्रत्ययस्वरापवादेनलितीति प्रत्ययात्पूर्वस्योदात्तत्वे पूर्वस्य सन्नतरः तसः स्वरितः परिभूः। समासस्वरापवादेऽव्ययपूर्वपदप्रकृति स्वरत्वे प्राप्ते तद्बाधकः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः। असि। असधातोः सिपि अदादित्वाच्छपो लुकि तासस्त्योरिति सलोपः। यमिति यच्छब्दयोगाद्यद्वृत्तान्नित्यमिति निघात प्रतिषेधे धातुस्वरेणाद्युदात्तः। सिपः पित्त्वादनुदात्तत्वे स्वरितः। सः। फिट्स्वरः। इत्। निपातस्वरः। देवेषु। चित्वादन्तोदात्तत्वे सुपः अनुदात्तौ सुप्पितावित्यनुदात्तत्वे स्वरितः। गच्छति। गमेस्तिपि शपि इषुगमियमांछः। अस्य तिङ्ङतिङ इति सर्वानुदात्तता॥ ४॥

अग्निर्होता। अग्निः। अन्तोदात्तः। होता। जुहोतेस्तृनि नित्वादाद्युदात्तः। कविक्रतुः। कुशब्दे। अस्मादच इरिति। इप्रत्यये अन्तोदात्तः। क्रतुः फिट्स्वरः तयोः समासे समासस्वरापवादोबहुव्रीहौ प्रकृत्यापूर्वपदप्रकृतिस्वरे आद्यस्य सन्नतरे उत्तरयोः स्वरितप्रचयौ। सत्यः। फिट्स्वरः। चित्रश्रवस्तमः। बहुव्रीहिस्वरे तमपः पित्वादनुदात्तत्वम्। देवः। देवेभिः। उक्तस्वरौ शब्दौ। आ। उपसर्गस्वरः। गमत्। निघातः॥ ५, १॥

## ऋक्संहिता पदपाठसहिता

(६) यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि॥ तवेत्तत्सत्यमङ्गिरः॥ ६॥

(प०) यत्। अङ्ग। दाशुषे। त्वम्। अग्ने। भद्रम्। करिष्यसि॥ तव। इत्। तत्। सत्यम्। अङ्गिरः॥ ६॥

(७) उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम्॥ नमो भरन्त एमसि॥ ७॥

(प०) उप। त्वा। अग्ने। दिवेऽदिवे। दोषाऽवस्तः। धिया। वयम्॥ नमः। भरन्तः। आ। इमसि॥ ७॥

(८) राजन्तमध्वराणां गोपामृतस्य दीदिविम्॥ वर्धमानं स्वे दमे॥ ८॥

(प०) राजन्तम्। अध्वराणाम्। गोपाम्। ऋतस्य। दीदिविम्॥ वर्धमानम्। स्वे। दमे॥ ८॥

(९) सनः पितेव सूनवेऽग्ने सूपायनो भव ॥ सचस्वानः स्वस्तये ॥ ९, २, १ ॥

(प०) सः । नः । पिताऽइव । सूनवे । अग्ने । सुऽउपायनः । भव ॥ सचस्व । नः । स्वस्तये ॥ ९,२,१ ॥

## ऋग्भाष्यम्

यजमानाय यद्भद्रं कर्तुमिच्छसि सत्प्रिय ।
त्वच्चेष्टयैव कर्माणि वर्तयित्वा तदीहनम् ।
तवैव सत्यमङ्गानां रसयद्बह्विगो हरिः ।
अङ्गिरा अङ्गिरः पुत्रो यतोऽग्निरभवत्कचित् ॥ ६ ॥

वस्तर्दिनमहोरात्रमभीष्ट प्राणिनां सदा ।
अल्पा अपि वयं बुद्धया त्वामुच्चगुणमीश्वरम् ।
उपयाम मनःकर्मवाग्भिस्त्वन्नमसम्भराः ॥ ७ ॥

देदीप्यमानं स्वे सद्मन्यध्वरेशं सदा वृधम् ।
यथार्थज्ञानगोपं त्वामुपेमसि ॥ ८ ॥

पितेव नः । सूपाश्रयो भवत्वं च यद्वदौरससूनवे ।
रक्ष सन्ततसौख्याय सम्यक्सत्त्वाय वासदा ॥९॥२॥१॥

## ऋग्भाष्यटीका

यदङ्ग । यजमानाय । प्रियसम्बोधनेऽङ्गशब्दः योग्यतया सत्सम्बन्धः । अङ्ग सत्प्रियः । अङ्गिरः अङ्गानां रस । सर्वशरीराणां प्रेरक । पूर्वपदस्येकार उत्तरपदलोपश्च च्छान्दसः । तथाच श्रुतिः । ''एतमु एवाङ्गिरसं मन्यन्तेंऽगानां यद्रसस्तेनेति'' । अग्नेत्वं दाशुषे यजमानाय । दाशृ दाने । ''दाश्वान्साह्वान् मीढ्वांश्चे''ति निपातनात् । भद्रं करिष्यसीति यत् सनर्थे लृट् । भविष्यद्विषयत्वसाम्यात् । कर्तुमिच्छसीति यत् तदिच्छारूपमीहनं तवेत् तवैव । सत्यमवितथम् । अस्मा इदं दास्यामीतीच्छसि चेददास्येव । यत्करिष्यसि तत्सत्यमिति यथास्थितयोजनायां स्तुतिर्न स्यात् । यजमानः पूजयति स्वयं फलं ददातीत्येवं विनिमयमात्रं न भवतीति भावेनोक्तं त्वच्चेष्टयेति । वर्तयित्वा यजमानेनेति शेषः । पूजादिकर्मणां प्रवर्तकोपि त्वमेवेति । अनेनाङ्गिरः शब्दप्रयोगस्य प्रयोजनमुक्तं भवति । अङ्गानां रसेत्यध्यात्मं व्याख्यानम् । बहिर्विष्णौ योजयति ॥ यदिति ।

यद्यस्माद्धरिर्वह्निगस्तस्मादङ्गिराः । वह्निगत्वेपि कथमङ्गिरा इत्यत आह ॥ अङ्गिरः पुत्र इति ॥ य
कारणात् कचित्कालेऽग्निरङ्गिरसः पुत्रोङ्गिराः पुत्रोस्यवाऽभवत्तेनाङ्गिराः । कार्यकारणशब्दा
सांकर्यदर्शनात् । तद्गतोपि तदधीनत्वादर्थवदित्यङ्गिरा इति । अनेनाग्नावपि व्याख्यातम् ॥ १ ॥

उपत्वा । वस्तः । अत्र वस्तरिति पदं तावदनूद्य व्याचष्टे ॥ वस्तर्दिनमिति ॥ अहरित्यर्थः । हे अग्ने
धिया बुद्ध्या । बुद्ध्यादिभिर्गुणैः । अल्पा अपीति शेषः । वयं दिवेदिवे दिवसेदिवसे । तत्रापि दोषा
वस्तरहोरात्रम् । सदेति यावत् । नमोभरंतः अध्यात्मं मनसा बहिः कर्मवाग्भ्यां त्वन्नमसम्भराः । तव
नमनं सम्बिभ्राणाः सन्तः । नमनं नमः संबिभ्रतीति सम्भराः । उच्चगुणमीश्वरमपि त्वा त्वामुपेमसि
उपयाम । इदन्तोमसीति इत् । शरणं व्रजेम । बुध्येति पदसामर्थ्यादल्पा अपीति शेषे वक्तव्ये
स्तुतित्वसिध्यर्थमीश्वरं त्वामुच्चगुणमपीत्यपि शेषोवक्तव्यो भवति । धियोपेमसीत्यपि सम्भवे
गुणाधिक्यलाभाय शेषोक्तिः । महागुणस्य शरणप्राप्तौ साधनहीनश्चेत्कथं शरणं याया
इत्यतः प्रागुक्तमंगेत्येतदत्राप्याकृष्य व्याख्यातं प्राणिनामभीष्टेति । केवलं भक्त्यतिशय-
वशाच्छरणमुपयामेति ॥ २ ॥

राजंतम् । देदीप्यमानम् । अध्वराणां यज्ञानाम् । राजंतं राजानम् । राजतेरौणादिको झः
झोंतः । बाह्याध्यात्मिकाध्वरेशम् । ऋतस्य गोपां यथार्थज्ञानगोपम् । यथार्थज्ञानस्य गोप्तारम् । ऋचि
गुपेराकारः । भाष्ये पचाद्यच् । स्वेदमे स्वेसद्मनि स्वर्गादौ हृदये च । दीदिविं देदीप्यमानम् ।
दीव्यतेर्यङ्लुगन्तादिकारप्रत्ययोऽभ्यासस्य चेकारः । वर्धमानं सार्वकालिकः शानच् ।
ताच्छील्यार्थश्चानश् वा । सदावृधं सदापूर्णम् । इगुपधलक्षणः कः क्विप् वा । त्वामुपेमसीति पूर्वेण
सम्बधः ॥ ३ ॥

सनः । पितेव । हे अग्ने स एवमस्माभिः शरणं प्राप्तस्त्वं च त्वं तु नोऽस्माकं पितेव पुत्राणां
सूपायनः अधिकरणे ल्युट् । सूपाश्रयः । शोभनोपाश्रयो भव । पितेवेत्यनेनैव (सूनव इति) लब्धेपि
पुनः सूनव इत्युक्तस्य तात्पर्यमाह ॥ यद्वदिति ॥ न केवलं पितेव पुत्रमात्राणां किन्तु पितौरससूनवे ।
छन्दसि षष्ठ्यर्थे चतुर्थी वक्तव्या । औरससूनोर्यद्वत्तथेति । अत एव भिन्नवाक्यतासूचनायेवेत्युक्त्वा
पुनर्यद्वदित्युक्तम् । किंच त्वं नोऽस्मान्स्वस्तये सन्ततसौख्याय सदा सम्यक् सत्वाय वा सचस्व रक्ष ।
यथा रक्षणेन संततसौख्यादिकं भवति तथा रक्षेति । स्वस्तय इति सुपूर्वकं
सत्तावाचिविभक्तिप्रतिरूपकमव्ययम् । सत्तावाचिनां सौख्यवाचित्वमपि ''सद्भाववाचिनः शब्दाः
सर्वे ते सुखवाचका'' इति प्रमाणसिद्धम् । तस्मादुभयथा व्याख्यातम् । अनेकार्थत्वाद्धातूनां
सचतिरिह रक्षायां वर्तते । सेवाया अयोगात् ॥ ४, २ ॥

## मन्त्रार्थमञ्जरी

'अङ्ग' इति प्रियसम्बोधनम् ॥ (हे) अङ्ग, सज्जनप्रिय। अङ्गिरः, कालविशेषेऽग्नेरङ्गिरसः पुत्रत्वात्कार्यकारणशब्दानां 'गोभिः श्रीणीत मत्सरम्' (ऋ० म० ९।४६।४) इत्यादौ सांकर्यदर्शनात् 'यत्र वा पितुस्तद्वा पुत्रस्य' (ऐ० उ० २।१।८) इति श्रुतेश्चाङ्गिरसः पुत्रोऽग्निरपि 'अङ्गिराः' इत्युच्यते, तत्स्थत्वाद्धरिरपि तथोच्यते, तस्य सम्बुद्धिरङ्गिरः, अध्यात्मं तु– अङ्गानां रसोऽङ्गिरास्तस्य सम्बुद्धिरङ्गिरः सर्वशरीरप्रेरकेत्यर्थः, 'अङ्गरस' इति वाच्ये पूर्वपदस्येकारोऽन्तादेशो रसशब्दस्यान्तलोपश्च च्छान्दस इति 'अङ्गिरः' इति निर्देशो ध्येयः, तथा हि श्रुतिः 'एतमु एवाङ्गिरसं मन्यन्तेऽङ्गानां यद्रसस्तेन' (छा० उ० १।२।६) इति। (हे) अग्ने त्वम्। दाशुषे, दात्रे यजमानाय, 'दाशृ दाने' 'दाश्वान्साह्वान्मीढ्वाँश्च' इति निपातनात्। भद्रम्। करिष्यसि (इति) यत्, सनर्थे लृट्, कर्तुमिच्छसीति यत्। तत्, इच्छारूपमीहनम्। तव इत्, तवैव। सत्यम्, अवितथम्। अस्मा इदं दास्यामीतीच्छसि चेद्दास्यस्येव वेति भावः ॥ ६ ॥

(हे) अग्ने। धिया, उपलक्षणम्– बुद्ध्यादिगुणैः। (अल्पा अपि) इति शेषः। वयम्। दिवेदि वे, दिवसे दिवसे। तत्रापि– दोषावस्तः, दोषा रात्रिः वस्तरहः, अहोरात्रम्, सदेति यावत्। नमः भरन्तः, त्वन्नमनं बिभ्राणाः, विकरणव्यत्ययश्छान्दसः, 'भृञ् भरणे' शब्विकरणं वा। त्वा, त्वाम्। '(उच्चगुणमपि)' इति शेषः। उप आइमसि, उपयाम, 'व्यवहिताश्च' इत्युपसर्गान्वयः, 'इदन्तो मसि' इति 'मस्' इति बहुवचनस्य च्छन्दसीकारोऽन्तागमो भवतीति विधानात् 'इण् गतौ' इत्यस्याङ्पूर्वस्य लटि रूपम्, शरणं व्रजेमेत्यर्थः ॥ 'धिया' इति पदसामर्थ्यात् 'अल्पा अपि' इति शेषे वक्तव्ये स्तुतित्वसिद्ध्यर्थमीश्वरं त्वाम् 'उच्चगुणमपि' इत्यपि शेषो वाच्यो भवति। 'धिया वयं त्वामुपेमसि' इत्येवोक्तौ गुणाधिक्यालाभात् ॥ ७ ॥

'(हे) अग्ने' इत्याद्यनुवृत्तिः। अध्वराणाम्, यज्ञानाम्। राजन्तम्, राजानम्, 'राजृ दीप्तौ' इत्यस्मादौणादिके झप्रत्यये 'झोऽन्तः' इत्यन्तादेशे 'राजन्तम्' इति रूपसिद्धेः, बाह्याध्यात्मिकाध्वरेशम्। ऋतस्य, यथार्थज्ञानस्य। गोपाम्, गोप्तारम्, रक्षकम्, 'गुपू रक्षणे' इत्यस्मादाकारप्रत्ययः। स्वे दमे, स्वसद्मनि, स्वर्गादौ हृदये च। दीदिविम्, देदीप्यमानम्, द्युत्यर्थाद्दीव्यतेः 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इति यङ्प्रत्यये 'सन्यङोः' इति द्विर्वचने हलादिशेषे 'यङोऽचि च' इति यङो लुकि तस्मादिकारप्रत्यये 'दीर्घोऽकितः' इत्यभ्यासस्येकारे 'दीदिविम्' इति रूपसिद्धेः। वर्धमानम्, सार्वकालिकः शानच्छान्दसः,

'ताच्छील्यवयोवचनशक्तिषु चानश्' इति ताच्छील्यार्थश्चानश्वा, 'आने मुक्' 'कर्तरि शप्' 'पुगन्त' इति गुणः, सदा पूर्णम्। 'त्वामुपेमसि' इत्यनुवर्त्य योज्यम्॥ ८॥

(हे) अग्ने। सः, एवमस्माभिः शरणं प्राप्तः। (त्वम्) नः अस्माकम्। पितेव। सूनवे, पुत्राय, पुत्रस्येति यावत्। षष्ठ्यर्थे चतुर्थी। सूपायनः, 'सु, उप' इत्युपसर्गद्वयपूर्वकात् 'इण् गतौ' इत्यतोऽधिकरणे ल्युट्, 'हलन्त्यम्' 'लशक्तद्धिते' इति द्वाभ्यां लकारटकारयोरित्संज्ञया लोपे 'युवोरनाकौ' इत्यनादेशे 'सार्वधातुकार्धधातुकयोः' इति गुणे 'एचोऽयवायावः' इत्ययादेशे 'अकः सवर्णे दीर्घः' इति सवर्णदीर्घे च सति 'सूपायनः' इति रूपसिद्धिः, शोभनोपाश्रयः। भव। किं च, (त्वम्) नः, अस्मान्। स्वस्तये, संततसौख्याय, सदा सम्यक्सत्त्वाय वा। सचस्व, रक्ष। यथा रक्षणेन संततसौख्यादिकं भवति तथा रक्षेति भावः॥ 'स्वस्तये' इति सुपूर्वस्य सत्तावाचिनोऽस्तेः विभक्तिप्रतिरूपकमव्ययम्। सत्तावाचिनां सौख्यवाचित्वं च– 'सद्भाववाचिनः शब्दाः सर्वे ते सुखवाचिनः' (ऋ०भा०टी०उदा०) इति स्मृतिसिद्धम्॥ सचतेः सेवार्थकत्वेऽपीह तदयोगाद-नेकार्थत्वाद्धातूनां रक्षार्थत्वं ध्येयम्॥ ९॥ इति द्वितीयो वर्गः॥ २॥ प्रथमं सूक्तम्॥ १॥

## पदार्थप्रकाशिका

यदङ्गदाशुषे। सत्सम्बन्ध इति। सत्प्रियेति सच्छब्दसम्बन्ध इत्यर्थः। ननु तर्हि अङ्गरसेति स्यात् अङ्गीरस इति कथमित्यत आह। उत्तरपदलोप इति। उत्तरपदान्तस्य सकारस्य लोप इत्यर्थः। भाष्योक्ताङ्गिरः शब्दार्थे छान्दोग्यवाक्यं प्रमाणयति। तथा चेति। दाशृ दान इति धातोः क्वसुप्रत्यये ककारलोपे दाश्वमिति प्रातिपापदिकनिष्पत्यनन्तरं स्वाद्युत्पत्तौ दाश्वानिति रूपं निष्पद्यते। तत्र क्वसुप्रत्ययादिविधायकसूत्रादेरदर्शनात्कथमेतदित्यत आह। दाश्वानिति निपातनादिति। अलाक्षणिकविधेरित्यर्थः। यथोक्तमलाक्षणिकोविधिर्निपात इति। लक्षणं सूत्रं तेन (अ)प्राप्तो विधिर्निपात इति तदर्थः। उक्तं चान्यत्र। यदिह लक्षणेनानुपपन्नं तत्सर्वं निपातनात्सिद्धमिति। तथाचैवं पाणिनिना सिद्धरूपस्यैवोदाहृतत्वात्तद्बलात्प्रत्ययादिकं कल्पनीयमिति भावः। सनर्थं दर्शयति कर्तुमिच्छसीति। यदिति। इच्छायाः सनर्थत्वादित्यर्थः। सनर्थे लृटोऽविधानात् कथमेतदित्यतः साम्येन उपचार इत्याभिप्रेत्य साम्यं दर्शयति। भविष्यद्विषयत्वेति। सनर्थेच्छायाः सिद्धेविरहादसिद्ध एवेत्यगत्या भविष्यद्विषयकत्वं तावदिच्छायाः अस्ति। लृडपि भविष्यदर्थक एव इत्येवं सनो लृटा भविष्यदर्थकत्वेन साम्यात् सनर्थे लृडिति व्याख्यानं युक्तमित्यर्थः। ईहनमिति। मानसिको व्यापार इत्यर्थः। परव्याख्यानं दूषयति यत्करिष्यसीति। न स्तुतिः स्यादिति।

यत्करिष्यसि तत्सत्यमिति वस्तुस्थिति कथनमात्रपरत्वप्राप्त्याऽस्य सर्वसाधारण्येन स्तुतिसमयोपयुक्तासाधारण महागुणाप्रतिपादकत्वादिति भावः ।

अस्मद्व्याख्याने तु स्तुतिसमयोपयुक्तसत्यसंकल्प(त्व)रूपो महागुणो लभ्यत इति द्रष्टव्यम् । विनिमयमात्रमिति । विक्रीणनमात्रमित्यर्थः । यथा लोके द्रव्यं दत्वा धान्यादिकं गृह्यते एवं यजमानेन पूजारूपं द्रव्यं दत्वा भगवतः सकाशात्फलस्य विक्रयणेन गृहीतत्वादिति भावः । एवं सति नेदं विनिमयमात्रमित्याह । पूजादीति । प्रसिद्धविनिमयादिस्थले नैवमिति भावः । त्वज्ज्येष्ठ एवेत्युक्तौ विनिमयमात्रत्वपरिहारो ऋगनभिप्रेतो न भवतीत्याह । अनेनेति । त्वज्ज्येष्ठ एवेति भाष्येणेत्यर्थः । प्रयोजनं विनिमयमात्रपरिहारूपम् । एतदभिप्रायेणैव पूर्वमङ्गिर इत्येतद्व्याख्यानपरम् अङ्गानां रसेति भाष्यं सर्वशरीराणां प्रेरकेति व्याख्यातमिति द्रष्टव्यम् ।

नन्वग्नेरङ्गिरसः पुत्रत्वे आङ्गिरसत्वमेव स्यान्नत्वं गिरस्त्वमित्यत आह । कार्यकारणशब्दानामिति । यदवो रघवः कुरव इत्यादौ कारणशब्दानां कार्ये प्रयोगदर्शनात्, स्वपुत्रवाचकपितृशब्देन पितामहादीनामपि वाच्यत्वस्य पितॄन् हविषे अत्तव इत्यादौ दर्शनात् । यथोक्तं महैतरेयोपनिषद्भाष्ये आप इत्येतत्खण्डस्थस्य 'यत्र क्व च पुत्रस्य तत्पितुः यत्र वा पितुस्तद्वा पुत्रस्येति वाक्यव्याख्यानसमये 'यथा यदव इत्येव रघवः कुरवस्तथा । पुत्रनाम पितुश्च स्यात्तत्तन्त्रत्वात्सुतस्य हि' । इति । 'यथा पितामहाद्याश्च पितरो नाम कीर्तिताः' । इत्यादि । एवं प्रकृतेऽप्यग्निपितुरङ्गिरसो नाम्ना पुत्रोऽग्निरपि व्यवह्रियत इत्यर्थः । नन्वेवमग्नेरङ्गिरः शब्दवाच्यत्वेऽपि हरौ कथं तच्छब्द प्रयोग इत्यत आह । उद्गतोऽपीति । अङ्गिरः शब्दवाच्यो वह्निगतो हरिरिति शेषः । स्वातन्त्र्यात्तच्छब्दप्रवृत्तिनिमित्तानां तदधीनत्वाच्च शब्दजातं हरावेव मुख्यार्थवदिति न्यायेनेत्यर्थः । अनेनेति । व्याख्यातप्रायमित्यर्थः ।

उपत्वाग्ने दिवेदिवे । दिवसपर्यायदिनशब्दस्याहोरात्रात्मककाले रूढत्वादत्र तद्ग्रहणे दोषाशब्दयर्थ्यमित्यालोच्य व्याख्याति । अहरित्यर्थः इति । दोषावस्तरहोरात्रमिति यथायोग्यं व्याख्यानं थाक्रमम् । ऋचि नम इति क्सुन्प्रत्ययान्तमव्ययम् । भाष्ये चौणादिकाकारान्त प्रत्ययान्तो नमः ब्दो रामशब्दवत् । स च सम्भरशब्देन समस्त इत्याशयेनाह । नमनं नम इति । उपयामेति वक्तव्ये पेमसीति कथमित्यत आह । इदन्तो मसीतीति । छन्दसि विषये मसित्ययं शब्द इकारान्तो भवति । सः सकारान्तस्य इदागमो भवतीति यावत् । स च इदित्यागमस्तस्यान्ते सकारात्परं भवतीति त्रार्थः । तथाचोप आ इत्युपसर्गद्वयोपपदादिण् गतावस्मात् उत्तमपुरुष बहुवचने मस् प्रत्यये

इदागमे धात्विकारस्य सार्वधातुकेति गुणे अकारस्य पररूपे उपसर्ग पकारस्थस्याकारस्य लोपे उपेमसीति रूपम्।

ननु अल्पा इति उच्चगुणमीश्वरमिति कस्य व्याख्यानम् ? ऋचि तद्व्याख्येयपदाभावात्। न च शेषपूरणमिति वाच्यम्। तत्पूरणे प्रयोजनाभावादित्यत आह। बुद्ध्येत्यादिना। तदर्थकऋग्गतधियेति पदसामर्थ्यादित्यर्थः। तृतीयान्तस्य तस्य अल्पा इति शेषपूरणं विना अन्वयपूर्तिसामर्थ्याभावादिति भावः। शेषे वक्तव्ये वक्तव्यतया सिद्धे सतीत्यर्थः। स्तुतित्वेति। स्वस्याल्पगुणत्वे हरेरधिकगुणत्वे च स्तुत्यत्वं सिद्ध्यतीत्यर्थः। उच्चगुणत्वे ईश्वरमिति हेतुगर्भविशेषणमित्यभिप्रेत्येश्वरत्वादित्युक्तम्। नन्वल्पा इत्यादि शेषो न वक्तव्य एव। न च धियेत्यस्यान्वयाभावः। उपेमसीत्यनेन सम्बन्ध सम्भवादित्याशङ्क्य निराकरोति। धियोपेमसीत्यपीति। गुणाधिक्येति। शेषपूरणेन स्वस्य बुद्ध्यादिगुणैरल्पत्वे कथिते स्तुत्ये महागुणलाभेनाधिक्यं सिद्ध्यतीत्यर्थः। साधनहीनश्चेदिति। बुद्ध्या अल्पकत्वोक्त्या तल्लाभादिति भावः। तत्तात्पर्यमाह। केवलमिति। बुद्ध्यादिभिरल्पकत्वेन त्वच्छरणं प्राप्तो साधनहीनोऽपीति शेषः।

राजन्तमध्वराणाम्। ननु राजन्तमित्यस्य शत्रन्तत्वे तद्योगे न लोकेति षष्ठ्या निषेधादध्वराणामिति षष्टी न युक्ता। न लोकेति सूत्रे लेति लटः संज्ञा तथा तदादेशभूतौ शतृशानचौ ग्राह्यौ न चाध्वराणामित्यस्य गोपामित्यनेनान्वय इति वाच्यम्। तथा अध्वरेशरूपलाभो न स्यात्। दीदिविमित्यनेन राजन्तमित्यस्य पौनरुक्त्यं च स्यात्। राजृदीप्ताविति धातोः राजतेरपि दीप्त्यर्थत्वादित्यत आह। राजानमिति। धातूनामनेकार्थकत्वादीशार्थकाद्राजतेर्झप्रत्यये तस्यान्तादेशे राजन्तशब्दो अकारान्तः ईशत्ववाचीत्यर्थः। स्वामित्वार्थकराजन्शब्दस्य नकारान्तत्वनियमात्। राजन्तमिति कथमित्यतः राजन्तशब्दोऽपि तदर्थकोऽस्तीत्याह। राजतेरिति। ऋचिगोपामित्याकारान्तपुल्लिङ्गत्वं, भाष्ये त्वकारान्तपुल्लिङ्गत्वमित्येवं कथं वैचित्र्यमित्यत आह। ऋचि गुपोरित्यादेरिति। ऋचि गुपू रक्षणे अस्मात् आकार प्रत्यये गुणे च गोपा इति आकारान्त पुल्लिङ्गशब्दः सोमपाशब्दवत्। भाष्ये तु तस्मादेव धातोरप्रत्यये गुणे च गोप इत्यकारान्तः शब्द इत्यर्थः। बाह्येऽग्निभगवदपेक्षया स्वर्गादावित्युक्तम्। आदिपदेन वैकुण्ठादिग्रहणम्। अध्यात्मापेक्षया हृदये चेत्युक्तम्। दीव्यतेरिति। दीप्त्यर्थकाद्दिवुधातो रेकाच इति यङ्प्रत्यये 'सन्यङोः' इति द्वित्वे दिदिव् यङ् इति जाते यङो लुकि पश्चादिकारप्रत्यये दिदिवीति जातमित्यर्थः। नन्वत्र 'गुणो यङ्लुकोरि'त्यनेन इकारस्य गुणे देदिवमिति स्यादित्यत आह।

अभ्यासस्य चेति । अभ्यासस्य दि इत्यस्येकार एव स्थितो भवति, न गुणो भवति छन्दस्त्वादित्यर्थः । तथाच 'दीर्घोऽकित' इति अभ्यासस्य दीर्घतायां दीदिविति प्रातिपदिकनिष्पत्तौ सत्यां स्वाद्युत्पत्तौ दीदिविमिति द्रष्टव्यम् । शानच् इति । अत्र वृधु वर्धने अस्मात्कर्तरि शपि अकारं विहाय सर्वस्यापि लोपे वृध् अ इति स्थिते पश्चात् लृटि तस्यात्मनेपदिनि शानचादेशे शकार चकारलोपे वृध् अ आनेति जाते ऋवर्णस्य गुणे तस्य रपत्वे वर् ध् अ आनेति जाते 'आने मुगि'ति सूत्रेण आने परे मुगागमे अणित्यस्य लोपे वर्धम् आनवर्धमानेति हि शानजन्तं रूपम् ।

तत्रेयमाशङ्का । वर्तमानार्थकलडादेश भूतशानचोऽपि वर्तमानार्थकत्वाद्वर्तमानकालीनैव वृद्धिः प्राप्ता न तु सार्वकालिकी । अतः सदा वृधमिति कथं व्याख्यानमित्यत्रोक्तं सार्वकालिक इति । सार्वकालीनत्वार्थोऽत्र शानच् छन्दस्त्वादिति भावः । अत एवास्वरसादाह । ताच्छील्यार्थश्चा-नश्वेति । 'ताच्छील्यवयोवचनशक्तिषु चानश्' इति सूत्रेण ताच्छील्यार्थक चानश् प्रत्ययः । तथाच सदा वर्धमानशीलमित्यर्थो द्रष्टव्यः । रूपसाधनं तु पूर्वोक्तरीत्यैव ज्ञेयम् । भाष्यस्थं वृधमित्येतत्साधयति इगुपधेति । वृधु वर्धने अस्मात् 'इगुपधज्ञाप्रीकिरः कः' इति सूत्रेण ऋकारस्येक्त्वेन वृधुधातोरिगुपधात्वेन तस्मात् क प्रत्यये कस्य लोपे वृध् अ वृधेत्यकारान्तशब्द इत्यर्थः । प्रकारान्तरेणापि साधयति । क्विब्वेति । तथाच वृधु अस्मात् क्विपि तस्य सर्वस्यापि लोपे वृधु वृद्धौ वृध् इति धकारान्तः शब्दो द्रष्टव्यः । उभयत्रापि कित्वात् गुणाभावः । अन्यथा वर्धेति स्यात् ।

सनः पितेव सूनवे । सूपपूर्वकादयपयगतावित्यस्मात् ल्युटि युकारं विहाय सर्वस्य लोपे 'युवोरनाका'विति अनादेशे उपायनशब्दो ल्युडन्तः । तस्य च ल्युटो 'ल्युड्भावे' 'करणाधिकरणयोश्चे'त्यनेन भावादौ विहितत्वात् प्रकृते कस्मिन्नर्थे स व्याख्येय इत्यत आह । अधिकरण इति । तथाच उपेत्यास्मिन्निति सूपायन इत्यस्यार्थः । लब्धेऽपीति । पितुः पुत्रहितत्वेन प्रसिद्धत्वात् । पितेवेत्युक्त्यैव सूनव इति लब्धमित्यर्थः । पुत्रमात्राणामिति । 'जनिता चोपनीताच यश्च विद्यां प्रयच्छति । अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः' । इति वचनेनापि पितृत्वस्यानेकविधत्वात्तत्प्रयुक्तं पुत्रत्वमनेकविधमस्तीत्याशयेनापि पुत्रमात्राणामित्युक्तम् । पालितपुत्राणामित्यर्थः । नन्वाश्रयाश्रयिभावविवक्षायां षष्ठीविधानात् सूनव इति चतुर्थी कथमित्यत आह । छन्दसीति । इति वार्तिकादिति शेषः । पितेव नः सूपायनो भव । न केवलं पिता पुत्रमात्रस्येव । किन्नामौरससूनोर्यद्वत्तथा सूपाश्रयो भवेदिति भिन्नवाक्यतया भाष्यं योजितं तत्र

ज्ञापकामाह। अत एवेति। अन्यथा यद्वादिवशब्दयोरन्यतरस्य वैयर्थ्यं स्यादिति भावः। सम्यक् सत्त्वं सम्यक् सत्ता सम्यगवस्थानमित्यर्थः। सौख्यादिकमित्यत्रादिपदेन सम्यक् सत्वं ग्राह्यम्। सम्यक् सत्त्वाय वेति व्याख्यानमुपपादयति। स्वस्तय इति। अस भुवीति धात्वनुकार अस्तिरिति। सु अस्ति स्वस्ति। सम्यक् सत्तेत्यर्थः।

नन्वव्ययानां मध्ये स्वस्तीत्येव परिगणितं न तु स्वस्तय इति अतः कथमेतदित्यत आह। विभक्तिप्रतिरूपकमिति। न च स्वस्तय इति विभक्तिरेव नास्तीति वाच्यम्। स्वस्तीति यदि कस्यचिन्नाम तदैतादृशविभक्तिसम्भवात्। यद्वा चिरायेत्यपरैरतिचिरायेति विभक्त्यन्तसादृश्य-मङ्गीकृत्याव्ययत्वस्य कथितत्वात्प्रकृतेऽप्यति स्वस्तय इति विभक्त्यन्तसादृश्यस्य सम्भवादि-त्येवमस्मद्गुरुचरणविरचितसुधाटिप्पण्युक्तन्यायेन समाधानं द्रष्टव्यम्। सन्ततसौख्यायेति व्याख्यानुमुपपादयति। सत्तावाचिनामिति। षच सेवायामिति हि धातुस्तथाच रक्षेति व्याख्यानं कथमित्यत आह। अनेकार्थत्वादिति। 'क्रियावाचित्वमाख्यातुं एकैकोऽर्थः प्रवर्तते (दर्श्यते)। प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः'। इति वचनादिति भावः। प्रसिद्धधात्वर्थः सेवारूपः कस्मात् परित्यज्यत इत्यत आह। सेवाया इति सेवयेत्यस्य प्रकृते अयोगादित्यर्थः।

## पदार्थदीपिका

पूर्वपदस्येकार इति। पूर्वपदान्तस्याकास्येकार इत्यर्थः। उत्तरपदलोपश्चेति। रसशब्द सकारोत्तराकारलोपश्चेत्यर्थः। दाशुष इति। ददाशेति दाश्वान्। तस्मै। ननु स्वरितेत उभयतो भाषात् भौवादिकात् दाशृदान इत्यस्माछन्दसि लिडिति। भूतसामान्ये छंदसि लिट्। लिटः कानजा क्वसुश्चेति छान्दसो लिटः क्वसुरादेशः तस्मिन् परतो लिटि धातोरनभ्यासस्येत्यनभ्यास स्याधात्ववयवस्यैकाचः प्रथमस्य दाशरूपस्य द्वित्वम्। अत्र ये द्वे विहिते तयोः पूर्वस्य पूर्वाभ्यास इति अभ्याससंज्ञा। हलादिः शेष इत्यभ्यासस्यादेर्हलः शेषः। ह्रस्व इत्यनेनाभ्यासस्य दारूपस्याचो ह्रस्वः चतुर्थ्येकवचनस्याजाद्यस्य स्वादिष्वसर्वनामस्थानस्य परत्वात्। यचिभमित्यनेन पूर्वस्य ददाश्वस् इत्यस्य भसंज्ञा। वसोः सम्प्रसारणमिति वस्त्वन्तस्य भस्य सम्प्रसारणम् इग्यणः सम्प्रसारणमित्युक्तत्वात्। वकारस्योकारः। अच् परत्वात्संप्रसारणाच्चेति। ददाशु इत्युकारस्य अस् अकारस्य च स्थाने पूर्वरूपमेकादेशः। शासिवसिधसीनां चेति इणः परस्य वसोः सकारस्य षत्वम्। तथाच ददाशुष इत्येव स्यात् तत्कथं दाशुष इतीत्यत आह। दाश्वानित्यादि। दाश्वान् साह्वान् मीढ्वांश्च एते शब्दा निपात्यन्ते इति सूत्रार्थः।

किं निपात्यन्ते छन्दसि भाषायां विशेषेण क्वसावद्वित्वमनिट्कंचेति। नन्वस्तु द्वित्वभावः। निपातेन सम्प्रसारणविषये पूर्वमेव टः प्रवृत्तत्वात्वात् दाशुष इति दाश्वान् दाश्वांस इत्यादि तु कथं स्यात् वक्ष्यति च दाश्वांसो दाशुषः सुतमिति। वस्वेकाजाद्घसामिति द्वित्वाभावेन एकाचः परस्य वसोरिडागमप्रवृत्या दाशिवान् दाशिवांस इत्यादि स्यादित्यत उक्तम्। अनिट्कंचेति। द्वित्वाभावे अनिट्कंचेत्यर्थः।

ननु तदनुबन्धकग्रहणेन तदनुबन्धकस्येति परिभाषया विदेः शतुर्वसुरित्यस्येव वसोः सम्प्रसारणं युक्तं न क्वसोः सत्यम्। वसोरुकारानुबन्धग्रहणं क्वसोः सामान्यग्रहणार्थं उगित्यस्य स्थानिवद्भावेनापि दिक्। (नन्वित्यारभ्य इत्याहुरित्यन्तेन तट्टीकान्तरस्थानुवादः स्वयं व्याख्याति दाशुष इतीति) ननु क्वसुश्चेति लिटः क्वसुरादेशस्तथाच लिडादेशक्वसौ परतः लिटिधातोरनभ्यासस्येति द्विवचनं कथं न भवेत्। द्विर्वचनाभावे च लिटि श्रूयमाणैकाचुत्वात् वसुत्वात् वस्वेकाजाद्घसामिति इडागमः कथं न भवेदित्यतः दाश्वान् साह्वान् इति शृधातोः क्वसावद्वित्वस्याट्त्वस्य निट्त्वस्य निपातनाददोष इत्याह। दाश्वानिति। चतुर्थैकवचने वसोः सम्प्रसारणमिति वसोः सम्प्रसारणं पूर्वरूपत्वम् आदेशप्रत्यययोरित्यनेन स्थानिवत्वात् प्रत्ययावयवस्य सकारस्य षत्वमिति भावः। न च लिडादेशक्वसोः कथं लडादेशशानचा व्याख्यानमिति वाच्यम्। यतो नायं शानच् किन्तु पूञ्यजोः शानन्निति विहितो यजेः शानन् प्रत्यय इत्याहुः। करिष्यसीत्यस्य कर्तुमिच्छतीति व्याख्यानं कथमित्यत आह। सनर्थ इति। सनर्थ इच्छाव्यत्ययेनेति शेषः। भविष्यद्विषयत्वेतिदृश्यमाणस्य भविष्यत्वनियमात् सनर्थेच्छाया भविष्यद्विषयत्वेन सनोऽपि भविष्यद्विषयत्वमित्यवधेयम्। नस्तुतिः स्यादिति। सर्वैरपि करिष्यमाणस्य सत्यत्वादिति भावः। प्रयोजनमिति। विनिमयव्यावृत्तिरूपमित्यर्थः। अनेनेति। अग्निगह्वरावंगिरःशब्दप्रवृत्ति प्रयोजकतयाङ्गिरःशब्दस्य निष्ठत्वप्रतिपादनपरेण अङ्गिराश्चाङ्गिरः पुत्र इत्यादिभाष्येणेत्यर्थः॥ ६॥

वस्तरित्यस्यैव दिनार्थकत्वे दिवेदिव इत्यनेन पौनरुक्त्यमित्यत आह। अहरित्यर्थ इति। अहर्नामसुपतितत्वादिति भावः। नभः नभसं बिभ्रतीति नभसंभरा इति क्वचित्पाठस्तत्र मनः शब्दे उपपदे भृञः खचिद्र इच एकाचो भूप्रत्ययवच्चेत्यत्रोपसंख्यानेनामितस्याभूप्रत्ययवद्भावे नमसम्भरा इत्यस्य साधुत्वं द्रष्टव्यम्। नमनं नमः संबिभ्रतीति सम्भरा इति पाठे तु नमेरौणादिकोऽप्रत्ययः सम्पूर्वाद्बिभर्तेः पचाद्यजिति ज्ञेयम्। इदं त इति मसीत्ययंशब्द इकारान्तो भवति। मसः

सकारान्तस्येकारागमो भवतीति अत एवाह । इदिति । इकारागम इत्यर्थः । श्रुतौ लोडर्थे व्यत्ययेन लडिति भावः । ननु धियोपेमसीत्यनध्याहारेणान्वयोपपत्तौ किमल्पा इत्यध्याहारेण व्याख्याने निमित्तमित्यत आह । धियेति इत्यपीति । उपलक्षणमेतत् धिया नमोभरन्त इत्यभिसम्भव इत्यपि द्रष्टव्यम् । अनेन शरणप्राप्तौ किं साधनमभिहितमित्यत आह । केवलेति ॥ ७ ॥

दीप्त्यर्थाद्राजतेः परस्य लटः शतरि राजन्तं दीप्तिमन्तम् इति व्याख्याने दीदिविमित्यनेन पौनरुक्त्यप्रसङ्गात् । यज्ञेशत्वाल्लाभाच्चान्यथा व्याचष्टे । राजते रौणादिकोच्छः झ्जः इति । जृविशिभ्यां सजिति विधीयमानो झप्रत्ययो बहुवचनाद्राजतेरपि भवतीत्यर्थः । ततश्च झोन्त इत्यन्तादेश इति भावः । अत्राद्युदात्तत्वं च वृषादित्वादेवेति हृदयम् । यत्तु राजतेर्लटि सूत्रादेशे सति निष्पन्नस्य राजन्तमिति पदस्य नलोकेत्यादिना निषेधेनाध्वराणामिति षष्ठीसम्बन्धानुपपत्तेरेवं व्याख्यानमिति । तन्न । नलोकेति न अविशेषेण षष्ठीनिषेधः तथा सत्यब्राह्मणस्य कुर्वन् ओदनं पचन् अपांपेरुरसि नरकस्य जिष्णवो गुणैरित्यादौ षष्ठ्यनुपपत्तिप्रसङ्गात् किं नाम कारकषष्ठ्या एवायं प्रतिषेध इति । ईरितं पदमंजर्यादौ । तथाच लादेशायोगादध्वराणामिति कारकषष्ठ्यसम्भवे विशेषषष्ठीत्वेनानुपपत्तिरित्यास्तां तावत् । यङ्लुङन्तादिति । पुनः पुनरतिशयेन देदेतीति भृशार्थे दीव्यतेर्धातोरेकाचोहलादेरिति यङ् यङोचितेति तल्लोपः सन्यङोरिति द्विर्भावः । हलादि शेषश्चेत्यभिप्रायः ।

ननु गुणो यङ् लुकोरिति गुणे देदिवि इति भवितव्यं दीदिविमिति कथमित्यत आह । अभ्यासस्यचेति । ददेति देद्योतीति वादिदाविरित्यत्र गुणो यङ् लुकोरित्यत्र गुणभूतस्यैकारस्येत्यर्थः । ईकार इति दीर्घोऽकित इति दीर्घ इति भावः । सदावृध इति भाष्येण संवादयितुं वर्धमानमिति श्रौतपदं व्याख्याति । सार्वकालिक इति । स्थानिनो लटः सार्वकालिकत्वात् तदादेशत्वात् शानचोपि तदर्थत्वमिति भावः । ताछील्यार्थ इति । ताच्छील्यवयोवचनशक्तिषु चानशीति सूत्रेण ताच्छील्यार्थे च नश प्रत्यय इति भावः । अत्र शानचि सति शपः पित्वे चापित्वेचानु-दात्तत्वादनुबन्धस्यानेकान्तत्वेन शपोप्युपदेशत्वात् । तत्परशानचोपि चित्स्वरबाधकलं सार्वधातुकस्वरेणानुदात्तत्वात् । धातुस्वर एव सति शिष्ट इति युक्तमाद्युदात्तत्वं चानशितु प्रत्ययस्वरस्यैव सति शिष्टत्वेऽपि वृषादित्वादाद्युदात्तत्वमित्यवधेयम् । इगुपलक्षणः क इति । 'इगुपधज्ञाः प्रीकिरः क इति' सूत्रेणेगुपधात्वात्कः कित्वाद्गुणभाव इति भावः । क्विप् चेति सूत्रेण सर्वधातुभ्यः सोपपदेभ्यो निरुपदेभ्यश्च छन्दसिभाषायां च क्विप् विधायकेन वर्धतेः कर्तरि

क्विबित्यर्थः। अत्रापि कित्वाद्गुणाभाव इति भावः। आद्ये अकारान्तो वृद्धशब्दोऽभिप्रेतः। द्वितीये धकारान्त इति ज्ञेयम्। पूर्वेण सम्बन्ध इति त्वामुपेमसीति भाष्येणात्रास्या ऋचः पूर्वऋक्स्थेन त्वोपेमसीत्यनेनान्वय उच्यत इत्यर्थः॥ ८॥

ऋक्प्रतीकग्रहणं सन इति भाष्यप्रतीकं गृह्णाति। पितेवेति। अधिकरण इति करणाधिकरणयोश्चेति। स्मरणादेत्यस्मिन्नित्यधिकरणे यतेल्युडित्यर्थः। छन्दसि षष्ठ्यर्थ इति। चतुर्थ्यर्थे बहुलं छन्दसीति सूत्रे च चतुर्थी अर्थे इति योगविभागे षष्ठीत्यस्य नानुवृत्तौ चतुर्थी षष्ठी च अर्थसम्पन्ने स्वार्थे प्राप्तेः सिद्धत्वेन विधानानुपपत्या परस्परार्थे भवत इत्यर्थलाभात् वार्तिकलभ्यार्थेऽस्य सूत्रेणैव लब्धत्वाद्वार्तिकस्याऽस्य वैय्यर्थ्यमिति भाष्यकाराभिप्रायेऽपि सूत्राद्वार्तिकात्तदर्थलाभे अस्माकं तात्पर्यमिति द्योतयितुं वार्तिकोदाहरणमिति ज्ञेयम्। वस्तुतो नेदं वार्तिकोदाहरणं किन्तु भाष्याभिप्रेतार्थानुवाद इत्यदोषः। षष्ठ्यर्थे चतुर्थीति वक्तव्येति वाक्ये चतुर्थ्यर्थे बहुलं छन्दसीति सूत्रस्थं छन्दसीत्येतत्सम्बन्ध्यत इति भाव इत्यन्ये। सचस्वेति। अन्येषामपि दृश्यत इति संहितायां दीर्घः। विभक्तिप्रतिरूपकमिति। अतिस्वस्तय इत्यादि विभक्त्यन्तं प्रतिरूपकमित्यर्थः। सेवाया अयोगादिति। अयं सेवनार्थापि त्रण एनां महिमानः सचन्त इत्यत्र क्षुरभट्टभास्करीययोः सेचन्ते सेवन्त इति निरुक्तेऽपि सिषक्तु सचत इति सेवमानस्येति अस्येतौ वाचनिकावित्यर्थः। प्रतुमहित्वं वृषभस्यवोचं यं पूरवो वृत्रहणं सचन्ते। सेवन्त इति सेवृधातुवृत्तावुक्तत्वात्। सेवार्थोऽपि भवतीति नाप्रसक्तनिषेधदोष इत्यवधेयम्।

## टीकाविवृतिः

यदङ्ग। अङ्गिर इत्यस्य कथमङ्गानां रसेति व्याख्येत्यत आह। पूर्वपदस्येति। निरुक्तत्वादिति भावः। अलोंत्यपरिभाषयोत्तरपदस्य रसशब्दस्यांतलोपेंगिरस् इति सकारान्तप्रातिपदिकमिति भावः। दाशृदान इति। तथाच यजमानायेत्यस्य देवतोद्देशेन हविरादिदात्र इत्यर्थ उक्तोभवति। दाश्वानिति। दाशेर्लिटः क्वस्वादेशे निपातनाल्लिटिधातोरिति द्वित्वं नेत्यर्थः। सनर्थे इति। इच्छायां व्यत्ययो बहुलमिति वचनादिति भावः। भविष्यदिति। इच्छायाः भविष्यत्कार्यविषयत्वाल्लृटोपि भविष्यति विधानात्साम्यमिति भावः। कुत इच्छायां लृङ्व्याख्यायते यथास्थितयोजनैव किं न स्यादित्यत आह। यत्करिष्यसीति। करिष्यमाणघटादेः सत्यत्वाव्यभिचारादिति भावः। विनिमयमात्रमिति। उपकारस्य प्रत्युपकारमात्रमित्यर्थः। त्वच्चेष्टयैवेत्याद्यध्याहाररूपं न किं त्वं गिरःशब्दस्य यन्निर्वचनमङ्गानां रसेति तत्प्रयोजनकथनमित्याह। अनेनेति। कार्यकारण

शब्दानामिति । गोभिः श्रीणीत मत्सरमित्यादाविति शेषः । मत्सरं मदजनकं सोमं गोभिः तद्विकारपयोभिः श्रीणीत मिश्रं कुर्यादिति गोभिरिति श्रुत्यर्थः । तदधीनत्वादिति । तच्छब्द प्रवृत्तिनिमित्तानां परमेश्वराधीनत्वादव्यक्तावरादिशब्दजातं परमेश्वरेऽर्थवत् सार्थकमिति ब्रह्मसूत्रार्थः । इति न्यायेनेति शेषः । विष्णोरंगिरः पुत्रत्वाभावेपि यदग्नेरंगिरः पुत्रत्वं तद्विष्ण्वधीन- मङ्गिरऋषेर्वा यदंगिरस्त्वं तदपि ऋषिगतमेतदधीनमतो विष्णुरेव मुख्याङ्गिरा इति भावः । अनेनाग्नावपीति । अङ्गिरः पुत्रो यतोग्निरित्यनेनाग्नावप्यङ्गिरःशब्दार्थत्वं व्याख्यातमित्यर्थः ॥ १ ॥

उपत्वा । ननु वस्तरिति शब्दस्य दिनार्थत्वे दिनशब्दस्य लोके क्वचिदहोरात्रेपि प्रयोगाद्दोषेति व्यर्थमित्यत आह । अहरित्यर्थ इति । वस्तोद्युरित्यहर्नामसुपाठादित्याशयः । जीवपरमात्मनोर्भेद सिद्ध्यर्थमुच्चगुणमिति भाष्ये हरिविशेषणमुक्तम् । तत्प्रतियोगितयोक्तं जीवशेषणं धियेति श्रुतौ भाष्ये तु बुद्ध्येति । तदुभयमुपलक्षणत्वेन व्याचष्टे । बुद्ध्यादिभिरिति । भाष्ये अल्पा अपीत्यनेन कस्य श्रौतपदस्यार्थ उच्यत इत्यत आह । शेष इति । भाष्यकारैः श्रुतौ शेष उच्यत इत्यर्थः । दिवेदिव इत्यत्र वीप्सायां द्विर्वचनात्प्रतिदिनमित्यर्थे सम्पन्ने पुनर्दोषावस्तरिति व्यर्थमित्याशंकायां नमःसम्भरणं प्रतिदिनमध्ये यदा कदाचिदेवेति न किन्तु सदेत्येतदर्थकमिदं न व्यर्थमित्याशयेन योजयति । तत्रापीति ।

दोषावस्तरिति द्वन्द्वैकवद्भावः । सर्वोद्वंद्वो विभाषयैकवद्भवतीति वचनात् । वस्तः शब्दोरेफान्तो ज्ञेयः । अत एव ऋचि वस्तर्धियेत्यत्र हशिचेत्युत्वं न । निघण्टौ तुवस्तोद्युरिति निर्देशाददन्तोपि वस्तशब्दः । नमोभरंत इति श्रौतपदद्वयव्याख्या भाष्यकारैस्तन्नमसम्भरा इति समस्तपदेन कृता । तद्व्याचष्टे । नमनमिति । नमतेर्भावे औणादिकोऽकारप्रत्ययः सम्भरशब्दस्तु पचाद्यजंत इति भावः । उपेमसीति । उप आ इमसीति पदत्रयमेतत् । तत्र श्रुतौ इणोमस्मत्प्रत्यये इम इति वक्तव्यं तत्कथम् इमसीत्यत आह । इदंतोमसीतीदिति । वेदेमसि मस्प्रत्यये इत् इकारः अन्तः अन्तावयव आगमः स्यादिति सूत्रार्थः । अत इदंतोमसीति पाणिनीयसूत्रेण इत् इकारागमोत्रापीत्यर्थः । उपेमसीति लट् विद्यमानानुवाद परत्वेन वा स्तुत्युपयोगी । तस्मादभीष्ट प्रार्थनार्थकलिङर्थो बोद्धव्यः । स्तुत्युपयोगित्वादिति भावेनाह । शरणं व्रजेमेति । ईश्वरमुच्चगुणमित्यस्य कुत्रोपयोग इत्यत आह । स्तुतित्वेति । एतस्या ऋच इति शेषः । ईश्वरत्वादित्यनेनेश्वरमिति हेतुगर्भविशेषणमिति सूचयति । धिया नमोभरन्त इति धियोपेमसीति वान्वयसम्भवे अल्पा इति शेषो व्यर्थ इत्याशंक्य प्रयोजनमाह । धियेति । केवलमिति । प्राणिनामभीष्टेत्यनेनाभीष्टप्रदे भक्त्यतिशयस्य जायमानत्वाद्भक्त्यतिशय एव शरणप्राप्तौ साधनमित्युक्तं भवतीत्याशयः ॥ २ ॥

राजन्तम् । राजृदीप्तावित्यतो लटः शत्रादे शेराजन्तमिति सिद्धावपि दीदिवमिति पुनरुक्तिः स्यादतो भाष्ये अध्वराणां गोपामित्यन्वयं विहायाध्वराणां राजन्तमित्यन्वयमङ्गीकृत्याध्वरेशमिति व्याख्यातम् । तद्घटयति । अध्वराणामिति । नच राजेर्लटः शत्रंतपक्षे अध्वराणामिति षष्ठ्या नलोकाव्ययेति निषेधादध्वरेशमिति भाष्यं तद्व्युत्पादनार्थं चौणादिकोझ इति टीकाच किं न स्यादिति वाच्यम् । तंत्र कर्तृकर्मणोः कृतीत्यतः कृतीत्यनुवृत्तेः कृद्योगलक्षणषष्ठ्या एव निषेधात् । अध्वराणामित्यत्र राजनं प्रति यज्ञस्य कर्तृत्वाभावाद्विष्णोरेव कर्तृत्वाद्राजनस्याकर्मकत्वेन कर्मानपेक्षणात्कृद्योगलक्षणषष्ठ्या अभावेन निषेधस्याप्रसक्तेः । औणादिकोझ इति । उणादीनामव्युत्पन्नप्रातिपदिकत्वेन धात्वर्थानुगमाभावाद्राजंतशब्द ईशार्थकः । यथा राजतेरौणादिके कनिन्प्रत्यये राजन् शब्दः प्रभ्वर्थक इति भावः । जृविशिभ्यां झजितिविहितो झचूबहुलवचनाद्राजेरपि निदपि भवतीति भावः ।

झोंत इति । इति सूत्रेण झकारमात्रस्यान्तादेशे अकारान्तप्रातिपदिकं नित्त्वादाद्युदात्तमिति भावः । गुपेराकार इति । आः समिण् निकषिभ्यामित्युक्तोस्मादपि बाहुलकाद्भवति । पचाद्यजिति । पचादेराकृतिगणत्वादिति भावः । सद्मनीति । दमोगतिर्योनिरिति गृहनामसुपाठात् । दीव्यतेरिति । सन्यङोरिति द्वित्वे हलादि शेषे सर्वधातुभ्य इत्यनुवृत्तौ इगुपधात्किदिति सूत्रेण दिदिवित्यस्य इगुपधत्वादिन्प्रत्ययः किच्च । कित्वात्पुगन्तलघूपधस्येति न गुणः । यस्य हल इति यङोलोपः । अभ्यासस्य चेकार इति । संज्ञापूर्वकोविधिरनित्य इति गुणो यङ्लु कोरिति अभ्यासस्य न गुणः । किं तु पूर्वतन एव इकारः । तस्य दीर्घोकित इति दीर्घ इति भावः । वर्धमानमित्यस्य सदावृधमिति कथं व्याख्येत्यत आह । सार्वकालिक इति । लटो वर्तमानकाले विधानेपि सुप्तिङुपग्रहेति वचनात् कालसामान्ये विहितस्य लटः शानजादेश इति भावः । एतदस्वरसात्पक्षान्तरमाह । ताच्छील्यार्थ इति । ताच्छील्यवयोवचन शक्तिषुचानशिति सूत्रादिति भावः । चानश्पक्षे आद्युदात्तत्वं व्यत्ययेन बोध्यम् । तेन चित इत्यन्तोदात्तत्वं न । लटःशानजादेशपक्षे तु तास्यनुदात्तेन्ङिद्दुपदेशाल्लसार्वधातुकमनुदात्त मह्न्विङोरिति शानचोनुदात्तत्वाद्धातोरिति धातुस्वरेणाद्युदात्तत्वं बोध्यम् । इगुपधेति । इगुपधज्ञाप्रीकिरः क इति सूत्रेणेति भावः । तथाचाकारान्तोयम् । किब्वेति । किच्चेति सूत्रादिति शेषः ॥ ३ ॥

सनःपितेव । ऋक्प्रतीकं गृह्णाति । सन इति । पितेवेति भाष्यप्रतीकम् । पितेवेत्यत्र इवेन नित्यसमासो विभक्त्यलोपः । पूर्वपदप्रकृतिस्वरत्वं चवाच्यमिति समासः । एवमुत्तरत्रापि द्रष्टव्यम् ।

अत्र कश्चन विशेषो मामकशाब्दिककण्ठमणाववगन्तव्यः । अधिकरणे ल्युडिति । सु उपपूर्वादिणः करणाधिकरणयोश्चेति ल्युडिति भावः । सूनव इति श्रौतपदव्याख्यानमौरससूनव इति कथं लब्धमित्यत आह । पितेवेतीति । लब्धेपीत्यतः पूर्वं सूनव इतीति शेषः ।

ननु सूनोः सूपायन इति षष्ठ्या भाव्यमित्यत आह । छन्दसीति । तर्हि पितेवेत्यत्रेवकारेणो-पमार्थस्योक्तत्वाद्यद्वदिति पुनरुक्तमित्यत आह । अत एवेति । यद्वा नकेवलं पितेव पुत्रमात्राणां किं तु पितौरससूनव इति भिन्नवाक्यतया व्याख्यानं युज्यते । ज्ञापकाभावादित्यत आह । अत एवेति । भिन्नवाक्यताप्रकारस्तु पिता दत्तपुत्रादीनामाश्रयो भवति यथा तथास्माकमाश्रयो भव । औरससूनोर्यथाश्रयो भवति तथाप्यस्माकं भवेति सूनव इति ऋक्पदे इव शब्दानुवृत्त्या सूपायन इत्यस्यान्वयेन च ज्ञातव्यः । रक्षसंततेति भाष्योक्तमुपपादयति ॥ सुपूर्वकमिति ॥ अस् भुवीत्यतः सावसेरित्युणादिसूत्रेण सुशब्दे उपपदेति प्रत्ययविधानादिति भावः । ननु स्वस्तिशब्दस्य स्वरादि पाठादव्ययत्वात्कथं स्वस्तय इति चतुर्थीत्यत आह । विभक्तिप्रतिरूपकमिति । उपसर्गविभक्ति स्वरप्रतिरूपकाश्चेति निपात इति भावः । ननु ऋगन्तेरेषु पुनः पूषाभ्यां यास्वस्तिः स्वस्तिमिन्द्रामरुतोदधात । तथास्वस्तिमभ्युद्यन्तीति ब्राह्मणेषु स्थितेषु स्वस्तिरित्यादिपदेषु विभक्तेरलुप्तत्वात्कथमव्ययत्वमिति चेन्न । विश्वकोशादावव्ययप्रकरण एव स्वस्त्याशीः क्षेमपुण्यादावित्युक्तेः । अनव्ययप्रकरणे स्वस्तिशब्दस्यानुक्तेः । स्वरादिगणे पाठादनव्ययत्वेन शिष्ट प्रयोगाभावाच्च वैदिकप्रयोगाणां विभक्तिप्रतिरूपकत्वे नोपपत्तेरिति भावः । उभयथेति । सत्तावाचित्वेन चेत्यर्थः । षचसेचनेसेवनेचेति धातुपाठोक्तेः कथं रक्षेति व्याख्येत्यत आह । अनेकार्थत्वादिति । सेवाया इत्युपलक्षणम् । सेचनं ग्राह्यम् ॥ ४ ॥ इति द्वितीयोवर्गः ॥ २ ॥

## ऋग्भाष्यम्

**मुनिस्तु सर्वविद्यानां भगवान्पुरुषोत्तमः ।**
**विशेषतश्च वेदानां यो ब्रह्माणमिति श्रुतिः ।**
**ऋग्वेदादिकमस्यैव श्वसितं प्राह चापरा ।**
**वाचो बभूवुरुशतीर्हयग्रीवादिति स्फुटम् ॥**

**वचो भागवतेऽप्यस्ति ब्रह्माण्डेऽपि तथा परम् ।**
**हयग्रीवादिमा विद्याः श्वसितत्वेन निःसृताः ॥**

उपोद्धातः

ब्रह्मणा स्वीकृतास्ताश्च रुद्रशेषविपा अपि ।
दक्षाद्याः सनकाद्याश्च शक्राद्या मनवस्तथा ॥

जगृहुस्तेच विश्वस्मिंश्चक्रुर्व्याप्तास्ततोऽखिलाः ।
उक्तं पद्मपुराणेच कपिलो भगवानजः ॥

प्रोवाच ब्रह्मणे विद्या हृदिस्थो बादरायणः ।
ॐकारपूर्विकाविद्याः प्रेरयत्यखिलेष्वपि ॥

सदैव ब्रह्मणे पूर्वमिति सात्वतसंहिता ।
सकृन्निगदमात्रेण गृहीतं ब्रह्मणाऽखिलम् ॥

अन्तर्गतस्य व्यासस्य प्रसादान्नित्यशक्तितः ।
तेन चानंतशक्तित्वाद्युगपत्समुदीरितम् ॥

प्रथमप्रतिपत्तृत्वान्मुनिर्ब्रह्माऽखिलस्य च ।
सुपर्णोऽखिलवेदानां पञ्चरात्रस्य नागराट् ॥

द्वितीयप्रतिपत्तृत्वान्मुनित्वे सम्प्रकीर्तितौ ।
यः पश्यति स्वयं वाक्यं स ऋषिस्तस्य कीर्तितः ॥

अर्वाक्तु द्वादशावृत्तेरधीत्याप्यृषिरेव सः ।
यत्स्वयं प्रतिभातस्य संशयार्थं गुरोर्वचः ॥

सुपर्णादिर्विरिंचस्य केवलं धर्मकारणम् ।
ऋचामृषिस्ततः शक्रो यजुषां सूर्य एव च ॥

सोमः साम्नां तृतीयास्ते प्रतिपत्तार ईरिताः ।
अथर्वाङ्गिरसामग्निरेकर्षिश्चाप्यथर्वणाम् ॥

इत्युक्ताः समुदायस्य संत्यन्येच पृथक्पृथक् ।
एतज्ज्ञानाददृष्टस्य फलस्याप्तिः स्फुटं भवेत् ॥

द्रष्टॄणां तु चतुर्थानां ज्ञानादप्यैहिकं भवेत् ।
ते चैकस्यापि बहवः स्युः सूक्तस्यर्च एववा ॥

तस्यां तस्यामवस्थायां तत्तत्प्राप्तिविशेषतः ।
तेषां वाक्यस्वरूपेण प्रार्थनादिषु पश्यति ॥

विष्णुर्ब्रह्मा सुपर्णोवा तत्तद्योग्यार्थभेदतः ।
सर्ववेदाभिमानित्वाच्छ्रीर्ब्रह्माणीच भारती ॥

द्रष्ट्र्यश्च सर्वविद्यानां व्याख्यातो ब्रह्मणा मरुत् ।
स्वभर्त्रनंतरं द्रष्ट्र्यस्तेभ्यस्तन्नोदिता हिरुक् ।
ताः स्तुवंति हरिं नित्यं विद्याभिस्ते चसर्वशः ॥

## ऋग्भाष्यटीका

एवं व्याख्यातस्य सूक्तस्य व्याकरिष्यमाणानां च ज्ञानादिकमृष्यादिज्ञाने सत्येव सफलं नान्यथा । ''योहवा अविदितार्ष (र्षेयछं) च्छन्दो दैवतब्राह्मणेन मन्त्रेण (यजति) याजयति वाध्यापयति स्थाणुं वर्च्छंति गर्ते वापद्यत प्रवामीयते व'' इति श्रुतेः । तस्मादृषिच्छन्दोदैवतादिकं ज्ञापयन् ऋषिं तावदाह ॥ मुनिस्त्विति ॥ विशेषतश्च वेदानां भगवानृषिः । पौरुषेयवाक्यानामुत्पत्त्यनन्तरमेव दर्शनं वेदानां तु सर्वदेति विशेषः । कुत एतदित्यत आह ॥ यो ब्रह्माणमिति ॥ ''यो ब्रह्माणं विदधाति पूर्वं योवै वेदांश्च प्रहिणोति तस्मा'' इति श्रुतिस्तावद् ब्रह्मणोपि भगवान्वेदादिकमुपदिदेशेति प्राह । तेन ज्ञायते स एव सर्वविद्यानामृषिरिति । नह्येवंविधस्यान्योऽध्यापकः सम्भवति । श्रुतिः प्राहेतिवक्ष्यमाणेनान्वयः । ''अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निश्वसितानी''त्यपराच श्रुतिः ऋग्वेदादिकमस्य विष्णोरेव निश्वसितं प्राह । तेनापि तस्यर्षित्वं ज्ञायते । निश्वसितमिति हि निश्वसितमिवानायासेनादिकाले तेनोच्चरितमित्यर्थः । ''वाचो बभूवुरुशतीः श्वसतोऽस्य नस्त'' इति भागवतेपि स्फुटमेतमर्थं प्रतिपादयद्वचोस्ति । उशतीरुशत्यः प्रकाशमानाः । ब्रह्माण्डेपि पुराणे । तथा एतदर्थस्याभिधायकं परं वचोऽस्ति । तत्पठति । हयग्रीवादिति । रुद्रशेषविपा अपि ब्रह्मणो जगृहुः । तेभ्यःशक्राद्याः तेभ्यो दक्षाद्याः तेभ्यः सनकाद्याः मनवश्च । तेच विश्वस्मिंश्चक्रुः जगत्युपदिदिशुः । ततस्तेषामुपदेशादखिला जगति व्याप्ताश्च । हृदिस्थ इत्यादि सात्वतसंहितावाक्यम् । सदैवाखिलेषु प्रेरयति तत्रापि पूर्वं ब्रह्मणे ददाविति । यो ब्रह्माणमिति श्रुतौ वेदपदं सर्वविद्यापरमिति ज्ञापयितुं द्वितीयश्रुत्युदाहरणम् । उभयत्रापि विष्णोरप्रतीतेः पुराणाद्युदाहरणमिति । एवं परमेश्वरः सर्वविद्यानामृषिरित्युपपाद्य ब्रह्मापि

तथेत्याह ॥ सकृदिति ॥ यस्मात्तेन परमेश्वरेणानंतशक्तित्वाद्युगपत्समुदीरितमखिलं विद्याजातमादिकाले सकृन्निगदमात्रेण ब्रह्मणांतर्गतस्य व्यासस्य प्रसादान्नित्यशक्तित इति तत्प्रसादायत्तनित्यशक्त्या गृहीतं तस्मादेवं सर्वविद्यानां प्रथमप्रतिपत्तृत्वाद् ब्रह्माप्यखिलस्य विद्याजातस्य मुनिर्भवति। एवं सर्वविद्यानामृषिमुक्त्वा तत्प्रभेदानामृष्यन्तरं चाह ॥ सुपर्ण इति। मुनिरिति सम्बन्धः । एतौ च द्वितीयप्रतिपत्तृत्वात् ब्रह्मणोऽनन्तरप्रतिपत्तृत्वान्मुनित्वे विषये द्वितीयौ सम्प्रकीर्तितौ ।

ननु परमेश्वरः स्वयमेव सर्वविद्यानां प्रतिपत्तेति मुनिर्भवतु अधीतविद्यास्तु ब्रह्मादयः कथमृषय इत्याशङ्कापरिहारार्थमृषित्वं तावदाह ॥ यइति ॥ यथायः स्वयमध्ययनेन विनैव यद्वाक्यं पश्यति सतस्य वाक्यस्यर्षिः प्रकीर्तितः एवं यो द्वादशावृत्तेरर्वागधीत्यापि प्रतिपद्यते सोप्यृषिरेव। तथाभूतो हिस्वयं प्रतिभातविद्यकल्प एवभवेत्। नह्यन्य एतावन्मात्रेणाध्ययनेन सर्वविद्याः प्रतिपत्तुं शक्नोति। ब्रह्माद्यास्तु भगवत्प्रसादात्स्वयं प्रतिभाताखिलविद्याः सकृदधीतवंत इत्यृषित्वं तेषामुपपन्नमिति भावः । यद्येवं ब्रह्मादीनां स्वयं प्रतिभातविद्यत्वादृषित्वं तर्हि तेषामध्ययनं किमर्थमित्यत आह ॥ यत्स्वयमिति ॥

सुपर्णादिर्यत्स्वयं प्रतिभातस्य वेदादेर्गुरोर्वचोनिगदरूपं तदस्माभिर्दृष्टोऽयं वेदोवा यत्किञ्चिद्वेति संशयनि वृत्त्यर्थं वेद एवायमिति निश्चयार्थं भवति। विरिंचस्य तु संशयाभावात्केवलं धर्मकारणं भवति। महतोहि धर्मस्य कारणं परमेश्वरादध्ययनम् । एवं पौरुषेयापौरुषेयभेदेन सर्वविद्यानामृषिभेदमुक्त्वा वेदेष्वेवावान्तरभेदेन तमाह ॥ ऋचामिति ॥ ततः सुपर्णाद्यनन्तरमृगादीनामथर्वाद्यंतानां शक्राद्या एकर्षिपर्यन्ता ऋषयः। कुतस्तेषामृषित्वे सुपर्णाद्यानंतर्यम्। यतस्ते तृतीया प्रतिपत्तार ईरिताः । एवशब्दः ऋचामेवेत्यादिना सम्बध्यते । चस्त्वर्थः । अथर्वणामङ्गिरसाञ्च। द्विभागस्याप्यथर्ववेदस्येत्यर्थः। तद्भेदानामथर्वणां त्वेकर्षिरप्यृषिर्भवति। ततोवाक्तनानप्यृषीन् पूर्वोक्तानुवादेनाह ॥ इत्युक्ताइति ॥ इत्येते प्रायेणाविभक्तविद्यासमुदायानामृषयस्त्रिविधा उक्ताः । एतेभ्योऽन्ये चतुर्थाश्च । पृथक् पृथक् एकैकस्मिन्नप्यृगादिसमुदायेऽवान्तरभेदानां शाखादीनामृषयः सन्ति। तेच शास्त्रान्तराज्ज्ञातव्या इत्यर्थः। एवं चतुर्विधानृषीनुक्त्वा तेषां स्मरणं विधातुं तस्य फलमाह ॥ एतज्ज्ञानादिति ॥ एतदित्याद्यानां त्रिविधानां परामर्शः । दृष्टस्य किम्वित्यर्थः । चतुर्थानामपि प्रतिपत्तॄणां ज्ञानात्फलं भवेत् तत्त्वैहिकमिति योजना। ऋगाद्यवान्तरभेदानां सूक्तादीनां चतुर्था ऋषयः सन्तीत्युक्तम्। तत्र

चैकैकस्यापि सूक्तादेरेकैक एवेति नियमो नास्तीत्याह ।। तेचेति ।। एतच्च सर्वेपि स्मर्तव्या इति ज्ञापनार्थमुक्तम् । बहव एवेति सम्बन्धः ।

ननु यदि विष्ण्वाद्याः सर्वविद्यानामृषयस्तर्हि तद्वाक्यता तासां स्यात् । तथाचोक्तं यस्य वाक्यं स ऋषिरिति । ततश्च ''त्रिष्वादित्यं द्रुपदेषु बद्धः अवैनं राजावरुणः ससृज्यात् सनो हिरण्यरथमि''त्याद्ययुक्तं स्यात् । नहि विष्ण्वादीनां बन्धमोक्षप्रार्थनमिन्द्राद्रथप्राप्तिरित्यादिकं युज्यते । अत आह ।। तस्यामिति ।। प्रार्थनादिषु वाक्येषु विवक्षितेषु सत्सु विष्णुस्तानि वाक्यानि तस्यां तस्यां बन्धाद्यवस्थायां तत्तद्रथादिफलप्राप्तिविशेषवत्तया तेषां शुनः शेपादीनां वाक्यतया पश्यति । यूपेहं बद्धोस्मि बद्धं मां वरुणो मोचयतु इन्द्र प्रसादादहं हिरण्यरथं प्राप्तोस्मीत्यादिकं शुनःशेपोऽतीतकल्पे प्रावोचत् वक्ष्यतीति वा विष्णुः पश्यति । न तु स्ववाक्यतयेत्यर्थः । एवं ब्रह्मा सुपर्णोऽन्येवा मुनयः स्वायोग्यार्थस्य प्रतिपादकानि वाक्यानि येषामृष्यन्तराणां योग्यानि तद्वाक्यतया पश्यन्तीति न कश्चिद्विरोधः । एवमधमा अप्यृषय उत्तमर्षियोग्यार्थाभिधायिवाक्यानि तद्वाक्यतया पश्यंतीत्यपि द्रष्टव्यम् । यथा अहं रुद्राय धनुरातनोमीत्यादि । यथैकैकमपि वाक्यमनेकर्षिदृष्टं न तथा तदर्थोपि साधारण इत्याह ।। तत्तदिति ।। यस्य यस्य ऋषेर्योयो भगवन्महिमाद्यभिधायि वाक्यार्थो दर्शनयोग्यस्तत्तदर्थाभिधायितयैव तत्तद्वाक्यमसावसौ पश्यतीत्यर्थः । एवं पुरुषानृषीनुक्त्वा स्त्रिय आह ।। सर्वेति ।। वेदशब्देन सर्वविद्या उच्यन्ते । न हि स्वाभिमतमपश्यंत्यभिमानिनी भवति । भारतीचेति सम्बन्धः । ननु वायुः कस्मादृषित्वेन नोक्त इत्यत आह ।। व्याख्यात इति ।। ब्रह्मणा ऋषितया व्याख्यातेन निमित्तेन मरुदपि सर्वविद्यानामृषिर्व्याख्यात एव । तयोः समगुणत्वात् । एवं रुद्रादिष्वपि द्रष्टव्यम् । यदि लक्ष्म्यादीनामप्यखिलविद्यानां द्रष्टृत्वमस्ति कथं तर्हि विष्ण्वादीनामेवर्षित्वं शास्त्रेषूच्यते । न तासामित्यत आह ।। स्वेति ।। यस्मात्ताः स्वभर्त्रनन्तरं सर्वविद्यानां द्रष्ट्र्च इति भर्त्रुक्त्यैव सिध्यति । यतः प्रायो भार्या भर्तृसमानधर्मिणी भवति तत्तस्मादृषित्वे विद्यमानेप्यर्थसिद्धत्वात्तेभ्यो भर्तृभ्यो हिरुक् पृथगृषित्वेन ता नोदिता इति । तासां तेषां चर्षित्वे व्यापारमाह ।। ता इति ।।

## पदार्थप्रकाशिका

ब्राह्मणपदेन मन्त्रार्थो गृह्यते । ब्राह्मणपदोपलक्षितार्थस्य ज्ञानं व्याख्यानादेव भविष्यतीति ईशावास्यटीकायां टीकाकारैरेवोक्तत्वादित्यवधेयम् । स्थाणुं स्थावरजातिम् । गर्ते नरकविशेषे । प्रमीयते वेदोक्तमायुर्न लभते । प्रवामीयते इत्यनन्तरं 'पापीयान् भवतीति तस्मादेतानि मन्त्रे

विद्यादि' ति सामवेदीय ब्राह्मणवाक्यशेषो द्रष्टव्यः । ननु यो यस्य द्रष्टा स तस्य ऋषिरुच्यते । एवं भगवद्द्रष्टत्वस्य सर्वसाधारण्याद्विशेषत इत्युक्तो विशेषः क इत्यत आह । पौरुषेयेति । यथा चात्र सर्वविद्याशब्दः पौरुषेयग्रन्थपर इत्युक्तं भवतीति द्रष्टव्यम् । एतत् भगवतोऽत्र ऋषित्वम् । ननु ब्रह्मण इव भगवतोऽप्यध्यापकश्चेदन्यः स्यात्तर्हि तस्यैव ऋषित्वं स्यान्न भगवत इत्यत आह । न हीति । एवं भूतस्येति । आदिकविभूतस्य ब्रह्मणः द्रष्टुः तदुपदेष्टुश्च भगवत इत्यर्थः । निःश्वसितत्वोक्त्या कथमृषित्वं ज्ञायत इत्यत आह । निःश्वसितमिति हीति । इवशब्दोक्तश्वाससाम्यमाह । अनायासेनेति यथा प्रतिक्षणं श्वासा अनायासेन भवन्ति तथेत्यर्थः । वाचो बभूवुरिति । 'सत्रे ममास भगवान् हयशीर्ष एकः साक्षात्स भगवांस्तपनीयवर्णः । छन्दोमयोऽमृतमयोऽखिलदेवतात्मा वाचो बभूवुरि' ति द्वितीयस्कन्ध इत्यर्थः । पञ्चाशत्कोटि विस्तीर्णे ब्रह्माण्ड इत्यन्यथा प्रतीतेराह । ब्रह्माण्डपुराणेऽपीति । परम् अन्यत् ।

रुद्राद्याः मन्वन्ताः सर्वेऽपि साक्षाद्ब्रह्मणो जगृहुरिति प्रतीयते, तदयुक्तं तारतम्यभङ्गापत्तेः । साक्षात्स्वोत्तमानामेव तदुपदेष्टृत्वादत आह । रुद्रेत्यादिना । सनकाद्या इत्यत्र सनत्कुमारव्यतिरिक्ता ग्राह्याः । तस्य कामत्वेनेन्द्रतुल्यत्वेन शक्राद्या इत्यादिपदेन गृहीतत्वात् । एवं मनवश्चेत्यपि स्वायम्भुवतापसव्यतिरिक्तद्वादशमनवो ग्राह्याः । स्वायम्भुवमनोः दक्षसमत्वेन दक्षाद्या इत्यादिपदेन गृहीतत्वात् । तापसस्य च भगवदवतारत्वादिति ज्ञेयम् । चक्रुरित्यस्य कृतवन्त इत्यर्थस्य बाधिततया विश्वस्मिन् चक्रुरिति पदद्वयार्थमाह । जगत्युपादिदिशुरिति । ब्रह्मण इति सम्प्रदानार्थकचतुर्थ्यानुरूपं शेषमाह । ददाविति । श्रुतिद्वयोदाहरणस्य पुराणाद्युदाहरणस्य च कृत्यं दर्शयति । यो ब्रह्माणमिति । सर्वविद्यापरमिति । वेदयन्तीति व्युत्पत्तेरिति भावः । द्वितीयश्रुतीति । ऋग्वेदादिकमिति श्रुतिरित्यर्थः । उभयत्रापीति । आद्यश्रुतौ यच्छब्दमात्रश्रवणात् द्वितीयश्रुतौ चास्य महतो भूतस्येत्येव श्रवणेन सावकाशत्वादित्यर्थः । पुराणादीति । आदिपदेन सात्वतसंहितारूपपञ्चरात्रग्रहणम् । भागवतपुराणे 'सत्रे ममास भगवान् हयशीर्ष' इत्युक्त्वा 'वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः' । इति स्पष्टमुक्तत्वात् । ब्रह्माण्डपुराणेच 'हयग्रीवादिमा विद्या इति विशदमभिधानात् । पद्मपुराणे चापि कपिलः प्रोवाचेति व्यक्तं निरूपणात् । सात्वत संहितायामपि हृदिस्थो बादरायणो विद्याः प्रेरयति ब्रह्मणे ददाविति स्पष्टं प्रतिपादनादित्यर्थः । सकृन्निगदमिति । निगदो निगदनमुच्चारणमित्यर्थः । नित्यशक्त्या अखिलविद्याग्रहणयोग्यतारूपया । तद्वेदानाम् अपौरुषेयपौरुषेयाणाम् । कथम् ऋषय इति । तथासति अधीतविद्यात्वादिविशेषात्सर्वेषामपि ऋषित्वं स्यादिति भावः । ऋषित्वं तावदाहेति । आदौ तावत् ऋषित्वं निर्वक्तीत्यर्थः । द्वादशावृत्तेरर्वागिति ।

समग्रद्वादशावृत्तिव्यतिरेकेणेत्यर्थः । तथाभूतो द्वादशावृत्तेरर्वागध्येता । एवम् ऋषित्वं निरुच
उक्तशङ्कापरिहाराय तुशब्दाभिप्रायमाह । न हीति । अध्ययनशब्दो भावे ल्युडन्तो
करणाधिकरणयोरित्यभिप्रेत्योक्तम् गुरोः सकाशादध्ययनं निगदरूपमिति । गुरोरुच्चारणा
नन्तरभाव्युच्चारणश्रवणमिति यावत् । कथमित्यतस्तदुपपादयति । महतो हीति । तम् ऋषिभेदम्
एकर्षिः तन्नामा कश्चिदृषिः उत्तरमाह यत इति । अन्यनिषेधकान्यसमुच्चायक एव चशब्दयोरेक
सम्बन्धस्य बाधितत्वादाह । एवशब्द इति । एवमेवंजातीयके सर्वत्र मन्तव्यम् । समुच्चयार्थक चशब्दे
सूर्यातिरिक्तस्यापि ऋषित्वं प्रतीयते अत आह । चस्त्वर्थ इति । तथाच सूर्यस्त्वित्यनेन तस्
सम्बन्धो द्रष्टव्यः ।

कर्मधारयभ्रान्तिं वारयति । अथर्वणामङ्गिरसां चेति । तत्फलितमाह । तद्विभागस्येति । एव
अथर्वनामकभागो अपर आङ्गिरसनामक भाग इति विभागद्वयवतोऽपीत्यर्थः । तद्भेदानामथर्व-
वेदप्रभेदभूतानाम् । एकर्षिरपीति न केवलम् अग्निरित्यर्थः । ततोऽपि शक्राद्येक-
ऋषिपर्यन्तमुक्तादावपि । विभक्तविद्यासमुदायानामिति क्वाचित्कः पाठः । तस्यायमर्थः
प्रायेणेत्यस्योक्ता इत्यनेन सम्बन्धः । अपौरुषेयपौरुषेयभेदेन विभक्तविद्यानां तत्समुदायानां च
मिलित्वा त्रिविधा ऋषय उक्ताः । सर्वविद्यासमुदायानां परमेश्वरचतुर्मुखयो ऋषित्वमेकः प्रकारः
विभक्तविद्यानां मध्ये सुपर्णस्याखिलवेदऋषित्वं नागराजस्य पञ्चरात्रऋषित्वमित्यन्यः प्रकारः
अपौरुषेयाणामेव ऋगादीनां पुनः प्रत्येकं शक्राद्या ऋषय इत्यपरः प्रकार इति त्रैविध्यं द्रष्टव्यम्
सन्त्यन्येपीऽति । अन्येषामप्युत्तरत्र वक्ष्यमाणत्वात्तदभिप्रायेण प्रायेणेत्युक्तम् । यद्वा प्रायेण
विभक्तेत्यत्र प्रायेणेत्यस्य विभक्तेत्यनेनैव सम्बन्धः । ऋगादिरूपेण चतुर्धा वेदविभागापेक्षया
अवान्तरशाखाभेदेन बहुधा ऋगादिविभागापेक्षया चापौरुषेयपौरुषेयभेदेन द्वैविध्येन
सर्वविद्यासमुदायविभागस्याल्पत्वात्पौरुषेयापौरुषेयभेदेन द्वैविध्यविभागाभिप्रायेण विभक्तेत्युक्त-
मिति भाव इत्याहुः । प्रायेणाविभक्तविद्येत्येव पाठः साधीयान् । तत्र च पौरुषेयापौरुषेयभेदेन
विभागमकृत्वा सर्वविद्यासमुदायस्य परमेश्वरचतुर्मुखौ ऋषी, ऋगादिरूपेण विभागम-
कृत्वाऽखिलवेदसमुदायस्य सुपर्णो ऋषिः । ऋचामपि पुनश्चत्वारिंश इत्यादिशाखाभेदेन
विभागमकृत्वा ऋग्वेदस्य शक्रो ऋषिः । एवं यजुरादीनां सूर्यादयो ऋषय
इत्येवमविभक्तसमुदायानामुक्तरीत्या त्रिविधा ऋषय इत्यर्थो द्रष्टव्यः । अस्मिन् पाठे समुदायानामिति
बहुवचनं स्वरसम् । अत्रापि प्रायेणेत्यस्योक्ता इत्यनेनान्वयः । पूर्वोक्त एव चाभिप्रायो द्रष्टव्यः ।
ऋगादिसर्वविद्यासमुदाये विद्यमानाः ये ऋगादिचतुर्वेदान्तरप्रभेदाः तेषामप्यवान्तरभेदरूपाः ये

शाखोपशाखाः सूक्ताद्याः तेषामिति योज्यम् । एवं चतुर्विधानिति । सर्वविद्याऋषयः, अखिलवेदऋषयः, ऋगाद्यवान्तर्भेदर्षयः, तदवान्तरशाखोपशाखा ऋषयश्चेति चतुर्विधानित्यर्थः । स्फुटमित्यस्य तात्पर्यं दृष्टस्य किम्विति । एकैक एवेति । ऋषिरित्यर्थः ।

नन्वेवं चतुर्विधऋषिकथनमात्रेणैव पूर्णत्वात्तद्ज्ञानेन फलं कस्माद्वक्तव्यमित्यत आह । एतच्चेति । द्रष्टृज्ञानफलकथनमित्यर्थः । सर्वेति । चतुर्विधा अपि । एवं च तज्ज्ञानस्य महाफलहेतुत्वात् तत्स्मरणं कर्तव्यमिति ज्ञापनार्थमुक्तमिति भावः । अत एव पूर्वं स्मरणं विधातुमित्युक्तम् । कुत इत्यतस्तत्रानुक्रमणिकां प्रमाणेनैवाह । तथाचोक्तमिति । वाक्येषु प्रार्थनादिषु विवक्षितेषु सत्स्विति सम्बन्धः । ब्रह्मासुपर्णाविति भाष्यस्यार्थान्तरमाह । एवमधमा अपीति । तद्वाक्यतयेति । ब्रह्माद्याः अहं रुद्रायेत्यादिकं महालक्ष्मीरवोचदित्याद्युत्तम ऋषिवाक्यतया पश्यन्तीत्यर्थः । अहमिति । अम्भृणीवागात्मानं तुष्टावेत्यम्भृणीनामकलक्ष्म्यादि मुनिवाक्यस्यापि अम्भृणीसूक्तादेरखिलविद्याद् ब्रह्माद्यृषिकत्वादिति भावः । अनेकर्षीति । द्रष्टृत्वश्च सर्वविद्यानामिति वक्ष्यमाणत्वादिति भावः । साधारण इति । अनेकर्षिदर्शनयोग्य इत्यर्थः । उच्यन्त इति । वेदयन्तीति व्युत्पत्येति भावः ।

ननु सर्वविद्याभिमानित्वेऽपि तद्द्रष्टृत्वं कुत इत्यप्रयोजकाशंकायां हेतूच्छित्तिरूपानुकूलतर्करूपं बाधकमाह । न हीति । कथं ब्रह्मणामनु(तु)व्याख्यात इत्यत आह । एककल्पस्थितयोः समगुणत्वादिति । एककालीनब्रह्मवाय्वोरित्यर्थः । अन्यथा भिन्नकालीनयोर्ग्रहणे पूर्वकल्पस्थयोरे-वेदानींतनकल्पे ब्रह्मतया जातत्वेन तयोरेव ब्रह्म(त्वादिति) वाय्वोरिति वक्तव्यत्वेन तयोः समगुणत्वादित्यस्या सम्भवात् । अत एककल्पस्थितयोर्ब्रह्मवाय्वोः समगुणत्वादित्येव व्याख्येयमिति सम्प्रदायविदः । एवमिति । पञ्चरात्रस्य नागराडित्यत्र नागराजेन रुद्रो व्याख्यातः । एककालीनयोस्तयोस्समगुणत्वादिति द्रष्टव्यमित्यर्थः । आदिपदेन 'ऋचामृषिस्ततश्शक्र' इत्यत्र शक्रेण कामो व्याख्यातः । अथर्वाङ्गिरसामग्निरित्यत्राग्निना भृगुर्व्याख्यात इत्यादि द्रष्टव्यम् ।

भर्त्रुक्त्यैवेति । भर्तृणां द्रष्टृत्वोक्त्यैव ताः स्व स्व भर्त्रनन्तरं सर्वविद्यानां इत्येतत्प्रमेयमपि सिध्यति । उक्तप्रायमित्यर्थः । ननु भर्तृणां द्रष्टृत्वोक्त्वावपि स्त्रीणां द्रष्टृत्वोक्तिः कथं सिध्यति इत्यतः आह ॥ यतः प्राय इति ॥ भार्याणां भर्तृसमानायावद्धर्मवत्वे तारतम्यभङ्गापत्तेः । अन्ततः स्त्रीत्वपुंस्त्वादिरूपविषमधर्मसद्भावात् कथमेतदित्यत उक्तम् ॥ अर्थसिद्धत्वादिति । भर्तृणाम् ऋषित्वोक्त्या अर्थात्सिद्धत्वादित्यर्थः । पृथग्विनान्तरेणर्ते हिरुङ्नाना च वर्जनं इत्यभिधानात् हिरुगित्यव्ययं पृथगित्यर्थकमित्याशयेनाह । हिरुक् पृथगिति । तासां लक्ष्म्यादीनाम् । तेषां ब्रह्मादीनाम् । ऋषित्वे ऋषित्वदशायाम् । व्यापारं कर्तव्यविशेषम् ।

## पदार्थदीपिका

यो हवेति। ऋषिर्मन्त्रदृष्टान्तदर्शनमार्षेयं छन्दोगायत्र्यादिदेवतामन्त्रप्रतिपाद्यार्थः। सैव देवतं ब्राह्मणपदेन तत् व्याख्येयो मन्त्रार्थो लक्ष्यते ब्राह्मणपदोपलक्षितार्थज्ञानं व्याख्यानादेव भवतीति ईशावस्यभाष्यटीकोक्तेः। अविदितान्यार्षेयछन्दोदैवतब्राह्मणानि यस्य तेनेत्यर्थः। याजयति अध्यापयति वेत्येव मूलपाठः। स्थाणुं स्थाणरुपनरकविशेषं वृक्षादिस्थावरजातिम् ऋच्छति प्राप्नोति। गर्ते गर्तविशेषे कूपान्तश्च मत्स्यमण्डूककच्छपादितिर्यग्योनिषुवा पद्यति पद्यते प्रमीयते कदाचिदपि न वेदोक्तमायुर्भजत इत्यर्थः।

यद्यप्यत्र ऋष्यादीनामज्ञानेऽनर्थ एवोच्यते न तु मन्त्रज्ञानं ऋष्यादिज्ञाने सत्येव सफलं अन्यथा निष्फलमिति। तथाप्यस्याः श्रुतेर्नहि निन्दान्यायेन विदितार्थे यच्छन्दोदैवतब्राह्मणैः मन्त्रैर्वाध्यापयतीति वा स श्रेयोऽधिगच्छति अविदुषस्तु मन्त्रा निष्फला भवन्तीत्यत्रैव तात्पर्याद्युक्तमुदाहरणं अत एव कात्यायनेनाप्येवमेव तात्पर्यं वर्णितम्। मन्त्राणां ब्राह्मणार्षेय छन्दोदैवतवित् यजनाध्यापनाभ्यां श्रेयोभिगच्छत्येताभ्यामेवानेवंविदो यातयामानि छन्दांसि भवन्तीत्या दिनेत्यवधेयम्। वेदानां तु विशेषत इत्युक्त्वान्यविद्यास्वमुख्यार्थऋषित्वं प्राप्तं तन्निराकरोति। पौरुषेयेति। एवंविधस्येति। ज्ञानमप्रतिपद्यं यस्य वैराग्यं च जगत्पतेः ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम्। इत्येवं प्रमितस्यापीत्यर्थः।

ननु उशतीरिति कथम्। उशत्य इति वक्तव्यम्। न च प्रथमयोः पूर्वसवर्ण इति जसः पूर्वसवर्णत्वे उशतीरिति युक्तमेवेति वाच्यम्। दीर्घाज्जसिचेति जसि परे पूर्वसवर्णनिषेधादित्यतः दीर्घाज्जसिचेति पूर्वसवर्णनिषेधस्य वा छन्दसीति विकल्पात् युक्तः पूर्वसवर्णदीर्घ इति मनसि निधायाह। उशतीरुशत्य इति। यत्वत्र केनचिदुक्तं नात्र पूर्वसवर्णोङ्गीकर्तुं शक्यः तथासति उशतीरिति विसर्गो न श्रूयेत। किन्तु उशतीत्येव स्यादिति। तदज्ञानमूलकत्वादुपेक्ष्यम्। रुद्रादयः सर्वेऽपि ब्रह्मणो जगृहुरित्यन्यथाप्रतीतिनिरासायाह। रुद्रेति। नन्वेवं पूर्वोक्तेऽनन्तरोक्ता जगृहुरिति प्राप्नोति तच्च तारतम्यविरुद्धमित्यत आह। तेभ्यः शक्राद्या इत्यादिना द्वितीयेति ऋग्वेदादिकमिति द्वितीयश्रुत्युदाहरणमित्यर्थः। सोप्यृषिरेवेति शाब्दादेः वृत्तिव्यतिरेकेण यो यद्वाक्यं पश्यति स तस्य ऋषिरिति भावः। ऋचामेवेत्यादिना ऋचामेव यजुषामैवत्यादिना प्रकारेण ऋचामित्यादिना सम्बध्यत इत्यर्थः। अथर्वाङ्गिरसामिति द्वन्द्वसमास इत्याह। अथर्वणामिति। द्वन्द्वे सति निष्पन्नमर्थमाह। द्विभागस्यापीति। प्रायेणाविभक्तेति पौरुषेयत्वादिना विभक्तसमुदायर्षीणा-

मप्युक्तत्वात् प्रायेणेत्युक्तमिति द्रष्टव्यम् । अन्य इत्युक्तत्वात् पृथक् पृथगित्यस्यान्वयाप्रतीतेर्व्याचष्टे । पृथक्पृथगेकैकस्मिन्निति चतुर्विधानिति । सर्वविद्या ऋषयः पौरुषेयापौरुषेयाभिन्नवेदर्षयः । ऋगाद्यवान्तरभेदभिन्नवेदर्षयः । अवान्तरार्षेयश्चेत्येवं चतुर्विधानित्यर्थः । एतेषां चतुर्विधानामप्यृषीणां ज्ञानाददृष्टफलस्य प्राप्तिः स्फुटं भवति चतुर्थानां ज्ञानादैहिकं दृष्टमपि फलं भवति । न तु त्रिविधानां ज्ञानादैहिकं फलमित्यन्यथाप्रतीयमानमेतत् ज्ञानादित्यादिभाष्यं यथावद्व्याचष्टे । एतदित्यादिना ।

ननु चतुर्था ऋषयो विशेषशास्त्रोक्तत्वात् स्मर्तव्या इत्युक्तत्वात् तेचैकस्येति भाष्यमनर्थकमित्यत आह । एतच्चेति । एकैकस्याप्यृगादेर्यावन्तः सर्वे विशेषशास्त्रात् ज्ञात्वा स्मर्तव्या इति ज्ञापनार्थमेतदित्यर्थः । एवं शब्द ऋच इत्यनन्तरं श्रूयमाणः सूक्तं व्यावर्तयतीति भ्रान्तिं वारयितुमाह । बहव एवेति । उक्तार्थेऽनुक्रमणिकावाक्यं प्रमाणयति । तथाचेति ॥ त्रिधादित्यमिति भाष्ये प्रार्थनायाः स्वशब्देन ग्रहणेऽपि बन्धपूर्वकत्वात् तस्यां तस्यामवस्थायामिति सामान्यशब्दोक्ताया अपि बन्धाद्यावस्थायाः प्रथमोक्तेरादौ बन्धादिवाक्योदाहरणमिति ज्ञेयम् । एवं पदानि योजयित्वा तात्पर्यमाह । यूपेऽहमिति । यथाहमिति । अम्भ्रिणीनामकलक्ष्मीमुनिकस्यांभ्रणीसूक्तास्याखिलं विद्यर्षिब्रह्माद्यृषिकत्वादिति भावः । तत्तद्योग्यार्थभेदः । पश्यतीति भाष्यं प्रकारान्तरेणावतार्य व्याचष्टे ॥ यथैकमपीति । सर्वविद्या इति । सर्वविद्यानामिति वक्ष्यमाणत्वादिति भावः । एकं रुद्रादिष्वपीति । नागराजा रुद्रः । शक्रेण काम इत्यादिकं द्रष्टव्यमित्यर्थः ।

## टीकाविवृतिः

ननु मुनिस्तुसर्वविद्यानामिति ऋष्यादिकं किमर्थं कथ्यते । ऋगर्थज्ञानानुपयोगादित्यत आह । एवमिति । योहवा इति । ऋषिर्मन्त्रद्रष्टा । तस्येदमार्षम् । ऋषिदृष्टत्वमिति यावत् । छन्दोगायत्र्यादि । दैवतं मन्त्रप्रतिपाद्यादेवता । ब्राह्मणम् । ब्राह्मणपदेन तद्व्याख्येयो मन्त्रार्थो लक्ष्यते । मन्त्राणां तत्तत्कर्मणि विनियोगोपि लक्ष्यते । आर्षं च छन्दश्चदैवतं च ब्राह्मणं च आर्षछन्दोदैवतब्राह्मणानि । अविदितान्येतानि यस्यतेन मन्त्रेण । जातावेकवचनम् । मन्त्रसमूहेन याजयति स्वार्थे णिच् देवपूजांकरोति । शिष्येभ्यो ज्ञानं ददाति । देवेभ्योवा हविरादिकं ददाति । अध्यापयति वायः स स्थाणुं भावप्रधानोनिर्देशः वृक्षादिस्थावरजातिं वा । ऋच्छति प्राप्नोति । गर्तेवा भूगर्तरूपे नरके वा । पद्यति पात्यते । प्रमीयते वा अल्पायुर्भवतीति श्रुत्यर्थः । पापीयान्भवति तस्मादेतानि मन्त्रे मन्त्रे

विद्यादिति छन्दोगानां ब्राह्मणशेषः । न च वाच्यमत्र ऋष्याद्यज्ञानेऽनर्थ एवोच्यते । न तु तज्ज्ञाने सूक्ताद्यर्थ ज्ञानस्य साफल्यमिति । नहिनिन्दानिंद्यं निन्दितुं प्रवर्तते अपि तु विधेयं स्तोतुमिति न्यायेन विदित ऋष्यादिकेन मन्त्रेण याजनादिकं कुर्यादित्यत्र तात्पर्यात् । ऋषिच्छन्दोदैवतानि ब्राह्मणार्थस्वराद्यपि । अविदित्वा प्रयुंजानो मन्त्रकण्टक उच्यत इति । तथास्वरोवर्णाक्षर मात्रादिनियोगोक्षर एव च । मन्त्रं जिज्ञासमानेन वेदितव्यं पदेपद इति स्मृतिद्वयसमाख्यानाच्च । अनुक्रमणिकाच । अथ ऋग्वेदाम्नाये शाकलके सूक्तप्रतीकऋक्संख्यर्षिदैवतछन्दांस्यनुक्रमिष्यामो यथोपदेशं नह्येतज्ज्ञानमृते श्रौतस्मार्तकर्मप्रसिद्धिर्मंत्राणां ब्राह्मणार्षेयच्छन्दोदैवतविद्याजनाध्यापनाभ्यां श्रेयोधिगच्छतीति । शाकलेन दृष्टे ऋग्वेदरूपे आम्नायेसूक्त प्रतीकादिकं अनुक्रमेण वक्ष्यामः । तत्र प्रथमपदेन सूक्तस्य प्रतीकम् । द्वितीयेन सूक्तगतऋचां संख्या । तृतीयेन ऋषिः । चतुर्थेनदैवतम् । पञ्चमेन छन्दः । एवं क्रमेणवक्ष्यामः । ऋष्यादिज्ञानेन विना कर्मसफलं न भवति यस्त्वेतज्जानाति सोध्यापनादिना श्रेयः प्राप्नोतीत्यर्थः ।

अत्र भाष्यकारैः ऋषिदैवते उच्यते । न तु छन्दः । तस्य छन्दोग्रन्थोक्तरीत्या वर्णगणनया ज्ञातुं शक्यत्वादनुक्रमणिकोक्ताविरोधाच्च । अत एव सूक्तगतऋक्संख्याच नोच्यते । तत्रानुक्रमणिका । अग्निं नवमधुच्छंदा वैश्वामित्र इति । अग्निमित्यग्निमीळे इति सूक्तप्रतीकम् । नवेत्यस्य सूक्तस्य नवसंख्याका ऋचः । वैश्वामित्रो विश्वामित्रगोत्रोत्पन्नो मधुच्छन्दनाम ऋषिरित्यर्थः । परिभाषायां मण्डलादिष्वाग्नेयमैन्द्रादित्युक्त्याऽग्निर्देवता । तत्रैव आदौ गायत्रं प्राग्धिरण्यस्तूपादित्युक्तेः । इत आरभ्यत्वमग्नेब्यूनाहिरण्यस्तूप इति यत्रोच्यते तावत्पर्यन्तं यत्र छन्दोविशेषो नोच्यते तत्र गायत्रीछन्दः । तल्लक्षणं च तत्रैव । चतुर्विंशत्यक्षरादीनि चतुरुत्तराणीति गायत्र्युष्णिगादिछन्दसां लक्षणानीत्यर्थः । अत्राप्यवान्तरविशेषस्तल्लक्षणं चोत्तरत्र वक्ष्यामः । तत्र सर्वानुक्रमणिकोक्तऋषिदेवते मुख्ये इत्युत्सर्गः । प्रमाणबाधे त्वनुक्रमणिकोक्तऋषिदेवते त्यक्त्वान्य दृष्यादिकमाचार्यैरुत्तरत्रोच्यते । सामान्यतः सर्वविद्यानां मुख्यमध्यमाधमऋष्यादिकं वक्तुमुत्तरो ग्रन्थ इत्यभिप्रेत्याह । तस्माद्दषीति । योब्रह्माणमपीति । प्रहिणोति गमयति प्रापयति हिगताविति धातारेन्तर्णीतण्यर्थाल्लट् । श्रुतिः प्राहेत्येतदसङ्गतमित्यतः शेषं पूरयति । ब्रह्मणोपीति । तेनेत्युक्त्या भाष्ये यतस्तेन ज्ञायत इत्यपि शेषः सूचितः । अस्य महत इति । बृहदारण्यकवाक्यमिदम् । ऋग्वेदाद्या अवान्तरवेदाः । इतिहासो भारतं रामायणं च । यद्यपि पञ्चरात्रं भारतं च मूलरामायणं तथा इतिहास इति प्रोक्त इत्युक्तेः । पञ्चरात्रमपीतिहासशब्देन ग्रहीतुं शक्यते । तथापि श्लोकशब्देन गृहीतत्वादनेन न गृह्यते । पुराणानि सर्वाणि । विद्याः मूलवेदराशिः । वेदग्रहणेनोपनिषद्ग्रहणे

सिद्धेपि विशेषतो भगवत्प्रतिपादकत्वात्पुनर्ग्रहणम् । श्लोकाः पञ्चरात्रागमाः । सूत्राणि ब्रह्मसूत्राणि । व्याख्यानानि वेदार्थप्रतिपादकग्रन्थाः । अनुव्याख्यानानि वेदव्याख्यानस्यापि व्याख्यारूपग्रन्थ विशेषा इत्यर्थः । तदुक्तं बृहदारण्यकभाष्ये । तस्माद्वेदाः समुत्पन्नाविद्याख्यामूलिका श्रुतिः । सर्वोपनिषदश्चैव पञ्चरात्राख्यसंहिताः । ब्रह्मसूत्राणि वेदानां व्याख्यास्तासांच विस्तरः । सर्वमेतज्जगच्चैव निःसृतं तुरगाननादिति । वाच इति । श्वसतः श्वासंकुर्वाणस्यास्य हयग्रीवस्य नस्तोनासिकायाः । पद्दन्न इति नासिकायाः नसादेशे तसिल् प्रत्ययः । वशकान्तौ कान्तिर्दीप्तिः इत्यस्माच्छत्रंताद्ग्रहिज्येति सम्प्रसारणे उगितश्चेति ङीपि जसि दीर्घाज्जसिच वाछन्दसीति पूर्वसवर्णदीर्घविकल्पादुशतीरिति रूपमित्याशयेनाह । उशतीरुशत्यः प्रकाशमाना इति । ब्रह्माण्डे पितथापरमित्यत्र चतुर्दशभुवनात्मके ब्रह्माण्डेपि यथा सर्वविद्याद्रष्टृत्वं पूर्वोक्तप्रमाणेषु तथा अपरं पूर्वोक्तप्रमेयादन्यद्वस्त्वस्तीत्यन्यथाप्रतीतिनिरासायाह । ब्रह्माण्डेपि पुराण इति ।

रुद्रशेषेत्यादि भाष्येण सर्वेहयग्रीवादेव विद्याः प्राप्तवन्त इति प्रतीतिवारणायाह । ब्रह्मणोजगृहुरित्यादिना । नचैवं पाठक्रमाश्रयणे रुद्रादिशिष्या दक्षाद्यास्तच्छिष्यास्स-नकाद्यास्तच्छिष्याः शक्राद्यामनवोपीतिस्यादित्यतः पाठक्रमादर्थक्रमो बलीयानित्याशयेन तारतम्यश्रुत्यनुसारेण व्याचष्टे । तेभ्यः शक्राद्या इति । चक्रुरित्यस्योपदिदिशुरिति व्याख्याधातू-नामनेकार्थत्वाश्रयेण ज्ञेया । अखिलेषु प्रेरयतीति । उपदिशतीत्यर्थः । ब्रह्मणे इति चतुर्थ्युपपत्तये शेषमाह । ददाविति । उक्तार्थसिद्धये योब्रह्माणमित्येतावतापूर्तौ श्रुत्यन्तरपुराणोदाहरणं व्यर्थमित्यत आह । योब्रह्माणमितीति । तेन चेत्यत्र चशब्दस्य चोहेतावववधारण इत्यभिधानाद्धेत्वर्थ-त्वाद्यस्मात्तस्मादित्यर्थत्वमभिप्रेत्य व्यवहितत्वात्पदानामन्वयमाह । यस्मत्तेन परमेश्वरेणेति । तेनेत्यनेनाव्यवहितत्वाद्यासस्यैव परामर्शो न ब्रह्मण इति भावः । यस्मादादिकाले परमेश्वरेण समुदीरितमखिलं विद्याजातं सकृन्निगदमात्रेण ब्रह्मणागृहीतं तस्मात्प्रथमप्रतिपत्तृत्वाद्ब्रह्मारुद्राद्य-पेक्षया प्रथमो मुनिरित्येव प्रकृतोपयोगि । अन्यद्धेतु कथनपरमिति भावः । सम्बन्ध इति । सुपर्णोऽखिलवेदानां नागराट्पञ्चरात्रस्य मुनित्वे सम्प्रकीर्तितावित्यन्वय सम्भवेपि द्वितीयप्रतिपत्तृत्वादित्यस्यासङ्गत्या मुनिर्ब्रह्मेत्यतो मुनिशब्दानुवृत्त्या सम्बन्धः कृतः । द्वितीय-प्रतिपत्तृत्वादित्युक्त्यालब्धमर्थमाह । द्वितीयाविति । ननु ब्रह्माद्या नवेदादीनामृषयः अधीतविद्यत्वादस्मदादिवदित्यनुमानेन पूर्वपक्षिते यः पश्यति स्वयं वाक्यमित्यस्य कथमुपयोग इत्यतोयथैवमिति शब्दाध्याहारेण योजयति । यथा य इति । स्वल्पावृत्त्यालब्धविद्यस्य स्वतो विद्यादर्शनाभावात्कथमृषित्वमित्यत आह । तथाभूत इति । अस्मदादिसाम्यं वारयति । नह्यन्यइति ।

अस्माकमपि यत्किञ्चिद्वाक्यर्षित्ववारणाय सर्वविद्या इत्युक्तम्। तथाच द्वादशावृत्तेरर्वागध्ययनेनापि सर्वविद्याप्रतिपत्ता ऋषिरित्यर्थः । यत्स्वयं प्रतिभातेति भाष्ये सुपर्णादिर्विरिंचस्यापि स्वयं प्रतिभातवेदादौ वेदत्वसंशयनिवृत्तये गुरोर्वचो भवति धर्मस्यापि कारणमित्यन्यथाप्रतीतिनिरासाय विभागेन योजयति। सुपर्णादिरिति। निगदः पाठस्तद्रूपम्। सुपर्णादिरेव संशय सम्भवात्तन्निरा-सद्वारा निश्चयार्थं स्यादित्यर्थः । संशयार्थं गुरोर्वच इति पाठे त्वर्थशब्दावृत्तिमाद्यार्थशब्दस्य निवृत्त्यर्थत्वं चाश्रित्य संशयनिरासेनेति व्याख्यानं ज्ञेयम्। निश्चयार्थमिति तुफलितोर्थः। विरिंचस्य तुकेवलमित्युक्तिरन्येषामपि गुरोर्वचोधर्मकारणमपीति सूचनायेति ज्ञेयम् । एवशब्द इति । आदिशब्देन यजुषामेवेत्यादि गृह्यते । प्रकारेणेति शेषः । तेन ऋचामेवेत्यादिशब्दानां पुनरेवकारान्वयशंका निरस्ता। चस्त्वर्थ इति। सूर्य इत्यादिनासम्बध्यत इति भावः ।

अथर्वाङ्गिरसामित्यत्र द्वन्द्वसमासविग्रहं दर्शयन्नेव तात्पर्यमाह। अथर्वणामिति। तद्भेदानामिति। अथर्ववेदभागानामथर्वणां त्वग्निरेक ऋषिरपि ऋषिरित्यर्थः । ब्रह्मण एव सर्वविद्यासमुदायस्य ऋषित्वात्कथमित्युक्ताः समुदायस्येत्युच्यत इत्यत आह। प्रायेणाविभक्तेति ॥ विष्णुब्रह्मणोःसर्व-विद्याऋषित्वे उक्ते सुपर्णशेषयोः पौरुषेयापौरुषेयविद्याऋषित्वे शक्रादीनामृगादिविद्या ऋषित्वे उक्तेपि ऋगादीनामवान्तरभेदशाखोपशाखासूक्ताद्यविवक्षयासमुदायस्येत्युक्तमिति भावः। प्रायेण त्रिविधा इत्युक्त्या पौरुषेयाणां ब्रह्मशेषाख्यद्व्यृषिकत्वमेव ज्ञेयम् ॥ एतेभ्योन्य इति ॥ शाकलाश्वलायनापस्तंबमधुच्छन्दःशुनःशेपादयः। पृथक्पृथगित्यनूद्यव्याचष्टे॥ एकैकस्मिन्निति॥ शास्त्रान्तरादिति ॥ चरणव्यूहानुक्रमणिकादेः ॥ एवश्चतुर्विधानिति ॥ विष्णुर्ब्रह्माचासंकुचि-तसर्वविद्याऋषी इत्येका कोटिः । सुपर्णो पौरुषेयस्य ऋषिः । पौरुषेयस्य शेष इति द्वितीया । ऋगादीनां प्रत्येकं शक्रादय इति तृतीया। तच्छाखादीनांत्वभ्य इति चतुर्थी। एवं चतुर्विधानित्यर्थः। एतज्ज्ञानाददृष्टस्येति भाष्यं चतुर्विधऋषिज्ञानाददृष्टस्याप्तिर्भवेत् । चतुर्थानां द्रष्ट्णां ज्ञानात्त्वै-हिकमपिभवेदित्यन्यथा प्रतीतिवारणाय व्याख्याति॥ एतदित्याद्यानामिति॥ आद्यत्रयज्ञानेनादृष्टं फलं चतुर्थर्षिज्ञानेनैहिकमिति साम्यधीवारणाय स्फुटमित्युक्त्या सूचितन्यायमाह॥ दृष्टस्येति॥ इति शब्दानन्तरंस्फुटशब्दः सूचित इति शेषः। अदृष्टाप्तिःस्फुटं यदा तदा दृष्टस्याप्तिः स्यादिति किमु वाच्यमिति भावः । ज्ञानादपीत्यपिशब्दस्य यथास्थितान्वये समुच्चेतव्याभावाद्भिन्नक्रमताया आवश्यकत्वे यद्यैहिकशब्देनान्वयः क्रियते तदा दृष्टसमुच्चयात्पूर्वर्षिसाम्यं स्याच्चतुर्थानामपि ज्ञानादैहिकमित्यन्वयेतु चतुर्थज्ञानाददृष्टव्यावृत्तिःस्फुटं न प्रतीयेतातो भिन्नवाक्यतया योजयति॥ चतुर्थानामपीति॥ ऋष्यादिज्ञानस्य प्रयोजनमुक्त्वा तेनैकस्यापीत्यसंगतमुच्यत इति शङ्कावारणाय

व्यवहितेन संगमयितुमाह ।। ऋगादीति ।। व्यर्थमिदमुच्यत इत्याशङ्कां वारयति ।। एतच्चेति ।। ऋच एवबहवः इत्युक्त्या सूक्तस्य बहव एकोपि ऋषिरिति स्यात्तच्चोक्तविरुद्धमित्यत आह ।। बहव एवेति सम्बन्ध इति ।। उक्तार्थेऽनुक्रमणिकां प्रमाणयति ।। तथाचोक्तमिति ।। त्रिष्वादित्यमिति ।। शुनःशेपोह्यह्वद्गृभीत इति पूर्वपादेनास्यान्वयः । त्रिषु द्रुपदेषु क्रयो यूपे बन्धः आलंभनोद्योग इति त्रिषु द्रोर्वृक्षस्य यूपस्यवा त्रिषु पदेषु स्थानेषु सत्त्वादिगुणेषुवा बद्धःशुनःशेपोयमादित्यमाह्वयति सवरुणोराजा एनं शुनः शेपं अवससृज्यात्संसृतेरवसृष्टं करोत्वित्यर्थः । सन इत्यस्यायमर्थः । दंसनावान्कर्मवान्सः शश्वदिंद्र इत्युक्त इन्द्रोनोस्माकं हिरण्यरथमदादिति ।। इन्द्राद्रथप्राप्ति-रित्यादिकमिति ।। आदिशब्दाद्वरुणाज्ज्ञानप्रार्थनं संपूर्णायुष्यप्रार्थनं अहेळमानोवरुणे-हबोध्युरुशंसमान आयुःप्रमोषीरित्युक्तं गृह्यते । भाष्याक्षरार्थमुक्त्वा तत्प्रकारं दर्शयति ।। यूपेहमिति ।। एवं ब्रह्मासुपर्णोवित्येतदुपलक्षणतया योजयति ।। अन्य इति ।। इन्द्रादय इत्यर्थः ।

नन्वेवंतर्ह्यहंरुद्रायधनुरातनोमीत्यादौ शक्रादेरपि ऋषित्वेन तद्वाक्यत्वं स्यादित्यतस्तस्यां तस्यामवस्थायामिति वाक्यं कर्त्रध्याहारेण योजयति ।। एवमधमा इति ।। तत्तद्योग्यार्थ-भेदतःपश्यन्तीति वाक्यं प्रकारान्तरेणापि योजयितुमवतारयति ।। यथैकैकमपीति ।। कथं सर्वविद्याद्रष्टृत्वे वेदाभिमानित्वं हेतुरित्यत आह ।। वेदशब्देनेति ।। तर्ह्यप्रयोजको हेतुरित्यत आह ।। नहीति ।। समगुणत्वादिति ।। स्वरूपेणेति शेषः ।। एवंरुद्रादिष्विति ।। शेषेण रुद्रः इन्द्रेण कामः अग्निना भृग्वादिर्व्याख्यात इत्यर्थः । यदि ताःस्वभर्त्रनन्तरं द्रष्ट्र्यःतर्हि भर्तृभ्यो न्यूनत्वात्कथं तदुक्त्या तासां ग्रहणं स्यादित्यत आह ।। भार्याभर्तृसमानधर्मिणीति ।। सरस्वत्याश्चतुर्मुख-समानधर्मत्वेऽनन्तगुणोपास्तिवदनन्त क्रियोपास्तिरपि नित्यं स्यादित्याशङ्का-वारणायप्राय इत्युक्तम् ।

## ऋग्भाष्यम्

**छन्दस्त्वेन मुनित्वेन तासां स्मृतिरुदीरिता ।**
**स्मर्तव्यास्ते चसर्वेऽपि मुनित्वेन पृथक्पृथक् ।**
**गायत्री बृहती चैव ताः सर्वा गरुडस्तथा ।**
**ब्रह्माण्यनुष्टुविंद्राणी त्रिष्टुप्स्वाहेति चोच्यते ।**
**गायत्री जगती चैव वारुणी रोहिणी तथा ।**
**अनुष्टुब्बृहती चैव तारा पङ्क्तिः शची तथा ।**

उष्णिक् साँगी जगत्यश्च सर्वदेवस्त्रियो मताः ।
विराण्मित्रावरुणयोर्भार्ये इति च कीर्तिते ।
अतिछन्दांसि सर्वाणि सर्वदेव्यः प्रकीर्तिताः ।
विराडिति च नामामां तास्ता ऊनाधिकेष्वपि ।
निचृद्भुरिग्विराट् संज्ञा प्रस्तारेत्यादि नामच ।
वर्ह्वीनामेकमानेन त्वेकं नामच युज्यते ।
सर्वाभिमानिता चैव तिसृणां तु यथाक्रमम् ।
देवता सर्वविद्यानां स्वयं नारायणः प्रभुः ।
ऋते तत्र प्रसिद्धाश्च देवता श्रीस्तथाऽत्रच ।
ऋते प्रसिद्धा ब्रह्मैव ततस्तेन क्रमेण च ।
पूर्वप्रसिद्धवर्जंतु शक्रान्ता देवता मताः ।
ब्रह्मवायू गिरौ वीद्रशेषरुद्राश्च तत्स्त्रियः ।
शक्रकामौ कामपुत्रमनुदक्षाङ्गिरस्सुताः ।
तद्वच्छची रतिः सूर्यसोमधर्मादितत्स्त्रियः ।
प्रधानमरुतो वारिपतिरग्निश्च मारुताः ।
निर्ऋतिः स्त्रियश्च सूर्यादिरश्विनावितरे तथा ।
अनन्तकोटिशतकदशार्धाद्यंशतः क्रमात् ।
ज्ञानभक्तिबलैश्वर्यपूर्वाखिलगुणैरपि ।
मुक्तावपि क्रमो ह्येष देवता उदिता इमाः ।
इन्द्रावरा विशेषेण लिंगेनैव पृथक्पृथक् ।
देवतास्तत्र तत्र स्युरेष एव परो विधिः ।
वेदादिवर्णपर्यंतमूर्तयः केशवस्यतु ।
समासव्यासयोगेन वाच्यास्तात्पर्यतः पृथक् ।
यथायोगं यथान्यायमन्यासामपि मूर्तयः ।

## ऋग्भाष्यटीका

एत्वेतास्तेत्पर्यस्ततश्च किमित्यत आह ।। मुनित्वेनेति ।। उदीरिता कर्तव्यतया । तात्पर्यद्योतनाय स्मर्तव्यास्ते चेति पृथग्योगः । दृष्टादृष्टफलहेतुत्वादित्यर्थः । एवमृषीनुक्त्वा तत्स्मरणं च विधाय छन्दसामपि स्मरणं विधत्ते छन्दस्त्वेन च तासां स्मृतिरुदीरितेति । तत्र कस्य छन्दसः का देवतेत्यत

आह ॥ गायत्रीति ॥ ताः सर्वाः प्रागुक्ताः श्रीर्ब्रह्माणी च भारती । तथा गम्डश्च गायत्री बृहतीच । ब्रह्माण्यनुष्टुप् । इन्द्राणी त्रिष्टुप् । नकेवलं गायत्री लक्ष्म्याद्याः किंतु स्वाहाच गायत्रीत्युच्यते । वारुणी जगती । वक्ष्यमाणदेवतांतरसमुच्चयार्थश्चशब्दः । एवशब्दोऽन्यथोक्तिनिरासार्थः । नकेवलं ब्रह्माण्यनुष्टुप् किंतु रोहिणी तथा रोहीणी चानुष्टुप् । एवं ताराच बृहती । शची पङ्क्तिश्च । सौरी उष्णिक् । सर्वदेवस्त्रियश्च जगत्या मताः । मित्रावरुणयोर्भार्ये विराडिति च कीर्तिते । सर्वदेव्यः सर्वाण्यतिच्छन्दांसि प्रकीर्तिताः । आसांच विराडिति नाम । एवं छन्दसां देवता उक्त्वा तदवान्तरभेदानाह ॥ तास्ता इति ॥ यस्य छन्दसो यावन्तो वर्णास्तत्तदूनत्वेऽधिकत्वे विन्यासभेदेनावान्तरभेदेषु च तास्तास्तत्तच्छन्दोदेवता एव देवता इत्यर्थः । तत्र नामविशेषमाह ॥ निचृदिति ॥ एकेनाक्षरेण न्यूना निचृत् । एकेनाधिका भुरिक् । द्वाभ्यां न्यूना विराट् । द्वाभ्यामधिका स्वराट् । एवं न्यूनत्वादिना गायत्रीनिचृदादिसंज्ञा भवति । तथोष्णिगाद्या अपीत्यर्थः । प्रस्तारेत्यादिकं च नाम विन्यासभेदेनावान्तरभेदानामित्यर्थः । प्रस्तारेति पङ्क्तिविशेषः । एतच्चछन्दोग्रन्थादवगन्तव्यम् ।

ननु ताः सर्वागायत्रीत्यादि न युज्यते एकानेकतादात्म्यानुपपत्तेरित्यत आह ॥ वह्नीनामिति ॥ नात्र देवतानां छन्दसां चैक्यमुच्यते किन्तु तत्तदभिमानितया तत्तन्नामवत्त्वम् । तच्च वह्नीनां देवतानामेकच्छन्दोभिमानित्वेनैकनामवत्त्वं तु नविरुध्यत इत्यर्थः । एतेनाग्रेगायत्र्यभवदित्यादि-कमपि व्याख्यातं भवति । गायत्रीबृहत्योर्लक्ष्म्याद्या देवता उक्ताः नैतावदेवेत्याह ॥ सर्वेति ॥ तिसृणां श्रीर्ब्रह्माणीच भारतीत्युक्तानाम् । यथाक्रमं सर्वच्छन्दोभिमानिता चास्ति । पूर्वोक्तं तु विशेषविवक्षयेति भावः । एवमृषिच्छन्दसी उक्त्वा देवतामाह ॥ देवतेति ॥ स्वयं साक्षात् । प्रभुरिति देवतात्वोपपादनार्थम् । तत्र भगवति । प्रसिद्धाः पुरुषसूक्तादिविद्याः । ऋते वर्जयित्वाऽन्यासां विद्यानां श्रीश्च देवता । तथात्रच श्रीदेव्याम् । प्रसिद्धा विद्याः अम्भृणीसूक्ताद्या ऋतेऽन्यासां ब्रह्मैव देवता । ततःपरंच तेन वक्ष्यमाणेन तारतम्यक्रमेणैव । पूर्वप्रसिद्धवर्जं पूर्वस्यां देवतायां प्रसिद्धाविद्या वर्जयित्वाऽन्यासां विद्यानां तु शक्रान्ता देवतामताः । कोसौ देवतानां क्रम इत्यत आह ॥ ब्रह्मेति ॥ गिरा सरस्वतीभारत्यौ । अङ्गिरः सुतो बृहस्पतिः । तद्वत् कामपुत्रादिवत् । तत्स्त्रियो मन्वादिस्त्रियः । प्रधानमरुतः प्रवहाद्याः । मारुतास्तदन्ये । क्रमात्क्रमयुक्ता वर्तन्ते । इत्यनेन क्रमेणोदिता इमा विद्यानां देवता ज्ञातव्याः ।

अत्र प्रायो द्वन्द्वगृहीतानां साम्यं ज्ञातव्यम् । प्रधानमरुत्सु प्रवहः सूर्यादिभ्यः पूर्वं पठितव्यः । सूर्यसोमधर्मादितत्स्त्रिय इत्यत्र सूर्यसोमधर्माणां मनुपत्न्याश्च साम्यम् । आदिपदगृहीतानां

प्रसूत्यादिस्त्रीणां तदवरत्वम् । वारिपनिर्धर्माद्यनंतरः । यद्येताः सर्वाः अपि विद्यादेवताः कथं तर्हि शक्रान्ता देवता इत्युक्तं तत्राह ।। इन्द्रावरा इति ।। यद्यप्येताः सर्वा अपि विद्यादेवता भवंत्येव तथापि पृथक् पृथक् विशेषेण व्यावर्तकेन । लिङ्गेन श्रुतिलिङ्गादिना ज्ञापकेनेन्द्रावरास्तत्र तत्र विद्यासु देवताः स्युः न तु श्रुतिलिङ्गाद्यभावे । इन्द्रपर्यन्तास्तु श्रुत्याद्यभावेपि पूर्वप्रसिद्धवर्जं देवताः स्युरिति शक्रान्तादेवता इत्युक्तम् । अन्येतु ब्रुवते तत्तत्श्रुत्यादिनैव विष्ण्वाद्या देवताः स्युरिति तदसदिति भावेनाह ।। एष एवेति ।। विधिः प्रकारः । देवतास्थितिः । प्रामाणिकत्वादिति शेषः । विष्ण्वादीनां विद्यादेवतात्वं विवृणोति ।। वेदादीति ।। वेदादिवर्णपर्यन्तशब्दैः समासव्यासयोगेन पृथक् वाच्या इति समस्तवेदेनैका तत्प्रभेदैस्तावत्यः तदवान्तरभेदैरपि तावत्य इत्येवंप्रकारेण वाच्या इत्यर्थः । तदपि यथायोगं योगवृत्तिमनतिक्रम्य । यथान्यायं तत्तन्मूर्तीनां ज्ञापकं न्यायं चानतिक्रम्य ज्ञातव्यम् । अन्यासामपि लक्ष्म्यादिदेवतानां मूर्तयो विद्यासु वाच्या ज्ञातव्याः ।

## पदार्थप्रकाशिका

मुनित्वेन तासां तेषां च स्मृतिः कर्तव्यतयोदीरितेत्येकवाक्येनैवोक्तिसम्भवात् स्मर्तव्यास्ते चेति पृथग्वाक्यं किमर्थं कृतमत आह । तात्पर्येति । स्त्र्यपेक्षया तद्भर्तॄणाम् अतिशयेन मुनित्वेन स्मरणं कर्तव्यमिति तात्पर्यद्योतनायेत्यर्थः । स्त्र्यपेक्षयातिशयेन तद्भर्तारो मुनित्वेन स्मर्तव्या इत्येतत्कुत इति शङ्कायां स्मर्तव्या इत्यत्र तव्यप्रत्ययरूपविधिप्रत्ययोक्तं दृष्टादृष्टेति । इष्टसाधनत्वस्य विध्यर्थत्वात्तव्यप्रत्ययस्य च विधिरूपत्वात् इति भावः । ते चेत्युक्तचशब्दानुकर्षणेनाह । छन्दस्त्वेन चेति । वक्ष्यमाणेति । जगत्यश्च सर्वदेवस्त्रिय इति वक्ष्यमाणेत्यर्थः । अन्यथोक्तीति । गायत्र्युष्णिगनुष्टुप्बृहतीविराट्त्रिष्टुप्जगतीछन्दसां अग्निः सविता सोमो बृहस्पतिर्विराण्मित्रावरुणाविन्द्रो विश्वेदेवा देवताः । अग्नेर्गायत्र्यभवदित्यादिश्रुतेरिति पिङ्गलनागोक्तिनिरासार्थ इत्यर्थः । पङ्क्तिश्चेति । न केवलं त्रिष्टुबित्यर्थः । सर्वदेवस्त्रियश्चेति । न केवलं वारुणी किंतु सर्वदेवस्त्रियश्चेत्यर्थः । मित्रावरुणयोर्भार्ये रेवत्यां मित्रः सर्गमिति षष्ठस्कन्धवचनात् विराडिति च कीर्त्यते इत्यत्र चशब्दो विराडपि नामासामिति वक्ष्यमाणसर्वदेवीसमुच्चयार्थः ।

अतिछन्दांसीति । गायत्र्युष्णिगनुष्टुप्बृहतीपङ्क्तित्रिष्टुप्जगतीछन्दांसि । अतिजगति शक्वर्यष्ट्यत्यष्टिधृतिरतिधृतयः सप्तातिच्छदांसि द्रष्टव्यानि । आसां चेति । तथा च मित्रावरुणभार्ययोरेवतीगङ्गयोरेव विराट्छन्दोदेवतात्वं न, किन्तु सर्वदेवीनामपीति भावः । यस्येत्यादि । यस्य छन्दसोऽनुष्टुबादिछन्दसो यावन्तो वर्णाः द्वात्रिंशदादिवर्णाः प्रसिद्धाः तत्तदूनत्वेऽधिकत्वे वा सति

तत्तच्छन्दोदेवताः प्रधानानुष्टुबादिछन्दोदेवता ब्रह्माण्याद्या एव देवता ज्ञातव्या इत्यर्थः । पुनः कुत्र तास्ता देवता ज्ञातव्या इत्यत उक्तं विन्यासभेदेनावान्तरभेदेषु चेति । अत्र विन्यासभेदेनेत्यस्य गणभेदेनेत्यर्थः । तथा हि । वन्दे गोविन्दमित्यनुष्टुप् छन्दोबद्धः श्लोकः । तत्र वन्देगो इत्येतेषां गुरुत्वात् वर्णत्रितयमेको गणः सर्वगुरुर्मगणो जातः, अयं स्वभावतोऽनुष्टुप् । तथापि नमामि परमात्मानमित्ययमपि अनुष्टुप् छन्दोबद्धः श्लोकः । तत्र यद्यपि मा इति मध्यमाक्षरमेकमेव गुरुर्नाद्यतृतीयाक्षरे । तथा च न सर्वगुरुर्मगणः प्राप्नोति । किन्तु जगण एव । तथापि सोऽनुष्टुप् अवान्तर विशेषो ज्ञातव्यः ।

एवं सति गणभेदादनुष्टुबवान्तरभेदेष्वपि निजानुष्टुप् देवतैव वेदितव्या । एवमेव गायात्र्यादिछन्दःस्वपि गणभेदेनावान्तरभेदेषु तास्ता देवता ज्ञातव्या इत्याशयः । तत्र नामविशेषमिति । अक्षरविन्यासभेदेन सम्पन्नगायत्र्यवान्तर भेदेननामविशेषमाहेत्यर्थः । एवं न्यूनत्वादिनेति । त्रयोविंशत्यक्षरा निचृद्गायत्री । पञ्चविंशदक्षरा भूरिग्गायत्री द्वात्रिंशदक्षरा विराड्गायत्री । त्रिष्टुप् त्रिंशदक्षरा षड्विंशाक्षरा स्वराड्गायत्रीत्येवम् एकाक्षरन्यूनत्वादिना गायत्री निचृदादि संज्ञा भवतीत्यर्थः । तथोष्णिगाद्या अपीति । अष्टाविंशदक्षरोष्णिक् । तत्र सप्तविंशत्यक्षरा चेन्निचृदुष्णिक् । एकोनत्रिंशदक्षरा चेद्भूरिगुष्णिक् । षड्विंशाक्षरा चेद्विराडुष्णिक् । त्रिंशदक्षरा चेत्स्वराडुष्णिक् । इत्येवं न्यूनत्वादिनोष्णिगपि निचृदादिसंज्ञा भवतीत्यर्थः । उष्णिगाद्या इत्यादिपदेन द्वात्रिंशदक्षराऽनुष्टुप्, तत्रैकत्रिंशदक्षरा निचृदनुष्टुप्, त्रयस्त्रिंशदक्षरा भूरिगनुष्टुप्, त्रिंशदक्षरा विराडनुष्टुप्, चतुस्त्रिंशदक्षरा स्वराडनुष्टुप् इत्येवं न्यूनत्वादिना अनुष्टुपि निचृदादिसंज्ञा भवतीति द्रष्टव्यम् । एवं प्रधानोष्णिगनुष्टुबादेर्या देवताः सौरीब्रह्माण्याद्यास्ता एव तदवान्तरभेदनिचृदुष्णिगादीनामपि देवता इति भावः । चशब्दो भिन्नक्रम इत्यभिप्रेत्याह । प्रस्तारेत्यादिकं च नामेति । अक्षरविन्यासभेदेनावान्तरभेदानामित्युक्ते गायत्र्यवान्तरभेदानां निचृदादिवत् इदमपि नामेत्यन्यथाप्रतीतेराह । प्रस्तारेति । भाष्ये आदिपदेनास्तारपंक्तिर्ग्राह्या । ननु कुत एतत्प्रतिपत्तव्यमित्यत आह । एतच्चेति । पङ्क्तिगायत्र्यौ जागतौ च प्रस्तारपङ्क्तिपूर्वतः आस्तारपङ्क्तिपर इति पिङ्गलनागसूत्ररूपछन्दोग्रन्थादित्यर्थः ।

तथा हि । अष्टाक्षरा चतुष्पदा पङ्क्तिरिति पक्षे आद्यद्वितीयौ यदि जगती छन्दः पादवत् द्वादशाक्षरौ, इतरौ पादौ गायत्रीपादवत् अष्टाक्षरावेव तर्हि सा प्रस्तारपङ्क्तिरित्युच्यते, यदि तृतीयचतुर्थपादौ जागतीपादवत् द्वादशाक्षरौ आद्यद्वितीयपादौ त्वष्टाक्षरावेव तर्हि सा आस्तार

पङ्क्तिरित्युच्यते। यथोक्तमनुक्रमणिकाकृताऽपि। पूर्वं पदत्रयपङ्क्तिमभिधायाथ चतुष्पादपङ्क्तिरिति प्रतिज्ञाय आद्यौ जागतौ चेत्प्रस्तारपङ्क्तिरन्त्यौ चेदास्तारपङ्क्तिरिति । एकानेकेति । एकस्य छन्दसोऽनेकाभिर्देवताभिस्तादात्म्यवचनं विरुद्धमित्यर्थः ।

ननु 'स्वाहेति चोच्यते गायत्री उष्णिक् सौरी रोहिण्यनुष्टुप् बृहती चैव तारा विराण्मित्रावरुणयोर्भार्ये। इन्द्राणी त्रिष्टुप् जगत्यश्च सर्वदेवतास्त्रिय' इत्युक्तम् । तदयुक्तम् । अग्नेर्गायत्र्यभवदिति श्रुतौ गायत्र्यादिछन्दसमग्न्यादिदेवताजन्यत्वाद्युक्त्या तदभिमन्यमानस्यैवाभिप्रेतत्वादित्याशङ्कायामाह । एतेनेति । देवतानां तत्तच्छन्दोऽभिमानितया तत्तन्नामवत्ववचनेनेत्यर्थः। 'अग्नेर्गायत्र्यभवत्सयुग्वोष्णिग्हया सविता सम्बभूव। अनुष्टुभा सोम उक्थैर्महस्वान् बृहस्पतेर्बृहती वाचमाधत्। विराण्मित्रावरुणयोरभिश्रि इन्द्रस्य त्रिष्टुभिहभागो अन्हः। विश्वान् देवान् जगत्याविवेश । तेन चक्लृप्त ऋषयो मनुष्याः ।' इति ऋग्द्वयस्यायमर्थः । गायत्री तच्छन्दोऽभिमानिनी स्वाहा अग्नेः सयुग्वा सहयुनक्ति सम्बन्धो भवतीति सयुग्वा भार्या अभवत्। सवितोष्णिहया तच्छन्दोऽभिमानिन्या संज्ञादेव्या सम्बभूव सङ्गतो बभूव। सा सवितुर्जायाऽभवदिति यावत्। जाययैव पतिः सङ्गतो भवति। उक्थैः शस्त्रविशेषैः प्रतिपाद्यो महस्वान् कान्तिमान् सोमो अनुष्टुभा तच्छन्दोऽभिमानिन्या रोहिण्या सम्बभूव। सा तस्य भार्याऽभवदिति यावत्। बृहती तच्छन्दोऽभिमानिनी तारा बृहस्पतेर्वाचमाधत् अधारयत्। तद्वागर्थमनुष्ठितवती। तत्पत्नी बभूवेति यावत्। लोके पत्न्येव हि पत्युर्वचनमनुतिष्ठतीति प्रसिद्धम्। विराट् तच्छन्दोऽभिमानिनी 'रेवत्यां मित्रः सर्गमरिपिप्पलं व्यधादि'ति षष्ठस्कन्धवचनाद्रेवती गङ्गा च मित्रावरुणयोरभिश्रीः अभितः श्रयत इत्यभिश्रीः भार्या अभवत् भार्यैव हि भर्तारमभिश्रयत इति प्रसिद्धम् । त्रिष्टुप् तच्छन्दोऽभिमानिनी इन्द्राणी शची अन्हः तदभिमानिनो इन्द्रस्य भागो वामभागो अभवत् । भार्येति यावत् । 'भार्याभागो वाम इति प्रसिद्ध' इत्युक्तेः । जगती तच्छन्दोऽभिमानी सर्वदेवीसमुदायो विश्वान् देवानाविवेश आविश्य भागे बभूव । भार्या जातेति यावत् । तेनैव सामग्र्यादीनां गायत्र्यादिछन्दोभिमानिस्वाहादिभार्यासम्पत्या निष्पन्नेन यज्ञेन भार्यासम्पत्तौ हि यज्ञः सम्पद्यते ऋषयो मनुष्याश्च चाक्लृप्ता चक्लृपिरे क्लृप्ता इति ।

ननु लक्ष्म्यादीनां सर्वछन्दोऽभिमानित्ववचनेनैव गायत्री बृहत्यभिमानित्वस्य लब्धत्वेन पूर्वमपि 'गायत्रीबृहती चैव ताः सर्वाः' इत्युक्तत्वेन पुनरुक्तिः स्यादित्यत आह । पूर्वोक्तं त्विति । लक्ष्म्यादीनां सामान्यतः सर्वछन्दोऽभिमानित्वेऽपि विशेषतः छन्दोद्वये सन्निधानाया-

भिमानित्वाभिप्रायेण देवी तदुक्तिरिति न पुनरुक्तिरिति भावः । यथा 'बदरिकानाथो द्वारकानाथ इत्यपि । सर्वपालोऽपि भगवान् सन्निधानविशेषतः' । इत्युक्त्यादिवदिति द्रष्टव्यम् । साक्षात् आग्न्यादिद्वारमन्तरेणैवेत्यर्थः । कामपुत्रादिवत् शचीरतिश्च अनिरुद्धस्वायम्भुवादिवत् तत्तुल्येत्यर्थः । तत्स्त्रिय इत्यत्र सूर्यादिस्त्रिय इति प्रतीयते । तदयुक्तम् । उत्तरत्र स्त्रियश्च सूर्यादेरित्युक्त्वा पृथग्वक्ष्यमाणत्वादित्यतो व्याचष्टे । तत्स्त्रियो मन्वादिस्त्रिय इति । मनुदक्षाङ्गिरःसुतानां स्त्रियः शतरूपाप्रसूतितारा इत्यर्थः ।

ननु मन्वपेक्षया पूर्वं कामपुत्रस्य निर्दिष्टत्वात्तत्स्त्रियः कामपुत्रादिस्त्रिय इति कुतो न व्याख्यातमिति वाच्यम् । स्त्रियश्च सूर्यादेरिति सूर्यादिस्त्रीसाम्येन अनिरुद्धभार्याया विराण्नाम्न्या उत्तरत्राभिप्रेतत्वादतो मन्वादिस्त्रिय इत्येवोक्तमित्यवधेयम् । प्रवाहाद्या इत्यादिपदेनाहंकारिकप्राणः प्राणादयः पञ्चदासाः ग्राह्याः । 'मरुतस्तु समाः सर्वे सप्त तेषु प्रधानका' इति श्रुतिगीता-तात्पर्यनिर्णये उक्तत्वादिति । क्रमादिति ल्यब्लोपनिमित्तापञ्चमी । क्रममविहायेत्यर्थः । तस्येदंतात्पर्यं क्रमयुक्ता इति । ब्रह्मवायुवीन्द्रेत्यादिद्वन्द्वनिर्दिष्टानां साम्योक्त्याऽनन्तरोक्तानां प्रधानमरुतो वारिपतिरित्यादि द्वन्द्वनिर्दिष्टानाम् आनन्तर्येणोक्तानां तारतम्यं सिद्ध्यति । तदयुक्तम् । प्रधान-मरुदन्तर्गतप्रवहादेः सूर्याद्यानन्तर्याभावादित्यत आह ।*प्रधानमरुत्स्विति । सूर्यादिभ्यः पूर्वं नत्वनन्तरं पठितव्य इत्यर्थः । उपलक्षणमेतत् । आहंकारिकप्राणः इन्द्रकामानन्तरं कामपुत्रात्पूर्वं पठितव्य इत्यर्थः । 'प्राणोऽहंकारिक एव च इन्द्रादनन्तरम्' इत्यनुव्याख्यानोक्तेरिति मन्तव्यम् । प्रायः साम्यमित्युक्तप्रायःशब्दव्यावृत्यर्थं दर्शयति । सूर्यसोमधर्मादीति । मनुपत्न्याश्चेति । तत्स्त्रिय इत्यत्रोक्ताया इत्यर्थः । आदिपदगृहीतानामिति । ते च नारदविश्वामित्रप्रमुखवैवस्वतमित्रा ग्राह्याः । प्रसूत्यादिस्त्रीणामिति । तत्स्त्रिय इति बहुवचनगृहीतानां प्रसूत्यादिस्त्रीणां तेभ्यो सूर्यादिभ्यो वरत्वमित्यर्थः । तथाचात्र द्वन्द्वसमासे धर्मादीत्यादिपदगृहीतानां तत्स्त्रिय इति बहुवचननिर्दिष्टानां च साम्याभावात्प्राय इत्युक्तमित्याशयः ।

ननु तत्स्त्रिय इत्यस्य मन्वादिस्त्रिय इति व्याख्यातत्वात् मनुस्त्रियश्च सूर्यादिसाम्येनोक्तत्वात् दक्षाङ्गिरसुतपत्न्योर्द्वयोरेवोर्वरितत्वात् कथं प्रसूत्यादिस्त्रीणामिति बहुवचनमिति चेदुच्यते । अत्र सूर्यादिभ्यः पूर्वं प्रवहस्य गृहीतत्वात् तत्पत्नी प्रावह्यपि ग्राह्या । तथाचास्य तद्गुणसंविज्ञान-बहुव्रीहित्वेन प्रसूतिसाहित्येन त्रित्वात् पूर्वोक्तबहुवचनमिति ध्येयम् । तथाचात्र सूर्यसोमधर्मादयश्च तत्स्त्रियश्चेति विगृह्य द्वन्द्वे द्वन्द्वनिर्दिष्टानां साम्यमेवायाति । तथाचात्र द्वन्द्वनिर्दिष्टानां प्रायः

साम्यमिति क्लेशेनानुसर्तव्य इति चेत् सत्यम् । तथाप्यादिशब्दोक्तनारदादीनां सूर्यादिसाम्याभावेन तत्र प्रायकत्वोक्तेराश्रयणीयत्वात् ।

नचादिशब्देन सूर्यादिसमाना ये केचिद्ग्राह्या इति वाच्यम् । मनुस्त्रीव्यतिरिक्तसूर्यादि-समानदेवाभावेनादिशब्दायोगात् । प्रसूत्यादिस्त्रीणामनुक्तिश्च दोषोऽत्र दुष्परिहर इति द्रष्टव्यम् । एवं योजनायां प्रसूत्यादिस्त्रीणांचेति चशब्दाभावरूपोऽस्वरसो द्रष्टव्यः । वस्तुतस्तु तत्स्त्रिय इत्येतन्मन्वादिस्त्रिय इति व्याख्यातं तत्र मनुपत्न्याः सूर्यादिसाम्यमुक्तम् । मन्वादिस्त्रिय इत्यादिपदगृहीतानां दक्षादिस्त्रीणां प्रसूत्यादीनामपि किं मनुपत्नीवत्सूर्यादिसाम्यमित्याशंक्य नेत्याह । आदिपदगृहीतानां प्रसूत्यादिस्त्रीणामिति । मन्वादिस्त्रिय इत्या(स्माभिरा)दिपदेन पूर्वं गृहीतानां प्रसूत्यादिभ्योऽवरत्वं ज्ञातव्यमित्यर्थः । सूर्यसोमधर्मादीत्यत्र आदिपदेन तु अत्रानुक्तत्वादादिशब्दार्थो नोक्त इत्यवगन्तव्यमिति सम्प्रदायविदः ।

ननु वारिपतेर्धर्माद्यनन्तरत्वात् कथं मरुदानन्तर्योक्तिरित्यत आह । वारिपतिरिति । उपलक्षणं चैतत् । अश्विनौ निर्ऋतेरनन्तराविति । ज्ञातव्यम् । अयमत्र तारतम्यसङ्ग्रहः । विष्णुः सर्वोत्तमोऽथप्रकृतिरथ ब्रह्मवायू अथ ब्रह्माणी भारती च ततो गरुडशेषमृडाः, ततो जाम्बवत्याद्याः भगवन्महिष्यः षट् । अन्यत्रोक्तत्वात् । अनन्तरं सौपर्णी वारुणी पार्वतीच । अथेन्द्रकामौ । अथ तैजसाहंकारिकः प्राणः । अथानिरुद्धः स्वायम्भुवमनुर्दक्षो बृहस्पतिः शची रती । अथ प्रवहस्ततः सूर्यचन्द्रौ यमधर्मो मानवी च । अथ वारिपतिरथो नारदो भृगुरग्निर्दक्षभार्या प्रसूतिश्च । अथ विश्वामित्रो मरीचिरत्र्यंगिरसपुलस्त्यपुलहक्रतुर्वसिष्ठो वैवस्वतमनुश्च । ततो मित्रो निर्ऋतिस्ताराप्रावही च । ततो विष्वक्सेनोऽश्विनौगणपतिधनपाः उक्तशेषाः मरुद्रुद्रादि-शतस्थदेवाश्च । तत उक्तेतरा अनुक्तदेवाः एकादशमनवश्च्यवनौचथ्यवैन्यशशिबिन्दुहैहय-प्रियव्रतगयाः अथ गङ्गापर्जन्य संज्ञारोहिणी धार्मी अनिरुद्धभार्या विराण्नाम्नी । ततो जलाभिमानी बुधः तत उषा पृथिव्यात्मा शनिः । ततः कर्माभिमानी पुष्करः प्रत्यवरः अन्यत्रोक्तत्वादिति । भाष्ये अनन्तकोटिशतकदशार्धाद्यंशत इति । सर्वे त्वेते दशोत्तराः पर्जन्यमित्रशशिनो भूतवायुस्तथैव च । द्विगुणा एवानिरुद्धोऽनिलात्पञ्चगुणाधिकः । पादोनो वरुणादग्निः अध्यर्धोनः ससोमतः । शिवादाशा तथैवास्या मुख्यवायुः शतोत्तरौ । ततो लक्ष्मीः कोटिगुणा ज्ञानसौख्यादिभिर्गुणैः । ततस्तु भगवान् विष्णुरनन्तगुणतोऽधिकः' । इति छान्दोग्यभाष्योदाहृतप्रमाणानुसारेणै-तद्भाष्यार्थो द्रष्टव्यः ।

प्रमाणे दशशतशब्दो यथायोग्यं बहुत्ववाची द्रष्टव्यः। श्रुतिलिङ्गादिनेत्यत्र रुढःशब्दः श्रुतिः, 'लिङ्गं स्वरूपमुद्दिष्टं लिङ्गं ज्ञापकमेव चे'ति वचनानुसारेण ज्ञापकेनेत्युक्तम् । यत्र स्ववाचकश्रुतिलिङ्गं चास्ति तत्रैवैते प्रतिपाद्या न तु सर्वत्रेति भावः। पूर्वप्रसिद्धवर्जमिति। स्वोत्तमेषु प्रसिद्धसूक्तभागं वर्जयित्वेत्यर्थः । विष्ण्वाद्या इति । इन्द्रादवरदेवविष्ण्वाद्याः शक्रान्ता अपि श्रुतिविशेषलिङ्गादिनैव देवताः अतो नोक्तविभागोऽयुक्त इति भावः । देवतास्थितिरिति । वेदप्रतिपाद्यदेवतास्वरूपस्थितिरित्यर्थः । वेदादिवर्णपर्यन्तमिति । समस्तवेदमारभ्य ऋगादि-शाखाष्टकाध्यायसूक्तवर्गऋगर्धर्चपादद्वारा वर्णपर्यन्तमित्यर्थः । यथा न्यायमिति । यथोक्त-स्तैस्तैर्युक्तिश्रुतिन्यायविशेषयोग्यता यथेति । विद्यास्विति । तत्र प्रसिद्ध-व्यतिरिक्तांभृणीसूक्तादिविद्यास्वित्यर्थः।

## पदार्थदीपिका

तासां स्मृतिरुदीरिता तेषां चेत्युक्ते अनुवृत्यादेर्ज्ञातुं शक्यत्वेऽपि पुनः स्वशब्देन तदुक्तेः प्रयोजनमाह। तात्पर्यद्योतनायेति। मुनित्वेन तासां तेषां च स्मृतिः। कर्तव्यतयोदीरितेत्युक्ते साम्यप्रतीतिः स्यात् परिहाराय स्त्रीभ्योतिशयेन भर्तृणां मुनित्वेन स्मृतिः कर्तव्येति ज्ञापनायेत्यर्थ इति वा। अत एवोक्तं भाष्ये स्वभर्तृनन्तरेति। टीकायामपि प्राय इति ज्ञेयम्। छन्दोदैवतोक्त्यनन्तरं छन्दस्त्वेन तासां स्मरणस्य विधाने गौरवं मुनित्वेन स्मरणविधानवसर एव छन्दस्त्वेनापि तद्विधाने तु लाघवं भाष्याभिप्रेतमिति भावेन छंधस्त्वेन श्लोकं प्रति सुसंगत्यर्थं छन्दस्त्वेनापि तद्विधानेति पदं त्यक्त्वा प्रथमं व्याख्यायेदानीं छंदस्त्वेनेत्यर्थम् उत्तरसङ्गत्यर्थं मुनित्वेनेति पदं विहाय प्रकारान्तरेण व्याचष्टे ॥ एवमृषीनिति। ताः सर्वा इत्येतत् प्रागुक्ता इति व्याख्याय काः प्रागुक्ता इत्यतः प्राचीनभाष्यपादमनुवदति। श्रीरिति। स्वाहेत्यादि गायत्र्यन्तं भाष्यमग्रे गायत्र्यभवत् सयुग्वेति श्रुत्येकदेशव्याख्यानमिति भावेनाह। नकेवलमिति। वक्ष्यमाणेति। जगत्यः सर्वदेवास्त्रयोमता इत्यत्र वक्ष्यमाणसर्वदेवस्त्रियोप्यत्र देवता इति ज्ञापयितुं चशब्द इति भावः । अन्यथोक्तीति । अग्नेर्गायत्र्यभवदिति श्रुतेरर्थान्तरं प्रतीत्य अग्निः सविता सोमो बृहस्पतिमित्रावरुणार्विश्वेदेवा देवता इत्यादिना गायत्र्यादिछन्दसां यथाक्रमम् अग्न्यादिदेवताकत्वप्रतिपादिकाया परकी-योक्तीस्तन्निरासायेत्यर्थः । रोहिणी तथा अनुष्टुबिति भाष्यम् अनुष्टुभासोमउच्चैर्सहस्वानिति श्रुतिभागव्याख्यानमिति भावेन व्याचष्टे। न केवलमिति। एवं ताराचेति। न केवलं लक्ष्म्याद्याः किन्तु ताराबृहतीत्यर्थः। अनेन बृहस्पतेर्बृहतीवाचमावदिति श्रुतिपादोऽपि व्याख्यात इति भावः।

उष्णीक् सैरीति भाष्यम् उष्णीहया सविता सम्बभूवेति श्रुतेस्तात्पर्यमित्यभिप्रेत्याह। सौरी उष्णिगिति। जगत्य इत्यादिमता इत्यन्तं भाष्यं विश्वान् देवान् जगत्या विवेशेति श्रुतिव्याख्यानमिति भावेन व्याचष्टे। सर्वदेवस्त्रियश्चेति। चशब्देन पूर्वोक्तवारुणीसमुच्चयो ज्ञेयः। विराडित्यादि कीर्त्तित इत्यन्तभाष्यं विराण्मित्रावरुणयोरभिश्रीरिति व्याख्यानपरमिति भावेन योजयति। मित्रावरुणयोरिति। सर्वाण्यतिछन्दांसीति। अतिजगती शक्र्यतिशक्र्यष्टयत्यष्टिधृत्यतिधृतयः सप्तातिछन्दांसि ज्ञेयानि। गायत्र्युष्णिक् अनुष्टुप् बृहती पंक्ती त्रिष्टुप् जगत्यः सप्तछन्दांसीति विवेकः। यस्य छन्दसो यावन्तो वर्णा इति अत्रेयछन्दसां विवक्षिता वर्णसंख्या चतुर्विंशतिगायत्री अष्टाविंशतिरुष्णिक् द्वात्रिंशदनुष्टप् षट्त्रिंशत् बृहती चत्वारिंशत् पंक्तिः चतुश्चत्वारिंशत् त्रिष्टुप् अष्टाचत्वारिंशज्जगती द्वापंचाशदतिजगती। षट्पञ्चशत्छकरी षष्ठीरतिशक्करी चतुःषष्ठिरष्टि। अष्टाषष्टिरत्यष्टिः द्वासप्ततिर्धृतिः षट्सप्ततिरतिधृतिः। अनेन प्रकारेण चतुर्विंशत्यादीनि चतुरुत्तरवृध्या षट्सप्तत्यंतानि सर्वाणि छन्दांसि भवन्ति। तत्रचतुर्विंशत्यादीनि चतुरुत्तरवृध्या अष्टाचत्वारिंशदंतानि गायत्र्यादीनि अतिधृत्यंतानि सप्तातिछन्दांसीति बोध्यम्। एवं न्यूनत्वादिनेति। त्रयोविंशत्यक्षरा निचृद्गायत्री। यथाग्निः पूर्वेभिर्ऋषिभिरिति। पञ्चविंशत्यक्षरा भूरिक् गायत्री विद्वांसः विदुरः पृच्छेदिति। एवं द्वाविंशत्यक्षरा विराट्गायत्री। यथाराजन्तमध्वराणामिति षड्विंशतिः। स्वराट्गायत्री यथाजोषा सवितर्यस्यते हर इति विवेकः। तथा उष्णिगाद्या अपीति। स्वस्वविवक्षिताक्षरेषु एकाक्षरो नानिवृत्संज्ञाः एकाधिकाभूरिकसंज्ञाः। द्वाभ्यामूनाभ्यां विराट्संज्ञाः द्वाभ्यामधिकाभ्यां स्वराट्संज्ञा इत्यर्थः। प्रस्तारेत्यादिकं चेति विन्यासभेदो नाम यस्य छन्दसो यावन्ति नियतान्यक्षराणि तावदक्षरवत्वेऽपि पादेषु समाक्षराभावेन कस्यचित्पादस्य न्यूनाक्षरत्वं सम्पादनेन कस्यचिदधिकाक्षरत्वसम्पादनेन न्यूनाधिक्येऽपि तारतम्यं तेनचावान्तरभेदानां प्रस्तारपंक्तिरित्यादिसंज्ञाविशेषा इत्यर्थः। आदिपदेन चास्तारपंक्त्यादेः संग्रहः। प्रस्तारपङ्क्तिश्च पादौ द्वादशकावायौस्त्वष्टाक्षरो परौ यस्याः प्रसारपङ्क्तिः स्यादित्यादि-नोक्ता पङ्क्तिप्रभेदरूपा द्रष्टव्या। एतच्छन्दो ग्रन्थादतिउपयुक्तं लेशतो लेखिविस्तर-भयान्न बहुलिख्यते इति भावः।

एतेनेति। तत्र छन्दोभिमानितया तच्छन्दो नामवत्वप्रतिपादनेनेत्यर्थः। व्याख्यातमिति गायत्र्यभिमानित्वात् गायत्रीनाम्नी स्वाहाग्नेः स युग्वा सह वासमानं वा युनक्तीति सयुग्वाभार्या भवदित्यादिव्याख्यातं भवतीत्यर्थः। पूर्वोक्तं त्विति। गायत्री बृहती चैव ता सर्वा इति ब्रह्माण्यनुष्टुबिति च यत् गायत्र्यादिछन्दोविशेषदेवतात्वं तासामुक्तं तदभिमानविशेषविवक्षये-

त्याशयः । अग्निं व्यावर्तयति । अंगिरः सुतो बृहस्पतिरिति अत्र प्रायो द्वन्द्वगृहीतानामिति अनुव्याख्याने प्राय इन्द्रवत्काम इत्युक्त्वा तत् व्यावर्ततया काम इन्द्राद्यमोल्पत इति कामस्याल्पमिन्द्राद्यमत्वमुक्तं तदत्रापि शक्रः कामवित्युक्ते अनुसंधेयमिति भावेन प्रायः शब्दः । यद्वा द्वन्द्वापवादकैकशेषस्यापि द्वन्द्वशब्देन ग्रहणं तथाच प्रधानमरुत्प्रवह इत्याद्युत्तरवाक्योक्तमेव प्रायःशब्दव्यावर्त्यमिति ध्येयम् । ननूपपत्याश्चेति । सोमवस्थात् रूपाचेति इन्द्रसाम्योक्तेरिति भावः । आदिपदेनेति । धर्मादीत्यादिपदेन गृहीतानां तत्स्त्रिय इति बहुवचनगृहीतानां दक्षपत्न्यापि स्त्रीणां च सूर्याद्यवरत्वम् अतः प्रायः इत्युक्तमिति भावः । न च ता स्त्रिय इत्यत्र तच्छब्देन मनुमात्रपरामर्शे सूर्यसोमधर्मादयश्च तत्स्त्रीचेति विगृह्य द्वन्द्वे न कश्चिद्दोष इति वाच्यम् । तथाप्यादिशब्दानुपपत्या प्राय इति वक्तव्यत्वात् न च शतरुपाव्यतिरिक्ताः सूर्यादिसदृशाः केचित्सन्ति येनादि-शब्दोपपत्तिःस्यात् । प्रसूत्यादिस्त्रीणामनुक्तिश्च दोषो दुष्परिहर एवेति ध्येयम् । ज्ञापकेनेति । लिङ्गस्वरुपमुद्दिष्टं लिङ्गं ज्ञापकमेवेचेत्यभिधानादिति भावः ।

## टीकाविवृतिः

भाष्येछन्दस्त्वेन मुनित्वेनेत्येकवाक्येनैव लक्ष्म्यादीनां मुनित्वेन छन्दस्त्वेन चस्मरणं लाघवाय विहितं तद्विवरणाय छन्दस्त्वेनेतिपदं त्यक्त्वोत्तरग्रन्थमवतार्य शेषं पूरयति ।। संत्वेता इति ।। ननु तासां तेषां चस्मृतिरुदीरितेत्येव वक्तव्ये स्मर्तव्यास्तेचेतिपृथग्योगः किमर्थ इत्यत आह ।। तात्पर्येति ।। स्त्रीभ्यो विशेषाद्भर्तृस्मृतिः कार्येतिद्योतनायेत्यर्थः । इदानीं मुनित्वेनेतिपदं त्यक्त्वो-र्वरितपूर्वार्धमवतारयति ।। एवमृषीनिति ।। तासामिति ।। श्रीब्रह्माण्यादीनामित्यर्थः । इन्द्रस्य त्रिष्टुबिहभागो अह्न इति श्रुत्यर्थमाह ।। इन्द्राणीति ।। अग्नेर्गायत्र्यभवत्सयुग्वेत्यस्यार्थमाह ।। स्वाहाचेति ।। एतद्दग्द्वयार्थ उत्तरत्रोच्यते । चशब्दः पूर्वोक्तसमुच्चयार्थ इति भावेनोक्तम् ।। नकेवलमिति ।। वक्ष्यमाणेति ।। जगत्यश्च सर्वदेवस्त्रियोमता इति वक्ष्यमाणेत्यर्थः । पिङ्गलनागेन गायत्र्यादिसप्तछन्दसामग्नेर्गायत्र्यभवदित्यादि श्रुतेरर्थान्तरं बुध्वा अग्निःसवितासोमो बृहस्पतिर्मित्रावरुणाविन्द्रो विश्वेदेवा देवता इत्युक्तं तन्निरासायाह ।। एवशब्द इति ।। प्रमाणविरुद्धत्वादित्याशयः ।। रोहिणीचानुष्टुबिति ।। अनुष्टुभासोम उक्थैर्महस्वानित्युक्तेरितिभावः ।। एवं ताराचेति ।। बृहस्पतेर्बृहतीवाचमावदित्युक्तेरेव ।। शचीपङ्क्तिश्चेति ।। चाद्विराट्छंदो ग्रहणम् । पङ्क्तेश्चत्वारिंशदक्षरत्वाद्विराजोपि पादचतुष्टयमङ्गीकृत्य पिङ्गलेनैकपादलक्षणस्य दशाक्षरत्वस्य विराजो दिशः त्रिष्टुभोरुद्राजगत्या आदित्या इत्यनेनोक्तत्वात् । दिशां दशत्वाद्दिक्शब्दो दशानां

संज्ञा । एवंरुद्रा एकादश । आदित्या द्वादशेति बोध्यम् । गायत्रं प्र उगं कुर्यादित्याहुरित्यादौ पञ्चमप्रधानच्छन्दस्त्वेन या पङ्क्तिरुक्ता सैवाग्नेर्गायत्र्यभवदिति श्रुतौ पञ्चमत्वेन विराडित्युक्ता । अत उभयश्रुत्यनुरोधादुभयोर्देवताकथिताभाष्ये । नतूभयोश्छंदसोःप्राधान्यविवक्षया । इतरथा सप्तछन्दांसीति श्रुतिविरोधःस्यात् । अतःपङ्क्तिर्विराडिति नामभेदमात्रमित्याशयः । उष्णिह-यासवितासंबभूवेत्यस्य तात्पर्यभाष्यार्थमाह ॥ सौरीति ॥ विश्वान्देवाञ्जगत्या विवेशेत्य-स्यार्थरूपभाष्यार्थमाह ॥ सर्वदेवेति ॥ चाद्वारुणीग्राह्येतिभावः । विराण्मित्रावरुणा-योरभिश्रीरित्यस्यार्थरूपभाष्यार्थमाह ॥ मित्रेति ॥ इतिचेति चशब्दस्य मित्रावरुणयोर्भार्येचेत्यन्वयेन वक्ष्यमाणसर्वदेवस्त्रियः पङ्क्तिदेवतात्वेनोक्ता शचीच समुच्चीयन्ते । विराडिति च नामा सामिति वक्ष्यमाणत्वात् । यद्यपि लोके उक्तात्युक्तातथा मध्या प्रतिष्ठा सुप्रतिष्ठेत्यादिना षड्विंशतिछन्दांसिच तुरक्षरमारभ्य चतुरुत्तरशताक्षराण्युक्तानि छन्दोग्रन्थेषु तथाप्यृग्वेदेऽनुक्रमणिकाकारेण सप्तछन्दांस्युक्तानि । तानिच गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तिस्त्रिष्टुब्जगतीति । सप्तातिछन्दांसिच । अतिजगतीशक्वर्यतिशक्वर्यष्टयत्यष्टीधृत्यतिधृतीति । गायत्र्यादीनां लक्षणान्युक्तानि तत्रैव । चतुर्विंशत्यक्षरादीनि चतुरुत्तराणीति । अस्यार्थः । गायत्र्याश्चतुर्विंशत्यक्षरत्वं उष्णिगादि-त्रयोदशानांतुक्रमाच्चतुरुत्तरवृद्ध्या षट्सप्तत्यक्षरान्तत्वंभवतीति । एवमेवतदुत्तरेषांकृतिप्रकृत्याकृति-विकृतिसंकृत्यतिकृत्युत्कृतीनांचचतुरुत्तरवृद्ध्या चतुरुत्तरशताक्षराणि भवन्ति । एषां सर्वेषां ग्रहणार्थं भाष्येऽति छन्दांसि सर्वाणीति सर्वग्रहणमित्याशयः ॥ तदवान्तरभेदानाहेति ॥ उपलक्षणमेतत् । तदवान्तरभेदानां देवताश्चाहेति ग्राह्यम् । ऊनाधिकेष्वपीत्यत्रापिशब्दार्थमाह ॥ विन्यासेति ॥ पादानामितिशेषः । प्रस्तारेत्यादीति वक्ष्यमाणत्वादित्याशयः । ऊनाधिकेनैकेन निचृद्भुरिजौ । द्वाभ्यां विराट्स्वराजावित्यनुक्रमणिकोक्तं विवृणोति ॥ एकेनाक्षरेणन्यूनेति ॥ निचृदादिभेदचतुष्टयं गायत्र्यादिछन्दःसाधारणमित्याह ॥ एवं न्यूनत्वादिनेति ॥ अत्रायं विशेषः । यद्वाभ्यां वर्णाभ्यामधिकत्वात्स्वराट् गायत्रीसैवोष्णिग्विराडुच्यते । अष्टाविंशत्यक्षरोष्णिहांपेक्षया क्षरद्वयन्यूनत्वादेवं त्रिंशदक्षरास्वराडुष्णिगेव विराडनुष्टुबुच्यते । एवमुत्तरच्छन्दस्स्विति ॥ प्रस्तारेत्यादिकश्चेति ॥ आदिशब्दात्संस्तारास्तारविष्टाराणां ग्रहणम् ॥ छन्दोग्रन्थादिति ॥ पिङ्गलसूत्रानुक्रमणिकादेरित्यर्थः । तदुक्तमनुक्रमणिकायाम् । आद्यौचेत्प्रस्तारपङ्क्तिराद्यंत्यौ-चेत्संस्तारपङ्क्तिरंत्यौचेदास्तारपङ्क्तिर्मध्यमौचेद्विस्तारपङ्क्तिरिति । अत्राथचतुष्पदेत्यधिकाराच्चतुष्पद-युक्तत्वेसिद्धेजागतौ सतो बृहतीत्यतोजागतावित्यनुवृत्तावाद्यौपादौ प्रथमद्वितीयौ जागता-वित्यर्थःसंपन्नः । तृतीयचतुर्थौत्वनादेशेष्टाक्षराःपादा इति पूर्वोक्तेरष्टाक्षरौ सिद्धौ । एतादृशी-

प्रस्तारपङ्क्तिरेवमेवंजागतौ पादावाद्यांत्यौगायत्रावित्यर्थो भवति । एवं विन्यासभेदेनेत्युक्त्या गायत्र्युष्णिगवान्तरभेदाः पुर उष्णिगादयोऽपि ग्राह्या इति सूचितम् ॥ एतेनाग्नेरिति ॥

अग्नेःसयुग्वासहयुज्यतेधर्मादौ नियुज्यते युङ्क्तेवा । सहपूर्वाद्युजेरन्येभ्योऽपिदृश्यन्त इति कर्मणि कर्तरिवा क्वनिप् । छान्दसं कुत्वम् ॥ सहस्यसादेशः । सखा जाया स्वाहा । सखाहजायाकृपणं दुहितेतिश्रुतेः । गायत्र्येतदभिमानिन्यभवत् । सविता उष्णिगभिमानिन्या स्वभार्यया आपन्नेव हलंतानामित्युक्तेर्हकारान्तोष्णिह् शब्दाट्टाप् । संबभूव अग्निहोत्रादिसत्कर्मयुक्तोऽभूत् । उक्थैः उक्थमुत्थायकत्वादित्यैतरेयभाष्योक्तेर्जगत्सृष्टिकर्तृत्वाद्विष्णुब्रह्मवायुभिस्तत्प्रसादेनेतियावत् । उत्तमवचनैर्वा । महस्वान् पूज्यः । महपूजायाम् अस्माद्भावेऽसुन् । तदन्ताद्बहुलं छन्दसीतिमतुप् । सोमः अनुष्टुभा तद्देवतया रोहिण्यासंबभूवेत्यन्वयः । बृहस्पतेर्वाचमाज्ञारूपाम् आवत् अरक्षत् तदाज्ञा कारिणी पत्नीतियावत् । साबृहत्यभवत् । मित्रावरुणयोः अभिश्री: सर्वप्रकारेणाश्रितापत्नी । सुपां सुर्भवतीतिद्विवचनस्य सुः । पत्न्यौ विराट् एतदभिमानिन्यौ जाते अह्नः अहनि कस्मिंश्चित् । अहरभिमानिनो वेन्द्रस्यभागः अर्धशरीरं पत्नीशचीत्रिष्टुप्जाता । जगती एतदभिमानिन्योदेव्यः विश्वान्देवान्स्वस्वपतिम् आविवेश सदा तदधीना बभूवुः । तेनाग्न्यादिभार्यादि देवताकगायत्र्यादिछन्दोनिष्पन्नयज्ञेन ऋषयो मनुष्याश्च चाकृप्रे चकल्पिरे ज्ञानादावितिशेषः । समर्था अभूवन् । कृपूसामर्थ्ये लिटि इरयोरे इति इरे इत्यस्यरे इत्यादेशे अभ्यासस्य छान्दसं दीर्घम् । इति व्याख्यातमित्यर्थः ॥ नैतावदेवेति ॥ गायत्रीबृहत्योरेवदेवता इति नेत्यर्थः ॥ इत्युक्तानामिति ॥ सर्वाभिमानित्वादित्याशयः । तर्हि गायत्रीबृहतीचैव ताः सर्वा इति ब्रह्माण्यनुष्टुब्रितिच व्यर्थमित्यत आह ॥ पूर्वोक्तंत्विति ॥ गायत्र्यादिछन्दस्सु लक्ष्म्यादीनामुष्णिगाद्यपेक्षयाविशेषाभिमानद्योतनाय तदुक्तिरित्याशयः । लक्ष्म्यादिवत्सर्वविद्यादेवतात्वं विष्णोरित्याशङ्कावारणायोक्तं स्वयमिति । तद्व्याचष्टे ॥ स्वयं साक्षादिति ॥ परममुख्यया वृत्त्येत्यर्थः । देवताशब्देनास्यान्वयो ज्ञेय इतिभावः ॥ प्रभुरितीति ॥ निरुपचरितसर्वस्वामित्वात्सर्ववस्तुगत प्रवृत्तिनिमित्तानां विष्ण्वधीनत्वात्सर्वविद्याप्रतिपाद्यत्वमितिभावः ॥ पुरुषसूक्तादीति ॥ आदिशब्दाद्विष्णुसूक्तहरिसूक्तादिगृह्यते ॥ अंभृणीसूक्ताद्या इति ॥ आद्यपदेन श्रीसूक्तादिग्राह्यम् ॥ प्रसिद्धा विद्या इति ॥ ब्रह्मणि वायौच प्रसिद्धा हिरण्यगर्भेत्यादिवळित्थेत्याद्या विद्यावर्जयित्वान्यविद्यावर्जयित्वान्यविद्यानां सरस्वतीभारत्यौ देवते । प्रधानमरुदानन्तर्यं भाष्ये वारिपतेरुक्तमयुक्तम् । उक्तप्रमाणविरोधादित्यत आह ॥ वारिपतिरिति ॥ अश्विनोरपिनिर्क्रतेरानन्तर्योपलक्षणमिदम् । लिङ्गं ज्ञापकमेवचनेत्यभिधानाल्लिङ्गशब्दःश्रुतिलिङ्गादिपर इत्याह ॥ श्रुतिलिङ्गादिनेति ॥ विष्ण्वाद्या इति ॥ अपीतिशेषः

॥ समासव्यासयोगेनेति ॥ समासः संकोचो व्यासो विस्तारः । एतदेव विशदयति ॥ समस्तवेदेनेति ॥ अन्यासामितिस्त्रीलिङ्गनिर्देशादाह ॥ लक्ष्म्यादीति ॥

## ऋग्भाष्यम्

ऋक्संहितायां स्वाध्याये निरुक्ते व्यासनिर्मिते ।
प्रवृत्ते चैतदखिलमुक्तं हि प्रभुणा स्वयम् ।
सर्वे वेदाश्च नामानि तावा एता ऋचस्तथा ।
इन्द्रं मित्रं वरुणमित्याद्यत्र च प्रमा परा ।
देवतातारतम्यं च सर्वोत्कृष्टं च केशवम् ।
ज्ञात्वैव मुच्यते ह्यस्मान्नान्यथातु कथंचन ।
इति पैङ्गिश्रुतिश्चाह दृश्यतेऽत्र च सर्वशः ।
नतेमहित्वमित्यादिनेश्वरानेव केवलान् ।
गुणान्विष्णोः श्रुतिर्ह्याह नैव दोषान्कथंचन ।
जातापरिवभूवेति मर्यादां ब्रह्मणोऽपिहि ।
नैवेमे विभेद् ब्रह्मा नासीदित्यादिकानपि ।
दोषान्रुद्रे च तानेव नमिनंतीति पूर्वकान् ।
यं कामये तं तमुग्रं रुद्राय धनुरित्यपि ।
अस्य देवस्य मा शिश्नदेवा अपि गुरित्यपि ।
घ्रन्छिश्नदेवानित्याद्या दोषा वहव ईरिताः ।
ततो त्रितिष्टि योनिः स एतावत्यहमित्यपि ।
अन्याश्रयत्वं देव्याश्च कथितं वहुशोऽपिहि ।

## ऋग्भाष्यटीका

एवमृषिच्छन्दोदेवतास्वरूपमुक्त्वा तत्र प्रमाणमाह ॥ ऋक् संहितायामिति । यास्कनिर्मितप्रसिद्धनिरुक्तव्यावृत्तये व्यासनिर्मित इति । विष्णोः सर्वविद्याप्रतिपाद्यत्वे श्रुतीरपि पठति । सर्वइति ॥ ''सर्वे वेदा यत्पदमामनन्ति नामानि सर्वाणि यमाविशन्ति तावा एताः सर्वा ऋचः इन्द्रं मित्रं वरुणमग्निमाहुः'' इत्यादीत्यविभक्तिको निर्देशः । ''सुपां सुलुगि''ति स्मरणात् । इत्यादिका । अत्र विष्णोः सर्वविद्यावेद्यत्वे । परा ऋक् संहितादितोन्यात्र प्रमास्ति । विष्णोः सर्वोत्तमत्वान्मुख्यतः

सर्वविद्यावेद्यत्वं लक्ष्म्यादीनामप्याधिक्यतारतम्यानुसारेण विद्यावेद्यत्वमित्युक्तम् । तदाधिक्यतारतम्यं प्रमाणैः साधयन्विष्णोः सर्वोत्तमत्वं तावदादौ साधयति ॥ देवतेति ॥ अस्मात् संसारात् । अत्र च अस्यामपि शाखायाम् । सर्वज्ञो विष्णोः सर्वोत्तमत्वादिकं दृश्यते । अत्रेति प्राचुर्याभिप्रायम् । यद्वाऽत्र च प्रसिद्धास्वपि श्रुतिष्वित्यर्थः । तत्कथमित्यत आह ॥ न त इति ॥ ''परोमात्रया तन्वावृधान नते महित्वमन्वश्नुवन्ती''त्यादिना श्रुतिः सर्वोत्तमत्वादीन् गुणान् विष्णोराह । तांश्च केवलानीश्वरानेव विष्णुमात्रनिष्ठानाह । दोषांस्तु क्वापि श्रुतिरस्तस्य न वक्ति । अतोऽनन्य-साधारणात्युत्तमानन्तगुणवत्त्वान्निर्दोषत्वाच्च तस्य सर्वोत्तमत्वं ज्ञायते । नन्वेवं भावो ब्रह्मरुद्रादीनामपि विद्यत इति नेत्याह ॥ जातेति ॥ ''प्रजापते नत्वदेतान्यन्योविश्वाजातानि परितावभूव'' । हे प्रजापते भवान् जातानि उत्पत्तिमन्ति । विश्वानि सर्ववस्तूनि । परिभूतवान् । तत्स्वामित्वेन वर्तते । त्वदन्यस्तु नपरिता वभूवेति श्रुतिर्ब्रह्मणोप्यैश्वर्यस्य मर्यादामाह । जातेति विशेषणेनाजातविश्वपरिभवनस्य प्रतिषिद्धत्वात् । ''सवै नैव रेमेसोऽविभेत्'' ''एकोनारायण आसीन्नब्रह्मे''त्यादिना दुःखभयादिकान् दोषानपि ब्रह्मणः श्रुतिराह । अतो न तस्य भगवत्साम्यम् । नापि रुद्रस्य । यतो ''नयस्येन्द्रोवरुणोनमित्रो व्रतमर्यमा नमिनंति रुद्रः । नारातयस्तमिदं स्वस्तिहुवेदेवं सवितारं नमोभि''रित्यादिका श्रुतिः । यस्य विष्णोः व्रतं कर्मेन्द्रो नमिनाति नजानाति । गतिकर्मसु पाठात् । नवरुणः नमित्रो नार्यमा नरुद्रः अरातयो दैत्या अपि नमिनन्ति । विश्वस्य प्रसवितारं देवं नमोभिर्नमनैरिदमैहिकामुष्मिकं स्वस्ति सुखमुद्दिश्य हुवे ह्वयामीत्यज्ञानपूर्वकांस्तान्दोषानेव रुद्रे चाह । तदेव स्पष्टयति ॥ यमिति ॥ यमिति ''यं कामयेतं तमुग्रं कृणोमि अहं रुद्राय धनुरातनोमि'' ''अस्य देवस्य मीळ्हुषः माशिश्नदेवा अपि गुर्ऋतं नः व्रन् शिश्नदेवाम् अभिवर्षसाभूदि''त्यादि श्रुतौ पराधीनपदप्राप्त्याद्या बहवो दोषा रुद्रस्योक्ताः । ''अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वतःसमुद्रे । ततो वितिष्ठे भुवनानु विश्वो तामूं द्यां वर्ष्मणो पस्पृशामि । परो दिवापर एना पृथिव्यै तावती महिना सम्बभूवे''ति श्रीदेव्या अपि भगवदाश्रयत्वं बहुशः कथितम् । ततो न सापि तत्समेति । यस्मादहं ततः परमेश्वराद्वितिष्ठे उत्थितोत्पन्ना । तस्मादसौ मम योनिरित्यर्थः । वर्ष्मणा बलेन शरीरेण च । उपस्पृशामि वशीकरोमि । व्याप्नोमिच । सम्बभूव तत इति वर्तते ।

## पदार्थप्रकाशिका

ननु इत्यादिनेति प्रमेति वक्तव्यमित्यादीति कथमित्यत आह । अविभक्तिक इति । लुप्तविभक्तिक इत्यर्थः । तत्र ज्ञापकं सूत्रमाह । सुपामिति । 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः' सुपां

सुलुक् पूर्वसवर्णादयः आदेशाः स्युरिति सूत्रार्थः । तथाचात्र सुपो लोप इत्यादीति लुप्तविभक्तिको निर्देशो जात इति भावः । प्रमा प्रमापिका । अस्यां शाखायाम् ऋक्शाखायाम् । ननु शाखान्तरस्याप्यत्रार्थ उत्तरत्रोदाहरिष्यमाणत्वादत्रेति विशेष्यं कथमुक्तमित्यत आह । अत्रेति । 'प्राण ऋच इत्येव विद्यात्' इत्यादावृक्शाखायाः प्राचुर्येण भगवत्प्रमापकत्वाभिधानादत्राप्युत्तरत्र प्राचुर्येण ऋक्शाखैवोदाह्रियते । अतोऽत्र चेत्युक्तमिति भावः । अत एवास्वरसादाह । यद्वेति । विष्णुमात्रनिष्ठानिति । हे स्वमूर्त्यैवापरिच्छिन्न, न तु राजादिवत्कीर्तिमात्रेणैतादृशस्त्वं मात्राया मितेः परोऽसि ते महित्वं केऽपि न अन्वश्नुवन्ति इत्युक्तत्वादिति भावः । न ते महित्वमित्यनेनानन्यसाधारणत्वादिति भावः । मितेः परत्वोक्त्याऽनन्तगुणत्वलाभ इति द्रष्टव्यम् । विश्वा जातानि परि ता बभूवेत्यत्र परि बभूव ता अस्य इति पदच्छेदः । अत्र ता इत्यस्य तानीति स्पष्टत्वात्तन्न व्याख्यातम् । सर्ववस्तूनि परिबभूवेत्यस्यार्थः परिभूतवानिति वशीकृतवानिति । तत्स्वामित्वेन वर्तत इत्यर्थलब्धार्थ इत्यभिप्रेत्योक्तम् । तत्स्वामित्वेन वर्तत इति । अत एव कविर्मनीषी परिभूरित्यत्र परिभवति सर्वानिति व्याख्यातम् । परिभवति तत्स्वामित्वेन वर्तत इत्यर्थो द्रष्टव्यः । कथमनेन ब्रह्मण ऐश्वर्यमर्यादा लभ्यत ? इत्यत आह । जातेति । विशेषविधिः शेषनिषेधं गमयतीति न्यायादिति भावः । अजातविश्वेति । मुक्तब्रह्मा व्याकृताकाशादीत्यर्थः । व्रतं कर्मेति । विष्टी व्रतं कर्मेति कर्मनामसु पाठादिति भावः । मिन् धातोर्ज्ञानार्थत्वं कुत इत्यत आह । गतिकर्मस्विति । मिन् गताविति गत्यर्थकधातुषु मिनोतेः पाठात् गत्यर्थानां च ज्ञानार्थत्वादिति भावः । स्वस्ति सुखमिति । 'सद्भाववाचिनः शब्दाः सर्वे ते सुखवाचका' इत्युक्तत्वादिति द्रष्टव्यम् । पराधीनपरप्राप्त्याद्या इति । यमुग्रं कर्तुं कामये तमुग्रं रुद्रं कृणोमीति महालक्ष्मीवचनेन पराधीनपदप्राप्तिः प्रतीयते । अहं रुद्रं, हन्तुं धनुर्विस्तारयामीत्यनेन महालक्ष्मीविस्तृतधनुर्लक्ष्यत्वोक्त्या पराधीनत्वम् । अरय्येत्यनेन भगवत्पूजालब्धभगवत्पदप्राप्त्युक्त्या पराधीनपदोक्तिः । नो अस्माकम् उपास्यम् । ऋतं यथार्थज्ञानरूपं ब्रह्म । शिश्नदेवाः रुद्राः मागुर्न ज्ञातवन्त इत्यज्ञता । शिश्नदेवान् घ्नन् सन् वर्पसा बलेन सर्वमभ्यभूदभिभूतवानित्यनेन हन्यमानता कथ्यत इत्यवगन्तव्यम् । अहमस्य जगतः पितरं ब्रह्माणं मूर्धन् मूर्धनि सर्वोत्कृष्टतया सुवे जनयामि । एवं भूताया मम योनिः समुद्रेऽन्तः तिष्ठतीति पूर्वार्धस्यान्यत्र व्याख्यातत्वादव्याख्यातेनरभागमेव व्याख्याति । तत इतीति । भगवान् दिवा दिवः परः एना पृथिव्या अस्याः पृथिव्याश्च परो यतस्ततोऽहं ततो हरेः सकाशात् महिम्नैतावती परिच्छिन्ना सम्बभूवेत्यर्थः ।

## पदार्थदीपिका

श्रुतिरपीति । पूर्वऋक् संहितायां स्वाध्यायइत्यादिना विष्णोः सर्वविद्याप्रतिपाद्यत्व रुपदेवतात्वे प्रमाणस्योक्तत्वात् श्रुतीरपीत्यपिशब्दः । अविभक्तिक इति लुप्तविभक्तिक इत्यर्थः । अत एवाह सुपामिति ।

ननु शाखान्तरस्यापि नैव रेम इत्यादिनानुपदमेवोदाहरिष्यमाणत्वात् कथमत्रेत्युक्तमित्यत आह । अत्रेति । उक्तार्थे प्रायेणेयमेव शाखा उदाह्रियते इत्यतोत्रेत्युपपन्नमिति भावः । यथानोक्तानुपपत्तिस्तचात्रेत्यस्यार्थान्तरमाह । यद्वेति । व्रतं कर्मेति । कर्मनामसु पठितत्वादिति भावः । गतिकर्मास्त्विति गत्यर्थानां च ज्ञानार्थत्वं सिद्धमेवेति भावः । कृणोमीति व्यत्ययेनोविकरणस्य विकरणत्वमिति भावः ।

## टीकाविवृतिः

सर्वेवेदा इति ।। यत्पदं यत्स्वरूपम् आमनन्ति प्रतिपादयन्ति । एवमेवयमाविशन्तीत्यर्थोपि ज्ञेयः ।। तावा एताइति ।। प्राणे विष्णौ ऋगाद्या एकैव व्याहृतिः एकमेव व्याहरणं प्रतिपादनं तद्युक्ता भवन्तीत्यर्थः ।। इन्द्रं मित्रमिति ।। विप्राःयं विष्णुं इन्द्रादिशब्दवाच्यमाहुः स एवं सुपर्णगरुत्मच्छब्दवाच्यः । अथो तस्माद्दिव्यःक्रीडादिगुणोपेतः । अत एकं सर्वतोमुख्यम् एकत्वसङ्ख्योपेतं वा सत् निर्दुष्टं विष्णुं बहुरूपयुक्तत्वेन वदन्ति तदेव विशदयति । अग्निं तदन्तर्गत भगवद्रूपविशेषमग्निनामकमाहुः । एवं यमं मातरिश्वानमाहुरिति ऋगर्थः ।। अविभक्तिक इति ।। लुप्तविभक्तिक इत्यर्थः । तत्र प्रमाणमाह ।। सुपामिति ।। प्रमास्तीति ।। प्रमाप्रमाणमित्यर्थः । सर्ववेदे विष्णोः सर्वोत्तमत्वादिकथनादत्रेति विशेषोक्तिर्व्यर्थेत्यत आह ।। प्राचुर्याभिप्रायमिति ।। अस्यां शाखायां प्राय इन्द्रादिनामकभगवतः सर्वोत्तमत्वादिकमेव स्पष्टं प्रतीयते । न तु शाखान्तरवत्कर्मादिकमापातत इति भावः । अमुख्यवृत्त्या कर्मादिप्रतिपादनेपि मुख्यवृत्त्या सर्वत्रविष्णुप्रतिपादनात्पुनरत्रेति शब्दो व्यर्थ इत्यत आह ।। यद्वेति ।। प्रसिद्धासु स्पष्टार्थास्वित्यर्थः ।। परोमात्रयेति ।। हे तन्वा स्वदेहेनैव वृधान वर्धिष्णो ताच्छील्यार्थेचानश् । हेविष्णो त्वं मात्रया मात्रायाः मितेः परोसि अपरिच्छिन्नोसि । अतः ते तव महित्वं सर्वोत्तमत्वादिमाहात्म्यं केपि नान्वश्नुवन्ति नप्राप्नुवन्ति । अश्नोतेरनुदात्तेतोपिव्यत्ययेन परस्मैपदम् । आदिशब्दान्नते-विष्णोजायमानो नजात इत्यादिगृह्यते । कथंचनेत्यस्यार्थमाह ।। कापीति ।। प्रजापते इत्यस्या ऋचः शाकल्यैःपदानि नपठ्यन्ते यद्यपि याजुषपदपाठानुसारेणार्धर्चं व्याचष्टे ।। हे प्रजापत इति ।। यद्यपि

हेप्रजापते त्वदन्य एतानि जातानि विश्वानि नपरिता बभूवेत्येकवाक्यत्वं संभवति तथापि अर्थाच्चतुर्मुखस्य जातविश्वपरिभवनप्रतीतेरपरिहार्यत्वादार्थिकाद्वाचनिकस्यैव मुख्यत्वाद्वाक्य-भेदेनान्वय उक्तः । परिताबभूवेत्यस्य परिभूतवानित्यर्थे क्रियमाणे पराजयरूपार्थप्रतीतावाह ॥ तत्स्वामित्वेनेति ॥ यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणामित्युत्तरार्धः स्फुटत्वान्नव्याख्यातः । यत्कामाव यं ते तुभ्यं त्वत्प्रीत्यर्थं जुहुमस्तदभीष्टं नोऽस्माकमस्तु । किञ्चवयन्तेप्रसादाद्रयीणां द्रव्याणां ज्ञानानां वापतयः स्यामेत्यर्थः ॥ सवाइति ॥ स ब्रह्मा आदिसृष्टावेकाकित्वान्नैव रेमे । अत एव तदा सो बिभेत् भयं प्राप्तवानिति श्रुत्यर्थः । भयादिकानित्यादिशब्देन नब्रह्मेत्यादिनोक्तः प्रलयेऽभावोगृह्यते ॥ व्रतंकर्मेति ॥ वष्टीव्रतं कर्वरंकरुणमिति कर्मनामसुपाठादितिभावः ॥ गतिकर्मस्विति ॥ गत्यर्थधातुषु मिनाति ऋण्वतीति पाठाद्गत्यर्थानां चज्ञानार्थत्वादिति भावः । नमोभिरिति नमतेरसुनन्ताद्भिसितिभावेन व्याचष्टे ॥ नमनैरिति ॥ ह्वेञ्स्पर्धायां शब्देचेत्यतो लडात्मनेपदोत्तमपुरुषे बहुलं छन्दसीति शब्लुकि ह्वः संप्रसारणमित्यधिकारे बहुलं छन्दसीति संप्रसारणे अचिश्नुधात्वित्युवङिटेरेत्वमित्याशयेनाह ॥ हुवेह्वयामीति ॥ यंकामय इति ॥ यमुग्रं रुद्रं कर्तुं कामये तमुग्रं कृणोमि करोमि । उविकरणस्य व्यत्ययेन श्नुः । अनेन पराधीनपदप्राप्तिरुक्ता । अहं ब्रह्मद्विषे चतुर्मुखपञ्चममुखच्छेत्रे शरवे हिंसकाय । शॄहिंसायामित्यतः शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चेत्युन् । रुद्राय हंत वै हन्तुमेव धनुरातनोमि विस्तारयामीति परायुधविषयत्वमुक्तम् ॥ अस्येति ॥ अस्य देवस्य मीळ्हुषो वयाविष्णोरेष स्यप्रभृथेहविर्भिः । विदेहि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावदित्यस्यार्थः मिहसेचन इत्यतो दाश्वान्साह्वान्मीढ्वांश्चेति क्वसुप्रत्यये ढत्वोपधादीर्घत्वानिट्त्वाद्वित्वानां निपातात् मीळ्हुषः । अज्मध्यस्थढकारस्य ळकारं बह्वृचाजगुरित्युक्तर्ढकारस्य ळकारः । भक्ताभीष्ट-सेचकस्यास्यदेवस्यैषस्येच्छारूपस्य विष्णोर्हविर्भिः । प्रभृथे पूजात्मकप्रभरणेकृते अवेभृञ इत्यत्र बाहुलकात्प्रोपसर्गेपि भृञः थप्रत्ययः । वयाः बन्धकः । वयबन्धने इत्यतोऽसुन् । रुद्रः रुद्रियं रुद्रसम्बन्धिमहित्वं महत्त्वं पदं विदे विविदे लब्धवान् हिप्रसिद्धम् । विद्लृलाभे इत्यस्य स्वरितेत्त्वादात्मनेपदे सिद्धेपि द्वित्वंन । द्वित्वाधिकारे छन्दसिवेति वाच्यमित्युक्तत्वात् । हे अश्विनौ इरावत् अन्नवत् । इरा अन्नमित्यन्ननाम सुपाठात् । वर्तिः वर्तनम् । वृतुवर्तने भावे औणादिक इन्प्रत्ययः । यासिष्टं लब्धवन्तौ स्थ । यातेर्लुङि यमरमेतिसगिटौ । अनेनपरभजनाधीनमहत्त्वप्राप्तिरुच्यते ॥ माशिश्नेति ॥ शिश्नदेवाः शिश्नाभिमानिनो रुद्रा अपि । गुरुत्वाद्बहुवचनम् । नोऽस्माकं । स्वामिनमितिशेषः । ऋतं ज्ञानात्मकं विष्णुं मागुः नज्ञातवन्तः ।

इण्गतौ अस्मादिणोगालुङ्गीति गादेशे गाति स्थेति सिज्लुकि आत इति झेर्जुसि उस्यपदान्तादिति पररूपेन माङ्योगे इत्यडभावे अगुरितिरूपम् । अत्राज्ञानमुक्तम् ॥ घ्नंछिश्नेति ॥ शिश्नदेवान् रुद्रान् घ्नन्विष्णुर्वर्पसाबलेन । सर्वानितिशेषः । अभिभूत् पराभूतवानित्यर्थः । अनेनपरहन्यमानत्वमुच्यते । भाष्ये इत्याद्येत्यत्रश्रुतिरित्यनुवर्तते । तत्र सप्तम्याः सुपां सुलुगिति स्वादेश इत्यभिप्रेत्याह ॥ इत्यादिश्रुताविति ॥ अहं सुव इति ॥ पूर्वार्धस्य अहं लक्ष्मीः अस्य जगतः पितरं ब्रह्माणम् । अस्य मूर्धन् मूर्धनि जगदुत्कृष्टतया सुवे जनयामि । एवं विधाया अपि मम योनिः कारणम् । स्थित्यादावितिशेषः । विष्णुःसमुद्रे अप्सु अन्तःसामुद्रोदकमध्ये शेते इति स्फुटत्वादुत्तरार्धतात्पर्यं वदन् भाष्ये पूर्वोत्तरार्धयोर्व्यत्यस्तोदाहरणमन्वयप्रदर्शनार्थमितिभावेनाह ॥ यस्मादहमिति ॥ वितिष्ठ इत्यत्र समवप्रविभ्यःस्थ इत्यात्मनेपदम् । अनु अनन्तरम् । विश्वा भुवना सर्वाणि भुवनानि अमूंद्यामुतद्यामपि । बलेन वशीकरोमि शरीरेण व्याप्नोमीति क्रमेणान्वयः । परोदिवेत्यत्र कथं लक्ष्म्याःभगवदाश्रयत्वमुक्तमित्यत आह ॥ तत इतीति ॥ ततो वितिष्ठे इत्यत इतिशेषः । तेन श्रुतेः यो विष्णुः दिवाः दिवः परः एना अस्याः पृथिव्याः भूमेः परः सुपां सुलुगिति षष्ठ्या आजा-देशः । ततो विष्णोःप्रसादादहं महिना महिम्ना एतावती ब्रह्मरुद्रादिजनने सामर्थ्योपेतेतियावत् । संबभूव जातेत्यर्थः सूचितः । अहंरुद्रेभिरितिसूक्ते । अहंमित्रा वरुणोभाबिभर्मीत्यादौ ॥

## ऋग्भाष्यम्

**तदाश्रयत्वमन्येषामपि तत्रैव निश्चयात् ।**
**ब्रह्मैवाग्र इति ह्युक्त्वा रुद्रादीनां ततो जनिः ।**
**उक्ता जातानि विश्वानि सपर्यभवदित्यपि ।**
**यस्य च्छायामृतं मृत्युरिति चादरतोऽब्रवीत् ।**
**अनन्तादवरेशाना तस्याः प्राणस्ततश्च वाक् ।**
**तस्या रुद्र उमा तस्मादिंद्रस्तस्यास्ततोऽपरे ।**
**सौपर्णं श्रुतिरित्याह सप्ताक्षितय इत्यपि ।**
**वायुरस्मा उपामंथद्विश्वदेवाय वायवे ।**
**विश्वैर्देवैः स इत्याद्याः प्रमा अत्रापरा अपि ।**
**नारायणोऽदितिर्वायुर्वाणी रुद्र उमा विभुः ।**
**इतरेच क्रमाद्धीनाः शतांशाद्धायुतोऽवराः ।**
**इति वर्कश्रुतिश्चाह शक्रात्सप्ताक्षिति श्रुतिः ।**

अयं त एमितन्वेति पूर्वा अन्या अपि स्फुटम् ।
वायोराधिक्यमप्याहुरिन्द्रं सोमं हुताशनम् ।
सूर्यं रुद्रमिमान्पञ्च देवानेको महात्मनः ।
सृजत्यतिमहान्प्राण इति चाह तुरश्रुतिः ।
विहिसोतोरसृक्षत नेन्द्रं देवममंसत ।
नयस्येंद्र इति ह्याह विष्णोरिन्द्रस्य हीनताम् ।
वेधा अजिन्वदित्यादि वचनं विष्णुनामतः ।
आनन्दश्रुतिरप्यस्य जीवतामेव दर्शयेत् ।
आह सूर्यादपीन्द्रस्य वायोर्विष्णोरपीशताम् ।
यः सूर्यं य उषसं म्रियंते पञ्चदेवताः ।
चक्षुषा द्यौश्चादित्यश्च चक्षोः सूर्यो अजायत ।
यमादित्योन वेदेति पूर्वा श्रुतिरथापरा ।
विष्णोर्वातो अजनिष्टवातादिन्द्रस्ततो रविः ।
सोमश्चेति लयोऽप्येवं पूर्वे पूर्वे गुणाधिकाः ।
विष्णोः प्राणो अजनिष्ट प्राणादिंद्रो रविर्विधुः ।
लयोऽप्येतादृशस्तेषां पूर्वः पूर्वो गुणाधिकः ।
तुरश्रुतिश्च सौपर्णी पिङ्गश्रुतिरपीदृशी ।
अतः सर्वाधिको विष्णुर्निर्णीतः श्रुतिसंचयात् ।
अतो दोषवचो यत्र तद्वाक्यमवरं वदेत् ।
निर्दोषतैव विष्णोस्तु क्रमान्मध्यगतेष्वपि ।

## ऋग्भाष्यटीका

एवं विष्णोः सर्वोत्तमत्वं लक्ष्म्यादीनां ततोऽवरत्वं च प्रसाध्य देव्या ब्रह्माद्युत्तमत्वं च साधयति । तदाश्रयत्वमिति ॥ लक्ष्म्याश्रयत्वम् । अन्येषां ब्रह्मादीनामपि । तत्रैव अहं रुद्रेभिरिति सूक्त एव । निश्चयात् स्फुटं कथितम् । अथ ब्रह्मणो रुद्राद्युत्तमत्वं साधयति ॥ ब्रह्मैवेति । ''हिरण्यगर्भः समवर्तताग्र'' इत्येतस्मिन् सूक्ते ब्रह्मणः प्रथमोत्पत्तिमुक्त्वा यस्य देवा इत्यादिना रुद्रादीनां ततो जनिरुक्ता । विश्वाजातानि परिता बभूवेति जन्मवतां रुद्रादीनां तद्वशत्वं चोक्तम् । यस्य छायामृतं यस्य मृत्युरि''ति पालकानां संहारकाणां चेन्द्रादीनां रुद्रादीनां च तत्प्रतिबिम्बत्वं चाब्रवीत् । पुनर्यस्येति पृथग्योगादादरत इत्युक्तम् । अथ वायोर्विष्णवाद्यवरत्वं रुद्राद्युत्तमत्वं च साधयति ॥

अनन्तादिति ॥ ईशाना लक्ष्मीः । इति वायोर्विष्णवाद्यवरत्वादिकम् । ''तमेताः सप्तक्षितय उपतिष्ठन्ते तद्या इमा अक्षंल्लोहिन्यो राजयस्ताभिरेनं रुद्रोन्वायत्तः'' वायुरस्मा उपामन्थ-त्पिनष्टिस्मा कुनन्नमा । केशी विषस्य पात्रेण यद्रुद्रेणापिबत्सह'' । पूषण्वते मरुत्वते विश्वदेवाय वायवे'' । इत्याद्या अप्यपराः प्रमाः अत्र वायो रुद्राद्युत्तमत्वे सन्ति । तमक्षणि स्थितं वायुम् एता वक्ष्यमाणा अक्षितयोऽक्षीणगुणाः सप्तदेवता उपतिष्ठन्ते सेवन्ते । तत्तत्र या इमा अक्षन्नक्षिणि लोहिन्यो लोहिता राजयो रेखास्ताभिस्तदधिष्ठानेनैनं वायुं रुद्रोऽन्वायत्तः तदधीनो वर्तते । कुत्सितान्नमयतीति कुनन्नमा केशी प्रशस्तकेशवान् वायुर्यदा रुद्रेण सहपात्रेण विषस्य विषमपिबत् । तदाऽस्मै रुद्राय तदनुजिघृक्षयेति यावत् । तद्विषमुपामंथत् । तस्यैव विवरणं पिनष्टि स्मेति । विश्वेषां रुद्रादीनां देवो विश्वेदेवः । इन्द्रपरिवारत्वाद्वायोरिन्द्राद्युत्तमत्वं विप्रतिपन्नमिति तत्साधयते । नारायण इति ॥ अदितिर्लक्ष्मीः विभुरिन्द्रः । ''शतांशद्वायुतो वरा'' इत्यनेन वाय्वादेर्लक्ष्म्यादितोधिकावरत्वं सूचयति । शक्राद्वायोराधिक्यमिति सम्बन्धः । ''तमेताः सप्ताक्षितय उपतिष्ठन्ते यच्छुक्लं तेनेन्द्र'' इति श्रुतिः । ''अयं त एमितन्वापुरस्ताद्विश्वे देवा अभि मायंति पश्चात् । यदा मह्यं दीधरोभागमिन्द्रादिन्मया कृणवो वीर्याणी''त्येतत्पूर्वा अन्या अपि श्रुतयः शक्रादपि वायोराधिक्यमाहुः । कस्यांचिद्युद्धवेलायामिन्द्रं प्रतिवायोर्वचनम् । हेइन्द्रायमहं तन्वा आयुधादिनिरपेक्षेण शरीरेण तेपुरस्तादेमि युद्धभूमिं प्रवेक्ष्यामि । त्वदादयः सर्वेदेवाः मां पश्चान्मदनन्तरमभियन्तु । त्वं तु यदायस्मान्मया मत्प्रेरणयैव मह्यं भागं दीधरो मदुद्देशेन यज्ञभागमधारयः । मामपूजय इति यावत् । आदित्तस्मादेवावां सहवीर्याणि कृणवः कुर्व इति तुरश्रुतिश्च वायोः शक्रादाधिक्यमाहेति सम्बन्धः । विष्णोरुपेन्द्ररूपेणेन्द्रानुचरत्वात्तदाधिक्यं विप्रतिपन्नमिति तत्साधयति ॥ विहिसोतोरिति ॥ यज्ञेषु सोमसवनायर्त्विजो व्यसृक्षत विसृष्टाः । प्रेरिता अभूवन् । तेचेन्द्रं देवं द्योतनादिगुणैः परिपूर्णं नामंसत हि । कीदृग्विधेषु यज्ञेषु । यत्र पुष्टेषु पुष्टानां पूर्णानामप्यर्यः स्वामी मत्सखा । वृषाकपिर्विष्णुरमदत्सुखी समवर्ततेति । विष्णोरिति पञ्चमी । एतयोः श्रुत्योः विष्णोर्वाचकस्य स्फुटस्याभावात् श्रुत्यंतरमुदाहरति ॥ वेधा इति ॥ ''आयो विवायसचथाय दैव्य इन्द्राय विष्णुः सुकृते सुकृत्तरः । वेधाअजिन्वत्रिषधस्थ आर्यमृतस्य भागेयजमानमाभजदि''ति विष्णुनामतो विष्णुनाम्नोपेतं वचनमेतमेवार्थमाह । यःसुकृते साधुकारिणे । इन्द्राय दैव्य स्तस्य परमं दैवतम् । सुकृत्तरोऽतिशयेनासाधुकारी । वेधाः विशेषेण धारणपोषणकर्ता । त्रिषधस्थः श्वेतद्वीपादिस्थानत्रयस्थोविष्णुरार्यं वामनावतारे ज्यायांसं यजमानम् अश्वमेधयाजिनमिन्द्रम् । सचथाय सुखायस्थित्यै । आविवाय अनयत् संवृतवान् । अजिन्वत्

अजनयत् । ऋतस्य यज्ञस्य भागे चाभजदिति । ''तेये शतमिन्द्रस्यानन्दाः स एको बृहस्पतेरानन्द'' इति जीवानन्दतारतम्याभिधात्री श्रुतिरस्येन्द्रस्य जीवतामेव दर्शयति । तेन चेश्वरादवरत्वं ज्ञायते । सूर्यस्य कैश्चित्सर्वोत्तमत्वमङ्गीकृतमिति तत्प्रतियोगिकमिन्द्रवायुविष्णूनामाधिक्यं साधयति ॥ आहेति ॥ श्रुतिरिति वक्ष्यमाणेन सम्बन्धः । ईशतामाधिक्यम् । ''यः सूर्यं य उषसंजजान यो अपां नेतासजनास इन्द्र'' इति श्रुतिरिन्द्रस्य सूर्यादाधिक्यमाह । जजान जनयामास । ''एष हवै ब्रह्म योयं पवते तमेताः पश्चदेवताः परिम्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योग्निरि''ति श्रुतिर्वायोः सूर्यादाधिक्यमाह । तं परिम्रियन्त इति तेन संह्रियन्त इत्यर्थः । चक्षुषा सृष्टौ द्यौश्चादित्यश्चेत्येतत्पूर्वा श्रुतिर्विष्णोः सूर्यादाधिक्यमाह । अथापराश्च श्रुतय एतदर्थत्रये सन्ति । ताः पठति । विष्णोरिति ॥ एतासां श्रुतीनां प्रत्येकं सर्वार्थप्रतिपादकत्वात् पृथक्करणम् । ''विष्णोर्वात'' इति तुरश्रुतिः । ''विष्णोः प्राण'' इतिसौपर्ण श्रुतिः । पिङ्गश्रुतिरपीदृशी एवंपाठा । अतो नपृथक् पठ्यत इत्यर्थः । लयोप्येवमिति क्रममात्रमति दिश्यते स च वैपरीत्येनेति हृदयम् । विष्णुः सर्वाधिको निर्णीत इत्युपलक्षणम् । लक्ष्म्यादयोपि यथास्वरूपं निर्णीताः ।

ननु नैव दोषानित्ययुक्तं जनितोतविष्णोरि''त्यादौ दोषप्रतीतेरित्यत आह ॥ अत इति ॥ यत्र वाक्येविष्णोर्दोषवचोदोषाभिधानं प्रतीयते तद्वाक्यमवरं सम्भावितदोषं वस्त्वंतरं वदेदिति योज्यम् । ननु लक्ष्म्यादीनां यत्स्वरूपमुक्तं तदयुक्तं क्वचिदधिकदोष श्रवणादित्यत आह ॥ अतइति ॥ दोषवचोऽधिकदोषाभिधानम् । अत्रोभयत्रापि दोषग्रहणं गुणाल्पताया अप्युपलक्षणम् । अत इत्युभयत्रोक्तमेव हेतुं दर्शयति ॥ निर्दोषतैवेति ॥ यतोविष्णोः सर्वथा निर्दोषता प्रमाणैर्निर्णीता यतश्च मध्यगतेष्वपि लक्ष्म्यादिषु क्रमान्निर्दोषता निर्णीता अत इत्यर्थः । निर्दोषतेत्युपलक्षणम् । गुणपूर्तिरपीति द्रष्टव्यम् ।

## पदार्थप्रकाशिका

स्फुटं कथितमिति । तं ब्रह्माणं तमृषिं तं सुमेधामित्युक्तत्वादिति भावः । प्रथमोत्पत्तिमिति । तथाच हिरण्यगर्भो अग्रे सर्वदेवेभ्यः पूर्वं परमात्मनः सकाशात् समवर्तत अभवदित्यर्थो द्रष्टव्यः । यस्य देवा इत्यादिनेति । 'य आत्मदा बलदा यस्य विश्वम् उपासते प्रशिषं यस्य देवा' इत्यादौ । देवा रुद्राद्याः यस्य ब्रह्मणः सकाशात् प्रशिषं शिषु जनन इति धातोः प्रकर्षेण जननं उपासते उपजीवन्ति । रुद्रादिदेवानां ततो जनिरुक्तेत्यर्थः । पालकानामित्यादि । न विद्यते मृतं मरणं यस्मात् इत्यमृतं पालकजातमिन्द्रादिर्यस्य ब्रह्मणः छायेव छाया प्रतिबिम्बं भूतम् । मृत्युर्मारको

रुद्रादिरपि यस्य च्छाया तादृशाय कस्मै ब्रह्मणे हविषा विधेमहीति सम्बन्धः । ननु कथमत्रादरोऽवगम्यते इत्यत आह । पुनर्यस्येति । अमृतं मृत्युस्ते यस्य च्छायेत्येकवाक्येनैवोपपत्तौ पुनर्यस्येति पृथग्वाक्यकरणादादरोऽवगम्यत इत्यर्थः । ईशानाशब्दस्य पार्वतीपरत्वभ्रान्ति-वारणायाह । ईशाना लक्ष्मीरिति । उमाया उत्तरत्र वक्ष्यमाणत्वादिति भावः । भाष्ये अनन्तशब्दो भगवद्वाचीति । भाष्ये विश्वैर्देवैः स इत्युदाहृत श्रुतेर्वायोः सर्वोत्तमत्वप्रतिपादिकाया अप्रसिद्ध-त्वादित्याद्या इति टीकाकारैः संमुग्धतयोक्तमिति ज्ञातव्यम् । तमेतमिति योऽयं मध्यमः प्राणः प्राणस्थूणेति वायोः प्रकृतत्वादिति भावः । वक्ष्यमाणा इति । बृहदारण्यक एवोत्तरत्रेत्यर्थः । तदधिष्ठानेनेति । तत्र स्थित्वेति यावत् । तदधीन इति । तदधीनः सन् सर्वाः कुर्वाणो वर्तत इत्यर्थः । कुत्सितान्नमयतीति कुनन्नमेति कुनशब्दः कुत्सितपर्याय इत्यभिप्रेत्य व्याख्यात इति ज्ञातव्यम् । नामयति नाम्ना भूतान् करोतीति । 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः इति प्रशंसायां मत्वर्थीयप्रत्ययविधानादिना मत्वर्थीयप्रत्ययत्वादाह । प्रशस्तकेशवानिति । पात्रेण तपनीयरूपेण पात्रे तपनीयरूपे इति तात्पर्यनिर्णयोक्तेः । पिनष्टीति । अस्तबलं करोतीत्यर्थः । अस्तबलं विधायेति वचनात् । इन्द्रपरिवारत्वं कोणाधिपतित्वेनेति ज्ञातव्यम् ।

प्रसिद्धादिति पदत्वनिरासायाह । अदितिर्लक्ष्मीरिति । भाष्ये अदित्यादीनां क्रमाद्धीनत्वं सामान्येनोक्त्वा पुनस्तत्र विशेषकथनाय शतांशादित्याद्युक्तम् । वायुतोऽवराः प्राणादयः शतांशात् क्रमाद्धीना इति । विशेषवचनेन वायोरदित्यास्तस्याश्च नारायणात्कियतांशेन अवरत्वमित्याशंकायामाह । शतांशाद्वायुतोऽवरा इत्यनेनेति । इति विशिष्य वचनेनेत्यर्थः । वाय्वादेरित्यादिपदेन लक्ष्मीसङ्ग्रहः । लक्ष्म्यादितः इत्यादिपदेन नारायणग्रहणम् । तत्र वायोः लक्ष्मीतः कोट्यंशावरत्वेनाधिकावरत्वं लक्ष्म्याश्च नारायणेनानन्तांशावरत्वेनाधिकावरत्वमिति भावः । वाण्यादीनां वायुतः शतांशोनत्वमुक्तम् । तत्र वाणी वायुतः शतांशोना । शिवस्य शतांशोन(ता) । इतरे च दशार्धाद्यंशतः उक्तरीत्या क्रमाद्धीना इत्यवधेयम् । यच्छुक्लमिति । अक्षिणि या शुक्लरेखा तदधिष्ठानेन वायू इन्द्रोऽन्वायत्तो तदधीनो वर्तत इत्यर्थः । वीर्याणीति । पराक्रमानिति यावत् । वायोर्वचनमिति ।

नन्वयं त एमीति स्वेनेन्द्र आत्मानमस्तौदित्यनुक्रमणिकायामुक्तत्वात्कथमिदं वायोर्वचनमिति चेन्न । तथा सति इन्द्रेति सम्बोधनस्य कृणाव इति द्विवचनस्यायोगेन प्रसिद्धानुक्रमणिकाया

अनादरणीयत्वादित्याशयात् । इन्द्रपरिवारभूतो वायुस्तु प्रवह एव न मुख्य इति भावः । सोच्चमित्यर्थकस्य सोतोरित्यस्य तात्पर्यं सोमसवनायेति । सोमखण्डनायेत्यर्थः । ते चेति । सोऽनुप्रेरितर्त्विज इति भावः । देवं नामंसत देवत्व वचनेन ज्ञातवन्त इत्यर्थः । यत्रामदद्वृषाकपिः अर्यः पुष्टेषु मत्सखेत्युत्तरार्धमवतार्य व्याचष्टे । कीदृग्विधेष्विति । मत्सखेति वेदपुरुषवचनम् । तथाच विष्णुप्रीतिकरत्वेन तद्देवताके यज्ञे प्रसिद्धेन्द्रदेवत्वेन नामंसन्तेति भावः । अर्यः स्वामीति । अर्यः स्वामिवैश्ययोरिति स्मरणादिति भावः । षष्ठीभ्रान्तिं वारयति । पञ्चमीति । विष्णुवाचकस्य पदस्येत्यर्थः । वृषाकपिशब्दस्य स्पष्टं विष्णुवाचकत्वे विवादात् । तथा न यस्येन्द्रो वरुणो न मित्रो व्रतमर्यमा । न मिनन्ति रुद्र इत्यस्यामपि श्रुतौ इन्द्राद्याः यस्य व्रतं कर्म न जानन्तीत्येवोक्तेर्यच्छब्दस्य स्पष्टं विष्णुवाचकत्वाप्रतीतेरित्याशयः । सुखस्थित्यै सुखावस्थानाय स वृतवान् । एनं सुखयिष्ये इति संवर्णीकृत्वा तस्येन्द्रस्य सुखमजिन्वदजयदित्यर्थः । भागे चाभजत् यज्ञभागिनमकरोदित्यर्थः । ते ये शतमिन्द्रस्येति श्रुतौ इन्द्रशब्देन दक्ष उच्यते । बृहस्पतिशब्देनेन्द्र उच्यत इति द्रष्टव्यम् । यथोक्तं तैत्तिरीयभाष्ये । येभ्यो दक्षश्चेन्द्रनामा स हीन्दुं राग्यत्पुरा । तस्माद्बृहस्पतिर्नाम महेन्द्रत्वात् पुरन्दर इति । जीवतां दुःखस्पृष्टचेतनताम् । ईशताम् । ईशेन रुद्रेणाभेद इत्यन्यथाप्रतीतेराह । आधिक्यमिति । विद्युद्भारती वृष्टिरिन्द्रः । 'विद्युत्तु भारती प्रोक्ता वृष्टिरिन्द्रस्तु वर्षणादिति वचनात् । सर्वार्थप्रतिपादकत्वादिति इन्द्रवायुविष्णूनां त्रयाणामपि सूर्यादाधिक्यप्रतिपादकत्वादेकैकस्य सूर्यादाधिक्यप्रतिपादकश्रुतिभ्यस्तथा परा इति पृथक्कृत्योदाहरणं युक्तमित्यर्थः । भाष्ये प्राणादिन्द्रो रविर्विधुरित्यत्रेन्द्राद्रविविधुश्चेति भिन्नावित्यर्थो द्रष्टव्यः । वातादिन्द्रस्ततो रविः सोमश्चेति पूर्वोदाहृततुरश्रुतौ तथोक्तत्वादिति टीकाकारैस्तदर्थो नोक्तः । एतासामिति । तुरसौपर्णपिङ्गश्रुतीनामित्यर्थः ।

ननु लयोऽप्येवं लयोऽप्येतादृश इति उत्पत्तिक्रमेणैव लयप्रकारोऽतिदिश्यते । तत्तु 'विपर्ययेणतु क्रमोऽत उपपद्यते च' व्युत्क्रमाद्धिलयश्चैव सृष्टावन्यो लयोऽप्यन्यक्रमः इत्यादि श्रुतिसूत्रविरुद्धमत आह । लयोऽप्येवमिति । स चेति । क्रमव्युत्क्रमयोः क्रमपदप्रवेशेन क्रमपदस्य साधारणत्वादिति भावः । दोषप्रतीतेरिति । सोमः पवत इत्युक्तस्य सोमस्य विष्णुजनकत्वोक्त्या विष्णोस्तज्जन्यत्वरूपदोषप्रतीतेरिति भावः । वच इत्यस्य वाक्यपरत्वे यत्रेत्यस्यायोगदाह । दोषाभिधानमिति । वस्त्वंतरमिति । तथाच सोमलताविशेषो विष्णोः सोमसवनं कर्तुं यजमानस्य जनिता । याजमान्यस्य सोमाधीनत्वादिति सम्भावितदोषवान् यजमान एव विष्णुशब्देनोच्यते न विष्णुरित्याहुः । वस्तुतस्तु मखो विष्णुरिन्दुरिति यज्ञनामसु विष्णुशब्दस्य पठितत्वात् ।

विष्णोर्यज्ञस्य सोमलतारूपो जनिता यज्ञस्य सोमाधीनोत्पत्तिकत्वा- दित्यर्थो द्रष्टव्यः । यस्य रूपमुक्तमिति । भगवदनन्तरं ब्रह्माश्रयत्वरूपमित्यर्थः । क्वचिदधिकदोषेति । गौर्भूत्वाऽश्रुमुखी खिन्नेत्यादि पुराणादौ लक्ष्म्याः भूरादिरूपेषु बहोर्दुःखादिदोषस्य श्रवणादित्यर्थः । तद्वाक्यमवरं वदति । भाष्ये अन्याभूर्भूरियं तस्याः छायाभूताऽवमा सा हि भूतैकयोनिरिति वचनात् प्रसिद्धभूदेवतैव तत्र प्रतिपाद्या न लक्ष्मीरूपमित्यर्थः । उभयत्रापीति । विष्णुलक्ष्म-पिरयोर्वाक्ययोरित्यर्थः । अस्य वाक्यस्योभयथा योजितत्वेनोभयत्वादिति भावः ।

## पदार्थदीपिका

पृथग्योगादिति । अमृतं मृत्युश्च यस्य छायेति एकेनैव वाक्ये नोक्तिसम्भवेपीति भावः । ईश्वरीशब्दसमानार्थकेशानशब्दस्य पार्वतीपरत्वभ्रान्तिं निवारयति । ईशानालक्ष्मीरिति । उमाया उत्तरत्र ग्रहणादिति भावः । अत्रानन्तो नारायण एवेत्यपि व्याख्यातव्यम् । इत्याहेत्यत्रेति शब्दार्थमाह । इतीति । वायुमिति योऽयं मध्यमः प्राणः प्राणस्थूणेति तस्य प्रकृतत्वादिति भावः । कुनन्नमेति पृषोदरत्वादिति भावः । प्रशस्तेति भूमनिन्देति । प्रशंसायां मत्वर्थीय प्रत्यय इति भावः । विषस्य विषमिति क्रियाग्रहणं कर्तव्यमिति कर्मणः सम्प्रदानत्वेन चतुर्थ्यर्थत्वाच्चतुर्थो बहुलं छन्दसीति षष्ठीति भावः ।

ननु भाष्यकारेण विश्वैर्देवैः स इत्याद्या इति श्रुत्यन्तरमप्युक्तम् । तत्किमिति टीकाकारैर्नोपन्यस्तं न व्याख्यातं च न प्रसिद्धत्वात् परित्यागः तथात्वे तमेताः सप्ताक्षितयः वायुरस्मा इत्यादीनामप्यनुपन्यासापातात् इति चेत् न । विश्वैर्देवैः स इति भाष्यस्य ततो वितिष्ठे योनि स इत्यादि विश्वेदेवाय वायव इति श्रुत्यर्थानुवादपरत्वेन श्रुत्यन्तरानुवादपरत्वाभावात् न चैवं विश्वेषां रुद्रादीनां देव इति टीकाकारीयविग्रहोक्तिविरोध इति वाच्यम् । विश्वैर्देवैः रुद्रादिभिर्दीव्यत्वेन प्रसिद्धः स इति कारणात् विश्वेषां देव इति फलिविग्रहोक्तिपरत्वात् अनेन श्रुतौ विश्वेदेवेभ्येत्यत्र हेतुहेतुमद्भावेन विग्रहद्वयमपि सूचितं भवतीति भावः । शतांशावायुतो वरा इत्यनेनेति आदित्यादयः । इन्द्रपर्यन्ताः क्रमाधीना इत्युक्ता वायुतो वराः शतांशाः क्रमाधीना इति विशेषवचनेनेनेत्यर्थः । यद्वा योग्यतया वाण्यादय इत्यध्याहारेण वाण्यादयो वायुतः शतांशा इति विशेषवचनेनेत्यर्थः । अन्यथा इतरे च क्रमाधीनाः शतांशा इत्येतावता पूर्तौ अन्यद्व्यर्थं स्यादिति भावः । वाय्वादेर्लक्ष्म्यादितोधिकावरत्वमिति मूलपाठः । शक्रादित्यस्य वायोराधिक्यमिति ।

वक्ष्यमाणेनान्वय इत्याह ॥ शक्रादपीति । वायोर्वचनमिति यद्यपीन्द्र आत्मानमस्तौदित्यनुक्रमणिकायामुक्तत्वान्नेदं वायुवचनं तथापि इन्द्रवाक्यत्वे इन्द्रेति सम्बोधनस्य कृणव इति द्विवचनस्य चायोगान्नेदं तद्वचनमिति भावेनैवमुक्तमिति ध्येयम् ॥ अयमहमिति । उत्तमपुरुषेच्छान्युक्तिः स्थानित्यपीत्यपिशब्देन तदप्रयोगेऽपि दोषाभावादिति भावः ।

मदनन्तरमिति पश्चादित्यस्य यद्यप्यानन्तर्यमेवार्थताप्यर्थान्मादित्यस्य लाभ इति बोध्यम् । अभिरभाग इति । अभेः कर्मप्रवचनीयत्वात् तद्योगे मामिति द्वितीयेति द्रष्टव्यम् । यद्वा ततो अन्यत्रापि दृश्यत इत्युक्तेः पश्चाद्योगद्वितीयेत्यभिप्रेत्य मां पश्चादित्यनूद्य मदनन्तरमिति व्याख्यातम् । यद्वा तदेति हेत्वर्थे कालार्थे चापि भण्यत इत्येतन्मनसि निधाय व्याचष्टे । यदा यस्मादिति । कृणव इति स्वादेः कृञो हिंसार्थकत्वेन प्रकृतानुपयोगात् करणार्थकस्यैव कृञो व्यत्ययेन श्नुविकरणस्येदं रूपं व्यत्ययेनोकारस्याकारः । यद्वा लोपश्चास्यान्यतरस्याम्वोरित्युकारलोपे आधिक्ये अधिकमित्यकार इत्यर्थः । लोटोव्यत्ययेन यन्तीति लडित्याशयेन यंत्विति व्याख्यातमिति ज्ञेयम् । सोमसवनायेति । सुनोतेस्तुमर्थे तोसुन् प्रत्यय इति भावः । क्त्वातो सुन् कसुन इत्यव्ययत्वम् । व्यसृक्षतेति सृजेः कर्मणि लुङि व्यत्ययेन कसादेश इति भावः । देवमित्येतत् विधेयविशेषणतया व्याचष्टे ॥ देवमिति । अमददिति माद्यतेः पूषादित्वाल्लुङि केरङादेश इति भावः । तस्येति । चतुर्थ्यर्थे षष्ठी वक्तव्येति वक्तव्यत्वादिति भावः । परं दैवतमिति । देवशब्दात्स्वार्थे ण्यप्रत्यये दैव्य इति रूपसिद्धिः । एवं च स्वार्थे यत्र प्रत्ययोभिधीयते तत्र प्रकृत्यर्थानन्वितो योग्यः कश्चिदतिशयो वाच्यः । अन्यथा तद्वैय्यर्थ्यात् । तथाच वक्ष्यति । आधिक्येऽधिकमेवेत्यादिना । तदेव तदभिप्रेत्य परं दैवतमित्युक्तमिति ज्ञातव्यम् ।

यद्वा बहिर्वेदपञ्चजनेभ्यश्चोप संख्यानमित्युपसंख्यानाद्देवशब्दात् ञप्रत्ययः । यद्यप्ययं भावे विहितस्तथापि तद्धितत्वात् स्वार्थिकत्वमविरुद्धमिति ध्येयम् । विशेषेणेति । विपूर्वाद्धाञो वेधचेति असुन् वेधश्चादेश इति भावः । त्रिषधस्थ इति सीदन्त्यस्मिन्निति सदः स्थानसदेरधिकरणेऽसुन् प्रत्ययः व्यत्ययेन दस्यधः सुषामादित्वात् षत्वं चेति भावः । यद्यपि सधमादस्थयोरिति सहस्य सधादेशे त्रिभिस्सहस्थ' इति व्याख्यानेन व्यत्ययाश्रयणं तथाप्यर्थविशेषलाभायैवं व्याख्यातमिति बोध्यम् । अश्वमेधयाजिनमिति । यजतेस्ताच्छील्याश्चानशिति भावः । अत एव ताच्छील्यार्थणिति नाख्यातमिति ध्येयम् । सचथायेति षच सेचन इति धातुपाठे यं पूरवोतृहणं सचन्त इति सेचने प्रयोगात् निरुक्तेऽपि तथोक्ते यथा सेचनार्थः । यथा वा हे तेहनाकं महिमानः सचन्त इति गतौ प्रयोगात् गतिकर्मसु पाठाच्च गत्यर्थः । तथा इन्द्रं सोमे सचासुते इति सुखे प्रयोगात् सुते सोमे

सुखेनैव सचागायतनं प्रभुमिति भगवत्पादैर्भाषितत्वाच्च सचतिः सुखार्थ इति भावः । सर्वार्थप्रतिपादकत्वादिति । इन्द्रवायुविच्छूनां त्रयाणामपि सूर्यादाधिक्यप्रतिपादकत्वादेकैकस्य तदाधिक्यप्रतिपादक श्रुतिभ्यस्तथापरा इति पृथक्करणमित्यर्थः । इति हृदयमिति । अतो न विपर्ययेण क्रमोत उपपद्यते चेत्यधिकरणविरोध इति भावः । नैव दोषा नित्यमुक्तमिति ऐश्वरानेव केवलान् गुणान् विष्णोः श्रुतिः प्राह । नैव दोषान् कथंचनेति प्रागुक्तमयुक्तमित्यर्थः । सम्भावितदोषमिति । विष्णोर्यज्ञस्यापि सोमो जनिता जनयिता इत्येवं यज्ञादिकमेव वदेदित्यर्थः । मखो विष्णुरिन्दुरिति विष्णुशब्दस्य यज्ञनामसु पठितत्वादिति भावः । क्रमान्मध्यगतेष्वथापीति । वक्ष्यमाणानुरोधात् अत इत्यादि भाष्यं प्रकारान्तरेणाप्यवतार्य व्याचष्टे । ननु लक्ष्म्यादीनामिति । योजनाविशेषविवक्षयेति । विष्णोर्जनिता सोम इत्यत्र यस्ताविजानात्सपितुष्पिता सदित्युक्ते सोमस्य विष्णुज्ञातृत्वेन वा जनीप्रादुर्भाव इत्युक्ते विष्ण्वाभिव्यंजकत्वेन वा यज्ञयजमानयोस्तु विष्णुशब्दार्थभूतयोः साक्षाज्जनकत्वेन वा विष्ण्वाधिष्ठान भूते यज्ञे यजमानादिजनकत्वेन गौण्यावृत्या वा सोमे विष्णुजनकत्वं योजनीयम् । एवमवरादिशब्दवस्तुवाक्येषु विष्ण्वाव-रत्वनियामकत्वेन अन्यत्र तु तदधिकरणत्वेन परत्वावधित्वमात्रबोधकप्रत्ययवस्तु च विष्ण्वाववरगतपरत्वावधित्वनियामकत्वेन अवरेतुः तदवधित्वेनैव योजना द्रष्टव्येति भावः ।

## टीकाविवृतिः

प्रथमोत्पत्तिमिति ॥ हिरण्यगर्भःसमवर्तताग्रे भूतस्य जातःपतिरेक आसीत् । सदाधारपृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेमेत्यस्यामृचीतिशेषः । हिरण्यगर्भो ब्रह्मा एकएव अग्रे उत्पत्स्यमानजगदग्रे जातः उत्पन्नः समवर्तत हरिभजनादिना सम्यगवर्तत । अत एवंभूतस्य उत्पन्नस्य पतिरासीत् । सइमां पृथिवीमुतद्यां दाधार । अतः कस्मै ब्रह्मणे देवाय हविषा हविः विधेम दद्मः । ब्रह्मनाम्नोपि किंशब्दस्य नसर्वनामसंज्ञानिषेधः । सर्वे विधयश्छन्दसिविकल्प्यन्त इत्युक्तेरित्यृगर्थः ॥ यस्य देवो इत्यादिनेति ॥ यस्य देवा इत्येतदपेक्षया आदिभूतेन पदजातेन । य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवा इत्यर्धेनेत्यर्थः । अस्यार्थः । यः आत्मदाः प्रशिष्येभ्यःपरमात्मोपदेशकः । बलदाः बलदेवतायाः वायोश्चोपदेशकः । उभय त्रददातेःक्विप् विश्वेदेवाः यस्य ब्रह्मणः सकाशात् प्रशिषं उत्पत्तिं धातूनामनेकार्थत्वेनोत्पत्त्यर्थात्प्रपूर्वाच्छिषेः संपदादित्वाद्भावे क्विप् । उपासते प्राप्नुवन्ति । तथा मानोहिंसीज्जनितायः पृथिव्यायोवादिवं सत्यधर्माजजान । यश्चापश्चन्द्राबृहतीर्ज जानेत्युत्तरस्यामृचिस्पष्टं रुद्रादिसर्वदेवजनकत्वमुच्यते ।

अस्या अर्थः। यः नः अस्मान् मा हिंसीति नहिंसितवान् पृथिवीदेवतायाः जनिता। सत्यधर्मा यः दिवं द्युदेवताम् अपः कर्माभिमानिदेवान् चन्द्राः चन्द्राद्याः बृहतीः श्रेष्ठदेवता रुद्रान्तास्तांश्च जनान जनयामासेति। यस्य छायेति पादस्य अमृतं सुधा जगत्पालनायास्यास्तीत्यर्श आद्यच्। अमृतमिन्द्रादि वृन्दं यस्य चतुर्मुखस्य छाया प्रतिबिम्बरूपं तथा मृत्युः संहारको रुद्रादिश्च यस्य छायेत्यर्थमभिसंधायाह। पालकानामिति।

ननु यस्यामृतं मृत्युश्च छायेत्येकवाक्यत्वे सम्भवति ऋचिपुनर्यस्येति वचनेन वाक्यभेदाश्रयणं व्यर्थमित्याशंकायां भाष्ये आदरत इत्युक्तमित्याह। पुनर्यस्येति। ईशाना शब्दस्य स्वामित्वपुरस्कारेण प्रवृत्तेर्व्यक्तिविशेषा प्रतीतेराह। ईशालक्ष्मीरिति। विष्णुप्राणमध्योत्त्यन्यथानुपपत्त्येति भावः। इत्याहेत्यत्रेति शब्दार्थमाह। इति वायोरिति। प्रथमादिशब्देन लक्ष्मीर्गृह्यते द्वितीये नरुद्राद्युत्तमत्वम्। इत्याद्या इति। अत्राद्यशब्देन विश्वैर्देवैः स इति भाष्योक्तशाखान्तरस्थं विश्वैर्देवैः पितृभिर्गुप्तमन्नमिति वाक्यं गृह्यते। अन्नं मुख्यप्राणोऽन्नाभिमानित्वात्। अन्नं प्राणमन्नमपानमाहुरिति श्रुतेः। तदन्नं विश्वैर्देवैः रुद्रादिभिः पितृभिश्च गुप्तं दैत्येभ्यो नोपदिष्टमिति श्रुत्यर्थः। विश्वैर्देवैः स वायुर्गुप्त इत्यर्थतः प्रतीकग्रहणं भाष्ये ज्ञेयम्। योयं मध्यमः प्राण इति पूर्वोक्तवायुपरामर्शकस्तच्छब्द इति भावेन तमेताइति वाक्यं दक्षिणाक्षिस्थितं वायुं सप्तदेवा उपासते। अक्षीणज्ञानमनसः सदाशिवपुरस्सरा इति बृहद्भाष्यानुसारेण व्याचष्टे। तमक्षिणीति। अक्षन् अक्षिणीति वक्ष्यमाणमत्रापि सम्बध्यते। स्थितमिति शेषः। तं वायुमित्यन्वय इति भावः। एतच्छब्दस्य पूर्वप्रकृतपरामर्शकत्वभ्रान्तिं वारयति। वक्ष्यमाणा इति। सप्तदेवाः रुद्रपर्जन्यादित्याग्नीन्द्रपृथिवीद्योरूपाः। कुनन्नमेत्यत्र कुपापं तेनैव नन्दंतीतिकुनदो दैत्यादयः नदेः क्विप्। तान्नमयतीत्यर्थमभिप्रेत्याह। कुत्सितानिति। पृषोदरादित्वादिति भाव इत्यप्याहुः। भूमनिन्दा प्रशंसासु नित्ययोगेति शायने। संसर्गेस्ति विवक्षायां भवंतिमतुबादय इति वचनेन प्रशंसायां मत्वर्थीयानां विधानादाह। प्रशस्तेति। यदित्यस्यार्थो यदेति। सुपांसुपो भवन्तीति वार्तिकेन द्वितीयायाः षष्ठीति भावेनाह। विषयविषमिति। पूषण्वते इत्यर्धर्चे पूषास्य सेवकत्वेनास्तीति पूषण्वान्। तस्मै अनोनुडित्यन्नं तान्मतुपोनुडागमः। एवं मरुत्वते आहंकारिक प्राणादयो मरुतोस्य सन्तीति मरुत्वात् तस्मै विश्वदेवाय सर्वदेवात्मकाय वायवे। हव्यं स्वाहेत्यर्थप्रतीतेः रुद्रोत्तमत्वे कथमियं श्रुतिरित्यत आह। विश्वेषां रुद्रादीनामिति। अस्यामृचिविश्व देवायेत्यत्र समासान्तोदात्तत्वापवादेन विश्वशब्दस्य व्यत्ययेनान्तोदात्तत्वम्।

ननु वायोर्नारायणोदितिरित्यादि नेन्द्रोत्तमत्वसाधनमयुक्तम् । विप्रतिपत्त्यभावादित्यतस्तत्संगमयति । इन्द्रपरिवारित्वादिति । अदितिः कश्यपस्त्रीतिभ्रमं वारयति । अदितिर्लक्ष्मीरिति । दोऽवखण्डने इत्यतः कर्मणिक्तिच्क्तौ च संज्ञायामिति क्तिचिद्यतिस्यति मास्थामित्तिकितीति इदादेशे नञ् तत्पुरुषे अदितिरखण्डिता देहादिनाशरहितेति यावत् । स्वरूपानाशस्य कश्यपपत्न्यामपि साम्यादिति भावः । विभुरिन्द्र इति । उभयोः पदयोरैश्वर्य प्रवृत्तिनिमित्तकत्वादिति भावः । ननु क्रमाद्धीनाः शतांशादि तावतापूर्णत्वाद्वायुतो वरा इति व्यर्थमित्यत आह । इत्यनेनेति । वायोः सकाशाद्येऽवराःवाण्यादयस्ते क्रमात् शतांशाद्धीना इति वचनेन वायुर्लक्ष्म्यपेक्षया कोटचंशेन हीनः लक्ष्मीर्नारायणादनंतांशेनेति सूचयितुमिति भावः । शक्रादित्यस्यानन्वितत्वाद्व्यवहिते नान्वयमाह । शक्राद्वायोरिति । यच्छुक्रमिति । अक्षिणियत् शुक्लं रूपं तेन तदधिष्ठानेनेन्द्र एनं वायुमन्वायत्त इति पूर्वेणान्वयः । अयं त एमीत्यत्रोत्तमपुरुषप्रयोगादस्मच्छब्दाप्रयोगाद्युपपत्त्यर्थमाह । कस्यांचिदिति । इन्द्रं प्रति वायोर्वचनमित्युक्त्या अयमिति द्व्यृचेनेन्द्र आत्मानमस्तौदि त्यनुक्रमणिकोक्तमपास्तं ज्ञेयम् । अस्यामृचित इति युष्मच्छब्दप्रयोगस्येंद्रेति सम्बोधनस्य कृणव इति द्विवचनस्य चानुपपत्तेः ।

ननु एमीत्युत्तमपुरुष प्रयोगोहि अस्मद्युत्तम इत्यत्रस्थानिन्यपीत्य नुवृत्तेरस्मच्छब्दप्रयोगेऽप्रयोगेपि तदर्थविवक्षायां सम्भवति तत्कथमिदं शब्दप्रयोगे स्यादित्यतो त्राप्ययमित्यस्य विशेष्यत्वे नाहमिति बोद्धव्यमित्याह । अयमहमिति । मामित्यत्र षट्सु द्वितीयेत्युक्तेः षष्ठ्याः द्वितीयेत्यभिप्रेत्याह । मां पश्चादिति । यन्तीत्यस्य लेट् त्वमभिप्रेत्याह । अभियंत्विति । यदा तदेति हेत्वर्थे कालार्थेपि च भण्यत इति प्रमाणमनुसृत्याह । यदा यस्मादिति । धृधारणे चुरादिण्यन्ताल्लुङिच्लेश्च ङिणौचङीति ह्रस्वे सन्वद्भावे सन्यत इतीत्वे दीर्घो लघोरिति दीर्घ इति भावेनाह । दीधर इति । आदिदिति । अन्तः पुरे भूषणेच चरणे कारणे रणे । अकारः कथितो धीरैरित्येकाक्षर रत्नमालोक्तेः अः कारणं तस्मात् आत् इत्यर्थः । कृणव इत्युत्तमपुरुषद्विवचनोक्ति बलात् श्रुतावावामिति कर्त्रध्याहारोक्तिः । डुकृञ्करणे अस्माल्लटि वस् प्रत्यये व्यत्ययेन श्नम्विकरणे रूपमित्याशयेनाह । कृणवः कुर्व इति । श्नसोरल्लोप इति तु न । लोप इत्यस्य संज्ञात्वात् संज्ञापूर्वकोविधिरनित्य इत्युक्तेः ।

इति चाह तुरश्रुतिरित्यत्र च शब्दस्य यथास्थितान्वये प्रकृतानुपयोगाद्भिन्नक्रमेणान्वयं वदन्निति शब्दार्थमाह । तुरश्रुतिश्चेति । सुनोतेरीश्वरेतोसुन्कसुनाविति तुमर्थे तोसुन्प्रत्यये सोतोरिति रूपमिति भावेन व्याचष्टे । सोमसवनायेति । सृजेः कर्मणि लुङि च्लेःसिचि आत्मनेपदेष्वनत इति झस्यादादेशे कुत्वषत्वयोः लिङ्सिचा वात्मने पदेष्विति सिचः कित्वाद्गुणाभावे रूपमिति

भावेनाह । व्यसृक्षतविसृष्टा इति । तेचेति । ते ऋत्विजः इन्द्रं पुरन्दरं देवं रूढ्या देवत्वजातियुक्तं नामंसत । मनज्ञाने लुङ् नज्ञातवन्त इति व्याख्यानं बाधितमित्यतो यौगिकोयमिति भावेन व्याचष्टे । द्योतनादिगुणैरिति । तर्हि कं गुणं पूर्णममंसतेत्यत उत्तरार्धः प्रवृत्त इति भावेन तं व्याख्याति । यत्रेति । यत्र यज्ञेषु । अर्थः स्वामिवैश्ययोरित्यर्थद्वयेऽर्थ शब्दनिपातनादाह । अर्य इति । यद्यपि प्रत्ययस्वरापवादस्यतित्स्व रितमित्यस्य बाधके नयतोनाव इत्याद्युदात्तेन भाव्यम् । तथापि स्वामिन्यन्तोदात्तत्वं वाच्यमित्यर्थ शब्दोंतोदात्तः । मत्सखेति । समासान्तविधेरनित्यत्वात् राजाहःसखिभ्यष्टजिति न । वृतषङ्गुणत्वाद्वृषः । आकं निरवधिकं सुखं पिबतीत्याकपिः पिबतेरौणादिको डिप्रत्ययः वृषश्चासावाकपिश्चेति विग्रहं मनसि निधायाह । वृषाकपिर्विष्णुरिति । अमददिति । मदी हर्षे । अस्माल्लुङिच्लेः पुषादित्वादङितिभावः । अत एव विश्वस्मादुत्तरः सर्वोत्कृष्टः इन्द्रः मुख्यत इन्द्र शब्दवाच्यश्चेत्यर्थ केन विश्वस्मादिन्द्र उत्तर इति पञ्चमपादेनान्वयः कार्यः ।

विष्णोरिन्द्रस्य हीनतामित्यत्रेन्द्रस्य सकाशाद्विष्णोर्हीनतामिति भ्रान्तिं वारयति । विष्णोरिति पञ्चमीति । विष्णुनामत इत्यत्र सहार्थतृतीयां ताद्विष्णुनामशब्दात्तस् । अस्यापि विष्णोरिन्द्रस्य हीनतामाहे त्यनेनान्वय इति भावेनाह । विष्णुनाम्नोपेतमिति । इन्द्रायेत्यत्रषष्ठ्यर्थे चतुर्थी सुपां सुप इति वचनात् । दैव्य इत्यत्र दिव् शब्दात् द्युप्रागपागुदक्प्रतीचोयदितिशैषिकोयत् ततः शेष इत्यतिशयार्थोऽण् । दिविभवोदिव्यः । देव इत्यर्थः । अतिशयितो दिव्यो दैव्य इत्यभिप्रेत्याह । इन्द्राय दैव्य इति । अतिशयेनेति । सुपूर्वात् कृञः किपि तरबिति भावः । वेधाइति । विधाञोवेधच्चेति सूत्रेणासुन्प्रत्यये विपूर्वाद्धाञो वेधादेशेचेदं रूपम् । श्वेतद्वीपादीति । सीदंत्यस्मिन्निति सदः सभास्थानमिति यावत् । सदेरधिकरणे सर्वधातुभ्योऽसुन्नित्यसुन् । पृषोदरादित्वाद्दस्यधः । सुषामादिष्वितिषः । त्रिषधः पूर्वात्तिष्ठतेरातोनुपसर्गे क इति के त्रिषधस्थ इति रूपमिति भावः ।

यजमानमित्यत्र यजेः पूङ्यजोः शाननिति ताच्छीलिकः शानन्प्रत्यय इति भावेन ताच्छीलिकणिनिना तत्पदं व्याख्याति । अश्वमेधयाजिनमिति । सचथाय सुखावस्थित्या इति । षचसमवाय इत्यतः कर्मणि । हन्तेरज्घुरचेत्युक्तोचथः । तिष्ठतेर्भावे औणादिकोडः निरुक्तत्वा-त्सकारलोपश्चेति भावः । आविवाय संवृतवानिति । दैत्याद्युपद्रवो यथा न स्यात्तथा संरक्षणाय सर्वदिक्षु व्याप्तवान् वीगतिव्याप्तिप्रजन कांत्यसनखादनेष्विति धातोरित्यर्थः । अजिन्वदज-नयदिति । सुखसाधनानीति शेषः । इन्द्रस्य सुखावस्थित्यै सुखसाधनान्यजनयदित्यर्थः ।

हिविजिविदिविधि विप्रीणानार्था इति दण्डके जिन्वतेः पाठादजिन्वदप्रीणादिति तु नव्याख्यातम् । सचथायेत्यनेन पौनरुक्त्यापत्तेः । अतः सुखकारणजनकत्वं लक्षणयोक्तम् । क्वचित्तु आविवाय अजनयत् । अजिन्वत् अजयदिति पाठः । तस्मिन्पाठे वीधातोः प्रजनार्थत्वाद-जनयदिति व्याख्यातम् । जि अभिभवे इत्यतो लङि व्यत्ययेन श्नुशविकरणयोः कृतयोर्यणि चाजिन्वदिति रूपसिद्धेरजयदिति व्याख्यातमिति भावः । ऋतस्य यज्ञस्येति । ऋतमुंछशिले तोये दीप्ते सत्येभिपूजिते इत्यभिधानादृतमभिपूजितं तच्च यजमानशब्द समभिव्याहाराद्यज्ञरूपं गृहत इति भावः । गृह्यत इति भावः । तत्प्रतियोगिकमिति । तन्निरूपितमित्यर्थः । यः सूर्यमिति । य इन्द्रः सूर्यं जनान । तथाय उषसंजनान । अपां नेता अहिदैत्येनावरुद्धानामपि तं हत्वा नेता प्रवर्तकः । स इन्द्रो जनासः जनान् । सप्तसुप्रथमेतिशसः स्थाने जस् । तस्याज्जसेरसुगित्यसुक् । जजानेत्यर्थः ।

ननु जनजनने अस्माल्लिटिजजानेति रूपम् । अस्योत्पन्न इत्यर्थः स्यात्सच प्रकृतासङ्गत इत्यत आह । जजान जनयामासेति । अंतर्नीतण्यर्थत्वादिति भावः । एषहवै ब्रह्मेति । योयं पवते देवादीन् ज्ञानोपदेशेन पवित्रीकरोति एषवै वायुरेव ब्रह्म ब्रह्मा भाविचतुर्मुखः तं वायुं परिविद्युत् तदभिमानिनी भारती वृष्टिः तदभिमानी इन्द्रः चन्द्रमाः आदित्यः अग्निरित्येवं पञ्चदेवताः म्रियन्त इत्यक्षरार्थः । परिशब्दस्येत्थंभूताख्याने कर्मप्रवचनीयत्वाल्लब्धमर्थमाह । तेन संह्रियन्त इत्यर्थ इति । म्रियंत इति रूपं तु मृङः कर्तरि लटि ङित्त्वादात्मनेपदे तुदादित्वात्शे रिङ्शयग्लिंक्ष्विति रिङादेशे इयङादेशे च बोध्यम् । अकर्मकत्वान्न कर्मणिलकारः । विष्णोः सूर्यादाधिक्यमिति । चक्षुषा सृष्टावित्यत्र चक्षोः सूर्यो अजायतेत्यत्र च विष्णुचक्षुरुत्पन्नत्वकथनेन यमादित्यो न वेद य आदित्यमन्तरो यमयतीत्य त्रादित्यावेद्यत्वतन्नियामकत्वकथनेनेति शेषः । अथापरा इति प्रमाणविच्छेदक भाष्यस्याभिप्रायमाह । प्रत्येकं सर्वार्थेति । विष्णोर्वाय्विन्द्रसूर्येभ्य आधिक्यं वायोरिन्द्र सूर्याभ्यामाधिक्यमिन्द्रस्य सूर्यादाधिक्यमित्येवं सर्वार्थप्रतिपादकत्वं प्रत्येकं तुरश्रुत्यादौ वर्तते न तुविहिसोतोरित्यादि वदेकैकस्यैकैकस्मादाधिक्यमुच्यत इति सूचनायाथापरा इति पृथक्करणमिति भावः । विष्णोर्वातो अजनिष्टेत्यादि वाक्यानामिन्द्रवायुविष्णूनां त्रयाणामपि सूर्यादाधिक्य प्रतिपादकत्वादेकैकस्य तदाधिक्यप्रतिपादक श्रुतिभ्योथापरा इति पृथक्करण-मित्यप्याहुः । प्राणादिन्द्रो रविर्विधुरिति भाष्ये इन्द्राद्रविर्विधुरिति व्याख्यानं ज्ञेयम् । वातादिन्द्रस्ततोरविरिति पूर्वप्रमाणसमाख्यानात् । गुणान्विष्णोः श्रुतिः प्राह नैवदेषान्कथंचने-त्युक्तार्थमाक्षिप्यावतारयति । नैवदोषानित्ययुक्तमिति । सोमःपवते जनिता मतीनां जनितादिवोजनिता पृथिव्याः । जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोरित्येतत्

श्रुतिशेषमुदाहरति । जनितोतेति । यत्र वाक्येदोष वच इत्यत्र वाक्यवचः शब्दयोरेकार्थत्व पौनरुक्त्यभ्रान्तिं वारयति । दोषाभिधानमिति । वस्त्वंतरमिति । यज्ञरूपम् । मखो विष्णुरिन्दुरि यज्ञनामसु पाठादित्यर्थः । अतो दोषवच इति भाष्यं क्रमान्मध्यगतेष्वपीति वक्ष्यमाणघटना प्रकारान्तरेणावतारयति । ननु लक्ष्म्यादीनामिति । अत्रोभयत्रेति । विष्णुपक्षे लक्ष्म्यादिपक्षेचेत्यर्थ गुणाल्पताया इति । स्वावरसृष्ट्यादि कर्तृत्वादिगुणाः ये पूर्वोक्तास्तदपेक्षयेति शेषः । अत इतीति अत इति पदेन यो हेतुरुक्तस्तं विशदयतीत्यर्थः ॥

## ऋग्भाष्यम्

त्रयोर्थाः सर्ववेदेषु दशार्थाः सर्वभारते ।
विष्णोः सहस्रनामापि निरंतरशतार्थकम् ।
इति स्कान्दवचो यस्मादर्थभेदव्यपेक्षया ।
निर्दोषत्वं हरेर्वक्ति दोषमन्येष्वपि क्रमात् ।
तारतम्यस्य विज्ञप्त्यै वचो दोषस्य चार्थवत् ।
गुणाः श्रुता इति ह्याह गुणैकनियतिं हरौ ।
निर्दोषगुणपूर्णश्च विष्णुरेको न चापरः ।
अपूर्णा दोषरहिता मायैका तद्वशैव च ।
अदोषः प्रायशो ब्रह्मा दोषवन्तः क्रमात्परे ।
इति मान्यश्रुतिश्चाह भेदोऽर्थानां ततो मतः ।
रूढिमेव समाश्रित्य विभज्यार्थान्यथाक्रमम् ।
विदोष गुणपूर्त्यर्थं विष्णौ योगार्थमानयेत् ।
पश्चादेव यथायोगमितरेष्वपि संनयेत् ।
ऋग्वेदसंहितायां च प्रभुणैवं समीरितम् ।
पृथग्रूपाणि विष्णोस्तु देवतान्तरगाणि च ।
अग्न्यादिसूक्तवाच्यानि नाम्नासूक्तभिदा भवेत् ॥

## ऋग्भाष्यटीका

यदि दोषाभिधायिवाक्यमन्यपरं तर्हि विष्ण्वादीनां सर्ववेदादिवेद्यता नस्यादित्यत आह ॥ त्रयइति ॥ निरन्तरशतार्थकमित्यनेन सर्वाण्यपि पदानि शतार्थानीत्युच्यते । इति स्कान्दवचो यस्माद्वेदस्यानेकार्थतां वक्ति तस्मादर्थभेदव्यपेक्षया योजनाविशेषविवक्षयैकमेव वाक्यं

हरेर्निर्दोषत्वमन्येषु क्रमाद्दोषमपि वक्तीत्यङ्गीकाराददोष इत्यर्थः । ननु दोषाभिधायिवाक्यं देवतान्तरेपि कस्मादन्यथा नयोज्यते दोषाभिधाने प्रयोजनाभावादित्यत आह ॥ तारतम्यस्येति ॥ यदि तत्तद्देवतासु विद्यमाना दोषा नैवोच्येरन् न तर्हि तासां तारतम्यं विज्ञायेत । तज्ज्ञानं चावश्यमपेक्षितं मुमुक्षोः । देवतातारतम्यं चेत्युक्तत्वात् । अतस्तज्ज्ञापनाय दोषवचनमपि सार्थकमित्यर्थः । अतो दोषवचो यत्रेत्युक्तं द्रढयति । गुणा इति ॥ आह श्रुतिः । माया श्रीः । निर्दोषेत्यादिकामान्यश्रुतिश्चाह गुणैकनियतिं हरौ । अन्येषु च यथास्वरूपमिति शेषः । ततः परमेश्वरस्य निर्दोषगुणपूर्णत्वादन्येषां चोक्तस्वरूपत्वाद्योजनाभेदेनार्थानां भेदो वैलक्षण्यमेव मतमित्यर्थः । यथायोगमिति योगवृत्त्या विष्णोर्वेदवेद्यत्वमुक्तम् । तन्नोपपद्यते । सर्वज्ञ इत्यादौ सर्वादिशब्दानामन्यपरत्वे हरेः सर्वशब्दाभिधेयत्वस्य व्याघातात् । भगवत्परत्वे योगायोगादि-त्याशङ्कां स्मृत्यैव परिहरति ॥ रूढिमिति ॥ सर्वादिशब्दानां रूढिमेव वृत्तिं तावत्समाश्रित्य निखिलादीनर्थान् विभज्य विस्पष्टं ज्ञात्वा । अनन्तरं यथाक्रमं शब्दानुशासनादिक्रमानतिक्रमेण । विष्णौ सर्वज्ञादिशब्दानां योगार्थमानयेत् । पश्चात्सर्वादि शब्दानामपि सरवादिशब्दानां रूढार्थानुपादायैव सरवः सर्व इत्यादि योगवृत्तिमानयेदित्यर्थः । किमनेन रूढ्यैव परमेश्वरस्य वेदवेद्यतास्त्वित्यत उक्तम् । विदोषेति ॥ भगवतो दोषाभाव गुणपूर्तिज्ञापनार्थं हि वेदानां प्रवृत्तिः न च रूढिमात्रेण सम्यक् तद्भवति । अतो योग एवाश्रयणीयः । यथायोगं तत्तद्देवतायोग्यतानतिक्रमेण ।

ननु यदि सर्वोपि वेदो भगवत्परः । कथं तर्हीदमग्निसूक्तमिदं वायुसूक्तमिति सूक्तभेद इत्यत आह ॥ पृथगिति ॥ द्विविधानि भगवद्रूपाण्यग्न्यादिसूक्तवाच्यानि । अग्न्यादिदेवतान्तरगाणि पृथक्त-दनन्तर्गतानि च । सर्वाणि चाग्न्यादिनामवन्ति । तत्राद्यानां स्वनाम्नाधिष्ठाननाम्नाचाग्न्यादिसूक्तभेदो भवेत् । इतरेषां तु स्वनाम्नैवेति ।

## पदार्थप्रकाशिका

न स्यादिति । दोषाभिधायिवाक्यस्यान्यपरत्वाङ्गीकारादित्यर्थः । दोषाभिधान इति । देवतान्तरेपीत्यर्थः । उक्तत्वादिति । 'देवता तारतम्यं च सर्वोत्कृष्टं च केशवम् । ज्ञात्वैव मुच्यते ह्यस्मान्नान्यथा तु कथञ्चने'ति पूर्ववोक्तत्वादिति भावः । भाष्ये अदोषः प्रायशो ब्रह्मेत्युक्तः प्रायः शब्दार्थो 'ऋजूनामेक एवास्ति परमोत्साहवर्जनम् । स गुणाल्पत्वमात्रत्वान्न जीवेन विरुध्यते' । इत्युक्तरीत्या द्रष्टव्यः । यथायोगमितीति । वेदादिवर्णपर्यन्तमित्यारभ्य यथायोगमित्यन्तेनेत्यर्थः ।

योगायोगादिति । भगवन्नामावार्तमात्रत्व प्रसङ्गेन योगस्य कर्तुमशक्यत्वादित्यर्थः । निखिलादीन् सर्वशब्दार्थभूतान् विस्पष्टं रूढ्या ज्ञात्वा योगार्थं निखिलार्थविषयकज्ञानवानित्यादि-यौगिकार्थमानयेत् जानीयात् । सरवः रवेण वेदेन सहितः तत्प्रतिपाद्य इत्यर्थः । नन्वेवं रवादिशब्दानामपि पुनर्यौगिकत्वेन तेषामपि भगवद्वाचकत्वसिद्ध्यर्थं तत्रापि पुनर्योगाङ्गीकारे तत्राप्येवमित्यनवस्था स्यात्तत्परिहारायान्ततः क्वचित्प्रकृतिप्रत्यययोर्वा केवलं रूढ्याऽन्यपर-त्वमङ्गीकार्यम् । यथोक्तं कर्मनिर्णये । 'अनवस्थानिवृत्त्यर्थं यौगिके रूढिकल्पने'ति । तथा चान्यत्र रूढिं प्रकृत्यादिवाच्यत्वाप्राप्त्या भगवतः सर्वशब्दवाच्यताभङ्ग इति चेत्सत्यम् । सिद्धान्त-रहस्यानभिज्ञोऽसि । न हि प्रकृतिप्रत्ययाद्यसंस्कृतशब्दवाच्यत्वमस्माभिरुच्यते । येन प्रकृत्यादौ योगासम्भवेन केवलरूढप्रकृत्यादि वाच्यत्वाभावेनोक्तपरिचोदनावकाशः । किन्नाम । प्रकृत्यादि-संस्कारैर्युक्तसर्वशब्दवाच्यत्वमेव । तथाच प्रकृत्यादेरन्यपरत्वेऽपि नास्माकं दोष इत्यादिकं सिद्धान्तरहस्याभिज्ञचूडामणि भिरस्मदाचार्यैः कृतायां प्रथमाध्यायचतुर्थपादीयसुघाटिप्पण्यां सविस्तरं प्रतिपादितं तत्रैवानुसंधेयम् । बिस्तरभयान्नेहोच्यते । किमनेनेति । योगवृत्या-श्रयणेनेत्यर्थः । तद्दोषाभावादिज्ञापनम् । आद्यानामिति । अग्न्यादिदेवतान्तर्गत भगवद्रूप-प्रतिपादकविद्यानां स्वनाम्नान्तर्गत भगवन्नाम्ना मुख्यतो अग्न्याद्यन्तर्गत तत्तन्नामक भगवत्प्रति-पादकत्वादग्न्यादिसूक्तत्वममुख्यया वृत्या तदधिष्ठानभूताग्न्यादिप्रतिपादकत्वाच्चाग्न्यादिसूक्तत्वमुच्यत इत्यर्थः । इतरेषामिति । अग्न्याद्यनन्तर्गताग्न्यादिनामकभगवत्प्रतिपादकानां सूक्तानां स्वनाम्ना अग्न्यादिनामक भगवन्नाम्नैवाग्न्यादिसूक्तभेदो भवेदित्यर्थः ।

## टीकाविवृतिः

अर्थभेदव्यपेक्षेति । यथाजनितोत विष्णोरित्यत्र सोमः पवत इति श्रुतिः । यदा जनीप्रादुर्भावे इति धातोर्जनिता प्रादुर्भावयितेत्यर्थः । योजनाविशेषेति । यथा आत्मावा इदमेक एवाग्र आसीदिति श्रुतिरग्रे प्रलये एक एवात्मा इदं जगदासीदिति योजनायां विष्णो-र्जगदभेदेनाज्ञानपारतंत्र्यादिदोषान्वक्ति । इदम् अस्य जगतः सुपां सुलुगिति षष्ठ्याः प्रथमैकवचनं सुः । अग्रे पूर्वं प्रलय इति यावत् । आत्मा एक एवासीत् अन्यत्किंचन ब्रह्मादिकं वस्तु मिषत् मेषोन्मेषयुक्तं प्रवृत्त्युपेतं नासीत्स्वरूपेण त्वासीदिति योजनायां तु विष्णोर्निर्दोषत्वमन्येषां लक्ष्म्यादीनां तदधीनत्वं प्रलयेऽविद्यमानत्वं क्रमेण तज्जन्यत्वमित्यादिदोषं वक्तीत्यर्थः ॥ देवतातारतम्यं चेतीति । अत्रैव पूर्वं देवतातारतम्यं च सर्वोत्कृष्टं च केशवम् । ज्ञात्वैव मुच्यते

ह्यस्मान्नान्यथातु कथंचनेत्युक्तत्वादिति भावः । वैलक्षण्यमेवेति । न तु वेदवाक्यानाम-प्रामाण्यमित्येवकारार्थः । यथायोगमितीति । वेदादिवर्णपर्यन्तैर्मूर्तयः केशवस्यतु । समासव्यासयोगेन वाच्यास्तात्पर्यतः पृथक् । यथायोगं यथान्यायमित्युक्तभाष्य इत्यर्थः । योगायोगादिति । भगवन्नाम्नामावृत्तिमात्रेण योगासम्भवादित्यर्थः । तावदिति । आदौ सर्वज्ञशब्दस्य परमेश्वरपरत्वकरणकाल इति यावत् । शब्दानुशासनादिक्रमानतिक्रमेणेति । सर्वशब्दे कर्मण्युपपदे ज्ञाधातोरातोनुपसर्गेक इति क प्रत्यय इत्यादि शब्दानुशासनानुसारेणेत्यर्थः । इतरेष्वपीत्यस्य षष्ठ्यर्थत्वमभिप्रेत्याह । सर्वादिशब्दानामिति । सर्वादिशब्दानामपीत्यस्य योगवृत्तिमानयेदि-त्यनेनान्वयः । सरव इति । वैदिकशब्दसहितः तत्प्रतिपाद्य इति यावत् । पृषोदरादित्वाद्रव इत्यत्र रेफोत्तराकारलोपः । आदि शब्दाद्रव इत्यत्रापि रः स्यात्पुमान् शिवे वह्नावित्यभिधानाद्रं शिवमग्निं वा वर्तयति प्रवर्तयतीति योगवृत्तिमानयेत् । वृतुवर्तने अस्माड्ड इत्यादि ग्राह्यम् । इतरेष्वित्यस्य विष्ण्वतिरिक्त देवार्थत्वमाश्रित्य यथायोगशब्दस्यार्थान्तरमाह । तत्तदेवतेति । तत्राद्यानामिति । प्रतिपादनपक्ष इति शेषः । सर्वस्य वेदस्य भगवत्परत्वेपि तत्तद्देवतान्तर्गततत्तन्नामकभ-गवद्रूपविशेषप्रतिपादकत्वात्सूक्तभेदस्तत्तन्नामकभगवदधिष्ठानानां भिन्नानामप्रतिपादकत्वाच्चेति भावः । इतरेषामिति । अनन्तर्गतभगवद्रूपाणां प्रतिपादनपक्षेतु स्वीयाग्न्यादिनाम्नैव सूक्तादिभेदो नत्वधिष्ठाननाम्नेत्यर्थः ॥

## ऋग्भाष्यम्

**नकिर्माकिः स्मसीत्यादिप्रोक्ताधिक्यविवक्षया ।**
**आधिक्येऽधिकमित्येव हरिणा सूत्रमीरितम् ।**
**कृत्वी हत्वीति पूर्वाश्च तृतीयोऽतिशये यतः ।**
**विश्लिष्टार्थे च विश्लिष्टमूनार्थे चोनमिष्यते ।**
**व्यत्ययोऽभेदकरणस्वातन्त्र्येषु समीरितः ।**
**अभेदो हरिरूपाणां गुणानां च क्रियासुच ।**
**तस्यैवावयवानां च भेदः श्रीब्रह्मपूर्वकैः ।**
**मुक्तैरपि जडैर्भेदः कैमुत्यादेव दृश्यते ।**
**ऋग्वेदसंहितायां च प्रोक्तमेतत्समस्तशः ।**
**अभेदः स्वगुणाद्यैश्च मुक्तानामपि सर्वशः ।**
**भेदाभेदस्त्वभेदश्च गुणैः संसारिणामपि ।**

जडानामंशतो भेदः समुदायेन चोभयम् ।
मनुष्यगन्धर्वपितृगणकार्मिकतात्विकाः ।
देवाःशक्रः शिवो ब्रह्मा मुक्तौ सौख्यादिभिर्गुणैः ।
शतायुतोत्तरा नित्यमन्योन्यप्रीतिसंयुताः ।
इति सिद्धान्तगं वाक्यं स्वयं भगवतेरितम् ।
स्वाध्यायस्तत्त्वविज्ञानं विष्णुभक्तिर्विरागता ।
निषिद्धकर्मसंत्यागो विहितस्य सदा क्रिया ।
सदा विष्णुस्मृतिश्चैव केवलं मोक्षसाधनम् ।
एतैर्विना नमोक्षः स्याद्धवेदेतैरपि ध्रुवम् ।

## ऋग्भाष्यटीका

एवमृषिच्छंदोदेवतास्वरूपं यथाक्रममुपपाद्येदानीमसमस्तव्याख्यानस्य प्रतिज्ञातत्वाद्व्याख्यानप्रकारं शिक्षयति ॥ नकिरित्यादिना ॥ ''नकिरिन्द्रत्वदुत्तरः'' ''माकिर्नेशत्'' । ''स्मसिस्थातर्हरीणामि''त्यादौ यल्लक्षणप्राप्ताधिकं शब्दरूपं तत्तत्र प्रोक्तस्यार्थस्याधिक्यविवक्षया प्रयुक्तं ज्ञातव्यम् । ''आधिक्येधिकमि''ति सूत्रात् अर्थाधिक्ये विवक्षितेऽधिकं शब्दरूपं भवतीति कृत्वी देवैर्निकिल्बिषं हत्वी दस्यूनिति पूर्वा वर्णविकाराश्च प्रोक्ताधिक्यविवक्षया प्रयुक्ता ज्ञातव्याः । यतस्तृतीयोतिशय इति सूत्रम् । अर्थातिशये विवक्षिते लक्षणप्राप्तस्य स्थाने तत्तृतीयो वर्णो भवति । अः इति ब्रह्मेत्यादि विश्लिष्टमसंहिततया निर्दिष्टं शब्दस्वरूपं विश्लिष्टार्थे तस्यार्थस्य विश्लिष्टत्वे व्यावृत्तत्वे व्याख्यातव्यम् । ''सलिलं सर्वमा इद''मित्यासीदिति वक्तव्ये आइत्याद्यूनं चार्थस्योनत्वे विवक्षिते ज्ञेयम् । सुप्तिङ्विकरणलिङ्गपुरुषकालहलच् स्वरकृत्तद्धितसमाससन्यङादि व्यत्ययस्त्वभेदकरणस्वातन्त्र्येषु व्याख्यातव्यः । तत्राभेदः कुत्र व्याख्येय इत्यत आह ॥ अभेद इति ॥ हरिणा परस्परं च । परिगणनस्य निमित्तमाह ॥ भेद इति ॥ एतत्पृथग्रूपाणीत्यारभ्योक्तम् । समस्तशः समस्तम् । न केवलमुदाहृतसूत्रसिद्धमिति चार्थः । अभेदस्य स्थलान्तरं दर्शयति । अभेद इति ॥ चिं(तनादि)तादिभिर्गुणैर्भेदसहितोऽभेदः ज्ञानादिभिरभेदः नैवं मुक्तानामिति तुशब्दः । जडानामपि घटादीनामवयविनामंशत एकैकांशेन संस्थानविशेषरहितांशसमुदायेन चोभयं भेदाभेदौ । समुदायेन संस्थाविशेषविशिष्टैः सर्वांशैरभेद इत्यावृत्त्या योज्यम् । प्रकृतमुक्तस्वरूपमेव विवृणोति ॥ मनुष्येति ॥ देवा इत्येतत्सामर्थ्यात्कार्मिकतात्विकविशेष्यम् । केचिच्छतोत्तराः केचिद्युतोत्तराः । सिद्धान्तो नामकश्चित् ग्रन्थः । एवमुक्तर्षिच्छन्दोदेवतादिज्ञानपूर्वस्य

वेदस्वाध्यायादेः फलमित्थंभावान्तरं च प्रमाणैर्दर्शयति ॥ स्वध्याय इति ॥ एतैर्विनेत्युक्त
व्यतिरेकान्वयाभ्यामुच्यते ।

## पदार्थप्रकाशिका

लक्षणप्राप्ताधिकं शब्दरूपमिति । 'अमानोनाः प्रतिषेध' इति व्याकरणसूत्रात् त्वदु
नेत्यादिनिषेधविवक्षायां नेन्द्र त्वदुत्तरः मानेशत् इत्येव वक्तव्ये यत्किरित्यधिकं शब्दरूपं दृ
तत्तत्रोक्तस्यार्थस्य निषेधस्य अशेषतो निषेधरूपाधिक्यविवक्षयेत्यर्थः । तथा अस
इत्यस्योत्तमपुरुषबहुवचने तिपृतसित्यादिसूत्रेण मसुप्रत्यये श्नसोरल्लोप इत्यकारलोपे रुत्वे विसर्
स्म इति लक्षणप्राप्तं रूपम् । तत्र मसः सकारस्य इकारागमो दृश्यते स्मसीति । तत्राप्युक्ता
विधेयस्याधिक्यविवक्षयेति ज्ञातव्यम् । यथोक्तं कर्मनिर्णये । 'अल्पाक्षरेण शक्योपि वक्तुं ब
यदि । उक्तस्याधिक्यमेवात्र निषेधोऽशेषतो भवेत्' इति । वर्णविकार इति । कृत्वा हत्वेत्याका
विपरिणाम इत्यर्थः । लक्षणप्राप्तवर्णस्येति । 'समानकर्तृकयोः पूर्वकाले' इति सूत्रेणा
त्त्वाप्रत्ययान्तत्वेन लक्षणप्राप्तो वर्ण अकारः तस्य स्थाने तदपेक्षया तृतीय इकाररूपो वर्णो भ
अतिशये विवक्षिते सतीत्यर्थः । असंहिततयेति । 'परः सन्निकर्षः संहिते
सूत्रेण वर्णानामतिशयितः सन्निकर्षः संहितासंज्ञतयोक्तत्वात् । एति वक्तव्ये अ
असंहिततया निर्दिष्टमित्यर्थः ।

व्यावृत्तत्वेति । जगद्विलक्षण (द्वैलक्षण्य) इत्यर्थः । सलिलमां इदमत्रेति । अप्रकेतं स
सर्वमा इदमिति श्रुतावित्यर्थः । आसीदिति वक्तव्ये आ इति वचनं सलिलात्मकर
ऊनत्वाभिप्रायमिति द्रष्टव्यम् । अर्थस्योनत्व इति । चेतनप्रकृत्यात्मकसलिलस्य नीचत्व इत्य
व्यत्यय इत्यत्र कस्य व्यत्यय इति न प्रतीयते इत्यत आह । सुप्तिङित्यादि । परिगणनस्ये
हरिरूपाणां गुणानामित्यादिपरिगणनस्येत्यर्थः । भेद इतीति । पत्यादिभिरत्यन्तभेदस्यैव स
निमित्तेन रूपादीनामेवाभेदो व्याख्येय इत्यर्थः । चिन्तादिभिरिति । किं मया कार्यमित्येवं
चिन्ता तदादिभिः मनःकरणकैरात्मधर्मभूतैरित्यर्शः । आदिपदेन ध्यानादिग्रहणम् ।
भेदाभेदाविति स्यात् भेदाभेद इत्येकवचनं कथमित्यतो मध्यमपदलोपीसमास इत्याह । भे
सहितोऽभेद इति । ज्ञानादिभिरिति । स्वरूपभूतज्ञानादिभिरित्यर्थः । मनोवृत्तयो हि द्विवि
चिन्तासन्तापादयो ज्ञानेच्छादयश्च । तत्र मनसि ज्ञानादिरूपेण विकृते सति
ज्ञानादयोऽभिव्यज्यन्ते । न तु जायन्ते । स्वतः सिद्धत्वात् । चिन्तादिरूपेण मनसि विकृते

जीवे चिन्तादयो जायन्ते । तेषामस्वाभाविकत्वात् तथाच ज्ञानादिभिः स्वरूपभूतैरत्यन्ताभेदः । चिन्तादिभिः भेदाभेदावित्यर्थः । तथाच संसारिणां गुणैर्ज्ञानादिभिरत्यन्तमभेदो गुणैश्चिन्तादिभिर्भेद सहितोऽभेदः । मुक्तौ तु सर्वशोऽपि गुणाद्यैरत्यन्ताभेद एवेति योजनीयम् । संस्थानविशेषविशिष्टांशसमुदायेनोभयं भेदाभेदश्चेत्यस्य सिद्धान्तविरुद्धत्वात् व्याचष्टे । जडानामपीति । एकांशेनेत्यादि । तत्राभेदः कारणात्मनाऽस्तीत्याशयः । अभेदो अत्यन्ताभेदः । आवृत्त्या समुदायेनेति पदस्यावृत्या देवा इत्यस्य मनुष्या इत्यादिना निर्दिष्टविशेष्यत्वायोगात् बुद्ध्या विवेकेन योज्यमित्यर्थः । भाष्ये मनुष्यपदं मनुष्योत्तमपरम् । गन्धर्वपदं मनुष्य-गन्धर्वदेवगन्धर्वपरम् । गणपदं चाजानदेवतासमुदायपरमिति स्पष्टत्वान्नोक्तमिति द्रष्टव्यम् । सर्वे शतायुतोत्तरा इत्यन्यथाप्रतीतेराह । केचिदिति । इत्थंभावान्तरमिति । पूर्वोक्त ऋषिच्छन्दोदे-वताज्ञानपूर्वकातिरिक्तस्य विष्णुभक्त्यादेरित्थंभावान्तरस्याभिधानादिति भावः । एतैर्विनेतीति । उक्तं यत्स्वाध्यादेर्मोक्षसाधनत्वं तदेवान्वयव्यतिरेकाभ्यामेतैर्विनेति वाक्येनोच्यत इति योज्यम् ।

## पदार्थदीपिका

लक्षणप्राप्ताधिकमिति । नकिर्माकिरित्यादौ अमानोनाः प्रतिषेध इति लक्षणप्राप्ताभ्यां नमा शब्दाभ्यामेव निषेधस्य लब्धत्वात् किरित्यस्याधिक्यमिति भावः । आधिक्यविवक्षयेति । निषेधे शेषतो निषेधविवक्षया विधौ विधेयाधिक्यविवक्षयेत्यर्थः । सलिलमा इदमितीति । अप्रकेतं सलिलं सर्वमा इदमित्यत्रेत्यर्थः । आसीदिति वक्तव्यमिति । अस्तेर्लुङि तिपि इतश्चलोप इतीकारलोपे अस्ति सिचोपृक्त इति अस्तेः परस्यापृक्तसार्वधातुकस्य इडागमे आडजादीनामिति अडागमे आसीदिति रूपनिष्पत्तिरिति भावः । आ इत्याद्यूनं चेति । अस्तेर्लुङि तिपि बहुलं छन्धसीति इण्णिषेधे हलङ्यादिति तिलोपे तिप्यनस्तेरिति पर्युदासाद्दकाराभावे आ इति क्रियापदनिष्पत्तिरिति भावः । सुप्तिङ् विकरणेति 'सुप् तिङुपग्रहलिंगनराणां हल्चस्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोपि च सिध्यति बाहुलकेनेति' । भागवततात्पर्यनिर्णयोदाहृतचिरन्तन-व्याकरणसूत्रानुसारेणेदम् । तत्रोपग्रहपदम् । महाभाष्ये उपग्रहपदं परस्मैपदात्मनेपदार्थतया व्याख्यातम् । यत्रात्मनेपदाच्छेद इत्यादेः । विकरणार्थतया व्याख्यातं कर्तृपदं कर्त्राद्यर्थ-ककृत्तद्धितसमासे सन् प्रत्ययपरतया व्याख्यातमित्यवगन्तव्यम् । समस्तशः समस्तमिति बह्वार्थाच्छरकारकादन्यतरस्यामित्यत्र विशेषानुपादानेन कारकशब्देन कर्मादिसर्वकारकग्रहणादिति भावः । उदाहृतेति । आधिक्येधिकमित्याद्युदाहृतेत्यर्थः । चिन्तादिभिरिति ।

मनःकरणकात्मधर्मैरित्यर्थः । भेदाभेद इत्येकवचनपुल्लिङ्गान्यतरानुपपत्या मध्यमपदलोपीसमास इत्याह । भेदसहित इति । ज्ञानादिभिरिति । स्वरूपज्ञानादिभिरित्यर्थः । जडानामेकेनांशेन भेदः संस्थानविशेषविशिष्टांश समुदायेन भेदाभेद इत्येतत् सिद्धान्तविरोधादयुक्तमित्यत अभेद इति पदच्छेदं समुदायेनेत्यस्यावृत्तिं चाश्रित्य व्याचष्टे । जनानामिति । एतैर्विनेति । केवलं मोक्षसधनमित्युक्तम् । एतैर्विनेत्यर्धेन व्यतिरेकान्वयाभ्यामुच्यत इति योजना ।

## टीकाविवृतिः

नन्विदानीं व्याख्यातव्यऋक्षु नकिर्माकिरित्यादिशब्दाभावादेतद्व्याख्यानमसङ्गतमित्यत आह । असमस्तव्याख्यानस्येति । अन्येतु ननु नकिर्माकिरित्यादिशब्दानां व्याख्यान प्रकारशिक्षणं प्रथमाध्यायेन प्रदर्शनीयम् । तत्तदध्यायव्याख्यानकाल एव तत्प्रदर्शनस्य स्वरससुन्दरत्वेनात्रा-वसराभावादिति चेत् स्यादेवं यद्युत्तरत्र समस्तऋग्व्याख्यानं क्रियेत । न चैवम् । तत्कुत इत्यत आह । असमस्तेति । तथाचात्रैव तत्प्रदर्शनं स्वरससुन्दरमिति भाव इत्याहुः । व्याख्यानप्रकारमिति । भाष्यकाराव्याख्यातऋग्व्याख्यानप्रकारमित्यर्थः । न किरिन्द्रेति । नकिरिन्द्रत्वदुत्तरो नज्याया अस्ति वृत्रहन्नित्यर्धर्चस्यायमर्थः । हे इन्द्रत्व दुत्तरस्त्वदुत्तमो नकिः सर्वथा नास्ति । हे वृत्रहन् त्वत् ज्यायान् अतिप्रशस्यश्च नास्तीति । माकिरिति । माकिर्नेशन्माकीं रिषन् माकीं संशारि । केवटे । अथारिष्टाभिरागहीत्यस्या ऋचोयमर्थः । पूषन्ननुप्रगा इहीत्यतः पूषन्निति वर्तते । हे पूषन् भगवन् माकिर्नैव नेशत् अनेशत् अगच्छत् । भक्तहृदयादिति शेषः । जेषृणेषृ एषृप्रेषृगताविति दण्डके पाठात् व्यत्ययेन परस्मैपदम् । भवान्भक्तहृदयात्कदापि नगच्छति सदा तत्र सन्निहितोस्तीति यावत् । तथामाकीं नैव रिषत् अरिषत् हिंसितवान् । वषमषरुषरिषहिंसार्था इति दण्डके पाठात् । लुङि भक्तवर्गं न नाशितवानित्यर्थः । नमेभक्तः प्रणश्यतीत्युक्तेः । तथास्वयं केनापि पुरुषेण केवटे कूपे उपलक्षणमेतत् । कस्मिन्नपि स्थाने । कृशयः केवट इति चतुर्दशकूपनामसु पाठात् । माकीं संशारिनैव मारितः । शॄहिंसायामिति धातोः कर्मणि लुङ् । अच्छेद्योयमदाह्योयमित्युक्तेः । अथ तस्मात्त्वम् अरिष्टाभिः अरिष्टं सूतिकागृह मासामस्तीत्यरिष्टाः स्त्रियः अर्शाद्यचि टाप् । ताभिः सह आगहि आगच्छेति । स्मसीति । त्वावतः पुरूवसोवयमिन्द्र प्रणेतः । स्मसिस्थात-र्हरीणामित्यृचोयमर्थः । हेपुरूवसो पुरु उत्कृष्टं वसु धनं यस्य तस्य सम्बोधनं हेपुरुवसो हेप्रणेतः जगत्प्रवर्तक हे हरीणामश्वानां स्थातः स्थापक इन्द्रवयं त्वावतः त्वमेषामस्तीति त्वावन्तः तेषां

सुपोभवन्तीति वार्तिकात्प्रथमायाः द्वितीया त्वदीया इत्यर्थः । स्मसि स्मः इदं तोमसीति मस्प्रत्ययोंत इकारागमोपेतो जात इति । आदिशब्दान्माकीमितिकीं शब्दः । सुनोतन पचत ब्रह्मवाहसे इत्यत्र सुनुतेति प्रयोक्तव्ये यत्प्रत्ययस्थाने तप्तनेति तनबादे शस्तदादिर्गृह्यते । यल्लक्षणप्राप्ताधिकमिति । अमानोनाः प्रतिषेध इति लक्षणप्राप्तनमाशब्दाभ्यां यत्किरित्यधिकं शब्दरूपं तथातिप्तसित्यादि लक्षणप्राप्तमस इकारागमलक्षणमधिकं शब्दरूपमित्यर्थः । आधिक्यविवक्षयेति । नकिर्माकिरित्यादिनिषेधे सर्वदेशकालसम्बन्धित्व विवक्षयस्मसीत्यादि विधौ च विधेयाधिक्यविवक्षयेत्यर्थः । कृत्वीदेवैरिति । पुनर्दायंब्रह्मजायां कृत्वी देवैर्निकिल्बिषम् । ऊर्जंपृथिव्याभक्त्वायोरुगायमुपासते इत्यस्या ऋचोयमर्थः । सख्यं कृण्वानाः हरिभक्तेः स्नेहं कुर्वाणाः राजानः जनकादयः ब्रह्मजायां ब्रह्मणः परब्रह्मरूपिणो रामादेर्जायां सीतादिरूपिणीं स्त्रियं पुनर्दत्वा । सीतादेरमारूपत्वेन पूर्वमेव विष्णुपत्नी त्वात्पुनरित्युक्तम् । तथादेवैरिन्द्रादिभिः निकिल्बिषं पापाभावम् । यज्ञादिना तत्प्रीतिमिति यावत् ।

कृत्वी अत्यन्तं कृत्वा पृथिव्या ऊर्जं पृथिवीसम्बन्धि सर्वमन्नं भक्त्वा य ब्राह्मणेभ्यो दत्वा उरुगायम् उरुभिःश्रेष्ठैर्ब्रह्मादि भिर्गीयत इत्युरुगायोविष्णुस्तम् उपासते ध्यायन्तीति । हत्वीदस्यू-निति । हिरण्य यमुतभोगं ससानहत्वीदस्यून् प्रार्यवर्णमावदित्यस्यार्थः । इन्द्रः परमेश्वरः हिरण्ययं सुवर्णमयं भोगं शरीरं सुवर्णसदृशशरीरं स्वर्णप्रचुरालंकृतशरीरं वा यद्वा हिरण्ययं सुवर्णप्राचु-र्यनिमित्तं भोगं सुखानुभवं ससान प्राप्तवान् । षणुलाभ इति धातोः । उतशब्दः समुच्चये । दस्यून् चोरान् दैत्यादीन् हत्वी निश्शेषं हत्वा वर्णं वरणीयं वृञ्वरण इति धातोः । आर्यं देवश्रेष्ठं ब्रह्माणं ज्ञानिनं वा आर्यम् उत्तमम् । वर्णं ब्राह्मणवर्णं वा प्रावत् रक्षितवानिति । पूर्वशब्दात्पीत्वीसोमस्य वावृध इत्यादि गृह्यते ।

तत्तृतीय इति । पूर्वोत्तरभागस्थ तृतीय इत्यर्थः । यथाहत्वीत्यत्र आकारस्य ईकारः क्वचित् । ईकारस्य आकारोवा । व्यावृत्तत्व इति । इतरेभ्य इति शेषः । तथाचाकारार्थस्य ब्रह्मणः स्वेतरसकलपदार्थव्यावृत्तत्वं ज्ञायत इत्याशयः । सलिलमिति । तम आसीत्तमसागूह्ळमग्रे प्रकेतं सलिलं सर्वमा इदमित्यत्रेति शेषः । अग्रे प्रलये तमः अन्धकारस्तदभिमानिनी दुर्गावा आसीत् । तथाऽग्रेऽप्रकेतम् अगाधं इदं सर्वं सलिलं प्रलयोदकं तमसा गूढं व्याप्तम् आ आसीत् । प्रलये विद्यमान परमात्मापेक्षयान्यूनमासीदिति श्रुत्यर्थः । सुप्तिङ्विकरणेति । सुप्तिङुपग्रहलिङ्ग नराणां काल हलच् स्वरकर्तृयङांच । व्यत्ययमिच्छति शास्त्रकृदेषां सोपि च सिद्ध्यति बाहुलकेनेति भागवततात्पर्योदाहृतमहाव्याकरण सूत्रमर्थतोनूदितम् । तत्रोपग्रह शब्दोविकरणार्थकत्वेन

व्याख्यातः । महाभाष्येतु परस्मैपदात्मनेपदपरत्वेन व्याख्यातः । नरशब्दस्य पुरुषेति व्याख्यानम् । तेन प्रथमपुरुषादिर्गृह्यते । कालशब्देन भूतादिकालोग्राह्यः । कर्तृशब्दः कारकमात्रपरः । अतस्तदर्थककृत्तद्धितसमासेति व्याख्यातम् । यङिति यङो यशब्दाल्लिङ्चाशिष्यङिति ङकारेण प्रत्याहारः । सनादीनामप्युपलक्षणमेतदिति भावेनोक्तं सन्यङादीति । अभेदो हरिरूपाणामित्यत्र प्रतियोग्यनुक्तेस्तदध्याहरति । हरिणेति । परिगणनस्येति । हरिरूपाणामित्यादिनाऽभेदस्थल कथनस्येत्यर्थः । भाष्ये कैमुत्यन्यायस्तु जडभेद इत्यत्रैवोक्तो ज्ञेयः । उक्तार्थे ऋग्वेदसंहितायां च प्रभुणैवं समीरितमिति प्रमाणोक्तेः पुनर्ऋग्वेदसंहितायां चेति पुनरुक्तिरित्यत एतदिति पदं व्याचष्टे । एतत्पृथग्रूपाणामित्यारभ्येति । पृथग्रूपाणि विष्णोस्तुदेवतान्तरगाणिचेत्यारभ्योक्तमित्यर्थः । समस्तशः समस्तमिति । बह्वल्पार्थाच्छस् कारकादन्यतरस्यामित्यत्र सामान्येन कारकशब्दोक्तेरत्र कर्मार्थकाच्छस्प्रत्यय इति भावः ।

उदाहृतसूत्रेति आधिक्येऽधिकमित्येवेत्यादि महाव्याकरणस्थसूत्रपञ्चकप्रसिद्धमित्यर्थः । चिन्तनादि क्रियाणां चमुक्तावुच्छेदतस्सदा । किं मयाकार्यमादीनां भेदाभेद उदाहृत इति बृहद्भाष्य वाक्यं मनसि निधायाह । चिन्तनादिभिरिति । किं मयाकार्यमित्येव मादिरूपचिन्तनादि क्रियाजनितनीचोच्चत्वादीनां मुक्तौ सर्वथानाशात्संसारे चोत्पत्तेर्मनःकरणकामोपादानकत्वा-द्भेदाभेदः । तेषां कामः सङ्कल्प इति श्रुतौ चिन्तनादीनां ध्यानरूपज्ञानादि विशेषत्वान्मनो वृत्तित्वोक्तेर्मनो वृत्तिज्ञानादेरत्यंत भेदस्यैव सर्वत्रोक्तेर्न यथा श्रुतचिन्तनादि ग्रहणमिति ध्येयम् । आदिपदाद्वृत्तिरूपज्ञानादिकार्योच्चत्वादिर्गृह्यते । भेदसहित इति । तथाच न पुल्लिङ्गैकवचनानुपपत्तिरिति भावः ।

ज्ञानादिभिरिति । स्वरूपभूतैरिति शेषः । तु शब्द एवार्थ इति भावेनाह । नैवमिति । ननु जडानामंशतोभेद इत्याद्ययुक्तम् । जडानामं शिनामेकांशेन भेदस्य संस्थानविशेषवि-शिष्टांशसमुदायेन भेदाभेदस्य चानङ्गीकारादित्यतोऽभेद इति पदच्छेदमाश्रित्य सम्यग्योजयति । जडानामपीति । तथाच चशब्दः सङ्गच्छत इति भावः । आवृत्त्येति । समुदायेनेत्यस्येति शेषः । मनुष्य गन्धर्व पितॄणां देवत्वासम्भवाद्विधांतरस्य चायोगादाह । देवा इतीति । अत एव मध्ये गणशब्द इति भावः । केचिदिति । रुद्रादिभ्यः सरस्वत्यादयः शतोत्तराः ब्रह्मादयस्त्वयुतोत्तरा इत्यर्थः । रुद्रादिभ्यः शतोत्तरसरस्वत्यादेः सकाशात् ब्रह्मादीनां शतोत्तरत्वात् शतगुणित शतस्यायुतपर्यायत्वादिति भावः । स्वाध्याय इत्यत्र मूले ऋषिच्छन्दोदैवत ज्ञानपूर्व इति शेषं तत्वज्ञानविष्णुभक्त्यादेस्तदङ्गत्वं च मनसि निधायाह । एवमुक्तर्षीति । एतैर्विनेतीति । उक्तमेव प्रमेयमेतैर्विनेति वाक्येन व्यतिरेकान्वयाभ्यामुच्यते इत्यन्वयः ।

## ऋग्भाष्यम्

ऋषिच्छंदोदैवतानि ज्ञात्वाऽर्थं चैवभक्तितः ।
स्वाध्यायेनैव मोक्षः स्याद्विरक्तस्य हरिस्मृतेः ।
जप्येनैवतु संसिद्ध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्नवा कुर्यान्मैत्रो ब्राह्मण उच्यते ।
तस्मान्नित्यं हरिं ध्यायन्कुर्यात्स्वाध्यायमञ्जसा ।
ऐहिकामुष्मिका भोगा रक्तस्यान्यस्तु मुच्यते ।
इति स्वाध्यायवचनं स्वयं भगवतोदितम् ।
स्वाध्यायात्तु प्रवचने सहस्रगुणितं फलम् ।
अर्थद्रष्टुः कोटिगुणं ततोऽनन्तं नियामके ।
तर्कागमाभ्यां नियतिं यःकरोत्यधिकं ततः ।
पूर्णं वेदाखिलद्रष्टुर्ब्रह्मणः फलमुच्यते ।

## ऋग्भाष्यटीका

ऋषीति वचनान्तरम् । हरिविषयास्मृतिर्यस्यासौ हरिस्मृतिस्तस्य । एतेन छन्दोज्ञानमनुपयुक्तमिति कस्यचिन्मतं निराकृतं भवति । जप्येनैवेति वाक्यान्तरम् । जप्येनोक्तलक्षणेन संसिध्येन्मुक्तो भवेत् । कुतः मित्रदेवताकगायत्रीजपेनैव फलवत्त्वाद्धि मैत्रो ब्राह्मणः । तस्मादित्यादि स्वाध्यायाख्यग्रन्थगतं वाक्यम् । तस्मादित्युक्तमेव दर्शितमैहिकेति । यथा श्रुतव्याख्यानादपि स्वयमर्थद्रष्टुरनन्तमनन्तगुणम् । बहुतरगुणमिति यावत् । नियामके स्वोक्तार्थस्य परं प्रत्युपदेशयितरि । आप्तिमात्रेणोपपादकादपि तर्कागमाभ्यां नियतिमुपपादनं यः करोति तस्याधिकं फलम् । यदेवं वेदार्थद्रष्टादिमात्रस्य महाफलं तदा ब्रह्मणः पूर्णं फलं किं वक्तव्यम् । वेदाखिलद्रष्टुरित्यखिलवेदतदर्थद्रष्टुरित्यर्थः । नियामकत्वं चात्र ग्राह्यम् ।

## पदार्थप्रकाशिका

पुनरुक्तिपरिहारायाह । ऋषीति वचनान्तरमिति । एतेनेति । छन्दोज्ञानपूर्वकस्वाध्यायस्य मोक्षसाधनत्वोक्त्या छन्दोज्ञानस्योपयुक्तत्वेनेत्यर्थः । अत्रापि पुनरुक्तिपरिहारायाह । जप्येनैवेतीति । उक्तलक्षणेनेति । ऋषिच्छन्दोदेवताज्ञानभक्तिपूर्वकमनुष्ठितेनेत्यर्थः । कुत इत्यनन्तरं यत इत्यनेनेति शेषः । फलं मोक्षः । भाष्ये अन्यस्त्विति । ऐहिकामुष्मिकभोगविरक्तस्त्वित्यर्थः ।

ननु स्वाध्यायप्रवचनयोरर्थज्ञानपर्यन्तत्वात्कथमर्थद्रष्टुस्ततोऽधिकफलमित्यत आह । यथाश्रुतेति । प्रवचनपदप्रोक्तादित्यर्थः । अनन्तगुणफलवत्त्वस्य बाधितत्वादाह । बहुतरेति । यावत्प्रमाणसिद्धं तावदित्यर्थः । आप्तिमात्रेणोपपादकादपीति । तर्कागमाभ्यामुपपादनशक्तिरहितः गुरूपदेशमन्तरेण स्वयमेवार्थदर्शनेन सम्यग्विवक्षितार्थतत्वज्ञानवान् आप्तिमात्रेणोपपादक इत्युच्यत इति द्रष्टव्यम् । वेदार्थद्रष्टृत्वमात्रस्येति । असमग्रवेदार्थद्रष्टुरित्यर्थः । कुतो ब्रह्मणः पूर्णं फलमित्याशङ्कायां तत्र हेतुकथनाय प्रवृत्तं वेदाखिलस्य द्रष्टुरिति भाष्यम् । तत्र विशेषणभूताखिल पदस्य परनिपातो जातोऽस्ति भाष्य इत्यभिप्रायेण व्याचष्टे । अखिलवेदद्रष्टुरिति । नियामकत्वं चेति । तर्कागमाभ्यां नियामकस्येति पूरणीयमित्यर्थः ।

## पदार्थदीपिका

वचनान्तरमिति अतो न पुनरुक्तिरिति भावः । हरिविषयेति मध्यमपदलोपी बहुव्रीहिः । अन्यथा वैय्यधिकरण्येन बहुव्रीह्ययोगादिति भावः । तत्समाधिसौकर्यादुक्तं गमकत्वेन व्यधिकरणानामपि बहुव्रीह्ययोगादिति भावः । एतत्समाधिसौकर्यादुक्तं गमकत्वेन व्यधिकरणा-नामपि बहुव्रीहेर्बहुषु स्थलेषु अङ्गीकारादिति ध्येयम् । स्वाध्यायप्रवचनयोरर्थज्ञानपर्यन्तत्वात्कथ मर्थद्रष्टुस्ततोधिकं फलमित्यत आह ॥ यथाश्रुतेति वचनपदोक्तादिति भावः । तस्येति शेषोक्तिः फलमित्यनुवृत्तिः ।

## टीकाविवृतिः

पुनरुक्तेराह । ऋषीतिवचनान्तरमिति । हरौ स्मृतिर्यस्येति बहुव्रीहिः सप्तमीच्च विषयार्था । यद्वा हरेः स्मृतिर्यस्येति विग्रहः । षष्ठीच्च विषयविषयिभावसम्बन्धार्थेति भावेनाह । हरिविषयेति । सप्तमीविशेषणे बहुव्रीहावित्यत्र सप्तम्यंतस्य बहुव्रीहिसमासे पूर्वनिपातनाल्लिङ्गाद्व्यधिकरणानामपि बहुव्रीहेर्ज्ञापनादिति भावः । केचित्तु हरिविषयेति मध्यमपदलोपी बहुव्रीहिः । अन्यथा वैयधिकरण्ये बहुव्रीह्ययोगादिति भाव इत्याहुः । एतेनेति । छन्दोज्ञानस्य फलकथनेनेत्यर्थः । छन्दोज्ञानस्य फलार्थत्वेनैवोपयोगादिति भावः । उक्तलक्षणेनेति । ऋषिच्छन्दोदैवतज्ञानपूर्वके ण जप्येन मन्त्रेणेत्यर्थः । जप्येनैवेति वाक्येन तस्मान्नित्यमिति वाक्यस्यासङ्गतेराह । तस्मादित्यादीति । तस्मादित्युक्तमेवेति । यस्मादैहिकामुष्मिकाभोगास्तेषु रक्तस्य कामुकस्य भवन्ति । कामुकादन्यस्तु मुच्यत इति तस्मादित्युक्तं फलवत्त्वं प्रदर्शितमित्यर्थः ।

ननु स्वाध्यायोवेदपाठमात्रम् । तदपेक्षया प्रवचने व्याख्याने सहस्रगुणितं फलमित्युक्तं युक्तम् । केवल पाठादर्थज्ञानस्याधिक्यात् । व्याख्यात्रपेक्षयार्थद्रष्टुः कोटिगुणं फलमित्युक्तमयुक्तम् । तयोरर्थज्ञातृत्वेन भेदाभावादित्यत आह । यथाश्रुतेति । गुरुमुखेन यत् श्रुतं यथाश्रुतं तावन्मात्र व्याख्यानं प्रवचनशब्देन विवक्षितम् अर्थद्रष्टृत्वं च स्वबुद्धिबलाद्गुर्वाद्यनुक्तार्थज्ञानं विवक्षितमिति भावः । यः करोत्यधिकं तत इत्यत्र तसेः सार्वविभक्तिकत्वमावृत्तिं च मनसि निधाय व्याख्यातं तस्येति । वेदाखिलद्रष्टुस्ततोधिकमिति वक्तव्ये पूर्णमित्युक्तिरसंगतेत्यतः कैमुत्यन्याय परत्वेनैतद्वाक्यं योजयति । यदैवमिति । वेदाखिलद्रष्टुरित्यत्राखिलशब्दस्य वेदविशेषणत्वेऽखिल वेदद्रष्टुरिति प्राप्ते कडारादित्वादखिलशब्दस्य परनिपातं वेदाविशेषणत्वे वेदस्याखिलमर्थं पश्यतीति वेदाखिलद्रष्टेति च विग्रहं मनसि निधायाह । अखिलवेदतदर्थद्रष्टुरित्यर्थ इति ।

## ऋग्भाष्यम्

दार्ढ्यमेवानुदात्तार्थ उदात्तस्योच्चतार्थता ।
नीचता स्वरितस्यार्थः प्रचयस्य यथास्थितिः ।
समाहारेऽखिला अर्थाः स्वरार्थानामियं स्थितिः ।
स्तुत्यधर्मस्य भेदेन पदाद्यादिस्वरे भिदा ।
साधारणो विधिस्त्वेष विशेषो यत्र यत्र च ।
क्रमादेव तदन्येपामृष्यादीनां स्वयोग्यतः ।
विपर्ययार्थकथने विपरीतं तथा तमः ।
यावत्प्रयोजको ज्ञाने तावत्तावच्छुभाधिकः ।
तथैव विपरीतेऽपि स्मृतौ ज्ञानेच तत्समम् ।
तमोनिरयमानुष्यस्वर्गमोक्षातिरेकतः ।
योग्यतातारतम्येन फलं सर्वेषु चोच्यते ।
इति प्रवृत्तवचनं विवेकेऽप्येतदीरितम् ।
यादृशो योग्यतां यायात्स ज्ञेयोऽर्थस्तथा स्फुटम् ।
अनन्तनियमैर्युक्ता अनन्तार्थविशेषिणः ।
वेदा इति समासेन नियमोऽयं समीरितः ।
ऋक्संहितागतं वाक्यमिति चान्यन्नियामकम् ।
तस्माद्वंद्याश्च पूज्याश्च ब्रह्माद्या ज्ञानयोजकाः ।

गुरुत्वेन क्रमादेव विशेषेणैव केशवः ।
आरभ्य स्वगुरुं यावद्विष्णुरेवोत्तरोत्तराः ।
क्रमान्निष्फलताऽन्यत्र गुरुतत्त्वे समीरिता ।

## ऋग्भाष्यटीका

वेदार्थज्ञानस्य फलमुक्तं वेदश्च स्वरवर्णात्मकस्तत्र स्वरा निरर्थका इतिकेषाश्चिन्मतं तदसदिति भावेनाह ।। दार्ढ्यमेवेति ।। स्वरवद्वर्णार्थस्य दार्ढ्यमित्यादि । यथास्थितिरिति वर्णार्थस्यानन्यथात्वमविकारित्वं दार्ढ्यादन्यत् । समाहारो नाम साप्तस्वर्यमङ्गीकुर्वाणैः पातञ्जलैः स्वरविशेषो व्युत्पादितः तस्याखिला अप्यर्थाः सन्ति प्रकरणादिवशात्तद्विशेषग्रहणमित्याशयः । यद्वाऽनेकाक्षरे पदे स्वरसमाहारे सत्यखिला अप्यर्थाः प्रतिपत्तव्याः ।

नन्वेवं सति तत्र विरोधः स्यात् । एकस्य पदस्य ह्येकोर्थः अनेकाक्षरत्वादनेके स्वराः नह्येकार्थस्योक्तानेकार्थैर्विशेषणं युक्तमित्यत आह ।। स्तुत्येति ।। एकस्मिन्नपि पदे नैकवर्णैस्तुत्यानां भगवद्धर्माणामनेकत्वेन तत्तद्विशेषणार्थं पदस्यादिमध्यान्तस्वराणां भिदाभिन्नार्थत्वं न विरुद्धमित्यर्थः । उक्तं चैतन्न नियतमतोपि न विरोध इत्याह ।। साधारण इति ।। विधिः प्रकारः स्वरार्थानाम् । अतो यत्र यत्र विशेष उच्यते तत्र तत्रोक्तः सोपि ग्राह्य इत्यर्थः । पुनर्वेदव्याख्यानस्येत्थं भावमाह । क्रमादेवेति ।। उत्तमा ऋषयोऽशेषार्थान् पश्यन्ति । तदन्येषामृषीणां क्रमादेव स्वयोग्यतानु सारेण तत्तद्वाक्यार्थज्ञानम् ।

इदमुक्तं भवति । यो योऽर्थो येन येनर्षिणा द्रष्टुं योग्योऽसावसावेव तत्तद्दृष्टतया ज्ञातव्यो न व्यत्यासेनेति । आदिपदेन देवतायामप्येतज्ज्ञातव्यमित्युच्यते । वेदार्थव्याख्यानं च यथावस्तुकृतमेवोक्तफलप्रदं नान्यथेति भावेनाह ।। विपर्ययेति ।। विपर्ययेणार्थकथने विपरीतं फलं भवति । किं तत् । तमस्तथा । तदसद्व्याख्याने च स्वाधिक्यानुसारेण फलप्रदे इत्याह ।। यावदिति ।। ज्ञाने सज्ज्ञाने । विपरीते ज्ञान इति सम्बन्धः । स्मृतौ च सत्यां विपरीतायां च तदुक्तं सममित्यर्थः । ननु मोक्षादिकं हि तत्फलं तच्चैकप्रकारमिति कथमेतदित्यत आह ।। तम इति ।। तमःप्रभृतीनामतिरेकतस्तारतम्यवत्त्वात् । सर्वेषु उक्तेषु व्याख्यात्रादिषु । प्रवृत्तवचनं स्वाध्यायादित्यादिकम् । विवेके विवेकाख्येपि ग्रन्थे । यद्येवं तर्हि वेदव्याख्यानमेवोपरम्यताम् । सदसदर्थविवेकस्य कर्तुमशक्यत्वादित्याशङ्कां स्मृत्या परिहरति ।। यादृश इति ।। योग्यतां यायात् प्रमाणतस्तत्प्रतिपाद्यैरन्वितः स्यात् । सोऽर्थः । तथा सन् । ज्ञेय इत्यर्थः । नन्वेवं संक्षिप्य

कस्मादुच्यते अत्रायं सन्नर्थ इति विस्तरेणैवोच्यतामित्यत आह ।। अनन्तेति ।। नियमैर्व्याख्यानादीत्थंभावैः । अनन्ता अर्थविशेषा येषां सन्ति ते तथोक्ताः । नियमः सदसदर्थव्यवस्था । नियामकं विवक्षितार्थस्य प्रतिपादकम् । यत एवमसदर्थकथने महाननर्थस्तस्मात्प्रामादिकापराधपरिहाराय प्राचीनव्याख्यातृवन्दनादिकं कार्यमित्याह ।। तस्मादिति । क्रमादित्युक्तं क्रममेव दर्शयति ।। आरभ्येति ।। अन्यत्रान्यथा । निष्फलता विपरीतफलताच । गुरुतत्वे गुरुतत्वाख्ये ग्रन्थे ।।

## पदार्थप्रकाशिका

दार्ढ्यं कस्येत्यत आह । स्वरवद्वर्णार्थस्येति । अनुदात्तस्वरवन्तो ये वर्णास्तदर्थस्येत्यर्थः । वर्णार्थस्येति । प्रचयस्वरवर्णार्थस्येत्यर्थः । नेदमनुदात्तस्वरार्थवद्दार्ढ्यान्तर्गतमित्याह । दार्ढ्यादन्यदिति । दार्ढ्यभिन्नयथास्थितमेव स्वरूपं प्रचय इत्यर्थः । साप्तस्वर्यमिति । चातुर्वर्ण्यादिवत् स्वार्थे ष्यञ् । सप्तस्वरा एव साप्तस्वर्यः स्वरविशेषः उदात्तादिस्वरभिन्नपृथक्स्वरविशेष इत्यर्थः । अखिला अप्यर्था इति । उदात्ताद्यखिलस्वरार्था अपि सन्तीत्यर्थः ।

नन्वेकस्य समाहाररूपस्वरवर्णार्थस्य कथमुच्चनीचाद्यनेकार्थत्वं युक्तं विरुद्धत्वादित्यत आह । प्रकरणादिति । समाहारस्वरेणानेकार्थसद्भावेऽपि यदा योऽर्थोऽपेक्षितस्तदा प्रकरणादिवशात्स ग्राह्य इत्यर्थः । समाहारस्वरमङ्गीकृत्य तदर्थ उक्तः । वस्तुतस्तु एतादृशउदात्ताद्यतिरिक्तस्वरविशेषो नास्ति मानाभावादित्यभिप्रेत्याह । यद्वेति । तथाचास्मिन्पक्षे नानारूपसमाहारश्चित्रमितिवत् उदात्तानुदात्तस्वरितप्रचयानां चतुर्णां स्वराणां समाहार एव समाहारस्वरतया विवक्षितो न तेभ्योऽतिरिक्त इति ध्येयम् । स्वरसमाहार इति । कवी नो मित्रावरुणावित्यत्र अनेकाक्षरात्मके पदे अनुदात्तादिस्वरचतुष्टयसमाहारो द्रष्टव्यः । अर्थाः स्वराः । एवं सतीति । एकैको स्वर इत्यनेके स्वरा इत्यर्थः । अनेकार्थैरिति । उदात्तादिस्वरार्थभूतोच्चत्वादिरूपार्थैरित्यर्थः । तत्तद्विशेषणार्थमिति । तत्तद्वर्णप्रतिपादितेषु भगवद्धर्मेषु उच्चत्वादिरूपतत्तद्विशेषणयुक्तत्वप्रतिपादनार्थमित्यर्थः । तथाचैकस्य पदस्य भगवद्रूप एकार्थप्रतिपादकत्वेऽपि तद्धर्माणामनन्तत्वेन तेषां पदगतैकवर्णस्य स्वरार्थैर्विशेषणं न विरुद्धमिति भावः । स्वनियतमिति । अनेकाक्षरे पदे अनेकस्वरसमाहार इत्येतन्नियतमित्यर्थः । यद्वा दार्ढ्यमेवानुदात्तार्थः इत्यादिनाऽनुदात्तादिस्वराणां यद्दार्ढ्यमुक्तं तन्नियतमित्यर्थः । यत्र यत्र स्थानविशेषे । विशेषस्वराणामर्थविशेषः उक्तदार्ढ्योच्चताद्यतिरिक्तः । उत्तमा ऋषयो ब्रह्माद्याः । तदन्येषां मधुच्छन्दप्रभृतीनाम् ऋषीणाम् ।

नन्वनेनेत्थंभावो वेदव्याख्याने उक्तः स्यादित्यत आह। इदमुक्तं भवतीति। ज्ञातव्यो ज्ञात्वा व्याख्यातव्य इत्यर्थः। न व्यत्यासेनेति। उत्तमऋषीणां द्रष्टृयोग्यार्थस्य अधमऋषिदृष्टत्वं ज्ञात्वा तथाऽधमऋषीणां द्रष्टृयोग्यार्थस्योत्तमर्षिदृष्टत्वं ज्ञात्वा वेदो न व्याकर्तव्य इत्यर्थः। आदिपदेन देवतायाः अपीति। यस्या यस्या देवताया ये ये गुणा योग्यास्तांस्तानेव तत्र तत्र ज्ञात्वा तत्प्रतिपादकतया वेदो व्याकर्तव्य इत्यर्थः। अनेन वेदे उत्तमाधमभावेनानेके ऋषयः सन्ति। तत्राधमाः शक्रादयो ब्रह्माद्युत्तमदर्शनयोग्यार्थव्यतिरिक्तस्वयोग्यार्थद्रष्टृत्वेन ऋषयः। एवं मधुछन्दप्रभृतयो देवतादियोग्यार्थव्यतिरिक्तार्थद्रष्टृत्वेन ऋषय इत्यनुसन्धानं कृत्वैव व्याख्यानं कर्तव्यं, न त्वधमायोग्यार्थस्य तद्द्रष्टृत्वं ज्ञात्वेतीत्थंभाव उक्तो ज्ञातव्यः। तथा नारायणस्य सर्वविद्याप्रतिपाद्यत्वं ज्ञात्वा श्र्यादिमारभ्य शक्रान्तानां पूर्वप्रसिद्धवर्जं सर्ववेदप्रतिपाद्यत्वं ज्ञात्वां तत्तद्योग्यगुणान् तेषु तेषु ज्ञात्वा वेदो ज्ञातव्य इत्यपीत्थंभावो उक्तो भवतीति ज्ञातव्यम्। यथावस्तुवृत्तं याथार्थ्येन कृतम्। तमस्तथेति। तमो विपरीतं फलमित्यर्थः। सद्ज्ञाने सद्ध्यानेत्यर्थः। भाष्ये ज्ञाने सद्ज्ञाने प्रयोजक उपदिष्टेत्यर्थो ज्ञातव्यः। सत्यां समीचीनायाम्। उक्तं सममिति। शुभाधिक्यं तमश्चेत्युक्तं फलद्वयसममित्यर्थः। तत्फलं सदसद्व्याख्यानफलम्। उक्तेष्विति। सदसद्व्याख्यानादिष्वित्यर्थः। आदिपदेन सदसत्स्मृतिकर्तृष्वपि ग्राह्यम्। यद्येवमिति। सदसद्व्याख्यानयोः स्वाधिक्यानुसारेण फलप्रदत्वमित्यर्थः। तत्प्रतिपाद्यैरिति। तथा च यादृशार्थो गुणादियोग्यतां योग्यत्वं यायात् प्रमाणतो वेदप्रतिपाद्यैरन्वितः स्यात्। प्रतिपाद्यवेदेषु स गुणादिः प्रामाणिकश्चेत्स्यादिति यावदित्यर्थो द्रष्टव्यः। एवं संक्षिप्येति यादृश इत्यादिना संक्षिप्येत्यर्थः। अन्यथा वन्दनाभाव इत्यर्थः॥ २॥

## पदार्थदीपिका

इत्यादीति। अनुदात्तस्वरवद्वर्णार्थस्य दार्ढ्यमनुदात्तार्थः। उदात्तस्वरवद्वर्णार्थस्योच्चत्वमुदात्तर्थ इत्यादीत्यर्थः। पतंजलैरिति। एतदतिरिक्तसमाहारस्वरव्युत्पादनप्रकारस्तत एवानुसन्धेय इति भावेन नत्वनभिमतत्वाभिप्रायेणेति ध्येयम्। नन्वेकस्य समाहारस्वरवद्वर्णार्थस्य कथमुच्चनीच-त्वाद्यनेकार्थे विशेषणमित्यत आह। प्रकरणादिति। वस्तुतस्तु उदात्तादिव्यतिरिक्तस्वरः समाहाराख्यो नास्त्येव तर्हि कथं भाष्ये तदुक्तिरित्याशङ्क्य अनेकाक्षरवतिपदे अक्षरभेदे-नानेकस्वरसमाहार एवायं नत्वन्य इत्यर्थान्तरमाह। यद्वेति। देवतायामपीति। यादृशदेवतायां यादृशगुणवत्वयोग्यता तादृशदेवतायां तत्तत्सूक्तमन्त्रादिभिः तथैवार्थो ज्ञातव्य इत्यर्थः।

तत्किमिति परमात्मलक्ष्म्यादीनामेव देवतात्वस्योपपदनात् प्रसिद्धाग्न्यादीनाम् ऋगादिप्रतिपाद्य बहुगुणवत्वाभावाच्चेत्यभिप्रायः ।

## टीकाविवृतिः

ननु अनुदात्तादीनां वर्णधर्मत्वात्कथं वर्णेभ्यः स्वराणां पृथगर्थोक्तिरित्यत आह । स्वरवद्वर्णार्थस्य दार्ढ्यमिति । अनुदात्तस्वरसहितवर्णानां योर्थस्तस्य दार्ढ्यं ज्ञेयमित्यर्थः । आदिशब्दादुदात्तस्वरविशिष्टवर्णार्थस्योच्चता । तथोदात्तश्रुतिरूपस्वरितयुक्तवर्णार्थ स्य नीचतेत्य-र्थोग्राह्यः । प्रचयविशिष्टवर्णार्थस्य यथास्थित इति पदेन दार्ढ्यमेवोक्तमिति भ्रान्तिं वारयति । अनन्यथात्वमिति । ननु वेदे व्याकरणे च प्रसिद्धत्वात्स्वरचतुष्टयार्थकथनं युक्तम् अप्रसिद्धसमाहारस्वरार्थकथनं त्वयुक्तमित्यत आह । समाहारो नामेति । समाहारो नाम स्वरविशेष उदात्तानुदात्तसमुदायरूपः स्वरितभेदः । पातंजलैः पतंजलिशिष्यैः व्युत्पादितः । कुतः सप्तस्वराङ्गीकारादित्यर्थः । तथाचैकश्रुतिदूरात्संबुद्धाविति सूत्रे महाभाष्ये उक्तम् । त एते तन्त्रे तरनिर्देशे सप्तस्वरा भवन्ति । उदात्त उदात्ततरोनुदात्तो अनुदात्ततरः स्वरित स्वरिते य उदात्तः सोन्येन विशिष्ट एकश्रुतिश्च सप्तम इति । अस्यार्थः । उदात्तस्वरितपरस्य सन्नतर इति सूत्रेतरनिर्देशे विवक्षिते सति स्वराः सप्त भवन्ति । एषामुदाहरणानि । स इद्देवेषु गच्छतीत्यत्र स इत्युदात्तः । वौषट् शब्द उदात्ततरः । स इदित्यर्धे एव पदकाले गच्छतीति पदमनुदात्तम् । देवेष्विति पदे देवशब्दोऽनुदात्ततरः । पूर्वस्वरितशब्देनोदात्तश्रुतिरूपस्वरित उच्यते यथादेवेष्वित्यत्रैव षु शब्दः । स्वरिते वर्णे यः पूर्वभाग उदात्तः सोऽन्येनानुदात्तद्वितीयभागेन विशिष्टः उदात्तानुदात्त समाहाररूप इति यावत् । तदुक्तं समाहारः स्वरितः । तस्यादित उदात्तमर्धह्रस्वमिति । यथा कावोश्वाः । प्रचयापरपर्याया एकश्रुतिर्यथा । स इदित्यर्धे संहितायां गच्छतीति । एषां लक्षणादिकं मत्कृतशाब्दिककण्ठमणौ बोध्यम् । क्वेत्येकस्मिन्पदे समाहारस्योच्चनीचत्वाद्यखिलार्थवत्वं कथं घटते व्याघातादित्यत आह । प्रकरणादिवशादिति । तद्विशेषग्रहणं अर्थविशेषग्रहणम् । यद्वेति । अस्मिन्पक्षेऽनेकाक्षरे पदे स्वराणामित्यध्याहार इति भावः । नह्येकस्येति । एकत्रोच्चत्वनीच-त्वयोर्विरोधादिति भावः । अनेकवर्णैरिति । यथा वायवायाहीत्यत्र वायो इति पदे बलत्वादयनाच्चैव वायुरित्यभिधीयत इति व्याख्यास्य मानत्वाद्विष्णौ वशब्देन बलमायुशब्देन गमनकर्तृत्वमुच्यते । तत्र वशब्दस्योदात्तत्वादुच्चत्वे गृहीत उच्चं बलमर्थः । आयो इत्यस्यानुदात्तत्वाद्दार्ढ्यार्थिकत्वेन दृढगमनकर्तृत्वमर्थः स्यादत एकस्मिन्नपि पदेऽनेकस्वरार्थानां न विरोध इति भावः । उक्तं चैतदिति । स्तुत्यर्थधर्मभेदेनेत्यनेनोक्तमित्यर्थः । यत्र यत्रविशेष इति ।

अयमाशयः । यत्र पदेऽवयवार्थाः भगवद्धर्मातिरिक्ता उच्यन्ते तत्रावयवार्थत्वेन भगवद्धर्मः भगवद्धर्मातिरिक्तोप्यर्थो ग्राह्यः । यथा अग्र्यत्वमग्रनेतृत्वमत्तिमंगाङ्गनेतृतामित्यग्नि शब्दावयवार्थेष्वं-गनेतृत्वादिषु भगवद्धर्मातिरिक्तोक्तेस्तत्र स्वरार्थान्वयेन विरोधः । अङ्गार्थस्याग् इत्यस्य दार्ढ्यार्थिकानुदात्तत्वात् । नि इत्यस्य नेतृत्वार्थस्योच्चत्वार्थकोदात्त वत्त्वाद्दृढांगानामुत्कृष्टनेनेति । तत्तद्वाक्यार्थज्ञानमस्तीति सिद्धवदुक्त्या कथं वेदव्याख्यानस्येत्थं भावकथनमित्यत आह । इदमुक्तं भवतीति । देवतायामपीति । उत्तमदेवतायां सर्ववेदोक्तमाहात्म्यम् । अन्यत्र तत्तद्योग्यतानुसारेण वेदोक्तमाहात्म्यमित्यर्थः । तमस्तथेति । तथा विपरीतफलरूपम् । व्याख्यात्रादिष्विति । आदिशब्दाद्वक्तृस्मर्त्रोर्ग्रहणम् । इति प्रवृत्तवचनमित्यत्रेतिशब्दपरामृश्यं दर्शयति । स्वाध्यायादि-त्यादिकमिति । विवेकाख्येऽपिग्रंथ इति । अनेन विवेकेप्येतदीरितमिति भाष्यस्यार्थ एतत्प्रमेयं विवेकाख्ये ग्रन्थेप्युक्तमित्युक्तो भवति । यादृशो योग्यतां यायादिति भाष्ये सोर्थ इत्युक्तेर्यादृश इत्यस्य य इत्यर्थं सिद्धवत्कृत्य योग्यतापदं व्याचष्टे । प्रमाणत इति । तथाचायमर्थः । यादृशः यः अर्थः योग्यतां प्रमाणतोन्वितत्वं प्रमाणेन बाधराहित्यं तथा तत्प्रतिपाद्यैः तद्वेदवाक्य प्रतिपाद्यार्थैः अन्वितत्वं परस्परसम्बन्धवत्त्वं यायात् प्राप्नुयात् सोर्थः तथा स्फुटं ज्ञेय इति । तथा शब्दमनूद्य सन्निति व्याख्यातम् । निष्फलतान्यत्रेत्यत्रान्यत्रेति पदमनूद्य व्याख्याति । अन्यत्रान्यथेति । निष्फलताशब्द उपलक्षणार्थ इत्यभिप्रेत्याह । वि(परीत)फलताचेति । नकेवलं फलराहित्यं किं तु विरुद्ध फलवत्त्वं चेत्यर्थः । वाय्वादिनामानमिति । अनेनवाय्वादि नामानमित्यन्वयः सूचितः । साग्न्यादिमित्यादिशब्दात्सवाय्वादिमित्यस्य लब्धत्वादनुक्तिः ।

## ऋक्संहिता पदपाठसहिता

(१०) वायवायाहि दर्शतेमे सोमा अरंकृताः ॥ तेषां पाहि श्रुधी हवम् ॥ १ ॥

(प०) वायो इति । आ । याहि । दर्शत । इमे । सोमाः । अरम्ऽकृताः ॥ तेषाम् । पाहि । श्रुधि । हवम् ॥ १ ॥

(११) वाय उक्थेभिर्जरन्ते त्वामच्छा जरितारः ॥ सुतसोमा अहर्विदः ॥ २ ॥

(प०) वायो इति । उक्थेभिः । जरन्ते । त्वाम् । अच्छ । जरितारः ॥ सुतऽसोमाः । अहःऽविदः ॥ २ ॥

(१२) वायो तव प्रपृञ्चती धेना जिगाति दाशुषे ॥ उरूची सोम पीतये ॥ ३ ॥

(प०) वायो इति । तवं । प्रऽपृश्चती । धेनां । जिगाति । दाशुषे ॥ उरू
सोमंऽपीतये ॥ ३ ॥

(१३) इन्द्रवायू इमे सुताउपप्रयोभिरागंतम् ॥ इन्दंवो वामुशन्ति हि ॥ ४ ॥

(प०) इन्द्रवायूइति । इमे । सुताः । उपं । प्रयंःऽभिः । आ । गतम् ॥ इन्दंवः । वा
उशन्ति । हि ॥ ४ ॥

(१४) वायविन्द्रश्च चेतथः सुतानां वाजिनीवसू ॥ तावायातमुपंद्रवत् ॥ ५, ३ ।

(प०) वायो इति । इन्द्रः । च । चेतथः । सुतानाम् । वाजिनीवसू इति वाजिनीऽ
॥ तौ । आ । यातम् । उपं । द्रवत् ॥ ५, ३ ॥

## ऋग्भाष्यम्

एवं स्थितेऽग्निगं विष्णुमग्निनामानमेवच ।
मधुच्छंदा ऋक्शतेन वाय्वादिगतमेव च ।
साग्र्यादि स्तौति सद्भक्त्या तत्तन्नामानमेव च ।
बलत्वादयनाच्चैव वायुरित्यभिधीयते ।
वात्यायुरिति वा ज्ञानाद्भरणादाश्रयत्वतः ।
वय बन्धन इत्यस्मात्संसारादेर्व्ययादपि ।
व्येत्यस्मिन्निति वा वायुर्वयश्रेष्ठत्व इत्यपि ।
मुख्यतो वासुदेवे ते गुणाः संत्येव सर्वशः ।
अनिषिद्धास्तदन्येषु यथायोग्यतया मताः ।
दर्शतस्तत्तद्दृष्टित्वात्सर्वज्ञोऽसौ यतो विभुः ।
भक्त्या ह्यलङ्कृताः सोमा मनांस्यन्ये हिरण्यतः ।
हिरण्यालङ्कृता यस्माद्धूयंते वायवे सुताः ।
तान्पाहि श्रुधि चाह्वानं स्वातन्त्र्ये व्यत्ययोऽप्ययम् ।
मनोऽपि भोग्यमीशस्य प्रीतिमात्रेण केवलम् ।
गुणाधिक्यं येन भवेद्वेदस्यार्थः स एवहि ।
प्रयोजकत्वान्नान्यस्य फलाभावात्तदर्थता ।
उपक्रमादयो यत्र तात्पर्यार्थस्स एवहि ॥ १ ॥

स्तुवन्ति शस्त्रैः स्तोतारो यथावद्यज्ञवेदिनः ॥ २ ॥
वाक्त्वत्संपर्किणी यज्ञकृते प्रापयतीप्सितम् ।
सोमपायातिमहती महार्थत्वात्त्वदर्थतः ॥ ३ ॥
इन्द्रः स परमैश्वर्यादिदमुद्दिश्य च द्रुतेः ।
ददर्शेदं दीप्तिमत्त्वादिदं रातीति वा भवेत् ।
सोमाभिमानिनो देवा वामिच्छंति हि सोमगाः ।
प्रियैरुपागतं तेनोपेन्द्रः सङ्कर्षणो हरिः ।
द्विरूपत्वाद्बहुत्वं च विशेषादेव केवलम् ।
एकस्यैव हरेर्नात्र भेदः शङ्क्यः कथञ्चन ।
एकमेवाद्वितीयं तन्नेह नानास्ति किञ्चन ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।
यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान्पृथक्पश्यंस्तानेवानु विधावति ।
उक्त्वा धर्मान्पृथक्त्वस्य निषेधादेवमेव हि ।
विशेषो ज्ञायते श्रुत्या भेदादन्यश्च साक्षितः ॥ ४ ॥
विजानतः सुतानन्नपतौ सूर्ये सदा स्थितौ ।
द्रवद्द्रुतं सुतात्पर्यद्योतकोऽभ्यास इष्यते ॥ ५, ३ ॥

## ऋग्भाष्यटीका

तत्किमग्न्यादिदेवता मधुच्छन्दःप्रभृतयः परोक्ता ऋषयश्च नभवंत्येवेत्याशङ्कां परिहरन्नाद्यस्यर्क्शतस्य देवतामवान्तरमृषिं च वक्ति । एवं स्थित इति ॥ एवं प्रमाणतो निर्णीते सति । तत्तन्नामानं वाय्वादिनामानम् । एवमग्निमीळइत्यादिनवर्चमाग्नेयं सूक्तं व्याख्यायोपयुक्तं च प्रमेयमभिधा (याथेदा) येदानीं वायवायाहीत्यादि नवर्चं सूक्तं व्याख्यातव्यम् । तत्राद्यस्तृचो वायव्यः तत्र वायुशब्दं व्याचष्टे ॥ बलत्वादिति ॥ वशब्दो बलवाची । न तत्र व्युत्पादनापेक्षेत्येवशब्दः । अयनाद्गमनकर्तृत्वात् । अयतेरिणो वोणुप्रत्ययः । वश्चासावायुश्चेति वायुः । वाति गच्छत्यायुश्च लोकस्य प्राणधारणहेतुत्वात् । वातेः कप्रत्ययः । इणश्छन्दसीतीण उण् । पूर्ववद्विग्रहः । ज्ञानात् ज्ञानकर्तृत्वात् । वातेर्गत्यर्थत्वेन ज्ञानार्थत्वात् "कृवापाजी"त्यादिना कर्तर्युण् । "आतोयुक् चिण्कृतोः" । वाति जानातीति वा वायुः । वरणात्स्वीकरणात् । वृणोतेः कर्तरि कर्मणिवा

डायुप्रत्ययः । वृणोति व्रियतेवेति वायुः । आश्रयत्वत इति वातेरधिकरण उणप्रत्ययः । वान्ति गच्छन्ति प्रवर्तन्तेऽस्मिन्निति वायुः । वयबन्धन इत्यस्माद्धातोः कर्तर्युणि कृते बन्धकत्वाच्च वायुर्भवति । व्ययाद्विनाशात् । विपूर्वादयतेरुकारप्रत्ययः । उपसर्गेकारस्य चाकारः । संसारादेरिति योग्यतया सम्बन्धः । व्ययते विनश्यत्यनेनेति वायुः । व्येति लीयते । विपूर्वादिणोऽधिकरणे पूर्ववदुण् । वयश्रेष्ठत्व इति धातोरुणि कृते श्रेष्ठत्वादपि वायुः । श्रेष्ठत्वं नाम (मैत) तद्व्यापारो विवक्षितः । गडिवदनैकदेश इति यथा । एतद्व्याख्यानं भगवतीव किं तदन्यदेवतायामपि ज्ञातव्यमित्यत आह ।। मुख्यत इति ।।

अनिषिद्धाः ये भगवतो लक्षणभूता नभवन्ति । तदन्येष्विति बहुवचनेनाग्न्यादि-शब्दव्याख्यानेप्ययं न्यायो बोद्धव्य इत्याह ।। तेच यथायोग्यतयैव । नतु निरतिशयाः । तथात्वे पुनर्भगवल्लक्षणत्वापत्तेः । दृशेर्भावे घञ् तनोतेर्डः दर्शो दर्शनं तेन तः ततः । दर्शत इत्यस्य तात्पर्यं दर्शतस्तद्दृष्टित्वादिति । तदुपपादयति ।। सर्वज्ञ इति ।। मनांसीत्यध्यात्मम् । अन्ये बहिष्ठाः हिरण्यत इत्युपपादयति ।। हिरण्येति ।। सुताः सोमाः । पाहि पिब । श्रुधि शृणु । तेषामित्येतत्तानिति व्याख्यातम् । तत्रायं विभक्तिव्यत्ययः किं निमित्त इत्याह ।। स्वातन्त्र्य इति ।। त्वदीयानेव सोमांस्त्वं पिबेत्युक्तं भवति । अपिपदेन श्रुधीति संहितायां दैर्घ्यमुक्तार्थाधिक्ये इति समुच्चिनोति । यद्यध्यात्मं न मनः सोमः कथं तर्हि तस्य पानमित्यत आह ।। मनोपीति ।।

ननु तेषां पाहीत्यत्र विभक्तिव्यत्ययमङ्गीकृत्य स्वातन्त्र्ये व्याख्यानादपि वरं तेषामंशं पाहीति व्याख्यानमिति तत्राह ।। गुणाधिक्यमिति ।। भवेत् देवतायां ज्ञापितमिति शेषः । येनार्थेन व्याख्यातेन । प्रयोजकत्वात् फलवत्त्वात् । अन्यस्य गुणाधिक्यविरोधिनः । फलाभावात् तदर्थता वेदार्थता नास्ति । ज्ञातगुणाधिक्योहि परमेश्वरः फलं प्रयच्छति । गुणाधिक्यं च विभक्तिव्यत्यय एव भवतीति भावः । फलवत्त्वेप्यनेनार्थेन भवितव्यमित्यत्र किं नियामकमिति तत्राह ।। उपक्रमादय इति ।। यत्र यस्यार्थस्यानुकूलाः उपक्रमादयः खल्वर्थस्य निश्चायकाः । तत्र च फलं सर्वाधिकमिति । ततश्चैवं योजना । हे दर्शत वायो आध्यात्मिकं बाह्यं च यज्ञं प्रत्यायाहि । किमिति । अध्यात्मं मनोवृत्तयो भक्त्यादिभिः बहिः प्रसिद्धाः हिरण्येनारंकृताः अलङ्कृता इमे सोमाः सन्ति तेषां तान् । पाहि पिब । छान्दसः पिबादेशाभावः । हवमाह्वानम् । भावेऽनुपसर्गस्येति शब्दार्थात् ह्वयतेर्भावे अपूप्रत्ययः । सम्प्रसारणं च । श्रुधि शृणु । आगमनेन सफलं कुरु । ''श्रुशृणुपृकृवृभ्यश्छंदसी''ति हेर्धिर्विकरणाभावश्च ।। १ ।।

वायउक्थेभिः । स्तुवन्ति शस्त्रैः । हेवायो सुतः सोमो यैस्ते सुतसोमाः । अच्छेति निपातोऽभेरर्थे वर्तते । अहरिति यज्ञोपलक्षणम् । अच्छाहर्विदोऽभितो यथावद्यज्ञवेदिनः । जरितारः स्तोतारः । स्तोतृनामसु पाठात् । उक्थेभिरुक्थैः शस्त्रैस्त्वां जरन्ते स्तुवन्ति । स्तुतिकर्मसु पाठात् ॥ २ ॥

वायोतव । वाक् । हेवायो तव त्वाम् । प्रपृंचती पृंची सम्पर्के । त्वत्संपर्किणी त्वत्स्तुतिरूपा । उरूची अतिमहती । आधिक्येधिकमित्युक्तत्वात् । धेना वाक् वाङ्नामसु पाठात् । सोमपीतये सोमस्य पीतिर्यस्येति व्यधिकरणो बहुव्रीहिः । तस्मै सोमपाय । "आतोनुपसर्गेकः" । दाशुषे यज्ञकृते । निपातनात्साधुः । जिगाति । गतिकर्मायम् । अन्तर्णीतण्यर्थश्च प्रापयति । ईप्सितमिति शेषः । कथं वाचोतिमहत्वं महार्थत्वात् अतिमहार्थत्वात् । तदपि कुतः त्वदर्थः त्वदर्थत्वात् । त्वं ह्यतिमहान् । अनेन यतस्तव प्रपृंचती तत एवोरूचीत्युक्तं भवति । यद्वा महार्थत्वादित्युरुमं चतीत्युरूचीशब्दस्य निर्वचनान्तरम् । तस्योपपादनं त्वदर्थत इति । त्वत्स्तुतिर्हि यजमाना भीप्सितसाधनस्वभावाऽतः स्तुवतामस्माकमभीप्सितं कुर्विति ॥ ३ ॥

द्वितीयस्तृच ऐन्द्रवायवः । इन्द्रवायू इमे । अत्रेन्द्रशब्दं व्याख्याति ॥ इन्द्र इति ॥ इन्दतेः परमैश्वर्यार्थादौणादिको रप्रत्ययः । इदं विषयजातमुद्दिश्य द्रुतेर्द्रवणात्सर्वविषयोपभोगाच्चेन्द्रः । इदं शब्दोपपदाद्द्रुगतावित्यस्माड्डुः । उपपदस्य चेमित्यादेशः । इदं सर्वं ददर्शेति चेन्द्रः । पूर्ववत् दृशेर्डः । तथाच श्रुतिः । "इदमदर्शमि"त्यादि । दीप्तिमत्त्वाच्चेन्द्रः । इन्धी दीप्तावित्य-स्माद्रप्रत्ययः । धस्य चदः । "इन्धो हवैनामेत्या"दि श्रुतिः । इदमभीष्टं राति ददातीति वा निर्वचनं भवेत् । रातेः कः । इदमश्चेन्दादेशः । हे इन्द्रवायू इमे सुताः सोमाः सम्पादिताः सन्ति ते चेन्दवः सोमाः सोमानामचेतनत्वाद् बहिः सोमगाः सोमाभिमानिनो देवाः । अध्यात्म-मस्मन्मनोवृत्तयोहि यस्माद्वां युवामुशन्ति इच्छन्ति युवयोरागमनं कामयन्ते । तेन कारणेन । प्रयोभिः प्रेयोभिः । ईयसुन ईकारस्याकारः । अतिशयेन प्रियैः सहोपागतमुपागच्छतम् । छान्दसः छत्वाभावः । अत्रेन्द्रवायुशब्दाभ्यां विवक्षितं भगवद्रूपद्वयमाह । उपेन्द्र इति । इन्द्रशब्देनोपेन्द्रो वायुशब्देन सङ्कर्षणो हरिरुच्यत इत्यर्थः ।

ननु परमेश्वरेद्विवचनं कथमित्यत आह ॥ द्विरूपत्वादिति ॥ नन्वेकस्यैव हरेर्द्विरूपत्वं च कथम् । द्वित्वस्य भेदाविनाभूतत्वात्तत्राह ॥ बहुत्वं चेति ॥ चशब्देन द्वित्वम् । बहुत्वग्रहणमन्यत्र बहुवचनसम्पादनार्थम् । द्विवचनादिकं भेदेनैव सम्पाद्यतामित्यत आह ॥ नात्रेति ॥ कथंचन केवलोऽभेदसहितश्च । कुत इति चेत् श्रुतिविरोधादित्याह ॥ एकमेवेति ॥ अनेन विग्रहभेदोपि

द्विवचनादिविषयो निरस्तः । भेदं विना विशेषमात्रेणैव द्विवचनादिकं घटत इत्ययुक्तम् । भेदादन्यस्य विशेषस्यैवाप्रमाणिकत्वादिति । तत्राह ।। उक्त्वेति ।। तं दुर्दर्शमित्यादिना काठके परमेश्वरस्यानेकान् धर्मानुक्त्वैकमेवाद्वितीयमित्येवं पुनः पृथक्त्वस्य निषेधात् भेदादन्यो विशेषो भगवति श्रुत्या ज्ञायते । अखण्डत्वे धर्मकथनानुपपत्तेः । भेदेच निषेधायोगात् । किं च घटादौ भेदादन्यो विशेषः साक्षितश्च ज्ञायत इति ।। ४ ।।

वायविंद्रश्च चेतथः । विजानतः । हेवायो वाजमन्नं तदेव वाजि तृतीयोतिशय इत्युक्तत्वात् । तन्नयतीति वाजिनीः सूर्यः । सहि वर्षणादिनाऽन्नं प्रवर्तयति । ''सत्सूद्विषे''त्यादिना क्विप् । तत्र वसत इति वाजिनीवसू । वसतेरुः । अन्नपतौ सूर्ये सदा स्थितौ । इन्द्रः चशब्दात्त्वं च । सुतानां सुतान् । चेतथः चितीसंज्ञाने विजानतः विजानीथः । द्विविकरणतावर्णव्यत्ययश्चछान्दसः । अस्मत्स्वीकारयोग्या भवन्तीमे सोमा इति युवां विजानीथः । अतः कारणात् द्रवत् द्रुतम् । क्षिप्रनामसु पाठात् । तौ युवामुपायातम् । यद्वा चेतथश्चेततो विजानतो युष्मत् ज्ञानिनो यजमानस्य सुतानुपायातमिति योज्यम् । वायवायाहि उपप्रयोभिरागतं तावायातमिति पुनरुक्तिरित्यत आह ।। सुतात्पर्येति ।। ५,३ ।।

## मन्त्रार्थमञ्जरी

अथ द्वितीयमपि नवर्चं वर्गद्वयात्मकं सूक्तम् । तत्र– आद्यस्तृचो वायव्यः । द्वितीयस्तृच ऐन्द्रवायवः । तृतीयस्तृचो मैत्रावरुणः । तत्र– वाय्वादिशब्दो महायोगविद्व‌द्रूढिभ्यां विष्णौ परममुख्यवृत्तिः । वाय्वादिप्रसिद्धदेवेषु तु 'शरीररूपकविन्यस्तगृहीतेः' (१।४।१) इत्यत्रोक्तदिशा वाय्वादिशब्दपरममुख्यार्थ विष्णुसंबन्धनिमित्तकः सन्नपि तीरे गङ्गाशब्द इव न लाक्षणिकः, अपि तु 'ॐ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॐ' (१।४।११) इत्यत्रोक्तदिशा निघण्टु व्याकरणादिभिर्मुख्यवृत्तिरेव । तथा चात्र परममुख्यमुख्यवृत्तिभ्यां विष्णुतदितरयोर्द्वयोरपि प्रतिपत्तिर्मन्त्रेषु न विरुध्यत इत्यवोचाम (उपोद्घाते) ।। योगो नाम– अवयवशक्त्यार्थप्रत्यायकत्वम् ।। तथा चेत्थमवयवार्थः – वशब्दो बलवाची, प्रसिद्धः । एतीत्यायुः, 'इण् गतौ' इत्यत औणादिक उण्प्रत्यये 'अचो ञ्णिति' इति वृद्धावायादेशे 'आयुः' इति रूपसिद्धिः । वश्चासौ बलरूपश्चा-सावायुश्च गमनकर्ता चेति 'वायुः' इति वा ।

वाति गच्छतीति वः, 'वा गतिगन्धनयोः' इत्यतः कप्रत्यये 'आतो लोप इटि च' इत्याकारलोपे 'वः' इति सिद्धेः । लोकस्य प्राणधारणहेतुत्वादायुः । वश्चासावायुश्चेति 'वायुः' इति वा, ।

वाति जानातीति वा वायुः, वातेः गत्यर्थत्वेन ज्ञानार्थत्वात्, 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' इत्यनेन वातेः कर्तर्युण्प्रत्यये 'आतो युक्चिण्कृतोः' इति वातेः परतः 'आद्यन्तौ टकितौ' इति युगागमे 'वायुः' इति सिद्धेः ।

वृणोति व्रियत इति वा वायुः 'वृञ् वरणे' इति धातोः कर्तरि कर्मणि वा डायुप्रत्यये टिलोपे 'वायुः' इति सिद्धेः इति । दर्शत, दर्शेन ज्ञानेन तत, सर्वज्ञेति यावत्, 'दृशिर् प्रेक्षणे' इत्यतो भावे घञ्प्रत्यये 'पुगन्त' इति गुणे 'दर्श' इति, तनोतेः कर्मणि डप्रत्यये टिलोपे च 'त' इति च, रूपसिद्धेः । (हे) वायो । अध्यात्मं बाह्यं च (यज्ञम्) प्रति । आ याहि, आगच्छ । कस्मादागतिः प्रार्थ्यत इति चेत्– इमे सोमाः अरंकृताः, अध्यात्मम्– मनोवृत्तयो भक्त्यादि भिरलङ्कृताः, बाह्ययज्ञे च – इमे प्रसिद्धाः सोमा हिरण्येनालङ्कृताः । (सन्ति) सोमानां मनसां च चन्द्ररूपैकदैवत्यत्वात्सोमपदेन मनोग्रहणं ज्ञेयम् । एवमग्रेऽपि । तेषाम्, द्वितीयार्थे षष्ठी, 'व्यत्ययोऽभेदकरणस्वातन्त्र्येषु' (ऋ० भा०) इत्यादेरिह विभक्तिव्यत्ययः । स्वातन्त्र्ये, त्वदीयानेव सोमान्मनोवृत्तीर्वा । पाहि, पिब, 'पा पाने' पिबादेशाभावश्छान्दसः ।। हवम्, त्वदाह्वानम् ।

श्रुधि, शृणु, श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिरादेशो विकरणाभावश्च ज्ञेयः, संहितायां दैर्घ्यमुक्तार्थस्याधिक्यज्ञापनार्थम्, उक्तं च– 'संहितायां यत्र दैर्घ्यं पदकाले न विद्यते ।। उक्तार्थस्य महाधिक्यं श्रुतेस्तत्र विवक्षितम्' इति । मनोवृत्तीनां पानं नामप्रीतियुक्तत्वम्, बाह्ये सोमानां पानं नाम– अप्राकृतदिव्यदेहेन्द्रिययुक्ततया गुहाधिकरणोक्तन्यायेन सारभोक्तृत्वं भगवतो ध्येयम्, 'अहं हि सर्वयज्ञानां भोक्ता च' (गी० ९।२४) इत्यादेः । एतेन शृण्विति प्रार्थनापि समाहिता, दिव्यश्रोत्रादीन्द्रियवत्त्वात्तस्येति ।। ननु– अत्र वायुरूपजीवे 'ॐ उत्क्रान्तिगत्यागतीनाम् ॐ' (२।३।२०) इत्यधिकरणोक्तन्यायेनाणावागतियोग्यत्वेनागतिप्रार्थना सम्भवेऽपि हरावपरिच्छिन्ने क्रियावत्त्वमेवायुक्तम्, न हि व्याप्ते गगनादौ क्रियोपलभ्यते । न च वाय्वन्तर्यामिणः क्रियावत्त्वं युक्तम्, 'एष म आत्मान्तर्हृदये ज्यायान्पृथिव्याः (छा० उ० ३।१४) इत्यादिश्रुत्यान्तर्यामिणोऽपि व्याप्तत्वात् । न च न्यायमते व्याप्तजीवानामिव देहद्वारागतिर्युक्तेति वाच्यम्, तद्रीतेरेव दुष्टत्वात्, हरेर्देहेनभेदाभावेन 'ॐ अरूपवदेव हि' (३।२।१४) इत्यधिकरणोक्तदिशा तदभिन्नदेहस्यापि व्याप्तत्वात् । इति चेन्मैवम् । 'ॐ अक्षरमम्बरान्तधृतेः ॐ ' (१।३।१०) इति नये 'ॐ अन्यभावव्यावृत्तेश्च ॐ' (१।३।१२) इति सूत्रे हरेरणुत्वस्याप्युक्तत्वात्, गमनागमनादि क्रियावत्त्वे महत्त्वाभावस्य वा महत्त्वासमानाधिकरणाणुत्वस्य वा गौरवेणाप्रयोजकतयाणुत्व मात्रस्यैव प्रयोजकत्वेन महत्त्वस्य शक्त्यात्मतादशायामणुत्वस्य व्यक्त्यात्मत्वेन तत्प्रयुक्तगत्यादेरपि सम्भवेन हरावागतिप्रार्थनाया युक्तत्वात् । एवमग्रेऽपि ।। १ ।।

(हे) वायो सुतसोमाः, सुतः सोमो यैस्ते सुतसोमाः । 'अच्छ' इति निपातः 'अभि' इत्यर्थे 'अहर्विदः' इत्यत्रान्वेति, अच्छाहर्विदः । 'अहः' इति यस्मिन्दिने सोमाभिषवस्तद्दिनमुच्यते, यज्ञोपलक्षणमेतत्, अच्छ, अभितः । अहर्विदः, यथावद्यज्ञवेदिनः । जरितारः, स्तोतारः । उक्थेभिः, उक्थैः शस्त्रैः । त्वाम् । जरन्ते, स्तुवते ॥ २ ॥

(हे) वायो । तव, द्वितीयार्थे षष्ठी, त्वाम् । प्रपृञ्चती, 'पृची संपर्के' संस्पृशन्ती, त्वद्विषयिणीति यावत् । अत एव – उरूची, अतिमहती । धेना, वाक् । सोमपीतये, सोमस्य पीतिः पानं यस्य स सोमपीतिस्तस्मै । दाशुषे, यजमानाय । जिगाति, गत्यर्थोऽयं धातुः अन्तर्णीतण्यर्थः, प्रवर्तयतीत्यर्थः । '(ईप्सितम्)' इति शेषः । तव स्तुतिर्यजमानाभीप्सितसाधिका । अतः स्तुवतामस्माकमभीप्सितं कुर्विति भावः ॥ ३ ॥ इति प्रथमो वायव्यस्तृचः ॥ १ ॥

अत्र वायुशब्दनिरुक्तिः प्राग्वत् । 'इदि परमैश्वर्ये' इत्यस्मादौणादिके रन्प्रत्यये 'इदितो नुम्धातोः' इति नुमागमे सति 'इन्द्र' इति वा । इदं विषयजातमुद्दिश्य द्रवति सर्वविषयाननुभुङ्क्ते इति 'इन्द्र' इति वा, इदम्शब्दोपपदात् 'द्रु गतौ' इति धातोर्डप्रत्यय उपपदेदम्शब्दस्येमादेशे च 'इन्द्र' इति सिद्धेः । इदं सर्वं पश्यतीति 'इन्द्र' इति वा, इदम्शब्दोपपदाद्दृशेः डूप्रत्यय उपपदेदम्शब्दस्येमादेशे सति 'इन्द्र' इति सिद्धेः 'इदमदर्शमिती३ तस्मादिदं द्रो नामेदंद्रो ह वै नाम तमिदंद्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण' (२।४।३) इत्यैतरेय श्रुतेः । 'इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्धꣳ सन्तमिन्द्र इत्याचक्षते परोक्षेण– (६।२।२) इति काण्वश्रुतेर्दीप्तिमत्त्वात् 'इन्द्र' इति वा, 'ञिइन्धी दीप्तौ' इत्यतो रन्प्रत्यये धकारस्य च दकारे सति 'इन्द्र' इति सिद्धेः, इदमभीष्टं राति ददातीति वा 'इन्द्र' इति ध्येयम्, 'रा दाने' इत्यतः कप्रत्यये 'आतो लोप इटि च' इत्याकारलोप इदमश्चेन्दादेशे सति 'इन्द्र' इति सिद्धेः ॥ (हे) इन्द्रवायू इमे । सुताः, सोमाः । (गम्पादिताः सन्ति) (ते च) इंदवः, सो माः अभिमानिनयन्यायेन बाह्ययज्ञे– सोमाभिमानिनो देवाः, अध्यात्मम्– मनोवृत्त्यभिमानिनः । हि, यस्मात् । वाम्, युवाम् । उशन्ति, इच्छन्ति, 'वश कान्तौ' इति धातोर्युवयोरागमनं कामयन्ते । (तेन), कारणेन प्रयोभिः, प्रियतमैः सहेत्यर्थः, ईयसुन्प्रत्ययेकारस्याकारश्छान्दसः, 'अतो गुणे' इति पररूपत्वम् । उप आ गतम्, उपागच्छतम्, 'व्यवहिताश्च' इत्युपसर्गान्वयः, गमेः 'इषुगमियमां छः' इति मकारस्य च्छादेशाभावश्छान्दसः, 'अनुदात्तोपदेश' इत्यनुनासिकलोपः । अत्रेन्द्रवायुशब्दाभ्यां प्रसिद्धेन्द्रवायू तदन्तर्गतावुपेन्द्रसंकर्षणौ च गृह्येते । भगवद्रूपयोर्भेदस्य 'ॐ न स्थानतोऽपि

परस्योभयलिङ्गं सर्वत्र हि ॐ' इति युक्तिपादीयाष्टमाधिकरणे निषिद्धत्वेन भेदाविनाभूतद्वित्वस्यैकत्ववति भगवत्ययोगेन द्विवचनायोगेऽप्यधिष्ठानभूतयोरिन्द्रवाय्वोर्द्वित्वाद्द्विवचनं युक्तम्। यद्वा– यथा पूर्वतन्त्रे नवमे 'मेधपतित्वं स्वामिदेवताख्यं स मवायात्' इति तृतीयपादीयद्वादशाधिकरणे– 'मेधपतये मेधम्, मेधपतिभ्यां मेधम्' इथ्यत्राग्नीषोमीय पशावध्रिगुप्रेषे मेधपतिशब्दार्थयोरग्नीषोमयोरेक वचननिर्वाहाय देवतात्वेनैकत्वम्, देवतात्वस्य व्यासज्यत्वात्, द्विवचननिर्वाहाय तु देवता त्वाधिष्ठानत्वरूपेण द्वित्वम्' इति द्वित्वैकत्वयोः समुच्चय उक्तस्तथेहापि हरेः स्वरूपेणैकत्वं रूपविशेषेण द्वित्वमिति द्वित्वैकत्वयोः समुच्चयोऽस्तु। 'इन्द्रो॑ मा॒याभि॑ः पु॒रु॒रूप॑ ईयते' (ऋ० म० ६।४७।१८) 'यदेकमव्यक्तमनन्तरूपम्' (य० वे०) 'एकं रूपं बहुधा यः करोति' (का० उ० २।२।१२) 'पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः' (गी० ११।५) इत्यादि श्रुतिस्मृतिभिरेव समुच्चयावगतेः। 'ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ' (१।२।११) इति सूत्रकृतापि 'ऋतं पिबन्तौ' (का० उ० १।३।१) इति श्रुतिगतद्विवचनस्यात्मान्तरात्माख्यरूपद्वयाभिप्रायेण निर्वाहोक्तेश्च। उक्तं हि तत्रानुव्याख्याने– 'द्वित्वं चैकस्य युज्यते' (१।२।११) इति। किं चैतरेये– 'अथ देवरथः' (२।३।६) इत्यादिना 'तदयं प्राणोऽधितिष्ठति' (२।३।८) इत्यन्तेन वाक्येनोक्ते 'ॐ प्राणस्तथानुगमात् ॐ' (१।१।२८) इति पादान्त्यप्राणनये विष्णुतया निर्णीतैकवचनान्तप्राणशब्दार्थस्य देहाख्यरथाधिष्ठातृत्वरूपेऽर्थे संमतित्वेन 'तदुक्तमृषिणा' (ऐ० २।३।८) इत्युपनिषदुदाहृतयोः 'आ तेन॑ या॒तं मन॑सो॒ जवी॑य सा॒ रथं॒ यं वा॑मृ॒भव॑श्च॒क्रुर॑श्विना॥ यस्य॒ योगे॑ दु॒हि॒ता जाय॑ते दि॒व उ॒भे अह॑नी सु॒दिने॑ वि॒वस्व॑तः' (ऋ० म० १०।३९।१२) 'नि॒मिष॑श्चि॒ज्जवी॑यसा॒ रथे॒ना या॑तमश्विना॥ अन्ति॒ षद्भू॑तु वा॒मव॑ः' (ऋ० म० ८।७३।२) इति मन्त्रयोरेकस्यैव विष्णो रूपद्वयाभिप्रायेण द्विवचनान्तशब्दवाच्यत्वोक्तेश्च। भेदाभावेऽपि भेदकार्यनिर्वाहकेण भेदप्रतिनिधिस्वरूपसामर्थ्य शब्दितेन विशेषेण द्वित्वसंख्योपपत्तेश्च। तदुक्तम्– विशेषाद्द्विवचनविषयाभ्यामुभाभ्याम्' (वा०स्तु०२६) इति। मोमवत्सोमभृत्यानामपि केषाञ्चित्सोमरश्मिगततया च सोमभृत्यतया च सोमशब्दवाच्यानां सामरसानां मनसां च देवतात्वात् 'इन्दवः' इति बहुवचनोपपत्तिः, 'सोमानां मनसां चैव देवताः सोमरश्मिगाः। सोमभृत्याः समस्तस्य सोम एवाधिपो हरिः' (ऋ० भा०) इति॥ ४॥

(हे) वायो। वाजिनीवसू, वाजमन्नम् तदेव वाजि, 'तृतीयोऽतिशये' (म० व्या० सू०) इत्युक्तेरकारस्येकारः, वाजि नयतीति वाजिनीः सूर्यः, 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्' इति क्विप्। स हि वर्षादिनान्नं प्रवर्तयति, तत्र वसति सति

वाजिनीवसू, वसतेः उः, अन्नपतौ सूर्ये सदा स्थितौ । इन्द्रः । चकारात् (त्वं च) सुतानाम्, सुतान्सोमान्मनोवृत्तीर्वा, 'व्यत्ययो बहुलम्' इत्युक्तेः । चेतथः, 'चिती संज्ञाने' विजानीथः, अस्मात्स्वीकरणयोग्याः सोमा इति विजानीथ इति यावत् ॥ अतः, द्रवत्, द्रुतम् । तौ (युवाम्) उप आ यातम्, उपागच्छतम् । 'वायवा याहि' 'उप प्रयोभिरा गतम्' 'तावा यातम्' इति पुनः पुनरुक्तिस्तात्पर्यज्ञापनार्था ॥ ५ ॥ इति तृतीयो वर्गः ॥ ३ ॥

## पदार्थप्रकाशिका

वायवायाहि दर्शत । अग्निर्नव मधुछन्दो वैश्वामित्र इत्युनुक्रमणिकां मनसि निधायाह । एवमग्निमीळे इत्यादिनवर्चमाग्नेयं सूक्तमिति । उपयुक्तं मुनिदेवतादिकम् । वायो वाय्वैन्द्रवायवमैत्रावरुणास्तृच इति अनुक्रमणिकायाम् । वायो इत्यनन्तरम् अग्निर्नवेति पूर्ववाक्यान्नवेति अनुवर्तत इत्याशयेन वायवायाहीति नवर्चं सूक्तमित्युक्तम् । तत्रोदाहृतानुक्रमणिकायाम् । आद्यतृचस्य वायुदेवताकत्वात् तदनुसारेणाह । तत्र आद्यास्तृच इति । वायव्य इति । वायुदेवताका इत्यर्थः । अयतेरिणोवेति । अयत इति वा एतीति वा वायुरित्यर्थः । अयपयगतावित्यस्मादुण्प्रत्यये णकारलोपे 'अचो ञ्णिति' इति सूत्रेण णित्वादादिवृद्धौ च आयुरिति रूपम् । अत्राकारो सुखोच्चरणार्थः । वस्तुत अय् इत्येव धातुः । तथा इण् गतावित्यस्मात् । इणश्छन्दसीति उण् प्रत्यये णित्वादैकाररूपे वृद्धौ च 'एचोऽयवायाव' इत्यायादेशे चायुरिति रूपं द्रष्टव्यम् । वश्चासाविति । व आयुरित्यत्राकः सवर्णे दीर्घे वायुरिति भवति । लोकस्यायुःप्रदः कुत इत्यत आह । प्राणेति । वातेरिति । वा गतिगन्धनयोरित्यस्मात्कप्रत्यये कित्वादातो लोप इटि चेति धात्वाकारलोपे प्रत्ययाकारसम्बन्धे च सति वेति रूपम् । इणश्छन्दसीति छन्दसीणः इण उण् इति काचित्कः पाठः । इण् गतावस्मादुणप्रत्यये वृद्धौ अयादेशाच्चायुरिति पूर्ववद्रूपम् । नायं पाठः प्रकृतोपयुक्तः । आयुरित्यस्य आयुःप्रद इत्यर्थकत्वेन इण् गताविति गत्यर्थधातुनिष्पन्नत्वाभावेन इण् छन्दसीति साधनप्रकारोक्तेरसंगतत्वात् । अत एव रोट्टीवेङ्कटभट्टीयटीकायाम् उक्तम् 'इणश्छन्दसीति । उणिति पाठान्तरमिति ।' आयुः प्रदत्वादायुरिति प्रसिद्धत्वान्नात्र व्युत्पदनापेक्षेत्याशयः । पूर्ववदिति । सवर्णदीर्घे सति वश्चासावायुःप्रदश्चेति वायुरिति विग्रहः पूर्ववद् द्रष्टव्यः । कृवापाजीत्यादिनेति । 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' कृञ् करणे, वा गति गन्धनयोरित्यादि धातुभ्यः उण् प्रत्ययः स्यादिति उणादिसूत्रार्थः । आतो युक् चिण् कृतोरिति । आकारान्तस्य धातोर्युगागमः स्यात्

चिणि कृति च परे इति सूत्रार्थः। तथाच गत्यर्थाद्वातेरुण्प्रत्यये युगागमे उकू इत्यस्य लोपे वायू उ वातीति वायुरिति रूपे निष्पन्ने सति वायुशब्दार्थं दर्शयति। वृणोतेरिति। वृञ् वरणे अस्मात् वृणोतीति कर्त्रर्थे व्रियते वेति कर्मार्थे डायुप्रत्यये डित्वाट्टिभूतस्य ऋजित्यस्य लोपे वू आयुः वायुरिति रूपम्। आश्रयत्वत इति। गत्यर्थाद्वातोः वान्ति गच्छन्ति प्रवर्तन्ते अस्मिन्निति अधिकरणे उणप्रत्यये युगागमे पूर्ववद्वायुरिति रूपम्। वय बन्धन इति। वयधातोर्वयतीति कर्त्रर्थे उणिकृते णित्वादादिवृद्धौ वायुरिति रूपम्।

विपूर्वादिति। वीत्युपसर्गपूर्वकादयपयगतावित्यस्मात्। व्ययतेः गच्छति विनश्यत्यनेनेति करणार्थे उकार प्रत्यये वीत्युपसर्गस्थस्य सकारस्याकारादेशे सवर्णदीर्घे च सति वायुरिति रूपम्। पूर्ववदिति। इणश्छन्दसीत्यनेनेत्यर्थः। उपसर्गेकारस्यात्वं च पूर्ववद्द्रष्टव्यमित्याशयः। तथा च विपूर्वकात् इण् गतावित्यस्मात् व्येत्यस्मिन्नित्यधिकरणे उण् प्रत्यये उपसर्गेकारस्य चकारे णित्वादचोञ्णितीति सूत्रेण इकारस्यैकाररूप वृद्धौ तस्य चायादेशे सवर्णदीर्घे च सति वायुरिति रूपम्। ननु भूवादयो धातव इति सूत्रेण क्रियावाचित्वविवक्षायामेव धातुसंज्ञाविधानात् प्रकृते च श्रेष्ठत्वरूपधर्मस्य क्रियावाचित्वाभावेन तद्वाचिनो वयतेर्धातुत्वासम्भवात्। तथाच क्रियाभिन्न-श्रेष्ठत्वरूपधर्मस्य कत्रन्तरसापेक्षतया कर्तर्युण् प्रत्ययानुपपत्तिश्च स्यात्। स्वतन्त्रः कर्तेति क्रियायां स्वतन्त्रस्यैव कर्तृत्वोक्तेरतः कथमेतदित्यत आह। श्रेष्ठत्वं नाम तद्व्यापारो विवक्षित इति। वय श्रेष्ठत्वे इत्यत्र धात्वर्थकत्वेनोक्तं श्रेष्ठत्वं नाम श्रेष्ठत्वशब्देनेति यावत्। तदव्यापारः श्रेष्ठत्वोपयुक्तोव्यापारो विवक्षित इत्यर्थः। एवं च श्रेष्ठत्वानुसारि व्यापारस्य क्रियारूप-त्वात्तदर्थकवयतेर्धातुत्वसम्भवेन कर्त्रर्थकप्रत्ययोत्पत्तिसम्भवे न कोऽपि दोष इत्याशयः।

व्यापारविवक्षया धातुसंज्ञा कुत्र दृष्टेत्यत आह। गडिवदनैकदेश इति। गडि वदनैकदेश इत्यस्य धातोरुपरि गण्डयतीति गण्ड इति रूपं भवति। तत्र कपोलरूपगण्डस्थलार्थकवदनैकदेशस्य द्रव्यत्वेन क्रियारूपत्वाभावात् कथं धातुत्वमित्याशङ्क्य वदनैकदेशे अलक्तकादिभिः शोभाकरणरूपव्यापारविवक्षया धातुत्वोक्तिसम्भवात् तथाच गण्डयतीत्यस्य गण्डशोभाकरं व्यापारं करोतीत्यर्थ उक्तो धातुवृत्तौ। अत्र वदनैकदेशशब्देन वदनैकदेशशोभाकरत्वक्रियोच्यत इति तद्वत् प्रकृतेऽपीति भावः। भाष्योक्तगुणा इत्यस्य वायुशब्दार्थतयोक्ताः बलरूपत्वादयो गुणा इत्यर्थः। ननु वायोरेकस्यैव प्रकृतत्वात्तदस्मिन्निति वक्तव्ये तदन्येष्विति बहुवचनं व्यर्थमित्यत आह। तदन्येष्वपीति। अयं न्याय इतीति। वायुशब्दार्थो उक्तन्याय अग्निशब्दार्थभूता ये अग्रणीत्वादयो गुणास्ते वासुदेव एव मुख्यतः सन्ति। अनिषिद्धास्तदन्येष्वग्र्यादिषु सन्तीत्यग्निशब्दाव्याख्यानेऽपि

बोद्धव्य इत्यर्थः । तथात्व इति । अन्येष्वपि निरतिशयगुणासद्भाव इत्यर्थः । पुनरिति वाक्यालङ्कारे । भगवल्लक्षणत्वापत्तेरिति । भगवल्लक्षणत्वापत्तेरिति अर्थः निरतिशयगुणत्वस्य भगवल्लक्षणत्वेन तस्यान्येषु सत्त्वे अभगवल्लक्षणं स्यात् । अतिव्याप्तिप्रसङ्गादिति भावः । दृशेरिति । तथाच दृशिर् प्रेक्षणे अस्माद्भावे घञ् प्रत्यये अकारमात्रं विहाय घकारञकारयोर्लोपे गुणे तस्यरपरत्वे दर्श् अ दर्शेति रूपम् तनोतेर्ड इति । तनु विस्तारे अस्मात् डप्रत्यये डित्वाट्टिभूतम्य न् इत्यस्य लोपे त् अ त इति रूपम् ।

अभिषवादिसंस्कारैरलङ्कृता इत्यपव्याख्यानमित्याशयेन भाष्ये हिरण्यालङ्कृता इति ध्येयम् । हिरण्येन सह सोमखण्डपते इति हिरण्यालङ्कृतत्वं सोमानां द्रष्टव्यम् । अलङ्कृता इत्युक्त्या छान्दसो लस्य रेफादेशो ऋचीति ज्ञातव्यम् । विभक्तिव्यत्ययः । षष्ठ्याः द्वितीयत्वेन व्यत्ययः उक्ताधिक्य इति । 'संहितायां यत्र दैर्ध्यं पदे यत्र न दृश्यते । उक्तार्थस्य महाधिक्यं तत्र ज्ञेयं न चान्यथेति वचनादिति भावः । भाष्ये प्रीतिमात्रस्येति । यन्मनो हरौ प्रीतियुक्तं भवति । तन्मनः ईशस्य भोग्यं तद्विषयो भवति ईश्वर इति भावः । तेषामंशं पाहीति । अंशमिति शेषोक्तिः । तथाच स्वकीयं सोमभागं पिबेत्यर्थः । फलवत्त्वात् । गुणाधिक्योपयोग्यर्थ व्याख्यानस्येति शेषः । विरोधिनः विरोध्यर्थं व्याख्यानस्य । ननु तेषामंशं पाहीति व्याख्यानेनापि गुणाधिक्यलाभात् इदमेवास्तु व्याख्यानमिति मन्दाशङ्कायामाह । गुणाधिक्यं चेति । विभक्तिव्यत्यये वेति । तेषामित्यस्य तान् तदीयान् इति वा विभक्तिव्यत्ययेन व्याख्याने तेषां तदधीतत्वप्राप्त्या तस्य स्वातन्त्र्यरूपगुणो लभ्यत इति भावः । फलवत्त्वेऽपीति । एवं भगवत्युक्तरीत्या गुणाधिक्योपयोगि व्याख्यानस्य फलवत्त्वेऽपि इत्यर्थः । अनेन भगवत्युक्तेन । किं नियामकमिति । तथाच तेषामंशं पाहीत्यर्थः तस्मान्न भवतीति भावः । सर्वाधिकमिति । 'उपक्रमादिलिङ्गानां बलीयो ह्युत्तरोत्तर'मित्युक्तेरित्यर्थः । तथाच तदेवास्मद्व्याख्याने नियामकमस्तीति भावः । पाहीति भाष्येऽपि सम्मुग्धतयोक्तत्वात्तत्पदस्य रक्षणार्थकत्वे मनोपभोग्यमित्येतद्विरुद्धं स्यादित्यतः पाधातुरत्र पानार्थक एव विवक्षित इत्याशयेनाह । पिबेति । ननु तर्हि पाहीति कथम् । रक्षणार्थकत्व एव हि तथारूपोपपत्तिर्नतु पानार्थत्वे । तथात्वे पा पान इति पानार्थक पाधातोः 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमन यच्छपश्यर्च्छर्न्धौशीय सीदाः' । इति सूत्रेण पिबादेशे पिबेत्येव स्यादित्यत आह । छान्दस इति । भावेऽनुपसर्गस्येति । उपसर्गरहितात् ह्वयतेर्भावेऽप्प्रत्ययः स्यादिति सूत्रार्थः । सम्प्रसारणं चेति । ह्वः सम्प्रसारणमिति सूत्रेणेति भावः । तथाच ह्वेञ् स्पर्धायां शब्दे चेति धातोः सत्वात् प्रकृते शब्दार्थकात् ह्वयतेरप् प्रत्यये पकारस्य लोपे 'आदेश उपदेशेऽशिति'

इत्यनेन एकारस्यात्वे ह्वा अ इति जाते 'इग्यणः सम्प्रसारण'मिति वचनात् वकारस्य अकाररूप सम्प्रसारणे हु आ अ इति जाते सम्प्रसारणच्चेति सूत्रेण सम्प्रसारणादुकारात्परस्य आकारस्य पूर्वरूपं पूर्वस्य उकारस्येव रूपं जातं सोऽप्युकार एव जात इति यावत्। तथाच हु अ इति जाते उकारस्यौकाररूपे गुणे तस्यावादेशे च सति हव् अ हवेतिप्रातिपदिकरूपं निष्पन्नम्। पश्चात्स्वाद्युत्पत्तौ हवमिति भवतीति द्रष्टव्यम्।

श्रवणमात्रस्य व्यर्थत्वादाह। आगमनेनेति। श्रुत्वा आगच्छेति पूरणीयम्। आगमनेन अस्मद्यज्ञं सफलीकुर्वित्यर्थः। ननु श्रुधीति कथम्। श्रु श्रवणे अस्मात् कर्तरि शपि तदादेशतया 'श्रुवः शृ च' इति श्नुविकरणे शकारलोपे पश्चादात्मनेपदिनि मध्यमपुरुषैकवचने थास् इति जाते थासः सेत्यनेन थासः सिभावे सेर्ह्यपिच्चेति सेर्हिभावे शृनु हीति जाते 'रषाभ्यां नोणः समानपदे इति रेफात्परस्य नस्य णत्वे शृणुहीति स्यादित्यत आह। श्रुशृणुपॄकृवृभ्यश्छन्दसीति। एभ्योधातुभ्यो हेर्धिः स्याच्छन्दसीति सूत्रार्थः। नन्वथापि श्रुणुधीति स्यादित्यत आह। विकरणाभावश्चेति। शबादेशश्नुविकरणाभावश्छन्दत्वादित्यर्थः। तथाच श्रुधातोश्छन्दसि तस्य सिभावे तस्य हिभावे तस्य धिभावे शृधीति रूपं द्रष्टव्यम्॥ १॥

वाय उक्थेभिर्जरन्ते। सुत इति। खण्डित इत्यर्थः। अभेरर्थ इति। अच्छ गतयर्थवदेषु' इति सूत्रे तथा प्रतिपादनादिति भावः। यज्ञोपलक्षणमिति। एकाहेन निष्पाद्ये अग्निष्टोमात्यग्निष्टोमादियज्ञे विशेषे प्रसिद्धमहरिति पदं यज्ञसामान्योपलक्षकमिति भावः। अच्छेत्यस्याभित इत्यर्थमुक्त्वा यथावदिति तात्पर्यं कथितम्। स्तोतृ नामस्विति। स्तोतोपधावितेत्यादित्रयोदशस्तोतृनामसु रेभो जरिता कारुरिति पठितत्वादिति भावः। स्तुवन्ति। अत आयाहीति शेषः। स्तुतिकामी त्वेति। स्तुत्यर्थकनामस्वित्यर्थः। नन्वर्चतीत्यादि षट्चत्वारिंशस्वर्चयत्यर्थक धातुषु गृणाति जरति लिहतीत्यादेः पठितत्वेन जरतेरर्चत्यर्थकत्वेन वां जरन्ते अर्चन्तीति वक्तव्यं स्तुवन्ति स्तुतिकर्मसु पाठादिति कथमुक्तमिति चेत्सत्यम्। तथापि स्तुतेरपि अर्चनविशेषत्वाभिप्रायेण स्तुवन्तीत्युक्तम्। अत एव तदभिप्रायेण जरितृशब्दस्य स्तुतिकर्मसु पाठ उक्त इत्यदोष इति ध्येयम्॥ २॥

वायो तव प्रपृंचती तृन्नन्तशब्दयोगे षष्ठ्याः न लोकेतिनिषिद्धत्वात् प्रपृंचतीति तृन्नन्तशब्दयोगे तवेति षष्ट्या अनुपपत्तिमाशंक्याह। तव त्वामिति। ननु उरुशब्दस्य महानामसु पाठेन महत्वार्थकत्वात् महतीत्येव वक्तव्यम्। अति महतीति कथमुक्तमित्यत आह। आधिक्य इति। तथाच महत्वार्थकोरुशब्दस्य धेनाविशेषणत्वेन लक्षणप्राप्तं स्त्रीलिङ्ग उर्वीति। तत्र यत् वीत्याधिकं

शब्दरूपं दृश्यते तस्याधिक्यार्थत्वाभिप्रायेणातीति तदर्थ उक्त इत्यदोष इति भावः । वाङ्नामस्विति । शची धेना गोर्वागिति वाङ्नामसु धेनाशब्दस्य पाठादित्यर्थः । व्यधिकरणेति । सोमस्य यस्येत्यनयोर्न सामानाधिकरण्यम् । यस्येत्यस्य यजमानपरत्वादित्यर्थः ।

ननु सोमपाशब्दस्य आकारान्तपुल्लिङ्गत्वेन तस्य चतुर्थ्येकवचने सोमपा ङे इति स्थिते ङकारलोपे गुणे सोमपे एवं चतुर्थ्येकवचनेन भाव्यम् । सोमपायेति तु कथम् । सोमपाशब्दस्य अकारान्तत्वे खलु चतुर्थ्येकवचने ङेर्य इति सूत्रेणातोंगात्परस्य ङेर्यादेशे सुपिचेति दीर्घे सोमपायेति स्यात् । न चैवं तस्याकारान्तत्वादित्यर्थः । अकारान्तत्वं यथा स्यात्तथाऽऽह । आतोऽनुपसर्गे क इति । एवं च सोमशब्दोपपदात् आदन्तात्पाधातोः कप्रत्यये कित्वाद्धात्वाकारलोपे सोमपेत्यकारान्त प्रातिपदिके सिद्धे पश्चात्तस्य चतुर्थ्येकवचनमुक्तरीत्या सोमपायेति सूक्तमिति ध्येयम् । नन्वातोऽनुपसर्गे क इति सूत्रस्यात्र कथं प्राप्तिः ? 'कर्मण्यण्' 'आतोऽनुपसर्गे कः' 'सुपि स्थः' इति हि सूत्रक्रमः । तत्रात इति सूत्रे कर्मणीत्यनुवृत्तिमङ्गीकृत्यानुपसर्गे कर्मण्युपपदे आदन्ताद्धातोः क प्रत्ययः स्यादित्युक्तम् । अत एव गां ददातीति गोदः कंबलद इत्युदाहृतम् । न हि प्रतेरुपपदकर्मास्ति । एवमुत्तरसूत्रप्राप्तिः स्यात् । सोमस्य पीतिर्यस्येति व्याख्यातत्वेन सोमशब्दस्य षष्ठ्यन्तत्वादिति चेत् । सत्यम् । पूर्वं स्थितस्येव परतः स्थितस्यापि सुपीत्यस्यानुवृत्तिमङ्गीकृत्य समस्तप्रयोगसंरक्षणाय पदमर्यामनुपसर्गे सुप्युपपदे इति व्याख्यातम् । एवं च प्रकृतेऽपि षष्ठ्यन्तस्योपपदत्वात् सुबन्तोपपदत्वमविकलमिति भावः । अत एव सर्वज्ञकल्पैष्टीकाकारैरिदमेव पूर्वतनं व्याख्यानं कटाक्षीकृत्य तत्वनिर्णयटीकायामपि अक्षेयं पुरुषस्याक्षम् इत्यत्र नञुपपदात् क्षि क्षये इत्यस्मात् आतोऽनुपसर्गे क इति कप्रत्यय इत्यवगन्तव्यम् । कर्मणि षष्ठीत्यङ्गीकारात् न दोष इत्यप्याहुः (इत्युक्तम्) ।

ननु दाशृ दाने इत्यस्मात् क्वसु प्रत्यये सति दाश्विति प्रातिपदिकनिष्पत्यनन्तरं स्वाद्युत्पत्तौ दाशुष इति भवति । तत्र दाशृ धातोः क्वस् प्रत्ययविधायकाभावात् अयुक्तमेतदित्याशङ्क्याह । निपातनादिति । दाश्वान् सोढ्वान् मीढ्वांश्चेति सूत्रेण निपातितत्वात्तदभिप्रेतप्रत्ययादिकं कथं (अपि) कल्प्यमित्याशयः । अलाक्षणिको विधिर्निपात इति प्रागुक्तमनुसन्धेयम् । गतिकर्मेति । प्रापणापरपर्याय गत्यर्थक इत्यर्थः । गाति जिगाति जिन्यातीति गतिकर्मसु पाठादित्यवधेयम् । ननु महार्थत्वान्महत्वमित्येव स्यादिति कथं महत्वमित्यत आह । अतिमहार्थत्वादिति । ननु वाचस्तदर्थत्वेऽपि अतिमहार्थत्वं कुत इत्यत आह । त्वं हीति । यतस्तव प्रपृंचतीति । यतो अतिमहार्थत्वसम्पर्किणीत्यर्थः । प्रपूर्वमतिमहतीति । उरुचीशब्दं व्याख्याय महार्थत्वादित्येतदति

महार्थत्वादिति व्याख्याय तत्राशयहेतुरिति व्याख्या योजिता। इदानीं भाष्ये महार्थत्वादित्येव श्रवणेनातिशब्दाश्रवणात् महार्थत्वादित्येतत् स्वारस्यायेदमुरुचीशब्दस्य व्याख्यानान्तरमित्याशयवानाह। यद्वेति। उरुमञ्चतीति। उरुं अचति पूजयतीत्यर्थः। उरु शब्दोपपदादंचु गति पूजनयोरिति धातोः 'ऋत्विक् दधृक् स्रग्दिगुष्णिगञ्चुयुजिकुञ्चांच' इति क्विन् प्रत्यये सर्वस्य लोपे उरु च इति जाते 'चौ' इति चौ परे उपपदस्य दीर्घे उरु च् इति जाते 'अंचतेश्चेति वक्तव्यम्' इति वार्तिकात् ङीपि उरूची इति रूपं द्रष्टव्यम्।

ननु धेनायाः उरोः पूजासाधनत्वेऽपि महार्थकत्वं कुत इत्यतः तदुपपादनार्थं त्वदर्थत इत्यंशतः प्रवृत्त इत्याशयेनाह। तस्योपपादनमित्यादि। उरुशब्दवाच्यस्त्वं हि महानिति पूरणीयमिति भावः। ऋक्तात्पर्यमाह। त्वत्स्तुतिर्हीति ॥ ३ ॥

इन्द्रवायू इमे सुता। उदाहृतानुक्रमणिकायां द्वितीयतृचस्येन्द्रवायु- देवताकत्वोक्तेस्तदनुसारेणाह। द्वितीयास्तृच ऐन्द्रवायव इति। इन्द्र वायू उभयदैवताका इत्यर्थः। इन्दतेरिति। ननु इदि परमैश्वर्ये इति धातोः निर्देशे इदितेरित्येव कर्तव्यो न त्विन्दतेरिति चेत् सत्यम्। तथापि इदिधातोरिदित्वेनेदितो नुम् धातोरित्यनेन नुमागमे तस्यानुस्वारादेशे सति सिद्धस्य इन्द इत्यस्येन्दतेरिति अनुवादसम्भवादित्यवधेयम्। रप्रत्यय इति। तथाचेन्द् र इन्द्रेति रूपम्। नन्वरुधेन्द्राग्रेरित्यादिना इन्द्रशब्दस्य रन् प्रत्ययान्तत्वेन निपातितत्वात् र प्रत्यय इति कथमिति चेत्। सत्यम्।

तथापि रन्प्रत्ययेऽपि नकारलोपस्तावत्कर्तव्य एव। तदभिप्रायेणैव रप्रत्यय इत्येवोक्तमित्यवधेयम्। ऋगतावित्यस्मादुड इति। तथाचेदंशब्दोपपदात् ऋगतावित्यस्मात् ड प्रत्यये डित्वाट्टिभूतस्य उकारस्य लोपे उपपदस्य इदमित्यस्य इन्द्र इत्यादेशे इन्द्र् अ इन्द्रेति। दृगतावित्यस्मात् ड्र इति पाठेतु इदंशब्दोपपदात् दृगतावित्यस्मात् अ प्रत्यये डित्वाट्टिभूतस्य ऋवर्णस्य लोपे उपपदस्य इमादेशे इन्द् र इन्द्रेति रूपं द्रष्टव्यम्। पूर्ववदिति। इदंशब्दोपपदात् इत्यर्थः। उपपदस्येमादेशश्च द्रष्टव्य इत्याशयः। तथाचेदंशब्दोपपदात् दृशिर् प्रेक्षण इत्यस्मात् ड्र प्रत्यये डित्वाट्टिभूतस्य ऋश् इत्यस्य लोपे उपपदस्य चेमादेशे इन्द् र इन्द्रेति रूपम्। ददर्शेदमितीन्द्र इत्यर्थे ऐतरेयोपनिषदं संवादयति। तथाचेति। 'इदमदर्शमिती३ तस्मादिन्द्रो नाम तमिन्द्रमित्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः' इति श्रुतेरित्यर्थः। इन्धी दीप्ताविति। अत्र ईकारो अनुबन्धार्थः। इन्ध् इत्येव धातुः। तथाच दीप्त्यर्थकात् इन्धी धातोः र प्रत्यये धस्य

दत्वे च इन्द् र इन्द्रेति रूपम् । ऋद्रेन्द्राग्रेरित्यादौ इन्धी दीप्ताविति धातोः र प्रत्यये धस्य च दत्वं च निपातितोऽस्तीत्यवधेयम् । अत्रापि रन् प्रत्यये नकारलोपमभिप्रेत्यैव रप्रत्यय इत्युक्तमिति द्रष्टव्यम् । दीप्तिमत्वादिन्द्र इत्यर्थे बृहदारण्यवाक्यं प्रमाणयति । इन्द्रो ह वै नामैषो योऽयं दक्षिणेऽक्षन् पुरुषस्तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेणैव । परोक्षप्रिया एवहि देवाः प्रत्यक्षद्विष' इति श्रुतेरित्यर्थः । रातेः क इति इदं शब्दोपपदात् रा दाने अस्मात् क प्रत्यये कित्वाद्धात्वाकारलोपे उपपदभूत इदंशब्दस्य इन्द् इत्यादेशे इन्द् र इन्द्रेति रूपं द्रष्टव्यम् ।

ननु प्रयोभिरिति कथम् । प्रियशब्दात् 'अतिशायने तमबिष्ठनौ, 'द्विवचनविभज्योपपदे तरबीयसुनौ, इति अतिशयार्थे इयसुन् प्रत्यये 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रपद्राधि वृन्दाः' इति सूत्रेण प्रियादिशब्दानां क्रमात् प्रस्थ इत्यादेशानाम् इष्ठेमेयस्सु परतो विधानात् प्रेष्ठः स्थेष्ठः वरिष्ठः बंहिष्ठः गरिष्ठः वर्षिष्ठः त्रपिष्ठः द्राधिष्ठः वृन्दिष्ठः इत्याद्युदाहरणानि – प्रियशब्दस्य प्रेत्यादेशे इयसुनो नकारस्य लोपे प्र ईयस् इति जाते गुणे प्रेयस् इति सकारान्तस्य तृतीयाबहुवचने प्रेयोभिरिति स्यादित्यत आह । ईयसुन इति । तथाच ईयसुन् नकारस्य लोपे ईकारस्य अकारे प्र अयस् इति जाते सवर्णदीर्घं बाधित्वा पूर्वरूपे प्रयस् इति सकारान्त नपुंसकशब्दस्य तृतीयाबहुवचनं प्रयोभिरिति भवतीति द्रष्टव्यम् । सकारान्तत्वादेव 'अतोभिस ऐस्' इति ऐस्त्वाप्राप्त्या प्रयैरिति न भवतीति ध्येयम् ।

ईयसुन् प्रत्ययार्थस्य भाष्ये अनुक्तत्वात्स्वयमाह । अतिशयेनेति । ननूपाङ् पूर्वकात् गमलृगतावित्यस्मात् लोटः परस्मैपदिनि मध्यमपुरुषद्विवचने थस् प्रत्यये 'तस्तस्थमिपां तां तं तामः' इत्यनेन थसस्तमित्यादेशे 'इषु गमियमां छः' इत्यनेन अलोऽन्त्यपरिभाषयान्त्यस्य मकारस्य छादेशे उपागच्छतमिति स्यात् उपागतमिति तु कथमित्यत आह । छान्दस इति । तथाच छत्वाभावे म् इत्यस्य लोपे चोपगतमिति रूपं द्रष्टव्यम् । भेदेति । भगवति च भेदाभावादिति भावः ।

ननु द्विवचनस्यैव प्रकृतत्वात् द्वित्वं चेति वक्तव्ये बहुत्वं चेति कस्मादुक्तमित्यत आह । बहुत्वेति । अन्यत्रेति । विश्वेदेवाः सहागताः इत्यादौ बहुवचनान्तमरुच्छब्देन भगवत एव वाच्यत्वात् तत्र बहुवचन सम्पादनार्थम् अत्र बहुत्वग्रहणमित्यर्थः । सम्पाद्यतामिति । किं विशेषेणेति भावः । केवल इत्यादि । अत्यन्ताभेदो भेदाभेदश्चेत्यर्थः । ननु भगवति स्वरूपभेदाभावेऽपि विग्रहभेदेन द्विवचनादिश्रुतिरूपपद्यता- मित्यत आह । अनेनेति ।

एकमित्यत्र एकपदेन स्वरूपभेदस्य एवकारेण च विग्रहाद्यवयवभेदस्य निषिद्धत्वेन तथा नेहनानेति भगवति भिन्नं रूपं गुणकर्मादिकं नास्तीति विशिष्टनिषेधस्य विशेषणीभूतभेदमात्रविषयकत्वेन रूपादौ भेदस्य निषिद्धत्वेन स्वरूपत एकत्वेऽपि विग्रहभेदेन द्विवचनादिकमुपपाद्यतामित्येतदपि निरस्तमित्यर्थः। तं दुर्दर्शमित्यादिनेति। 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति।' इत्यादिना दुर्दर्शत्वगूढत्वाद्यनेकधर्मानित्यर्थः। पृथक्त्वस्य भेदस्य। ननु ब्रह्मणो निर्धर्मिकत्वस्य वा धर्मसद्भावेऽपि भेदस्य वा सम्भवात् किं विशेषेणेत्याशंक्य तत्र बाधकमुपपादयति। अखण्डत्व इति। निर्धर्मिकत्व इत्यर्थः। भेदे चेति। धर्मानङ्गीकृत्य भेदाङ्गीकार इत्यर्थः। तथा चैतदुभयान्यथानुपपत्त्याऽभेदेऽपि भेदकार्यकारी विशेषो ज्ञायत इति भावः। किं चेति। वस्तुत्वादिधर्माणां घटादिना भेदे द्रव्याद्यन्तर्भावा- सम्भवेनात्यन्ताभेदेंऽगीकार्ये घटस्य वस्तुत्वं धर्म इत्यादि भेदव्यवहारान्यथानुपपत्या घटादौ विशेषः। साक्षिणाऽनुभूयते इत्यर्थः। यथोक्तम्। 'सोऽस्ति वस्तुष्वशेषत' इति। 'येन प्रत्यक्षसिद्धेन व्यवहारोऽखिलो भवेदि'ति च। यद्वा घटस्य स्वगतरूपादिधर्मैर्भेदाभेदाङ्गीकाराद्विरुद्धयोरेकत्र समावेशघटकतया घटादावन्ततो विशेषोंऽगीकार्य इति भावः॥ ४॥

वायविन्द्रश्च चेतथः। वाजमन्नमिति। अंधो वाजं याजमन्नमित्यन्ननामसु वाजशब्दस्य पाठादिति भावः। तृतीय इति। अकारापेक्षया तृतीयो वर्ण इकार इत्यर्थः। सत्सूद्विषेत्यादिनेति। 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्' इति सूत्रेण अपि पदानुपसर्गेऽपि उपसर्गोपपदाभावेऽपि क्विपो विधानात्। अत्र उपसर्गभिन्नवाजिशब्दोपपदात् णीञ् प्रापणे इति धातोः क्विप्प्रत्यये तस्य लोपे वाजनीत्येवं रूपमित्यर्थः। वसते वसते ऊरिति। वस निवासे अस्मात् उप् प्रत्यये वस्वित्युकारान्तं प्रातिपदिकम्। तत्र स्वाद्युत्पत्तौ वसुरिति भवति। त्वं वायुस्त्वम्। ननु विजानत इति कथम्। विपूर्वकात् ज्ञा अवबोधने अस्माल्लोण्मध्यमपुरुषे थस् प्रत्यये श्नाविकरणे शकारलोपे 'ज्ञाजनोर्जा' इति सूत्रेण ज्ञाधातोर्जाऽऽदेशे विजानथस् इति जाते 'ई हल्यघोः' इत्यनेन थकाररूपे हलिपरे श्नाविकरणाकारस्य ईकारे सस्य रुत्वे विसर्गे च विजानीथ इति वक्तव्यत्वादित्यत आह। द्विविकरणतेति। श्ना विकरणता शब्विकरणतेति द्विविकरणतेत्यर्थः। वर्णव्यत्ययश्चेति। थकारस्य तकारत्वेन व्यत्ययश्चेत्यर्थः। भाष्यस्यापि छन्दःकल्पत्वादिति भावः। तथाच विपूर्वकात् ज्ञाधातोस्थस् प्रत्यये पश्चात् श्नाविकरणे शकारलोपे तथा शब्विकरणे अकारमात्रं विहाय शकारपकारलोपे विजान् अ इति जाते थस्य तकारे च सति सस्य रुत्वे विसर्गे च विजानत

इति रूपं भवतीति द्रष्टव्यम् । क्षिप्रनामस्विति । द्रुतं द्रवत् मंक्षु क्षिप्रमित्यादि षड्विंशतिक्षिप्रनामसु द्रवदित्यस्य पाठादित्यर्थः । पूर्वं चेतथा इत्येतत् क्रियापदं कृत्वा युवां सुतान् सोमान् विजानथ । यतो विजानथोऽतो द्रुतो द्रुतमुपयातमिति वाक्यभेदेन योजयित्वा तत्तद्विकरणत्वादिक्लेशो भाष्येऽनुसर्तव्यो भवतीत्यस्वरसादिदानीम् एकवाक्यतामङ्गीकृत्य विजानत इत्येतद्विजानच्छब्दस्य षष्ठ्येकवचनं यजमानविशेषणमतो न कोऽपि क्लेश इत्याशयेन योजयति । यद्वेति । यजमानस्येति ऋचि भाष्ये च शेषोक्तिः । यजमानस्य यज्ञे सुतानिति योज्यम् ॥ ५ ॥

## पदार्थदीपिका

तृच इति । तिस्रः ऋचोऽस्मिन् समुदाय इति तृचः ऋचित्रेरुपेत्तरपदादिलोपश्च छन्दसीति वार्तिकात् ऋचिपरं त्रेः सम्प्रसारणम् उत्तरपदादिलोपश्च ऋक्पूरब्धूरित्यादिनाकारः समासन्तः ॥ वायव्य इति । सास्यदे वतेत्यर्थे वायुशब्दात् वाय्वृतुपिरुषसोयदिति यत्प्रत्ययः । 'ओर्गुण'इति गुणः वान्तोयिप्रत्यय इत्यवादेश इति भावः । अयनादिति । धात्वर्थकथनं मात्रव्युत्पत्तिस्तु एतीत्यायुरित्याकारैवैत्याह । अयनादिति । अयतेरिणोवेति अयतेरुणादयो बहुलमिति बाहुलकादुणित्वांद'तउपधाया' इत्युपधावृद्धिः इणश्चोदाहरिष्यमाणादिणछंधसीति सूत्रादुणि 'अचोञ्णिति' इति वृध्ययादेशाविति भावः । आयुश्च लोकश्चेति । एतीत्यायुरिति योगमायुः शब्दसमानार्थकायुशब्दरूढिं चाश्रित्येदं व्याख्यानमिति भावः । क्प्रत्ययेच इति । 'आतोनुपसर्गे क' इति सूत्रेणेति शेषः । आतोलोप इति चेत्याकारलोपश्चेत्यपि द्रष्टव्यम् । इणःछन्दसीति । छन्दसीण इत्युणादिसूत्रपाठेऽपि अत्रेणः छन्दसीत्युदाहरणं वृत्यन्तरे तथा पाठदर्शनाद्वा अर्थानुवादाद्वा युक्तमिति ध्येयम् । पूर्ववदिति । वश्चासावायुश्चेति वायुरिति पूर्ववदित्यर्थः । कृवापाजीत्यादि । ''कृवापाजिमिस्वादि साध्यशूभ्य उण्'' इत्यौणादिकसूत्रेण कर्तर्युणित्यर्थः । आतो युक्चिण् कृतोरित्याकारान्तस्यांगस्य चिणि कृन्ति । ञिणिति च प्रत्यये परे युगागमो भवतीति सूत्रार्थः । डायुप्रत्यय इति । उणादयो बहुलमिति बाहुलकाद्वृणोतेर्डायुप्रत्यये डित्वाट्टिलोप इति भावः । वातेरधिकरण इति ॥ कृवापाजीत्युदाहृतौणादिकसूत्रेणेति शेषः । अतो युक् चिण्कृतोरिति युगागमश्च द्रष्टव्यः । कर्तर्युणिति बाहुलकादेवेत्यर्थः । अत्रात उपधाया इत्युपधावृद्धिरिति ध्येयम् । उकारप्रत्यय इति । भृमृशीत्यादिना विधीयमान उकारप्रत्ययो बहुलवचनादयतेरपि भवतीत्यर्थः । उपसर्गेकारकस्याचाकार इति निर्वचनत्वादिति भावः । व्येति विलीयत इति पूर्वभुक्तसंसारनाशकारणत्वमात्रमभिप्रेतं इदानींतु सर्वलयाधिकरणत्वमिति भेद इति

भावः । पूर्ववदिति । इणः छन्दसीत्यनेनेत्यर्थः । उपसर्गेकारस्य चाकार इति भावः । वयः श्रेष्ठत्व इति धातोरुणिकृत इति णित्वादतउपधाया इत्युपधावृद्धिरिति द्रष्टव्यम् ।

ननु श्रेष्ठत्वार्थकत्वे वयतेरक्रियावाचित्वात् कथं धातुत्वं क्रियावाचिनामेव भ्वादीनां भूवादयो धातव इति धातुसंज्ञाविधानात् इत्यत आह । श्रेष्ठत्वं नाम तत् व्यापार इति । श्रेष्ठत्वप्रयुक्तकश्च व्यापार इत्यर्थः । ततश्च व्यापारस्य क्रियारुपत्वाद्युक्तं धातुत्वमिति भावः । आवश्यकंच व्यापार विवक्षया क्रियावाचित्वव्युत्पादनम् अन्यथा वदनैकदेशस्य कपोलस्याप्यक्रियात्वात् । तदर्थस्य गडिधातोरपि धातुत्वाभावप्रसङ्गादिति भावेनाह । गडीति ॥ तथाच वदनैकदेशशब्देन तदारम्भलक्षणा क्रियोच्यत इति धातुवृत्तावुक्तत्वात् व्यापारविवक्षया तद्वाचित्वात् गाडि-धातोर्धातुत्वात्प्रकृतेऽपि व्यापारविवक्षया धातुत्वमुपपन्नमिति भावः । भावेघञिति । भावेघञिति सूत्रेण दर्शनं दर्श इति भावेघञि पुगन्त लघूपधस्येति लघूपधत्वात् गुणोरपरत्वं चेति भावः । तनोतेर्ड इति । अन्येष्वपि दृश्यत इति सूत्रेऽपि सर्वोपाधिव्यभिचारार्थः । तेन धात्वंतरादपि भवति कारकान्तरेचेति काशिकायामुक्तत्वात् । सर्वोपाधिव्यभिचारार्थकापिशब्दाद्डप्रत्यय इत्यर्थः । डित्वाट्टिलोप इति भावः । तेन तत इति । दर्शेन तन्यत इति दर्शत इत्यर्थः । संहितायां दैर्ध्यमिति अन्येषामपि दृश्यत इत्यनेन विहितं यत् श्रुधीहवमिति संहितायां दैर्ध्यं तदित्यर्थः । इति भाव इति । इदं च वस्तुगतिमनुरुध्योक्तम् । मनोवृत्तय इति ।

ननु पाघ्राध्मेति पिबेत्येव स्यात् । पाहीति तु कथमित्यत्राह ॥ छान्दस इति । सर्वे विधयः छन्दसि विकल्प्यन्त इति वचनादिति भावः । अप्रत्ययः सम्प्रसारणं चेति भावेनुपसर्गस्येति सूत्रे ह्वः सम्प्रसारणं च व्यभ्युपविषु इत्यतः ह्वः सम्प्रसारणमित्यंशस्य ऋदोरबित्यतः अबित्यस्य चानुत्पत्तिरिति भावः । ततश्चायं सूत्रार्थः । भावेऽभिधेयेऽनुपसर्गस्य ह्वयतेः सम्प्रसारणमप्-प्रत्ययोभवतीति । ततश्चशब्दात् ह्वयतेः सम्प्रसारणे सम्प्रसारणाच्चोकारस्य पूर्वरूपे सार्वधातुकत्वात् गुणे अवादेशे च विवक्षितरुपसिद्धिः । एवं च बहुलं छन्दसीत्यनेन ह्वयतेः सम्प्रसारणं सम्पाद्य ऋदोरबित्यनेनाप् प्रत्ययं व्याख्याय हवशब्दव्युत्पादनं परभाष्यकारस्य स्वाज्ञानाविष्कारहेतुरिति सूचितं भवति ।

ननु श्रुणोतेर्लण् मध्यमपुरुषैकवचनसिपः सेर्ह्यपिच्चेति ह्यादेशे श्रुवः श्रुवेति श्नुप्रत्यये तत्संन्नियोगेन श्रूभावे सति उतश्च प्रत्ययादसंयोगपूर्वादिति हिलोपे शृण्वित्येव भवितव्यम् । श्रुधीति कथमित्यतः हिलोपबाधेन हेध्यादेशविधानान्नदोष इत्याह । श्रुश्रुणुपृकृवृभ्यः छन्दसीत्यादि । हु

झलभ्यो हेधिरिति पूर्वसूत्राद्धेरित्यस्यानुवृत्तेरिति भावः। नन्वस्तु हेर्श्विरादेशस्तथापि श्रुवः शृवेति श्नुप्रत्ययेन शृभावेन च भवितव्यं श्रुणुधीगिर इत्यादिवदित्यतः आह। विकारणभावश्चेति। श्रुवः परस्य हेर्धिभावविधानसामर्थ्यादेव व्यत्ययो बहुलमिति श्रुवः शृचेति विशेषविहितश्नुरुपविकरणस्य शप्रुपबाधकेनाभावः। शपोऽपि बहुलं छन्दसीति लुकाभावो दर्शनमित्यर्थः। श्नुभावस्य 'श्नुप्रयुक्तत्वात् विकरणस्य श्नुप्रत्ययस्यैवाभावे तत्संन्नियोगेन विहित शृभावस्य स्वतः सिद्धत्वात् पृथक् शृभावाभाव इत्यपि नोक्तमित्यवधेयम्॥ १॥

अभेरर्थ इति। अभेरर्थ आभिमुख्यतश्चाहर्विद इत्यनेनान्वितं यथार्थत्वे पर्यवस्यतीति भावः। अच्छाजरितार इति संहितायां निपातस्य चेति दीर्घ इति ज्ञेयम्॥ २॥

पृचीसम्पर्क इति। अस्माल्लटः शतरि रुधादित्वात् श्नमि श्नसोरल्लोप इत्यलोपो अनुस्वारपरसवर्णयोः उगितश्चेति ङीबिति भावः। ननु महन्नामसु पठितस्योरुशब्दस्य महतीत्येव व्याख्यानं युक्तम् अतिमहतीति तु कथं इत्यत आह। आधिक्येऽधिकमिति। उर्वीति वक्तव्ये उरुचीति चकारोऽधिकं इति भावः। व्यधिकरणो बहुव्रीहिरिति। तथाच युक्तं पूर्वपदप्रकृतिस्वरत्वमिति भावः। न च बहुव्रीहिः समानाधिकरणानामिति वक्तव्यमिति वार्तिकविरोधात्कथमयं बहुव्रीहिः स्यादिति वाच्यम्। कण्ठे स्थितः कालो यस्य सकण्टकाल इत्यत्र पूर्वं सप्तमीति योगविभागात् समासे जाते अमूर्धमस्तकादिति सूत्रेण सप्तम्या अलुकि च सति कण्ठे स्थितशब्दस्य कालशब्दस्य समानाधिकरणत्वादेव सिद्धेः सप्तम्युपमाने पूर्वस्येति व्यर्थमित्याशंक्योत्तरपदलोपाभावार्थं वचनं तेन ज्ञायते वैय्यधिकरण्येप्यत्र गमकत्वमस्तीति पदमंजर्यामुक्तत्वाद्वैय्यधिकरण्येऽपि न बहुव्रीह्यनुपपत्तिरिति भावः। एवं च यत् कस्यचित् सोमपीतिशब्दे तत्पुरुषं व्युत्पाद्य पूर्वपदप्रकृतिस्वरत्वं व्यत्ययेनेति व्याख्यानं तदपहसितं भवति। आतोऽनुपसर्गेक इति कित्वादातोलोप इति चेत्याकारलोप इति भावः। निपातनादिति। अभ्यासस्य द्वित्वे दाश्वान् साह्वानिति निपातनादित्यर्थः।

यद्वेति उरुशब्दे अञ्चते ऋत्विगित्यादिना क्विप अनिदितामित्यनुनासिकनकारलोपे उगितश्चेति ङीपि अच इत्यकारलोपे चाविति पूर्वस्य दीर्घे उरुचीशब्दनिष्पत्तिरिति भावः। जिगातीत्यत्र लटः सार्वकाले कार्यत्वात्सार्वकालिकस्य स्वभावत्वादाह। अभीप्सितसाधनस्वभावेति॥ ३॥

ऐन्द्रवायव इति। उभयत्र वायोः प्रतिषेधो वक्तव्य इति वायुशब्दे परतः इन्द्रशब्दस्य नानङ् इति भावः। प्रत्यय इति। ऋज्रेन्द्राग्रवज्रविप्रेत्यादिना रप्रत्ययान्तेन्द्रशब्दनिपातनादिति भावः। ड

प्रत्यय इति। अन्येष्वपि दृश्यत इति सूत्रीयापिशब्दबलादिति भावः। तथाच डित्वाट्टिलोप इति भावः। उपपदस्यचेति निर्वचनत्वादिति भावः। पूर्ववदिति। द्रुगताविति धातोरिन्द्र शब्दोपपदादिव दृशेरपि तदुपपदाद्रप्रत्यय इत्यर्थः। उपलक्षणमेतत्। पूर्ववदुपपदस्येमित्यादेशश्चेत्यपि द्रष्टव्यम्। इन्धी दीप्तावित्यतो इन्धे इति व्युत्पत्तौ ऋच्चेन्द्राग्रेति निपातनादेव रप्रत्ययो धस्य दश्चेति भावः। शतेति। आतोऽनुपसर्गेक इत्यनेनेत्यर्थः। कित्वादातोलोप इटि चेत्याकारलोप इति भावः। इन्दादेश ति। निर्वचनत्वादिति भावः। उशन्तीति धात्वर्थानुसारात् सोमशब्दस्य तदभिमानिपरत्वंचावश्यकमित्यभिप्रेत्य धात्वर्थस्य प्रसिद्धेर्थेऽनुपपत्तिमुपपादयति। सोमानामिति।

ननु प्रियाशब्दादतिशये ईयसुन् प्रत्यये प्रियस्थिरेत्यनेन प्रियशब्दस्य प्र इत्यादेशे चाद्गुण इत्यनेन प्रशब्दाकारस्य ईयसुन् ईकारस्य च स्थाने एकारक्षणएकादेशे प्रेयोभिरिति स्यात् प्रयोभिरिति तु कथमित्यत आह। ईयसुन इति। तथाच छन्दस्त्वादकारस्येकारस्य च स्थाने अकार एकादेश इति भावः। ईकारस्यैव विशेषतः स्थानित्वेन निर्देशस्तु योह्युभयस्थाने भवति लभते सावन्यतरव्यपदेशमिति न्यायेन उरण्रपर इत्यादाविवोपपन्न इति न काप्यनुपपत्तिरिति ध्येयम्। उपागतमिति। गमिधातोः लोट्मध्यमपदद्विवचने बहुलं छन्दसीति शयो लुकि अनुदातोपदेशवनतितनोत्यादीनामनुनासिकलोप इत्यादिना मकारलोप इति भावः। छत्वाभावः इषुगमियमाम् इच्छति प्राप्तस्य छत्वस्याभाव इत्यर्थः। श्रुतिविरोधादित्याहेति। एकमिति स्वरूपभेदस्य एवेत्यवयवावयविभावेन भेदस्यभेदाभेदस्य च निवारितत्वात्। तथा इह ब्रह्मणि किं च नावयवगुणकर्मादिकं नानाभिन्नं नास्तीत्यवयवादि भेदस्य निषेधात्। य इह नानेवाभिन्नाभिन्नं पश्यति समृत्योरनन्तरं मृत्युं तमः प्राप्नोतीति तद्दर्शननिन्दया भेदाभेदनिषेधावगमात् यथा पर्वतेषु दुर्गे स्थाने शिखरे दृष्टमुदकमधो विधावति एवं विष्णुधर्मास्ततः परस्परं च पृथक् पश्यन् पुरुषस्तानेव तद्दर्शनमन्वेवाधो विधावति अन्धं तमो गच्छतीति भेददर्शननिन्दया-भेदनिषेधावगतेश्चेति भावः। अनेनेति। नेह नानेत्यादिना विग्रहादिभेदस्यापि निब्रोधितत्वादिति भावः। काठके तं दुर्दर्शमित्यादिनेति अत्र काठक इत्यस्यानेकान् धर्मानुक्त्वेत्यनेनैव सम्बन्धः नत्वेकमेवाद्वितीयमित्येवं पुनः पृथक्तस्यानिषेधादित्युत्तरवाक्येनापि काठके एकमेवद्वितीय-मित्यस्याभावात् नेहनानेत्यस्यैव सत्वात्। भिन्नप्रकरणस्थवाक्योदाहरणं तु श्रुत्यन्यथानुप-पत्त्यार्थप्रतिपादने श्रुतिद्वयस्यैकप्रकरणस्थत्वमप्रयोजकमित्यभिप्रेत्येति द्रष्टव्यम्। काठके एकमेवाद्वितीयमित्यस्यापाठेति तत्र तेन सह पठितेन नेहनानेत्यादिना पृथक्त्वस्य निषेधादित्यर्थो ज्ञेय इति केचित्।

श्रुत्येति । श्रुत्यन्यथानुपपत्येत्यर्थः । अर्थापत्तिमेव विशदयति । अखण्डत्व इति । तन्तुपटमृद्घटादिबुद्धीनां घटपटादिबुद्धितो वैलक्षण्यस्यानुभवसिद्धित्वात् बद्धकुण्डबदरादि-बुद्धितोऽपि वैलक्षण्यानुभवेन सम्बन्धविषयत्वस्य तत्र प्रयोजकत्वासम्भवात् । घटतज्ज्ञानतदभावादिबुद्धितोऽपि वैलक्षण्यानुभवेन संयोगान्यसम्बन्धविषयत्वस्यापि तत्र प्रयोजकत्वासम्भवात् घटतद्धर्मिकान्योन्याभावादिबुद्धेर्घटपटादिबुद्धितोपि वैलक्षण्याभावापातेन स्वरूपप्रत्यासत्ति संयोगान्यसम्बन्धविषयकत्वस्यापि तत्राप्रयोजकत्वेनाश्रयाश्रयिभावनियम-रुपायुतसिद्धौ आश्रयाश्रयिभावमात्रस्य कुण्डबदरादिप्रतीतावपि भावेन नियमस्य च तन्तुपटादि प्रतीतावप्यभावेनायुतसिद्धिविषयकत्वस्यापि तत्राप्रयोजकत्वेन सम्बन्धनित्यत्वस्य सम्बन्ध्ययुतत्वस्य वा तत्रास्फुरणेन समवायविषयकत्वस्यापि तत्राप्रयोजकत्वादभेदविषयत्वेनैव वैलक्षण्ये वाच्ये तत्रापि केवलाभेदविषयकत्वेसमानाधिकरणव्यवहारजनकत्वा सम्भवोधिकविषयत्वे वाच्ये भेदरुपाधि-कविषयत्वे च पटो न तन्तुः पटो न मृदित्यपि व्यवहारापत्या भेदाभेदविरोधपरिहार-कस्यान्यस्यावश्यकत्वाच्च विशेषरुपाधिकविषमेव आवश्यकमिति तन्तुपटादिबुद्धिर्घटपटादिबुद्धितः साक्षिरुपवैलक्षण्यानुभव एव । विशेषे प्रमाणमित्याशयेनाह । किञ्चेति ॥ ४ ॥

सत्सूद्विषेत्यादिनेत्यादिपदेन द्रुहद्रुहयुजविदभिदछिदनीरजामुपसर्गेऽपि क्विबिति सूत्रशे-षग्रहणम् । वसतेरिति । शृस्वस्निहित्रय्यसिवसिहनिक्लिदिबन्धिमतिभ्यश्चेति सूत्रेणोप्रत्यय इत्यर्थः । ननु विपूर्वात् ज्ञाधातोर्मध्यमपुरुषद्विवचने थसि श्नारुपविकरणप्रत्यये ज्ञाजनोर्जेति जादेशे ई हल्यघोरिति श्नाकारस्येत्वे विजानीय इति भवितव्यं तत्कथं विजानत इति भाष्यमित्यत आह । द्विविविकरणेति । श्नाविकरणात् शविकरणताचेत्यर्थः । वर्णव्यत्यय इति । थकारस्य तकारो भाष्ये व्यत्ययेनेत्यर्थः । ततश्च जानातेश्ना रुपविकरणप्रत्यये श्नाभ्यस्तयोरात इति अल्लोपे च शविकरणे च सति यसच्छकारस्य तकारे च भाष्यीयविजानत इति रुपसिद्धिरिति भावः । एतदस्वरसादेवाह यद्वेति । अस्मिन् पक्षे ऋचिवर्णव्यत्ययमात्रं न तु भाष्ये व्यत्ययादिकमिति । भावः ॥ ५ ॥

## टीकाविवृतिः

(वायवायाहि) अथेदानीमिति । तथाचानुक्रमणिका । वायोवायव्यैन्द्रवायवमैत्रावरुणास्तृचा इति । अस्यार्थः । वायो इति सूक्तप्रतीकम् । नवेत्यनुवर्तते तेन ऋक्संख्याज्ञेया । तत्र तृचास्त्रयः आद्यस्तृचोवायव्यः वायुदेवताकः द्वितीय ऐन्द्रवायवः इन्द्रवायुदेवताकः । तृतीयोमैत्रावरुणः मित्रवरुणदेवताक इति । तिसृणाम् ऋचां समूहस्तृचः । ऋचिपरेत्रेःसम्प्रसारणमुत्तरपदादि

लोपश्चछन्दसीति वार्तिकात्सम्प्रसारणादिकार्ये ऋक्पूरब्धूरित्यकारे च समासान्ते तृचशब्द सिद्धिः। पूर्ववद्गायत्रीविशेषश्छंदो ज्ञेयम्। इदं च प्रथमानुवाके द्वितीयं सूक्तम्। वशब्द इति बवयोरभेदादिति भावः। न तत्र व्युत्पादनेति। नपुंसके बले वं स्यादित्येकाक्षररत्नमालायां प्रसिद्धत्वादिति भावः। अनेनैव शब्दस्य बलत्वादित्यन्वयः सूचितः। अयतेरुण् बाहुलक आश्रयणीय इत्यरुचेः पक्षान्तरमाह। इणोवेति। छन्दसीण इत्यनेनेति शेषः। आयुश्च लोकस्येति। जगत आयुष्यप्रद इत्यर्थः। तदुपपादयति। प्राणेति। कप्रत्यय इति। सिचेः संज्ञायां हनुमौ कश्चेत्युक्तः क प्रत्ययो बहुलवचनादस्मादपीत्यर्थः। आतोलोप इटि चेत्याकारलोपः। आतोयुक्चिण् कृतोरिति। अनेन सूत्रेण युगागम इति भावः। डायुप्रत्यय इति। उणादयोबहुलमिति बहुलग्रहणादुणादिसूत्रानुक्तोपि कार्यवशाद्वृञो डायुप्रत्ययो ज्ञेयः। संज्ञासुधातु रूपाणि प्रत्ययाश्च ततः परे। कार्याविद्यादनूबन्धमेतच्छास्त्रमुणादिष्वित्युक्तेः। वयबन्धन इतीति। यद्यप्ययवयपयेति गतौ पठ्यते तथापि धातूनामनेकार्थत्वादेतदुक्तम्। महाव्याकरणसूत्राद्वा। अस्माद्बाहुलकादुणि अत उपधाया इति वृद्धिरिति भावः। उपकार प्रत्यय इति। उण्प्रत्यय इत्यर्थः। उपसर्गे कारस्य चाकार इति। तृतीयोऽतिशय इति सूत्राद्धस्वाकारे सवर्णदीर्घ इति भावः। पूर्ववदुणिति। उपसर्गेकारस्य चाकार इवेत्यर्थः। ननु श्रेष्ठत्वार्थकवयतेः कथं धातुत्वम्। सिद्धार्थत्वेनक्रियाऽवाचित्वात्। क्रियाच साध्यत्वेन प्रतीयमानः क्रमवानेकफलसाधनत्वेन विवक्षितो व्यापार समूहः। तदुक्तं भर्तृहरिणा। यावत्सिद्धमसिद्धं वासाध्यत्वेनाभिधीयते। आश्रितक्रमरूपत्वात्क्रियेति व्यपदिश्यते। अनन्तरं फलं यस्याः कल्पते तां क्रियांविदुः। प्रधानभूतां तादर्थ्यादन्यासांतु तदाख्ययेति। अतः श्रेष्ठत्वस्यैतादृशक्रियात्वाभावेन तद्वाचकवयतेर्धातुत्वाभावाद्धातोरिति विहित उण्न स्यादित्यत आह। एतद्व्यापार इति। श्रेष्ठत्वोपयोगिव्यापारः भक्तसंरक्षणादिः। अत्र दृष्टान्तमाह। गडिवदनैकदेश इति यथेति। वदनैकदेशस्य कपोलस्योक्तरूपक्रियात्वाभावाद्धातुत्वार्थं भक्षणादितद्व्यापारो यथा विवक्षित इत्यर्थः। भगवल्लक्षणत्वापत्तेरिति। निरतिशय-ज्ञानादेर्भगवल्लक्षणत्वादिति भावः। दर्शतेत्यत्र दृशेर्भृमृदृशियजिपर्विपच्यमितमिनमिहर्येभ्योत-जित्यतचियोगेन ज्ञानवत्त्वमात्रं रूढ्या दर्शतः सोमसूर्ययोरित्यभिधानात्सूर्यचन्द्रार्थत्वं प्रतीयते तच्च माहात्म्यानुपयोगीत्यतो दर्शतस्ततदृष्टित्वादिति भाष्ये व्याख्यातं तदुपपादयति। दृशेर्भावे इति। अरंकृता इति पदं रलयोरभेदात्पृषोदरादित्वाद्वा लस्थाने रेफादेश इत्याशयेनालंकृता इति व्याख्यायाध्यात्मं सोमे भक्त्यादीति पदं प्रसिद्धसोमेहिरण्यपदं योजितमिति भावेनान्य इति पदं व्याकरोति। अन्येबहिष्ठा इति। प्रसिद्धा इत्यर्थः। तथाचाभिषवादिसंस्कारालङ्कृता इति व्याख्यानमसदिति भावः।

भाष्यस्थसुता इति पदं व्याचष्टे। सुताः सोमा इति। दैर्ध्यमिति। अन्येषामपि दृश्यत इत्यनेनेति शेषः। तेषामंशं पाहीति। सोमानां भागं रसं पिबेत्यर्थः। गुणाधिक्यविरोधिन इति। अर्थस्येति शेषः। यत्रेति। अर्थस्य तात्पर्यार्थस्य नियामकाः निर्णायकाः खलु उपक्रमादयो यस्यार्थस्यानुकूलाः स एव तात्पर्यार्थो हीत्यन्वयः। तत्र तस्मिन् तात्पर्यार्थे ज्ञाते च सर्वाधिकं स्वर्गादिसर्वफलाधिकं फलं मोक्षाख्यं भवतीत्यर्थः। अन्येतु। फलमिति। उपक्रमादिषूत्तरोत्तर-प्राबल्यात्फलवत्त्वरूपं तात्पर्यलिङ्गमुपक्रमादिभ्यः सर्वेभ्योधिकमित्यर्थः। अर्थवादोपि तद्विशेष एवेति भाव इत्याहुः। भाष्ये आयाहीत्यस्य कर्मानुक्तेस्तद्वक्तुमिमेसोमा इत्यत्र क्रियाया अश्रवणा-दन्वयाप्रतीतेराह्वानश्रवणप्रार्थनस्याभिप्रायाप्रतीतेस्तद्वक्तुमृचं योजयति। ततश्चैवमिति। पाहीत्यस्य रक्षणार्थत्वे आत्मसंरक्षणप्रार्थनां विना सोमसंरक्षणप्रार्थनाया असङ्गतत्वान्मनोपि भोग्यमीशस्येति भाष्यविरोधाच्च पानार्थत्वेतु पाघ्रेति पिबादेशेन भाव्यमित्यत आह। छांदस इति। भावे इति। ह्वः सम्प्रसारणं चेत्यतः ह्वः सम्प्रसारणमित्यनुवर्तमाने अनुपसर्गस्य ह्वयतेर्भावेऽकारप्रत्ययः सम्प्रसारणं च स्यादिति सूत्रार्थः। ह्वेञ्स्पर्धायां शब्देचेत्यर्थ द्वयस्मरणाच्छब्दार्थकह्वयतेर्भावेऽप्रत्यये सम्प्रसारणे सम्प्रसारणाच्चेति पूर्वरूपत्वे गुणावादेशयोर्हव शब्द आह्वानार्थ इति भावः। तथाच पाठक्रमादर्थक्रमो बलीयानिति न्यायेन हवं श्रुधि श्रुत्वा चा याहि आगत्य चसोमं पिबेति ऋच्यन्वयः सूचितः। ननु श्रुधातोर्लोटि सिपि सेर्हिभावे श्रुवः शृचेति श्नुप्रत्यये शृभावे उतश्च प्रत्ययादसंयोग पूर्वादिति हेर्लुकि शृण्विति भाव्यम्। श्रुधीति कथमित्यत आह। श्रुशृण्विति। तर्हि श्रुवः शृचेति भाव्यमित्यत आह। विकरणाभावश्चेति। शृणुग्रहणेनैव शृणुधीति सिद्धे पुनर्ग्रहणसामर्थ्यात् श्रुवः श्नुविकरणाभावे ज्ञापिते श्रुधीति रूपमिति भावः॥ १॥

वाय उक्थेभिः। एतदृक्पदान्यन्वयानुसारेण भाष्यपदैर्योजयति। हेवायविति। सुतसोमपदं भाष्येऽव्याख्यातत्वात्स्वयं व्याचष्टे। सुत इति। खण्डित इत्यर्थः। अभेरर्थ इति। अच्छः स्फटिकभल्लूकनिर्मलेष्वच्छमव्ययम्। आभिमुख्ये इति विश्वोक्तेरर्थाभिमुख्ये याथार्थ्यरूप इत्यर्थः। यज्ञोपलक्षणमिति। यज्ञोपलक्षणमिति। एकाहसाध्ये यज्ञावयवे कर्मणि प्रसिद्धमहरिति पदं यज्ञोपलक्षणमित्यर्थः। अन्येतु एकाहेन निष्पाद्येऽग्निष्टोमादिक्रतौ प्रसिद्धमहरिति पदं यज्ञमात्रोप-लक्षणमित्यर्थ इत्याहुः। स्तोतृनामस्विति। रेभः जरिताकारुः कीरिः इति पाठादित्यर्थः। स्तुतिकर्मस्विति। स्तुत्यर्थकगृणाति जरते ह्वयते इति पाठादित्यर्थः। न च चतुश्चत्वारिंश-दर्चतिकर्माण इति पूजार्थकत्वोक्तिविरोधः। स्तुत्यर्थापरित्यागेनार्थान्तर स्वीकारार्थत्वादस्य वाक्यस्य। अत एव शंसत् स्तौति नौतीत्यादीनामर्चति कर्मसुपाठः। तथार्चतिकर्म-सुपठितरेभतिजरति प्रकृतिकरेभजरितृप्रातिपदिकयोः स्तोतृनामसु पाठः॥ २॥

वायोतव। नलोकेति षष्ठीनिषेधस्य सर्वेविधयश्छन्दसि विकल्प्यन्त इति वचनाद्वेदेऽभा-वात्प्रपृंचतीति शत्रंतशब्दयोगेपि तवेति षष्ठी युज्यत इत्याशयेन व्याचष्टे। तव त्वामिति। पृचीसंपर्क इति। अस्माल्लटः शत्रादेशे उगितश्चेति ङीपि रुधादित्वाच्छ्नमि श्नसोरल्लोप इत्यकारलोप इत्याशयः। ननु उरु तुवि पुरु इति बहुनामसु उरुशब्दपाठाद्बहुः पूर्णतायामित्युक्तेर्महतीत्येव वक्तव्ये अतिमहतीत्युक्तिः कथमित्यत आह। आधिक्य इति। उरुरिति वक्तव्ये ऊरूचीत्यधिकमाधिक्यार्थ इति भावः। वाङ्नामस्विति। निघण्टौ गणाधेना ग्रा विपेति वाङ्नामसुपाठादित्यर्थः। व्यधिकरण इति। सप्तमीविशेषणे बहुव्रीहावित्यत्र सप्तम्यंतस्य पूर्वनिपातनसामर्थ्याद्व्यधिकरणो बहुव्रीहिर्ज्ञाप्यते। आत इति। सोमशब्दोपपदात्पिबतेः कप्रत्यये आतोलोप इटि चेत्याकारलोपः। निपातनादिति। दाशृदान इत्यतः क्स्वंतात् दाश्वान् साह्वान् मीढ्वान् साह्वान्मीढ्वांश्चेति द्वित्वाभावनिपातनादित्यर्थः। ततोवसोः सम्प्रसारणमिति सम्प्रसारणमिति भावः। गतिकर्मेति। जुहोत्यादौ गास्तुताविति पठितछान्दसधातोर्लटि शपः श्लौ द्वित्वादौ भृञामिदित्यधिकारे बहुलं छन्दसीत्यनेनाभ्यासस्येकारादेशे निष्पन्नजिगातीत्यस्य जिगाति इन्वतीति गत्यर्थधातुषु पाठादिति भावः। अन्तरिति। अन्तः स्वान्तः नीतः अभिप्रेतः ण्यर्थः प्रेषणादिर्यस्मिन् धातौ सतथोक्तः। भाष्ये ईप्सितमिति कस्यार्थ उच्यत इत्यत आह। ईप्सितमिति शेष इति। ऋक्शेषो भाष्य उक्त इत्यर्थः। उरूचीशब्दस्य व्याख्यानमतिमहतीति तदुपपादकत्वेन महार्थत्वादित्येतद्योजनायां तद्घटनायाह। अतिमहार्थत्वादिति। अतिशब्दाध्याहारप्रसंगात्प्रकारान्तरेण व्याचष्टे। यद्वेति। उरुमंचतीति। उरूपपदादंचतेः ऋत्विगित्यादिना क्विनि अनिदितामिति नलोपे उपपदसमासे उगिदचामिति सूत्रेंऽचतिग्रहणेन धातोश्चेदुगित्कार्यं तर्ह्यंचतेरेवेति नियमादुगितश्चेति ङीपि अच इत्यकारलोपे चाविति दीर्घः। धेनाभीप्सितं जिगातीति स्तुतिमाहात्म्यकथनस्योपयोगमाह। त्वत्स्तुतिरिति॥ ३॥

इन्द्रवायू। इन्दतेरिति। इदि परमैश्वर्ये इत्यत ऋज्रेन्द्राग्रवज्रविप्रेत्यादिना रन्प्रत्ययांत इन्द्र शब्दो निपातित इति भावः। द्रवणादिति। गमनाद्विषयीकरणादित्यर्थः। इन्द्रशब्दस्यावयवार्थ मुक्त्वा तात्पर्यमाह। सर्वविषयोपभोगाच्चेति। इन्द्रशब्दस्य पूर्वोक्तैश्वर्यार्थसमुच्चयार्थश्चशब्दः। अस्माड्डु इति। औणादिक इत्यर्थः। इमित्यादेश इति। पृषोदरादित्वादिति भावः। पूर्ववदिति। उपपदस्येदंशब्दस्येमित्यादेश इत्यर्थः। इदमदर्शमित्यादीति। इदमदर्शमितीतस्मादिदन्द्रोनामेदं द्रोहवैनामतमिदं द्रं सन्तमिन्द्र इत्याचक्षत इत्यैतरेयश्रुतिः। इन्धी दीप्ताविति। ऋज्रेन्द्रेति निपातनादेव रन्प्रत्ययो धस्य दश्चेत्याशयः। इन्धो हवैनामेत्यादि श्रुतेरिति। इंधो हवैनामैषां योयं

दक्षिणेक्षन् पुरुषस्तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेणैव परोक्षप्रिया इव हिदेवाः प्रत्यक्षद्विष इति बृहदारण्यकश्रुतेरित्यर्थः। रातेरिति। इदं शब्दोपपदात् रादान इत्यत आतोनुपसर्गे क इति के निरुक्तत्वादि दम इन्दादेश इत्यर्थः।

स्पष्टत्वाद्भाष्येऽव्याख्यातं प्रथमपादमनूद्यान्वयमाह। इन्द्रवायू इति। इन्दव इत्यस्य सोमा इति व्याख्यानम्। सम्पादिताः सन्तीति शेषोक्तिः। इंदव इत्यनेन सोमान्तर्गतसोमाभिमानिदेवग्रहणे बीजमाह। अचेतनत्वादिति। तथाचोशन्तीत्युक्तेच्छाया अयोगादभिमान्यधिकरणन्यायेन सोमाभिमानिग्रहणमिति भावः। मनोवृत्तय इति। इन्दुशब्दस्य व्याख्यानांतरमिदम्। तत्रोशन्तीत्यस्य विषयीकुर्वन्तीति वा व्याख्यानं मनोवृत्तिग्रहणेन तदभिमानिग्रहणं वा ज्ञेयम्। वामिच्छन्ति हि सोमगाइत्यत्र भाष्ये वामिति ऋक्स्थपदानुवादरूपत्वात्पादादित्वेप्यपादादाविति न निषेधः। नञा निर्दिष्टस्यानित्यत्वादि त्यप्याहुः। तात्पर्यार्थमाह। युवयोरिति। प्रयोभिरित्यस्य प्रियैरिति भाष्योक्तव्याख्यानघटनायाह। प्रयोभिरिति। प्रियशब्दादतिशयार्थे द्विवचन-विभज्योपपदेतरबीयसुनावितीयसुनि प्रियस्थिरेत्यादिना प्रादेशे प्रकृत्यैकाजितिप्रकृतिभावेन यस्येति लोपाभावे आद्गुण इति गुणे प्रयोभिरिति प्राप्ते व्यत्ययेनेयसुन ईकारस्याकारादेशे अतो गुण इति पररूपे प्रयोभिरिति रूपमिति भावः। भाष्येऽतिशयेनेति शेषमभिप्रेत्याह। अतिशयेनेति। छान्दसश्छत्वाभाव इति। छान्दस इत्येतदनन्तरम्। शब्लुगिति शेषः। तस्मात् शित्परत्वाभावादिषु गमीति छत्वाभाव इत्यर्थः। उपागतमित्यत्रोपाङ्पूर्वाद्गमेर्लोण्मध्यम-पुरुषद्विवचनथसः तमित्यादेशे बहुलं छन्दसीति शपोलुकि अनुदात्तोपदेशेत्यादिनानुनासिकलोप इति भावः। इन्द्रशब्देनेति। ऋचि नामग्रहणे तदेकदेश ग्रहणमिति न्यायेनोपेन्द्र इति वक्तव्ये इन्द्र इत्युक्तमिति भावः। वायुशब्देनेति। ऐतरेयभाष्ये बलज्ञानस्वरूपत्वाद्वायुनामास एव च। वायौ सङ्कर्षणोनित्यं स्थित इति वायुस्थितसङ्कर्षणस्य वायुनामकत्वस्योक्तत्वादंतर्यामिणि तत्तच्छब्दानां मुख्यत्वाद्वायुशब्देन तदन्तर्गतसङ्कर्षण उच्यत इत्यर्थः। अन्यत्रेति। स्त्रियः सतीस्ताँ उमेपुंस आहुरित्यादावित्यर्थः। श्रुतिविरोधादित्याहेति। तथाच तानेवानुविधावतीत्येतद्भाष्यानंतरमिति श्रुतिविरोधादिति शेष इत्युक्तं भवति। अनेनेति। अनेन प्रमाणसमूहेन। विग्रहभेदः शरीरभेदः।

प्रमाणवाक्यानां चायमर्थः। एकं स्वगतभेदवर्जितम्। देहगुणक्रियादि भेदरहितमिति यावत्। एवशब्देन भेदाभेदनिवृत्तिः। अद्वितीयं समाधिकरहितम्। इह ब्रह्मणि। किं चनावयवगुणक्रिया प्रादुर्भावादिकं नाना भिन्नं नास्ति। मूलरूपश्च यो विष्णुः प्रादुर्भावादिकश्चसः। गुणतः स्वरूपतोवापि विशेषं योत्रपश्यति। अत्यल्पमपि मत्वा सतमोंधं यात्यसंशयः। भेदाभेदविदश्चात्र

तमो यांति नसंशयः । तथैवावयवानां च गुणानां च परस्परम् । क्रियाणां तेन चैतेषां भेदविच्चोभयं विदः । यांत्येवांधंतमो नात्र कार्या काचिद्विचारणेति काठकभाष्ये व्याख्यानात् । य इह नानेव भिन्नाभिन्नं किंचन पश्यति स मृत्योः अनन्तरं मृत्युं तमः प्राप्नोति । यथा पर्वतेषु दुर्गेशिखरे वृष्टमुदकमधो विधावत्येवं विष्णुधर्मान्पृथक् विष्णोः परस्परं च भेदेन पश्यन्पुरुषः तानेव तद्दर्शनमन्वेवाधो विधावति अन्धन्तमो गच्छतीति । अस्मिन्प्रमाणसमूहे प्रादुर्भावानामवयवानां च भेदनिरासाच्छरीरभेदनिषेधात्सोपि द्विवचनविषयो न भवतीत्यर्थः । तमिति । तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्ष शोकौ जहातीत्यादिपूर्वखण्डे स्वप्रान्तं जागरितान्तं चोभौ ये नानुपश्यति । महान्तं विभुमात्मानं मत्वा धीरो नशोचतीत्यादि द्वितीयखण्डेचोक्तवाक्यसमूहेनेत्यर्थः । काठक इत्युपलक्षणम् । छान्दोग्यादावित्यपि ग्राह्यम् । तथा एकमेवाद्वितीयमितीत्यप्युपलक्षणम् । नेहनानास्ति किं चनेतीत्यपि गृह्यते । तथाचायमर्थः । काठके तं दुर्दर्शमित्यादिखण्डद्वये धर्मानुक्त्वा नेह नानास्ति किंचनेत्येवं पुनर्भेदनिषेधात्तथा छान्दोग्ये सदेव सोम्येदमग्रआसीदितीश्वरस्य सत्वप्रलयावस्थानादि धर्मानुक्त्वा एकमेवाद्वितीयं नेह नानास्ति किंचनेति भेदनिषेधात् विशेषः श्रुत्यैव श्रुत्युक्तार्थापत्त्यैव ज्ञायत इति । तामेवार्थापत्तिं दर्शयति । अखण्डत्व इति । निर्विशेषत्व इत्यर्थः । घटादाविति । जातिपरिमाणादिनेति शेषः । साक्षित इति । अत एव प्रत्यक्षेण घटतद्धर्माणामभेदे ज्ञातेपि पुरुषः साक्षिणा विशेषं ज्ञात्वा घटे घटत्वमित्यादि व्यवहरति ॥ ४ ॥

वायविन्द्रश्च चेतथः । वाजिनीवसूपदमन्नपताविति भाष्येण सङ्गमयितुं व्युत्पादयति । वाजमन्नमिति । अन्धोवाजःपाज इत्यन्ननामसु पाठादित्याशयः । वसतेरुरिति । शॄस्वृस्निहित्रप्य सिवसिहनिक्लिदिबन्धिमनिभ्यश्चेति सूत्रेणेत्यर्थः । द्विविकरणतेति । भाष्ये चेतथ इत्यस्य प्रतिपदं विजानत इति तत्र ज्ञाधातोःथसि श्नाप्रत्यये ज्ञाजनोर्जा इति जादेशे छांदसे तौदादिकशप्रत्ययेच श्नाभ्यस्तयोरात इत्याकारलोपे व्यत्ययेन थकारस्य तकार इति भावः । टीकायां तु विजानीथ इत्यत्र विपूर्वाज्ज्ञाधातोर्जादेशे लण्मध्यमपुरुषद्विवचने थसि श्नाप्रत्यये श्नाभ्यस्तयोरात इति प्राप्तलोपं बाधित्वा ईहल्यघोरित्यात ईकारादेशे च सति तद्रूपं सिद्धमिति ज्ञेयम् । सुतसोमज्ञानं सर्वसाधारणं कथं माहात्म्यसम्पादकमित्यतो भाष्ये वीत्युक्तं तदभिप्रायमाह । अस्मदिति । क्षिप्रनामेति । मंक्षुद्रवत्क्षिप्रमिति निघण्टौ पाठादित्यर्थः । भाष्ये छान्दसद्वयाश्रयणाद्वर मृचिवर्णव्यत्ययमाश्रयणमित्यभिप्रेत्याह । यद्वेति । चेतथ इति । तकारस्य व्यत्ययेन थकारे षष्ठ्यन्तं यजमानविशेषणम् । अस्मिन्पक्षे न वाक्यभेद इत्याशयः । अत्र चेतथ इति पदस्य तिङं तत्वपक्षे

तिङ्ङतिङ इति सर्वानुदात्तत्वसिद्धिः लटः शत्रादेशपक्षेतु शपः पित्वादनुदात्तत्वे शतुः तास्यनुदात्तेदित्यनुदात्तत्वे धातुस्वरेण प्राप्ताद्युदात्तत्वसिद्धिः ॥ ५ ॥ इति तृतीयोवर्गः ॥ ३ ॥

## ऋक्संहिता पदपाठसहिता

(१५) वायविन्द्रंश्च सुन्वत आयातमुपंनिष्कृतम् ॥ मक्ष्विं१त्था धिया नरा ॥ ६ ॥

(प०) वायो इतिं इन्द्रंः । च । सुन्वतः । आ । यातम् । उपं । निःऽकृतम् ॥ मक्षु । इत्था । धिया । नरा ॥ ६ ॥

(१६) मित्रं हुंवे पूतदंक्षं वरुंणंच रिशादंसम् ॥ धियं घृताचीं साधंन्ता ॥ ७ ॥

(प०) मित्रम् । हुवे । पूतऽदंक्षम् । वरुंणम् । च । रिशादंसम् ॥ धियंम् । घृताचीम् । साधंन्ता ॥ ७ ॥

(१७) ऋतेनं मित्रावरुणावृतावृधावृतस्पृशा ॥ क्रतुं बृहन्तंमाशाथे ॥ ८ ॥

(प०) ऋतेनं । मित्रावरुणौ । ऋतऽवृधौ । ऋतऽस्पृशा ॥ क्रतुंम् । बृहन्तंम् । आशाथे इतिं ॥ ८ ॥

(१८) कवीनों मित्रावरुंणा तुविजाता उंरुक्षयां ॥ दक्षं दधाते अपसंम् ॥ ९, ४, २ ॥

(प०) कवी इतिं । नः । मित्रावरुंणा । तुविऽजातौ । उरुऽक्षयां ॥ दक्षंम् । दधाते इतिं । अपसंम् ॥ ९, ४, २ ॥

## ऋग्भाष्यम्

यजन्सुन्वन्कृतस्यानुसारिकर्मैव निष्कृतम् ।
तदर्थं क्षिप्रमायातं धियेत्थं भूतयाऽचलौ ।
नरौ तावविनाशित्वादुपचारः क्वचिद्भवेत् ।
अमरत्ववद्यतो मोक्षो देवतानां सुनिश्चितः ॥ ६ ॥
मित्वा त्रातीति मित्रोऽयं मितमह्ना करोति वा ।
मितं रातीति वा नित्यं मितं रमयतीति वा ।
आवृणोतीति वरुणस्तमसाऽज्ञानतोऽपि वा ।
वरमुन्नयतीत्यस्माद्वरानंदत्वतोऽपिवा ।

पूता दक्षा अनेनेति पूतदक्ष इतीरितः ।
तमाह्वयामि सुखिनं शमदन्नमते यतः ।
अनूनसुखभोक्तृत्वाद्रिशादा इति कीर्तितः ।
हरिर्घृतः सुशुद्धत्वाद्धृताचीच तदंचनात् ।
स्वधीति साधको विष्णुर्भक्तानां च यथार्थतः ॥ ७ ॥
नित्यवृद्धः स भगवानृतेनानुपचारतः ।
ऋतस्पृग्वेदवाच्यत्वादन्यौ चेद्भगवानृतः ।
ऋगतावित्यतः सर्ववस्तुष्वनुगतत्वतः ।
तेन वृद्धौ तत्स्पृशौ च सर्वदा मित्रवारिपौ ।
संहितायां तु दैर्घ्यादिरुक्ताधिक्येपदेऽन्यथा ।
अनन्यार्थत्वविज्ञप्त्या ईशाथे च महाक्रतुम् ।
महत्सुखं वा ॥ ८ ॥
तुविजौ ब्रह्मजातौ तथाविधौ ।
हरिस्तथैव भूतत्वात्स्थानं क्षय इहोच्यते ।
कर्मापसंचकर्तारं दक्षं कर्तारमेव वा ।
अस्मदर्थे दधाते तौ नित्यं बुद्धौ गतागतौ ॥ ९, ४, २ ॥

## ऋग्भाष्यटीका

वायविन्द्रश्च सुन्वतः । सुन्वत इति व्याख्याति ॥ यजन्निति ॥ यजन्यजमानः सुन्वन्नित्युच्यते । ऋत्विग्भिः क्रियमाणस्यापि सवनस्य यजमानार्थत्वात् । सुन्वानिति क्वचित्पाठः । तत्र दीर्घश्छान्दसः । निष्कृतशब्दार्थमाह ॥ कृतस्येति ॥ यद्वै निष्कृतं तत्संस्कृतमाहेति श्रुतावप्ययमेवार्थः । कृतप्रतीकारेऽस्य शब्दस्य रूढत्वादित्येवार्थः । विभक्त्यर्थमाह । तदर्थमिति ॥ हेवायो । नरा नरौ । सुपांसुलुगित्यादिना प्रथमाद्विवचनस्यात् । युवामिन्द्रश्च त्वं च । सुन्वतो यजतो । निष्कृतं तत्कृतपूजानुसारिफलदानं प्रति तदर्थं तत्कर्तुम् । इत्था इत्थंभूतया ददान्येवास्मै फलमित्येवंभूतया धिया । मक्षु क्षिप्रं तन्नामसु पाठात् । उपायातम् । नरौ तावित्यनूद्याचलाविति व्याख्यातम् । निर्विकारौ । लापरिवर्तने । ततो नपूर्वात्कः । अविनाशित्वादित्यर्थान्तरम् । रीङ्क्षये रिषहिंसायां ततोडः । किमेवं नरशब्दव्याख्यानं सर्वत्र नेत्याह ॥ उपचार इति ॥ क्वचित्प्रसिद्धे वायाविन्द्रेच । उपचारो गौणी वृत्तिः । विष्णावेव च मुख्यता । अमरत्ववत् । नहि देवानां मुख्यतो

मरणाभावः । उपचारे बीजमाह ॥ यत इति मोक्षे चाविनाशित्वं नियतमिति सर्वदाप्युपचर्यत इत्यर्थः ॥ ६ ॥

तृतीयस्तृचो मैत्रावरुणः । मित्रं हुवे । मित्रावरुणशब्दौ निर्वक्ति । मित्वेति । मित्वा रक्षणीयं ज्ञात्वा । त्रातीति प्रकृत्यन्तरस्येदं रूपम् । मात्रा इत्येताभ्यां क(अकार)प्रत्ययः । आद्यस्य चेकारः । माति त्रातिचेति मित्रः । तस्य तात्पर्यं मित्वा त्रातीति । अयं विष्णुः । अह्ना निमित्तेन वस्तुजातं मितं ज्ञातं करोतीति मित्रस्तदन्तर्गतो हरिश्च । मितशब्दोपपदाद्रातेः करोत्यर्थादकार उपपदलोपश्च । मितं परिमितं यथा योग्यमेव राति ददाति । रमयतीत्यनेन रमेरन्तर्णीतण्यर्थात् ''अमंताड्ड'' इति डप्रत्यय उक्तो भवति । तमसा बहिः अज्ञानतोऽध्यात्मम् । ''कृवृतॄदारिभ्य उनन्नि''ति वृणोतेरुन(तृ)न् । वरमुत्तमं जीवमुन्नयति ऊर्ध्वं नयति । वरशब्दोपपदादुत्पूर्वान्नयतेर्डः । उपपदोपसर्गयोर्लोपश्च । वरानंदत्वतः ''णोहिनिर्वृतिवाचक'' इति वचनात् णशब्द आनन्दवाची । वरो णो यस्यासौ वरुणः । पूर्वपदस्योकारः । दक्षा यजमानाः । पूर्वार्धं योजयति ॥ तमिति ॥ हुवे आह्वयामि । बहुलं छन्दसीति ह्वयतेः सम्प्रसारणम् । शपो लुक्च । रिशादसमित्येतत्सुखिनमिति व्याख्यातं तत्कथमित्यवयवार्थमाह ॥ शमिति ॥ तस्मादिति शेषः । ननु रमणमपि सुखम् अतः पुनरुक्तिरित्यतोभिप्रायमाह ॥ अनूनेति ॥ रमेर्भाविडिः । रिशमनूनसुखमत्त्यनुभवतीति रिशादा इत्यर्थः । अदेरौणादिकोऽसुन्प्रत्ययः । घृक्षरणदीप्त्योरित्यस्माच्छुध्यर्थात्कर्तरि क्तः । तदंचनात् तं प्रतिगमनात् विषयीकरणात् । उत्तरार्धं योजयति ॥ स्वेति ॥ स्वविषयाधीतिर्ध्यानं स्वधीतिः । यथार्थत्वं स्वधीतेर्विशेषणम् । यद्वा शोभनाऽधीतिरधिगतिः स्वधीतिः । शोभनत्वस्य विवरणं यथार्थत इति । भक्तानामित्यादिशेषकथनम् । साधंता साधयन्तौ ॥ ७ ॥

ऋतेन ॥ नित्यवृद्धः । यस्मान्नित्यवृद्धः स भगवांस्तस्मादृतवृधः । ऋतमनुगतं सर्वकाल इति ऋतशब्दो नित्यपर्यायः । वर्धतेरिगुपधलक्षणः कः । ऋतं नित्यं वृधो वृद्धः ऋतवृधः । ऋतेन सत्येन सत्यतयैव नतूपचारत इत्यभिप्रायोक्तिः । यथार्थत्वादृतो वेदः तं स्पृशतीति ऋतस्पृक् । स्पृशोनुदके किन् । वेदवाच्यः । एवं पूर्वार्धं विष्णौ योजयित्वा देवतान्तरेयो जयितुमाह ॥ अन्यौ चेदिति ॥ भगवतोन्यौ मित्रावरुणौ विवक्षितौ चेत्तदा द्वितीयतृतीयाभ्यामृतशब्दाभ्यां हरिरुच्यते । कुतः ऋगतावित्यतो धातोः कर्तरि क्ते कृते सर्ववस्तुष्वनुगतत्वतः सर्वगतत्वादृतो हरिः । तथाच तेनर्तेन हरिणा वृद्धाविति मित्रवारिपावृतवृधौ । तत्स्पृशौ तत्सम्बन्धिनाविति ऋतस्पृशौ । सर्वदेति प्रथमऋतशब्दार्थः । ऋतावृधावित्यत्र संहितायां दैर्घ्यं पदे ह्रस्वता । तदभिप्रायमाह ॥ संहितायामिति ॥ आदिपदेनान्ये वर्णविकारा गृह्यन्ते । यः संहितायां दैर्घ्यादिः पदे त्वन्यथा स

उक्ताधिक्ये उक्तार्थस्याधिक्यज्ञापनार्थम् । अनन्यार्थविज्ञप्त्यै उक्तस्यावधारणार्थं चेति यावत् । उत्तरार्धं व्याख्याति । ईशाथे इति ॥ प्रेरयथः । तृतीयोतिशये । क्रतुशब्दः सुखनामापि भवतीति बृहन्तं क्रतुं महत्सुखं वा । छन्दस्त्वा''दधीगर्थदयेशां कर्मणी''ति न भवति ॥ ८ ॥

कवीनः । तुविजातावित्यनूद्य द्वेधाव्याचष्टे ॥ तुविजाविति ॥ तुवीति बहुनाम बहुशब्दश्च पूर्णवाची अतः परब्रह्मणो जातौ तुविजातौ । तथाविधौ तुवित्वेन पूर्णत्वेन जाताववस्थितौ तुविजाताविति वा । अर्थद्वयस्य व्यवस्थां दर्शयति ॥ हरिरिति ॥ तथैव भूतत्वात्तुवित्वे-नावस्थितत्वात्तुविजातो हरिः । अन्यौ मित्रावरुणौ तु ब्रह्मजातत्वेन तुविजाताविति भावः । उरुक्षयावित्यत्र क्षयशब्दार्थमाह ॥ स्थानमिति ॥ क्षिनिवासगत्योरित्यस्मादेरजित्यधिकरणेऽच् । शिष्टं व्याख्याति ॥ कर्मेति ॥ कवी नित्यं बुद्धौ सर्वज्ञौ । तुविजातावुरुक्षयौ महास्थानौ सर्वगतौ । तौ मित्रावरुणौ । नोऽस्मदर्थे । नो दक्षं यजमानं प्रत्यपसं कर्म दधाते तं कर्तारं कुर्वात इति यावत् । अपःशब्दः कर्मनाम । ततश्छान्दसोऽमोऽलुक् । अथवा नः अपसं कर्तारम् अर्शादिभ्योच् । यजमानं दक्षं पटुं दधाते कुर्वाते । अत्र दक्षमिति पूर्वोत्तरयोः संयोजनीयम् । गतागतावित्युरुक्षयशब्दस्यार्थान्तरम् । क्षयोगतिः भावेऽच् । उरुः क्षयो ययोस्तौ तथोक्तौ । गतागतौ गत्यागतिमन्तौ ॥ ९, ४, २ ॥

## मन्त्रार्थमञ्जरी

(हे) वायो । नरा, नरौ, 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः' इति सूत्रेण द्विवचनस्य 'आ' इत्ययमादेशः, 'ला परिवर्तने', नञ्पूर्वात्कप्रत्यये रलयोरभेदात् 'नर' इति रूपसिद्धेर्निर्विकारावित्यर्थः, अविनाशिनौ वा, 'रीङ् क्षये' इत्यतो वा 'रिष हिंसायाम्' इत्यतो वा नञ्पूर्वाड्डुः (उभयत्र) नलोपाभावश्छान्दसः, नसमासो वा । (युवाम्) । इन्द्रः । चकारात् (त्वं च) । सुन्वतः, यजतः । निष्कृतम्, तत्कृतपूजानुसारिफल दानं प्रति, तत्कर्तुमिति यावत् । इत्था, इत्थंभूतया, 'ददाम्येवास्मै फलम्' इत्येवं भूतया । धिया । मक्षु, क्षिप्रम् संहितादैर्घ्यमतिशयार्थम् । उप आ यातम्, उपागच्छतम् । अत्र नरपदोक्ताविकाराविनाशित्वे– विष्णुरूपयोरुपेन्द्रसङ्कर्षणयोः 'ॐ असंभवस्तु सतोऽनुपपत्तेः ॐ' (२।३।९) 'ॐ नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ॐ' (२।३।१७) इति नयद्वयसिद्धतया मुख्ये । प्रसिद्धवाय्विन्द्रयोस्तु गौणे, मुक्ताववविनाशि-त्वादेर्निश्चितत्वात्प्रागपि तथोपचर्येते, मुख्याविनाशित्वादित्वे तु 'ॐ तदुपर्यपि' (१।३।२६) इत्यादि देवताधिकरणविरोधः, तत्र देवानां स्वस्वपदविशिष्टानामाद्यन्तवत्त्वोक्तेरिति ज्ञेयम् ॥ ६ ॥ इति द्वितीय ऐन्द्रवायवस्तृचः ॥ २ ॥

मातिᅳजानाति त्रायते चेति मित्रः, रक्षणीयं ज्ञात्वा रक्षतीत्यर्थः, 'मा माने' 'त्रैङ् पालने' इत्याभ्यां कः, पूर्वस्याकारस्येकारः। वर उत्कृष्टो ण आनन्दो यस्यासौ वरणः, स एव वरुणः, 'णो हि निर्वृतिवाचकः' (ऋ०भा०) इत्युक्तेर्णशब्दः सुखवाची, वरशब्दाकारस्योकारो निरुक्तत्वात्। पूतदक्षम्, पूताः पवित्रा दक्षा यजमाना अनेनेति पूतदक्षस्तम्। रिशादसम्, रमेः भावे डिप्रत्यये 'रि' इति रूपम्, रि च तच्छं च रिशम्, सुखसुखम्, अतिशयितसुखमिति यावत्, रिशमत्त्यनुभवतीत्यदेः औणादिकोऽसुन्प्रत्ययः, रिशादास्तं रिशादसम्, अतिशयितसुख-भोक्तारम्। मित्रम्, मित्रदेवतां तदन्तर्गतं हरिं च। वरुणम् च, वरुणदेवतां तदन्तर्यामिणं हरिं च। हुवे, ह्वयामि, ह्वयतेः शपो लुक् सम्प्रसारणं च छान्दसम्, तेन वकारस्योकारे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'अचि श्नुधातु' इत्युवङादेशे रूपम्॥ घृताचीम्, 'घृ क्षरणदीप्त्योः' इत्यतः कर्तरि क्तः, घृतो विष्णुः, तमञ्चतीति घृताची, तां विष्णुविषयिणीम्। धियम्। साधन्ता, साधन्तौ, 'सुपां सुलुक्' इत्यादिना द्विवचनस्य 'आ' इत्यादेशः, अन्तर्णीतणिच्, साधयन्तौ। (युवाम्) यतोऽतो ह्वयामीत्यर्थः॥ ७॥

ऋतवृधौ, ऋतमनुगतं सर्वकाल इत्यृतशब्दोऽत्र नित्यपर्यायः, 'वृधु वृद्धौ' इति धातोः 'इगुपधज्ञाप्रीकिरः कः' इति क प्रत्यये 'क्ङिति च' इति गुणाभावे 'वृध' इति रूपसिद्धेर्ऋतवृधौ नित्यवृद्धावित्यर्थः। ऋतेन, भावप्रधानम्, ऋतत्वेन सत्यत्वेन, न तूपचारत इति यावत्। ऋतस्पृशा, ऋतस्पृशौ, ऋतशब्दोऽत्र यथार्थत्वाद्वेदवाची, ऋतं वेदं स्पृशत इत्यृतस्पृशौ, 'स्पृशोऽनुदके क्विन्' इति स्पृशधातोः क्विन्प्रत्यये 'ऋतस्पृश्' इति सिद्धेर्वेदप्रतिपाद्याविति यावत्। मित्रावरुणौ, मित्रश्च वरुणश्च मित्रावरुणौ, 'देवताद्वन्द्वे च' इति पूर्वपदस्य दीर्घः, मित्रवरुणशब्दितभगवद्रूपविशेषौ। बृहन्तम् क्रतुम्, महज्ज्ञानं सुखं वा। आशाथे, ईशाथे, 'ईश ऐश्वर्ये' प्रेरयथ इत्रत यावत्, 'ईशाथे' इति वक्तव्य ईकारस्य 'तृतीयोऽतिशये' (म० व्या० सू०) इत्याकारः, व्युत्क्रमेणाकारस्येकारापेक्षया तृतीयत्वात्, 'अधीगर्थदयेशां कर्मणि' इति षष्ठी क्रतुशब्दे छान्दसत्वान्न कृता। प्रसिद्धमित्रावरुणपक्षे तु 'ऋतवृधौ' इत्यादावृतशब्द ऋतः सर्वगत इति विष्णुपरः, ऋतेन भगवता वृधौ, ऋतस्पृशौ, 'ऋतेन' इत्यस्य नित्यपर्यायत्वेनात्र विवक्षया सदेत्यर्थः, शिष्टं प्राग्वत्। अत्र संहितायां दैर्ध्यमुक्तार्थस्यावधारणार्थम्, एवमन्यत्रापि, उक्तं हि 'संहितायां तु दैर्ध्यादिरुक्ताधिक्ये पदेऽन्यथा॥ अनन्यार्थत्वविज्ञप्त्यै' (ऋ० भा०) इति॥ ८॥

कवी, सर्वज्ञौ। तुविजातौ, तुवित्वेन पूर्णत्वेन जातौ स्थितौ, तुविना पूर्णेन ब्रह्मणा जाताविति देवतान्तरे। उरुक्षया, 'सुपां सुलुक्' इत्यादिना विभक्तेराकारः, क्षयशब्दः स्थानवाची गतिवाची

च, 'क्षि निवासगत्योः' इत्यतः 'एरच्' इत्यधिकरणेऽच्प्रत्यये 'सार्वधातुक' इति गुणेऽयादेशे च 'क्षय' इति सिद्धेर्महास्थानौ सर्वगताविति यावत्, नित्यं गतिमन्ताविति वा। मित्रावरुणा, मित्रावरुणौ– भगवद्रूपविशेषौ, प्रसिद्धमित्रावरुणदेवौ वा। नः, अस्मदर्थे। दक्षम्, यजमानं प्रति। अपसम्, कर्म। दधाते, कुर्वाते, यजमानं कर्मकर्तारं कुर्वाते इति यावत्। अपस्शब्दः कर्मवाची क्लीबश्च, छान्दसत्वात् 'स्वमोर्नपुंसकात्' इत्यमो लुङ्न भवति॥ यद्वा नः, अस्मदीयम्। अपसम्, 'अर्शआदिभ्योऽच्' इति मतुबर्थेऽच्प्रत्ययः, कर्मकर्तारम्। दक्षम्, समर्थम्। दधाते, कुर्वाते इति। ऋचां यज्ञे विनियुक्तानामृत्विग्वाक्यतया 'नः' इत्यृत्विजामुक्तिर्ध्येया॥ ९॥

इति तृतीयो मैत्रावरुणस्तृचः॥ ३॥ इति चतुर्थो वर्गः॥ ४॥ द्वितीयं सूक्तम्॥ २॥

## पदार्थप्रकाशिका

वायविन्द्रश्च सुन्वतः। ननु सोमकण्डनकर्तैव सुन्वन्नित्युच्यते। न हि यजमानस्तथा। किं तु ऋत्विगादय एव कण्डयितारः। अतो यजमानः कथं सुन्वन् शब्दवाच्य इत्यत आह। ऋत्विग्भिरिति। एवं च यजमानस्यैव प्राधान्यात् स एव सुन्वन्निति भावः। सवनस्य सोमकण्डनस्य। नन्वयुक्तः क्वाचित्कः पाठः तकारान्तसुन्वच्छब्दस्यैव प्रसिद्ध्या सुन्वान् शब्दाभावादित्यत आह। दीर्घ इति। भाष्यस्यापि छन्दःकल्पत्वादिति भावः। नन्वायात उपनिष्कृतमिति मन्त्रमुदाहृत्योपनिषदि यद्वै निष्कृतं तत्संस्कृतमाहास्येन्द्रवायू संस्कृतं वा गच्छतः इति संस्कारोपेतवस्तुन एव निष्कृतशब्दार्थत्वेनोक्तत्वेन कृतस्यापि कर्म निष्कृतमिति कथं व्याख्यानमित्यत आह। यद्वै निष्कृतमिति। अयमेवार्थ इति। तत्रापि कृतस्यानुसारि कर्मैव संस्कृतशब्दार्थ इत्यर्थः। सम्यक् परकृतमपेक्ष्य कृतं हि संस्कृतमिति व्युत्पत्त्येति भावः। कुत इत्यतः एवकाराभिप्रायमाह। कृतप्रतीकार इति। निष्कृतं तु प्रतीकारः अपकारः प्रतिक्रियेत्यभिधानादिति भावः। विभक्त्यर्थमिति। निष्कृतमिति द्वितीयाविभक्त्यर्थमाहेत्यर्थः। वायो इति सम्बोधनस्य इन्द्र इति प्रथमैकवचनस्यायात्तमिति मध्यमपुरुषद्विवचनस्य परस्पर मसंबद्धत्वादाह। हे वायो युवामिन्द्रश्च त्वं चेति। युवामित्यस्य विवरणम् इन्द्रश्च त्वं चेति। सुपां सुलुगित्यादिनेति। 'सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः'। सुपां स्थाने सुश्च लुक्च पूर्वसवर्णश्च आ च आच्च शे च या च डा च ड्या च याच्च आल् च ते सुलुक् पूर्व सवर्णाच्छेयाडाड्यायाजालः। इतरेतरयोगद्वन्द्वः। एते आदेशाः स्युरिति सूत्रार्थः। ऋजवः सन्तु पन्थान इति प्राप्ते जसः सुः। आदेशो चर्मन् चर्मणीति प्राप्ते लुक्। मती मत्या इति प्राप्ते पूर्वसवर्णदीर्घः। सखाया सखायाविति प्राप्ते

औकारस्य आ । नताद्ब्रह्मणम् । नतमिति प्राप्ते अमः आत् । अस्मे इन्द्राबृहस्पती । न युष्मे वाजबन्धवः । वयं यूयमिति प्राप्ते जशः शे । यूयं वयाभावश्छन्दस्त्वात् । उरुया उरुणेति प्राप्ते या । नाभा पृथिव्याः नाभाविति प्राप्ते डा । ता अनुष्ट्योच्यावयतात् । अनुष्ठेति प्राप्ते ड्या । साधुया । साध्विति प्राप्ते याच् । वसन्ता यजेन । वसन्ते इति प्राप्ते आल् । इत्युदाहरणानि । तथाच सखाया इत्यत्र प्रथमाद्विवचनस्यौकारस्य आ आदेशो एवमिहापि नराविति प्रथमाद्विवचनस्यौ-कारस्याकारादेशे नारा इत्येव द्विवचनं भवतीति द्रष्टव्यम् । उपशब्दार्थः प्रतीति । तत्कर्तुमिति । तत्कृतपूजानुसारिफलदानं कर्तुमित्यर्थः । अनेन अस्येन्द्रवायू संस्कृतं गच्छतः इत्युपनिषदपि अस्य यजमानस्य संस्कृतं कृतप्रत्युपकारं कर्तुम् इन्द्रवायूगच्छत इति योजनीयेत्युक्तं भवति । तन्नामस्विति । द्रुतं द्रवत् मंक्षु क्षिप्रमिति क्षिप्रनामसु मंक्षुनाम्नः पाठादित्यर्थः । नरावित्यनन्तरं तावित्यनुवर्तते इत्यभिप्रेत्य नरौ तावित्युक्तमिति भावः । निर्विकाराविति व्याख्या । व्याख्यानमुप-पादयति लापरिवर्तन इति । परिवर्तनं चलनम् । विकार इति यावत् । तथाच न पूर्वकात् लाधातोः क प्रत्यये कित्वादकार लोपे रलयोरभेदान्नरेति रूपम् । तथा न रात इति नराविति द्रष्टव्यम् ।

ततो ड इति । तथाच न पूर्वात् रीङ् क्षये अस्मात् डप्रत्यये डित्वात् टिभूतस्य ईङ् इत्यस्य लोपे नरेति रूपम् । तथाच न रीयत इति नरावित्यर्थः । रिष हिंसायाम् इति । न पूर्वकात् रिष धातोः डप्रत्यये डित्वात् टिभूतस्य इष् इत्यस्य लोपे नरेति रूपम् । तथाच न रेषत इति नरावित्यर्थः । सर्वत्रेति । भगवति प्रसिद्धे वायाविन्द्रे चेत्यर्थः । पुरन्दरादाविन्द्रादिशब्दानां चित्रलिखितसिंहे सिंहशब्दस्येव मृद्गवादौ गवादिशब्दस्येव च प्रसिद्धोपचारवृत्तेरयोगादाह । उपचार इति । मूले शेषमाह विष्णावेवेति । नरशब्दस्येति शेषः । गौणी वृत्तिरिति । 'तस्मात्परममुख्यत्वं विष्णावन्यत्र मुख्यता । उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तयः' । इत्यनुव्याख्यानादिति भावः । न हीति । देवानां मरणाभावो मुख्यतो न ह्यस्ति । किं तु मुक्तावमरत्वं नियतमिति इदानीमपि मनुष्याद्यपेक्षया बहुकालावस्थानरूपगुणयोगेन गौण्या वृत्तोच्यत इत्याशयः । उपचारो गौणीवृत्तौ बीजं मुख्यार्थनिष्ठगुणयोगरूपं नियतम् । मुख्यं सर्वदापीति । इदानीमपि बहुकालीन विनाशरूपगुणमपेक्ष्य गौण्या वृत्त्या नरत्वं तयोरित्यर्थः ॥ ६ ॥

मित्रं हुवे पूतदक्षम् । उदाहृतानुक्रमणिकायां तृतीयतृचस्य मित्रवरुणदेवताकत्वोक्तेस्त-दनुसारेणाह । तृतीयास्तृच इति । ननु त्रातीति कथम् । त्रैङ् पालने इत्यस्य धातोः ङित्वेन 'अनुदात्तङितआत्मनेपदम्' इत्यनेन लटः आत्मनेपदित्वात् तत्र लटस्तादेशे कर्तरि शपि अकारं विहाय तस्य सर्वस्य लोपे त्रै अ त इति जाते आयादेशे त्रायतेति जाते 'टित आत्मनेपदानां टेरे'

इत्यनेन टिभूतस्य तकारस्थस्याकारस्यैत्वे त्रायते इति स्यात् । अत एव गायति त्रायते चेति श्रौतप्रयोग इत्यत आह । त्रातीति । प्रकृत्यन्तरस्येति । न त्रैङ् पालन इत्यस्येदं रूपम् । येन ङित्वेनात्मनेपदित्वप्राप्त्योक्तप्रकारेण रूपभवनशङ्का । किं नाम त्रा रक्षण इत्यस्य धातोरेव । तथाचात्र त्राधातोर्लटः परस्मैपदिनि तिबादेशे कर्तरि शपि तस्य लोपे त्रातीति युक्तमित्यर्थः । अत एवोत्तरत्र मा त्रा इत्येताभ्यामिति त्राधातुरेव व्यवहृतो न त्रै धातुरिति द्रष्टव्यम् । प्रकृत्यन्तरस्येदं रूपमिति क्वचित्पाठः । तत्र त्रातीत्येतावदंशोऽध्याहार्यः । यद्वा मित्वेत्येतत् डु मिञ् प्रक्षेपण इति धातोः क्त्वाप्रत्यये सति हि रूपम् । तथाच ज्ञात्वेति कथमुक्तमित्यत आह । प्रकृत्यन्तरस्येति । न मित्वेत्येतत् प्रक्षेपणार्थकमिञ् धातो रूपम् । तथात्वे प्रकृतेऽसङ्गत्यापत्तेः । किन्नाम । माङ् धातोरेव त्त्वाप्रत्यये सतीदं रूपम् । तथाच ज्ञात्वेति व्याख्यानं युक्तमित्याशयः ।

ननु तर्हि मत्वेति म्यात् 'श्रुत्वा मत्वा' इत्यादि प्रयोगादिति चेत् । सत्यम् । तथापि 'द्यति स्यति मा स्ते'त्यादिना माङ् धातोः विकल्पेन इकार विधानात् मित्वेत्यस्योपपत्तिरिति ध्येयम् । त्रातीति प्रकृत्यंतरस्येदं रूपमिति पाठे मित्वेत्यत्रोपपत्तिर्बहिरेव द्रष्टव्या । मात्रा इत्येताभ्यामिति । माङ् माने त्रा रक्षणे इत्यस्मात् कप्रत्यये कित्वादातो लोप इटि चे'ति उभयत्राकारलोपे म् अ त्र् अ इति जाते आद्यस्य माधातोरिकारागमे म् इ त्र् अ मित्रेति रूपम् । ननु माति त्राति चेति मित्र इति निर्वक्तव्ये मित्वा त्रातीति कस्मादुक्तमित्यत आह । तस्येति । मित्रशब्दस्येत्यर्थः । निर्वचनं त्वस्मदुक्तरीत्यैवेति भावः । करोत्यर्थादिति धातूनामनेकार्थत्वादित्यर्थः । अकार इत्येतच्च ककारलोपे उर्वरितस्यानुवाद इति ज्ञेयम् । उपपदलोपः । उपपदान्तस्य तकारस्थस्य अकारस्य लोपो निर्वचनादित्यर्थः । कित्वाद्रात्वाकार लोपो द्रष्टव्यः । तथाच मित् र मित्रेति रूपम् ।

रातिर्दातीति । तथाचात्रापि मितशब्दोपपदात् दानार्थकाद्राते: कप्रत्यये उपपदांत्यलोपे कित्वाद्रात्वाकारलोपे च मित्रेति रूपं द्रष्टव्यम् । रमतीत्यत्रापि मितमित्यनुवर्तते । ञमन्ताड्ड इति । ञमिति प्रत्याहारग्रहणम् । ञ म ङ ण न इति तदन्तात् डप्रत्ययः स्यादिति उणादिसूत्रार्थः । यदत्र वक्तव्यं तत्पूर्वमुक्तमनुसन्धेयम् । तथाच मितशब्दोपपदात् रम् धातोर्डप्रत्यये डित्वात् टिभूतस्य अम् इत्यस्य लोपे उपपदाकारलोपे मित् र् अ मित्रेति रूपम् । कृवृदारिभ्य उनदिति कृञ् करणे वृञ् वरणे इत्येतदादिभ्यो धातुभ्यः उनत् प्रत्ययः स्यादिति उणादिसूत्रार्थः । तथाच वृञ् वरणे अस्मात् उनत् प्रत्यये ञ् इत्यस्यलोपे त् इत्यस्य च लोपे 'पुगन्तलघूपदस्य चे'ति लघूपधत्वात् गुणे तस्य रपरत्वे वरुन इति जाते रषाभ्यामिति नस्य णत्वे वरुणेतिरूपम् । उत्पूर्वादिति । उदित्युपसर्गपूर्वकादित्यर्थः । उपपदोपसर्गयोरिति । उपपदान्त्यभूतस्य रकारस्थस्याकारस्य

उपसर्गान्त्यस्य तकारस्य लोप इत्यर्थः। तथाच वरशब्दोपपदे उदित्युपसर्गपूर्वकात् नीञ् प्रापणे इत्यस्मात् डप्रत्यये टिभूतस्य ईञ् इत्यस्यलोपे उपपदांत्य लोपे उदित्युपसर्गान्तर्गतस्य त इत्यस्य च लोपे नस्य णत्वे च सति वरुणेति रूपम्। ननु तर्हि वरणेति स्यादित्यत आह। पूर्वपदस्येति। पूर्वपदस्य वरपदस्य तदन्तस्थस्य नकारस्थस्याकारस्य उकार इत्यर्थः। तथाच वरुणेति रूपमित्यर्थः। आह्वयामिति। ह्वेञ् स्पर्धायां शब्दे चेति धातोरिति भावः। ह्वयतेरिति। आह्वापरपर्यायशब्दार्थकस्य ह्वे इत्यस्य लिटः आत्मनेपदिनि उत्तमपुरुषे इडागमे ह्वे इट् इति स्थिते 'टित आत्मनेपदानां टेरे' इति इकारस्य एकारे ह्वे ए इति जाते वकारस्य उकाररूपसंपप्रसारणे 'सम्प्रसारणाच्च' इत्यनेन हकारस्थस्य एकारस्य पूर्वरूपं पूर्वरूपस्य उकारस्य रूपमिव रूपं जातं सोऽप्युकार एव जात इति यावत्। तथाच हु ए इति जाते 'अचिश्नुधातुभ्रुवांय्वोरियङुवङौ इत्यनेन श्नुप्रत्ययान्तस्य भ्रू इत्यस्य धातोश्चेवर्णोवर्णयोरियङुवङौ स्त इत्युक्तत्वेन प्रकृते च धातुत्वादुकारस्य उवङादेशे अङित्यस्य लोपे हुव् ए हुवेतिरूपं भवेदिति द्रष्टव्यम्।

ननु पूर्वोक्तरीत्या हुव् ए इत्येतयोर्मध्ये कर्त्रर्थकशप् प्रत्ययसद्भावात् शकारपकारयोर्लोपे अकारस्योर्वरितत्वात् हुव् अ ए इति जाते 'वृद्धिरेचि' एचि परे वृद्धिरेकादेशः स्यात् इति अकारस्य एकारस्य च ऐकाररूपवृद्धौ सत्यां हुव् ऐ हुवै इति स्यादित्यत आह। शपो लुक् चेति। तथाच बहुलग्रहणात् शपो लोपे हुव् ए इति स्थितेसति आत् एचः परत्वाभावेन वृद्धिप्राप्तेरेवाभावात् हुवे इति रूपं युक्तमिति भावः। रमणमपीति। तथाच सुखमदन् सुखीत्युक्तं स्यादित्यर्थः। रमेरिति। तथाच रमु क्रीडायामित्यस्मात् भावे डिप्रत्यये डित्वात् टिभूतस्यामित्यस्य लोपे रीति रूपम्। अनूनसुखमिति। सुखस्यानूनत्वं नाम पूर्णत्वादिना अतिशयितत्वम्। अत एव 'ज्ञानज्ञानः सुखसुखः' इत्यत्रातिशयित ज्ञानोऽतिशयितसुख इत्यर्थो अन्यत्र उक्तः। एवमिहापि रिशादा इत्यस्य सुखसुखाद इत्यर्थः उक्तः स्यात्। तथाचानूनसुखभोक्तृत्वरूपोऽर्थः सम्पद्यत इति ध्येयम्।

अदेरिति। रिशोपपदात् अदभक्षण इत्यस्मात् औणादिकेऽसुनप्रत्यये नकारलोपे रिशाद् अस् रिशादस् इति सकारान्तप्रातिपदिके सिद्धे पश्चात्तस्य प्रथमैकवचने सुप्रत्यये हल्ङ्याभ्य इति तस्य लोपे 'अत्वसन्तस्य चे'त्यादि सूत्रेण असन्तत्वादुपधाया दीर्घे रिशादास् इति जाते रुत्वे विसर्गे च सति रिशादा इति प्रथमैकवचनं सम्पद्यत इति द्रष्टव्यम्। शुद्ध्यर्थादिति। दीप्तिः शुद्धिरिह विवक्षितेति भावः। अन्ये तु धातूनामनेकार्थत्वादिति भावमाहुः। कर्तरीति। जिघर्तीति घृत इति कर्त्रर्थ इत्यर्थः। क्तप्रत्यय इति। ककारलोपे घृतेति रूपम्। कित्वाद्गुणाभावः अन्यथा घरतेति स्यात्। तं प्रति। सिद्धत्वेन घृतशब्दवाच्यं हरिं प्रति। तथाच घृतशब्दोपपदात्

अञ्चूगतिपूजनयोरित्यस्मात् ङीपि सवर्णदीर्घे च अनुस्वारलोपे घृताचीति रूपम् । विशेषणमिति बुद्ध्या विवेकेनेति शेषः । धीतेर्ध्यानार्थताया अप्रसिद्धत्वादाह । यद्वेति । अधीति शब्दस्याध्ययनार्थताप्रतीतिवारणायाह । अधिगतिरिति । ज्ञानमित्यर्थः । भक्तानामित्यादीति । भक्तानां च यथार्थतः इत्येतदृचि शेषकथनमित्यर्थः । ऋचि साधन्तेत्यत्र सुपां सुलुगिति द्विवचनस्य आकारादेश इत्याशयेनाह । साधन्ताविति । तस्यान्तर्णीतण्यर्थतामभिप्रेत्याह । साधयन्ताविति । तथाच घृताची धियं साधन्ता साधन्तौ मित्रं वरुणं चेत्येतौ हुवे इति ऋग्योजना द्रष्टव्या । यद्यपि धियं घृताची साधयन्तेति वाग्वै घृताचीत्यारणे धीशब्दो वागर्थत्वेन व्याख्यातः । तथाप्यत्र तदपरित्यागेनार्थान्तरस्योक्तत्वाददोष इत्यवधेयम् ॥ ७ ॥

ऋतेन मित्रावरुणौ । तदुपपादयति ऋतमिति । ऋगताविति धातोस्तु पूर्वावगतवत्सदास्थितेः ऋतशब्दो नित्यपर्याय इत्यर्थः । इगुपधलक्षणः क इति । तथाच वृधुवर्धने अस्मात् 'इगुपधज्ञाप्रीकिरः कः' इत्यनेन कप्रत्ययः । ऋवर्णस्येक्त्वेन वृधुधातोरिगुपधात्वात् तथाच ककारलोपे वृधेत्यकारान्तः सम्पद्यत इति भावः । सर्वं वाक्यं सावधारणमित्याशयेनाह सत्यतयैवेति । न तूपचारत इति । ऋत वृद्धत्वं नौपचारिकमित्याशयेन ऋचि ऋतेनेत्युक्तमित्यर्थः । तथाच ऋतेनेत्यस्य सत्येनेत्यर्थः । भाष्ये त्वनुपचारत इति विवक्षितावधारणाभिप्रायोक्तिरिति भावः । स्पृशोऽनुदके क्विनिति । अनुदके सुप्युपपदे स्पृशेर्धातोः क्विन्प्रत्ययः स्यादिति सूत्रार्थः । तथाच ऋतशब्दोपपदात् स्पृश स्पर्शने अस्मात् क्विन् प्रत्यये तस्य सर्वस्यापि लोपे स्पृश इत्येव अकारान्तप्रातिपदिके सति पश्चात् सुप्रत्यये तस्य लोपे क्विन् प्रत्ययान्तस्य कुरिति शकारस्य कुत्वे ऋतस्पृक् इति प्रथमैकवचनं द्रष्टव्यम् । कर्तरि क्ते कृते सतीति । तथाच ऋगतावित्यस्मात् कर्तरि क्तप्रत्यये कृते ककारलोपे ऋतेति रूपम् । तत्सम्बन्धिनाविति । स्वामिभृत्यभावरूपः सम्बन्धोऽत्र द्रष्टव्यः ।

सर्वदेतीति । पूर्वावगतवत् सर्वदा स्थितत्वस्य ऋतशब्दार्थत्वादृतेनेति विभक्तिप्रतिरूपकमव्ययं सर्वदेत्यर्थवाचीति भावः । ह्रस्वता दृश्यत इति शेषः । अन्ये वर्णविकारा इति । मित्रावरुणाद्रल-भमित्यादौ दुर्दभमिति भाष्ये ये द्रलभमित्यादयो वर्णविकारा दृश्यन्ते तेऽप्युक्ताधिक्यादिज्ञापनार्थं ज्ञातव्या इत्यर्थः । उक्तस्येति । उक्तस्यार्थस्यावधारणार्थम् अयमेवार्थोऽन्यो न भवतीति इतरार्थव्यवच्छेदार्थमित्यर्थः । ननु ईशाथा इति वक्तव्यम् आशाथा इति कथमित्यत आह । तृतीयोऽतिशय इति । ईकारस्याकारोऽतिशयार्थ इत्यर्थः । यद्यप्याकारापेक्षया ईकार एव तृतीयो वर्णो नत्वीकारापेक्षयाकारः । तथापि व्युत्क्रमेण ईकारापेक्षयाऽकारोऽपि तृतीय इत्यभिप्रेत्य

इदमिति ज्ञातव्यम् । सूत्रे तृतीयोऽतिशय इत्येव सत्त्वेन क्रमव्युत्क्रमाभ्यां तृतीयत्वस्य तत्राभिप्रेतत्वादिति हृदयम् । बृहन्तं क्रतुं यज्ञाख्यम् । वेत्यनन्तरम् इत्युक्तमिति शेषः ।

ननु क्रतुमीशाथ इति कथम्? 'अधीगर्थदयेशां कर्मणी'ति एषां धातूनां कर्मणि षष्ठी स्यात् । अधीगर्थाः स्मृत्यर्थाः मातुरध्येति, पितुः स्मरति, सर्पिषो दयते, जगतामीष्ट इत्युदाहरणम् । एवं च जगतामीष्ट इतिवत् प्रेरणार्थक ईशधातोः कर्मणि षष्ठ्या विहितत्वात् क्रतोराशाथ इति वक्तव्यत्वादित्यत आह । छन्दस्त्वादिति । 'सर्वेविधयः छन्दसि विकल्पन्त' इति वचनादिति भावः ॥ ८ ॥

कवीनो मित्रावरुणा । तुविशब्दस्य ब्रह्मवाचित्वमुपपादयति । तुवीतीति । बहुनामेति । ऋतुविषूऋभुतुविबह्विति द्वादशबहुनामसु तुविशब्दस्य पठितत्वादिति भावः । पूर्णवाचीति । बहुः पूर्णतायामिति वचनादित्यर्थः । पूर्णं च परब्रह्मैवेति वाक्यशेषः । ननु ऋचि तुविजाताविति सत्वात् तुविजाविति कथं भाषितमित्यत आह । तुविजौ तुविजाताविति । तथाविधाविति व्याख्यानान्तरमुपपादयितुं भाष्याभिप्रेतं शेषमाह । अन्याविति । एरजितीति । इवर्णान्तधातोः अधिकरणे अच् प्रत्ययः स्यादिति सूत्रार्थः । तथाच क्षि अस्मात् क्षियन्ति । अस्मिन् अधिकरणे अच्प्रत्यये चकारलोपे 'सार्वधातुकार्धधातुकयोः' अनयोः परयोरिगन्ताङ्गस्य गुणः स्यादित्यनेन इकारस्य एकाररूपे गुणे तस्यायादेशे क्षयेति रूपं द्रष्टव्यम् । महास्थानाविति । उरुशब्दस्य महार्थत्वादिति भावः । परिमाणतो महत् स्थानं ययोस्तौ महास्थानौ सर्वगताविति तात्पर्योक्तिः ।

कर्मेति । कर्मापसमित्यत्रापसमित्यनूद्य कर्मेति व्याख्यानम् । कर्तारं दक्षमित्यत्र कर्तारमित्येतत् दक्षं प्रत्ययसं दधाते इत्यस्य तात्पर्यकथनमित्याशयेनाह । कर्तारं कुर्वात इति यावदिति । युवां तं कर्तारं कुर्वात इति यत्तन्नोऽस्मदर्थमेव अस्माकं तेन द्रव्यादिप्राप्तेरिति ऋत्विग्वचनमित्यर्थः । कर्मनामेति । अपो दंसः सुदं कर्मेति षड्विंशतिकर्मनामसु पाठादिति भावः । ननु अपस् शब्दस्य द्वितीयैकवचने अमोलुकि सस्य रुत्वे विसर्गे च सति सकारान्त नपुंसकापश्शब्दस्य द्वितीयैकवचनम् अप इत्येव भवेन्नत्वपस इति तत्राह । अमो लुगिति । तथाच । अपसमित्येव द्वितीयैकवचनं युक्तमित्यर्थः । पूर्वं दक्षशब्दो यजमानवाचीत्यङ्गीकृत्य दक्षमित्यनुवादेनापसं दधात इत्येतद्विधेयमित्यङ्गीकृत्य व्याख्यातम्, इदानीं तु अपस् शब्दो यजमानवाचीत्यङ्गीकृत्य दक्षत्वं विधेयमित्याशयेन प्रवृत्तं दक्षं कर्तारमेवेति भाष्यं व्याचष्टे । अथवेत्यादिना । न इति । अस्मदीयमित्यर्थः ।

नन्वपसं कर्मेति व्याख्यातत्वादपसमित्युक्त्या कर्मकर्ता कथमागत इत्यत आह । 'अर्श आदिभ्योऽच् इति । अर्श आदिगणेभ्यो (गण पठितेभ्यो) मत्वर्थे अच् प्रत्ययः स्यात् । अर्शांसि विद्यन्तेऽस्मिन्निति अर्शस इत्युदाहरणम् । तथाचापस्शब्दात् अपांसि विद्यन्तेऽस्मिन्निति मत्वर्थे अच्प्रत्यये अकरान्तापसशब्दः कर्मवाचीति ध्येयम् । तदर्थमाह यजमानमिति । यजमानं कर्तारमित्यर्थः । पूर्वोत्तरयोरिति । कर्मापसं च कर्तारमिति पूर्वयोजनायां कर्तारमित्युत्तरयोजनायां च सम्बध्यत इत्यर्थः । भावेऽजिति । क्षि निवासगत्योरित्यस्मात् गतिरूपधात्वर्थविवक्षायाम् एरजित्यचि गुणे अयादेशे च क्षयेति रूपं द्रष्टव्यम् । उरुक्षय इति । उर्वी गतिरित्यर्थः । क्षयशब्दार्थभूतगतिशब्देनागतिरपि विवक्षितेत्याशयेन गत्यागतिमन्तावित्युक्तम् । तथाच उर्व्यौ क्षयौ गत्यागती ययोस्तौ मित्रावरुणा वुरुक्षयावित्यर्थः ॥ ९, ४, २ ॥

## पदार्थदीपिका

न च पूर्वत्र तिङस्तिङ इति निघातसम्भवेऽपि नैतत्पक्षे तत्सम्भव इति वाच्यम् । व्यत्ययेन तदुपपत्तेरित्यत्र तात्पर्यात् शत्रंतस्य यजशब्दस्य त्विकूसाधरण्यात् यज्ञस्वामिमात्रासाधारण्य प्रापकात्मनेपदादेशशानजन्तप्रतीकमुपादत्ते । यजमान इति । यद्वै निष्कृतमिति आयातमुप-निष्कृतमिति मन्त्रमुदाहृत्य यत्र आयातनिष्कृतशब्दस्य व्याख्यात्रोपनिषदा विरोधःस्यादित्यत आह । यद्वा इति । तत्कथमित्यत आह । कृतेति । उपनिषदि तात्पर्यार्थ उक्तः । भाष्ये तु रूढार्थ उच्यत इति भावः । विभक्त्यर्थमाहेति । प्रतिशब्दोध्याहारे निष्कृतं प्रतीति निष्कृतस्योद्दे-शत्वलाभात् द्वितायाविभक्तेस्तादर्थ्यं तात्पर्यार्थ इत्यर्थः । सुपां सुलिगिति । यद्यप्यत्र सुलुक् पूर्वसवर्ण आ आत् शे या डाड्यायाश आलू । इति सुपादेशेषु आङ् न पठितः । आत् पठितोऽपि विभक्तिस्थत्वान्न विभक्तौ तुस्मा इति प्रतिषेधान्न तकारलोपवान् इति । आजिति पाठो वा आदिति पाठो वानुपपन्नस्तथापि आच्छे इत्यत्र आच् शे इत्यपि पदसम्भवाभिप्रायेण प्रथमपाठस्य आदिति पदच्छेदेऽपि छन्दस्त्वात् तकारलोप इति भावेन द्वितीयपाठस्य चोपपत्तेरिति ध्येयम् । न पूर्वादिति ॥ ततश्च नलोपो नञ इति नकारलोपे अनराविति स्यादिति शङ्का निरस्ता भवतीति भावः । ततो ड इति डोरिषोवा रिणातेरिष्यतीत्यर्थे अन्येष्वपि दृश्यत इत्यत्रत्यापिशब्दसामर्थ्यात् 'ड' प्रत्यय इति भावः ॥ ६ ॥

ननु त्रैङ्पालन इत्यस्य ङित्वादात्मनेपदिनः शब्विकरणस्य त्रायत इति रुपेण भवितव्यम् । तत्कथं भाष्ये त्रातीत्युक्तमित्यतो लुग्विकरणेऽस्य त्रारक्षण इत्यस्येदं रुपमाह । प्रकृत्यंतरस्येति ॥

मात्रा इत्येताभ्यामिति । माङ्माने त्रारक्षण इत्येताभ्यामित्यर्थः । यत्तु माङ्माने त्रैङ् पालन इत्येताभ्यामित्यर्थ इति तु प्रकृत्यन्तरस्येदं रुपमित्युक्तम् । विस्मरेण विजृम्भितत्वादुपेक्ष्यम् । क प्रत्यय इति । प्रत्येकं कप्रत्यये इत्यर्थः । कित्वादातो लोप इटि चेत्युभयत्राकारलोपः तर्हि मात्र इति स्यात्तत्राह । आद्यस्येकार इति । निरुक्तत्वादिति भावः । करोत्यर्थादकार इति । क प्रत्यय इत्यर्थः । उपपदलोपश्चेति । अलोंत्यपरिभाषया तदन्त्यलोप इत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । वृणोतेरुनन् प्रत्यय इति । पुगन्तलघूपधस्यचेति लघुत्वाद्गुणः परत्वं चेति भावः । नयतेर्ड इति । डित्वाट्टिलोप इति भावः । उपपदोपसर्गयोर्लोपश्चेति वरशब्दान्त्याकारस्य उदित्युपसर्गान्त्यतकारस्य च लोप इत्यर्थः । नियामकं तु प्रागुक्तमिति भावः । बहुलं छन्दसीति । अत्र ह्वः सम्प्रसारण-मित्येतत्सूत्रात्परस्य अदिप्रभृतिभ्यः शप इत्येतस्मात्परस्य च बहुलं छन्दसीति सूत्रद्वयस्य तन्त्रेणोपादानम् । तथाच सम्प्रसारणसूत्रात् परेण तेन सम्प्रसारणं लुक् सूत्रात्परेण तेन शपो लुगित्यर्थः ।

ततश्च ह्वेयो लडात्मनेपदोत्तमपुरुषैकवचने इटि शपि टित आत्मनेपदानामिति टेरेत्वे बहुलं छन्दसीति सम्प्रसारणे सम्प्रसारणाच्चेति पूर्वरूपत्वे बहुलं छन्दसीति शपोलुकि उवङादेशे हुवे इत्यभिमतरूपसिद्धिरिति ज्ञेयम् । भावे डिरिति । उणादयो बहुलमित्युक्तत्वादिति भावः । रिशमिति । रमणं रिश्च, शंचेति । रिशं रिशमत्तीति रिशादाइति व्युत्पत्तिरिति भावः । असुन् प्रत्यय इति असुनितिसूत्रेणेत्यर्थः । कर्तरिक्त इति । जुहोत्यादेर्घृक्षरणदीप्त्योरित्यस्माद्धातोः कर्तरि जिघर्ति दीप्तो भवतीत्यर्थे गत्यर्थाकर्मकेति सूत्रेणाकर्मकत्वात् कर्तरिक्तेत्यर्थः । औणादिकोवा अजिघृसिभ्यःक्त इति क्तः उगितश्चेति । तदंचनादिति । अंचतेः ऋत्विक् दधृगित्यादिना क्विपि अनिदितांहल इति नकारलोपे उगितश्चेति ङीपि अच इत्यंचतेरकारलोपे चाविति दीर्घत्वे घृताचीति रूपनिष्पत्तिरितिभावः ।। तंप्रतिगमनादिति ।। पूजार्थस्यांचतेर्नान्तेः पूजायामिति नलोपनिषेधेपि प्रकृते गमनार्थत्वान्नलोपः स्यादेवेति भावः ।। धीतिर्ध्यानमिति ।। यद्यपि वाग्वै धीतिर्घृताचीति श्रुतौ धीशब्दो वागर्थत्वेन व्याख्यातः तथापि तदपरित्यागेनार्थान्तरकथनमेतदिति ध्येयम् ।। पूर्वपक्षे ध्यायतेर्धीरिति क्तिनि रूपेऽरुच्या पक्षान्तरमाह ।। यद्वेति ।। साधन्ता साधयन्तेति राधसाधसंसिद्धावित्यस्मात् श्रुतिकरणात् ।। श्यन् विकरणाद्वान्तर्भावितण्यर्थाल्लटः शत्रादेशे व्यत्ययेन शबितिभावः ।। ७ ।।

उपसर्गाणां द्योतकत्वाभिप्रायेणाह ।। ऋतमिति ।। अभीह्वादिवत्सार्वकालिकः क्त इत्यभिप्रेत्याह ।। सार्वकाल इति ।। इगुपधलक्षणः क इति इगुपधज्ञाप्रीकिरः क इति सूत्रेण इगुपधात् क्तप्रत्ययः

कित्वाल्लघूपधगुणाभाव इति भावः ॥ स्पृशोनुदक इति ॥ उदकवर्जिते सुप्युपदे स्पृशः किनि किन् प्रत्ययस्येति कुत्वे च ऋतस्पृगिति रूपनिष्पत्तिरिति भावः ॥ कर्तरिक्ते कृत इति ऋधातोर्गत्यर्थत्वागत्यर्थाकर्मकेति कर्तरिक्त इत्यर्थः ॥ सर्वदेतीति ॥ विच्छून्यपक्षे ऋतेनेति प्रथमपदार्थ उक्त इत्यर्थः ॥ वर्णविकारा इति दुर्लभमिति वर्णविकारा इत्यर्थः ॥ तृतीयोतिशय इति ॥ श्रुतावाशाथे इत्येतदीश ऐश्वर्ये, इत्यन्तस्य रूपम् । ततश्च ईशाथेतिवक्तव्ये ईकारापेक्षया व्युत्क्रमेणाकारस्य तृतीयत्वं द्रष्टव्यम् ॥ तृतीयोऽतिशय, इत्यत्र क्रमेण व्युत्क्रमेणवा तृतीयत्वस्याभिप्रेतत्वादिति भावः ॥ ननु अधीगर्थदयेशां कर्मणीति, कर्मणि षष्ठ्या विहितत्वात् क्रतोरिति भवितव्यं क्रतुमिति द्वितीया तुकथमित्यत आह ॥ छन्दस्त्वादिति ॥ अधिकरणेजिति क्षिपन्त्यस्मिन्निति क्षयः इत्यधिकरणेजित्यर्थः ॥ ८ ॥

एरजितिसूत्रे, अकर्तरिचकारक, इत्यस्यानुवृत्तिरिति भावः ॥ छान्दस इति ॥ स्वमोर्नपुंसकादिति लक्षणप्राप्तोमोलुक् छान्दसत्वान्नभवतीत्यर्थः ॥ अजिति ॥ अपांसि विद्यन्ते यस्मिन्नित्यवसस्तमित्यपसशब्दोऽकारान्त इति भावः ॥ अत्र दक्षमितीति ॥ पूर्वत्र दक्षमित्यनु-वादेन कर्तारमिति विधेयम् ॥ उत्तरत्र कर्तारमित्यनूद्य दक्षमिति विधेयमिति विशेषेतिभावः ॥ भावेऽजिति ॥ एरजितिसूत्रे भाव इत्यस्यानुवृत्तेरिति भावः ॥ गतं चागतं च गतागते ते विद्येते ययोस्तौ गतागतावित्यर्थ इत्यभिप्रेत्याह ॥ गत्यागतिमन्ताविति ॥ ९ ॥

## टीकाविवृतिः

वायविन्द्रश्चसुन्वतः । सुन्वतो निष्कृतमिति पदद्वयस्य न छायाव्याख्यानं भाष्य इति दर्शयितुमवतारयति । सुन्वत इतीति । दीर्घश्छांदस इति । षुञो लटः शत्रादेशे श्नुप्रत्यये हुश्नुवोः सार्वधातुक इति यणादेशे सुप्रत्ययस्य हल्ङ्यादि लोपे संयोगान्तलोपे नतकारलोपे तस्यासिद्धत्वा-त्सर्वनामस्थाने चासम्बुद्धाविति दीर्घाभावे च सुन्वन्निति लोके भवति । सर्वे विधयश्छन्दसि विकल्प्यन्त इत्यसिद्धत्वाभावान्नान्तत्वाद्दीर्घः । नलोपं प्रतित्वसिद्धत्वमस्त्येवेति भावः । ननु निष्कृतशब्दस्य कृतानुसारिकर्मार्थकत्वे इन्द्रवायू इमे सुता आयातमुपनिष्कृतमिति मन्त्रमुदाहृत्य यद्वै निष्कृतं तत्संस्कृतमाहेत्युपनिषदा यद्व्याख्यानं तद्विरोध इत्यत आह । यद्वा इति । तदुपपादयति । कृतेति । संसगार्थे प्रकृष्टार्थ इति विश्वकोशाभिधानात्संशब्दसम्बन्धार्थः । कृतस्य सम्बन्धयोग्यं कृतं कृतं कर्म संस्कृतं कृतानुसारिकर्मेत्यर्थः । अयमेव कृतस्य प्रतीकारः । अतो न भाष्योपनिषद्व्याख्यानयोर्विरोध इति भावः । विभक्त्यर्थमिति । निष्कृतमिति पद इति शेषः ।

प्रथमाद्विवचनस्येति । औ इत्यस्य आकारादेश इत्यर्थः । इत्था इत्थमिति । थाहेतौ च छन्दसीति सूत्रेणेदमः प्रकारार्थे थाप्रत्यये प्राग्दिशीयत्वाद्विभक्तिसंज्ञायां त्यदाद्यत्वे हलि लोप इतीदंशब्दाकार लोप इति भावः । लापरिवर्तन इति । परिवर्तनं विकारः । आतोनुपसर्गेक इति के रलयोरभेदाल्लस्य रेफो नसमासत्वान्न लोपो नेति भावः । ततोडइति । रीङोरिषोवेत्यर्थः । मोक्षेचेति । यथाग्निर्माणवक इत्यत्र माणवके दाहकत्वाद्यभावेन मुख्याग्नित्वाभावादग्निनिष्ठप्रकाशसदृशप्रकाश गुणयोगान्माणवकेऽग्नित्वमुपचर्यते तथेन्द्रवाय्वोर्नरशब्दमुख्यवाच्यसदाविनाशित्वाभावाद्विष्णु-वन्मुख्यनरत्वाभावेपि विष्णुनिष्ठाविनाशित्वसदृशकादाचित्काविनाशित्वमात्रगुणयोगेन सदा नरशब्दप्रवृत्तिरिति भावः ॥ ६ ॥

मित्रं हुवे । ननु त्रैङ्पालने अस्माल्लटि ङित्वादात्मनेपदे शपि त्रायत इति भाव्यं कथं त्रातीति भाष्ये उक्तमित्यत आह । प्रकृत्यन्तरस्येति । कर्तृक्विबन्तात्रैङ आचारक्विपि तस्य सुब्धातोर्ङित्वाद्यभावेन परस्मैपदे शपि पूर्वसवर्णदीर्घे च त्रातीति साधुरित्यर्थः । तथाच त्रातीत्यस्य त्रायत इति त्राः स इवाचरतीत्यर्थ उक्तोभवति । लौकिकरक्षकवदस्यायासो नास्तीति भावः । अथवा बहुलमेतन्निदर्शनमिति चुरादिगणस्थसूत्रेणैतद्धातुपाठोक्तङित्वादिदर्शनस्य धातुपाठस्यैव वाबहुलत्वोक्तेस्त्रैङो ङित्वाभावात्त्रैपालने इति वा पाठात्रातीति रूपमिति भावः । मामान इत्यतः क्विप्रत्यये मिः त्रायतेः के त्रः मिश्चासौ त्रश्चेति विग्रहसम्भवेपि प्रकारान्तरमाह । एताभ्यां क प्रत्यय इति । धातोरित्येकवचनं न विवक्षितम् । गृहं संमार्ष्टीतिवद्धातोः सर्वपदप्रकृतित्वेन मुख्यत्वात्प्रत्ययैः संस्कार्यत्वेन प्राधान्यात्प्रधाने च संख्यया अविवक्षणात् । अतो धातुद्वयात्कप्रत्ययः । क्वचिद्धातुत्रयादपि । आद्यस्येति । पूर्वधातोराकारस्येकारादेशश्चेत्यर्थः ।

मित्रोयमित्यत्रत्यायमित्यस्यार्थमाह । अयं विष्णुरिति । मित्र इति । मित्रः सूर्यविशेषः । अयमित्यस्यावृत्त्या तदंतर्गतो हरिश्चेत्युक्तम् । धातूनामनेकार्थत्वाशयेनाह । करोत्यर्थादिति । अकार इति । आतोनुपसर्गेक इति क इत्यर्थः । आतोलोप इटिचेति लोप इति भावः । उपपदलोपश्चेति । अलोंत्यपरिभाषयोपपदांत्यलोपः पृषोदरादित्वादिति भावः । अन्तर्णीतण्यर्थादिति । अन्तः स्वान्तः नीतः प्राप्तो ण्यर्थः प्रयोजकव्यापारो येन धातुना सतथा तस्मात् । धातूनामुक्तस्वार्थ वृत्तित्ववत्प्रयोजकव्यापारसहितोक्तार्थवृत्तित्वमपि । यथा पञ्चभिर्हलैःकृषतीत्यादौ अन्यैःकर्ष-यतीत्यर्थप्रतीतेः । नह्येकस्य पञ्चहलकर्षणं सम्भवति । णिचूप्रयोजकव्यापारद्योतकत्वेन स्वीक्रियते । स्पष्टश्चायं पक्षो हेतुमतिचेत्यत्र भाष्यकैयटयोः । तत्र हेतुमतीत्यस्य प्रकृत्यर्थविशेषणत्वं

प्रत्ययार्थविशेषणत्वमिति पक्षद्वयसमर्थनात् । वृणोतेरुनन्निति । नित्वात् ञ्नित्यादिर्नित्यमिति वरुणशब्द आद्युदात्तः । उनदितितांतपाठस्तु लेखकदोषादपभ्रष्टः । पूतदक्षमित्यत्र दक्षशब्दः पटुत्वार्थकः । तत्र योग्यतया यज्ञ इत्यध्याहार इत्यभिप्रेत्य दक्षशब्दतात्पर्यमाह । दक्षा इति । ह्वयतेरिति । ह्वः सम्प्रसारणमित्यतः ह्व इत्यनुवृत्तेरिति भावः । शपोलुकूचेति । अदिप्रभृतिभ्यः शप इत्यनुवृत्तौ बहुलं छन्दसीत्यनेनेत्यर्थः । ह्वञोलडात्मनेपदोत्तमपुरुषैकवचने शब्लुकि सम्प्रसारणे उवङादेशे च हुव इति रूपमिति भावः । भावेडिरिति । इण् प्रत्ययानुवृत्तौ वातेर्डिच्चेत्युक्त इणूडित्व युक्तो बाहुलकत्वादस्मादपीति भावः । रिशमिति पुनरुक्तिबलादतिशयार्थलब्धौ सिद्धमर्थमाह । अनूनसुखमिति । पूर्णसुखमित्यर्थः । अत्तीत्यस्य भक्षणार्थकस्य प्रकृतेऽयोगादनुभवतीति व्याख्यातम् । औणादिक इति । सर्वधातुभ्योऽसुन्नित्यनेनेत्यर्थः । घृक्षरणदीप्त्योरिति । अंजिघृसिभ्यः क्तइति सूत्रेणेति शेषः । घृतोपपदादंचतेर्गमनार्थादृत्विग्दधृगिति क्विनि उगितश्चेति ङीपि अनिदितामिति नलोपे अच इत्यलोपे चाविति दीर्घे घृताचीति स्यात् । पूजार्थात्तुनांचेः पूजायामिति नलोपो नस्यादित्याशयेनाह । तदंचनात्तं प्रतिगमनादिति । धीतिर्ध्यानमिति । धीङ् आधारे अस्मात् क्तिन्नित्यर्थः । ध्यानार्थकत्वं तु धातूनामनेकार्थत्वादिति भावः । यद्वा ध्यै चिन्तायामित्यतो ध्याप्योः सम्प्रसारणमित्युणादिसूत्रे धीवेति रूपसिद्ध्यर्थं क्वनिबनुवृत्तावपि बाहुलकात्क्विनि धीतिरिति रूपमिति भावः । अत एवारुचेराह । यद्वेति । अधिपूर्वादिण् गतावित्यतः क्तिन्नित्यर्थः । धियमित्यस्य भाष्योक्तस्वधीतीतिव्याख्यान मुपलक्षणम् । वागर्थत्वं च ग्राह्यम् । धियं घृताचीं साधंतेति वाग्वै धीर्घृताचीति श्रुत्या वागर्थत्वेन व्याख्यानात् । साधन्तेति । राधसाधसंसिद्धावित्यतोंतर्नीतण्यर्थात् तॄभूवहिवसिभासिसाधिगडि मडिजिनंदिभ्यश्चेति झच्प्रत्यये झोंत इत्यंतादेशे अकारान्ताच्छब्दात्सुपां सुलुगित्यौकारस्याकार इति भावः ॥ ७ ॥

ऋतेन । ऋतमनुगतमिति । ऋगतावित्यत औणादिकक्तस्य कालसामान्ये विधानात्सर्वकाल इत्युक्तम् । क इति । इगुपधेति लक्षणं विधायकं सूत्रं यस्य स इगुपधलक्षणः । इगुपधज्ञाप्रीकिरः क इति सूत्रेणेत्यर्थः । ऋतेनानुपचारत इति ऋ॥ ब्दानुवादपूर्वकं व्याख्यानमिति भ्रमं वारयति । नतूपचारत इति । यथार्थत्वादिति । यथावस्थितार्थवत्त्वादित्यर्थः । प्रथमर्तेति । ऋतेनेति शब्दस्यार्थः । अन्ये वर्णविकारा इति । कृत्वीहत्वी न किर्मांकिरुरूचीत्यादौ हकारस्य भकार इत्यादय इत्यर्थः । ऋतुशब्द इति । यद्यप्ययं चित्तं क्रतुरसुरिति प्रज्ञानामसु पठितस्तथापि कृञः क्रतुरिति कर्मणि क्रतुप्रत्यये सुखस्य कृत्युद्देश्यत्वात्क्रतुशब्दवाच्यत्वमिति भावः । छन्दस्त्वादिति । ऋतोरिति षष्ठी नेत्यर्थः ॥ ८ ॥

कवीनः । बहुनामेति । उरुतुविपुरु इति बहुनामसु पाठादित्यर्थः । पूर्णवाचीति । बहुः पूर्णतायामिति महाव्याकरणसूत्रादित्यर्थः । अधिकरण इति । अकर्तरिच कारक इत्यनुवृत्तेरिति भावः । उरुक्षयावित्यत्रोरुशब्दस्य बहुनामसु पाठादाह । महास्थानाविति । तात्पर्यमाह । सर्वगताविति । कर्मनामेति । अपः अप्न इतिकर्मनामसु पाठात् । आपः कर्माख्यायामिति सूत्रेण कर्मणि वाच्ये आप्नोतेरसुन् ह्रस्वश्च प्रत्ययस्य नुडागमोवा विधीयते अतोपि कर्मनामेत्यर्थः । अमोऽलुगिति । स्वमोर्नपुंसकादिति प्राप्तोऽलुक् सर्वेविधयश्छन्दसि विकल्प्यन्त इत्युक्तेर्नेत्यर्थः । अपःकर्मास्यास्तीति विग्रहे अर्शआद्यच्यदंतोपसशब्दः कर्तृवाचक इत्यभिप्रेत्य प्रवृत्तं भाष्यं योजयति । अथवेति । ऋचि यजमानमित्यस्यानुक्तेरपसमित्येतद्विशेष्यत्वेन यजमानमित्युक्तिः कथमित्यत आह । अत्र दक्षमितीति । पदयोरिति शेषः। तत्र दधाते इति पूर्वपदस्य निराकांक्षत्वार्थमपसमित्युत्तरपदस्य विशेष्याकांक्षापूर्त्यर्थं चेति शेषः । यजमानमिति तु दक्ष शब्दस्य व्याख्यानमिति भावः । भावेजिति । एरजित्यत्र भावे इत्यनुवृत्तेरिति भावः । क्षयशब्दवाच्यगमनस्योरुत्वं नामागमनसाहित्यमेवेत्याशयेनोक्तम् ।। गतागताविति । तद्व्याचष्टे ।। गत्यागतिमन्ताविति । गमनागमनयुक्तावित्यर्थः ।। ९,४,२ ।।

## ऋक्संहिता पदपाठसहिता

(१९) अश्विना यज्वरीरिषो द्रवत्पाणी शुभस्पती ।। पुरुभुजा चनस्यतम् ।। १ ।।

(प०) अश्विना । यज्वरीः । इषः । द्रवत्पाणी इतिद्रवत्ऽपाणी । (शुभस्पती इति) । शुभः । पती इति ।। पुरुऽभुजा । चनस्यतम् ।। १ ।।

(२०) अश्विना पुरुदंससा नरा शवीरया धिया ।। धिष्ण्यावनतं गिरः ।। २ ।।

(प०) अश्विना । पुरुऽदंससा । नरा । शवीरया । धिया ।। धिष्ण्या । वनतम् । गिरः ।। २ ।।

(२१) दस्रा युवाकवः सुता नासत्या वृक्तबर्हिषः ।। आयातं रुद्रवर्तनी ।। ३ ।।

(प०) दस्रा । युवाकवः । सुताः । नासत्या । वृक्तऽबर्हिषः ।। आ । यातम् । रुद्रवर्तनी इतिरुद्रऽवर्तनी ।। ३ ।।

(२२) इन्द्रा याहि चित्रभानो सुता इमे त्वायवः ।। अण्वीभिस्तना पूतासः ।। ४ ।।

(प०) इन्द्र । आ । याहि । चित्रभानो इतिचित्रऽभानो । सुताः । इमे । त्वाऽयवः ।। अण्वीभिः । तना । पूतासः ।। ४ ।।

(२३) इन्द्रा याहि धियेषितो विप्रंजूतः सुतावंतः ॥ उपब्रह्माणि वाघतः ॥ ५ ॥

(प०) इन्द्रं । आ । याहि । धिया । इषितः । विप्रंऽजूतः । सुतऽवंतः । उपं । ब्रह्माणि । वाघतः ॥ ५ ॥

(२४) इन्द्रा याहि तूतुंजान उपब्रह्माणि हरिवः ॥ सुते दंधिष्व नश्चनंः ॥ ६, ५ ॥

(प०) इन्द्रं । आ । याहि । तूतुंजानः । उपं । ब्रह्माणि । हरिऽवः ॥ सुते । दधिष्व । नः । चनंः ॥ ६, ५ ॥

## ऋग्भाष्यम्

अन्नानि यज्ञयोग्यानि क्षिप्रहस्तौ शुभाधिपौ ।
बहुगोपौ बहुभुजौ नोयो यजतमश्विनौ ।
यज्ञे वृतान्स्वभागान्वा संयोजयतमाशु वै ।
आशुवानाद्गतेरश्वी क्षिप्रावगतितोऽथवा ।
अश्नुतेऽखिलमित्येवाप्यश्वजत्वात्तथाऽश्विनौ ॥ १ ॥
बहुकर्मकृतौ सौख्यवीर्यात्मिक्या धिया गिरः ।
अस्मदीयाः संभजतं धिष्ण्यौ सर्वाश्रयौ सदा ॥ २ ॥
भेदकौ सर्वशत्रूणां दस्रौ सम्बन्धिनौ हि वाम् ।
सुता युवाकवः सोमा यज्वनः स्तृतबर्हिषः ।
नासत्यौ नासिकासंस्थौ नैव चासद्गुणौ क्वचित् ।
रुजां द्रावणतो रुद्रो वायुस्तदनुवर्तनात् ।
स्नेहतोनुवशत्वाद्वा तन्मार्गगतितोऽथवा ।
कस्मिन्वहमिति श्रुत्या वासुदेवोऽश्विनावपि ।
रुद्रवर्तनिशब्दोक्ताः ॥ ३ ॥
चित्रं भद्रं रतं चितौ ।
चिद्रतेश्चायनीयत्वाददनाद्वा चितो भिदा ।
तादृशा रश्मयो ज्ञानमस्येति भगवान्परः ।
चित्रभानुरिति प्रोक्तस्तेजोवा तादृशं प्रभोः ।
त्वदिच्छव इमे सोमाः पटीभिः सूक्ष्मतन्तुभिः ।
विस्तृत्य शोधिताः सूक्ष्मप्रमाभिर्वा मनांसिच ।

सोमानां मनसां चैव देवताः सोमरश्मिगाः ।
सोमभृत्याः समस्तस्य सोम एवाधिपो हरिः ॥ ४ ॥
अस्मद्बुद्ध्या प्रार्थितो वा स्वबुद्ध्या प्रेरितोपि वा ।
ब्राह्मणैः प्रेरितो भक्त्या वदतो होतुरंजसा ।
ब्रह्माणि सोमयुक्तानि यजमानस्य वेच्छतः ।
उपायाद्यपि यः कोपि साधको यज्ञकृन्मतः ।
मानसो वाचिको वास्याद्यज्ञो होता ह्वयन्सच ॥ ५ ॥
वेगवांस्तूतुजानः स्यात्संसारमुपसंहरन् ।
वर्ततेऽयेन हरिवा हरिभिर्वर्ततेथ वा ।
हरणाद्विषयाणां च प्राणा हरय ईरिताः ।
तेषु वर्तत इत्यस्मात्तान्वाथ गमयेदसौ ।
हरिवा हरिवान्वापि विष्णुना वर्ततेऽथवा ।
चनो मन इह प्रोक्तं सुखं च क्वचिदीर्यते ॥ ६, ५ ॥

## ऋग्भाष्यटीका

अश्विनेत्यादि द्वादशर्चं सूक्तम् । तत्राद्यस्तृच आश्विनः । द्वितीय ऐन्द्रः । तृतीयो वैश्वदेवः । चतुर्थः सारस्वतः । अश्विनायज्वरी । अन्नानि । हेद्रवत्पाणी क्षिप्रहस्तावौदार्यवन्तौ । शुभस्पती शुभाधिपौ पारस्करप्रभृतित्वात्सुट् । पुरुभुजौ बहुगोपौ बहोर्विश्वस्य गोप्तारौ बहुभुजौ वा बहोर्भोक्तारौ भुजेरुभयार्थत्वात् अश्विनौ युवां यज्वरीरिषो यज्ञयोग्यानि यज्ञसाधनान्यन्नानि यजतेः करणे वरट् प्रत्ययः । नः चनस्यतं योजयतं प्रयच्छतम् । यद्वा यज्वरीरिषो यज्ञे वृतान्स्वभागान्संयोजयतम् । स्वार्थे णिच् स्वीकुरुतम् । आशुवा इति द्रवत्पाणी इत्यस्याभिप्रायान्तरम् । अश्विशब्दं निर्वक्ति ॥ आशुवानादिति ॥ वानादित्यस्यैव व्याख्यानं गतेरिति । आशूपपदाद्वागतिगन्धनयोरित्यस्मादिनिः । उपपदस्य ह्रस्वलोपौ । क्षिप्रावगतितोथवा । गत्यर्थानामवगत्यर्थत्वात् । अखिलं जगदश्नुते व्याप्नोति । अशूव्याप्तावित्यतोविन् । एवशब्दो व्याप्तेरनुपचरितत्वार्थः । अश्वजत्वादित्यश्वशब्दादपत्यार्थे तद्धिता इतीन् । एतच्च व्याख्यानं देवतान्तर एवेति सूचनायाश्विनावित्याह । अश्वरूपात्सूर्याज्जातत्वात् ॥ १ ॥

अश्विनापुरुदंससा । बहुकर्मकृतौ । हे अश्विनौ पुरुबहु दंसः कर्म ययोस्तौ पुरुदंससौ बहुकर्मकृतौ । नरौ पूर्ववत् । धिष्ण्यशब्दः स्थानपर्यायः । सदा सर्वाश्रयौ युवाम् । शवीरया शं सुखं

वीरं वीर्यं तदात्मिक्या धिया । गिरोऽस्मदीयाः स्तुतिरूपा वाचः । वनतं वनसम्भक्तौ सम्भजतं स्वीकुरुतम् ॥ २ ॥

दस्रा । भेदकौ । हेरुद्रवर्तनी नासत्यौ दस्रौ दसुविभेदने ततोरः । सर्वशत्रूणां भेदकौ । वृक्तबर्हिषः । अनेकार्थत्वाद्धातूनाम् । स्तृतबर्हिषः । स्तृतं विस्तृतं बर्हिर्येन तस्य । यज्वनः सुताः सोमाः युवाकवः वां युवयोः सम्बन्धिनः । युवयोरिदमित्यर्थे आकुप्रत्ययो युष्मदो युवादेशश्च । युवयोरर्थे सम्पादिताहि यस्मात्तस्मादायातम् । नासत्यशब्दं व्याख्याति ॥ नासत्याविति ॥ नासाशब्दाद्भवार्थे त्यप् ह्रस्वश्च । नासिकाभिमानित्वात् । एतद्देवतांतरविषयम् । विष्णुश्चेत्कचिद-सद्गुणो नैवेति । सच्छब्दपर्यायः सत्यशब्दः सद्गुणवाची । सद्भावे साधुभावेचेति वचनात् । नसत्या असत्या असद्गुणाः । न विद्यन्ते असत्या ययोस्तौ नासत्यौ । न भ्राडित्यादिना नस्यालोपः । रुद्रवर्तनिशब्दार्थमाह ॥ रुजामिति ॥ रुक्शब्दे कर्मण्युपपदे द्रुगतावित्यस्मादन्तर्णीतण्यर्थाड्डः उपपदस्यच दः । वासुदेवः स्नेहतस्तदनुवर्तनाद्रुद्रवर्तनिशब्दोक्तः । अश्विनावप्यनुवशत्वेन तदनुवर्तनाद्रुद्रवर्तनिशब्दोक्तौ । वृतुवर्तते । भावे अनिः । रुद्रस्य वर्तनिः रुद्रमनुवृत्तिर्ययोस्तौ तथोक्तौ । अथवा तन्मार्गगतितः । रुद्रस्य सम्बन्धिनी वर्तनिर्मार्गो ययोरिति वा वासुदेवोश्विनावपि रुद्रवर्तनिशब्दोक्ताः । अस्त्वश्विनोर्वायुमार्गगतिस्तद्भृत्यत्वात् वासुदेवस्य तु कथमित्यत आह ॥ कस्मिन्निति ॥ कस्मिन्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वाप्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजतेति श्रुत्या वासुदेवस्यापि सावगम्यते ॥ ३ ॥

इन्द्रायाहि चित्रभानो ॥ चित्रभानुशब्दं व्याख्यातुं चित्रशब्दार्थं तावदाह ॥ चित्रमिति ॥ चित्रं भद्रमित्येकोर्थः । चित्रमालेख्यमद्भुतमित्यभिधानात् । चितौ सर्वजीवचैतन्ये नियामकतया रत मित्यपरः । चिच्छब्दोपपदाद्रमतेर्डः । चिद्रतेः अजडसुखात्मकत्वादित्यन्यः । चिच्च सा रतिश्चेति चित्रम् । पदसंज्ञानाश्रयणाज्जस्त्वाभावः । चायनीयत्वाद्दर्शनीयत्वात्पूजनीयत्वाद्वेत्यर्थान्तरं चायृपूजानिशामनयोरित्यस्मात्कर्मत्रप्रत्ययो डिच्च । चितश्चैतन्यस्य स्वरूपस्यैवादनादनुभवाद्वा चित्रम् । रातेरदनार्थत्वमनेकार्थत्वाद्धातूनाम् । इदानीं चित्रभानुशब्दं व्याख्याति । अभिदेति । तादृशाश्चित्राः । भानुशब्दार्थं रश्मय इत्यनूद्य ज्ञानमिति व्याख्यातम् । ननु चितौ रतत्वादीनां भगवद्धर्माणां कथं ज्ञानतेजोधर्मत्वमित्यत उक्तम् । अभिदेति ॥ ज्ञानतेजसोः परमेश्वरेणा-भिदाकारणे नोक्तं युक्तमित्यर्थः । भगवांश्चेत्तर्हि परो मुख्यश्चित्रभानुः । अन्यस्तु यथासम्भवमिति भावः । हेचित्रभानो इन्द्रायाहि । कुतः । अण्वीभिः सूक्ष्माभिः । सूक्ष्मतन्तुभिः सम्यक् शोधनसाधनीभिः पटीभिरिति शेषः । तना विस्तृत्य । तनोतेराकारः क्त्वार्थे । पूतासः पूताः

शोधिताः । इमे सुताः सोमास्त्वायवः त्वदिच्छवो वर्तन्ते । युष्मदःक्यच् । तदंतादुः । दुर्वटत्वादिदमध्यात्मं योजयति । सूक्ष्मेति ॥ सूक्ष्मार्थग्राहिणीभिः प्रमाभिः । मनांसि शोधितानीति शेषः ।

ननु बाह्यसोमस्थानेऽध्यात्मं मनसो ग्रहणे किं निमित्तम् । देवतैक्यमित्याह ॥ सोमानामिति ॥ देवतास्वपि कथं सोमशब्दवृत्तिर्येन रसेषु मनःसुच तद्वृत्तिरित्यत उक्तं सोमरश्मिगा इति । सोमभृत्या इति च । सोमरश्मिगततया सोमभृत्यतया च तत्र सोमशब्दप्रवृत्तिस्तत्सम्बन्धाद्रसेषु मनःसुचेति भावः । पक्षान्तरमाह ॥ समस्तस्येति ॥ समस्तस्य सोमानां मनसांच । सोम एव देवता । तथाच न परंपराश्रयणमिति भावः । ननु परमेश्वरः समस्तस्य देवता तत्कथमेतदित्यत आह ॥ अधिप इति ॥ हरिः सर्वस्याधिप एव नत्वभिमानीत्यर्थः । अनेन त्वायव इत्येतदपि समर्थितं भवति ॥ ४ ॥

इन्द्रायाहिधियेषितः ॥ अस्मद्बुध्या ॥ हे इन्द्र धिया अस्मद्बुध्येषितोधीष्टः । प्रार्थित इति यावत् । अथवा स्वबुद्ध्या प्रेरितो विप्रजूतो ब्राह्मणैः ऋत्विग्भिः भक्त्या प्रेरितस्त्वं वाघतोऽजसा वदतःस्तुवतो होतुः सुतवतः सोमवतो यजमानस्य । सोमयुक्तानि ब्रह्माणि स्तुतिवाक्यान्युपायाहि । होतुर्ब्रह्माणि । यजमानस्य सोमान् । अत्र सोमशब्दाभावेपि सुतवत इति पदसामर्थ्यात्सोमानिति लभ्यते । अध्यात्मं सुतवच्छब्दं व्याचष्टे ॥ इच्छतो वेति ॥ मनोहि सोमः । तद्रूपाचेच्छा । अतः सुतवत इच्छत इत्यनर्थान्तरम् । नन्वध्यात्मं को यजमानः कश्च यज्ञः कोवा होतेत्यत आह ॥ यः कोपीति ॥ साधको मोक्षस्य । स च स एव साधको यदा परमेश्वरमाह्वयन् भवति तदा होताचोच्यत इत्यर्थः ॥ ५ ॥

इन्द्राया हि तूतुजानः ॥ अत्र तूतुजानपदं व्याचष्टे ॥ वेगवानिति ॥ तुजतिर्गत्यर्थः तस्माच्छन्दसि भृशार्थे यङ् । तस्य लुक् ततः चानश् । हरिव इत्येतद्व्याचष्टे । संसारमिति ॥ हरतेः कर्तरीकारः । वृतुवर्तने । अस्मादसुन्डिच्च । संसारमिति योग्यतया सम्बन्धः । भक्तानां संसारं हरति वर्ततेच । उपसंहरन् वर्तत इति यावत् । येन कारणेन तेन हरिवाः परमेश्वरः । तस्य संबुद्धिर्हरिवः । अथ वा हरिभिर्हरिनामकैरश्वैर्वर्तत इति हरिवाः पुरंदरः । हरणादित्याद्यध्यात्मविषयम् । गमयेदित्यनेनान्तर्णीतण्यर्थो वृतिरित्युक्तं भवति । वातेर्वेदं रूपम् । हरिवान्वापि हरिनामकाश्ववानिति वा । छन्दसीर इति मतोर्वः । मतुवसोरुसम्बुद्धौ छन्दसीति रुत्वम् । अथवा हरिणा विष्णुना प्रेरितो वर्तत इति हरिवाः शक्रः । चनःशब्दार्थमाह । चन इति ।

कच्चित् चनोधाः सहसो यहो इत्यादौ । हे हरिव इन्द्र नोब्रह्माणि स्तुतिवाक्यानि प्रति तूतुजानः उपायाहि । आगत्य चनः सुतेऽस्मदीये सोमे च नो मनो दधिष्व धत्स्व । अस्मदीयं सोममिच्छ ॥ ६, ५ ॥

## मन्त्रार्थमञ्जरी

अथ तृतीयं द्वादशर्चं वर्गद्वयात्मकं सूक्तम् । तत्र आद्यस्तृच आश्विनः । द्वितीय ऐन्द्रः । तृतीयो वैश्वदेवः । चतुर्थः सारस्वतः । (हे) द्रवत्पाणी, द्रवन्तौ पाणी ययोस्तौ द्रवत्पाणी क्षिप्रहस्तावौदार्यवन्ताविति यावत्, शीघ्रप्रदाविति वा । (शुभ+पती=शुभस्पती, शुभाधिपौ, पारस्करादित्वात्सुडागमः, अध्यापकास्तु– 'शुभः । पती इति' इति पदद्वयं वदन्ति । पुरुभुजा, पुरुभुजौ, 'सुपां सुलुक्' इत्याकारादेशः पुरोर्बहोर्विश्वस्य भुजौ गोप्तारौ, बहोर्भोक्ताराविति वा, 'भुज पालनाभ्यवहारयोः' इत्युभयार्थाद्भुजेः क्विप् । (हे) अश्विना, अश्विनौ, आशुगतिमत्त्वाच्छीघ्रावगतिमत्त्वाद्वाश्विपदवाच्यौ भगवद्रूपविशेषौ प्रसिद्धदेवौ वा । (युवाम्) इति योग्यतयान्वेति । यज्वरीः, यज्ञयोग्यानि, यज्ञसाधनानीति यावत्, यजतेः करणे वरट्प्रत्यये 'टिड्ढाणञ्' इत्यादिना ङीप्प्रत्ययः, 'यस्येति च' इति रेफस्थाकारलोपः । इषः अन्नानि, हवींषीति यावत् । (नः) चनस्य तम्, प्रयच्छतम् । यद्वा यज्वरीः यज्ञे वृतान् । इषः, स्वभागान् । चनस्यतम्, स्वीकुरुतमित्यर्थः । आशुपदोपपदात् 'वागतिगन्धनयोः' इत्यस्मादिनिप्रत्ययः आशुपदआकारह्रस्वत्वोवर्णलोपौ ध्येयौ ॥ प्रसिद्धाश्विपक्षे– अश्वरूपात्सूर्याज्जातत्वादित्यपि ध्येयम्, अश्वपदादपत्यार्थे 'तद्धिताः' इति सूत्रेणेन्प्रत्यये 'यस्येति च' इत्यकारलोपे 'अश्विन्' इति सिद्धेः ॥ १ ॥

पुरुदंससा, पुरु बहु दंसः कर्म ययोस्तौ पुरुदंससौ, द्विवचनस्याकारादेशश्छान्दसः, बहुकर्मकृतावित्यर्थः । नरा, नरौ निर्विकारावविनाशिनाविति वा, 'वायविन्द्रश्च सुन्वत' इत्यस्यामृचि व्याख्यातमेतत्पदम् । धिष्ण्या, धिष्ण्यौ सदा सर्वाश्रयौ, 'धिष्ण्यमोको निवसनम्' इत्यभिधानात् । अश्विना, अश्विनौ । (युवाम्) शवीरया, शं सुखम्, वीरं वीर्यम्, सुखवीर्यात्मिक्या । धिया । गिरः, अस्मदीयाः स्तुतिरूपा वाचः । वनतम्, भजतम्, 'वन सम्भक्तौ' इति धातोः, स्वीकुरुतमिति यावत् ॥ २ ॥

रुद्रवर्तनी, रुजं रोगादिदुःखं द्रावयतीति व्युत्पत्त्या रुद्रो वायुः, तं स्नेहतो भृत्यत्वाद्वानुवर्तनाद्यथाक्रमं भगवद्रूपविशेषौ प्रसिद्धाश्विनौ च रुद्रवर्तनिशब्दोक्तौ । नासत्या,

नासत्यौ, हरी चेत्– नासमीचीनगुणौ सद्गुणवन्तावित्यर्थः, प्रसिद्धदेवौ चेत्– नासिकाभिमानि-त्वान्नासासंस्थावित्यर्थः। दस्रा, दस्रौ सर्वशत्रुभेदकौ। (हे अश्विनौ) वृक्तबर्हिषः, वृक्तं विस्तृतं बर्हिर्येन तस्य वृक्तबर्हिषो यजमानस्य सम्बन्धिनः। सुताः, सोमाः। युवाकवः, युष्मदीयाः, युष्मदर्थे सम्पादिता इति यावत्। (तस्मात्) आ यातम्, आगच्छतम्। रुजुशब्दे कर्मण्युपपदे 'द्रु गतौ' इत्यस्मादन्तर्णीतण्यर्थाड्डुप्रत्यये टिलोपे पूर्वपदान्तस्य दकारे 'रुद्रः' इति रूपम्। 'वृतु वर्तने' इत्यतो भावेऽनिप्रत्यये 'पुगन्त' इति गुणे 'वर्तनिः' इति सिद्धम्। रुद्रस्य वायोर्वर्त-नेरनुवृत्तिर्ययोस्तौ 'रुद्रवर्तनी' इति विग्रहः। 'नासत्या' इत्यस्याद्येऽर्थे– सत्यशब्दसच्छब्दयोः पर्यायत्वात् 'सद्भावे साधुभावे च' (गी० १७।२६) इत्यादेः सत्यशब्दः सद्गुणवाची, सत्या इत्यसत्याः, न विद्यन्तेऽसत्या ययोस्तौ 'नासत्यौ' इति विग्रहः, 'नभ्राण्नपान्नवेदानासत्यानमुचि' इत्यादिना निपातनान्नलोपाभावः। द्वितीयेऽर्थे तु– नासाशब्दाद्भवार्थे त्यप्प्रत्यये पूर्वस्य ह्रस्वे 'नासत्य' इति रूपम्। 'दसु विभेदने' इत्यतो रक्प्रत्यये 'दस्र' इति ज्ञेयम्। धातूनामनेकार्थत्वादत्र वृक्तशब्दो विस्तृतार्थो ध्येयो न तु छिन्नेति॥ युवयोरिदमित्यर्थ आकुप्रत्यये युष्मदो युवादेशे 'युवाकु' इति रूपम्॥ ३॥ इति प्रथम आश्विनस्तृचः॥ १॥

चित्रभानो, चित्रा अद्भुताः 'चित्रमालेख्यमद्भुतम्' इत्यभिधानात्, भानवो ज्ञानानि तेजांसि यस्य तस्य सम्बुद्धिः। (हे) इन्द्र, निरुक्तोऽयं शब्दः प्राक्, हे वज्रिन्, इत्यर्थः। अण्वीभिः, सूक्ष्माभिः सूक्ष्मतन्तुभिः। (पटीभिः) इति शेषः तना, 'तनु विस्तारे' इत्यतः क्त्वाप्रत्ययार्थ आकारप्रत्ययः, तनित्वा विस्तृत्येति यावत्। पूतासः, पूताः, 'आज्जसेरसुक्' शोधिताः। इमे। सुताः सोमरसास्तदभिमानिन इति यावत्, तेषां पूतत्वमभिमन्यमानद्वारेति ज्ञेयम्। त्वायवः, त्वदिच्छवः। (सन्ति) कदा रसानिन्द्र आस्वादयिष्यतीति कामयमानाः सन्ति, युष्मदशब्दादिच्छार्थे क्यच्प्रत्यये युष्मदस्त्वादेशे (पृषोदरादित्वादन्त्यस्याकारे तदन्तादुप्रत्यये) 'त्वायवः' इति सिद्धेः। (तस्मात्) आ याहि, आगच्छ। अध्यात्मम्– अण्वीभिः, सूक्ष्माभिः सूक्ष्मार्थविषयिकाभिः। (प्रमाभिः) इति शेषः। तना, विस्तृत्य। पूतासः, शोधिता निर्मलीकृताः। इमे। सुताः, मनांसि तदभिमानिन इत्यर्थः, सोमाभिमानिन एव मनोभिमानिन इति प्रागेव अवादिष्म। त्वायवः (सन्ति)। (तस्मात्) आ याहि। इति॥ ४॥

(हे) इन्द्र। धिया, अस्मद्बुद्ध्या। इषितः, अधीष्टः, प्रार्थित इति यावत्। यद्वा– धिया, बुद्ध्या। इषितः, प्रेरितः। विप्रजूतः, विप्रैर्ब्राह्मणै ऋत्विग्भिर्जूतो भक्त्या प्रेरितः। (त्वम्) वाघतः, 'वाशृ शब्दे' (पृषोदरादित्वाच्छस्य घः) स्तुवतो होतुः। ब्रह्माणि, स्तुतिवाक्यानि।

सुतवतः, सोमवतो यजमानस्य, संहितायां दैर्ध्यमाधिक्यार्थे, 'सुतवतः' इत्युक्त्या (सोमान्) इति लभ्यते, होतुः स्तुतिवाक्यानि यजमानसम्बन्धिसोमांश्च प्रति। उप आ याहि, उपागच्छ। इति। अध्यात्मं तु– सुतवतः, मनोवत इच्छारूपमनोवृत्तिमतस्त्वदागमनमिच्छत इति यावत्, मोक्षसाधकस्य यजमानस्य सोमान् मनोवृत्तीः प्रति । तस्यैव वाघतः, मन्त्रैः स्तुवतो होतृत्वात्तदीयस्तुतिवाक्यानि च प्रति । उप आ आहि । इति ॥ आह्वानरूपेन्द्रविषया स्तुतिर्वाचिको यज्ञः, तद्विषयमनोवृत्तिर्मानसिको यज्ञ इति ज्ञेयम् ॥ ५ ॥

हरिवः, भक्तानां जननमरणादिसंसारक्लेशं परिहरन्, वर्तमान, 'हृञ् हरणे' इत्यतः कर्तरीकारप्रत्यये 'सार्वधातुक' इति गुणे 'हरि' इति सिद्धौ 'वृतु वर्तने' इत्यतोऽसुन्प्रत्ययो डिच्च, डित्त्वसामर्थ्याट्टिलोपे कृदन्तत्वेन प्रातिपदिकसंज्ञायां सुबुत्पत्तौ 'अत्वसन्तस्य चाधातोः' इति दीर्घे सस्य रुत्वे विसर्गे च 'हरिश्चासौ वाश्च' इति विग्रहे 'हरिवाः' इति रूपसिद्धौ तस्य सम्बुद्धिर्हरिवः। (हे) इन्द्र, विष्णो। हरिभिर्हरिनामकैरश्वैर्वर्तत इति हरिणा विष्णुना प्रेरितो वर्तत इति वा हरिवाः तस्य सम्बुद्धिर्हरिवः । (हे) इन्द्र, पुरंदर, इति वा। अध्यात्मं तु विषयाणां हरणाद्धरय इन्द्रियाणि, तेषु वर्तत इति (हे) हरिवः, इति ज्ञेयम्। (नः) अस्माकम्। ब्रह्माणि, स्तुतिवाक्यानि प्रति। तूतुजानः, वेगवान्। उप आ याहि, उपगच्छ। आगत्य च, नः सुते, अस्मदीये सोमे। चनः, मनः। दधिष्व, धत्स्व कुरु। अस्मदीयं सोमरसं पातुमिच्छां कुर्विति भावः ॥ 'तुज गतौ' इत्यस्माच्छन्दसि भृशार्थे यङ्। 'सन्यङोः' इति द्विर्वचनम्। यङो लुक्। 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घः। यङ्लुगन्ताच्चानश्प्रत्ययः। तूतुजानो वेगवानिति ज्ञेयम् ॥ ६ ॥ इति द्वितीय ऐन्द्रस्तृचः ॥ २ ॥ इति पञ्चमो वर्गः ॥ ५ ॥

## पदार्थप्रकाशिका

अश्विना । द्वादशाश्विनैन्द्रवैश्वदेवसारस्वता इत्यनुक्रमणिकां हृदि निधायाह । अश्विनेत्यादीति। अनुक्रमणिकोक्तदेवताविवेकं दर्शयति । तत्राह इत्यादिना । अश्विना यज्वरीरिषः । क्षिप्रं द्रवद्द्रुतमिति द्रवच्छब्दस्य क्षिप्रनामसु पाठादाह । क्षिप्रहस्ताविति । तत्तात्पर्यमाह औदार्यवन्ताविति। भक्ताभीष्टप्रदान इति शेषः । ननु तर्हि शुभपतीति स्यात् इत्यतस्तत्रोपपत्तिमाह। पारस्करादित्वादिति। तथाच पारस्करादेराकृतिगणत्वेनास्यापि शब्दस्य तद्गणस्थत्वात्सुडागमे टित्वादादौ जाते पारस्कर इत्यादिवत् शुभस्पतीति भवतीति ज्ञेयम्। अत्र यद्यपि शुभःपतीत्येवं द्वैपद्येन शाकल्याः पठन्ति । तथापि नायमस्ति नियमो

यदर्वाचीनशाकल्यदृष्टपदविभागानुसारेण सर्वज्ञशिखामणिभिर्भगवत्पादैर्व्याख्येयमिति भावः । अतोऽत्राधिक्यलाभायैकपद्यमङ्गीकृत्य शुभधियाविति व्याख्यातम् । तत्र चेयमुपपत्तिष्टीकाकारै-रभिहितेति सम्प्रदायविदः । अत एव 'अरुणो मासकृद्वृक' इत्यत्र मासकृदिति शाकल्यदृष्ट-पदविभागमनङ्गीकृत्यैव निरुक्तकारेण यास्केनापि अर्थातिशयलाभाय अरुण आरोचनो मासकृत् मासानां चार्धमासानां च कर्ता चन्द्रमावृक इत्यैकपद्येन व्याख्यातमिति ज्ञातव्यम् ।

गोप्तारे पालकौ । अर्थान्तरद्योतनाय भाष्ये शेषमाह । वेति । भोक्तारौ अभ्यवहर्तारौ । व्याख्यानद्वयमुपपादयति । भुजेरिति । भुजपालनाभ्यवहारयोरिति धातुव्याख्यानसद्भावेन भुजधातोः गोप्तृभोक्तृरूपउभयार्थत्वेन भाष्योक्तं व्याख्यानद्वयं युक्तमिति भावः । प्रकृते विवक्षितं यज्ञभोक्तृत्वं व्याख्याति । यज्ञसाधनानीति । यज्ञसाधनानीत्यर्थे यज्वरीति पदं व्युत्पादयति । यजतेरिति । यज देवपूजेत्यादिधातोः पूजारूपयज्ञार्थाद्यजतेः करणे वरट् प्रत्यये अट् इत्यस्य लोपे टित्वाड्ढिड्ढाणिति सूत्रेण ङीपि ङकारपकारयोर्लोपे यज् वर् ई यज्वरीति रूपं द्रष्टव्यम् । ट्वरजिति पाठान्तरेऽपि यजधातोरौणादिके ट्वरच् प्रत्यये चुटू इति प्रत्ययाद्यस्य टकारस्य लोपे अच् इत्यस्य लोपे टित्वात् ङीपि यज्वरीति रूपम् । न इति । ऋचि शेषोक्तिः । अत्र यद्यपि लोण्मध्यमपुरुषद्विवचनांतस्य चनस्यतमित्यस्य 'सनाद्यन्ता धातव' इति सुब्धातुत्वेन रो(नो)वाजमन्धोऽन्नम् इति अन्नवाचिनः चनस्शब्दात् 'सुप आत्मनः क्यच्' इति क्यच्प्रत्यये ककारचकारयोर्लोपे चनस्यतमिति भवति । तथाच चनस्यतमित्यस्य अन्नमात्मने इच्छतमित्यर्थो भवति । तथापि धातूनामनेकार्थत्वादिति भावेन भाष्ये योजयतमित्युक्तम् । तत्तात्पर्यमाह इच्छतमिति । वृतान् स्थितान् क्लृप्तान् स्वभागानस्माकं प्रयच्छतमित्यर्थकत्वपक्षे द्रवत्पाणीत्यस्यौदार्यवन्ताविति पूर्वोक्ततात्पर्यकथनस्य सङ्गतत्वेऽपि स्वीकुरुतमित्यर्थ-कत्वपक्षेऽसङ्गतत्वादाह । आशुवा इतीति । तथाच द्रवत्पाणी सन्तौ क्षिप्रहस्तौ सन्तौ आश्विति पूर्ववत् चनस्यतमित्यर्थो द्रष्टव्यः । इनिरिति । स च कित्कारीति ज्ञातव्यम् । तथाच कित्वादातोलोप इटि चेति धात्वाकारलोपो द्रष्टव्यः । तत्र चशब्दस्य तीत्यर्थकत्वादिति द्रष्टव्यम् । उपपदस्येति । आकारस्य ह्रस्वः उकारस्य लोप इत्यर्थः । तथाच अशुशब्दोपपदात् गत्यर्थक वाधातोः मत्वर्थे इनिप्रत्यये नीत्यत्रेकारलोपे इनिप्रत्ययस्य कित्कार्यकारित्वादातो लोप इटि चेति धात्वाकारलोपे उपपदस्थस्याकारस्य ह्रस्वे उकारस्य च लोपे अश् व् इन् अश्विन्निति नकारान्तप्रातिपदिकसिद्धौ तस्मात् स्वाद्युत्पत्तौ प्रथमैकवचने अश्वीति रूपम् । गत्यर्थानामिति । अत्रापि पूर्ववत् रूपसाधनं द्रष्टव्यम् । विन्निति । तथाच अश् विन् अश्विन्निति रूपम् । इन्निति । तथाच अश्विशब्दोत्पत्त्यर्थं

तद्धिता इति सूत्रेण इनुप्रत्यये यस्येति चेति तद्धिते परे भसंज्ञकस्याकारस्य लोपे अश्व् इन् अश्विन्निति रूपम् । एतच्चेति । अश्वजत्वादित्येतदित्यर्थः । देवतान्तर एवेति । नत्वाशुवानादित्यादिवत् भगवत्तदितरसाधारणमिति भावः । अश्विनोर्देवयोरश्वजातत्वं कथमित्यत आह । अश्वरूपादिति । बडवारूपिण्यां संज्ञायामिति शेषः । यथोक्तं हरिवंशे । 'ददर्श योगमास्थाय स्वभार्यां बडवां ततः । सोऽश्वरूपेण भगवान् तां मुखे समभावयत् । देवौ तस्यामजायेताम् अश्विनौ भिषजां वरौ । नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनाविति । पश्चाद्दिव्यं स्वरूपं तु दर्शयामास भास्करः' इति ॥ १ ॥

अश्विना पुरुदंससा । दंसः कर्मेति । अपो दंसो वेनः कर्मेति कर्मनामसु पाठादिति भावः । पूर्ववदिति । नरौ तावविनाशित्वादुपचारः क्वचिन्द्भवेदिति पूर्वोक्तरीत्या नरशब्दार्थो द्रष्टव्यः ॥ २ ॥

दस्रा युवाकवः सुता । दसु(वि)भेदन इति । तथाच दस्यत इति दस्राविति व्युत्पत्तिर्द्रष्टव्या । ततो र इति । कर्त्रर्थ इति शेषः । तथाच दसुर दस्रेति रूपम् । वृक हिंसायामिति प्रसिद्धत्वादर्थासङ्गतेराह । अनेकार्थत्वादिति । तथाच वृकधातुः विस्तारार्थ इत्याशयः । स्तृतेति वृक्तेत्यत्र क्तप्रत्ययार्थ इति ध्येयम् । यज्वन इति ऋचि विशेषाध्याहार इति ज्ञातव्यम् । आकुप्रत्यय इति । तद्धिता इति सूत्रेण युष्मच्छब्दात् युवयोरिदमित्यर्थे, सम्बन्ध्यर्थ इति यावत् आकुप्रत्यय इत्यर्थः । युवादेशश्चेति । 'युवावौ द्विवचने' युष्मदस्मदोर्मपर्यन्तस्य सप्तविभक्तीनां द्विवचने युवावादेशौ स्त इति प्रतिपादितत्वादित्यर्थः । तथाच युष्मद्शब्दात् युवयोरिदमित्यर्थे आकुप्रत्यये 'युवावौ द्विवचन' इति सूत्रेण युष्मदोर्मपर्यन्तस्य युवादेशे युवद् आकु इति स्थिते शेषे लोप इत्यनेनान्त्यदकारलोपे वकारस्थस्याकारस्य च लोपे सति युवाक्वित्युकारान्त प्रातिपदिके सति पश्चात्स्वाद्युत्पत्तौ युवाकव इति भवतीति द्रष्टव्यम् । युवाकव इत्यस्य तात्पर्यं वदन् ऋचि पूर्वार्धयोर्हेतुहेतुमद्भावमभिप्रेत्याह । युवयोरर्थ इति । नासाशब्दादिति । तथाच नासाशब्दात् 'तत्र भव इति भवार्थेत्यपुप्रत्यये पकारलोपे सकारस्थस्याकारस्य च ह्रस्वे सति नासत्येति रूपम् । एतदिति । नासिकाभिमानित्वेन नासिकासंस्थत्वात् नासत्याविति व्याख्यानं प्रसिद्धाश्विनोरेव । न तु विष्णौ । तस्याभिमानित्वाभावात् । यथोक्तं गीतातात्पर्ये । 'तद्गतानां तु दुःखानां भोगोऽभिमतिरुच्यते । तदभावान्नाभिमानी भगवान् पुरुषोत्तमः ॥' इति ।

ननु तर्हि रमायाः कथं अव्यक्ततत्वाभिमानित्वमुक्तम् । निमित्ताभावात् इति चेत्सत्यं पराधीनतया तत्तत्पदार्थप्रेरणस्यैव सामान्यतोऽभिमानशब्दार्थतया विवक्षितत्वादिति ध्येयम् ।

वचनादिति । सदित्येतत्प्रयुज्यत इति वचनशेषोऽप्यत्र द्रष्टव्यः । नन्वेवं नञ् समासे नासत्येति कथम् । 'न लोपो नञ' इति सूत्रेण असत्येत्युत्तरपदे परतो नञो नस्य लोपे अ असत्येति जाते तस्मान्नुडचीत्यनेन अचि परे लुप्तनकारात्परं नुडागमे उट् इत्यस्य लोपे अन् असत्य अनसत्येति स्यात् अनश्वेतिवदित्यत आह । न भ्राडित्यादिनेति । न भ्राण्नपान्नवेदनासत्येति सूत्रेण नलोपाभावस्य निपातितत्वेन नलोपो नञ इत्यस्याप्राप्त्या नुडागमाप्राप्तौ नासत्येति रूपं युक्तमित्यर्थः । ड इति । तथाच टिभूतस्य डकारस्य लोपो द्रष्टव्यः । ननु तर्हि रुकुद्रेति स्थिते झलां झशोंत इति ककारस्य गकारे रुग्द्र इति स्यात् इत्यत आह । उपपदस्येति । उपपदांत्यककारस्येत्यर्थः । तथाच रुक्शब्दात् द्रुधातोर्डप्रत्यये डित्वात् टिभूतस्य डकारस्य लोपे ककारस्य दकारे प्रत्ययाकारे मिलिते सति रुद् द्र् अ रुद्रेति रूपम् । भावे अनिरिति । वृत् धातोर्भावे अनिप्रत्यये 'पुगन्तलघूपधस्य च' इति गुणे तस्य रपरत्वे वर् त् अनि वर्तनीति रूपम् । विग्रहं दर्शयति । रुद्रस्येत्यादि । षष्ठीद्वितीयार्थ इत्यभिप्रेत्याह रुद्रमनुवृत्तिरिति । स्नेहतोऽनुवशत्वाद्वाऽवस्थितिरित्यर्थः । कथमिति । वायुभृत्यत्वेन तन्मार्गगत्ययोगादिति भावः । अत्रेति । देहात् प्रतिष्ठिते देहं इतीति । मद्गमनागमनप्रयोजकगमनागमनवन्तं पुरुषं कंचन सृजामीति विचार्य स भगवान् तादृशप्राणमसृजतेत्यर्थः । सेति । वायुमार्गगतिरित्यर्थः । तथाच वासुदेवस्य तद्भृत्यतया तन्मार्गगत्यभावेऽपि स्वेच्छया स्नेहवशेन भक्तपराधीनतया तन्मार्गगतिर्युक्तेति भावः । अत एव मुख्यप्राणोत्तमत्वार्थकवासुदेवपदप्रयोग इत्यवधेयम् ॥ ३ ॥

इन्द्रायाहि चित्रभानो । अभिधानादिति । चित्रशब्दस्याद्भुतपर्यायतया चित्रशब्दार्थकभद्रस्याप्यद्भुतार्थकत्वादिति भावः । अपर इत्यत्र अर्थ इत्यनुवर्तते । रमतेर्ड इति । चिच्छब्दोपपदात् रमु क्रीडायामस्मात् डप्रत्यये टिभूतस्यामित्यस्य लोपे चित्रेति रूपम् । अजडेति चिच्छब्दार्थः । रतिशब्दार्थः सुखात्मकत्वादिति । अन्यः अर्थः चिद्रतेरित्यर्थः । विग्रहं दर्शयति । चिच्च सेति ।

ननु झलां जशोऽन्ते पदान्ते झलां जशः स्युरिति विधानात् प्रकृते च पदान्ते अल्भूत तकारस्य दकारादेशे च सति चिद्रमिति स्यादित्यत आह । पदसंज्ञेति । जश्त्वस्य पदान्तनिमित्तकत्वोक्तेः प्रकृते च 'अयस्मयादीनि छन्दसि' इति सूत्रोक्तपदसंज्ञापवादकभसंज्ञाश्रयणेन पदसंज्ञाया अनादरणात् पदान्तत्वनिमित्तक जस्त्वाभावेन चित्रमिति रूपं युक्तमित्यर्थः । कर्मणि इत्र प्रत्यय इति । तथाच चाय्यत इति कर्मार्थे चाय् धातोरित्रप्रत्यये इत्रप्रत्ययस्य डित्कार्यकारितया विवक्षितत्वेन तद्बलाट्टिभूतस्याय् इत्यस्य लोपे च् इत्र चित्रेतिरूपम् । ननु रा दान इति धातोः कथमादानार्थत्वमित्यत आह । अनेकार्थत्वादिति । ज्ञानमिति व्याख्यातमिति । द्विविधा हि

रश्मयः । ज्ञानरूपास्तेजोरूपाश्चेति । तथाच साधारणस्य रश्मिपदस्य ज्ञानार्थकतया व्याख्यानं युक्तमित्यर्थः । अत एवोक्तं भाष्ये 'तेजो वा तादृशं प्रभो'रिति । अत एव ज्ञानतेजोधर्मत्वमिति टीकापीति ज्ञातव्यम् । चितौ रतत्वादीनामिति । चित्रशब्दार्थ भूतानामिति शेषः । अद्भुतत्वरूप चित्रशब्दार्थस्य तेजोधर्मत्वसम्भवेन अद्भुतत्वादीनामित्यनुक्त्वा चितौ रतत्वादीनामित्याहेत्यवगन्तव्यम् ।

अभिदाकारणेन अभेदरूपकारणेन तृतीया । भगवतः परचित्रभानुत्वोक्त्याऽर्थात्सिद्धमर्थमाह । अन्यस्त्विति । प्रसिद्धेन्द्र इत्यर्थः । सूक्ष्मतन्तुभिः । सूक्ष्मतन्तुनिर्मिताभिः । विशकलितसूक्ष्मतन्तुमयपटीनां सम्यक्शोधनसाधनत्वाभावादाह । सम्यक् शोधनसाधनीभिरिति । व्यतिषङ्गविशेषयुक्ताभिरित्यर्थः । पटीभिरिति शेष इति । केवलसूक्ष्मतन्तूनां विस्तृत्य शोधनसाधनत्वस्य ऋगुक्तस्यानुपपत्तेः ऋगभिप्रेतः पटीभिरिति शेषो भाष्येऽपि कथित इत्यर्थः । ननु तर्हि तनित्वेति स्यादित्यत आह । तनोतेरिति । क्त्वार्थ इति । क्त्वो ल्यबिति क्त्वो ल्यबादेशविधानात् ल्यबर्थ इत्यर्थः । तथाच तनु विस्तारे अस्मादाकार प्रत्यये तना इति रूपम् । शोधिता इति । सूक्ष्मतन्तुनिर्मितसमीचीनपटं विस्तृत्य तेन शोधिता इत्यर्थः । क्यजिति । त्वामात्मभ्य इच्छंत्यर्थ इति शेषः । सुप आत्मनः क्यजिति सूत्रेण सुबन्तादात्मन इच्छायां विवक्षितायां सत्यां क्यचो विधानेनात्रापि त्वामिच्छन्तीत्यर्थे क्यच् प्रत्यय इत्यर्थः । तदन्तादुरिति । क्यजन्ताच्छब्दात् क्यात् छन्दसीति सूत्रेण उप्रत्यय इत्यर्थः । तथाच युष्मदस्मात् क्यच् प्रत्यये ककारचकारयोर्लोपे त्वाहौ साविति युष्मदोमपर्यन्तस्य त्वादेशे त्वद् येति जातेऽन्त्यदकारस्य अन्येभ्योऽपि दृश्यते इत्यनेन आत्वे त्वा येति जाते क्यजन्तादुप्रत्यये त्वायुरिति रूपम् । तद्बहुवचनं त्वायव इति भवतीति द्रष्टव्यम् ।

ननु क्यचि चेति सूत्रेण क्यचि परे पूर्वमवर्णस्य ईकारविधानेन पुत्रमात्मन इच्छति पुत्रीयति इतिवत् अत्रापि त्वायुरित्यस्यापि क्यजन्तत्वेन तस्मिन् परे पूर्वमवर्णस्य ईकारे त्वामात्मन इच्छति त्वीयुरिति जाते तद्बहुवचनं त्वीयव इति भवेदिति चेत् सत्यम् । तथापि क्यचि चेति सूत्रविहितईकारापवादकत्वेन अन्येभ्योऽपि दृश्यत इत्यनेनाकारविधानादत्रानेन सूत्रेणाकाराश्रयणान्न रूपविकारापत्तिरिति ध्येयम् । इदमिति । अण्वीभिस्तना पूनास इति वाक्यमित्यर्थः प्रमाणां सूत्रत्वं घटयति । सूक्ष्मार्थेति । प्रमाभिः यथार्थज्ञानैः । सोमस्थाने सोमरसस्थाने । किमिति । इति शंकामिति शेषः । दैवतैक्यं निमित्तमिति शेषः । बाह्यसोमरसस्य मनसश्चैकदेवताकत्वं निमित्तमित्यर्थः । येनेति । देवतासु तच्छब्द वृत्तौ तत्सम्बन्धाद्रसादावपिवृत्तिः

स्यादित्यर्थः । तत्र देवतासु सोमरश्मिगतत्वेन तत्र सोमशब्दवृत्तिः । सोमभृत्यतया च तत्र सोमशब्दप्रवृत्तिरित्येवं देवतासु सोमशब्दप्रवृत्तौ निमित्तद्वयं ज्ञातव्यम् ।

तत्सम्बन्धादिति । सोमरसानां मनसां चोक्तनिमित्तद्वयेन सोमशब्दवाच्यदेवताभिमन्यमानत्वरूपसम्बन्धात् । सोमरसेषु मनःसु च सोमशब्दवृत्तेरेव देवतैक्यान्निमित्ताद्बाह्यसोमस्थाने अ यध्यात्ममनसो ग्रहणं युक्तमिति भावः । सोम एव चन्द्र एव । न परम्पराऽऽश्रयणमिति । सोमरश्मिगतत्वेन सोमभृत्यतया च देवतासु सोमशब्दतत्सम्बन्धाद्रसेषु मनःसु च सोमशब्द इति परम्पराश्रयणमस्मिन्पक्षे नास्तीत्यर्थः । सोमानां मनसां च साक्षादेव सोमाभिमन्यमानत्वोक्तेरिति भावः । समस्तस्य देवतेति । तथाच सोमरसादेरपि स एव देवतेति प्रसिद्धसोमस्य कथं तद्देवतात्वमित्यर्थः । नत्वभिमानीति । 'तद्गतानां तु दुःखानां भोगोऽभिमतिरुच्यते । तदभावान्नाभिमानी भगवान् पुरुषोत्तम' इति गीतातात्पर्योदाहृत प्रमाणादिति भावः । प्रसिद्धचन्द्रस्य त्वभिमानित्वे देवतात्वकथनं युक्तमित्यवधेयम् । ननुत्वायव इत्यस्य इच्छार्थकक्यजन्तत्वे शब्दत्वेन चेतनेषु सोमेषु त्वायव इत्युक्तं तदिच्छुत्वकथनमसङ्गतमित्याशङ्काप्यनेनेन परिहृतेत्याह । अनेनेति । सोमेष्वभिमानि देवताकथनेनेत्यर्थः । तथाचाभिमानिदेवतापेक्षया त्वायव इत्येतद्युक्तमित्याशयः ॥ ४ ॥

इन्द्रायाहि धियेषितः । इजिकावध्युपसर्गं न व्यभिचरत इति वचनादाह । इषितोऽधीष्ट । इति । बुद्धिपूर्वकमस्माभिः प्रार्थित इत्यर्थः । होतुरिति । भारताः कुरवो वाद्यत इति ऋत्विङ्नामसु पाठात् होतुरपि ऋत्विग्विशेषत्वादिति भावः । तद्व्युत्पादनमञ्जसा वदत इति सङ्कल्पोक्तं विविच्य दर्शयति होतुरिति । होतुर्होतुः ब्रह्माणि स्तुतिवाक्यानि स्वीकर्तुमुपयाहीत्यर्थः । यजमानस्येति । सुतवतो यजमानस्य सोमान् स्वीकर्तुमुपयाहीत्यर्थः । नन्वत्र सोमानित्यश्रवणात् कथमेतदित्यत आह । अत्रेति । यजमानस्येति वक्तव्ये सोमखण्डनं कृतवत इत्यर्थकस्य सुतवत इतिपदस्य सामर्थ्यात् सोमखण्डनं कृतवत इत्यर्थः । तथाचेच्छत इत्यर्थः कथं लभ्यत इत्यत आह । मनो हीति । तर्हि ममनोत इति स्यादिति । कथमित्यत आह । तद्रूपाचेति । 'कामः संकल्पोविचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एवेति श्रुतेरिच्छायाः मनोपादानकत्वेन मनोरूपेत्यर्थः । इच्छैवात्र खण्डितसोमरसस्थानीया । मनसो विकाररूपखण्डने सति रसस्यानीयेच्छाया उत्पत्तेः सुतवत इत्यस्येच्छत इत्यर्थो युक्त इत्यवधेयम् ॥ ५ ॥

इन्द्रायाहितूतुजानः । वेगावानितीति । तूतुजिस्तूतुजानस्तुल्यमानस्य इति क्षिप्रनामसु पाठादिति भावः । तत् व्युत्पादयति । तुजेति । गतिर्गमनम् । यद्यपि तुजि हिंसायामिति पठ्यते ।

तथापि अनेकार्थत्वाद्धातूनां तुजेर्गत्यर्थतेति भावः । तस्मादिति । गत्यर्थतुजधातोरित्यर्थः । भृशार्थ इति । अत्यन्तार्थ इत्यर्थः । तथाच गत्यर्थात्तुजधातोः भृशार्थे यङि तस्य लोपे सन्यङोरिति द्वित्वे तुजतु जेति जाते अभ्यासस्य जकारस्य लोपे पश्चात् ताच्छील्यवयोवचनशक्तिषु चानशित्यनेन सूत्रेण भृशगमनशक्तिविवक्षायां चानश् प्रत्यये चकारशकारयोर्लोपे तूतुज आनेति जाते सवर्णदीर्घे तूतुजानेति रूपं द्रष्टव्यम् । हरतेरिति । हृञ् हरणे ञकारोऽनुबन्धार्थः । तस्माद्धरतीति कर्त्रर्थे इकारप्रत्यये गुणे तस्य च रपरत्वे हरीति रूपम् । असुन्निति । तथा च वृतृ वर्तने अस्मात् असुन्प्रत्यये नकारलोपे तस्य डित्कार्यकारित्वेन टिभूतस्य ऋत्वित्यस्य लोपे हरिवास् इति सकारान्तप्रातिपदिके जाते पश्चात् सुप्रत्यये तस्य लोपे 'अत्वसन्तस्य चाधातोः' इत्युपधादीर्घे प्रातिपदिकान्त्यसकारस्य रुत्वे विसर्गे च हरिवाः इति रूपं द्रष्टव्यम् । वर्ततेर्वेति । हरिश्चासौ वश्चेति व्युत्पत्तेरिति भावः । भाष्यं तु तात्पर्यकथनपरमित्याह । इति तावदिति । भाष्ये हरिवा इत्यनन्तरं शेषमाह । तस्य सम्बुद्धिरिति । पुरंदर इति । अत एव तस्य हर्यश्व इति प्रसिद्धिरिति ज्ञेयम् । भाष्ये प्राणाश्चक्षुराद्याः विषयाणां हरणात् विषयेषु पुरुषमनसोऽपहरणात् हरय इतीरिताः । तेषु प्राणेषु वर्तत इत्यस्माद्धेतोः परमेश्वरो हरिवा इति सम्बन्धः । अथवा तान् हरिशब्दवाच्यान् प्राणान् तान् विषयान् प्रति गमयेत् प्रापयेत् प्रापयेदिति हेतोः असौ परमेश्वरो हरिवा इत्यर्थो द्रष्टव्यः । वृतीति । वृतु वर्तने इति धातुरित्यर्थः तथा(चा)त्र रूपसाधनम् । असुन् प्रत्ययो डिच्चेति पूर्वोक्तरीत्या रूपं द्रष्टव्यम् । वातेरिति । वा गतिगन्धनयोरिति धातोः । इदं चेति । रूपमित्यर्थः । अत्रापि धातोरसुन् प्रत्यये तस्य डित्वात् टीभूताकारलोपे वस् इति जाते रुत्वे विसर्गे च सति वरितिरूपं द्रष्टव्यम् । हरिवान्वापीति । इदं पुरन्दरपक्षे व्याख्यानम् ।

ननु तर्हि हरिशब्दात् तदस्यास्तीत्यस्मिन्नर्थे मतुप्प्रत्यये उप् इत्यस्य लोपे उगिदचां सर्वनांमस्थानेऽधातोः इत्यनेन अधातुत्वान्नुमागमे मित्वादन्ते जाते हरिमन् त् इति जाते तकारलोपे सर्वनामस्थाने चासम्बुद्धाविति नान्तत्वादुपधादीर्घे सति हरिमानिति स्यादित्यत आह । छन्दसीर इतीति । इवर्णान्तात् रेफान्तात् परस्य मतोर्मस्य वः स्याच्छन्दसीति सूत्रार्थः । त्रिवतीत्याद्युदाहरणम् । तथाच हरिवच्छब्दस्य सम्बुद्धौ हरिवन्निति स्यात् । हरिशब्दान्मतुप्प्रत्यये तस्य वकारे नुमागमे हल्ङ्याबिति सोर्लोपे हरिवन्नित्येव सम्बुद्धेर्निष्पद्यमानत्वेन हरिव इति सम्बुद्धेरयोगादित्यत आह । मतुब्वसोरिति । मत्वन्तवस्वन्तपदयोः नकारस्य रुः स्यात्सम्बुद्धौ छन्दसीति सूत्रार्थः । तथाच हरिवन्निति हरिवच्छब्दसम्बुद्धौ नकारस्य रुत्वे विसर्गे च सति हरिव इत्येव भवति । अधीहि भगव इतिवदिति भावः । यद्यपि हरिभिर्वर्ततेऽथवा । हरिवान्वार्थ इति

पक्षयोः अर्थतो न भेदः तथापि पूर्वं हरिव इत्यत्र व इत्येतत् वृतु वर्तन इति धातुरूपमङ्गीकृत्य व्याख्यातम्। अत्र तु मतुपो मकारस्य आदेशभूतोऽयं वप्रत्यय इत्यङ्गीकृत्येति भेद इति द्रष्टव्यम्। विष्णुनेति। उपेन्द्ररूपमित्यर्थः। चनोधा इत्यादाविति। हे सहसो वायोर्वह्ने पुत्राग्ने चनः सुखं धाः अधाः धेहीत्यर्थः। ऋगर्थमेकीकृत्याह। हे हरिव इत्यादिना। तूतुजानः सन्निति भृशं गतिमान् सन् वेगवान् सन्निति यावदित्यर्थः। सोमे मनो धत्स्वेत्यस्य भावमाह। अस्मदीयमिति। सोमं पातुमिच्छन्नित्यर्थः॥ ६॥

## पदार्थदीपिका

ननु शुभाधिपाविति व्याख्याने शुभपती इति भवितव्यं शुभस्पती इति कथमित्यत आह॥ पारस्करप्रभृतित्वादिति॥ यद्यपि शुभशुंभदीप्तावित्यस्मात् संपदादित्वाद्भावे क्लीबन्तस्य षष्ठ्यैकवचने षष्ठ्याः पतिपुत्रेत्यादिना विसर्जनीयस्य सत्वमभिप्रेत्य शाकल्येन द्विधा विभज्य पदं पठितं तथापि ऋष्यन्तरस्यैकपदत्वेन दर्शनमभिप्रेत्य शुभाधिपाविति भाष्यकृता व्याख्यातमित्यवधेयम्॥ यजतेरिति॥ सुयजोङ्वनिप् इति यजतेः ङ्वनिप् प्रत्यये वनोरचेति ङीपि तत्संनियोगेन रेफादेशे यज्वरीशब्दनिष्पत्तिरिति भावः॥ न च वनो नहश इति वार्तिकेण हशंताद्विहितस्य वनः ङीप् रयोर्निषेधात् यज्वेत्येव स्यादिति वाच्यम्॥ छान्दसत्वाश्रयणात् निषेधस्यानित्यत्वाद्वा उक्तं च न्यासकारेण प्रायिकोयं निषेधः। तेनावावरीति सिद्धमिति॥ चर इति तु श्रुतलब्धार्थानुवाद इति बोध्यम्॥ यद्यपि सुयजोङ्वनिपिति सूत्रेण कर्तरि ङ्प्रत्ययोविहितो नकारणे नच यागकरणानामन्त्रानां कर्तृत्वानुपपत्तिः॥ असिः छिनत्तीतिवत् स्वव्यापारे कर्तृत्वविवक्षया तदुपपत्तेः तथाच करणे वर इत्यनुवादो नयुक्तः तथापि करणे कर्तृत्वविवक्षयेत्यभिप्रेत्य वा कर्तरि विहितोपि वरप्रत्ययः छान्दसत्वात्करणेपि भवतीत्यभिप्रेत्य तथोक्तमिति ध्येयम्॥

केचित्तु उक्तप्रकारेण यज्वरीशब्दनिष्पत्तिरत्र न युज्यते अन्नानां यज्ञकरणानां तत्कर्तृत्वायोगात्। क्वनिपश्च कर्तरिविधानादिति भावेन यज्वरीत्यस्य भाष्ये यज्ञज्ञानीति यत्प्रतिपदं यस्यार्थकथनरूपतया यज्ञसाधनानीतिवाक्यं व्याख्यायोक्तार्थे यज्वरीतिपदं व्युत्पादयतीति च यजतेरिति वाक्यमवतार्य कृगृ शृवृञ्चतिभ्यः इत्यादिना विधीयमानः ष्वरच् प्रत्ययो बहुवचनाद्यजतेः करणेपि भवति टित्वाच्च ङीबिति तात्पर्यमाहुः॥ चायृ पूजानिशामनयोरित्यस्माच्चायतेः ह्रस्वश्चेत्यनेन सूत्रेणासुन् प्रत्यये आकारस्य ह्रस्वेचानुकृष्टनुगागमे लोपोव्योर्वलीति यकारलोपे

निष्पन्नचनस् शब्दादात्मनइच्छतीत्यर्थे सुपः आत्मनः क्यजिति क्यचूप्रत्यये सनाद्यन्ताधातव इति धातुसंज्ञायां लोण्मध्यमपुरुषद्विवचनान्तस्य तमित्यस्य सुप इत्युक्तस्येच्छाकर्मणोत्रेष इति पृथग्गृहणेन विवक्षितत्वादिच्छाया अपि फलापर्यवसायिन्या अप्रयोजकत्वेन आत्मन इति षष्ठयुक्त योग एव तात्पर्ये वाच्ये छन्दसि परे छायामपीति वक्तव्याद्धाष्येन योजयतमित्यर्थ उक्त इति भावेन तात्पर्यमाह ॥ प्रयच्छतमिति ॥ अस्तु वात्मेच्छायामेवायं क्यचूप्रत्यय इति भावेन भाष्ये प्रकारान्तरेण व्याख्यातं यज्ञ इत्यादि तस्य तात्पर्यमाह ॥ यद्वेत्यादिना स्वीकुरतमित्यन्तेन ॥ अभिप्रायान्तरमिति ॥ अस्मिन् पक्षे औदार्यवन्ताविति तात्पर्यस्यासंभवादिति भावः ॥ इनिरिति ॥ किच्चेति शेषः ॥ कित्वादातोलोप इटिचेत्याकारलोपः ह्रस्वलोपाविति उपपदाकारस्य ह्रस्वः उकारस्य लोप इति भावः ॥ तद्धिता इति इनि तद्धिता इति बहुवचनलब्धवार्ति-कादिति भावः ॥ १ ॥

दसुविभेदन इति ॥ यद्यपि दसु उपक्षय इति दिवादौ पठ्यते तथापि भेदका इति भाष्यानुसारेणोपक्षय एव भेदनतया व्याख्यात इत्यवगन्तव्यम् ॥ ततोर इति ॥ स्फावितं चेति सूत्रे दहिदसिदंभीतिपाठात् तेन रक् प्रत्यय इत्यर्थः ॥ व्युत्पत्तिस्तु दस्यतीति दस्र इति द्रष्टव्या ॥ ओवृश्च् छेदन इत्यस्मान्निष्पन्नस्य ओदित्वेपि नत्वाभावच्छान्दसः ॥ वृक्तशब्दस्य स्तुतमिति व्याख्यानं कथमुपपद्यत इत्यत आह ॥ अनेकार्थत्वादिति ॥ आकुप्रत्यय इति तद्धिता इति बहुवचनबलादित्यर्थः ॥ युष्मदो युवादेशश्चेति प्रत्ययोत्तरपदयोश्चेत्यत्र त्वमावेकवचन इत्यस्येव संख्याविशिष्टार्थाभिधानविषयविधित्वाविशेषात् युवावौ द्विवचन इत्यस्याप्यनुवृत्तेर्मपर्यन्तस्य युवादेशे युवदाकु इति प्राप्ते युष्मदस्मदोरनादेश इत्यविभक्तावपि व्यत्ययेनात्वं त्वावय इति यथेति भावः ॥ त्यबिति ॥ अव्ययात्पवित्यत्र त्यबितियोगविभागेनेत्यर्थः ॥ अत एव तथैवोत्तरत्र वक्ष्यतीतिध्येयम् ॥ ह्रस्वश्चेति ॥ नासाशब्दांत्याकारस्येति शेषः ॥ नभ्राडित्यादिनेति आदिपदेन नपान्नासत्येत्यादि सूत्रशेषग्रहणम् ॥ भवतेरिति ॥ अवावतृभ्योनिरित्यतो निरित्यनुवृत्तौ वृत्तेरिति सूत्रेणेत्यर्थः ॥ सामर्थ्याय षष्ठ्यर्थमाह ॥ रुद्रमनुवृत्तिरिति ॥ ३ ॥

अभिधानादिति ॥ अद्भुतशब्दस्य भद्रपर्यायत्वादभिधानस्य प्रकृतोपयोगो द्रष्टव्यः ॥ ननु चिच्छब्दस्य पदत्वात् झलां जशोन्त इति जस्त्वापत्तौ चिद्रमिति स्यादित्यत आह ॥ पदसंज्ञेति ॥ अयस्मयादीनि छन्दसीति भसंज्ञाश्रयणादिति भावः ॥ इत्रप्रत्यय इति ॥ व्यत्ययो बहुलमित्यु-क्तत्वादितिभावः ॥ डिच्चेति ॥ डित्वाट्टिलोप इत्यर्थः ॥ अभिधाकारणेनेति ॥ भेदनं भित् नभित् अभित् तेन कारणेनेति सामानाधिकरण्यं वा भाष्ये यत्तत्पदाध्याहाराभिप्रायेण टीकाकारीयं

तात्पर्यकथनं वा इदमिति द्रष्टव्यम् ।। अन्यस्त्विति ।। प्रसिद्धेन्द्र इत्यर्थः ।। क्त्वार्थ इति व्यत्ययादिति भावः ।। युष्मद इति त्वामिछन्तीत्यर्थे सुप आत्मनः क्यजिति सूत्रेणेति शेषः ।। तदन्तादुरिति क्यजन्तात् क्याछन्दसीति सूत्रेणेति ऐषः ।। तथाच युष्मच्छब्दात्सुप आत्मनः क्यजिति त्वामिछन्तीत्यर्थे क्यचि प्रत्ययोत्तरपदयोश्चेति मपर्यन्तस्य त्वादेशे तनादिभ्य कृञ् उरित्यत उरित्यस्यानुवृत्तौ क्याच्छन्दसीत्युप्रत्यये अतोलोप इति क्यजकारस्थलोपे त्वयव इति प्राप्तौ युष्मदस्मदोरनादेश इति अविभक्तावपि हलादौ व्यत्ययेनात्वे त्वायव इति सिध्यतीति भावः ।। तथाच न परंपरेति एतच्च पूर्वपक्षेऽस्वरसबीजं द्रष्टव्यम् ।। नत्विति ।। अनेनैवकारस्योत्तरत्रैवान्वय इत्युक्तं भवति ।। अनेनेति ।। सोमशब्दस्य देवतापरस्य तत्सम्बन्धादचेतनपरत्वप्रतिपादनेनेत्यर्थः ।। यथाश्रुते चेतनानां सोमानामिच्छाभिधानानुपत्तेरिति द्रष्टव्यम् ।। अनेन अधिहरिरित्यनेनेत्यर्थः ।। भृत्याहि स्वामिनमिछन्तीति प्रसिद्धमिति भाव इत्यप्याहुः ।। ४ ।।

ईषितोधीष्ट इतीष् सहलुभरुष रिष इतींडविकल्पात् रूपद्वयसिद्धिरिति भावः ।। प्रेरित इति ।। इषुतावित्यस्मा(धातो)न्निष्ठायामिडागम इति भावेन इषित इत्यस्य भाष्ये प्रेरित इति प्रतिपदं दत्तमिति भावः ।। भत्क्येति ।। जवतिः सौत्रो धातुः प्रेरणे वर्तत इति भावः ।। श्र्युकः कितीति इट्प्रतिषेधः ।। पदसामर्थ्यादिति ।। यजमानस्येत्येव वक्तव्ये सुतवत इति विशेषणोक्तिसामर्थ्यादिति भावः ।। अत्र अन्येषामपि दृश्यत इति संहितायां दीर्घ इति बोध्यम् ।। ५ ।।

तुजतिर्गत्यर्थ इति ।। यद्यपि तुजहिंसायामिति भूवादौ पठितं तथाप्यनेकार्थत्वाद्धातूनां गत्यर्थत्वमिति भावः ।। ननु तुजेर्गत्यर्थत्वात् नित्यं कौटिल्ये गतावित्यत्रच नित्यग्रहणस्य गतिवचनात् नित्यकौटिल्य एष नतु क्रियासमभिहारे यङिति नियमार्थत्वात् ।। भृशार्थस्यापि क्रियासमभिहाररूपत्वात् कथं तदर्थे यङित्यत आह ।। छन्दसीति । भाषायामभिधानादिति भावः ।। तस्य लुगिति यङोचिचेति सूत्रेणेत्यर्थः ।। ततश्चानशिति ।। शक्तौ गम्यमानायां चानशप्रत्ययः ।।

भृशगमनशक्तिरेव वेग इति भावः ।। तुजादीनांदीर्घोभ्यासस्येत्यभ्यासदीर्घत्वमिति ज्ञेयम् ।। न च शानच्प्रत्यये प्रत्ययस्वरस्यैवं सति शिष्टत्वाद्युदात्तत्वं तूतुजानपदस्य न स्यादिति वाच्यम् ।। पिनड्वादित्वेन वा ग्रामादित्वेन वा अभ्यासानामादिरित्यनेन वाद्युदात्तत्वसम्भवात् ।। कर्तरीकार इति ।। ईरित्यस्यानुवृत्तौ हृपिरुहिवृतिविदिकीर्तिभ्यश्चेति सूत्रेणेन्प्रत्यय इत्यर्थः । अस्मादसुनिति ।। असुनिति सूत्रेणेति शेषः ।। डिच्चेति ।। डित्वाट्टिलोप इत्यस्य सकृदावेदितम् ।। वर्तते चेति ।। हरिश्चासौ वरश्चेति व्युत्पत्तिरिति भावः । भाष्ये तु तात्पर्यकथनमित्यत आह ।। इति यावदिति ।।

येनेत्यनन्तरं भाष्ये शेषमाह तेनेति ॥ हरिवा इत्यनन्तरं तमाह ॥ तस्य सम्बुद्धिर्हरिव इति ॥ हरिनामकाश्वैर्वर्तत इति ॥ हरिनामकाश्वानारुह्य प्रवर्तत इत्यर्थः । उत्तरत्र हरिनामकाश्ववानिति हरिनामकाश्वस्वामित्वं विवक्षितमिति न पौनरुक्त्यम् ॥ वातेर्वेति ॥ असुन् प्रत्ययो डिच्चेति पूर्ववत् साधनमिति भावः ॥ छन्दसीर इति ॥ इवर्णान्तात् रेफांत्ताच्च मतोर्मस्य वकारो भवतीति सूत्रार्थः । हरयोऽस्य सन्तीति मतुपि छन्दसीर इति मतुप् मकारस्य वत्वे सम्बुद्धौ उगिदचामिति नुमि संयोगान्तलोपे नकारस्य मतुवसोः रुः सम्बद्धौ छन्दसीत्यनेन च रुत्वे विसर्जनीये च सति हरिव इति सिद्धं भवतीति भावेनाह ॥ मतुवसोरुरिति ॥ चनशब्दार्थमाहेति ॥ चायृपूजनिशामनयोरि-त्यस्मात् चायतेः ह्रस्वश्चेत्त्यनेन विधीयमानोऽसुन् नुगागमो ह्रस्वस्य बाहुलकात् मनः सुखयोरप्यभिधेययोर्भवतीति भावः । ननु दधातेर्लोटि थासः स इति सेभावे सवाभ्यां वामावित्त्याकारस्यावादेशे सार्वधातुकत्वेन शपि जुहोत्यादित्वात्तस्य श्लौ सति 'श्लौ' इति द्विर्भावे अभ्यासस्य ह्रस्वे अभ्यासे चर्चेति चर्त्वे ङित्सार्वधातुकपरत्वात् नाभ्यस्तयोरात् इत्यत्कारलोपे सकारपरतया दधस्तयोश्चेति एषन्तस्य घञो बशो भश्भावे परस्य खरिचेति चर्त्वे धत्स्वेति भवितव्यं व्यदधिष्वेति कथमित्यतः थासः सार्वधातुकत्ववच्छन्दस्युभयथा इत्यार्धधातुकत्वस्यापि सत्वादार्धधातुकसंज्ञायां सत्यामिडागमेन भश्भावाद्यप्राप्त्या आतो लोप इटि चेत्याकार लोपे आदेशप्रत्यययोरिति षत्वे दधिष्वेति छान्दसि रूपसिद्धिरिति भावेनाह ॥ दधिष्व धत्स्वेति ॥ न चाल्लोपस्य स्थानिवत्वेनाझषंत्तत्वात् च भश्भाव इति वाच्यम् । तथात्वे हि भश्भावविधान-मनवकाशं स्यात् न हि विनाल्लोपं धाञ् एषन्तः संभवति ॥ अस्तु वा स्थानिवत्वं तथापि श्रुतिकृत झषन्तत्वस्य श्रयिष्यमाणत्वात् नानुपपत्तिरिति ध्येयम् ॥ ६ ॥

## टीकाविवृतिः

अश्विनाद्वादशाश्विनेन्द्रवैश्वदेवसारस्वतास्तृचा इत्यनुक्रमणिकायां अश्विनेति सूक्तप्रतीकम् । द्वादशेति सङ्ख्योच्यते । तत्राश्विनादिभेदेन चत्वारस्तृचा उच्यन्त इत्यर्थं मनसि निधायाह ॥ अश्विनेत्यादीति ॥ अश्विनौ देवताऽस्यस्तः आश्विनः । सास्यदेवतेत्यणि आदिवृद्धौ इन्नण्यनपत्य इति प्रकृतिभावेन नस्तद्धित इति टिलोपो न ॥ अश्विनायज्वरीः ॥ क्षिप्रनामसुपाठाद्द्रवच्छब्दः क्षिप्रार्थकोपि परंप्रति शीघ्रगन्तृद्रव्यपरोऽपि । क्लीबे शीघ्राद्यसत्वे स्यात्रिष्वेषां भेद्यगामि यदित्यमरोक्तेरित्यभिप्रेत्य द्रवत्पाणी इति पदं क्षिप्रहस्ताविति यद्भाष्ये व्याख्यातं तत्तात्पर्यमाह ॥ औदार्यवन्ताविति ॥ शुभशुंभशोभार्थे इत्यस्माद्भावे संपदादित्वात्क्विपि भकारान्ते षष्ठ्येकवचनान्ते

शुभ इति पदे विसर्गस्य कुप्वोः कः पौचेत्येतदपवादत्वेन पतिशब्दे परे षष्ठ्याःपतिपुत्रेतिसकारे शुभस्पती इति रूपसिद्धिमङ्गीकृत्यापि पक्षान्तरमाह ॥ पारस्करप्रभृतित्वादिति ॥ घञर्थे कविधानमिति कप्रत्यये अकारान्तशुभशब्दात्षष्ठ्याः सुपांसुलुगिति लुकि संहितायां पारस्करादित्वात्सुडित्यर्थः । तथाच भूम्याददे इतिवत्पदकाले विसर्गसिद्धिः । आधिक्येऽधिकमिति सूत्रात्सुटोऽधिकार्थत्वमभिप्रेत्य भाष्ये शुभाधिपावित्युक्तम् । अन्यथा शुभपावित्यवक्ष्यत् । यथास्थितषष्ठ्यन्तत्वपक्षपरित्यागेन लुक् सुडाद्याश्रयणं त्वर्थविशेषसिध्यर्थमिति भावः ।

अथवा शाकलदृष्टपदानुसारेणैव व्याख्यातव्यमिति नियमाभावादृष्यन्तरदृष्टानुसारेणापि व्याख्यातुं शक्यत्वाच्छुभस्पती इति षष्ठीसमासात्मकमेकमेव पदमित्यभिप्रेत्योक्तं पारस्करादि-त्वात्सुडिति । अत एव यास्केन ह्यरुणोमासकृद्वृक इत्यत्र मा इति सकृदिति शाकलदृष्टपदविभागं त्यक्त्वा ऐकपद्येन अरुण आरोचनो मासकृन्मासानां चकर्ता चन्द्रमावृक इति व्याख्यातम् । किंच वने नवायोन्यधायिचाकन् । वन इव वायो वेः पुत्रश्चायं नितिवावेतिचय इतिच चकारशाकल्य उदात्तं त्वेवमाख्यातमभविष्यदिति शाकल्यदृष्टपदद्वयं वा इतिय इति दूषयित्व वेः पुत्र इत्यर्थकमेकमेवपदं साधितम् । बहुभुजावित्यस्यार्थान्तरत्वद्योतनाय शेषमाह ॥ वेति ॥ भोक्तारौ अभ्यवहर्तारौ ॥ उभयार्थत्वादिति ॥ भुजपालनाभ्यवहारयोरिति धातोरित्यर्थः ॥ यजतेः करण इति ॥ कृगॄशॄवृञ्चतिभ्यःष्वरजित्युक्तोबाहुलकाद्यजेरपि करणे ष्वरच् षित्वान्ङीषि व्यत्ययेनाद्यु-दात्तत्वमित्यर्थः । सुयजोङ्वनिबिति ङ्वनिपि वनोरचेति ङीब्रयोर्यज्वरीरिति रूपसिद्धावपि ङ्वनिपःकर्तरि विधानादिष इत्येतद्विशेषणत्वानुपपत्तेस्तन्नोक्तम् । चनस्यतमित्यत्र चायृपूजानि-शामनयोरिति धातोश्चायतेरन्नेह्रस्वश्चेत्यसुन्नुडागमयोःकृतयोर्लोपो व्योर्वलीति यलोपे चनस्शब्दनिष्पत्तावस्मात्सुप आत्मनः क्यजिति छान्दसत्वात्स्वात्स्वार्थे क्यचि सनाद्यन्ता इति धातुत्वे लोण्मध्यमपुरुषद्विवचने चनस्यतमिति रूपम् । अत्र वाक्ये इष इति कर्मण उक्तत्वाच्चनस्शब्दवाच्यान्नस्याविवक्षितत्वादस्य शब्दस्य सम्बन्धमात्रे तात्पर्यमित्यभिप्रेत्य भाष्ये उक्तं योजयतमिति तद्व्याचष्टे ॥ प्रयच्छतमिति ॥ क्यच आत्मेच्छायां विधानात्स्वार्थिकत्वाङ्गीकारो न स्वरस इत्यत आह ॥ यद्वेति ॥ स्वार्थ इति ॥ बहुलमेतन्निदर्शनमित्यत्र धातुवृत्तिकारैः चुरादिणि चोदर्शनमन्येभ्योपिधातुभ्यो बहुलं भवतीति व्याख्यानादिति भावः । इच्छतमित्यर्थः ॥ अभिप्रायान्तरमिति ॥ स्वभागस्वीकारप्रार्थनपक्षे औदार्याभिप्रायस्यासङ्गतेरित्याशयः ॥ इनिरिति ॥ गमेरिनिरित्यधिकारे परमे किदित्युक्तेरस्मादपि भवति । कित्वादातो लोप इत्याकारलोपः ॥ विन्निति ॥ वृद्दभ्यांविन्नित्युक्तोस्मादपि बहुलोक्तेर्भवतीत्यर्थः ॥ तद्धिता इतीनिति ॥ धिष्ण्यं

सद्मनि नक्षत्रे स्थाने शक्तौ चपावक इति विश्वकोशोक्तेरित्यर्थः । कालादिविशेषानु-क्तेर्मुख्यामुख्ययोरिति न्यायेनभाष्ये सदा सर्वेत्युक्तम् । धिष्ण्यशब्दान्नपुंसकलिङ्गात्परस्यौकारस्य सुपांसुलुगित्याकारादेश इति भावः ॥ २ ॥

दस्रायुवाकवः ॥ दस्विति ॥ यद्यपि दिवादौतसु उपक्षये दसुचेतिपठ्यते तथाप्युपक्षयो विभेदनमिति वानेकार्थत्वाद्धातूनामिति वा दसुविभेदन इत्युक्तम् ॥ ततोर इति ॥ स्फायितंचीत्यादिना रगित्यर्थः । आमन्त्रितत्वादाद्युदात्तो दस्रशब्दः । ओव्रश्चूच्छेदन इत्यस्मात् क्ते ऊदित्वादिडभावे । ग्रहिज्येति संप्रसारणे स्कोःसंयोगाद्योरिति सलोपे चोःकुरिति कुत्वे वृक्तेति रूपम् । अस्य छेदितमित्यर्थे वक्तव्ये स्तृतेति कथमुक्तमित्यत आह ॥ अनेकार्थत्वादिति ॥ आकुप्रत्यय इति ॥ तद्धिता इति सूत्रादिति भावः ॥ युष्मद इति ॥ युवावौ द्विवचन इति द्वित्वार्थकत्वात् युष्मच्छब्दस्य युवादेशः । अत्र सूत्रे विभक्तावित्यनुवृत्तेरत्रापि युवयोरिति षष्ठ्याः सुपोधातुप्रातिपदिकयोरिति लुका लुप्तत्वेपि नञानिर्दिष्टस्यानित्यत्वान्नलुमतांगस्येति निषेधाभावेन प्रत्ययलक्षणेन विभक्तिपरत्वादिति भावः । ननु नञानिर्दिष्टमनित्यमित्यस्य ज्ञापकाभावान्न्याय-सिद्धत्वाभावाच्च मुनित्रयासंमतस्य परिभाषात्वाभावात्कथमनेन वचनेन नलुमतांगस्येति निषेधाभाव इति चेन्न । इकोचि विभक्तावित्यत्राचीति पदेन ज्ञापितत्वात् । तथाहि । इगन्तक्लीबस्याजादिविभक्तौ परतो नुमागमोनेन विधीयते । अत्र हलादिविभक्तौ नुम्व्यावृत्तये खल्वज्ग्रहणम् । हलादिविभक्तौच नुमागमे जातेपि नलोपे कृते वारिभ्यामित्यादिरूपसिद्धेः संबुद्धिमात्रव्यावृत्त्यर्थता वाच्या । तत्र नङिसंबुध्द्योरिति नलोपनिषेधात् । नचसंबुद्धौ नुंप्राप्नोति । संबुद्धेःस्वमोर्नपुंसकादिति लुका लुप्तत्वान्नलुमताङ्गस्येति प्रत्ययलक्षणनिषेधेन विभक्तिपरत्वा-भावात् । अतोज्ग्रहणंव्यर्थं सन्नञानिर्दिष्टस्यानित्यत्वं ज्ञापयति । तेन नलुमतेत्यस्य नञानिर्दिष्टत्वादनित्यत्वेन प्रत्ययलक्षणनिषेधाभावे प्रत्ययलक्षणेन विभक्तिपरत्वान्नुंप्राप्तौ तन्निवृत्त्यर्थमज्ग्रहणं सार्थकम् ।

ननुनलुमतेत्यस्यानित्यत्वज्ञापनेन चारितार्थ्यात्परिभाषाकल्पकत्वं नेति चेन्न । बहुप्रयोजन-वत्त्वादस्याःपरिभाषायाः । एकंतावन्नलोकाव्ययेत्यत्र सूत्रे व्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेध इति वार्तिकं न कर्तव्यं भवति । प्रयोजनान्तराणि चतत्र तत्र शास्त्रे प्रसिद्धानि । अत एवमहाभाष्येउक्तम् । एवं तर्हि सिद्धेसति यदज्ग्रहणं करोति तज्ज्ञापयत्याचार्यो भवतीह कश्चिदन्योपिप्रकारः प्रत्ययलक्षणं नामेति । कश्चिदन्योपिप्रकारः नञादिनिर्दिष्टस्यानित्यत्वरूपो भवतीति ज्ञापयति । तेनज्ञापनेन प्रत्ययलक्षणंनाम कार्यमिह भवतीत्यर्थः । अन्यथान्योपि प्रकार

मान्योक्तिं विहाय नलुमतांगस्यानित्यत्वं ज्ञापयतीति विशेषत एवावक्ष्यत् ॥ भवार्थ इति ॥
त्यबित्यत्र त्यबिति योगविभागादित्यर्थः । योगविभागादिष्टसिद्धिरित्युक्तेर्नातिप्रसङ्गः ॥
चीति ॥ सद्धर्मवाचीत्यर्थः ॥ सद्भाव इति ॥ सद्भावे सत्त्वे साधुभावे समीचीनधर्मेच
तत्प्रयुज्यत इत्यर्थादित्यर्थः ॥ नस्यालोप इति ॥ नभ्राण्नपान्नवेदानासत्येत्यादिना
कृतिभावोक्तेर्नलोपो नञ इति प्राप्तो नलोपो नेत्यर्थः । व्यवहितत्वाद्यथायोग्यमन्वयमाह ॥
इति ॥ अनुवशत्वेन तदधीनत्वेन ॥ अनिरिति ॥ वृत्तेश्चेति सूत्रेऽनिरित्यनुवृत्तेरिति भावः
स्येति ॥ वर्तनिः प्रवृत्तिः । षष्ठ्यर्थमाह ॥ रुद्रमन्विति ॥ अनुर्लक्षण इति
नीयत्वाद्द्वितीयेति भावः ॥ वर्तनिर्मार्ग इति ॥ वर्तनिर्मलिनेपथीतिः
शोक्तेरित्यर्थः । वासुदेवोश्विनावपीत्यतः परमेत इति शेषो ज्ञेयः ॥ कस्मिन्विति ॥
क्यमिदम् । अहं कस्मिंश्चेतन उत्क्रान्ते देहान्निर्गते उत्क्रान्तो भविष्यामि कस्मिन्वा देहे
प्रविष्टेऽहं प्रतिष्ठास्यामीति विचार्यैतादृशो मुख्यवायुरेवेति निश्चित्य प्राणमसृजतेत्यर्थः ।
मार्गेण गतिः ॥ ३ ॥

याहि चित्रभानो ॥ अयमैन्द्रस्तृचः ॥ चित्रमालेख्यमिति ॥ हस्तिजात्यन्तरे भद्रो
च्छ्रेष्ठसाधुनोरिति विश्वकोशोक्तेर्भद्रशब्दस्य श्रेष्ठार्थकत्वात् श्रेष्ठस्याद्भुतत्वेन चित्रशब्दस्य
र्थकत्वेन चित्रं भद्रमित्युक्तमिति भावः । चिच्छब्दस्यायस्मयादित्वमाश्रित्य
यणादिति शेषमभिप्रेत्याह ॥ पदसंज्ञानाश्रयणादिति ॥ इत्रप्रत्यय इति ॥ अशित्रादिभ्य
ति सूत्रेणेत्यर्थः । डित्वं तु बाहुलकं ज्ञेयम् । रातेरिति । अनेन चितं रातीति विग्रहे
सर्गेक इति क इत्युक्तं भवति ।

भानुशब्दस्य रश्मयो ज्ञानमिति व्याख्यानद्वयं चेद्व्याख्यानांतरत्वद्योतकवाशब्दः स्यादित्यत
रश्मय इत्यनूद्येति । अत एव तेजो वेत्यनेन न पौनरुक्त्यम् । तेजसोपि
श्मिविशेषत्वात् भानुशब्दस्य रश्मिपर्यायत्वेन तत्रापि रश्म्यनुवादेन तेज इति व्याख्यानं
। अभिदाकारणेनेति । भित् भेदः । सम्पादित्वात्क्विप् । नभित् अभित् तया । हेतौ
भावः । भगवांश्चेदिति । वाच्यत्वेन विवक्षित इति शेषः । विष्णौ
भानुत्वोक्तेर्व्यावर्त्यमाह । अन्यस्त्विति । चित्र भानुरित्यनुवर्तते । अण्वीभिरित्यस्य कथं
भिरिति व्याख्यानम् । अणुशब्दाद्धेतोर्गुणवचनादिति ङीप्यण्वीति रूपसिद्धेः
रिति व्याख्येयत्वात् । तथा पटीभिरिति कस्य व्याख्यानम् । किं च तस्य प्रयोजनमिति न
त्यत आह । अण्वीभिरिति । तथाच सूक्ष्माभिरित्येव पदार्थः । सूक्ष्मतंतुभिरिति तु

तात्पर्यार्थः । सोमशोधनस्य पटेन विनाऽसम्भवात्सोमशोधनार्थं पटीभिरिति शेषोक्तिर्भाष्य इत्युक्तं भवति । आकारः क्त्वार्थ इति । पृषोदरादित्वात् क्त्वाप्रत्ययनिष्ठहलां लोपेनोर्वरितस्याऽऽकारस्य त्त्वार्थकत्वादिति भावः ॥ युष्मद इति ॥ सुप आत्मनः क्यजिति क्याचि प्रत्ययोत्तरपदयोश्चेति युष्मदस्त्वादेशे पृषोदरादित्वादन्त्यस्याकार इति भावः । तदन्तादुरिति । क्यजंतात्क्याच्छन्द सीत्युप्रत्यय इत्यर्थः । देवतैक्यमिति । सोमशब्दवाच्याभिमानिदेवतैक्यमित्यर्थः । तत्रेति । अभिमानिदेवतास्वित्यर्थः । परंपराश्रयमिति । भृत्यद्वारेणेत्यर्थः । एवेत्यनुवृत्त्यान्वयमाह । अधिपएवेति । अनेनेति । अभिमानिकथनेन । जडसोमानामिच्छाया असम्भवादिति भावः ॥ ४ ॥

इन्द्रायाहिधियेषितः । ऋचि इषित इत्यस्य इषु इच्छायामित्यतः क्तप्रत्यये तीष सहेत्यादि नेटोविकल्पादिषित इष्ट इति रूपद्वयसिद्धिमभिप्रेत्य भाष्योक्तप्रार्थितपदेन संवादयितुमाह । इषितोधीष्ठ इति । स्वबुद्ध्या प्रेरित इति । इषगतावित्यस्मादंतर्णीतण्यर्थान्निष्ठाप्रत्यय इति भावः । जुन् गतावित्यस्मादन्तर्णीतण्यर्थात्के अन्येषामपि दृश्यत इति दीर्घ इति भावेनाह । विप्रजूत इति । दीर्घस्यार्थो भक्त्येति । वाघत इति । वचपरिभाषण इत्यतो लटः शत्रादेशे न्यङ्क्वादीनां चेति कुत्वेन चकारस्य ककारे वर्णव्यत्ययेन घकारे अन्येषामपीति दीर्घ इति भावः । व्यत्ययाद्यर्थोऽसेति । अवयवार्थोयम् । होतुरिति विशेष्योक्तिः । गुरवः वाघतः वृक्तबर्हिष इति ऋत्विङ्नामसुपाठेप्यवयवार्थबलाद्धोतुरित्युक्तम् । सुतावत इत्यस्य यजमानस्येति प्रतिपदघटनायावयवार्थमाह । सोमवत इति । सुताः अभिषुताः सोमा अस्य सन्तीति तथोक्तस्तस्येत्यर्थः ।

ननु पूर्वं सोमयुक्तानि ब्रह्माणि स्तुतिवाक्यानीत्युक्त्वाऽस्यहोतुर्ब्रह्माणि यजमानस्य सोमानिति पश्चाद्व्यवस्थोक्ता । तत्र सोमानिति द्वितीयांतपदादर्शनात्तद्व्यवस्थाप्रदर्शनं न भव्यमिवेत्यत आह । अत्रसोमशब्देति । सामर्थ्यादिति । यजमानस्येत्येव ऋचि वक्तव्ये सुतवत इति विशेषणोक्तिसामर्थ्यादित्यर्थः । अन्येषामपीति दीर्घः संहितायाम् । तद्रूपाचेति । मनोवृत्तिरूपेत्यर्थः । अनर्थान्तरमिति । इच्छात इत्यनेनेति शेषः । अन्योह्यर्थोऽर्थान्तरं न अर्थान्तरं अनर्थान्तरम् । सुतवत इत्येतदिच्छत इत्यनेनाभिन्नार्थकमित्यर्थः । सच स एवेति । चो हेताववधारण इत्यभिधानादित्याशयः ॥ ५ ॥

इन्द्रायाहितूतुजानः । तुजतिर्गत्यर्थ इति । भ्वादिगणेतु जहिंसायामिति पाठेपि हिंसायाः प्रकृतेऽन्वयाभावाद्धातूनामनेकार्थत्वमाश्रित्यैवमुक्तम् । छन्दसि भृशार्थ इति । नित्यं कौटिल्ये

गताविति सूत्रेण गत्यर्थधातोः क्रियासमभिहारापवादेन कौटिल्य एव यङोविधानादस्यापि गत्यर्थत्वाद्वक्रार्थ एव यङ्प्राप्तौ छन्दसीत्युक्तम् । भृशार्थस्य क्रियासमभिहारैकदेशत्वात् । तस्य लुगिति । यङोचिचेत्यत्र बहुलग्रहणादिति शेषः । संज्ञापूर्वकस्यानित्यत्वाद्गुणो यङ्लुकोरिति न । चानशिति । ताच्छील्यवयोवचनशक्तिषु चानशित्यनेन ताच्छील्ये शक्तौ वेत्याशयः । आद्युदात्तत्वं छान्दसम् । कर्तरीकार इति । हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्चेतीन्प्रत्यय इत्यर्थः । उपसंहरन्निति । विनाशयन्नित्यर्थः । भाष्यं तात्पर्यकथनपरमिति द्योतनाय यावदित्युक्तम् । अनेन हरिश्चासौ वाश्चेति विग्रहः सूचितः । भाष्ये येनेत्येतदनंतरं तेनेति शेषं हरिवा इत्यनंतरं परमेश्वर इति शेषमभिप्रेत्याह । तेनेति । भाष्ये हरिवा इति दीर्घान्तव्याख्यानात् श्रुतौ च ह्रस्वान्तपाठात्तत्संवादार्थमाह । तस्य संबुद्धिरिति । इयं शेषोक्तिः । हरिनामकैरश्वैरिति । हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु । सिंहाश्वकपिभेकाहि शुकलोकान्तरेषु चेति विश्वकोशोक्तेरित्यर्थः । अध्यात्मविषयमिति । तथाच प्राणा इन्द्रियाणि विषयाणां हरणाद्ग्रहणान्निमित्ताद्धरय ईरिताः । तेषु नियामकत्वेन वर्तत इति हरिवाः परमेश्वर इति भाष्यं व्याख्यातं भवति । अन्तर्णीतेति । तेन हरीन् इन्द्रियाणि वर्तयेत् गमयेत्प्रवर्तयेदिति हरिवा इति विग्रहः सूचितः । ननु वर्तनार्थकवृतुधातोर्गत्यर्थत्वेन व्याख्यानं कथमित्यनुपपत्तिं मनसि कृत्वाह । वातेर्वेति । अन्तर्णीतण्यर्थादसुनि डित्वेचेति शेषः । हरिवान्वापीति । श्रुतिस्थ हरिवः शब्देनोच्यत इति शेषः । तद्व्युत्पादयति । छन्दसीर इतीति । इकारान्ताद्रेफान्ताच्च परस्य मतोर्मस्य वादेश इति सूत्रार्थः । ततश्च वत्वमिति । हरिवानिति भाष्येप्यनेनैव छान्दसो मतोर्वः । मतुपः तकारस्य रुत्वे विसर्गे च हरिव इति श्रुतिस्थरूपसिद्धिरिति भावः । विष्णुनेत्यतः परं शेषमाह । प्रेरित इति । तथाचोत्तरपदलोपीसमासो हरिव इत्युक्तं भवति । चनोधा इति । विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः । चनोध,: सहसोयहो इत्यस्या ऋचो वक्ष्यमाणोर्थः । हे अग्ने सहसो वायोः यहो पुत्र त्वं विश्वेभिः विश्वैरग्निभिः सह इमं क्रियमाणं यज्ञं तथा इदं स्तुत्यादिरूपं वचश्च स्वीकुर्विति शेषः । चनः सुखमस्मासु धाः अधाः धेहि । धात्रोलुङिसिपिगातिस्थेति सिज्लुकि बहुलं छन्दस्यमाङ्योगेपीत्यडभावे धा इति रूपमिति । आदिशब्दाच्चनोदधिष्व पचतोतसोममित्यादि ग्राह्यम् । यद्यपि चायतेरन्ने ह्रस्वश्चेत्यन्ने वाच्येऽसुन्विधीयते तथापि बहुलग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वान्मनः सुखार्थोपि चनःशब्दो बोध्यः । ननु दधिष्वेति कथमिति चेत् । धात्रो लोटि थासि शपो जुहोत्यादि त्वाच्छ्लौ द्वित्वादौ थासः सेभावे सवाभ्यां वामावित्येकारस्य वादेशे थासश्छन्दस्युभयथे त्यार्धधातुकत्वाच्चेडागमे आतोलोप इटि चेत्याकारलोपे

आदेशप्रत्यययोरिति षत्वे छन्दसि दधिष्वेति रूपम् । भाषायां त्वार्धधातुकत्वाभावात् श्राभ्यस्तयोरात इत्याकारलोपे दधस्तथोश्चेत्यभ्यासदकारस्य भष्भावे परस्य खरिचेति चर्त्वेच धत्स्वेति रूपमित्याशयेनाह । दधिष्व धत्स्वेति ॥ ६ ॥ पञ्चमोवर्गः ॥ ५ ॥

## ऋक्संहिता पदपाठसहिता

(२५) ओमा॑सश्चर्षणीधृतो॒ विश्वे॑देवास॒ आग॑त ॥ दा॒श्वांसो॑ दा॒शुषः॑ सु॒तम् ॥ ७ ॥

(प०) ओमा॑सः । च॒र्ष॒णि॒ऽधृ॒तः॒ । विश्वे॑ । दे॒वा॒सः॒ । आ । ग॒त ॥ दा॒श्वांसः॑ । दा॒शुषः॑ । सु॒तम् ॥ ७ ॥

(२६) विश्वे॑ दे॒वासो॑ अ॒पुरः॑ सु॒तमाग॑न्त॒ तूर्ण॑यः ॥ उ॒स्रा इ॑व॒ स्वस॑राणि ॥ ८ ॥

(प०) विश्वे॑ । दे॒वासः॑ । अ॒प्ऽतुरः॑ । सु॒तम् । आ । ग॒न्त॒ । तूर्ण॑यः ॥ उ॒स्राःऽइ॑व । स्वस॑राणि ॥ ८ ॥

(२७) विश्वे॑ दे॒वासो॑ अ॒स्रिध॒ एहि॑ मायासो अ॒द्रुहः॑ ॥ मेधं॑ जुषन्त॒ वह्न॑यः ॥ ९ ॥

(प०) विश्वे॑ । दे॒वासः॑ । अ॒स्रिधः॑ । एहि॑ऽमायासः । अ॒द्रुहः॑ ॥ मेधम् । जु॒ष॒न्त॒ । वह्न॑यः ॥ ९ ॥

(२८) पा॒व॒का नः॒ सर॑स्वती॒ वाजे॑भिर्वा॒जिनी॑वती ॥ य॒ज्ञं व॑ष्टु धि॒या व॑सुः ॥ १० ॥

(प०) पा॒व॒का । नः॒ । सर॑स्वती । वाजे॑भिः । वा॒जिनी॑ऽवती ॥ य॒ज्ञम् । व॒ष्टु॒ । धि॒याऽव॑सुः ॥ १० ॥

(२९) चो॒द॒यि॒त्री सू॒नृता॑नां॒ चेत॑न्ती सुमतीनाम् ॥ य॒ज्ञं द॑धे॒ सर॑स्वती ॥ ११ ॥

(प०) चो॒द॒यि॒त्री । सू॒नृता॑नाम् । चेत॑न्ती । सु॒ऽम॒ती॒नाम् । य॒ज्ञम् । द॒धे॒ । सर॑स्वती ॥ ११ ॥

(३०) म॒हो अर्णः॒ सर॑स्वती॒ प्र चे॑तयति के॒तुना॑ ॥ धियो॒ विश्वा॒ वि रा॑जति ॥ १२, ६, ३, १ ॥

(प०) म॒हः । अर्णः॑ । सर॑स्वती । प्र । चे॒त॒य॒ति॒ । के॒तुना॑ ॥ धियः॑ । विश्वाः॑ । वि । रा॒ज॒ति॒ ॥ १२,६,३,१ ॥

## ऋग्भाष्यम्

आसमंतात्स्वीकृता मा ओमा इति च शब्दिताः ।
ओंनामा भगवान्विष्णुस्तेन वा निर्मिताः सुराः ।
ओता मानेषु मावैषु प्रोता ओमा इतीरिताः ।
प्रजाश्चर्षणयः प्रोक्ता विश्वे तेच प्रवेशनात् ।
सर्वे वाथविशां वानाच्छब्दः कस्मै यथा भवेत् ।
दातारो यजमानावापि ॥ ७ ॥
अप्तुरः कर्मवेगिनः ।
उस्रास्तु रश्मयश्चैव स्वसराणि दिनानि च ॥ ८ ॥
असंसारादस्रिधस्ते देवाश्चेन्मोक्षनिश्चयात् ।
यथेष्टनिश्चितज्ञाना एहि मायाः समन्ततः ।
अदुःखत्वादद्रुहस्ते मेधं यज्ञं जुषन्तु नः ।
वह्नयो वहनादस्य ॥ ९ ॥
शोधकत्वात्तु पावका ।
सरणात्सर्वगत्वेन सर्वज्ञो वा सरो हरिः ।
सरसः सरतित्वाद्वा तद्वत्येव सरस्वती ।
हरौ गुणाः सरश्शब्दा देवीतु हरिवाचिनी ।
हरिप्रियत्वतो वायुः सरस्वांस्तत्प्रियाऽथवा ।
गुणत्वेन ततत्वाद्वाभगवांस्तु सरस्वती ।
स्त्रीरूपश्चैव पुंरूपो भगवान्न नपुंसकः ।
स्त्रीपुंदोषविहीनत्वादपि तच्छब्दगोचरः ।
अन्नेनो वाजिनामीशो वाजिनी सूर्य उच्यते ।
वाजीनच्छन्दसां वापि स्वामी प्रोक्तः सवाजिनी ।
छन्दांस्यश्वा यतस्तस्य ते चेना अन्यवाजिना ।
अन्नवत्त्वाद्वाजिनी वाग्ज्ञानयुद्धत्वतोऽपि वा ।
स पुत्रो वागुमा तस्याः पुत्री तद्वाजिनीवती ।
सरस्वती हरिर्वापि यज्ञं वहतु नोऽशनैः ।
अन्नदा हि सदा देवी धिया सह वसेद्यतः ।
धियावसुर्नित्यवोधा ॥ १० ॥
सुवाचां प्रेरका सदा ।

सुबुद्धिज्ञापिका सैव स्वातन्त्र्याल्लुप्तयो भवेत् ।
अनेनैव प्रकारेण सैव यज्ञादिधारिणी ॥ ११ ॥
महो अर्णःपरं ब्रह्म तेजस्त्वाच्च महत्त्वतः ।
अरमानन्दरूपत्वाण्णो हि निर्वृतिवाचकः ।
तज्ज्ञापयति सादेवी ज्ञानंदत्वामहत्तरम् ।
महो अर्णः स्वयं देवः स्वमात्मानं प्रकाशयेत् ।
विराजयति विश्वाश्च धियः सुज्ञानदानतः ॥ १२, ६, ३, १ ॥

## ऋग्भाष्यटीका

ओमासः आसमन्तात् । आ इत्यनुवादः समन्तादिति व्याख्यानम् । ऊइति निपात ऊरीकरणे वर्तते । आ समन्तादूरीकृताः स्वीकृताः माः प्रमा यैस्ते ओमा इति कीर्तिताः । चशब्दो व्याख्यानसमुच्चये । सर्वविषयज्ञानवन्त इत्यर्थः । इदं परमेश्वरे मुख्यम् । देवेष्वमुख्यं ॐ नामेत्यनेनोंशब्दसमानार्थ ओशब्दः मानिर्माण इत्यस्मात्कर्मणि कप्रत्यय इत्युक्तं भवति । ओनामकेन विष्णुना मिता निर्मिता इति वा ओमाः । इदं च व्याख्यानं न भगवद्विषयमित्याह ॥ सुरा इति । ओशब्द ओतत्ववाची । अवतिरूपत्वात् । ओताः प्रविष्टाः मानेषु प्रमाणेषु प्रतिपाद्यतयेति वा ओमाः । उपसर्जनस्य परनिपातः । माः प्रमाः येषु प्रोताः प्रतिपादकतया प्रविष्टा इति वा ओमा ईरिताः । ओता मा येषु ते तथोक्ता इति प्रोक्ताः नैघुण्टकैः । ते भगवद्रूपविशेषाः देवाश्च प्रेरकतया सर्वत्र प्रवेशनाद्विश्वे च प्रोक्ताः । विशप्रवेशने । ततो वः किञ्च देवतापक्षे सर्वशब्दपर्यायो वा विश्वशब्द इत्याह ॥ सर्वेवेति ॥ अथवा विशां प्रजानां वानात् गमनात् ज्ञानाद्वा । विशो वान्तीति विश्वे ।

ननु च प्रवेशनाद्विशां वानादिति पक्षद्वये विश्वे इति रूपं न सिध्यति । सर्वशब्दपर्यायस्यैव विश्वशब्दस्य सर्वनामसंज्ञास्मरणात् । सर्वनाम्न एव परस्य जसःशीभावविधानादिति तत्राह ॥ शब्द इति ॥ यथाखलु कस्मै देवाय हविषा विधेमेत्यत्र प्रजापतिपर्यायस्य कशब्दस्य सर्वनामसंज्ञाभावेपि सर्वे विधयः छन्दसि बहुलं भवन्तीति सर्वनाम्नः स्मा इति सर्वनामकार्यं दृश्यते एवमिहापि विश्वशब्दस्य सर्वनामसंज्ञाभावेपि सर्वनामकार्यं जसः शीत्वं भविष्यतीति । दाश्वांस इत्यत्र दातारो यजमाना वेत्यर्थद्वयम् । दाशृदाने । यजमाना वेति देवान्तरविषयम् । हे ओमासः ओमाश्चर्षणीधृतः चर्षणीनां धर्तारो दाश्वांसो दातारो यजमानावा विश्वेदेवाः दाशुषो दातुर्यजमानस्य वा सुतं सोमं प्रत्यागतागच्छत ॥ ७ ॥

विश्वेदेवासः ॥ अप्तुरः । अपूशब्दः कर्मवाची । तुरत्वरणे । ततः क्विप् । ततोऽप्तुरः कर्मवेगिनः । एवशब्देनाभिधानिकत्वान्निर्वचनानपेक्षत्वं सूचयति । हे अप्तुरो विश्वेदेवाः स्वसराणि दिनानि प्रत्युस्रा रश्मय इव तूर्णयः त्वरितास्संतोऽस्मदीयं सुतमागन्त आगच्छत ॥ ८ ॥

विश्वेदेवासो अस्रिधः । स्रिधुर्हिंसार्थः । ततः क्विप् । न विद्यते स्रिद्येषांतेऽस्रिधः अहिंस्याः । एतद्भगवत्युपपादयति । असंसारादिति ॥ देवतांतरे घटयति । देवाश्चेदिति ॥ मोक्षनिश्चयात् उपचारेणास्रिध इत्यर्थः । आ इत्यस्य समन्तत इति व्याख्यानम् । इशब्द इच्छावाची । इषु इच्छायामित्यतो डिः । अत उक्तं यथेष्टेति । हिशब्दः प्रसिद्धिवाचित्वान्निश्चयार्थः । मायाशब्दो ज्ञानार्थः । प्रज्ञानामसु पाठात् । सर्वविषयस्वतन्त्रनिश्चयज्ञाना इत्यर्थः । द्रुहः क्लेशार्थः । ततः सम्पदादित्वात्क्विप् । न विद्यते ध्रुक् येषांतेऽद्रुह इत्यभिप्रेत्योक्तं अदुःखत्वादिति । जुषंत जुषत सेवध्वम् । तस्य तात्पर्यं ते जुषंत्विति । अस्य जगतो वहनात् प्रवर्तनात् । वहतेरौणादिको निः ॥ ९ ॥

पावकानः ॥ शोधकत्वात् । सरस्वतीशब्दं व्याख्यातं सरःशब्दार्थं तावदाह ॥ सरणादिति ॥ सर्वत्र गमनात् । तस्यैव तात्पर्यं सर्वगत्वेनेति ॥ सृगतौ । अस्मादसुन्प्रत्ययः । गत्यर्थानां ज्ञानार्थत्वात्सर्वज्ञो वासरः । सरसः ससार इति वा सरः । बलवानित्यर्थः । रसाकारलोपः । सरतित्वात्ससुखत्वात् । रमेरसुन् डिच्च । सहरसारत्यवर्तत इति सरः । तद्वती सरःशब्दार्थो हरिरस्यां विद्यत इति । इदं च व्याख्यानं देवतांतरविषयम् । हरौ तु विवक्षिते उक्तनिरुक्त्या गुणाः ज्ञानादयः सर इति शब्दो येषान्ते सरःशब्दाः । तद्वत्वात्सरस्वती । देवतान्तरस्य परमेश्वरवत्त्वं नाम किमित्यत आह ॥ देवी त्विति ॥ वेदाभिमानित्वात् । उक्तनिर्वचनेन हरिः सरः । तद्वत्वात् तत्प्रियत्वतः । तत्प्रिया तद्भार्येति वान्या सरस्वती । उक्तनिरुक्त्या गुणाः सरःशब्दार्थाः । त एव स्वंधनं सरस्वम् । तेन ततत्वाद्व्याप्तत्वात् सरस्वतः । सरस्वत(स्वच्छब्दात्) शब्दात् स्त्रियामीकारः । ननु हरौ स्त्रीलिङ्गप्रयोगः कथम् । यदि स्त्रीत्वात् कथं तर्ह्यग्न्यादिपुल्लिङ्गप्रयोगः तत्राह ॥ स्त्रीरूप इति ॥ एवं चेद् ब्रह्मादिपदप्रयोगान्नपुंसकरूपोप्यङ्गीकार्यः । नेत्याह ॥ नेति ॥ कथं तर्हि नपुंसकलिङ्गप्रवृत्तिस्तत्रेत्यत आह ॥ स्त्रीति ॥ दोषाः पुरुषाभिलाषादयः । वाजिनीवतीशब्दं व्याख्यातुं वाजिनीशब्दार्थं तावदाह ॥ अन्नेन इति ॥ वाजमन्नम् । तदेवतृतीयोतिशय इति वाजि । तन्नयतीति वाजिनी सूर्यः । (अस्य) तस्य तात्पर्यम् अन्नेन इति । यद्वा वाजमन्नं वाजस्येनो वाजेनः । स एव वाजिनी सूर्यः । अविभक्तिको निर्देशः । अथवा वाजिनामश्वानाम् अन्नवतां वा ईश इति । स एव वाजिनी । पूर्ववदुभयथाविवरणम् । अथवा वाजिनामश्वानामिनानि सप्तछन्दांसि

वाजीनानि तान्येव शकंध्वादित्वाद्वाजिनानि । तान्यस्य सन्ति तेषां स्वामीति वाजिनी । वाजीनच्छन्दसां स्वामित्वं कथं सूर्यस्येत्यत आह ॥ छन्दांसीति ॥ वाजिनीशब्द-स्यान्यदप्यभिधेयमाह ॥ अन्नवत्त्वादिति ॥ वाजमन्नं युद्धं च । तदस्यामस्तीति वाजिनी । वाचो युद्धवत्त्वोपपादनाय ज्ञानग्रहणम् । ज्ञानार्थं युद्धं वादादि । अस्त्वेवं सूर्यस्य वाचश्च वाजिनीत्वम् । ततः किमित्यत आह ॥ स इति ॥ स सूर्यस्तस्याः विष्णवाख्यायाः प्रसिद्धायाश्च सरस्वत्याः पुत्रः। वाक्च पुत्री । तदेवं तदुभयवत्त्वाद्वाजिनीवती । ननु वागपि सरस्वती तत्कथं तद्वतीत्यत उक्तं वागुमेति । एवंविधा सरस्वती नोऽस्माकं यज्ञम् । वाजेभिर्वाजैरशनैर्बहिरध्यात्मं ज्ञानयुद्धैश्च वष्टु वहतु प्रवर्तयतु विकरणलोपः षत्वं च छन्दस्त्वात् । अन्नादि दत्वेत्यर्थः । तदुपपादयति ॥ अन्नदेति ॥ अनेन वाजिनीवतीत्युक्तस्योपयोगोभिहितो भवति । अत एव वाजेभिरुपेतं नो यज्ञं वष्टु इच्छत्विति व्याख्यानं न कृतम् । अन्नमित्युपलक्षणम् । धिया सह वसेदित्यनेन वसतेरुकार (कारः) प्रत्ययः । तेन सहार्थे तृतीयायाः समासोऽलुक्चेत्युक्तं भवति । नित्यबोधेति तात्पर्यकथनम् ॥ १० ॥

चोदयित्री ॥ सुवाचाम् । सूनृतानां सुवाचां चोदयित्री सदा प्रेरका सुमतीनां सुबुद्धीनां द्वितीयार्थे षष्ठी । चेतन्ती चेतयन्ती ज्ञापिका । अत्र णिलोपस्य निमित्तमाह ॥ स्वातन्त्र्यादिति । चेतन्तीशब्दः स्वातन्त्र्यविवक्षया लुप्तो यो यस्य स लुप्तयो भवेत् । य इति णेरुपलक्षणम् । स्वातन्त्र्यस्नेहयोरन्तर्णीतणिजिति स्मरणात् । ततश्च स्वातन्त्र्येण सुबुद्धिज्ञापिकेत्यर्थः । तदिदमुक्तं सैवेति । एवंभूता सरस्वती यज्ञं दधे । अनेनोक्तप्रकारेण वाग्बुद्धिप्रवर्तकत्वेन यज्ञादिधारिणी । वाग्बुद्धिमूलत्वात्सर्वकर्मणाम् ॥ ११ ॥

महोअर्णः ॥ (अहो अर्णः) तेजस्त्वान्महत्वतश्चेति महःशब्दस्यार्थद्वयम् । अरमानन्द-रूपत्वादर्णः । सा देवी सरस्वती । महो अर्णः परं ब्रह्म । केतुना ज्ञानेन । भक्तेभ्यो महत्तरं ज्ञानं दत्वा । प्रचेतयति ज्ञापयति । महत्तरमिति वदता प्रशब्दस्य तात्पर्यमुक्तं भवति । इदं तु देवतान्तरविषयम् । भगवद्विषयेतु सरस्वती देवः महोअर्णः स्वमात्मानं केतुना प्रचेतयति प्रकाशयेदिति । तत एव सुज्ञानदानतो भक्तानां विश्वा धियः । सर्वाः बुद्धीः । विराजति विराजयति । ज्ञानवतोहि बुद्धिर्विराजते ॥ १२,६,३,१॥ अत्र सूक्तमनुवाकोवर्गश्चपरिसमाप्तः ।

## मन्त्रार्थमञ्जरी

ओमासः,आ समन्तात् उ ऊरीकृता माः प्रमा यैस्त ओमाः, ओमा एवोमासः 'आज्जसेरसुक्' सर्वविषयकज्ञानवन्त इत्यर्थः, एतच्च भगवत्यन्यत्र च यथायोग्यं ज्ञेयम्, ओंपदपर्यायौकारवाच्येन

विष्णुना मा निर्मिता इत्यप्यर्थो देवतान्तरे ध्येयः, ओशब्दो पपदात् 'मा निर्माणे' इत्यतः क प्रत्यये आतो लोपे च रूपसिद्धेः । चर्षणिधृतः, चर्षणीनां प्रजानां धृतो धर्तारः । दाश्वांसः, दातारः । (हे) विश्वे देवासः, सर्वत्र प्रविष्टत्वहेतुना 'विश्वे' इत्युच्यमानाः, देवाः 'अग्निमीळे' इत्यत्रोक्तदिशा देवशब्दिता भगवद्रूपविशेषाः प्रसिद्धविश्वेदेवा वा । दाशुषः, यजमानस्य । सुतम्, सोमं प्रति । आ गत, आगच्छत, गमेः मकारस्य च्छादेशाभावश्छान्दसः ॥ 'विश प्रवेशने' इत्यतो वप्रत्ययः किश्व, असर्वनामत्वेऽपि जसः शीभावश्छान्दसः, तेन 'विश्वे' इति रूपं ध्येयम्, देवतान्तरे तु– सर्वशब्दपर्यायतया सर्वनामत्वादेव शीभावः ॥ ७ ॥

अप्तुरः, कर्मवेगिनः, कर्मवाच्यप्शब्दे उपपदे 'तुर त्वरणे' इति धातोः क्विपि 'अप्तुर्' इति रूपम्, तस्य सम्बोधनबहुवचनम् । (हे) विश्वे देवासः, विश्वे देवाः । स्वसराणि, दिनानि प्रति । उस्राइव, रश्मयइव । तूर्णयः, त्वरिताः सन्तः, 'ञित्वरा सम्भ्रमे' इत्यतः 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' इति निप्रत्यये 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' इत्यूठि सम्प्रसारणसवर्णदीर्घयोः सतोः 'तूर्णयः' इति प्रथमाबहुवचने रूपम् । (अस्मदीयम्) सुतम्, सोमं प्रति । आ गन्त, आगच्छत ॥ ८ ॥

अस्रिधः, 'स्रिधु हिंसायाम्' इत्यतो भावे क्विप्, न विद्यते स्रिद्धिंसा येषां तेऽस्रिधोऽहिंस्याः, एतच्च विशेषणमीशरूपाणां नित्यमुक्तत्वादन्यदेवतानां तु निश्चितमुक्तिकत्वादुपचारेणेति ज्ञेयम् । एहिमायासः, 'आ इ हि मायासः' इति वर्णविवेकः, 'इष इच्छायाम्' इत्यतो डिप्रत्यये 'इ' इति रूपम् हि शब्दः प्रसिद्धवाचित्वान्निश्चितार्थः, आ समन्तादि इच्छाधीना हि निश्चिता माया ज्ञानं येषां त एहिमायाः, एहिमाया एवेहिमायासः, 'आज्जसेरसुक्' सर्वविषयकस्वतन्त्रनिश्चितज्ञाना इत्यर्थः । अद्रुहः, 'द्रुह क्लेशे' इत्यतः सम्पदादित्वात्क्विप्, न विद्यते ध्रुग्येषां तेऽद्रुहोऽदुःखाः । वह्नयः, जगत्प्रवर्तकाः, 'वह प्रापणे' इत्यत औणादिको निप्रत्ययः (हे) विश्वे देवासः, विश्वे देवाः । मेधम्, अस्मदीयं यज्ञम् । जुषन्त, जुषत सेवध्वमित्यर्थः, 'जुषी प्रीतिसेवनयोः' ॥ ९ ॥ इति तृतीयो वैश्वदेवस्तृचः ॥ ३ ॥

पावका, शोधिका, 'पूञ् पवने' इत्यतः 'ण्वुल्तृचौ' इति ण्वुल्, 'अचो ञ्णिति' इति धातूकारवृध्द्यावादेशौ, प्रत्ययस्य 'युवोरनाकौ' इत्यकादेशः, स्त्रीत्वात् 'अजाद्यतष्टाप्' 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः' इतीत्त्वाभावश्छान्दसः । वाजिनीवती, वाजमन्नम्, तदेव वाजि, 'तृतीयोऽतिशये' (म० व्या० सू०) तन्नयतीति वाजिनीरन्नपतिः सूर्यः पुत्रत्वेनास्या

विष्ण्वाख्याया वाण्याश्चास्तीति वाजिनीवती, यद्वा– वाजमन्नं युद्धं च, अन्नवत्त्वाज्ज्ञान-युद्धवत्त्वाच्च वाजिनी वागुच्यते, तदभिमानिन्युमा पुत्रीत्वेन विष्णोर्वाण्याश्च वर्तत इति वाजिनीवती। धियावसुः धिया सह वसतीति धियावसुः, वसतेः उकारोऽलुक्समासो नित्यबोधेत्यर्थः । सरस्वती, सरो व्याप्तिर्ज्ञानं सुखं च, 'सृ गतौ' इत्यतो डप्रत्यये गतेर्निरुपचरितत्वेन व्याप्तिरूपत्वाद्गतेर्ज्ञानार्थत्व प्रसिद्धेश्च सपदेन व्याप्तिज्ञानयोर्लाभः, रमेः औणादिकेऽसुन्प्रत्यये तस्य डित्त्वे च 'रः' इति सुखलाभः, व्याप्त्यादयो गुणा अस्याः सन्तीति स्त्रीरूपो हरिरुच्यते, देवतान्तरे तु– 'सृ गतौ' इत्यतः कर्तर्यसुन्प्रत्यये 'सार्वधातुक' इति गुणे सरा व्याप्तः सर्वज्ञो वा हरिः सरसुशब्दार्थः, तत्प्रियत्वेन तद्वान्वायुः सरस्वतः स्त्री सरस्वती वायुभार्या च । नः, अस्माकम् । यज्ञम्, बाह्ययज्ञम्, अध्यात्मम्– ज्ञानयज्ञं च । वाजेभिः, वाजैरशनैः, अध्यात्मम्– ज्ञानयुद्धैश्च, अशनादि दत्त्वेति यावत् । वष्टु, वहतु, प्रवर्तयत्विति, 'यज्ञं वष्टु' इत्यस्य 'यज्ञं वहतु' इति ब्राह्मणे व्याख्यानात्, 'वहप्रापणे' इत्यस्य विकरणलोपो हस्य षत्वं च छान्दसत्वात् । अत्र भगवतः स्त्रीलिङ्गशब्दवाच्यत्वम्– ॐ प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधात् (१/४/२४ इत्यधिकरणचरमसूत्रे 'ॐ योनिश्च हि गीयते ॐ' (१।४।२८) इत्यत्रोक्तदिशा अव्यवहितप्रसवहेतुस्त्रीत्वरूपनिमित्तस्य सत्त्वान्मुख्यमेवेति ज्ञेयम् ॥ १० ॥

सूनृतानाम्, सुवाचाम् । चोदयित्री, प्रेरका । सुमतीनाम्, सुबुद्धीनाम्, द्वितीयार्थे षष्ठी । चेतन्ती, चेतयन्ती, 'स्वातन्त्र्यस्नेहयोरन्तर्णीतणिच्' (म० व्या० सू०) इति स्वातन्त्र्येऽन्तर्णीत-णिच् सुबुद्धीनां ज्ञापिका । सरस्वती, प्रागुक्तरूपा विष्ण्वाख्या वाणी च । यज्ञम् । दधे ॥ पूर्वोक्तरीत्या वाग्बुद्धिप्रवर्तकत्वेन यज्ञादिधारिणीति स्तुतिः वाग्बुद्धिमूलकत्वात्सर्व-कर्मणाम् ॥११॥

सरस्वती, प्रागुक्तनिरुक्त्या तत्पदवाच्यः स्त्रीरूपो विष्णुः । महः, तेजस्त्वान्महत्त्वाच्च महःपदोक्तम् । अर्णः, अरमलमानन्दरूपत्वहेतुनार्णःपदवाच्यम्, रेफाकारलोपः । (स्वात्मानमेव) केतुना, ज्ञानेन, भक्तानां ज्ञानं दत्त्वेति यावत् । प्रचेतयति, प्रकर्षेण महत्तरज्ञानेन प्रकाशयेदित्यर्थः ॥ वाणीपक्षे महोअर्णः पदार्थं हरिं केतुदानेन प्रचेतयति भक्तानामित्यर्थः । योग्यतया प्रशब्दः केतुगतप्रकर्षवाची ॥ (ततः) सुज्ञानदानादेव हेतोः । (भक्तानाम्) विश्वाः, सर्वाः । धियः, बुद्धीः । वि राजति, विराजयति ॥ ज्ञानवतां बुद्धिर्विराजते हि ॥ १२ ॥ इति चतुर्थः सारस्वतस्तृचः ॥ ४ ॥ इति षष्ठो वर्गः ॥ ६ ॥ तृतीयं सूक्तम् ॥ ३ ॥ प्रथमोऽनुवाकः ॥ १ ॥

## पदार्थप्रकाशिका

ओमासश्चर्षणीधृतः। ऊ इति निपात इति। आ उमास इत्यत्र उ इति निपात इत्यर्थः। यैः। विश्वेदेवशब्दवाच्यैः भगवद्रूपैः। व्याख्यानसमुच्चय इति। ओंनामा भगवानित्युत्तरत्र क्रियमाणोंशब्दव्याख्यानसमुच्चय इत्यर्थः। इदं सर्वविषयज्ञानवत्स्वरूपमाशब्दव्याख्यानम्। ओंशब्दसमानार्थेति। 'ओतमस्मिन् जगद्यस्मादोमित्युक्तो हरिः सदेति वचनेन जगत्प्रवेशाधिकरणत्वं ह्योंकारार्थः। स एवार्थः। ओंशब्दस्यापि। अव प्रवेशन इति प्रवेशार्थकादवतेरधिकरणे औणादिके क्विपि तस्य लोपे ज्वरत्वरेत्यादिना उपधावकारस्य ऊठि अ उ इति जाते क्विपः कित्वेपि उणादयो बहुलमिति बहुलग्रहणादकारस्य उकारस्य च ओकाररूपे गुणे च सति ओ इति भवति। तथाच अवति प्रविशत्यस्मिन् जगदिति ओ इति युज्यते। एवं सत्योंकारसमानार्थक ओशब्द इत्यर्थः। इयांस्तु परं विशेषः। यदोंशब्द अवतेष्टिलोपश्चेति मनुप्रत्यये प्रत्ययस्य टेर्लोपे ऊठि गुणे ओमित्येतत् कृन्मेजन्तः इति मान्तत्वेनाव्ययम्, ओमाशब्दान्तर्गत ओशब्दस्तु गोशब्दवत् औकारान्त इति। कप्रत्यय इति। मा निर्माणे अस्मात् निर्माता इति कर्मार्थविवक्षायां कप्रत्यये आतो लोप इटिचेति धात्वाकारलोपे प्रत्ययाकारसम्बन्धे च सति मेति रूपम्। तथाचोमेति प्रातिपादिकनिष्पत्तिरिति ध्येयम्। एवं रूपनिष्पत्ति-प्रकारमादावभिधाय भाष्यं योजयति। ओंनामकेति। ओतत्ववाची कथम् ओशब्द इत्यत आह। अवत इति। अव प्रवेशने अस्मात् कर्तरि क्विपि ऊठि गुणे च सति निष्पन्न ओशब्दः ओतत्ववाचीत्यर्थः। ननु 'सप्तमी विशेषणे बहुव्रीहौ' सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं प्रयोज्यं स्यादित्युक्तत्वेन सप्तम्यंतमापदस्य ओशब्दात् प्राक् प्रयोगः स्यात्। तथाच मो इति स्यादित्यत आह। उपसर्जनस्येति। बहुव्रीहावन्यपदार्थस्यैव प्राधान्येनेतरस्याप्राधान्येनोपसर्जनत्वात् तादृशस्य सप्तम्यंतमाशब्दस्य परनिपातश्रवणात् ओमा इति युक्तमित्यर्थः। भाष्यं योजयित्वा इदानीं विग्रहं दर्शयति। ओता मा इति। नैघण्टुकैरिति। वृष्ट्यश्चर्षणयो नहषाः प्रजामानुषा इति मनुष्यनामसु पाठादिति भावः। ततो वरिति। विश प्रवेशने अस्माद्वप्रत्यये शकारस्याकारलोपे विश्वेति रूपम्। ननु तर्हि लघूपधा पुगन्तलघूपधस्येति गुणे वेश्वेति स्यादिति चेत् तत्राह। किच्चेति। वप्रत्ययः कित्वकार्यकारीत्यर्थः। तथाच गुणप्रतिषेधस्य कित्कार्यत्वेन तत्कारितायाः वप्रत्ययस्य श्रवणात् न गुणः। तथाच विश्वेति रूपं युक्तमित्यर्थः। वागतिगन्धनयोरिति धातोर्गमनादित्युक्तम्। गमयितृत्वात् गमनप्रदत्वादित्यर्थः। गत्यर्थानां ज्ञानार्थत्वमङ्गीकृत्याह। ज्ञानाद्वेति। प्रजाविषयकज्ञानवत्वादित्यर्थः। विग्रहं दर्शयति। विश इति। वान्ति गमयन्ति जानन्ति चेत्यर्थः।

कुत इत्यत आह । सर्वशब्दपर्यायस्यैवेति । नतु प्रवेशनाद्यर्थकस्येत्यर्थः । अतः सर्वे वेति व्याख्यानपक्षे विश्वेति रूपस्योपपन्नत्वेन पक्षद्वय इत्येव उक्तम् । सर्वनामसंज्ञास्मरणादिति । 'सर्वादीनि सर्वनामानि' इत्यनेन सूत्रेणेत्यर्थः । सर्वादीनि शब्दरूपाणि सर्वनामसंज्ञानि स्युरिति तत्सूत्रार्थो द्रष्टव्यः ।

शीभावविधानादिति । 'जसः शी' इति सूत्रेणेति शेषः । 'सर्वनाम्नः स्मै' इति सूत्रादत्र सर्वनाम्नः इत्यनुवर्तते । तथाचाकारान्तादङ्गात् सर्वनाम्नः परस्य जसः शी स्यादिति सूत्रार्थः । तथाच सर्वब्दपर्यायविश्वशब्दस्य सर्वनामसंज्ञायां तस्मात्प्रथमा बहुवचने जसि तस्य शीभावे शकारलोपे विश्व ई इति जाते अकारेकारयोर्गुणे विश्वे इति रूपं निष्पद्यते । न चैवं प्रकृते सम्भवति विश्वशब्दस्य प्रवेशनाद्यर्थकतया सर्वञब्दपर्यायत्वाभावेन सर्वनामसंज्ञाभावात् जसः शीभावाप्राप्तौ विश्वेति रूपस्यानुपपन्नत्वादिति भावः । सर्वनामसंज्ञाभावे अपि इति । किं नाम प्रश्नाक्षेपार्थस्यैव क(किं)शब्दस्य सर्वनामसंज्ञा विहिता इति भावः । सर्वनाम्नः स्मायितीति । सर्वनाम्नः स्मै सर्वनाम्नो ङे इत्यस्य स्मै स्यादिति सूत्रार्थः । सर्वनामकार्यस्य ङे इति चतुर्थ्येकवचनस्य स्मै इत्यादेशरूपम् । तथाचाकारान्तात् कशब्दात् चतुर्थ्येकवचने ङे इत्यस्य चतुर्थी एकवचनस्य स्मै इत्यादेशे कस्मै इति रूपम् । ननु कथं दृश्यते नियामकाभावादित्यत उक्तम् । सर्वेऽपीति । भविष्यतीति सर्वेऽपि विधय इति पूर्वोक्तवार्तिकादेवेत्यर्थः । तथाच विश्वे इति रूपं सिध्यति इति भावः । तथाच कस्मै शब्दो प्रजापतिवाचकः । कस्मैशब्दः सर्वनामसंज्ञाभावेऽपि सर्वनामकार्यवान् भवेदेवमिहापीति भाष्यार्थो द्रष्टव्यः । विश्वेदेवशब्दानां भगवद्रूपाणां वाच्यत्वपक्षे तद्विशेषणीभूतस्य दाश्वांस इत्यस्य दातार इत्यर्थसम्भवेऽपि यजमान इत्यर्थस्याऽयोगात् । भगवद्रूपाणां इज्यत्वेन यजमानत्वाभावादित्यत आह । यजमाना वेति । देवतान्तरेति । भगवद्भिन्नदेवताविषयमित्यर्थः । यदा विश्वेदेवशब्देन सर्वदेवाः वाच्या तदा तद्विशेषणभूतस्य दाश्वांस इत्यस्य यजमाना इत्यर्थो द्रष्टव्यः । तेषामपि भगवदुद्देशेन यज्ञादिकारितया 'यज्ञेन यज्ञमयजन्त देवाः' इत्यादिना प्रमितत्वाद्यजमानत्वं युक्तमिति भावः । तथाच यजमानावेति वाशब्दो व्यवस्थितविकल्पार्थ इति द्रष्टव्यम् । ऋगार्थमाह । हे ओमास इति । सर्वदेवापेक्षया आह यजमाना वेति । दाशुष इत्यस्यापि दाश्वांस इत्येतदनुसारेणार्थद्वयमाह । दातुरित्यादि ॥ ७ ॥

विश्वेदेवासो अप्तुरः । ततः क्विबिति । तुर इत्यस्माद्भावे सम्पदादिभ्यश्चेति सम्पदादित्वात् क्विपि तस्य सर्वस्यापि लोपे तुरेतिशब्दो त्वरावानीति द्रष्टव्यम् । कर्मवेगिन इति । तथाचाप्सु कर्मसु तुरा त्वरा येषां ते अप्तुरः कर्मवेगिन इत्यर्थो द्रष्टव्यः । आभिधानिकत्वादिति । वनमुखावसोरिति ।

किरणोस्रमयूखांशु गभस्तिघृणिघृष्टयः इति च उस्रशब्दस्य रश्मिनामसु पाठेन स्वसरशब्दस्य स्वसरोऽप्यहरिति अहर्नामसु पाठेन चाभिधानिकत्वादित्यर्थः । कर्मवेगिन इति । रणविषये वेगवन्तः इत्यर्थः । दिनानि अहानि । रश्मय इवेति । यथा सूर्योदये जातेऽन्हि मयः त्वरिता; सन्तः आयास्यन्ति तद्वदित्यर्थः । तूर्णय इति तूर्णिशब्दस्य तूर्णिचक्षिरिति मसु पाठादिति भावः ॥ ८ ॥

श्वेदेवासो अस्रिधः । हिंसार्थो मृत्यर्थः । क्विबिति । स्रिधु हिंसायां अस्मात् क्विपि तस्य लोपे इति धकारान्तं प्रथमैकवचनम् अहिंस्या अमराः असंसारादिति । संसार एव हिंसायाः तत्वात् । भगवद्रूपाणां च तदभावात् अस्रिधत्वं युक्तमित्यर्थः । उपचारेणेति । देवानां श्रयेन तत्रास्रिधत्वस्य मुख्यतः सत्वात् तदभिप्रायेणेदानीम् अस्रिधत्वमुपचारेणोच्यत इति । एहि मायास इति (अ) संहितायाम् आ इहीति स्थिते गुणे सति एहीति स्त्यतस्तद्विभागयोरर्थमाह । आ इत्यस्येति । सकारस्येच्छावाचित्वं योगेनाप्युपपादयति । ायामिति । इषु अस्मात् कर्मणि डिप्रत्यये डित्वात् टिभूतस्य इषु इत्यस्य लोपे प्रत्ययस्य एवोर्वरित इति ध्येयम् । अत उक्तमिति । एवं योगरूढिभ्यामिकारस्येच्छावाचि-त्योक्तमित्यर्थः । यथेष्टेतीति । स्वतन्त्रेत्यर्थः । प्रज्ञानामस्विति । शचीमायावयुनं मख्येति प्रज्ञानामसु पाठादित्यर्थः । सर्वविषयेत्यादि । आ इत्यस्य समन्तत त्वेनैतत्तात्पर्यं सर्वविषयेति । ईत्यस्य कर्मणि व्युत्पन्नस्य यथेष्टार्थकत्वात् तस्येदं तात्पर्यं ति । हिशब्दार्थो निश्चितेति । मायाशब्दार्थो ज्ञानेति । क्लेशार्थ इति । दुःखार्थ इत्यर्थः । नवांसायमिति धातोः क्लेशार्थ इति तात्पर्यतो व्याख्यानमित्यवगन्तव्यम् । त्वादिति । सम्पदादिगणत्वादित्यर्थः । सम्पदादिभ्यश्चेति सूत्रेणेति भावः । द्रुगिति क्लेश ननु द्रुहशब्दस्यैव क्लेशार्थत्वेन न विद्यते द्रुहो येषां ते इति वक्तव्ये द्रुगिति कथमिति द्रुहेत्यत्र 'वा द्रुहमुहष्णुहाष्णिहां' येषां हकारस्य घः स्यात् सति धत्वे 'एकाचो बशो भष्' शश् प्रयहारान्तर्गतस्य दकारस्य भष्भावोक्त्या भष्प्रत्याहारान्तर्गते धकारे जाते धकारस्य जस्त्वे ध्रुगिति जाते तस्य ककाररूपे चर्त्वे ध्रुगिति भवतीति ध्रुगित्युक्तमित्यवधेयम् । ति । तस्य तात्पर्यमिति । लोण्मध्यमपुरुषबहुवचनान्तस्य जुषतेति ऋक्पदस्य लोटः बहुवचनान्तं भाष्यस्थं जुषंत्विति पदं न व्याख्यानरूपं किं नाम तात्पर्यकथन-र्थः । वहतेरिति । वह प्रवर्तनेऽस्मात् 'वहीश्रितुयुद्रुग्लाहात्वदिभ्यो नित्' इत्युणादिसूत्रेण वह नि वह्नीति रूपम् । ततश्चायम् ऋगर्थः । हे अस्रिधः एहि मायासः अद्रुहो वह्नयो

विश्वे
विश्वे
प
तस्य
अस्म
सका
रूपं
शब्दा
तस्य
सरसो
वक्तव्
सरस्
रमेरसु
डित्वा
दर्शयि
नन्
सकार
शब्दा
मादुपध
सरस्व
भगवद
तद्वत्वा
सरस्वत
ननु
वेदाभि
वाच्यह
हरिमत्

विश्वे देवाः सोमेधवेनो मेधोयज्ञेति यज्ञनामसु पाठात् यज्ञं जुषन्तु जुषत फलदानेन सेवध्वं विश्वेदेवा भवन्तो जुषन्तेति तात्पर्यम् ॥ ९ ॥

पावकानः सरस्वती । असुन् प्रत्यय इति । तथाच सृगतौ अस्मादसुन्प्रत्यये उन्नित्यस्य लोपे गुणे तस्य रपरत्वे सरसिति सकारान्तप्रातिपदिकसिद्धिः । अतः सरस्वतीति रूपं युक्तम् । भाष्येतु सरस् अस्मात् सुप्रत्यये तस्य लोपे प्रातिपदिकान्तसकारस्य रुत्वे विसर्गे च सति सर इति सकारान्तनपुंसकैकवचनं द्रष्टव्यम् । एवमुत्तरत्रापि । गत्यर्थानामित्यतः पूर्वं सृगतावित्यनुवर्तते । रूपं पूर्ववदेव साधनीयम् । सरसिति भाष्यपदमनूद्य संसार इति व्यख्यानम् । 'रसः सारो वरश्चेति शब्दा एकार्थवाचकाः' इत्यभिधानेन रसशब्दस्य सारवाचित्वात् रसेन सहितः सरसः इत्यर्थः । तस्य तात्पर्यमाह । बलवानिति । रसशब्दार्थभूतसारत्वमिह बलं विवक्षितमिति भावः । तथाच सरसो सबलमित्यर्थो द्रष्टव्यः । नन्वेवं तर्हि ऋचि सरस्वतीति कथम्? सरसवतीति वक्तव्यत्वादित्यत आह । रसाकारलोप इति । सारसशब्दान्त्यसकारस्थाकारलोपे इत्यर्थः । तथाच सरस् इत्यत्र सकारस्थाकारलोपे सरस् इति जाते सति सरस्वतीति रूपं युक्तमिति भावः । रमेरसुन्निति । सोपपदात् रमु क्रीडायामस्मात् असुन्प्रत्यये उन्नित्यस्य लोपे तस्य डित्वाट्टिभूतस्यामित्यस्य लोपे सरस् इति जाते सति सरस्वतीति भवति । सर इत्यत्र विग्रहं दर्शयति । सहेति । रसेति । रस् रसौ रसः इत्यसुन् प्रत्ययान्तस्य रस इत्यस्य तृतीयेयम् ।

ननु तर्हि सहरस्वतीति स्यादिति चेत् सत्यम् । 'सहस्य सः' इति सूत्रेण सहेत्यस्य सकारादेशाङ्गीकारात् सरस्वतीत्युपपन्नमिति द्रष्टव्यम् । अस्यां विद्यत इति । ननु तर्हि सरस् शब्दात्तदस्यामस्तीत्यस्मिन्नित्यर्थे मतुप्प्रत्यये पकारलोपे ङीपि सरस्मतीति स्यादिति चेन्न । मादुपधायाश्च मतोर्वोपवादिभ्यः इत्यनेन मतुपो मकारस्य वकारादेशाङ्गीकारात् । अतः सरस्वतीति युक्तमिति द्रष्टव्यम् । उक्तं निरुक्तेति । सरणादित्यादिनिरुक्तेत्यर्थः । गुणानां भगवदभिन्नत्वात्तन्निष्ठधर्माणां गुणेष्वसम्भवो न मन्तव्यः । सरःशब्दाः सरः शब्दवाच्याः । तद्वत्वादिति अभेदेऽपि तद्वत्वं विशेषबलेनोपपादनीयमिति हृदयम् । परमेश्वरवत्वं नामेति । तद्वत्येव सरस्वतीत्यनेनोक्तमित्यर्थः ।

ननु देव्याः वर्णसमुदायरूपवदात्मकत्वाभावेन कथं हरिवाचकत्वमित्यतः तदुपपादयति । वेदाभिमानित्वादिति । उक्तनिर्वचनेन सरणादित्याद्युक्तनिर्वचनेन । तद्वत्वादिति । सरस्वतीशब्द-वाच्यहरिमत्वाद्वायुः सरस्वानित्यर्थः । अत्र वायुशब्देन ब्रह्मा ग्राह्यः । ननु वायोः कथं हरिमत्वमित्यतो मतुबर्थसम्बन्धविवरणपरं हरिप्रियत्वत इति भाष्यमित्याशयेनाह । तत्प्रियत्वत

इति । तद्भार्येति । ननु सरस्वान्वायुः तद्वती सरस्वद्वतीति स्यात् सरस्वतीति कथमिति चेदुच्यते । नात्र सरस्वान्वायुः तद्वती सरस्वतीत्युच्यते किं नाम सरस्वानिति पुमाख्यैवाप्तुं योगाद्भार्यायां वर्तत इत्यङ्गीकृत्य सरस्वच्छब्दस्यैव तत्स्त्रीवाचकत्वाङ्गीकारात् । यथोक्तम् । पुंयोगादाख्यायामिति । यत्पुमाख्या पुंयोगात् स्त्रियां वर्तते ततः स्त्रियां ङीष् स्यादिति सूत्रार्थः । यथा गोपस्त्रियां गोपयोगेन गोपशब्दप्रवृत्तिमङ्गीकृत्य ङीषि गोपीत्येव भवति एवं वायुस्त्रियां सरस्वच्छब्दवायुयोगेन सरस्वच्छब्दप्रवृत्तिमङ्गीकृत्य ततः सरस्वच्छब्दात् स्त्रीत्वविवक्षायाम् उक्तसूत्रेण ङीषि ङकारषकार-योर्लोपे सरस्वत् ई सरस्वतीति भवति । अत एव एतत्सर्वं सूचयितुं तत्प्रियेत्युक्तम् । टीकायामपि तद्भार्येत्युक्तमित्यालोचनीयम् । ईकार इति । तथाच ईकारे परे यस्येति चेति तकारस्थाकारलोपे सरस्वतीति रूपम् । हरौ स्त्रीलिङ्गानुपपत्तिपरिहारस्य भगवान् स्त्रीरूप इत्यतावत्येव वक्तव्ये पुंरूपश्चेत्युक्त्यभिप्रायं वक्तुमाह । यदि स्त्रीत्वादिति । स्त्रीरूपत्वादित्यर्थः । नपुंसकरूपो नपुंसकरूपवान् । नपुंसकलिङ्गेति । नपुंसकलिङ्गानां ब्रह्मादिशब्देत्यर्थः । पुरुषाभिलाषादयः इत्यत्रादिपदेन स्त्र्यभिलाषरूपः पुरुषदोषो ग्राह्यः । यथा लोके स्त्र्यभिलाषरूपपुरुषदोषरहितत्वात् न स्त्रीत्युच्यते नपुंसकः एवं भगवानपि स्त्र्यभिलाषाख्यस्त्रीपुंदोषविहीनत्वात् नपुंसक इत्युपचर्यत इत्यर्थः । ननु तर्हि वाजनीति स्यादित्यत आह । तदेवेति । वाजमेव वाजि तृतीयोऽतिशये इति सूत्रादिति योजना । अकारापेक्षया तृतीयो वर्ण इकार इत्यर्थः । वाजिशब्दोपपदात् नीञ् प्रापणे अस्मात् क्विपि वाजिनीत्येव भवतीति भावः । तात्पर्यमिति । तथाच वाजिनी अतिशये-नान्ननियामकोऽन्नस्वामीति तात्पर्यार्थः । पूर्वं वाजिनीशब्दस्यान्ननियामकत्वमेव वाच्योऽर्थः अन्नेन इत्येतत्तात्पर्यकथनमित्युक्तम् । इदानीं श्रौतपदार्थ एवायमित्याह । यद्वेति । तर्हि वाजेनवतीत्येव स्यात् वाजिनीति कथमित्यत आह । स एवेति वाजेन वेत्यर्थः । वाज इनेत्यत्र निरुक्तत्वाज्जकारस्थाकारलोपे नकारस्य पुरत ईकाररूपवर्णागमे च सति वाजिनीति भवतीति भावः । ननु भाष्ये वाजिनीशब्दात् सुप्रत्यये रुत्वे विसर्गे च वाजिनीरिति स्यादित्यत आह । अविभक्तिक इति पूर्ववदिति । वाजिनो नयतीति वाजनी तस्य तात्पर्यं वाजिनामीश इति । वाजिनामिनः ईशः स्वामी वाजिनः स एव वाजिनीत्येवमन्नेन इतिवत् ऋक्स्थवाजिनीपदस्य वाजिनामीश इति भाष्येणोभयतात्पर्यवाच्यार्थकथनपरतया वाजिनीपदविवरणं कृतमिति ज्ञातव्यमित्यर्थः ।

ननु वाजि इनेत्यत्र सवर्णदीर्घे वाजीनानीति जाते तान्यस्य सन्तीति वाजिनीति स्यादित्यत आह । तान्येवेति । वाजीनान्येवेत्यर्थः । शकन्ध्वादित्वादिति । शक अन्धुरित्यत्र सवर्णदीर्घेण

शकान्धुरिति भाव्ये 'शकन्ध्वादिषु पररूपं वाच्यमि'ति वार्त्तिकेन पररूपविधानात् शकन्धुः कर्कन्धुः कुलटा सीमन्तेत्यादिवदत्रापि पररूपे वाजिनानीति युक्तमित्यर्थः । तान्यस्येति । तथाच 'छन्दसि ई हरौ वक्तव्यौ' इति वचनात् मत्वर्थीयस्य इकारस्याऽर्थोऽयमिति ज्ञातव्यम् । तथाच वाजनशब्दात् मत्वर्थ इकारप्रत्यये यस्येतिचेति नकारस्थाकारलोपे वाजनीति रूपम् । मत्वर्थसम्बन्धविवरणपरं भाष्यमित्याशयेन तेषां स्वामीत्युक्तमिति द्रष्टव्यम् ।

छन्दांसीति । छन्दांस्यश्वेति भाष्यस्यायमर्थः । तस्य सूर्यस्य अश्वा यतः छन्दांसि छन्दोभिमानिनः ते चाश्वाः अन्यवाजिनामिनाः स्वमिन इति सप्तछन्दोऽभिमानिदेवतानामेव सूर्यरथबद्धसप्ताश्वाभिमानित्वादित्यर्थः । तथाचैकोऽश्वो वहति सप्तनामेति श्रुतेः । सप्तनामोपेतैकाश्वाभिमानी सप्तछन्दसां तदभिमानित्वेन तन्नामकदेवानां स्वामीत्याशयः । अन्यदपीति । सूर्यादन्यदपीत्यर्थः । तदस्यास्तीति । अन्नवत्वादित्यस्य ज्ञानयुद्धत्वत इत्यत्र बहुव्रीहेश्चार्थोऽयम् । तथाच वाजमन्नं युद्धं च तदेव वाजि तन्नयतीति वाजिनी । भाष्यं तु तात्पर्यकथनमात्रपरमिति द्रष्टव्यम् । ज्ञानार्थमिति । तथाच ज्ञानार्थं वादादियुद्धं यस्याः सा ज्ञानयुद्धा तत्साधनीभूतेति यावत् । तस्याः भावस्तत्वं तस्मादित्यर्थो द्रष्टव्यः । प्रसिद्धायाः ब्रह्मपत्नीत्वेनेति शेषः । पत्नी तदुभयोरपीति शेषः । तदुभयवत्वादिति । वाजनीशब्दवाच्यसूर्यवाग्रूपोभयपुत्रत्वादित्यर्थः । वाजनीवति । हरिः सरस्वती चेति भाष्येणान्वयः । तत्कथमिति । स्वस्याः स्वपुत्रभावस्यात्माश्रयेणायोगादिति भावः । एवंविधेति । समस्तभक्तपापशोधकतया पावका वाजनीवती सेत्यर्थः ।

ननु वष्ढिति कथम् । वह प्रापणेऽस्मात् लोट् परस्मैपदिनि तस्य तिपि पकारलोपे एरुः लोट इकारस्य उकारः स्यादिति सूत्रेण तकारस्थस्य इकारस्य उकारे शब्विकरणे अकारं विहाय सर्वस्य लोपे वह अतु वहत्विति भवेदित्यत आह । विकरणलोप इति । शब्विकरणलोप इत्यर्थः । नन्वथापि हस्य षत्वं कथम् आदेशप्रत्यययोरित्यादेरत्र प्राप्त्यभावादित्यत आह । षत्वं च छन्दस्त्वादिति । तथाच हस्य षत्वे वष् इति जाते अत्र तवर्गस्य षकारयोगसद्भावात् ष्टुना ष्टुरिति सूत्रेण तकारस्य टकारे वष् टु वष्ढिति रूपम् । अन्नादीत्यादिपदेन ज्ञानार्थं वादादियुद्धसामर्थ्यग्रहणम् । उपयोग इति । यतो अन्नवत्वाद्वाजनीवती अतोऽशनमन्नं दत्वा बाह्ययज्ञं प्रवर्तयितुं यतश्च ज्ञानयुद्धत्वतो वाजनीवती अतोऽध्यात्मवादादियुद्धसामर्थ्यं दत्वा ज्ञानयज्ञं प्रवर्तयत्वित्येव यज्ञं वष्ढित्यस्योपपादकतया वाजिनीवतीति विशेषणस्योपयोगोऽभिहितो भवतीत्यर्थः । अत एवेति । वाजनोवतीति विशेषणोक्त्यनुपयोगप्रसङ्गादेवेत्यर्थः । तथा चैवंव्याख्याने तद्विशेषणं व्यर्थमापद्यत इति भावः । भाष्ये अन्नदाहीत्येवोक्तत्वादन्नादि दत्वेति कथं

पूर्वमर्थ उक्त इत्यत आह । अन्नेतीति । ज्ञानदेत्यपि ग्राह्यमित्यर्थः । वसेरुकारप्रत्यय इति । वसनिवासे अस्मादुकारप्रत्यये वस्विति रूपम् । तेनेति । धिया सह वसेदित्यर्थः । सहार्थे तृतीयाया इति । 'सहयुक्ते अप्रधाने' इति सूत्रविहिताया इत्यर्थः । ननु समासे 'सुपो धातुप्रातिपदिकयोः' एतयोरवयवस्य सुपो लुक् स्यादित्यनेन तृतीयाविभक्तिलोपे धीवसुरिति स्यात् इत्यत आह । अलुक् चेति । तथाच धिया वसुरिति भवतीति ध्येयम् । तात्पर्यकथनमिति । धिया सहैव वसति । धियं विना कदापि न वसति इत्युक्त्या नित्यबोधवत्वस्यैव प्राप्तेरित्यर्थः । यज्ञं वष्टु धिया वसुरिति । वाग्वै धिया वसुरिति उपनिषदोऽप्ययमेवार्थो द्रष्टव्यः ॥ १० ॥

चोदयित्री सूनृतानाम् । ननु न लोकेत्यादिसूत्रे लेत्यनेन लडादेशभूत शतृशानचोर्योगे षष्ठी निषेधात् प्रकृते च तच्छब्दस्यापि वक्ष्यमाणरीत्या लडादेशशत्रन्ततया तद्योगे कथं सुमतीनामिति षष्ठीत्यत आह । द्वितीयार्थ इति । कर्मणिप्राप्तायाः द्वितीयायाः सुपां सुलुगित्यनेन षष्ठ्यादेश इत्यर्थः । तथाच सुमतीरित्यर्थो द्रष्टव्यः । अत्र णिलोपस्येति । चितीसंज्ञाने अस्मात् लटि तस्य शत्रादेशे शकारऋवर्णयोर्लोपे अत् इत्येतावति स्थिते पश्चात्तत्करोति तदाचष्टे इत्यादिना ज्ञानकारिणीत्येव तत्करोतीत्यर्थे णिच्प्रत्यये णकारचकारयोर्लोपे प्रातिपदिकाद्धात्वर्थे बहुष्टमिष्ट-वच्चेति णिचः इष्टन् प्रत्ययकार्यभूतटिलोपकारिताया उक्तत्वादिह णिचि परे टिभूतस्येकारस्य लोपे धात्विकारस्य गुणे चेत् इ अत् इति जाते णिच इकारस्य गुणे तस्य अयादेशे चेतय् अत् चेतयदिति तकारान्तप्रातिपादिकसिद्ध्या पश्चादुगिदचामिति नुमागमे मित्वादन्त्यादचःपरं जाते चेतयन्त् इति स्थिते पश्चात् स्त्रीत्वविवक्षायां ङीपि चेतयन्तीति रूपेण भाव्यम् । प्रकृते च णिचः सर्वस्यापि लोपेन आयादेशाप्राप्तौ सत्यां पूर्वोक्तरीत्या चेतन्त् ई चेतन्तीति जातमिति । अतोऽत्र णिलोपस्य निमित्तमाहेत्यर्थः । योयकारः अत्र य इत्यनेन अयादेशो ग्राह्यः नामैकदेशे नामग्रहणमिति न्यायादिति द्रष्टव्यम् ।

ननु चेतन्तीत्यत्रोक्तरीत्या णिजेव लुप्तोऽस्ति न तु यकार इत्यत आह । य इतीति । णेर्णिचः णिच् प्रत्ययेकारस्य यादेश इत्येवं अयादेशस्य णिज्निमित्तत्वरूप शक्यसम्बन्धसद्भावादिति भावः । भाष्ये स्वातन्त्र्याल्लुप्तयो भवेदित्यत्र नियामकस्यानुक्तत्वात् बृहद्भाष्योक्तं नियामकं स्वयमाह । स्वातन्त्र्यस्नेहयोरिति । स्वातन्त्र्यस्नेहयोर्विवक्षितयोः सतोः णिच् अन्तर्णीतो भवति । तल्लोपो भवतीत्यर्थः । स्वातन्त्र्ये 'तद्विजानीहि यद्विज्ञानमात्मतत्वानिदर्शनम् । यज्ञे बहुज्ञं परमाभ्युदारम् । द्रष्टुश्चक्षुषो तातिजिंहे'त्याद्युदाहरणम् । स्नेहे 'सुभद्रां रथमारोप्य कृष्णस्तु द्वारकां ययौ' । उत्तानपादः स्वसुतमारोप्य करिणीं ययौ' । इत्यादि द्रष्टव्यम् । इतिस्मरणात् इति । इति

महाव्याकरणसूत्रादित्यर्थः । तदिदं स्वातन्त्र्यरूपं निमित्तम् । एवंभूतेति । चोदयित्री सूनृतानां चेतन्ती सुमतीनामित्यर्थः । अनेनेत्यादि भाष्यं व्याख्याति अनेनेति । उक्तप्रकारेणेति । सुवाचां प्रेरकः सुबुद्धिज्ञापिकेत्युक्तप्रकारेणेत्यर्थः । वाग्बुद्धिप्रवर्तकत्वेनैव निमित्तेन यज्ञादिधारकत्वे वाग्बुद्धिप्रवर्तकत्वस्य कथमुपयोग इत्यत आह । वाग्बुद्धीति । एवं च सति यज्ञादिकर्मणामपि बुद्धिवागादिनिमित्तकत्वात्पूर्वोक्ततत्प्रवर्तकत्वं यज्ञं दध इत्युक्तयज्ञादिधारकत्वनिमित्तमित्ये-तद्युक्तमेवेति भावः ॥ ११ ॥

महो अर्णः सरस्वति । महो अर्ण इति तंत्रेण भाष्यऋचोरुभयोरपि प्रतीकग्रहणमिति मन्तव्यम् । अरमित्यस्यालमित्यर्थः । सम्यगिति यावत् । प्रशब्दस्य तात्पर्यमिति । फले प्रकृष्टत्वं विनाऽनुपपन्नमिति फले प्रकृष्टत्ववाचिप्रशब्दस्य साधनप्रकृष्टार्थकत्वकथनं तात्पर्यमात्रमेवेति भावः । लट्लिङर्थे इत्याशयेनाह । तत एवेति । सज्ज्ञानदानतः समीचीनमहत्तरपरब्रह्म-विषयीकारित्वसामर्थ्यदानत इति व्याख्येयम् । परब्रह्म विषयीकारिणीत्यर्थः । यद्वा बुद्धिशब्देन बुद्धिरूपेन्द्रियं ग्राह्यम् । भगवद्विषयकज्ञानवतीत्यर्थः ॥ १२ ॥

## पदार्थदीपिका

ऊ निपात इति ॥ निपातानामनेकार्थत्वादिति भावः ॥ ओंशब्दसमानार्थ ओशब्द इति ॥ अवतेः प्रवेशार्थात् अधिकरणे औणादिके क्विपि ज्वरत्वरस्रिव्यविमवामुपधायाश्चेति उपधाया वकारस्य चोठि सवर्णदीर्घे क्विपः कित्वेऽपि बाहुलकात् गुणः । ततश्च अवति प्रविशत्यस्मिन्नि-त्येवमोशब्दः ओंकारसमनार्थक इत्यर्थः । इयांस्तुभेदः । यदोंशब्दे अवतेष्टिलोपश्चेति मन् प्रत्यये तस्य च टिलोपे उक्तप्रकारेणोठि सवर्णदीर्घे गुणे कृन्मेजन्त इत्यव्ययत्वम्, ओशब्देतु गोशब्द-वदोकारान्तत्वमित्यवधेयम् ॥ अवतिरूपत्वादिति ॥ अवतेः क्विप् गुणश्चौतशब्दवद्बाहुलकादेवेति ज्ञेयम् । ननु ओतामास्विति सप्तमीसमासे प्रथमादिनिर्दिष्ट सप्तम्यन्तरस्य अप्रधानरूपोपसर्जनत्वेन उसर्जनं पूर्वमिति माशब्दस्यैव पूर्वनिपातः स्यादित्यतः अर्धपिप्पली, पूर्वकाय इत्यादौ क्वचित्प्रधानस्यापि पूर्वनिपातदर्शनात् उपसर्जनं पूर्वमित्यत्रान्यार्थस्य प्रायिकत्वमित्याशयेनाह । उपसर्जनस्येति । ततो व इति । अशूपृषिलटिकणिखाटि विशिभ्यः क्विन् इति सूत्रेणेति भावः । क्विश्चेति । कित्वात् लघूपधगुणाभाव इति भावः । विशो वान्तीति विश्व इति । अतोऽनुपसर्गे क इत्यनेन कप्रत्यय इत्यर्थः । सर्वशब्दपर्यायस्यैवेति । संज्ञोपसर्जनयोः सर्वनामसंज्ञानि सर्वादीनि सर्वनामानीत्यावृत्याश्रयणादिति भावः । सर्वनाम्न एवेति । जसः शी इत्यत्र सर्वनाम्नः स्मा इत्यत्र

सर्वनाम्न इत्यस्यानुवृत्तेरिति भावः । दाशृदातृ इति । अस्मात् किटः क्सौ दाश्वान् साह्वान् मीढ्वांश्चेति निपातनात् क्र्यादिनियमप्राप्त इडागमो द्विर्वचनं च न भवतीति भावः । दाशुषो दातुरिति । वसोः सम्प्रसारणमिति सम्प्रसारणम् । सम्प्रसारणाच्चेति पररूपत्वं शसिवसिघसीनांचेति षत्वमिति भावः ॥ ७ ॥

ततः क्विबिति । क्विप् चेति सूत्रेण कर्तरिक्विप् । ततश्च अपः तुरयन्ति त्वरयन्ति फलोन्मुखीकुर्वन्तीत्यप्तुरः कर्मवेगिन इत्यर्थः । एवशब्देनेति । उस्रास्तु रश्मयश्चैवेति भाष्यस्थैव शब्देनोस्रशब्दानिर्वचनानपेक्षत्वं सूचयतीत्यर्थः । तत्र हेतुराभिधानिकत्वादिति । उस्रशब्दस्य रश्मिनामसु पाठेन स्वसरशब्दस्य चाहर्नामसु पाठेन निघण्टुप्रसिद्धत्वादित्यर्थः । तूर्णयस्त्वरिता इति । तूर्णिशब्दस्य क्षिप्रनामसु पाठादिति भावः । आगन्तेति । बहुलं छन्दसि शपोलुक् । इषुगमियमां छ इति प्राप्तछत्वाभावःच्छान्दसः । तस्य तदित्यतः तस्येत्यनुवर्तमाने तप्तनप्तनचनाचेति तस्य तबादेशः अपिदिति प्रतिषेधादङित्वात् अनुनासिकलोपाभाव इत्याशयः ॥ ८ ॥

ततः क्विबिति ॥ स्रिधुहिंसायामित्यतः सम्पदादित्वात् भावे क्विबित्यर्थः । कित्वात् गुणाभाव इति भावः ॥ क्लेशार्थ इति । द्रुघजिघांसायामिति दिवादौ पाठेऽपि तात्पर्यतः क्लेशार्थ इत्यर्थः । सम्पदादित्वात् क्विबिति । द्रोहणं ध्रुक् । भावे क्विबित्यर्थः । वाद्रुहमुहष्णुहाष्णीहामिति हकारस्य दकारः । ततो दकारस्य भष्भावो धकारः जस्त्वचर्त्वे इति भावः । जुषन्तेत्यस्य लङ्प्रथमपुरुषबहुवचनत्व प्रतीतिनिरासायाह । जुषतेति । तथाचानुस्वारछान्दस इति भावः । नन्वेवं ते जुषन्त्विति भाष्य व्याख्यानविरोधः इत्यत आह । तस्येति । नन्वेवं ऋग्द्वये आगन्तेत्यस्य जुषन्तेत्यस्यापि लोण्मध्यमपुरुषबहुवचनत्वे विश्वेदेवास इत्यस्यामन्तिमत्वापत्या विश्वे इत्यस्य पादादित्वेनाष्टकनिघातासम्भवेन षष्ठिकाद्युदात्तत्वेऽपि देवास इत्यस्य प्रथमऋचीव निघातापत्या देवास इत्यस्य मध्योदात्तत्वान्नोपपद्यते । न च विश्व इत्यस्यामन्त्रिततत्वेन आमन्त्रितं पूर्वमविद्यमानवत् इति अविद्यमानवद्भावात् त्यदादित्वेन न देवास इत्यस्य निघात इति वाच्यम् । एतन्न्यायस्यैमाशु इत्येतदृच्यंपि सम्भवेन तत्राप्युदात्तत्वाभावापत्या एतदृग्द्वये देवास इत्यस्य निघाताभावेऽपि आमन्त्रिताद्युदात्तत्वापत्त्या च मध्योदात्तत्वस्य सर्वथानुपपन्नत्वादिति चेन्मैवं, पूर्वतनऋक्प्रायपाठेन स्पष्टदर्शनेन च आगन्तेत्यादेर्मध्यमपुरुषत्वे स्थिते तदनुसारेण देवास इत्यत्र एमाशुमाशवे भरेत्यत्राशुव इत्यस्येव व्यत्ययेन निघातसम्भवात् । ओमास इति पूर्वऋचि तु ''विश्वे ते च प्रवेशनात् । सर्वे वाथ विशां वाना''दिति भाष्ये क्विशब्दस्य यौगिकत्वेन उक्तत्वात् योगस्य चातिप्रसक्तत्वेनातिप्रसङ्गभञ्जकदेवशब्दस्य विशेषशब्दत्वात् विभाषितं विशेषवचने बहुवचनमिति विश्वशब्दस्य नैयमिकाविद्यमानवद्भावनिषेधात् युक्तो देवास इत्यत्र निघात इति अस्मद्गुरवः ।

केचित्तु प्रथमर्चि विश्वशब्दस्य गणदेवतावचनत्वेन सामान्यशब्दत्वम्, देवास इत्त्यस्य च यौगिकत्वेन तद्विशेषवचनत्वं च वेदापव्याख्यानोक्तरीत्त्याङ्गीकृत्य विभाषितं विशेषवचन इत्यनेनाविद्यमानवद्भावनिषेधसम्भवेन देवास इति निघातमुपपाद्योत्तरऋग्द्वये च तद्वैपरीत्येन विश्वशब्दस्य विशेषशब्दत्वं देवास इत्यस्य सामान्यशब्दत्वं चाङ्गीकृत्य विभाषितमित्यस्य प्राप्त्यभावेन विश्व इत्यस्याविद्यमानवद्भावात् पादादित्वेन देवास इत्यस्य निघाताभावं उपपादयन्ति। तत्र च पूर्वर्चि विश्वशब्दस्य योगपरभाष्य अस्वारस्यं, विश्वेदेवशब्दयोः ऋग्भेदेन सामान्यविशेषवाचित्वविशेषणविशेष्यभावव्यत्यासादिकं स्पष्टमेव समाधानमित्त्यवधेयम् ॥ औणदिक इति ॥ वीज्याज्वुरिथ्यो निरित्यनुवृत्तौ वहिश्रिषुलाप हात्वरिभ्यो विदिति सूत्रेणेति भावः ॥ ९ ॥

सरस इत्यनूद्य व्याख्यानम्। तस्य तात्पर्यमाह ॥ बलवानित्यर्थ इति ॥ अस्यां विद्यत इति ॥ मादुपधायाश्च मतोर्वायवादिभ्य इत्युपधात्वात् मतुपोवत्वतसौमत्वर्थ इति भसंज्ञया पदसंज्ञाया अबाधितत्वात् न हुत्वविसर्गे इति भावः। हरिप्रियत्वमित्येतत् मतुबर्थस्य सम्बन्धस्य विवरणमित्याह ॥ तद्वत्वादिति ॥ तद्भार्येति ॥ पुंयोगादाख्यायामिति ङीबिति भावः ॥ स्त्रियामीकार इति ॥ जातेरस्त्रीविषयादयोपधात् इति ङीबित्यर्थः। उपलक्षणं चैतत्। यस्येतिचेत्यकारलोप इत्यपि द्रष्टव्यम्। हरौ स्त्रीलिङ्गानुपपत्तिपरिहाराय भगवान् स्त्रीरूप इत्येव वक्तव्ये भाष्यं पुंरूपश्चेत्यधिकोक्तेः तात्पर्यमाह ॥ यदीत्यादिना ॥ अन्नेन इति भाष्यपदं श्रौतपदतात्पर्यकथनमिति भावेन श्रौतपदं स्वरसतो विवृणोति ॥ वाजमन्नमित्यादिना ॥ अत एवाह ॥ अस्य तात्पर्यमिति ॥ इदानीं भाष्यपदस्वारस्यमनुरुध्य वाजिनीपदं विवृणोति ॥ यद्वेति ॥ स एवेति प्रषोदरादित्वादिति भावः ॥ अथवेति ॥ अन्नेनेत्यनन्तरे भाष्ये अथवेति शेष इत्यर्थः। ॥ अविभक्तिको निर्देश इति ॥ वाजिनी सूर्य उच्यते इत्यत्र भाष्ये वाजिनीत्यविभक्तिको निर्देश इत्त्यर्थः। वाजिनामिति भाष्यपदमनूद्य द्वेधा व्याचष्टे ॥ वाजिनामिति ॥ पूर्ववदिति ॥ वाजीनामीश इति भाष्यं वाजिनोऽश्वान् अन्नवतो वा नयतीत्यर्थे तात्पर्यकथनरूपेण वाजीनामश्वानां अन्नवतां वा इनो वाजीन इत्यर्थकथनरूपेत्युभयथा अन्नेन इति पूर्वभाष्यवद्विवरणमित्यर्थः। न च वाजि नयतीत्यर्थे वा वाजिनो नयतीत्यर्थे वा समासस्वरेण कृदुत्तरपदप्रकृतिस्वरेण वा सहस्रदाग्रामणीरित्यादिवत् वाजिनीशब्दस्यान्तोदात्तत्वापत्तिरिति वाच्यम्। परादिश्छन्दसि बहुलमित्यत्र ''परादिश्च परान्तश्च पूर्वान्तश्चापि गृह्यते'' इत्युक्तत्वेन पूर्वपदान्तोदात्तत्वस्यापि सम्भवादिति हृदयम् ॥

तान्यस्य सन्तीति ॥ छन्दसि ईवनयौ वक्तव्याविति वचनान्मत्वर्थीय इकारः । यस्येति चेत्यकारलोप इति भावः । मत्वर्थसम्बन्धविवरणपरं भाष्यमित्याह ॥ तेषां स्वामीति ॥ अन्यदपीति ॥ सूर्यादन्यदपीत्यर्थः ॥ युद्धवत्वोपपादनायेति ॥ अनेन ज्ञानयुद्धत्वतोपीत्यस्य ज्ञानस्य युद्धं यस्याः सा ज्ञानयुद्धा । तस्याः भावः ज्ञानयुद्धत्वं तस्मात् इत्येवं ज्ञानयुद्धत्वत इत्यस्यार्थः उक्तो भवति । प्रसिद्धायाश्चेति ॥ अनेन सरस्वती हरिर्वापीति भाष्ये सरस्वतीपदं प्रसिद्ध-सरस्वतीपरमित्युक्तं भवति ।

ननु वह प्रापण इत्यतो लोट्प्रथमपुरुषैकवचने शपि षत्वप्रापकाभावात् 'वहतु' इत्येव भवितव्यं, वष्ट्विति तु कथमित्यत आह ॥ विकरणलोपः षत्वञ्चेति ॥ अदिप्रभृतिभ्यश्शपः इति तल्लोपविधायक सूत्रानन्तरपठितेन बहुलं च्छन्दसीति सूत्रेण शपो लुक् । षत्वप्रापकाभावेऽपि षत्वं चेत्यर्थः । अत एव यज्ञं वष्ट्विति यदाह यज्ञं वहतु इत्येव तदाहेत्युपनिषदि व्याख्यतमिति भावः । वाजैरन्नैर्यज्ञं वष्ट्विति प्रार्थनापरत्वेन व्याख्याने सरस्वतीं प्रत्येवैतादृशप्रार्थनाप्रयोजकान्नदान स्य स्वभावरूपविशेषण प्रतिपादकवाजिनीवतीशब्दस्योपयोगो लभ्यते इत्यर्थः । अत एवेति ॥ वाजिनीवतीशब्दस्य प्रकृतोपयोगालाभादित्यर्थः । प्रकृतविरुद्धत्वं चात्र द्रष्टव्यम् । अध्यात्मं देवत्वेन ज्ञानस्यापि विवक्षितत्वात् आह ॥ अन्नमित्युपलक्षणमिति ॥ वसतेरुकार इति ॥ शस्तृस्निहित्रपावसिहनिक्लिधिविधिपतिभ्यश्चेति सूत्रेण गतिसंज्ञस्योप्रत्ययविधानादिति भावः । ॥ अलुक्वेति ॥ छान्दस इति भावः ॥ १० ॥

न लोकाव्ययेति कर्मणि षष्ठीप्रतिषेधात् कथं शतृयोगे सुमतीनामिति षष्ठीत्यत आह ॥ द्वितीयार्थ इति । द्वितीयायां प्राप्तायां सुपां स्थाने सुपो भवन्तीति वक्तव्यात् द्वितीयायाः षष्ठ्यादेश इति भावः ॥ चेतयन्तीति वक्तव्ये चेतन्तीति यः लुप्तयकारः शब्दः तत्र यकारलोपे स्वातन्त्र्यं निमित्तमिति भावः । ननु णिलोपस्य निमित्तमाहेति टीकायामवतारितम् । भाष्ये तु यलोपनिमित्तमुक्तम् । यतो (ततो) वैय्याधिकरण्यमत्राह ॥ य इतीति ॥ यद्वा यल्लोपे भाष्यकारेण स्वातन्त्र्यं निमित्तमुक्तम् । तद्युक्तम् । स्वातन्त्र्यस्नेहयोरित्यादि सूत्रे णिलोप एव स्वातन्त्र्यनिमित्तत्वकथनादित्यत्राह ॥ य इतीति ॥ प्रवर्तकत्वेनेति ॥ अनेन सुमतीनां चेतनं प्रवर्तनमेव, न तु ज्ञापनम् येन पौनरुक्त्यं स्यादित्युक्तं भवति ॥ ११ ॥

## टीकाविवृतिः

ओमासः । अयं तृचो वैश्वदेवः । ऊरीकरण इति । अक्षरसाम्यान्निर्ब्रूयादिति वाऽव्यया-नामनेकार्थत्वाद्वेति भावः । व्याख्यानसमुच्चय इति । वक्ष्यमाणव्याख्यानांतरसमुच्चय इत्यर्थः । ननु

मन्त्रेनुस्वाररहितौकारस्य भाष्ये ॐकारार्थत्वेन व्याख्यानं न भद्रमित्यत आह । ओं शब्देत्यादिना । ओंशब्दसमानार्थ ओशब्द इति । ओंशब्दोयथाऽवतेष्टिलोपश्चेति मन्प्रत्यये प्रत्ययस्य टिलोपेन मकारमात्रशेषे च ज्वरत्वरेत्यूठि सार्वधातुकार्धधातुकयोरिति गुणे कृन्मेजंत इत्यव्ययत्वेच सिध्यति । तथाऽऽङ्पूर्वादवतेरेव प्रवेशाद्यर्थकात्क्विपि ऊठि आद्गुण इति गुणेच ओ इति शब्दो निष्पन्नः । अत उभयोः समानार्थता । ओताः प्रविष्टा गुणा अस्मिन्नित्युभयत्र व्युत्पत्तिसाम्यात् । ओतत्ववाची ह्योंकारो वक्त्यसौ तद्गुणोततामित्युक्तेः । कर्मणिकप्रत्यय इति । औणादिक इतिशेषः । तथाच मीयन्ते ये ते मा इत्युक्तं भवति । ओता मानेष्विति विग्रहे सप्तमीशौण्डैरिति शौण्डादेराकृतिगणत्वात्समासे सप्तमीति प्रथमानिर्दिष्टत्वात्सप्तम्यं तस्योप-सर्जनत्वेनोपसर्जनं पूर्वमिति माशब्दस्यपूर्वनिपाते मौ इति स्यादित्यत आह । परनिपात इति । छान्दसत्वात्संज्ञापूर्वकोविधिरनित्य इत्युक्तेर्वेति भावः । प्रोक्ताः नैघण्टुकैरिति । कृष्टयः चर्षणयः नहुष इति मनुष्यनामसु पाठात् । भाष्ये च प्रजाशब्देन मनुष्यग्रहणादिति भावः । ततोवः किन्चेति । अशूप्रुषिलटिकणिखटिविशिभ्यःक्वन्नित्युक्तः क्वन्नत्र विवक्षितः । अवयवार्थमुक्त्वा विग्रहमाह । विशो वान्तीति विश्व इति । सर्वशब्दपर्यायस्यैवेति । सर्वनामेति महासंज्ञाकरण-सामर्थ्यात् सर्वेषां नामानीत्यन्वर्थत्वविज्ञानात्सर्वादीनि सर्वनामानीति सूत्रावृत्त्या यानि सर्वेषां नामानि तान्येव सर्वादीनि नतु संज्ञोपसर्जनभूतान्येतादृशानि सर्वादीनि सर्वनामसंज्ञानि स्युरित्यर्थस्य शास्त्र आश्रयणादित्यर्थः ।

सर्वनाम्न एवेति । जसः शीतिसूत्रे सर्वनाम्नः स्मै इत्यतः सर्वनाम्न इत्यनुवृत्तेरिति भावः । कस्मै देवायेति । हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषाविधेमेत्यत्र हिरण्यगर्भो ब्रह्माऽग्रे सृष्ट्यादौ समवर्तत आसीदुत्पन्नोभूत् । भूतस्योत्पन्नस्य विद्यमानस्यवा जगतः पतिर्जातः पालकोभूत् । अत एको मुख्य आसीत् सपृथिवीम् उतेमां द्यांच दाधार धृतवान् अतो वयं देवाय कस्मै चतुर्मुखाय हविषा विधेम तं प्रसादयाम इत्यर्थप्रतीतेः किं शब्दरूपत्वाभावात्किंशब्दरूपस्यैव सर्वनामसंज्ञाविधानादिति भावः। देवतांतरेति । फलार्थयज्ञकरणस्य विष्णौ बाधितत्वादिति भावः । दातुरिति । होमकर्तुर-ध्वर्योरित्यर्थः । आगतागच्छतेति । गमेर्लोण्मध्यमपुरुषबहुवचने छान्दसे शब्लुकि इषुगमीति छत्वाभावे अनुदात्तो पदेशेति मकारलोपे गतेति रूपमिति भावः । अस्यामृच्योमास इत्यस्य पदात्परत्वाभावेन आष्टमिकामंत्रितनिघाताभावात् षाष्टिकामन्त्रिताद्युदात्तत्वम् । चर्षणीधृत इत्यस्य पदात्परत्वेन सर्वानुदात्तता । आमन्त्रितं पूर्वमविद्यमानवदिति सूत्रेण ओमास

इत्यस्याविद्यमानवद्भावो न । संज्ञापूर्वकोविधिरनित्य इत्युक्तेरस्यानित्यत्वात् । विश्व इति तु पादादित्वादाद्युदात्तम् । देवास इति च विभाषितं विशेषवचन इति विश्व इत्यादीनामविद्यमानवद्भावाभावात्पदात्परत्वेनानुदात्तम् । आ इत्येतदुपसर्गाश्चाभिवर्जमित्युदात्तम् । गतेति तिङन्तत्वादनुदात्तं दाश्वांस इत्येतत्प्रत्ययस्वरेण मध्योदात्तम् । अत्र आमंत्रितस्वराभावेनामन्त्रितत्वाभावादस्य यूयमित्यनेनान्वयो ज्ञेयः । एवं दाशुष इत्यपि । सुतमित्यपि प्रत्ययस्वरेणान्तोदात्तं ज्ञेयम् ॥ ७ ॥

विश्वेदेवासो अप्तुरः । कर्मवाचीति । अपः अप्न इति कर्मनामसुपाठादित्यर्थः । तुरत्वरण इति । क्विप् चेति कर्तरि क्विप् । अपः कर्माणि तु तुरतित्वरयन्ति फलोन्मुखीकुर्वन्तीत्यप्तुरः कर्मवेगिन इत्यर्थः । आभिधानिकत्वादिति । निघण्टुसिद्धत्वादित्यर्थः । वनं उस्रावसव इति रश्मिनामसूस्रशब्दपाठात्तथाहर्नामसु वासरं स्वसराणिघ्रंस इति स्वसराणीत्यस्य पाठादिति भावः । तूर्णय इति । तूर्णं तूर्णिः अजिरमिति तूर्णिशब्दस्य क्षिप्रनामसु पाठात् । यद्वा ञित्वरा सम्भ्रमे इत्यतः वह्निश्रिश्रुयुद्रुग्लाहात्वरिभ्योनिदित्यनेन निप्रत्यये ज्वरत्वरेत्यूठि तूर्णयस्त्वरा युक्ता इत्यर्थसिद्धेरिति भावः । गमेः पूर्ववच्छब्लुगादौ तप्तनप्तनथनाश्चेति तप्रत्ययस्य तबादेशात्पित्वातृङित्वा भावादनुनासिकलोपाभावेन गन्तेति रूपमभिप्रेत्याह । आगन्तागच्छतेति । नन्वस्यामृच्यप्तुर इत्यत्राऽऽमन्त्रितस्वराभावात्कथं हे अप्तुर इति व्याख्यायत इति चेन्न । आगन्तेति मध्यमपुरुषप्रयोगबलात्पूर्वर्क्साहचर्याच्चात्रामन्त्रितपरत्वेन व्याख्येयत्वात् । तत्र विश्व इत्यत्र तावदामन्त्रिताद्युदात्तत्वमस्ति देवास इत्यादौ पूर्ववदामन्त्रितनिघाताद्यभावस्तु व्यत्ययाद्यूयमित्यनेनान्वयेनामंत्रितत्वाभावाद्वा ज्ञेयः । टीकायां हे अप्तुर इत्यत्रत्यहेशब्दस्य विश्व इत्यनेनाप्यन्वयो बोध्यः ॥ ८ ॥

विश्वेदेवासो अस्रिधः । ततः क्विबिति । सम्पदादित्वादित्यर्थः । उपचारेणेति । मुक्तानां मुख्याहिंस्यत्वाद्विश्वेषां देवानां च मुक्तियोग्यत्वादहिंस्यस्वरूपत्वगुणयोगेनास्रिध इत्युच्यन्ते इत्यर्थः । डिरिति । कर्मणीति शेषः । डित्वादिषु धातोर्लोपि इष्यत इति ड्ः इति प्रत्ययेकारस्यैव यथेष्टमित्यर्थः सिद्ध्यति । प्रज्ञानामस्विति । शचीमायावयुनमिति पाठादित्यर्थः । सर्वविषयेति । एहिमायास इत्यत्राङः समंतत इति व्याख्यानात्सर्वविषयेत्युक्तम् । इकारस्येच्छार्थकत्वोक्तेः स्वतन्त्रेत्युक्तम् । स्वतन्त्रशब्दस्य स्वेच्छाधीनत्वार्थकत्वात् । क्लेशार्थ इति । यद्यपि द्रुहजिघांसायामिति दिवादौ पठ्यते तथापि धातूनामनेकार्थत्वादिदमुक्तम् । ध्रुगिति । वाद्रुहमुहेति हस्यघकारे दकारस्य भष्भावे जश्त्वचर्त्वे इति भावः । मेधः क्रतौ क्रियामेधेति विश्वोक्तेः

ऋचिभाष्ये च मेधमिति ह्रस्वान्तमेधशब्दोपपत्तिः । जुषीप्रीतिसेवनयोरित्यतः चक्षिङो ङित्करणे नानुदात्तेत्वलक्षणात्मनेपदस्यानित्यत्वज्ञापनाल्लोटः परस्मैपदादेशे मध्यमपुरुषबहुवचनथस्य तादेशे प्राप्ते व्यत्ययेनांतादेश इति भावेन प्रतिपदमाह । जुषंत जुषतेति । कथं तर्हि जुषंत्विति भाष्ये उक्तमित्यत आह । तस्य तात्पर्यमिति । यद्यपि भाष्यानुसारेणेयमृग्व्याख्यातुं शक्यते । तथाहि । सम्बोधनप्रथमान्तत्वज्ञापकनिघाताद्यभावात् विश्वेदेवास इत्यादिपदानि कर्तृवाचकान्यपि कर्तृत्वस्य तिङोक्तत्वात्प्रातिपदिकार्थेति प्रथमान्तानि । जुषेर्लोडात्मनेपदे झस्यान्तादे शेच्छान्दसत्वेन टित आत्मने पादानां टेरेत्वाभावेनामेत इत्यस्याभाव इत्याशयेन जुषन्तेत्यस्य जुषंत्विति प्रतिपदमिति । तथापि पूर्वऋग्द्वये मध्यमपुरुषप्रयोगात्तत्साहचर्येणात्रापि तथा व्याख्यानस्योचितत्वाद्विश्वे एहि मायास इत्येतयोराद्युदात्तत्वेनामन्त्रित लिङ्गत्वाद्देवा स इत्यादीनां यूयमित्येतद्विशेषण-त्वेनोपपन्नत्वात्तात्पर्यमित्युक्तम् । वह्तेरिति । वहिश्रिश्रु इत्यादिनेति शेषः । तथाचैवं योजना । हे विश्वे हे एहिमायासः यतो यूयं अस्रिधः अद्रुहः वह्नयो देवासश्च अतोनः मेधं यज्ञम् । वेनः मेधः नार्य इति यज्ञनामसुपाठात् । जुषत जुषन्त सेवध्वम् । ते विश्वेदेवाः जुषंत्विति तु तात्पर्यमिति ॥ ९ ॥

पावका । सारस्वतस्तृचः । भाष्ये शोधकत्वादित्यनेन पूङ्पवन इत्यस्मान्ण्वुलि पावकेति रूपमित्युक्तं भवति । असुन्प्रत्यय इति । सार्वधातुकार्धधातुकयोरिति गुणो रपरत्वं चेति भावः । सरसः ससार इति । रसः सारो वरश्चेति शब्दाः पर्यायवाचका इत्यभिधानादिति भावः । बलवानित्यर्थ इति । सारो बलेप्यृजुनिस्थिरांश इति विश्वकोशात्सारशब्दस्य बलवाचकत्वात्सार शब्दपर्यायरसशब्देन बलग्रहणादिति भावः । रसाकारलोप इति । पृषोदरादित्वादंत्याकारस्य लोप इत्यर्थः । सरःशब्दार्थ इति । पूर्वोक्तसर्वगत्वसर्वज्ञत्वबलवत्त्वससुखत्वयुक्तत्वादिति भावः । सरसुशब्दान्मतुपि मादुपधायाश्चेति मस्य वकारे तसौमत्वर्थ इति भसंज्ञयापदसंज्ञाबाधाद्रुत्वोत्वे न भवतः । उक्तनिरुक्त्येति । सरंति सर्वत्र गच्छन्ति सर्वं जानन्ति वा सरसः । रसेन बलेन सहिताः रसा रत्यासहिता वासरस इत्युक्त प्रकारेणेत्यर्थः । येषां ते इति । वाचकत्वेनेति शेषः । ज्ञानादि गुणानां सर्वगत्वादिकं तु सर्वगत्वादिविशिष्टहर्यभेदादवगन्तव्यम् । ब्रह्मपत्न्याः सरस्वत्याः हरिवाचकत्वं स्वाभिमन्यमानवेदद्वारा घटयति । वेदाभिमानित्वादिति । मत्वर्थस्तु वाच्यवाचक भाव इत्युक्तं भवति । वायौ मत्वर्थो हरिप्रीतिविषयत्वमित्याशयेनाह । तद्वत्त्वात्तत्प्रियत्वत इति । तत्प्रियेति । सरस्वतो वायोः प्रिया सरस्वती विष्णोरन्येत्यर्थः । पुंयोगादाख्यायामिति ङीषिति भावः । स्वं धनमिति । स्वं ज्ञातावात्मधनयोरिति विश्वकोशादित्यर्थः । सरस्वत् शब्दादिति ।

तनोतेरौणादिके ड्विप्रत्यये टिलोपे तकारमात्रं रूपम् । ततः शार्ङ्गरवाद्यञोङीनिति शार्ङ्गरवादि त्वमाश्रित्य ङीन्प्रत्ययः कार्यः । तेनाद्युदात्तत्वं सिद्धम् । मतुप्प्रत्ययपक्षेपि सरसृशब्दादसुन्नंतात् ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वे मतुपि उगितश्चेति ङीपि च उभयोः पित्वादनुदात्तत्वे आद्युदात्तं पदं भवतीति भावः । क्वचित्सरस्वतशब्दादिति पाठः । तदा तनोतेर्डप्रत्ययो बोध्यः । अन्यत्समानम् । नपुंसकरूपोप्यङ्गीकार्य इति । तर्हि स्यादिति चेदिति वाक्यशेषः । पुरुषाभिलाषादय इति । स्त्रीदोषाः पुरुषेच्छातद्वचनादयः । पुन्दोषाः स्त्रीच्छास्त्रीवशत्वादयः । वाजमन्नमिति । अन्धोवाजः पाज इत्यन्ननामसु पाठादित्यर्थः । यद्यप्यस्मिन्पक्षे श्रौतं पदं स्वरसं तथापि भाष्यं कथं योज्यमित्यत आह । अस्य तात्पर्यमिति । इदानीं भाष्यपदानुसारेण योजयितुमाह । यद्वेति । स एवेति । वाज इन इत्यत्र शकंध्वादित्वात्पररूपे निष्पन्नवाजिनेत्यस्य व्यत्ययेन ईकार इति भावः ।

ननु वाजिनीसूर्य उच्यत इत्यत्र सोरुत्वविसर्गयोर्वाजिनीशब्दः सविसर्गः पठनीय इत्यत आह । अविभक्ति क इति । सुपां सुलुगिति सुलोप इति भावः । एतेनान्नमन्नवत्क्रियावा वाजिनीति माधवव्याख्या प्रत्युक्ता । अभिधानाद्यभावात् । अथवेति । वाजिवाहार्वगन्धर्वेत्य-भिधानाद्वाजिनामश्वानामित्युक्तम् । अन्नवतामिति । वाजशब्दान्मत्वर्थे इनिः । पूर्ववदिति । उभयथा अश्वपक्षे अन्नवत्पक्षेन्न । पूर्ववद्विवरणं वाजिनो नयतीति वाजिनीः तस्यतात्पर्यं वाजिनामीश इति । अथवा वाजिनामिनः वाजिनः शकंध्वादित्वात्पररूपम् । स एव वाजिनीत्यर्थः । तान्यस्य सन्तीति । मत्वर्थे इनि प्रत्यये सौचेति दीर्घे च तदन्तान्मतुपि छन्दसीर इति वत्वे च सर्वे विधयश्छन्दसि विकल्प्यंत इति सुपोधातु प्रातिपदिकयोरिति सोर्लुगभावाद्वाजिनी इति दीर्घावस्थानमिति भावः ।

भाष्यं तात्पर्यकथनपरत्वेन सङ्गमयति । तेषां स्वामीति । इनिप्रत्ययार्थोयम् । कथं सूर्यस्येति । इदमुपलक्षणम् । छन्दसामश्वस्वामित्वं च कथमित्यपि ज्ञातव्यम् । तेचेना अन्यवाजिनामित्यंशेन तच्छंकायाश्च परिहारात् । छन्दांस्यश्वा इति भाष्यस्यायमर्थः । तस्य सूर्यस्य अश्वाः यतः छन्दांसि छन्दोभिमानिनः तेचाश्वाः अन्यवाजिनामिनाः स्वामिन इति । अन्यदप्यभिधेयमिति । सूर्यादिति शेषः । युद्धं चेति । महाधनं वाजं खगं इति सङ्ग्रामनामसु वाजशब्दस्य पाठादित्यर्थः । वाजशब्दात् मत्वर्थे इनि प्रत्यये नान्तत्वान्ङीबिति भावः । वाचोन्नवत्त्वं नाम अन्नभोजनेन पुष्टिमत्त्वम् । युद्धवत्त्वं नाम वादादि जनकत्वं ज्ञेयम् । ज्ञानार्थं युद्धमिति । अनेन ज्ञानयुद्धत्वत इत्यस्य ज्ञानाय युद्धं यस्याः सा ज्ञानयुद्धा तस्याः भावः ज्ञानयुद्धत्वम् । त्वतलोर्गुणवचनस्येति

पुंवद्भावः तस्मादित्यर्थ इत्युक्तं भवति । प्रसिद्धायाश्चेति । चशब्दात्स्वोत्तमविष्णवादि-सूक्तव्यतिरिक्तसर्ववेदप्रतिपाद्यत्वेन पूर्वोक्ते वायुलक्ष्म्यौ गृह्यते । अनेन सरस्वतीपदं प्रसिद्धसरस्व-तीपरमं अपिपदं वायुलक्ष्मीपरमिति सूचितम् । अशनैरिति । वाजशब्दस्यान्ननाम-सुपाठादन्नैरित्यर्थः । वष्टुवहत्विति । यद्यपि वशकान्तावित्यस्य लुग्विकरणपठितस्य व्रश्चेत्यादिना षत्वे वष्ट्विति रूपं सिद्ध्यति । तथापि यज्ञं वष्ट्विति यदाह यज्ञं वहत्वित्येव तदाहेति श्रुत्यनुसारेणैवं व्याख्यातं भाष्य इति ज्ञेयम् । विकरणलोप इति । अदिप्रभृतिभ्यः शपः । बहुलं छन्दसीत्यनेनेत्यर्थः । षत्वं चेति । व्यत्ययो बहुलमिति हस्य षत्वमित्यर्थः । वाजेभिरिति तृतीयायाः भावमाह । दत्वेत्यर्थ इति । अनेनेति । अन्नयुद्धवत्सूर्य वाग्देवताजनकत्वस्येति शेषः । अपव्याख्यां निराचष्टे । अत एवेति । तद्व्याख्याने वाजिनीवतीत्यस्योपयोगाभावादेवेत्यर्थः । उपलक्षणमिति । युद्धदेत्यपि ग्राह्यमिति शेषः । अयं चोपयोगप्रकारः । पावका सरस्वती यतोवाजिनीवती अन्नादिस्वामिसूर्यजनिका अन्नदेति यावत् । तथान्नज्ञानयुद्धवत्पार्वतीजनिका अन्नज्ञानयुद्धदेति यावत् । अतोवाजेभिर्वष्ट्वित्यादिः । उकार इति । शृस्वृ इत्यादिनेति शेषः । सहार्थ तृतीयाया इति । सहार्थक शब्दयोगे यातृतीया तस्या इत्यर्थः । अत्र सहशब्दयोगाभावेपि वृद्धो यूनेति ज्ञापकात्तृतीयेति भावः । तृतीयातत्कृतार्थेनेत्यत्र तृतीयेति योगविभागात्समासः । ओजः सहोंभस्तमसस्तृतीयाया इत्यत्रापि तृतीयाया इति योगविभागेनात्र लुगिति भावः । धियावसुः कर्मवसुरिति कर्मप्रार्थननिमित्तेति निरुक्तव्याख्यानं बाह्यकर्मपरम् । यज्ञं वष्टु धियावसुरिति वाग्वै धियावसुरित्युपनिषद्व्याख्यानं त्वध्यात्मपरमिति सूचनाय पूर्वं द्वेधा व्याख्यातमिति ज्ञातव्यम् ॥१०॥

चोदयित्री । सुवाचामिति । सूनृतं प्रिये इत्यभिधानात्प्रियभूतानां वाचामित्यर्थः । प्रेरकेति । क्षिपकादीनां चेति वार्तिकेन प्रत्ययस्थात्कादित्युक्ते त्त्वं नेति भावः । द्वितीयार्थ इति । सुपां सुपोभवन्तीत्यनेन कर्मार्थद्वितीयायाः षष्ठ्यादेशः । तेन शत्रंतयोगान्नलोकाव्ययेति षष्ठीनिषेधशंकानवकाश इति भावः । णेरुपलक्षणमिति । णिचोगुणे अयादेशे च तन्मध्ये यकारस्यापि सत्त्वात् यग्रहणेनाय् गृह्यते । सचस्थानिवद्भावेन णिरित्युच्यते इति भावः । सुबुद्धिज्ञापिकेति । शोभना या बुद्धिः तां ज्ञापयति प्रवर्तयतीत्यर्थः । विशेषशब्द सन्निधानात्तद्वाचकशब्दान्तरस्य सामान्येर्थे पर्यवसानादिति भावः । तदिदमुक्तं सैवेतीति । एवकारेण परनिरपेक्षत्वोक्तेरिति भावः । वाग्बुद्धिमूलत्वादिति । कर्मस्वरूपादि ज्ञात्वा मन्त्र व्यवहारपूर्वकानुष्ठितकर्मणां सफलत्वादिति भावः ॥ ११ ॥

महो अर्णः । तेजस्त्वादिति । मह उत्सवतेजसोरित्यभिधानात्तेजोर्थकः । महः ब्रध्न इतिमहन्नमसु पाठान्महत्त्वार्थको महःशब्द इति भावः । महपूजायां महिवृद्धाविति धातु द्वयसम्भवादत्र महत्त्वं पूज्यत्वं पूर्णत्वं वा बोध्यम् । अरमानन्देति । रलयोरभेदादरं अलं पूर्णो ण आनन्दस्तत्स्वरूपत्वादित्यर्थः । महो अर्ण इति कर्मप्रतिपादकं पदं व्युत्पाद्यान्वयक्रमेण ऋक्पदानि भाष्यपदैः संवादयति । सादेवीति । केतुना ज्ञानेनेति । केतुर्द्युतौ पताकायामिति विश्वकोशोक्ते र्ज्ञानरूपा द्युतिर्गृह्यत इति भावः । ज्ञानं दत्वेति । ज्ञानसामर्थ्यं दत्वेत्यर्थः । तेन ज्ञापयतीति न पुनरुक्तिरिति भावः । अथवा ज्ञानं दत्वा सामान्यज्ञानं दत्वा विशेषतो ज्ञापयतीत्यर्थः । इदं त्विति । अन्यसरस्वत्याः कर्तृत्वेन परब्रह्मणः कर्मत्वेनोक्तेरिति भावः । महो अर्ण इत्यादि भाष्यपदान्यन्वयक्रमेण ऋक्पदैः संवादयति । भगवद्विषय इति । भाष्ये सुज्ञानदानत इत्युक्तिर्ऋक्पूर्वोत्तरार्धयोर्हेतुहेतुमद्भावज्ञापनायेति भावेनाह । तत एवेति । सुज्ञानदानत इति विशेषज्ञानयुक्ता । बुद्धिः सामान्यज्ञानमित्यर्थः ॥ १२, ६, ३, १ ॥ षष्ठोवर्गः ।

## ऋक्संहिता पदपाठसहिता

(३१) सुरूपकृत्नुमूतये सुदुघामिव गोदुहे ॥ जुहूमसि द्यविद्यवि ॥ १ ॥

(प०) सुरूपऽकृत्नुम् । ऊतये । सुदुघाम्ऽइव । गोऽदुहे ॥ जुहूमसि । द्यविऽद्यवि ॥ १ ॥

(३२) उप नः सवना गहि सोमस्य सोमपाःपिब ॥ गोदा इद्रेवतो मदः ॥ २ ॥

(प०) उप । नः । सवना । आ । गहि । सोमस्य । सोमऽपाः । पिब ॥ गोऽदाः । इत् । रेवतः । मदः ॥ २ ॥

(३३) अथा ते अन्तमानां विद्याम सुमतीनाम् ॥ मानो अतिख्य आगहि ॥ ३ ॥

(प०) अथ । ते । अन्तमानाम् । विद्याम । सुऽमतीनाम् ॥ मा । नः । अति । ख्यः । आ । गहि ॥ ३ ॥

(३४) परेहि विग्रमस्तृतमिन्द्रं पृच्छा विपश्चितम् ॥ यस्ते सखिभ्य आवरम् ॥ ४ ॥

(प०) परा । इहि । विग्रम् । अस्तृतम् । इन्द्रम् । पृच्छ । विपःऽचितम् ॥ यः । ते । सखिऽभ्यः । आवरम् ॥ ४ ॥

(३५) उत ब्रुवन्तु नोनिदो निरन्यतश्चिदारत । दधाना इन्द्र इद्दुवः ॥ ५, ७ ॥

(प०) उत । ब्रुवन्तु । नः ।निदः । निः । अन्यतः । चित् । आरत ॥ दधानाः । इन्द्रे । इत् । दुवः ॥ ५, ७ ॥

ऋग्भाष्यम्

सूक्तं त्वनारतं प्रोक्तमनुवागेककालिका ।
अन्यथात्वं च तत्र स्यादावापोद्वापतस्त्वृचाम् ।
वेदानन्तत्वविज्ञप्त्यै तौ चक्रे बादरायणः ।
ऋचः स ऋच उद्धृत्य ऋग्वेदं कृतवान्प्रभुः ।
यजूंषि निगदाच्चैव तथा सामानि सामतः ।
एवं पुराणवचनादुद्धृता हि ततस्ततः ।
ऋचः शाखात्वमापन्नाः शिष्यतच्छिष्यकैरिमाः ।
मानस्तेनेति पूर्वासु ह्यूनता दृश्यतेऽर्थतः ।
शुनः शेपोदिताभ्यश्च पठ्यन्तेऽन्यत्र काश्चन ।
अत्राप्यक्रमतोदृष्टिरिति नैकक्रमो भवेत् ।
अनन्तत्वात्तु वेदानां प्रायः कर्मानुसारतः ।
संक्षेपं कृतवान्देवः शिष्याश्च तदनुज्ञया ।
अष्टकाध्यायवर्गादिभेदं च कृतवान्प्रभुः ।
स्वाध्यायविश्रमार्थाय तस्मात्क्रम विपर्ययः ।
तत्र तत्रैवान्तरिता दृश्यन्ते च खिला अपि ।
यत्रार्थेन विशेषोस्ति पदान्तरिततात्र च ।
यत्राल्पोपि विशेषोस्ति पदं नान्तरितं भवेत् ।
विष्णुं सुरूपकर्तारमभिप्रेतार्थसिद्धये ।
त्राणायवा कामधेनुमिव दोहाय तत्स्थितेः ।
दिने दिने स्वाह्वयामो ॥ १ ॥
ज्ञानदोस्यैव चाधिकम् ।
ज्ञानाख्यरयियुक्तस्य हिरण्यादि मतोपि वा ।
सुखकारी भवान् ॥ २ ॥
तस्माल्लभेम सुमतीस्तव ।
अन्ते मितास्त्वद्विपया मतयो ह्युत्तमोत्तमाः ।
अस्मानतीत्य मा पश्य करुणार्द्रदृशा सदा ॥ ३ ॥

मन्मनोवाथ शक्रो वा दूरेपि परमेश्वरम् ।
गच्छाग्राह्यमनष्टं च व्याप्तचित्तं य एव च ।
सखिभ्य उत्तमो नित्यम् ॥ ४ ॥
निदस्तस्य समीपगाः ।
तेपि ब्रुवन्तु नोदेवं प्राप्नुर्ये चान्यतोपि तम् ।
निर्गत्याज्ञानतस्त्वस्माद्दधाना ईश एव च ।
दुवः प्राणान्ब्रुवं त्वेव तेपि नः परमेश्वरम् ॥ ५, ७ ॥

## ऋग्भाष्यटीका

तत्र सूक्तादिस्वरूपजिज्ञासायामाह ॥ सूक्तमिति ॥ अनारतं प्रोक्तं निरन्तरं पठितम् । मूलवेदे ऋचां यःक्रमः तत्र ऋचोऽनन्तरिताः कृत्वा यावत्पठितं तावदुपवेदे सूक्तमुच्यते । ऋषिभिर्दर्शनसमये यावन्निरन्तरकाले दृश्यते साऽनुवागुच्यते । यद्वैककालिकेत्यस्य विराममकृत्वैकस्मिन्काले पठनीयेत्यर्थः । उक्तस्यापवादमाह ॥ अन्यथात्वं चेति ॥ मूलवेदादुद्धृतेष्वृङ्निगदाद्युपवेदेषु यदनारतप्रोक्ततया सूक्तमुक्तं तत्र तस्य ततोप्युद्धृतेष्वृग्वेदादिष्ववान्तरवेदेष्वन्यथात्वं च स्यात् । कथम् । ऋचामावापोद्वापरूपेण तत्क्रमपठितानां कासांचिदृचामुद्वापः स्थानान्तरस्थानां तत्रावाप इति । उपवेदगतसूक्तान्तर्गतऋक् प्रबन्धत्वेनावान्तरवेदे सूक्तसंज्ञेति ज्ञातव्यम् । आवापोद्वापकरणे को हेतुरित्यत आह ॥ वेदेति ॥ इदं तु वक्ष्यमाणविवरणानुसारेण प्रतिपत्तव्यम् । भवेदेतद्यदि मूलवेदादुपवेदानां ततोऽवान्तरवेदानां चोद्धारेण प्रबन्धनिर्माणं प्रामाणिकं स्यात् तदेव कुत इत्यत आह ॥ ऋच इति ॥ ऋङ्निगदसामानीति मूलवेदादुद्धृता उपवेदा उच्यन्ते । ततो मूलवेदादुपवेदास्ततश्चावान्तरवेदा उद्धृता इत्येतदेवं पुराणवचनादवगम्यत इत्यर्थः ।

यथोपवेदादिप्रबन्धः कृत्रिम एवं शाखाप्रभेदोपीत्येतत्प्रसङ्गादाह ॥ ऋच इति ॥ ऋच इति प्रस्तुतत्वादुक्तम् । यजुरादिकं चैवं ज्ञातव्यम् । एवमावापोद्धारावुपपाद्य तत्र लिङ्गं च दर्शयति ॥ मान इति ॥ मानःस्तेनेभ्योये अभिद्रुहस्पदेनिरामिणोरिपवोऽन्नेषु जागृधुः । आदेवानामोहते विव्रयो हृदि बृहस्पतेनपरः साम्नोविदुरित्येतस्यामृचि पूर्वोत्तरार्धयोरसम्बद्धार्थत्वेनार्थतो न्यूनता दृश्यते । ततो ज्ञायतेऽत्रान्तरितं वाक्यमस्तीति । एवमन्यत्रापि । किं च शुनःशेपस्तावदृचां शतं क्रमेण ददर्शेति ब्राह्मणम् । तासामवान्तरवेदे त्र्यूनं शतमेव द्वितीयाध्याये दृश्यते । ताभ्योऽन्यास्त्वन्यत्र पठ्यन्ते । तेन ज्ञायते ऋचामित उद्वापोऽन्यत्रावाप इति । किञ्च अत्र मधुछन्दसा दृष्टास्वपि ऋक्षु नायमेव क्रम इत्याह ॥ अत्रापीति ॥ अक्रमतो दृष्टिरित्यवान्तरवेदे यः

क्रमस्तमुल्लंघ्यैव मधुछन्दसो दृष्टिरित्यर्थः। यद्वा मूलवेदोपवेदयोर्यः क्रमस्तमुल्लंघ्यैवावान्तरवेदेऽत्र माधुछन्दसे प्रकरणे ऋचो दृश्यन्त इति। इति नैकक्रमोभवेत् मूलवेदोपवेदावान्तरवेदेष्विति शेषः।

वेदानन्तत्वविज्ञप्त्या आवापोद्धापाभ्यां संक्षेपः कृत इत्युक्तं तदसत्। अनन्ता वै वेदा इत्यादिनैव तज्ज्ञप्तिसम्भवादित्यत उक्तं विवृणोति ॥ अनन्तत्वादिति ॥ अनन्तत्वात्तदुक्तप्रकारेण कर्मकरणाशक्तेरिति शेषः। इतश्च न मूलवेदादिष्वेकप्रकारतेत्याह ॥ अष्टकेति ॥ मूलवेदादावविद्यमानमेवेति शेषः। उद्धारे लिङ्गान्तरं च दर्शयति ॥ तत्रेति ॥ खिलाः परिशिष्टाः। नन्वयमुद्धारः कथं ज्ञायत इत्यतस्तस्य ज्ञापकं लेशेन दर्शयति ॥ यत्रेति ॥ यत्र वाक्यद्वयस्यार्थे विशेषो नास्ति तत्र येन पदेन सा पुनरुक्तिःपरिहृता स्यात्तत्पदमंतरितं ज्ञातव्यम्। यत्र तु विनापि पदान्तरमल्पेनापि विशेषेण श्रुतेनैव पुनरुक्तिपरिहारः स्यात्तत्र पदान्तरितता न कल्पनीया। एवमन्यान्यपि लिङ्गानि गवेषणीयानीति। अनेन वर्गस्तु सामयिक एवेत्युक्तम्।

सुरूपकृत्नुम्। दशर्चमिदमैन्द्रं सूक्तम्। विष्णुम्। वयं द्यवि द्यवि दिनेदिने। गोदुहे गोर्दोहाय। सम्पदादित्वात्क्विप्। गां दोग्धीति गोधुक् तस्मै गोदुहे। तदर्थं दोहायेति शेषः। सुष्ठु दोग्धीति सुदुघा। दुहःकप्घश्च। तां कामधेनुमिव। तस्मिंस्थितिर्यस्यासौ तत्स्थितिः तस्य भगवदाश्रयस्य यजमानस्योतये अभिप्रेतार्थसिद्धये त्राणाय वा। अवतेरुभयार्थत्वात्। सुरूपकृत्नुं साधुरूपाणां कर्तारं विष्णुमिन्द्रं च जुहुमसि स्वाह्वयामः। ह्वयतेःश्लुः। द्रार्ष्टान्तिके ऊतय इति प्रयोजनस्य श्रुतत्वात् दृष्टान्तेपि दोहायेत्युक्तम्। दृष्टान्ते गोदुह इत्युक्तत्वात् दार्ष्टान्तिकेपि तत्स्थितेरिति शेषोभिहितः। स्मसीत्यादिप्रोक्ताधिक्यविवक्षयेत्युक्तत्वात् स्वाह्वयाम इत्युक्तम् ॥ १ ॥

उपनः। ज्ञानदः। हे सोमपाः इन्द्र। यो भवान्नेवतोऽध्यात्मं ज्ञानाख्यरयियुक्तस्य बहिरपि त्वत्पूजार्थं हिरण्यादिमतोऽस्य यजमानस्य। इत् एव। गोदाः ज्ञानदः। मदः सुखकारी च। सत्वं नोऽस्माकं सोमस्य सवना सवनान्युपागहि उपागच्छ। पिबच सोमम्। यदि यजमानो ज्ञानाख्यरयियुक्तः किं तस्य ज्ञानदानेनेत्यत उक्तमधिकमिति। क्रियाविशेषणं चैतत् ॥ २ ॥

अथाते ॥ तस्मात्। यस्मात्त्वं ज्ञानादिमतोऽभिप्रेतार्थदायी अथ तस्मात्। वयमुत्तमोत्तम-गणनस्यान्ते मिताः प्रमिताः। उत्तमोत्तमा इति यावत्। यास्ते तव त्वद्विषयाः सुमतयस्तासामन्तमानां सुमतीनामन्तमाः सुमतीः। विद्याम लभेम लभेमहि व्यत्ययात्। त्वंच नोस्मानति अतीत्यान्यान्सदा माख्यः मा पश्य। मायं न माङ्। अस्मानेव पश्य। आगहि आगच्छच। क्रूरदृष्ट्याऽन्यदर्शनमेवाभिमतमिति करुणार्द्रदृशेत्युक्तम् ॥ ३ ॥

परेहि ॥ मन्मनः । हे मन्मनो मदीयमनः । यद्यपि त्वमिन्द्रात्परा दूरे वर्तसे । तद्ग्रहणासमर्थम् । अथवा शक्रः परमेश्वरस्त्वत्तः परा दूरे वर्तते त्वद्विषयोन भवति । अपि तथापि त्वं विग्रं वीत्युपसर्गो नञर्थे । ग्रहउपादाने । कर्मणिडः । अग्राह्यम् । अस्तृतमच्छिन्नमनष्टं विपश्चितं विपूर्वादाप्नोतेरसुन् । धात्वाकारलोपश्च । विपाः व्याप्ता चित् यस्यासौ विपश्चित् । तं व्याप्तचित्तम् । अवग्रहदर्शनात् इन्द्रं परमेश्वरमिहि गच्छ शरणं याहि अवगच्छवा । तदर्थं गुरून् पृच्छ । य इन्द्रस्ते सखिभ्य आवरो नित्यमुत्तमस्तम् । अत्र परेत्युपसर्गस्येहीति क्रियायोगे मरणार्थत्वप्रतीतेरन्यथा व्याख्यातम् ॥ ४ ॥

उतब्रुवन्तु । निदः । ये निदस्तस्य परमेश्वरस्य समीपगाः सृष्ट्यादावेव तत्समीपे वर्तमानाब्रह्मादयः त उत तेपि नोऽस्मान्प्रति देवं ब्रुवन्तु । परमेश्वरस्वरूपं यथावद्व्याकुर्वन्तु । उतेति वक्ष्यमाणापेक्षया निद इत्यव्ययस्य सामीप्यार्थत्वेऽभिधानं वक्ष्यते । ये चान्यतः स्थानान्तरतः निरित्युपसर्गश्रवणादारतेत्यनेन च योगायोगादधिकार्थलाभाच्च धात्वध्याहारः । अस्मात्संसार-हेतोरज्ञानतो निर्गत्यैव तं परमेश्वरमारत प्रापुस्तेपि ब्रुवन्तु । येचेन्द्र इत् ईश एव दुवः प्राणान् आत्मनो विषयान् । दुहन्तीति । दुहेर्डुः । दधाना वर्तन्ते तत्प्राप्त्यर्थं तमुपासते । तेपि नः परमेश्वरं ब्रुवन्त्वेव ॥ ५,७ ॥

## मन्त्रार्थमञ्जरी

अथ दशर्चं वर्गद्वयात्मकमैन्द्रं चतुर्थं सूक्तम् ॥

द्यविद्यवि,दिवेदिवे प्रतिदिवसम् । गोदुहे, गोदोहाय, 'दुह प्रपूरणे' इत्यतः सम्पदादित्वात्क्विप् । सुदुघामिव, सुष्ठु दोग्धीति सुदुघा, 'दुहः कब्घश्च' इति कप्रत्यये हस्य घत्वे रूपसिद्धेः, तां कामधेनुमिव । ऊतये, यजमानस्याभिप्रेतार्थसिद्धये, रक्षणाय वा, अवतेः क्तिनि 'ज्वरत्वर' इत्यूठि सवर्णदीर्घे च 'ऊतये' इति रूपम् । सुरूपकृत्नुम्, साधुरूपाणां कर्तारम् । (इन्द्रम्), विष्णुमिन्द्रं च । जुहूमसि, स्वाह्वयामः, 'ह्वेञ् शब्दे' इत्यतः कर्तरि शपि तस्य श्लुः 'श्लौ' इति द्विर्वचनम्, सम्प्रसारणपूर्वरूपत्वे, धातोर्दीर्घः, 'इदन्तो मसि', 'जुहूमसि' इति रूपं ज्ञेयम् ॥ १ ॥

(हे) सोमपाः, इन्द्र । (यः) रेवतः, 'रयेर्मतौ' इति रयिशब्दयकारस्य मतुपि सम्प्रसारणे पूर्वरूपे 'आद्गुणः' अध्यात्मम्– ज्ञानाख्यरयियुक्तस्य बहिरपित्वत्पूजार्थं हिरण्यादिमतो यजमानस्य । इत्, एव । गोदाः, ज्ञानदः । मदः, सुखकारी । (च) (स त्वम्) नः, अस्माकम् ।

सोमस्य । सवना, सवनानि । उप आ गहि, उपागच्छ, गमेः छत्वाभावश्छान्दसः ॥ आगत्य च (सोमम्) पिब । इत्यर्थः ॥ २ ॥

(यस्मात्त्वं ज्ञानादिमतोऽभिप्रेतार्थदायी) अथ, तस्मात् । (वयम्) अन्तमानाम्, अन्त उत्तमोत्तमगणनस्यान्ते मितानाम्, अत्युत्तमानामिति यावत्, द्वितीयार्थे षष्ठी । ते, तव, त्वद्विषयाः । सुमतीनाम्, सुमतीः विद्याम, लभेमहि ॥ (त्वम्) नः, अस्मान् । अति, अतिक्रम्य । (अन्यान्) मा ख्यः, नैव पश्य, दयार्द्रदृष्ट्याऽस्मानेव पश्येत्यर्थः ॥ आ गहि, आगच्छ । चक्षिङः लुङि 'चक्षिङः ख्याञ्' इति ख्याञादेशे 'च्लि लुङि' इति च्लिप्रत्यये च्लेः 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यङादेश आतो लोपे माङ्योगेनाडभावे 'इतश्च' इति सिप इकारस्य लोपे सिपः सस्य रुत्वविसर्गयोः 'ख्यः' इति रूपम् ॥ ३ ॥

ऋषिः स्वान्तःकरणं प्रति वक्ति (हे मनः) । (यद्यपि त्वमिन्द्रात्) परा, दूरे वर्तसे, तद्ग्रहणासमर्थम्, यद्वा (इन्द्रो हरिः स्वतः) परा, दूरे वर्तते, त्वद्विषयो न भवति । (तथापि त्वम्) विग्रम्, 'वि' इत्युपसर्गो नञर्थे, 'ग्रह उपादाने' कर्मणि डः, अग्राह्यम् । अस्तृतम्, अनाच्छन्नम्, 'स्तृञ् आच्छादने' इति धातोः विपश्चितम्, विपूर्वात् 'आप्लृ व्याप्तौ' इति धातोरसुन्प्रत्यये धात्वाकारलोपे च विपा व्याप्ता चिच्चित्तं यस्यासौ विपश्चित्तम् । इन्द्रम्, परमेश्वरम् । इहि, गच्छ, शरणं याह्यवगच्छेति वा । पृच्छ, तदर्थं गुरूनृच्छ ॥ यः, इन्द्रः । ते । सखिभ्यः, विषयेभ्यः । आ वरम्, आ समन्ताद्वरो नित्यमुत्तमः । (तम्) । 'इन्द्रम्' इति पूर्वेणान्वयः ॥ ४ ॥

(ये) निदः, समीपवर्तिनः, सृष्ट्यादावेवेन्द्रशब्दितविष्णुसमीपे वर्तमाना ब्रह्मादयः । (ते) उत, तेऽपि । नः, अस्मान्प्रति । (देवम्) ब्रुवन्तु, परमेश्वरस्वरूपं यथावद्व्याकुर्वन्तु ॥ (ये) चित्, येऽपि । अन्यतः, स्थानान्तरात्, अस्मात्संसारहेतोरज्ञानतः । निः, निर्गत्यैव । (तम्) परमेश्वरम् । आरत, प्रापुः । (ते) (उत) तेऽपि । (नः) (परमेश्वरम्) (ब्रुवन्तु) (ये च) इन्द्रे इत्, ईश एव । दुवः, प्राणान्, आत्मनो विषयान्दुहन्तीति दुहेः डुप्रत्ययः। दधानाः । (वर्तन्ते) तत्प्राप्त्यर्थं तमुपासते । (ते) (उत) तेऽपि । (नः) (परमेश्वरम्) (ब्रुवन्तु) (एव) इति यत्तच्छब्दाध्याहारेण योजना ॥ ५ ॥ इति सप्तमो वर्गः ॥ ७ ॥

## पदार्थप्रकाशिका

उत्तरत्र सूक्तादिलक्षणकथनस्य असङ्गतिपरिहारायाह । अत्रेति । तत इत्यादित्रयाणामपि समाप्त्यनन्तरं तत्स्वरूपजिज्ञासा युक्तेति भावः । एको मूलवेदः तस्मादुद्धृत उपवेदः । तत उद्धृत

अवान्तरवेदः । तस्मात्पुनश्चतुर्विंशत्यादिशाखाभेद इत्येवं ऋगादिसर्ववेदेष्वपि स्थितिरस्ति । तत्रोपवेदे सूक्तं नाम कीदृशमित्याशंकायां तन्निरूपणार्थं सूक्तमित्यादिभाष्यं प्रवृत्तम् । तदर्थमाह । अनारतमिति । तत्र क्रमवतां ऋचां मध्ये विद्यमाना ऋचः निरन्तराः अव्यवहिताः । ननु वेदद्रष्ट्रणाम् ऋषीणां दर्शनसमये एककाले यावदृचां दर्शनं भवति तावदृचां समूहोऽनुवाक इत्येतदयुक्तम् । तथात्वे मधुच्छन्दसा निरन्तरकालदृष्टशतार्चामनुवाकत्वेन तस्यासमाप्तत्वात् अनुवाकः परिसमाप्त इति कथमित्यतः प्रकारान्तरेण योजयति । यद्वेति । विरामं मध्ये विरतिम् । एकस्मिन्नेवावदानादिरूपकर्मकरणकाले पठनीयः । महाहविर्होता सप्तहविरध्वर्युः इत्याद्यारभ्य न पृथिव्यै स्वाहेत्यन्तो वाक्यसमुदायोऽनुवागित्यर्थः । एवं च मधुछन्दसानिरन्तरं ऋक्शतस्य दृष्टत्वेऽपि तन्मध्ये अग्निमीळे इत्यारभ्य धियो विश्वा विराजतीत्येतत्पर्यन्तानां त्रिंशदृचाम् एकस्मिन् कर्मविशेषे देवताह्वानाय मध्ये विरतिमकृत्वा पठनीयत्वेनानुवाकसंज्ञाया युक्तत्वादत्रानुवाकः परिसमाप्त इति युक्तमिति भावः । निरन्तरकाले एकस्मिन् काले यावदृग्जातं पठितमुपवेदे । उक्तस्येति । उपवेदगतसूक्तलक्षणस्येत्यर्थः । नेदं सर्वत्र सूक्तलक्षणं किंतूपवेदगतसूक्तस्यैव अवान्तरवेदत्वं यथा सूक्तसंज्ञेत्याहेत्यर्थः । तत्र उपवेदेतस्य सूक्तस्य ततोपि उपवेदादपि तत्क्रमपठितानां मूलवेदगतक्रमेण पठितानाम् उपवेदगतानाम् ऋचाम् उद्वापः अवान्तरवेदेभ्य इति शेषः । अवांतरवेदेषु परित्याग इत्यर्थः । स्थानांतरस्थानाम् ऋचां तत्रावान्तरवेदे आवापः स्थापनमित्यर्थः ।

ननु कथं तर्हि अवान्तरवेदे सूक्तसंज्ञा ? मूलवेदे ऋचो निरन्तराः कृत्वा यावत्पठितं तावदुपवेदे सूक्तमितिवत् उपवेदगगता ऋचो निरन्तराः कृत्वा यावदृग्जातं पठितं तावदवान्तरवेदे सूक्तमित्यस्यावापोद्वापाङ्गीकारेणासम्भवादित्यत आह । उपवेदगतेति । उपवेदगतसूक्तान्तर्गतसमस्त ऋक्प्रबन्धत्वमिहांवातरवेदसूक्तत्वमिति नोच्यते येनावापोद्वापस्थले अव्याप्तिः स्यात् । किं नामोपवेदगतसूक्तान्तर्गतकर्मबद्धत्वमेव इहावान्तरवेदसूक्ततावच्छेदकं विवक्षितम् । इदं च उपवेदगतऋक्समुदायवतः आवापोद्वापाभ्यां च पठितऋग्वेदो अवान्तरवेदगतसूक्तस्यापि निरुक्तसूक्ततावच्छेदकाक्रान्तत्वात् नाव्याप्तिरित्याशयः । अत्र त्वावान्तरवेदगतसूक्तगता ऋचः सर्वा अपि निरन्तरोपवेदगतसूक्तस्था एव । तत्र तु स्पष्टमिदं लक्षणमस्तीति न कोऽपि दोष इति द्रष्टव्यम् ।

आवापोद्वापकरणयोः कथं वेदानन्तत्वज्ञापकत्वमित्यत आह । इदं त्विति । वक्ष्यमाणेति । अनन्तत्वाद्वेदानामिति वक्ष्यमाणेत्यर्थः । अशक्तानुग्रहार्थं तयोः कृतत्वादिति विव्रीयमाणत्वादिति ज्ञातव्यम् । उपवेदा उच्यन्त इति । ऋचः मूलवेदोद्धृतोपवेदात् काश्चन ऋच उद्धृत्य

ऋग्वेदमवान्तरवेदं कृतवान् । एवं निगदात् मूलवेदात् उद्धृतात् अच्छन्दोबद्धवाक्यत्वेन निगदशब्द-वाच्यात् यजुर्वेदाख्योपवेदात् यजूंषि उद्धृत्य यजुर्वेदमान्तरवेदं कृतवान् । तथा सामतः मूलवेदात् उद्धृतात् उपवेदात् सामान्युद्धृत्य सामवेदाख्यमवान्तरवेदं कृतवानिति योज्यम् । पुनश्चतुर्विंशत्यादि शाखाभेदविभागोऽपि द्रष्टव्यः । ततस्तत इत्येतद्भाष्यं योजयति । तत इति । ततः उपवेदात् । शाखाप्रभेदोपीति । चतुर्विंशत्यादिसंख्याको ऋगाद्यवान्तरवेद शाखाप्रभेदोपीत्यर्थः । यथोक्तं भाष्ये । 'चतुर्विंशतिधैकशतधा सहस्रधा द्वादशधा चे'ति । प्रस्तुतत्वादिति व्याख्येयतेति शेषः ।

लिङ्गंचेति । ज्ञापकं चेत्यर्थः । 'लिङ्गं स्वरूपमुद्दिष्टं लिङ्गं ज्ञापकमेव चे'त्यभिधानात् असम्बद्धार्थत्वेनेति । पूर्वस्याः ऋचः उत्तरार्धस्य च सदसज्जीवगुणकथनस्यासङ्गतत्वादिति भावः । अर्थतो न्यूनतेति आकाङ्क्षापूरकक्रियापदाभावादिति भावः । अन्तरितं वाक्यमस्तीति । तच्च वाक्यम् अनन्तवेदपारङ्गतैः सर्वज्ञाचार्यैर्भाष्ये उदाहृतम् । एषां नैतन्नापरं किंचनैकं ब्रह्मणस्पते ब्रूहि तेभ्यः कदाचित् । अतो शमेनोपरता मनुष्याः ये धर्मिणो ब्रूहि तेभ्यः सदा नः' इति । तथा चायमर्थः । एतद्वायुं प्रति विद्यादेवतानां प्रार्थनम् । हे ब्रह्मणस्पते वेदविद्यानां पते वायो ये अभिद्रुहस्पदे अन्धेतमसि स्थातुं योग्या परविरुद्धास्तत एव तस्य रिपवो भोगेष्वाकंक्षावन्तो येषामेवतत्परं ब्रह्म तदवरं जगच्च नास्ति किंतु किंचनैके निर्गुणं ब्रह्मानिर्वाच्यं च जगत् तेभ्यः स्तेनेभ्यः अस्मान् मा ब्रूहि । किं नाम विष्णुनिष्ठतया तस्मिन्नेनो ब्रह्मणः परं च न विदुः तेभ्यः ब्रूहि । किं चेति । आवापोद्वापयोर्लिङ्गान्तरमुच्यत इत्यर्थः । ब्राह्मणमिति । स प्रजापतिमेव प्रथम देवतामुपससार । कस्य नूनं कतमस्यामृतानामित्येतया ऋचेत्येवम् ऋकृशतस्य तत्तद्देवतास्तोत्रे विनियोगमुत्केतदेतत्परऋकृशतगाथं शौनःशेपमाख्यानमिति ब्राह्मणे सप्तमपञ्चिकायामुक्त-मित्यर्थः । ताभ्योऽन्याः द्वितीयाध्यायोक्ताः शुनःशेपदृष्ट सप्तनवति ऋग्भ्योऽन्यास्तिस्रो ऋचः । अन्यत्रेति । अष्टाष्टकोपेत ऋक्संहितायां मण्डलदशकमस्ति । तत्र वामदेव्य संज्ञके चतुर्थमण्डले त्वन्नो अग्ने वरुणस्य विद्वान् स त्वंन्नोऽग्नय इति ऋकृद्वयं पठ्यते । तथा आत्रेयसंज्ञके पञ्चममण्डले शुनःशेपं निन्दितं सहस्रादित्येका ऋक् पठ्यत इत्यर्थः । द्वितीयाध्यायभाष्ये स्पष्टमेतत् । इतः अवान्तरभेदात् । अन्यत्र स्थानान्तरे । किं चेति । पुनस्तत्रैव लिङ्गान्तरमुच्यत इत्यर्थः ।

अयमेवेति । इदानीमध्यापकैः पठ्यमान एव । ऋक्ष्विति । अवान्तरवेदशाखाभूतासु अग्निमीळ इत्याद्यासु दशोत्तरशतसंख्यासु ऋक्ष्वित्यर्थः । तमुल्लंघ्यैवेति । तं क्रममुल्लंघ्यैवेत्यर्थः । ल्यब्लोपनिमित्ता पञ्चमीति भावः । अत्र शतऋक्पर्यन्तं न क्रमोल्लंघनम् । तदुपरि स्थितासु दशर्क्षुमध्ये आतून इन्द्र कौशिक परित्वेति द्वे ऋचौ स्थानान्तरगते पठिते । तथा विश्वा अवीवृधन् इत्याद्याः उतवा सन्ति भूयसीरित्यन्ताः अन्यत्रगा अत्र पठिताः । इत्थं विवेको अस्मिन्नध्याये

स्थानान्तरगते ऋचौ अष्टावृचः शुनःशेपदृष्टाः अन्यत्रगाः तपः कुर्वतेत्युत्तरत्र भाष्ये स्पष्टं इति ज्ञातव्यम्। तथाचावान्तरवेद एव एतादृग्दशकं विहायैव क्रमसद्भवात् मधुच्छन्दो दृष्टस्थानान्तरगत ऋग्दशकस्यात्रावान्तरवेदशाखायामावाप इति भावः।

भाष्यं प्रकारान्तरेण योजयति। यद्वेति। अत्रेत्यस्यावृत्या अर्थद्वयमाह। अवान्तरवेद इत्यादिना। उक्तं विवृणोतीति। 'वेदानन्तत्वविज्ञप्त्यै तौ चक्रे बादरायण इत्युक्तं विवृणोतीत्यर्थः। कर्मकरणाशक्तेरिति यदुक्तमनन्ता वै वेदा इत्यादिनैव वेदानन्तत्वविज्ञप्तिः सम्भवतीति तत्सत्यमेव। तथाच वेदानन्तत्वविज्ञप्त्यै तौ चक्रे बादरायण इति वचनस्यावापोद्धारकरणेनानन्त-त्वज्ञप्तिर्भवतीत्येतावन्मात्रज्ञापने न तात्पर्यम्। किंतु वेदानामनन्तत्वेन तदुक्तकर्मकरणे प्राणिनामशक्तत्वादावापोद्धापकरणे तु वेदस्याल्पताप्राप्त्या तदुक्तप्रकारेण कर्मानुष्ठानं सुकरं भवतीत्यत्र तात्पर्यान्न दोष इति विवरणं कृतमिति भावः।

चरन्ति देवा विहिताः समस्ता इति श्रुत्या देवानां वेदोक्तसमस्तकर्मानुष्ठानसद्भावावगमेन तद्व्यावृत्यर्थं भाष्ये प्राय इत्युक्तमिति द्रष्टव्यम्। अत एवार्धमेव ऋषयो तद्दशांशतो मनुष्या इत्युक्तमुदाहृतश्रुतिशेष इति भावः। उद्धार इति। अवान्तरवेदगतानामृचामुद्धाप इत्यर्थः। परिशिष्टाः पावमानीःस्वस्त्ययनीरित्याद्याः। यत्र वाक्यद्वयस्यार्थ इति। यथा ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ऊर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितमिति पूर्वोत्तरार्धगतयोः कृष्णपिङ्गलं नीललोहितमिति उक्तत्वात् पुनरुक्तिरित्यर्थः। यथोक्तमनुव्याख्याने। 'समानाधिकृतत्वं चेदुत्तरं नीललोहितम्। कृष्णपिङ्गलरूपेण पुनरुक्तं भविष्यति' इति। येन पदेनेति। प्रतीतिपदेनेत्यर्थः। यथोक्तम्। 'ऋतं सत्यं परं ब्रह्म प्रति विष्णुं सदाशिवः। ऊर्ध्वरेता ध्यायतीह शङ्करो नीललोहित' इति 'तस्माद्विष्णुं परं ब्रह्म प्रति रुद्रो व्रते स्थितः' इति च। तत्पदं प्रतीतिपदम्। पदांतरो वाऽयम्। अल्पेनापि विशेषेण श्रुतेन वेति। कस्य नूनमित्यृचा अग्नेर्वयं प्रथमस्येत्यृचः पुनरुक्तिप्राप्तौ सत्यामत्र कस्य नूनम् अग्नेर्वयं को नो मह्यासनो मत्येत्यादि श्रुतेन विशेषेणैव पुनरुक्तिपरिहारः कर्तुं शक्यत इत्यर्थः। अन्यान्यपि लिङ्गानीति। आवापोद्धारज्ञापकानीत्यर्थः। नन्वत्र सूक्तमनुवाको वर्गश्च परिहारत्वमाप्त इत्युक्तौ तत्त्रितयस्वरूपजिज्ञासायां सूक्तानुवाकयोरेव स्वरूपमुक्तं तत्प्रसक्तं चान्यत् न वर्गस्येत्यत आह। अनेनेति। स्वाध्यायविश्रमार्थायेति वचनेनेत्यर्थः। स्वाध्याय-विश्रमार्थायेत्यनेन स्वाध्यायाभ्यासप्रयुक्तश्रमपरिहाराय तत्र तत्र विरत्यर्थम् अष्टकाध्यायवर्गादि-भेदस्य कृतत्वेन वर्गसंज्ञायाः सांकेतिकत्वेन कृत्रिमतया तत्स्वरूपं नोक्तमित्यर्थः। सामयिक एवेति। सांकेतिक एवेत्यर्थः।

सुरूपकृत्नुमूतये । सुरूपकृत्नुम् । दशेंद्रमिति अनुक्रमणिकां हृदि निधायाह । दशर्चमिदमैन्द्रम् । सूक्तमिति । यद्यपि सुरूपकृत्नुमित्यादि ऋक्त्रये इन्द्रवाचकं पदं नास्ति अतोऽनु उक्रमणिका उक्ता तथापि अनादेशे इन्द्रो देवतेति परितोषायामुक्तत्वात् सुरूपकृत्नुद-शैन्द्रमिति साध्विति मन्तव्यम् । द्यविद्यवि दिनेदिने इति । दिवेदिवे द्यविद्यवि वस्तरहरित्यहर्नामसु पाठादिति भावः । गोदुहे गोदोहकाय सम्पदादित्वात् क्विप् इति पाठः । तत्र तृजकाभ्यां कर्तरीति अकप्रत्यययोगे षष्ठ्याः समासनिषेधात् गोदोहायेत्युक्तमिति ज्ञातव्यम् । भाष्ये दोहायेत्यस्य दोहकायेत्यर्थ उक्तो भवति । दुहप्रपूरण इत्यस्मात्कर्तरि क्विपि तस्य लोपे दुह इत्येव रूपं तच्चतुर्थी गोदुह इति द्रष्टव्यम् । अस्मिन् पाठे तत्स्थितेरभिप्रेतार्थसिद्धय इत्युक्तदार्ष्टान्तिकदृष्टान्तयोः साम्यलाभात् नायं पाठः साधीयान् । किन्नाम गां दोग्धीति गोदुह् तस्मै गोदुहे तदर्थं दोहायेति शेष इत्येव पाठः साधीयान् । शेषा ऋचीत्यर्थः । दुहः कप्घश्चेति । दुह् धातोः कप् प्रत्ययः हस्य घश्चेति सूत्रार्थः । तथाच सूपपदात् दुहअस्मात् कप् प्रत्यये ककारपकारयोर्लोपे अकारमात्र उर्वरिते हस्य घत्वे प्रत्ययाकारसम्बन्धे च सति सुदुघे इति जाते पश्चादपि अकारं विहाय सर्वस्य लोपे सत्याबन्तत्वे सिद्धे स्वाद्युत्पत्तौ सुदुघामिति भवति । कप्प्रत्ययस्य कित्वाद्गुणाभावो द्रष्टव्यः । अन्यथा सुदोघामिति स्यादिति द्रष्टव्यम् । अवतेरिति । अवरक्षणगतिकान्तिप्रीति-तृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्या लिङ्गनहिंसादानभाववृद्धिष्विति धातुव्या-ख्यानसद्भावादित्यर्थः । रक्षणं त्राणमित्येकोर्थः । अवाप्तिरभिप्रेतार्थसिद्धिरिति चैकोऽर्थ इति द्रष्टव्यम् । तथाच रक्षणावाप्त्यर्थकादवधातोः क्तिन्प्रत्यये ककारनकारयोर्लोपे अवेत्यस्य ज्वरत्वरेत्यादिना ऊठि कृते ऊतिरिति जाते सवर्णदीर्घे च सति ऊतिरिति भवति । तथाच ऊतय इत्यस्यावतिरूपत्वेनावतेश्चोभयार्थकथनं युक्तमित्यवगन्तव्यम् । साधुरूपाणामिति । मुक्ताविति शेषः । ततश्चायमर्थः । द्यविद्यवि गोदुहे गोदोहनकर्तृपुरुषार्थं दोहाय गोदोहनकर्तुर्दोह-नरूपप्रयोजनस्य कामधेनुमिव स्थितेर्यजमानस्याभिप्रेतार्थसिद्धये सुरूपकृत्नुं जुहूमसीत्येतत् घटयति । ह्वयतेः श्लुरिति । प्रत्ययस्य लुक्श्लुलुप इत्यनेन श्लुरिति लोपे संज्ञेति द्रष्टव्यम् । तथाच ह्वयतेः कर्तरि शप् तस्य श्लुलोप इत्यर्थः । तथाच ह्वेञ् आह्वाने अस्मात् उत्तमपुरुषबहुवचने मस्प्रत्यये कर्तरि शपि तस्य बहुलं छन्दसीति श्लौ सति आदेच उपदेशेऽशितीत्यनेनात्वे पश्चाद्वकारस्य उकाररूपे सम्प्रसारणे पश्चात् हल इति दीर्घे हूमस् इति जाते पश्चात् श्लौ इति सूत्रेण श्लौपरे अभ्यासे हूहूमस् इति जाते अभ्यासस्य ह्रस्वे हुहूमस् इति जाते कुहोश्चुरिति अभ्यस्तयोः कवर्गहकारयोश्चवर्गादेशविधानात् घोषवत्वादिगुणवतो वर्गचतुर्थो हस्य सवर्ण

इत्युक्तत्वेन हकारस्य झकारे झुहूमस् इति जाते अभ्यासे चर्च इति अभ्यासे झलां चरः स्युः । जशश्चेति उक्तत्वात् अत्राभ्यस्तझकारस्य जस्त्वे जुहूमस् इति जाते इदन्तोमसीति मसः सकारस्य इडागमे तकारलोपे जुहूमसीति रूपम् । अत्र शपो लुगिति वक्तव्ये श्लुरित्युक्तिः श्लाविति सूत्रेण श्लुनिमित्तकाभ्यासप्राप्त्यर्थमिति द्रष्टव्यम् । अत्र शपः श्लोरकरणे जुहुअमसीति स्थिते इको यणचीति यणादेशे जुह्वामसीति स्यादिति भावः ।

अत्र दार्ष्टान्तिके ऊतये इतिप्रयोजनस्य श्रुतत्वात् दृष्टान्तेऽपि दोहायेत्युक्तम् । दृष्टान्ते गोदुह इत्युक्तत्वाद्दार्ष्टान्तिकेऽपि तत्स्थितेरितिशेषोऽभिहितः । स्मसीत्यादिप्रोक्ताधिक्यविवक्षयेत्युक्तत्वात् । स्वाह्वयाम इत्युक्तमित्यपि क्वचित्पाठो दृश्यते । स तु दृष्टान्तदार्ष्टान्तिकयोः साम्योपपादनाय प्रवृत्तः । तथा स्मसीत्यादीत्यनुसारेणाधिक्यविवक्षयाभिहितजुहूमसीत्यत्र मसीत्यधिकाक्षरस्य तात्पर्यं भाष्ये स्पष्टं इत्यत्र त्वेत स्वित्युपसर्गेणाभिहितमिति कथनाय चेति ज्ञातव्यम् ॥१॥

उपनः सवनागहि । ननु रेवत् इति कथम् । रयिमत इति स्यादिति चेदुच्यते । धनवाचिनोरयि शब्दात्तदस्यास्त्यस्मिन्निति मतुप्प्रत्यये उप्इत्यस्य लोपे रयिमत् इति स्थिते यस्येति चेति इकारलोपे छन्दसीर इति मतुपो मकारस्य वकारादेशे रयवदिति जाते रयेर्मतौ बहुलं छन्दसीति मतुप् प्रत्यये परे रयेर्यकारस्य इकाररूपे संप्रसारणे र इवदिति जाते पश्चाद्रकारस्थस्य अकारस्य इकारस्य च एकाररूपे गुणे रेवदिति तकारान्तप्रातिपदिकं पश्चात्स्वाद्युत्पत्तौ तस्य रेवत् शब्दस्य रेवत् इति भवतीति द्रष्टव्यम् । सोमस्य सवनेत्यादि सोमखण्डनाधिकरणेषु प्राप्तः सवनादिष्वागच्छेति यावदित्यर्थः । क्रियेति । अधिकं यथा स्यात्तथा ज्ञानद इति दानक्रियाविशेषणमित्यर्थः ॥ २ ॥

अथाते अन्तमानाम् । उत्तमोत्तमगणनस्यान्त इति । उत्तमोत्तमवस्तुगणनस्यान्ते निर्णये सत्येताः समयोपि तथा मिता इत्यर्थः । मिताः । उत्तमोत्तमत्वेन । तात्पर्यमाह । । उत्तमोत्तमा इति यावदिति । अन्तमानां उत्तमोत्तमानाम् । षष्ठी द्वितीयार्थ इत्याह अन्तमा इति । ननु लभधातोर्नित्यात्मनेपदित्वात्तस्य लिटि तस्य उत्तमपुरुषबहुवचने महिङादेशे टित आत्मनेपदानां टेरे इत्यनेन टीभूतस्य भकारस्थस्याकारस्य एत्वे लभेमहीति वक्तव्यं भवेमहीतिवत् अतो भाष्ये भवेमेतिवत् लभेम इति परस्मैपदं कथं लभधातोः लिटि परस्मैपदिनि मसादेशे अकारस्य इकारे गुणे तस्य च एकारे गुणे नित्यंङित इति मसः सकारस्य लोपे लभेमेति जातत्वादित्यत आह व्यत्ययादिति । व्यत्ययो बहुलमिति वचनादात्मनेपदव्यत्ययेन परस्मैपदित्वाश्रयणादिति भावः । अन्यान् अस्मद् द्वेषिण इत्यर्थः ।

ननु माङि लुङिति माङ्योगे सर्वलकारापवादेन लुङ एव विहितत्वेन मा दृशीरित्यादि वक्तव्ये पश्येति लोडुक्तिर्भाष्ये कथमित्यत आह । माऽयं न माङिति । अमानोना: प्रतिषेध इति निषेधार्थको माशब्द एवायम् । न माङ् । अतस्तद्योगे लोडुक्तिर्युक्तेति भाव: । अस्मानतीत्य मापश्येतीत्यस्य पर्यवसितमाह । अस्मानेवेति । आगहीत्यत्र पूर्वऋचः सवनेत्यनुवर्तनीयम् । नन्वस्मानतीत्यान्यान् मा पश्येत्यतदयुक्तम् । भगवत: सर्वज्ञत्वेन तद्दर्शनस्याशक्यनिवारणत्वादित्याशङ्कापरिहारायोक्तस्य करुणार्द्रदृशेत्यस्याभिप्रायमाह । क्रूरदृष्टयेति । तथाचास्मानतीत्यन्यान् सर्वथा मा पश्येति नोच्यते किन्नाम करुणार्द्रदृशा मा पश्येति । तथाच क्रूरदृष्ट्यान्यान् पश्येति क्रूरदृष्ट्या दर्शनमेवाभिप्रेतम् । नादर्शनम् अतो नोक्तदोष: । तथाच अस्मानतीत्य विद्यमानान्यान् करुणार्द्रदृशा मा पश्य किंतु अस्मानेव करुणार्द्रदृशा पश्य अन्यांस्तु क्रूरदृष्ट्येत्यर्थो द्रष्टव्य: ॥ ३ ॥

परेहिविग्रमस्तृतम् । कर्मणि ड इति । विपूर्वात् ग्रह उपादान इत्यस्मात्कर्मणि डप्रत्यये डित्वात् टीभूतस्य अह इत्यस्य लोपे विग्र अविग्रेतिरूपम् । तथाच विग्रमग्राद्यगित्यर्थ: । अच्छिन्नमिति । स्तृञ्छेदन इति धातोरिति भाव: । अनष्टमिति चतुर्विधनाशरहितमित्यर्थ: । विपूर्वादिति । विपूर्वादाप्लृ व्याप्तावित्यस्मादसुन् प्रत्यये नकारलोपे धात्वाकारलोपे विप् असु विपस् इति सकारान्तं प्रातिपदिकम् । नतु विषॢत्याप्तावित्यस्यासौ । विपश्चिदिति कथं बहुव्रीहि: अनेकमन्यपदार्थ इति अनेकपदत्व एव बहुव्रीहित्वविधानात् अस्य च विपश्चिद्विमन्यूरिति मेधाविनामसु पाठात् अखण्डैकपदत्वात् कथं समास इत्यत आह । अवग्रहदर्शनादिति अवग्रहइति । दु:खसंज्ञा । एकपदत्वे अवग्रह एव न सम्भवति । अत: पदद्वयमित्येवाङ्गीकर्तव्यं तथाच युक्तो बहुव्रीहिसमास इति भाव: । एवमेव यत्र यत्रावग्रहो दृश्यते यज्ञश्रियं नृमादनं मन्दयत्सखमित्यादौ तत्र सर्वत्रापि पदद्वयमेव समस्तमित्यवगन्तव्यम् । अत एव आपोहिष्टा मयोभुव: इत्यत्र मयोभुव इत्येतत् मय: प्रधानो भुव: पूर्ण इति बृहद्भाष्ये व्याख्यातम् । तत्राप्यवग्रहदर्शनमेव निमित्तमित्यवधेयम् । ते मनस: तव सखिभ्य: उपकारतया तवेति सखिभ्यस्तवाभिमानिदेवेभ्य: । ननु परेत्यस्य समीपस्थेन इहेत्यनेन सम्बन्धं विहायाध्याहृतेन वर्त इत्यनेन सम्बन्धकरणे किं निमित्तमित्यत आह अत्रेति । मरणार्थत्वेति परेहि मृत्यो गृहानित्यादौ दर्शनादिति भाव: । प्रतीतेरित्यनन्तरं समोभूदित्येतदर्थमिति शेष: ॥ ४ ॥

उतब्रुवन्तु नोनिद: । वक्ष्यमाणापेक्षयेति । निरन्यतश्चिदारत इन्द्र इद्धुव: इति वक्ष्यमाणापेक्षया समुच्चयार्थको उतशब्द: । वक्ष्यत इति । द्वितीयाध्याये यश्चिद्धित इत्था भगश:शमान: पुरानिद इति

वक्ष्यमाण इत्येतद्व्याख्यानसमये निदोद इति तु विरुद्धार्थद्वयाभिधौ दूरसामीप्यवचनादुभावपि महोदधावित्यभिधानं वक्ष्यत इत्यर्थः। अन्यतः स्थानान्तरत इत्युक्तस्यैव विवरणं अस्मात्संसार हेतोरिति। अस्मात्संसारहेतोरज्ञानात् तिः निर्गत्य तं परमेश्वरं प्रापुर्येतेऽपि नः परमेश्वरस्वरूपं व्याकुर्वंत्वित्यन्वयः। ननु निर्गत्येति गतिरूपधात्वध्याहारः कुतः इत्यत आह। निरित्युपसर्गस्य श्रवणादिति। उपसर्गाः क्रियायोग इति क्रियायोग एव प्रपरनिसुदुस् इत्यादीनाम् उपसर्गसंज्ञायाः उक्तत्वात्। अत्र क्रियाध्याहृतेत्यर्थः। नन्वथापि क्रियाध्याहारो न युक्तः। न च नित्यस्योपसर्गत्वोपपत्यर्थमिति वाच्यम् आरतेति क्रियमाणं क्रियासम्बन्धेनैवोपसर्गत्वोप पत्तेरित्यत उक्तम्। आरतेत्यनेनचेति। निरित्यस्यातिकांत्यर्थत्वेन अतिकान्ति आरत प्रापुरित्यर्थसम्भवेन निरित्यस्य तेन योगसम्बन्धो न भवतीति। नन्वारतेत्यनेन सम्बन्धो युज्यत एव। निरित्यस्य नितरामित्यर्थकत्वादित्यत उक्तम्। अधिकार्थेति। सत्यमेवं युज्यत इति तथापि योग्यतया अज्ञानादिति। सम्पूर्णज्ञानादितो निर्गत्य तमारतेति व्याख्याने अधिकार्थो लभ्यत इत्यर्थः। प्रापुरिति। ऋगतिप्राणयोरिति भावः। प्राणान् इन्द्रियाणि। दुव इत्यस्य प्राणानित्यर्थः। कुत इत्यत उक्तम् आत्मन इति। आत्मने जीवाय विषयान् तद्भोगान् दुहन्तीति हेतोः दुवः प्राणानिति सम्बन्धः। दुहेर्दुरिति दुहप्रपूरणे अस्मात् डुप्रत्यये डित्वाट्टिभूतस्य दुह इत्यस्य लोपे हि दुउ इति जाते। अचिश्नुधातुभ्रुवां य्वोरियङुवङाविति सूत्रेण अचः परतो अभावेपि छन्दस्य ऋवर्णस्य उवर्णादेशेः पदत्वाद्धातोः ङित्यस्य लोपे दु इति भवति। तस्य बहुवचनं दुवः इति। इन्द्र एव प्राणान् दधाना वर्तत इत्यस्य तात्पर्यमाह। तत्प्राप्त्यर्थं तमुपासत इति॥ ५॥

## पदार्थदीपिका

जिज्ञासाप्रयोजकप्रसिद्धोक्तिं दर्शयति॥ अत्र सूक्तमिति॥ ऋषिभिर्निरन्तरसम-यदृष्टत्वस्यानुवाकलक्षणत्वेनैवानुवाकस्य समाप्तत्वात् उत्तरऋचामेतत्काले दृष्टत्वाभावापत्तौ मधुच्छन्दस एकदेशकालावस्थासु तेनैव ऋषिणा दृष्टत्वमूलवेदस्थैकानुपूर्वकत्वप्रयुक्तं शतर्चित्वं न स्यादित्यतः पक्षान्तरमाह॥ यद्वेति॥ नेदं सूक्त लक्षणम् उपवेदसूक्तेषु सार्वत्रिकमि-वावान्तरवेदीयसूक्तविशेषे। अन्यथाभावस्यापि दर्शनादित्यभिप्रेत्याह॥ उक्तस्येति॥ अन्यथात्वं चेति चशब्दस्तथात्वसमुच्चयार्थः। तर्ह्यवान्तरवेदेऽनुगतं सूक्तलक्षणं किन्नेत्यत आह॥ उपवेदेति॥ एतदुक्तं भवति। मूलवेदे ऋचां यः क्रमः तत्र ऋचोऽनन्तरिताः कृताः। यावत्पठितं तावदुपवेदे सूक्तमुच्यते। उपवेदादुधृत्यावान्तरवेदे निक्षिप्यमाणं द्विविधम्। एकं तदेव। अपर उपवेदीयैकतरसूक्तस्थाः काश्चिदृचः तत उद्धृत्योपवेदीयान्यतरसूक्तान्तर्गतः। तत्र निक्षिप्य

सम्पाद्यमानं तदुभयमपि उपवेदसूक्तान्तर्गतर्गबन्धवत्वेनानुगतीकृतं उपवेदे सूक्तमिति । अनन्ता वै वेदा इत्यादिनैवेति । वेदानन्तत्वस्य विज्ञाप्त्या इति विग्रहं मनसि निधायेयमाशङ्केति द्रष्टव्यम् । अनन्तत्वात् तदुक्त प्रकारेणेति । एवं च वेदानन्तत्वविज्ञप्त्या इत्येतद्वेदानामनन्तत्वात् तदुक्तप्रकारेण कर्मकरणाशक्तेः मन्दानां करणोपयुक्तवेदार्थविज्ञप्त्या इति विवृतं भवतीति भावः ।

नन्वत्र सूक्तमनुवाको वर्गश्चासमाप्त इति त्रयाणां प्रकृतत्वे द्वयोरेव कथनं कथं सङ्गच्छते । वर्गस्वरूपस्यापि कथनीयत्वादित्यतो मूलवेदादिष्वेकप्रकारताभावप्रतिपादक 'अष्टकाध्यायवर्गादिभेदं चेति वाक्येनैव वर्गत्वस्य केवलसाङ्केतिकत्वेन तात्पर्यतो निरूपितत्वात् न तदनुक्तिर्दोष इत्यभिप्रेत्याह । अनेनति ।

ऐन्द्रमिति । अनादेशे त्विन्द्रो देवतेति परिभाषितत्वादिति भावः । अत्र भाष्ये दोहायेति दृष्टान्ते प्रयोजनमभिहितम् । तत्र व्याख्येयमन्त्रेऽभाषितस्य प्रयोजनस्य कुतो भाष्येऽभिधानमित्यतस्तत्र हेतुरुपरिष्टाद्वक्ष्यते । न च तदभिधानस्य अवश्यसिद्धावपि कथमभाषितस्याभिधानमित्यतो मन्त्रेऽपि गोदुह इत्यनेनैव दोहस्य भाषितत्वात् न प्रयोजनस्याभाषितत्वम् । न चैवमधिकारिविशेषासमर्पणप्रसङ्गः । गोदुह इत्यनेनैव तत्समर्पणात् । न चैतदुभयमन्याय्यम् । गोदुह इत्यस्यावृत्याश्रयणेनावयवार्थव्युत्पादनभेदेन च तदुभय सम्भवादित्यभिप्रायेण अधिकारिविशेषसमर्पकतया तावद्गोदुह इत्यनूद्य व्याचष्टे । गोदुह इत्यादि । यद्यप्यत्राभाषितस्यापि तत्स्थितेरित्यस्य दार्ष्टान्तिके शेषतया अभिधानवत् दृष्टान्तेऽपि अभाषितस्य प्रयोजनस्य दोहायेत्याभिधानमुचितम् । अन्यथा भाषितस्य तत्स्थितेरित्यस्यापि अनभिधानापातात् । तथापि मन्त्रे गोधुक्पदेनाभिधानसम्भवेन किं सर्वथाश्रुतत्वालाभमूलक तच्छेषत्वाश्रयणेनेत्यभिप्रेत्येदं व्युत्पादनम् । अत एव दोहायेत्युक्तमित्युपरिष्टाद्वक्ष्यति । अन्यथा तत्स्थितेरिति शेषोऽभिहित इतिवत् दोहायेति शेषोऽभिहित इत्येव ब्रूयादिति द्रष्टव्यम् ।

गोधुगिति । दुहप्रपूरणे । अस्मात् 'सत्सूद्विषद्रुहदुहेत्यादिना क्विपि तदन्ततया 'कृत्तद्धिते'ति प्रतिपादिकत्वात् स्वाद्युत्पत्तिः । 'दादेर्धातोर्धः' इति धत्वम् । 'एकाचो बशो भष्' इति भष्भावः । जश्त्वम् । 'वावसाने' इति चर्त्वम् इति भावः । ननु 'दुहः कप् घश्चे'ति कपोऽपि विधानात् तस्यापि प्राप्त्या सवा अयं वा इति कथं निर्णयः । वक्ष्यति च सुष्टु दोग्धीति सुदुधाः दुहः कप् घश्चेति । सत्यम् 'वासरूपोऽस्त्रियाम्' इति वैकल्पिकत्वाददोषः । एवगुत्तरत्राप्यनुसन्धेयम् । तादर्थ्यमिति । अनेन गोदुह इति तदर्थ्ये चतुर्थीत्युक्तं भवति । एवं श्रौतं गोधुक्पदम् अधिकारिविशेषसमर्पकतया व्याख्याय दृष्टान्तप्रयोजनविशेष समर्पकतयाऽप्यनूद्य व्याचष्टे । गोदुह

इति । सम्पदादित्वादिति । दोहनं धुगिति भावे 'सम्पदादिभ्यश्च' इति सूत्रेण क्विबित्यर्थः । अत्र च टीकायां गां दोग्धीति गोधुक् तस्मै गोदुहे । तदर्थम् । गोदुहे गोदोहाय सम्पदादित्वात् भावे क्विबित्येवपाठः । मूलकोशेषु दर्शनात् । युक्तश्चायं पाठः । अन्यादृशस्तु मूलकोशेष्वदर्शनात् पूर्वोत्तरविरोधाच्च लेखकदोषप्रयुक्त इति द्रष्टव्यम् ।

दुहः कप् घश्चेति अनेन सूत्रेण दुहःकप् प्रत्ययो हकारस्य च घः । कपः कित्वात् लघूपध-गुणाभावश्चेत्यर्थः । अवतेरिति । रक्षणाद्यर्थादवतेरुदात्त इत्यनुवृत्तौ अतियूतिजूतिसाति हेतिकीर्तयश्चेति सूत्रेण क्तिनि ज्वरत्वरेति वकारस्य तदुपधाकारस्य चोठि सवर्णदीर्घत्वे च सति क्तिनः कित्वात् गुणनिषेधेन ऊतिरिति रूपनिष्पत्तिरिति ज्ञेयम् । कर्तारमिति । कृहनिभ्यांक्स्नुरिति करोतेः कर्तरि क्स्नुप्रत्यये कित्वात् गुणाभावः तकारश्छान्दस इति भावः । ह्वयतेः श्लुरिति ह्वयतेर्लडुत्तमपुरुषे बहुवचने सति बहुलं छन्दसीति शपः श्लुभावे द्वित्वनिमित्तप्रत्ययेऽपि द्विर्भावात् पूर्वमेवाभ्यस्तस्य चेत्यनेन सम्प्रसारणे सम्प्रसारणाच्चेत्यनेन पूर्वरूपत्वे हल इति दीर्घतायां सत्यां श्लाविति द्विर्भावे ह्रस्व इत्यभ्यासस्य ह्रस्वत्वे कुहोश्चुरिति चुत्वेन झकारे अभ्यासे चर्चेति जस्त्वेन जकारे इदन्तोमसीति इकारागमेन जुहुमसीति रूपसिद्धिरिति भावः ।

ननु नात्र द्विर्भावात् पूर्वमेव सम्प्रसारणमाश्रयितुं शक्यम् । तत्राभ्यस्तस्यैव ह्वयतेः सम्प्रसारणविधानेन कृतद्विर्भावस्य ह्वयतेरभ्यस्ततयाऽनेतत्प्राप्तावपि द्विर्भावात् पूर्वमाभ्यस्ततया तदप्राप्तेः । उभे अभ्यस्तमिति अभ्यस्तत्वस्य द्विर्भावाधीनस्थितित्वात् । तत्कथं द्विर्भावात् प्रागेव सम्प्रसारणसिद्धिरिति चेत् अत्र ब्रूमः । भवेदेतदेवं यदि अभ्यस्तस्य ह्वयतेरिति समानाधिकरणे षष्ठ्यौ स्याताम् । न चैवम् अभ्यस्तस्य ह्वयतेरिति व्यधिकरणे षष्ठ्याविति आकरे स्थितत्वात् ततश्च अभ्यस्तस्य यो ह्वयतिः तस्येत्यर्थसिध्या अभ्यस्तकारणस्यैव ह्वयतेः द्वित्वनिमित्तप्रत्ययेऽपि द्वित्वात्पूर्वमेव सम्प्रसारणं भवति । न चाभ्यस्तस्य ह्वयतेरिति व्यधिकरणषष्ठ्यावेव न तु समानाधिकरणे इत्यत्र नियामकाभावात् उक्तमयुक्तमिति वाच्यम् । यदि हि अभ्यस्तस्येति समानाधिकरणषष्ठी स्यात् ततो द्वित्वे सति अभ्यस्तसंज्ञेति तत एव सम्प्रसारणं स्यात् । न चैवमाश्रयितुं युक्तम् । तथा सति अभ्यासस्य सम्प्रसारणाभावप्रसङ्गात् । न सम्प्रसारणे सम्प्रसारणमिति सम्प्रसारणे परतः सम्प्रसारणस्य निषिद्धत्वात् ।

नन्वकारहकाराभ्यां व्यवधानादेव नात्र प्रतिषेधः । यदि तु व्यवधानेऽपि स्यात् प्रतिषेधः तदोपपूर्वाद्वसतेः भाषायां सदवसश्रुवः इति लिटः क्वसौ विभक्तौ च परतो वसोः सम्प्रसारणे उपोषुषत्यादौ धातोः प्राप्तस्य यजादिलक्षणस्य सम्प्रसारणस्य प्रतिषेधः स्यात् । प्रत्यक्षेण सकारेण

व्यवधानात् । ततो व्यवधानेऽपि प्रतिषेधाभावस्यावश्याश्रयणीयत्वात् न प्रकृते प्रतिषेध इति चेन्न, तथा सति यून इत्यादावपि सम्प्रसारणनिषेधाभावप्रसङ्गात् । तत्र हि य इति यकारस्य न सम्प्रसारणमस्ति । पूर्वेण यकारस्थोकारेण व्यवधानात् । तत्कथं प्रतिषेधो भवेत् । न च यकारस्थोकारेऽपि वकारस्थानिकसम्प्रसारणोकारेण सवर्णदीर्घत्वरूपैकादेशान्न व्यवधानमतो युक्तस्तत्र सम्प्रसारणनिषेध इति वाच्यम् । अचः परस्मिन् पूर्वविधाविति एकादेशस्य स्थानिवद्भावेन व्यवधानस्यावर्जनीयत्वात् । सम्प्रसारणं तदाश्रयं च कार्यं बलवदिति वचनात् सवर्णदीर्घात् पूर्वमेव सम्प्रसारणप्रवृत्तेश्च व्यवधानेऽपि प्रतिषेधसिद्धेः नाभ्यस्तस्य सम्प्रसारणप्रसङ्गः । न चैवमुपोषुषेत्यादावुपपूर्वस्य वसेः क्वसौ सकारव्यवधानात् न निषेधप्रसङ्ग इति वाच्यम् । न सम्प्रसारणे सम्प्रसारणमित्यत्र समानाङ्गग्रहणस्य विवक्षितत्वात् । निमित्तनैमित्तिकौ यत्र एकस्मिन्नेवाङ्गे स्तः तत्रैव व्यवधाने भवति प्रतिषेधः ततश्च यूनः यूनेत्यादाविव समानांगत्वात् भवेदेव कृतद्विर्वचनस्य ह्वयतेराकारहकाराभ्यां व्यवधानेऽपि प्रतिषेध इति कथम् अभ्यासस्य सम्प्रसारणसिद्धिः । अतः समानाधिकरणषष्ठ्याश्रयणे उक्तदोषप्रसक्तेः उक्तं वैय्यधिकरण्याश्रयणेन द्विर्भावात् पूर्वमेव सम्प्रसारणोपपादनमिति द्रष्टव्यम् ।

वस्तुतस्तु सामानाधिकरण्येऽपि न दोषः । प्रकृतोदाहरणे व्यवधानादेव न सम्प्रसारणनिषेधः प्रवर्तते । उपोषुषेत्यादावत्यन्तरङ्गत्वात् पूर्वं धातोर्भविष्यति । ततः क्वसोरिति अदोषः । एवं च समानाङ्गश्रवणमपि न कर्तव्यं भविष्यति । यून इत्यादौ तु विशेशस्य निषेधार्थात् पुनः सम्प्रसारणग्रहणादेव स्थानिवत्वं न भविष्यतीति किमर्थं व्यधिकरणषष्ठ्याश्रयणमिति सूरयो विदां कुर्वन्तु । न तु च पूर्वपरयो यणोः एकयोगलक्षणसम्प्रसारणात् यदि परस्य अभिनिवृत्तं पूर्वस्यापि अभिनिवृत्तमेव । न चाभिनिवृत्तस्य प्रतिषेधेन निवृत्तिः शक्या कर्तुम् । यो हि भुक्तवन्तं ब्रूयात् 'मा भुंक्ष्व' इति किं तेन कृतं स्यात् । अथ पूर्वस्यानभिनिर्वृतं परस्यापि अभिनिवृत्तमेव । तथा च निमित्ततयाश्रयणमनुपपन्नमिति चेत्, अस्तु तावद्द्वयोरप्यनभिनिवृत्तमिति द्वितीयः कथं र्हि निमित्तत्वम् । नैवात्र सम्प्रसारणं निमित्तम् । किं नाम तद्भावी यण् । स एव सप्तम्यन्तेन सम्प्रसारणशब्देनोच्यते । एतच्च प्रकृतोदाहरणाभिप्रायेणैवोक्तम् अन्यथा तु व्यधर्वि इत्याद्युदाहरणेषु तु द्वयोरप्यभिनिवृत्तमित्याद्यपक्षाङ्गीकारेऽपि न दोषः । कथं तर्हि प्रतिषिध्यते न सम्प्रसारणं भवतीति । न सम्प्रसारणं प्रतिषिध्यते किन्तु तदाश्रयं पूर्वत्वं, तदेवात्र सम्प्रसारणशब्देनोपचारत उच्यते । तस्मिन् प्रतिषिद्धे वकारस्थानिकस्योकारस्य यणादेशेन विद्ध इत्यादिकम् इष्टं सिद्धं भवतीति न कश्चिद्दोषः ॥ १ ॥

रयियुक्तस्येति । रयिर्धनमस्यास्तीति रयिशब्दान्मतुपि छन्दसीर इति मस्य वत्वे रयेर्मतौ बहुलं च्छन्दसीति सम्प्रसारणे सम्प्रसारणाच्चेति पररूपत्वे आद्गुण इति गुणे च रेवच्छब्दनिष्पत्तिरिति भावः । गोदाः ज्ञानदः इति । गां ददातीति गोदाः । क्विप् चेति क्विपं परमपि बाधित्वा प्रतिपदविधित्वात् आतो मनिन् क्वनिप् वनिपश्चेति चकारात् विच्च क्विपि हि सति घुमास्थेस्यादिना धातोराकारस्येत्वं स्यादिति द्रष्टव्यम् । मदः सुखकारीचेति । अकर्तरि च कारके इत्यनुवृत्तावपि करणत्वशक्तेरपि परमात्मनि सत्वात् करणत्वविवक्षया मदोऽनुपसर्ग इति त्यपूप्रत्यय इति भावः । सवनानीति । सूयते सोमेष्वित्यधिकरणे ल्युटि युवोरनाकाविति तयोरनादेशे गुणावादेशयोर्निष्पन्नसवनशब्दात् परस्य सुपः सुपां सुलुगिति डादेशष्टिलोपश्चेति भावः । उपागहीति । गमः परस्य शपो बहुलं छंदसीति लुकि कित्वाभावे हेरपित्वेन ङित्वात् अनुदात्तोपदेशेत्यादिना मकारलोपः । अतोहेरित्याभाशास्त्रीये लुकि कर्तव्ये असिद्ध वदत्राभादित्याभाशास्त्रीयो मकारलोपोऽसिद्धवद्भवति । ततो अतो हेरिति लुक् न भवतीति भावः । अधिमित्यस्य ज्ञानविशेषणत्वेऽसामर्थ्यात् प्रकारान्तरेण योजयति । क्रियाविशेषणमिति । साधनं परित्यज्य धात्वर्थमात्रविशेषणं क्रियाविशेषणमित्यर्थः । ततश्च क्रियाद्वारेण स्त्रीलिङ्गत्वे प्राप्ते क्रियाव्ययविशेषणानां क्लीबत्वमेकवचनान्तत्वं च वाच्यमिति क्लीबत्वैकवचनान्तत्वाव्ययत्वविधानात् अव्ययादाप्सुप इति सुप्लोपे अधिकमित्युपपन्नमिति भावः ॥ २ ॥

अथ तस्मादिति । निपातस्य चेति संहितायां दीर्घत्वमिति ज्ञेयम् । अन्ते मिता इति । मा धातोरातोऽनुपसर्गे क इति कर्मणि कप्रत्यये आतो लोप इटि चेत्याकारलोप इति भावः । इति यावदिति । भाष्ये अन्ते मिता इत्यनेन पदार्थमुक्त्वोत्तमोत्तमा इत्यनेन तात्पर्यमुच्यत इत्यर्थः । ननु विद्लृ लाभ इत्यस्मात् स्वरितेतो कर्तृभिप्राये परस्मैपदिन आशीर्लुङुत्तमपुरुषबहुवचने यासुट् परस्मैपदेष्वुदात्तो ङिच्चेति यासुट्टि निष्पन्नस्य विद्यामेत्यस्य प्रतिपदत्वेन लभेमेति कथं परस्मैपदनिर्देशः । अनुदात्तत्वेन लभतेरात्मनेपदित्वादित्यतो व्यत्ययो बहुलमित्यत्र छन्दसि पदव्यत्ययोक्तेर्भाष्यस्यापि च्छन्दस्तुल्यत्वात् युक्तः पदव्यत्यय इत्याह । लभेम लभेमहि व्यत्ययादिति । मा ख्य इति । ख्या प्रकथन इत्यस्य माङ् योगे लुङि मध्यमपुरुषैकवचने सिपि अस्यतिवक्तिख्यातिभ्योऽङिति च्लेरङादेशः, आतो लोप इटि चेत्याकारलोपः, इतश्चेतीकार लोपः हुत्वविसर्गौ । न माङ्योगे इत्यडाभावस्तेन ख्य इति रूपसिद्धिरिति भावः । ननु माङिलुङिति माङ्योगे सर्वलकारापवादेन लुङ एव विधानात् कथं भाष्ये मा पश्येति माङ् योगे लोट् प्रयोग इत्यत आह । माऽयमिति । अमानोनाः प्रतिषेध इति प्रतिषेधार्थो भाष्ये माशब्दो न माङिति भावः ॥ ३ ॥

परमात्मनो व्याप्तत्वात् कथं दूरत्वोक्तिरित्यत आह। तद्ग्रहणासमर्थमिति। तथापि त्वमिति। अत्र यद्यपि विग्रमित्यादि चतुर्विंशतिसंख्याकेषु मेधाविनामसु विग्रहविपश्चिच्छब्दयोः पाठात् विग्रहविपश्चिच्छब्दयोः रूढार्थं गृहीत्वा समानविषयकत्वे पौनरुक्त्यं विग्रहमित्यस्य पृच्छेति क्रियान्वितेन्द्रविशेषणत्वं, विपश्चितमित्यस्य तु पृच्छेति क्रियान्विततत्वं चाङ्गीकृत्य भिन्नविषयकत्वेन पौनरुक्त्यपरिहारे विशेषणानां वैय्यधिकरण्यमेव दोषः। तथापि विग्रहविपश्चिच्छब्दयोर्यौगिकार्थ-स्वीकारे विग्रहविपश्चिच्छब्दानाम् इन्द्रं प्रति शरणागमने हेतुसमर्पकत्वेन इन्द्रविशेषणत्वाङ्गीकारे न कोऽपि दोषः। एवं चात्राग्राह्यत्वं साकल्येन ग्रहणाविषयत्वं, न तु सर्वथेति वा प्रसादनमन्तरेण ग्रहणाविषयत्वम्। अनष्टत्वं चाभीद्धात् त्यप्रत्ययस्य सार्वकालिकत्वमभिप्रेत्य सार्वकालिक नाशराहित्यं वा दुष्टत्वं वा व्याप्तनिमित्तत्वं च कृतसेवाद्यभिज्ञत्वमिति युक्तं तत्र हेतु समर्पकत्वमिति भावः। ड इति। ततश्च न गृह्यत इति ग्रहेः कर्मणि डप्रत्यये डित्वात् टिलोपे च विग्रशब्दनिष्पत्तिरिति भावः। धात्वाकारलोपस्येति निर्वचनादिति भावः। अत्र विपाः व्याप्ता वित्यस्यासावित्येव मूलपाठः। असन्ततया अत्वसन्तस्य चाधातोरिति उपधादीर्घताया आवश्यकत्वात्। ननु विपश्चिच्छब्दस्याखण्डप्रातिपदिकत्वात् कथं विभज्य व्याख्यानमित्यत आह अवग्रहेति। ननु परेत्युपसर्गस्येहि इति श्रुतक्रियान्वयस्यैव वेदापव्याख्यानरीत्या सम्भवात् वर्तस इत्यध्याहृतक्रियासम्बन्धेन व्याख्याने किं निमित्तमित्यत आह। अत्रेत्यादि॥ ४॥

संसारान्निर्गत्य परमात्मसमीपस्थानामपि समीपस्थतया समीपगा इत्यनेनैव ग्रहणे पौनरुत्त्यापत्या व्याचष्टे॥ सृष्ट्यादावेवेति। निरित्युपसर्गस्य वेदापव्याख्यानरीत्या रतेति। श्रूयमाणक्रियान्वयं विहाय अध्याहृतक्रियान्वये किम्मानमित्यत आह। आरतेत्यनेन चेति। धात्वर्थोपसर्गयोः परस्परं विरुद्धत्वादिति भावः। धात्वध्याहार इति॥ न च तदभावेऽपि ससाधनां क्रियामाहुरिति ससाधनक्रियावाचित्वोक्तेः धात्वध्याहारोऽनर्थकः। ससाधनमित्यस्य तादृशस्थले क्रियाक्लृप्त्यैवेत्यत्र तात्पर्यात्। ततश्च क्लृप्तक्रियाध्याहाराभिप्रायेणायं ग्रन्थः। वक्ष्यत इति। द्वितीयाध्याये यश्चिद्धित इत्थाभाग इत्येतदृग्व्याख्यानावसरे निदो दवीय इति तु विरुद्धार्थद्वयाभिधौ। दूरसामीप्यवचनादुभावपि महोदधावित्यनेन। महोदधिनामकमभिधानं वक्ष्यत इत्यर्थः। आरतेति। ऋ गति प्रापणयोरित्यस्य व्यत्ययेनात्मनेपदिनो लुङि च्लेः सर्तिशास्त्यर्तिभ्यश्चेत्यङादेशः। तत्र परस्मैपदेष्वित्यस्यानाश्रयणात्। ऋदृशोऽङिगुण इति गुणः। आडजादीनामित्याडागमः। आत्मनेपदेष्वनत इत्यस्य नञा निर्देशेनानित्यत्वात् झस्यादादेशः। अतो गुण इति पररूपत्वमिति भावः। तेऽपि ब्रुवन्त्विति। अनेन सिद्धाः गृहीता उत्तरत्र तु

साधकाः इति भेदो बोध्यः । दुहेर्डु इति डित्वात् टिलोपे दुशब्दाज्जसिचेति प्राप्तमुणबाधेन इयङुवङ्प्रकारेण तत्वादीनां बहुलं छन्दस्युपसंस्थानमित्युङि दुव इति सिध्यतीति भावः ॥ ५ ॥

## टीकाविवृतिः

सूक्तं त्वनारतं प्रोक्तमिति सूक्तादिलक्षणोक्तेः प्रसक्तिं दर्शयितुमाह । अत्र सूक्तमिति । तत्तत्समाप्तिरेव तत्तत्स्वरूपजिज्ञासाजनिकेति भावः । सूक्तवर्गयोः पूर्वमपि समाप्तत्वेऽप्यनुवाकस्येदानीं समाप्तत्वात्त्रयाणामपि सहैवात्र लक्षणकथनं युक्तमिति भावः । अनेनैवाशयेन संगतिमाह । तत्र सूक्तादीति । तत्र ऋच इति । ऋचः तत्र तेन क्रमेणानन्तरिता अव्यवहिताः कृत्वा यावदृग्जातमुपवेदे पठितं तावदुपवेदे सूक्तमुच्यत इत्यन्वयः । ऋग्वेदादि साधारणमनुवाकलक्षणमुक्त्वा यजुर्वेदाद्यसाधारणं तदाह । यद्वेति । विरामं वर्णानां विच्छेदम् । यथा इषेत्वेत्यारभ्य पशून्पाहीत्यन्तम् । यथावा ऋग्वेदादेर्ब्राह्मणारण्यकयोः खण्डा अविच्छेदेनैक काले पठ्यन्त इत्यर्थः । भाष्यस्थ तत्रशब्दस्य पञ्चम्यर्थत्वं सप्तम्यर्थत्वं षष्ठ्यर्थत्वमावृत्तिं चाभिप्रेत्य व्याचष्टे । मूलवेदादिति । मूलवेदोहि ऋङ्निगदादिराशिरूपस्तस्मात्पृथक्कृताः ऋङ्निगदसामाथर्वनामका उपवेदास्तत उद्धृता ऋग्वेदादिनामका अवान्तरवेदास्तत उद्धृताः शाकलादिशाखा इत्येवं स्थितिः । तत्र सूक्ते । तस्य क्रमस्य ततः उपवेदेभ्यः । अन्यथात्वं वैपरीत्यम् । तत्क्रमपठितानामिति । मूलवेदस्थक्रमेण दशऋच उपवेदे पठितास्ता उपवेदे सूक्तनाम कास्तासां मध्ये ऋग्द्वयनिष्कासनेनावान्तरवेदे पाठे तत्राष्टर्चं सूक्तम् अयमुद्वापः । स्थानान्तरस्थ ऋग्द्वयस्य तत्र सूक्तेमेलने तु द्वादशर्चं सूक्तमित्ययमावापो बोध्यः । तर्ह्यवान्तरवेदे सूक्तसंज्ञा किं निमित्तेत्यत आह । उपवेदगतेति । उपवेदगतं यत्सूक्तं तदन्तर्गतानामृचां प्रबन्धः पाठोयस्मिन्नुपवेदे तस्य भावस्तत्वं तेन सूक्तान्तर्गतऋक्सम्बन्धोवान्तरवेदे सूक्तसंज्ञानिमित्तमिति भावः ।

नन्वावापोद्वापयोर्वेदानन्तत्वज्ञप्तिसाधनत्वाभावात्कथं वेदानंतत्वविज्ञप्त्या इत्याद्युच्यत इत्यत आह । इदं तु वक्ष्यमाणेति । अनन्तत्वात्तुवेदानां प्रायः कर्मानुसारत इति वक्ष्यमाणानुसारेणेत्यर्थः । अयमाशयः । वेदानामनन्तत्वात्सर्वेषां सर्ववेदोक्तकर्मकरणाशक्तेः तत्तत्कर्मकरण सामर्थ्यात्तद्व्यतिरिक्तान्प्रति ऋङ्निगदाद्युपवेदा मूलवेदादुद्धृताः । उपवेदोक्तानुष्ठानेऽशक्तान्प्रति तु तच्छक्यकर्मसिद्ध्यर्थमुपवेदेभ्य उद्धृतेषु ऋग्वेदाद्यवान्तरवेदेषूपवेदगतसूक्तान्तर्गत ऋचामावापोद्वापौ कृतवानिति । ततश्च वेदानन्तत्वविज्ञप्त्या इत्यस्य वेदानामानन्त्यात्त त्तदधिकारिणांतत्तच्छक्त्यनुसारेण कर्मकरणज्ञापनायेत्यर्थ उक्तो भवति । वेदानामनन्तत्वात्तत्र तत्र विक्षिप्य कथितानां बहूनां

कर्मणां तत्तद्वाक्यपर्यालोचनेन ज्ञातुमशक्यत्वाद्विज्ञप्त्यै कर्मक्रमादि विज्ञप्त्यै तत्र तत्रोपयुक्तानामावापमनुपयुक्तानामुद्धारं च कृतवान्। एवं चावापोद्धापकरणे वेदानंतत्वप्रयुक्तकर्मविज्ञप्तिरेव कारणमित्यर्थ इत्येके। ऋङ्निगदसामानीतीति। अनेन ऋचः स ऋच उद्धृत्येति भाष्यस्यैवं योजना सूचिता। मूलवेदादुद्धृताया इति शेषः। मूलवेदादुद्धृतायाः ऋचः उपवेदरूपऋग्राशेः ऋचः काश्चिदृच उद्धृत्य ऋग्वेदनामकप्रबन्धं कृतवान्। एवं मूलवेदादुद्धृतान्नि- गदाद्यजूंष्युद्धृत्य यजुर्वेदं तथा सामतः सामान्युद्धृत्य सामवेदं कृतवानिति। अथर्वणोपीदमुपलक्षणम्। एवं पुराणवचनादित्यादिभाष्यं प्रकृते सङ्गमयितुमपेक्षिताध्याहारपूर्वकं व्याचष्टे। ततो मूलवेदादिति। मानस्तेनेभ्य इति। एतद्विद्यादेवानां वायुं प्रति प्रार्थनम्। ये अभिद्रुहस्पदे अभितोद्रोहाश्रयेंधेतमसि स्थातुं योग्याः निरामिणः रामविरुद्धाः तत एव तस्य रिपवोवैरिणः अन्नेषु भोगेष्वेव जागृधुः आकांक्षावन्तः तेभ्यः स्तेनेभ्यश्चोरेभ्यः नः अस्मान् मा। निषेधार्थोयम्। इति पूर्वार्धार्थः। हे बृहस्पते बृहतांदेवानांपते वायो येच देवानां विशेषेण व्रयः व्रं वरम्। अकारलोपश्छान्दसः। यः नियामकं ब्रह्म। हृदि आ सम्यक् ओहते वहन्ति। साम्नः सर्वत्र समत्वात्सामनामकाद्विष्णोः अन्यत् परः परं उत्कृष्टं नविदुः नजानन्तीति द्वितीयार्धार्थः॥ अन्तरितमिति॥ उभयार्धमध्यस्थमित्यर्थः। तच्चेदं वाक्यम्। येषां नैतन्नापरं किञ्चनैकं ब्रह्मणस्पते ब्रूहि तेभ्यःकदाचित्। अथोशमेनोपरतामनुष्या येधर्मिणो ब्रूहितेभ्यः सदान इति।

अस्यार्थः। येषां एतत्परं ब्रह्म नास्ति अपरं अवरं जगत् नास्ति किन्तु किञ्चनैकं निर्गुणं ब्रह्मानिर्वाच्यं जगुस्तेभ्यः स्तेनेभ्योस्मान्मा ब्रूहीति पूर्वार्धेनान्वयादियमेका ऋक्। अथो पक्षान्तरे ये शमेन विष्णुनिष्ठया उपरताः विष्णावेवरताः धर्मिणः धर्मनिष्ठाः मनुष्याः देवानां वरं नियामकं ब्रह्म हृदि वहंति ततः परंच नविदुस्तेभ्यो नोब्रूहीत्युत्तरार्धेनान्वयादथो शमेनेत्यनेन सह आदेवानामित्येका ऋक्। मानस्तेनेति पूर्वास्वित्यत्रत्य पूर्वशब्दार्थमाह॥ एवमन्यत्रापीति॥ भद्रंनो अपिवातयमन इत्यादौ। सप्तमाष्टके निवर्तध्वमित्यध्याये द्वितीयसूक्ते एकपदाप्रथमा ऋगियम्। अत्रनोमनः भद्रमपिवातयेतिवाभद्रंनोवातयप्रापयेतिवान्वये अपिशब्देन समुच्चीयमानपदार्थानुक्तेरर्थतो न्यूनतादर्शनाद्वाक्यमंतरितं ज्ञायते। तच्च तस्मिन्नेवाध्याये उत्तरत्र पठ्यते। भद्रंनो अपिवातयमनो दक्षमुतक्रतुमिति। तेनच भद्रं मनोवातय उत अनन्तरं दक्षं क्रतुमपि समीचीनं यज्ञमपि वातय प्रापयेति। अर्थपूर्तिर्भवति। वातेर्णिचि तितुगागमे वातये। अपिशब्दस्योपसर्गत्वमाश्रित्य वातयेत्यनेनान्वयांगीकारे तुवैयर्थ्यं स्यादिति। रूपं छान्दसं ज्ञेयम्॥ ब्राह्मणमिति॥ सप्तमपञ्चिकायां तस्य विश्वामित्रो होतासीदिति खण्डे अथ ह शुनःशेप ईक्षांचक्र

इति विचारपूर्वकं सप्रजापतिमेव प्रथमं देवतानामुपससार कस्य नूनंकतमस्यामृतानामित्येकयर्चेत्यारभ्याथैनमत ऊर्ध्वमग्निमाहवनीयमुपस्थापयांचकार शुनश्चिच्छेपं निदितं सहस्रादितीत्यंतब्राह्मणमर्थात् शुनः शेपऋकृशतं ददर्शेत्याहेत्यर्थः ॥ न्यूनं शतमिति ॥ अथैनमवभृथमभ्यवनिनाय त्वंनो अग्ने वरुणस्य विद्वानित्येताभ्यामित्युक्तऋग्द्वयं तथा शुनश्चिच्छेपं निदितं सहस्रादित्येकाऋक एवमेताभिस्तिसृभिरूनमित्यर्थः ॥ ताभ्योन्यास्त्विवति ॥ त्वंनो अग्ने वरुणस्य विद्वान्देवस्य हेळो वयासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषांसि प्रमुमुग्ध्यस्मत् सत्वन्नो अग्नेवमोभवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अवंयक्ष्वनोवरुणं रराणो वीहिमृळीकंसुहवो न एधि इति ऋग्द्वयं चतुर्थे मण्डले तृतीयाष्टकचतुर्थाध्याये न तामिनन्तीत्येतन्मध्ये पठ्यते । शुनश्चिच्छेपं निदितं सहस्राद्यूपादमुंचो अशमिष्टहिषः । एवास्मदग्ने विमुमुग्धिपाशान्होतश्चिकित्व इह तूनिषेद्येति तु पञ्चमे मण्डले तृतीयाष्टकाष्टमाध्याये इदमुत्यत्पुरुतममित्येतन्मध्येपठ्यते इत्यर्थः ॥ कर्मकरणाशक्तेरिति शेष इति ॥ अनेन प्रायश्शब्दस्य ब्रह्मरुद्रादिव्यतिरिक्तव्यावृत्तिप्रयोजनकस्यतददुक्तप्रकारेण कर्मकरणाशक्तेरित्यनेनान्वयं तथा कर्मानुसारत इत्यस्याधिकारिणः कर्मकरणशक्त्यनुसारत इत्यर्थं सूचयति ॥ खिलाःपरिशिष्टा इति ॥ सितासितेसरिते यत्र सङ्गते इत्याद्या इत्यर्थः ॥

यत्रवाक्यद्वयस्यार्थे इति ॥ यथापस्तंबब्राह्मणे द्वितीयाष्टके अहमस्मि प्रथमजा ऋतस्येत्यनुवाके वाचं देवा उपजीवन्ति विश्वे वाचं देवा उपजीवन्ति विश्वे इति वाक्यद्वयं सह पठितम् । एतयोःपौनरुक्त्यपरिहारायोत्तरवाक्ये देवा इत्यतः पूर्वं कर्मपदमन्तरितं ज्ञेयं तेन कर्मदेवाः वाचमुपजीवन्तीत्युत्तरवाक्यार्थसिद्धेर्न पौनरुक्त्यम् । अस्मात्पूर्ववाक्येतु मुख्यामुख्ययोरिति न्यायेनतात्विकदेवाः इत्यर्थप्रतीतेः वाचं गन्धर्वाः पशवो मनुष्या इत्युत्तरवाक्यसङ्गतेरिति भावः ॥ यत्रतु विनापीति ॥ यथाखलु कस्य नूनं कतमस्यामृतानामिति वाक्यादग्नेर्वयं प्रथमस्यामृतानामिति वाक्येऽग्निशब्देन विशेषेणेत्यर्थः ॥ एवमन्यान्यपीति ॥ आवापोद्वापयोरिति शेषः । यथा शुनःशेपदृष्टऋक्षु नमो महद्भ्य इत्येतद्दर्शनान्तरं यच्चिद्धिसत्यसोमपा इत्यादिकाभिरिन्द्रेश्विनो रुषसिच एषुस्तुतेषु विमुक्तपाशः शुनःशेपो यत्र ग्रावेति सूक्तेन सोमाभिषवचमसपूरणहोमान्कृतवानिति तमृत्विज ऊचुरित्यादिब्राह्मणे प्रतिपादितम् । तेन यत्रग्रावेति सूक्तस्योषःसूक्तात्परत्वं प्रतीयते ॥ तदभावाच्चेत उद्वापः नमो महद्भ्यः यच्चिद्धीत्येतन्मध्ये आवाप इति ज्ञायते ॥ अनेनेति ॥ स्वाध्यायविभ्रमार्थायेति साधारणप्रयोजनकथनेनाष्टकादिवद्वर्गोपि सांकेतिक एवेत्युक्तमित्यर्थः । भाष्ये अष्टकाध्यायवर्गादीत्यादिशब्देन पञ्चिकाप्रपाठादिकं ग्राह्यम् ॥

सुरूपकृत्नुम् ॥ दशर्चमिदमैन्द्रमिति ॥ सूक्तचतुष्टयात्मके द्वितीयानुवाके आद्यं सूक्तं दशर्चमिन्द्रदेवताकंच। सुरूपकृत्नुं दशैन्द्रमित्यनुक्रान्तत्वादिति भावः ॥ द्यविद्यवि दिनेदिन इति ॥ द्योशब्दस्य ओकारान्तस्य सप्तम्येकवचनान्तस्य नित्यवीप्सयोरिति वीप्सायां द्विर्भावः। दिवेदिवे द्यविद्यवीत्यहर्नामसु पाठाद्दिनार्थत्वं चेतिभावः ॥ गोर्दोहायेति ॥ भाष्ये गोरित्यध्याहारेण दोहायेति पदं गोदुहे इत्यस्य प्रतिपदमिति भावः। गोदुह इति पदं भावेक्विपमाश्रित्य व्याख्यातम्। तस्मिन्पक्षे संपदादिपाठः कल्पनीय इत्यरुच्या प्रकारान्तरेण स्वयं व्याचष्टे ॥ गां दोग्धीति ॥ अस्मिन्पक्षे टीकायां गांदोग्धीत्यतः पूर्वमथवेति शेषः ॥ ततः क्विप्चेति कर्तरि क्विबिति भावः। तथाचगांदोग्धीत्यस्य पयस्त्याजयति गोःसकाशादित्यर्थः। अस्मिन्पक्षे भाष्योक्तं दोहायेतिपदं ऋक्शेषत्वेन योजयति ॥ तदर्थं दोहायेति शेष इति ॥ गोदोग्धृसम्बन्धिदोहायेति भावः ॥ सुष्ठु दोग्धीति ॥ पयस्त्यजतीत्यर्थः ॥ दुहःकप्घश्चेति ॥ दुहेःकप्प्रत्ययो घकारश्चान्तादेश इति सूत्रार्थः ॥

उभयार्थत्वादिति ॥ अवरक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेश श्रवणस्वाम्यर्थयाचनक्रियेच्छा-दीप्त्यवाप्त्यालिङ्गनहिंसादानभाववृद्धिष्विति धातुव्याख्याने रक्षणभावग्रहणात्तदर्थादूतियूतीतिक्तिनो निपातनादिति भावः। सुरूपकृत्नुमित्यस्य भाष्ये सुरूपकर्तारमिति व्याख्यानम्। तदत्यन्तं कस्य चिद्रूपस्य कर्तारमिति प्रतीतिवारणाय व्याचष्टे ॥ साध्विति ॥ कृञः कृहनिभ्यांक्त्नुप्रत्यये कित्वाद्गुणो नेतिभावः। जुहूमसीत्यस्य स्वाह्वयाम इति व्याख्यानं घटयितुमाह ॥ ह्वयतेःश्लुरिति ॥ ह्वेञ्स्पर्धायां शब्देचेत्यतः परस्य शपो बहुलं छन्दसीति श्लौसति संप्रसारणं संप्रसारणाश्रयंच कार्यं बलीय इत्युक्तेर्बहुलं छन्दसीति द्वित्वात्पूर्वं संप्रसारणे पूर्वरूपे कृते हल इति दीर्घे श्लाविति द्वित्वेऽभ्यासह्रस्वत्वे कुहोश्चुरिति चुत्वे अभ्यासेचर्चेति जस्त्वे इदंतोमसीति मस्प्रत्ययान्ते इकारागमः। दोहायेति तस्स्थितेरितिच भाष्ये शेषोक्तेर्बीजमाह ॥ दार्ष्टांतिके त्विति ॥ दोहाय गोःसकाशात् दुग्धत्याजनायेत्यर्थः। आदिक्येऽधिकमिति सूत्रादिकारागमार्थः सुशब्देनोक्त इति भावेनोक्तं स्मारयति ॥ स्मसीत्यादीति ॥ १ ॥

उपनः ॥ भाष्ये ऋक्शेषत्वेनोक्तस्य भवानित्यस्य यत्तच्छब्दाध्याहारेणान्वयमाह ॥ यो भवानिति ॥ रेवत इति ॥ धनवाचिरयिशब्दान्मतुपि छन्दसीर इति मस्य वत्वे रयेर्मतौ बहुलं छन्दसीति संप्रसारणेन यकारस्येकारे संप्रसारणाच्चेति पूर्वरूपत्वे आद्गुण इति भावः। आतोमनिन्क्वनिब्वनिपश्चेत्यत्र चाद्विचो विधानाद्गोपूर्वाद्ददातेर्विच्। गमेर्डोरिति सूत्रेण गोशब्दस्य गमिरूपत्वेन गत्यर्थानां चज्ञानार्थत्वादित्याशयेनोक्तं भाष्यं संवादयति ॥ गोदाः ज्ञानद इति ॥

मुख्यामुख्यन्यायेनतु भाष्येऽधिकमित्युक्तमितिभावः ॥ मदःसुखकारीति ॥ मदीहर्षे इत्यतोन्त-र्णीतण्यर्थात्कर्तरि सिचेःसंज्ञायां हनुमौकश्चेत्युक्तः कप्रत्ययो बहुलग्रहणाज्जात इति भावः ॥ सवना सवनानीति ॥ श्रुतौ सुपांसुलुगिति द्वितीयाबहुवचनस्य आकारादेश इति भावः ॥ उपागह्युपागच्छेति ॥ श्रुतौ गमेर्बहुलंछन्दसीति शब्लुकि छत्वाभावाद्धेरपित्वेन ङित्वादनुदात्तोपदेशे तिमकारलोपेऽस्याभीयत्वेनातोहेरित्येतमाभीयं प्रत्यसिद्धत्वाद्धेर्लुङ्नेति भावः ॥ २ ॥

अथाते ॥ अव्ययानामनेकार्थत्वादथशब्दस्य हेत्वर्थत्वमभिप्रेत्य भाष्ये तस्मादित्युक्तम् । तत्र पूर्वऋगुक्तस्यैव हेतुत्वमभिप्रेत्याह ॥ यस्मादिति ॥ अन्तमानामिति श्रौतपदस्यान्तेमिता इति पदार्थः उत्तमोत्तमा इति तात्पयर्यार्थ इति भावेनाह ॥ अन्तेमिता इति । ननु अन्तमानां सुमतीनामित्यत्र कथं षष्ठी । विद्यामेत्येतत्कर्मत्वेन द्वितीयाया अपेक्षितत्वात् । तथा विद्यामेत्यत्र लाभार्थकविदेर्विधिलिङि तौदादिकत्वेन शप्रत्यये शेमुचादीनामिति नुमागमेविन्देमेतिभाव्यम् । कथं विद्यामेतीत्यत आह ॥ व्यत्ययादिति ॥ द्वितीयाप्राप्तौ षष्ठी । तथा शप्रत्ययाभावश्चेति शेषः । सुप्तिङुपग्रहलिङ्गनराणामित्युक्तेस्तत्रोपग्रहशब्देन विकरणोक्तेस्तस्याभावे यासुटि विद्यामेति रूपमिति भावः । भाष्येतु लभेरनुदात्तेत्वाल्लभेमहीति वक्तव्ये यल्लभेमेत्युक्तं तदनुदात्तेत्व-लक्षणस्यात्मनेपदस्य चक्षिङो ङित्करणादनित्यत्वात्साध्विति बोध्यम् । उपसर्गाःक्रियापदसंनिधौ क्रियाविशेषद्योतकाः तदसन्निधौ समाधानक्रियामाहुरिति न्यायमाश्रित्य भाष्यकारीयव्याख्यानं संवादयति ॥ अति अतीत्येति ॥ ख्यातेर्लोडर्थे माङ्योगाल्लुङि सिपि अस्यतिवक्ति-ख्यातिभ्योङित्यङि आतोलोप इटि चेत्याकारलोपे इतश्चेतीकारलोपे रुत्वविसर्गयोः नमाङ्योग इत्यडभावे ख्य इति रूपम् । अस्यं प्रतिपदं भाष्यमापश्येति अत्रापि माङ्योगात्सर्वलकारापवादेन माङिलुङिति लुङो भाव्यत्वात्कथं लोडित्यत आह ॥ मायमिति ॥ स्वरादिगणे अमानोनाः प्रतिषेध इति माङ्भिन्नमाशब्दपाठात्तस्य भाष्ये प्रयोगान्नलुङि भावः । माख्य इत्यन्यादर्शन-प्रार्थनायां सार्वज्ञहानेर्भाष्ये करुणार्द्रदशेति श्रुतिशेषोऽभिहितः । तेन करुणार्द्रदृशान्यान् दैत्यादीन् मापश्येत्यन्वयेजातेशेषोक्तेर्भावमाह ॥ क्रूरदृष्टचेति ॥ एवशब्दस्य क्रूरदृष्टचेत्यनेनान्वयः ॥ ३ ॥

परेहि ॥ भाष्ये इहीत्यादिमध्यमपुरुषप्रयोगघटनार्थमध्याहृतमन्मन इति पदंतदन्वयाय संबुध्यन्तत्वेन व्याख्याति ॥ हेमन्मन इति ॥ परमात्मनो व्याप्तत्वेन सामीप्यात्कथं दूरे वर्तसे इत्युच्यते इत्यत आह ॥ तद्ग्रहणासमर्थमिति ॥ साकल्येनेति शेषः । विग्रविपश्चिच्छब्दयोः मेधाविनामसु विप्रः विग्र इति मनश्चित् विपश्चित् इति पाठात्पुनरुक्तिप्राप्तौ तत्परिहारायाग्राह्यं व्याप्तचित्तमिति व्याख्यातं भाष्ये । तद्घटयति ॥ वीत्युपसर्ग इति ॥ अव्ययानामनेकार्थत्वादिति

भावः ॥ कर्मणिड इति ॥ तद्धिता इति ड इतिभावः ॥ अस्तृतमच्छिन्नमिति ॥ नञ्पूर्वात्स्तृञ् आच्छादन इत्यतः क्तप्रत्य इति भावः । धातूनामनेकार्थत्वाच्छेदनार्थता ज्ञेया । विपश्चितमित्यस्य मेधाविनामसु पाठात्तदर्थकत्वेन व्याख्यां विहाय कुतो व्याप्तचित्तमित्यवयवव्याख्या कृतेत्यत आह ॥ अवग्रहेति ॥ पूर्वपदान्ते अवग्रहः कार्य इति वैदिकपरिभाषयाऽखण्डपदत्वाभावादवयवार्थ-कथनं युक्तम् । अवग्रहो नामार्धमात्राकालविच्छेदेनोच्चारणम् । सखिभ्य इत्यादावखण्डपदत्वेपि स्वादिष्वसर्वनामस्थान इति प्रातिपदिकस्य कृत्रिमपदत्वान्मध्येऽवग्रहो बोध्य इति भावः । इदंचप्रायिकम् । विग्रंरुद्रेभिरित्यादौ व्यभिचारात् ॥ अवगच्छवेति ॥ यथाशक्त्येति शेषः । तदर्थ मवगत्यर्थम् । तं विग्रमित्युक्तं कमित्यत आह ॥ य इन्द्र इति ॥ तेतव सखिभ्यः चक्षुरादिप्रेरकत्वेनोपकारिभ्यो देवेभ्य इत्यर्थः । आवरमित्यस्य स्वातन्त्र्यद्योतक लिङ्गव्यत्ययेनेन्द्र-विशेषणत्वोपपत्तौ द्वितीयान्तत्वमाश्रित्य वरमभीष्टं प्रयच्छेत्यध्याहारेणान्वयो नयुक्त इति भावेनाह ॥ आवर इति ॥ परेहीति यथास्थितक्रियान्वयं विहाय वर्तस इत्यध्याहृतेनान्वयोऽनुपपन्न इत्यत आह ॥ अत्र परेतीति ॥ परशब्दस्य निपातस्य चेतिदीर्घः । परेतप्रेतसंस्थिताः । मृतप्रमीतौत्रिष्वेत इत्यमरकोशे परापूर्वकेण्धातोः क्तप्रत्यये निष्पन्न परेतशब्दस्य मृतपर्यायत्वोक्तेर्मरणार्थस्य च प्रकृतेऽयोगादिति भावः ॥ ४ ॥

उतब्रुवन्तु ॥ निदस्तस्य समीपगा इति मोक्षे विष्णुसमीपगा इति व्याख्याने अज्ञानतो निर्गत्य तं विष्णुमारतेत्यनेन पुनरुक्तिः स्यादित्यतोऽपेक्षिताध्याहारेण व्याचष्टे ॥ सृष्ट्यादावेवेति ॥ सृष्टिस्थितिसंहारादिकार्ये कर्तव्ये सहायत्वेन येसमीपस्था इत्यर्थः ॥ वक्ष्यमाणेति ॥ द्वितीयतृतीयपादोक्तापेक्षयोतशब्दः समुच्चयार्थः ॥ वक्ष्यत इति ॥ निदो दवीय इति तुविरुद्धार्थद्वयाभिधौ । दूरसामीप्यवचनादुभावपिमहोदधाविति द्वितीयाध्याय इति शेषः ॥ योगायोगादिति ॥ निरो निषेधार्थत्वान्निरारत विष्णुं न प्रापुर्नज्ञातवन्तः तेपि विष्णुं ब्रुवंत्वित्युक्तेर्विरोधादिति भावः । ननु निर्निश्चयैकान्ताद्यर्थे निर्निःशेषनिषेधयोरिति विश्वकोशोक्तेर्निरो निश्चयार्थत्वमाश्रित्यान्वययोगान्नाध्याहारापेक्षेत्यत आह ॥ अधिकार्थलाभाचेति ॥ अज्ञानाभावलक्षणाधिकार्थलाभादित्यर्थः ॥ धात्वध्याहार इति ॥ उपसर्गाःक्रियासंनिधानाभावे समाधान क्रियामाहुरित्युक्तेः क्लृप्ताध्याहार इत्याशयः । चिच्छब्द एवार्थोभिमत इति भावेनाह ॥ निर्गत्यैवेति ॥ आरत प्रापुरिति ॥ ऋगतिप्रापणयोरित्यतो लङि व्यत्ययेनात्मनेपदे झ बहुलं छन्दसीति शपो लुका लुप्तत्वात्पाघ्रेति ऋच्छादेशाभावे आडागमे आटश्चेतिवृद्धौ आत्मनेपदेष्वनत इति झस्याद्भावे आरतेतिरूपमिति भावः ॥ तेपीति ॥ ब्राह्मादिसमीपस्थातिरिक्ता अपरोक्षज्ञानिन

इत्यर्थः ॥ येचेन्द्र इति ॥ परोक्षज्ञानी इत्यर्थः ॥ दुवःप्राणानिति ॥ इन्द्रियाणीत्यर्थः । दुव इति पदमिन्द्रियेषुनिर्वक्ति ॥ आत्मन इति ॥ स्वात्मानं प्रति रूपादिविषयान्नयन्तीत्यर्थः ॥ दुहेर्दुरिति ॥ श्मनि श्रयतेडुन्निति वर्तमाने अश्वादयश्चेत्यनेनेत्यर्थः । जसिनेति गुणे व्यत्ययेनाकारस्योकारे दुव इति रूपमिति भावः ॥ ५ ॥

## ऋक्संहिता पदपाठसहिता

(३६) उतनः सुभगाँ अरिर्वोचेयुर्दस्मकृष्टयः ॥ स्यामेदिन्द्रस्यशर्मणि ॥ ६ ॥

(प०) उत । नः । सुऽभगान् । अरिः । वोचेयुः । दस्म । कृष्टयः । स्याम । इत् । इन्द्रस्य । शर्मणि ॥ ६ ॥

(३७) एमाशुमाशवे भर यज्ञश्रियं नृमादनम् ॥ पतयन्मन्दयत्सखम् ॥ ७ ॥

(प०) आ । ईम् । आशुम् । आशवे । भर । यज्ञऽश्रियम् । नृऽमादनम् । पतयत् । मन्दयत्ऽसखम् ॥ ७ ॥

(३८) अस्य पीत्वा शतक्रतो घनो वृत्राणामभवः ॥ प्रावो वाजेषु वाजिनम् ॥ ८ ॥

(प०) अस्य । पीत्वा । शतक्रतो इतिशतऽक्रतो । घनः । वृत्राणाम् । अभवः । प्र । आवः । वाजेषु । वाजिनम् ॥ ८ ॥

(३९) तं त्वा वाजेषु वाजिनं वाजयामः शतक्रतो । धनानामिन्द्र सातये ॥ ९ ॥

(प०) तम् । त्वा । वाजेषु । वाजिनम् । वाजयामः । शतक्रतोइतिशतक्रतो ॥ धनानाम् । इन्द्र । सातये ॥ ९ ॥

(४०) यो रायोऽवनिर्महान्त्सुपारः सुन्वतः सखा ॥ तस्मा इन्द्राय गायत ॥ १०, ८, ४ ॥

(प०) यः । रायः । अवनिः । महान् । सुऽपारः । सुन्वतः । सखा ॥ तस्मै । इन्द्राय । गायत ॥ १०, ८, ४ ॥

## ऋग्भाष्यम्

अरयोपि प्रजा अस्मान्वोचेयुः सुभगान्सदा ।
शत्रुभेदिस्तवेन्द्रस्य स्यामैवानुग्रहे सुखे ॥ ६ ॥
आशुवीर्यं तवैवाशुं सोमं क्षिप्रं मनोपि वा ।

आभर स्वोदरे तुष्ट्या हृदि वा यज्ञभूषणम् ।
ईमेव पुंमदकरं मदादुत्पतनादिके ।
हेतुं मन्दत्वहेतुं च तत्सखीनां पुरोगतेः ॥ ७ ॥
एनं पीत्वा बहुज्ञानाभूस्तमोभिरनावृतः ।
प्रसादादेव मुक्तेषु तमोसह्यतया घनः ।
आवृतेरेव वृत्राणि ह्यज्ञानान्यन्नदं नरम् ।
प्रावो युद्धेषु योद्धारं भक्तं ज्ञानिनमेव च ॥ ८ ॥
योधयामोवयं तं त्वां ज्ञानादिधनलब्धये ।
अज्ञानाद्यस्मदरिभिः ॥ ९ ॥
योशेपद्रविणावनिः ।
सुखदः संसृतेः पारस्तस्मा इन्द्राय गायत ।
कम्पो शेष ग्रहे क्वापि लज्जायां वा पुरातने ।
पृथक्त्वे धृष्यतायां वा हरिणर्क्संहितोदितः ॥ १०, ८, ४ ॥

## ऋग्भाष्यटीका

उत नः । अरयोपि ॥ हे दस्म दस्यतिर्भेदनार्थः । ततोम(क्) प्रत्ययः । शत्रुभेदिन् शत्रूणां हन्तः । अरिरुत अरयोपि । कृष्टयः प्रजाः नोस्मान्सुभगान् सदा वोचेयुर्वदेयुः । किंच वयमिन्द्रस्य तवानुग्रहे सतीति शेषः । शर्मणि सुखे स्यामेत् स्यामैव । त्वदनुग्रहेण सुखिनो भवामैव ॥ ६ ॥

एमाशुम् । आशुवीर्य । विशब्दो वीर्यवाची । आशु विःवीर्यं यस्यासावाशविः पूर्वपदोकार-स्याकारः । हे आशवे आशुवीर्य क्षिप्रकारिसामर्थ्य । आशुं क्षिप्रं वेगवन्तम् । द्रवत्वात् । यज्ञश्रियं यज्ञभूषणम् । नृमादनं पुंमदकरं कृतपानानां पुंसां हर्षकरम् । पतयत् उत्पतयन्तम् । मदात् मदमुत्पाद्योत्पतनादिके व्यापारे हेतुम् । मन्दयत्सखं मन्दयति सखायमिति मन्दयत्सखस्तम् । मयूरव्यंसकादिदर्शनात् । यःसोमं पिबति तत्सखीनां मन्दत्वहेतुम् । कथं पुरोगतेर्धावनादौ कृतपानानां बलवत्तयाऽकृतपानेभ्यः पुरोगमनात् । एवं भूतं सोममाभर स्वोदर इति शेषः । अध्यात्मं त्वेवंविधं मनस्तुष्ट्या हृदि साध्विदमित्याभरेति व्यवस्थितो विकल्पः । ईमित्यनूद्यैवेति व्याख्यातम् । तस्य केनाप्यन्वयायोगात्तवेत्यध्याहृत्य तवैवेत्युक्तम् । त्वदधीनमेव सोमं त्वं स्वीकुर्विति । मनसश्चञ्चलत्वादाशुत्वम् । तदुद्रेकेण च पुंसां मदादिकं भवति । आशवे आशुत्वार्थमिति व्याख्यानं प्रमाणविरुद्धमित्यतः संबुद्धितया व्याख्यातम् ॥ ७ ॥

अस्यपीत्वा । एनं पीत्वा । हेशतक्रतो शतमित्यपरिमितनाम । क्रतुर्ज्ञानं बहुज्ञान । त्वम् अस्यैनं सोमं पीत्वा । वृत्राणां तमसां घनोऽभेद्योऽभवः । तमोभिरनावृतोभूरिति यावत् । ननु परमेश्वरस्य सोमपानोत्पन्नया शक्त्या ज्ञानाप्रतिहतिरित्येतत्प्रमाणविरुद्धमतोऽभिप्रायमाह ॥ प्रसादादिति ॥ येषां सोमः परमेश्वरेण पीतः तेषु तेन यज्ञेनोदिताद्भगवत्प्रसादादेव मुक्तेषु सत्सु प्रसादादेव परमेश्वरस्तमो न सहतेऽतः सोमं पीत्वा वृत्राणां घनोभव इत्युच्यते । नतु सोमपानसामर्थ्येन तस्याज्ञानानावृत्तिः । असह्यं तमो यस्यासौ तमोसह्यः । तमसोसह्य इति वा । अज्ञानेषु वृत्रशब्दं निर्वक्ति । आवृतेरिति । सर्वजीवावरणात् । अस्य निर्वचनस्य यदावृणोत्तद्वृत्रस्य वृत्रत्वमित्यादि-श्रुतिप्रसिद्धतया प्राबल्यं सूचयितुं ह्येव शब्दौ । किंच त्वं वाजिनमन्नवन्तम् । अन्नदं नरमिति यावत् । वाजेष्वन्नेषु सर्वभोगविषये प्रावो रक्षः । अथवा वाजिनं योद्धारं वाजेषु युद्धेषु प्रावः । नान्नदानादिमात्रेणेश्वरो रक्षतीत्यतः शेषमाह ॥ भक्तं ज्ञानिनमेवचेति ॥ ८ ॥

तंत्वा । योधयामः । हेशतक्रतो इन्द्र । तमेवमुक्तगुणं वाजिनं योद्धारं त्वाम् । अध्यात्मं धनानां सातये ज्ञानादिधनलब्धये वाजेषु युद्धेष्वज्ञानाद्यस्मदरिभिः सह वाजयामो योधयामः । बाह्ये स्पष्टम् ॥ ९ ॥

योरायः । योशेष । यइन्द्रो रायोवनिरशेषद्रविणस्यावनिः । अवनिरिति पृथिवीनाम । अवनिरिवाव निराश्रयः । अवतेरैश्वर्यकर्मणः प्राप्तिकर्मणोवा कर्तर्यनिप्रत्ययः । महानुत्तमः सुखदःसंसृतेःपारश्चेति सुपारः । सुन्वतो यजमानस्य सखा । तस्मा इन्द्राय साम गायत । हेउद्गातारः । यद्वा गायतिः शब्दमात्रार्थः । तस्मै तदर्थं स्तुतिशब्दान्कुरुतेति । अशेषेति कम्पार्थ उक्तः । तत्र कम्पस्याशेषार्थतायां प्रमाणमाह ॥ कम्प इति ॥ १०, ८, ४ ॥

## मन्त्रार्थमञ्जरी

(हे) दस्म, शत्रुभेदिन्, 'दसु विभेदने' इत्यतो मप्रत्ययः । अरिः उत, अरयोऽपि । कृष्टयः, प्रजाः । नः अस्मान् । सुभगान् । (सदा) वोचेयुः, वदेयुः 'वच परिभाषणे' छान्दसं शब्विकरणमुमागमश्च ॥ किं च (वयम्) इन्द्रस्य । (तव) (अनुग्रहे सति) इति शेषः । शर्मणि सुखे । स्याम इत्, स्यामैव, त्वदनुग्रहे सति सुखिनो भवामैव ॥ ६॥

विशब्दो वीर्यवाची, आशुविः वीर्यं यस्सावाशविः आशुपदोकारस्याकारः, तस्य सम्बुद्धिः (हे) आशवे, आशुवीर्य क्षिप्रकारिसामर्थ्य । आशुम्, क्षिप्रम्, वेगवन्तमिति यावत्, द्रवत्वात् । यज्ञश्रियम्, यज्ञभूषणम् । नृमादनम्, पुंमदकरम्, कृतपानानां पुंसां हर्षकरमिति यावत् । पतयत्,

पतयन्तम्, पातॄणां मदमुत्पाद्योत्पतनादिव्यापारहेतुम् । मन्दयत्सखम्, मन्दयति सखायमिति मन्दयत्सखम्, मयूरव्यंसकादित्वात्साधुत्वम्, यः सोमं पिबति तत्सखीनां मन्दत्वहेतुम्, धावनादौ कृतपानस्य बलवत्त्वेनाकृतपानेभ्यः सखिभ्यः कृतपानस्य पुरोगमनान्मन्दत्वं तेषां करोतीति भावः । 'एम्' इत्यत्र 'आ-ईम्' इति विभागः, 'ईम्' इत्यस्य 'तव' इत्यध्याहृतेनान्वयः, आङः 'भर' इति क्रियान्वयः । उक्तगुणविशिष्टम् । (तव) ईम्, तवैव, त्वदधीनमेव (सोमम्) (स्वोदरे) इति शेषः । आ भर, बिभृहि, भृञःशब्विकरणं छान्दसम् ॥ अध्यात्मं तु– एवं विधं मनस्तुष्ट्या हृदि साध्विदमित्याभरेत्यर्थः, मनसश्चञ्चलत्वादाशुत्वम्, तदुद्रेकेण च पुंसां मदादिकं भवतीति ज्ञेयम् ॥ ७ ॥

(हे) शतक्रतो, शतशब्दोऽत्रामितवाची, क्रतुर्ज्ञानम्, हे अपरिमितज्ञान विष्णो, शताश्वमेधयज्ञ पुरंदर, इति वा । अस्य पीत्वा, द्वितीयार्थे षष्ठी, व्यत्ययश्च स्वातन्त्र्ये, त्वदधीनमेवैनं सोमं पीत्वा । वृत्राणाम्, 'यदिमाँल्लोकानावृणोत्तद्वृत्रस्य वृत्रत्वम्' इति श्रुतेः सर्वजीवावरणहेतुना वृत्रपदवाच्यानामज्ञानानाम् । घनः, अभेद्यः । अभवः, अज्ञानैरनावृतेऽभूरिति यावत्, विष्णुपक्षे– यस्मिन्यज्ञे भगवता सोमः पीतस्तद्यज्ञेनोदितविष्णुप्रसादात्तेषु मुक्तेष्वज्ञानस्पर्शं न सहत इति भावो ध्येयः ॥ किं च, (त्वम्) वाजिनम्, अन्नवन्तम्, अन्नदं नरमिति यावत् । वाजेषु, अन्नेषु, सर्वभोगविषये । प्र आवः, अरक्षः ॥ वाजिनम्, ज्ञानादिविषये योद्धारम् । वाजेषु, ज्ञानादियुद्धेषु । प्र आवः, अरक्षः ॥ इति वा ॥ ८ ॥

शतक्रतो । (हे) इन्द्र, । तम्, एवमुक्तगुणकम् । वाजिनम्, योद्धारम् । त्वा, त्वाम् । धनानाम्, ज्ञानादिवित्तानाम् । सातये, लब्धये । वाजेषु, युद्धेषु । (अज्ञानाद्यस्मदरिभिर्बाह्यशत्रुभिश्च सह) वाजयामः, योधयामः ॥ ९ ॥

यः इन्द्रः । रायः, अशेषद्रविणस्य । अवनिः, अवनिरिवावनिः, भूमिरिवाश्रयः । महान्, उत्तमः । सुपारः, सु सुखदः संसृतेः पारश्चेति सुपारः । सुन्वतः, यजमानस्य । सखा । तस्मै । इन्द्राय । गायत, सामगानं कुरुत । (हे उद्गातारः) इत्यर्थः । यद्वा– 'गै शब्दे' स्तुतिशब्दान्कुरुतेत्यर्थः ॥ 'कम्पोऽशेषग्रहे क्वापि' (ऋ० भा०) इत्यादेरत्र 'रायो ३ऽ' इति कम्पोऽशेषार्थः ॥ १० ॥ इत्यष्टमो वर्गः ॥ ८ ॥ चतुर्थं सूक्तम् ॥ ४ ॥

## पदार्थप्रकाशिका

उतनः सुभगा अरिः । भेदनार्थ इति । भेदनामसु पाठादिति भावः । मप्रत्यय इति । दसुविभेदने अस्मात् मप्रत्यये दस्मेति भवति । प्रजाइति । कृष्टिशब्दस्य मनुष्यनामसु पाठादिति भावः । सुभगानिति । समीचीनैहिकामुष्मिकभाग्योपेता एत इत्येवं वोचेयुरित्यर्थः ॥ ६ ॥

एमा शुमाशवेभर । ननु तर्हि आविरिति स्यादित्यत आह पूर्वपदस्येति । आशु पदांत्य उकारस्य अकारे आशविरिति भवतीत्यर्थः । द्रवत्वादिति सोमसस्य द्रवद्रव्यत्वादित्यर्थः । मदादिति ल्यब्लोपनिमित्ता पञ्चमीत्याह । मदमुत्पाद्येति । मन्दयति मन्दलं करोति । ननु समर्थः पदविधिरित्यनेन समर्थस्य सुबन्तस्यैव समर्थन सुबन्तेन समासविधाने सति ङन्तपदानां समासस्य कुत्राप्यभावात् मन्दयेति तिङ् पदस्य कथं सखिपदेन समास इत्यत आह । मयूरेति मयूरव्यंसकादिगणेषु तिङंतपदानामपि बहुतरं समासस्य दर्शनेन अत्रापि दोषाभावादिति भावः । अत एव मयूरव्यंसकादिदर्शनादित्याहेति द्रष्टव्यम् । तत्सखीनाम् अकृतमोमपानानामिति भावः । एवंविधे आशुत्वादित्युक्तम् । आभर स्वीकुरु वाशब्दात् स्वोदरे हृदिवेति दिवा पक्षद्वयस्य प्रतीयमानत्वात्कथमेतदित्यत आह । व्यवस्थित इति । ईशमित्यनूद्य ते ईमिति निपात इदंशब्दार्थः । अध्यात्मं सोमस्थानीयस्य मनसः । आशुत्वमुपपादयति मनस इति । आशुत्वाक्षिप्रवेगित्वयुक्तमित्यर्थः । नृमादनत्वं तस्योपपादयति । तदुद्रेकेण चेति । तस्य मनसो भक्त्याद्युद्रेकेण पुंसो मद आदिकं भवतीत्यर्थः । आदिपदेन मदमनुत्पाद्योत्पतनादिके हेतुभूतं भवति । तथा अकृतमनस्विभ्यः कृतमनस्विनाम् आन्तरकार्ये ज्ञानादौ पुरोगमनान्मन्दयत्सखं च भवतीति ग्राह्यम् । यज्ञश्रियमित्युक्तयज्ञभूषणत्वं तु आंतरज्ञानं यज्ञभूषणत्वाद्यमिति स्पष्टत्वान्नोक्तम् । आतुत्वार्थमिति सम्बुध्यर्थतया भगवत्पादैर्व्याख्यातम् । परणेत्विदं चतुर्थ्यन्तं पदं कृत्वा तादर्थ्ये चतुर्थीमङ्गीकृत्याशुत्वार्थ आशूवेगसिध्यर्थं सोममाभरेति व्याख्यातम् । तत्प्रमाण-विरुद्धं परमेश्वरवेगस्य स्वाभाविकतया अन्यासाध्यत्वस्यैव प्रमाणावगतत्वेन सोमपान-साध्यत्वाभावादिति भावः ॥ ७ ॥

अस्य पीत्वा शतक्रतो । अपरिमितनाभेति शतं सहस्रमिति बहुवचननामसु पाठादिति भावः । ऋतुर्ज्ञानमिति । ऋतुरसुधीति प्रज्ञानामसु पाठादिति भावः । कर्मणि षष्ठीत्याशयेनाह । अस्यैनमिति । तमसामिति । कर्तरि षष्ठी तमःशब्दवाच्याज्ञानकर्तृकभेदनविषयो नाभव इत्यर्थः । तत्तात्पर्यमाह तमोभिरिति । अतः सोमं पीत्वेति । तथाच सोमं पीत्वा प्रसन्नः सन् तमः कर्तृकभेदनविषयास्ते यथा न स्युस्तथा करोषीति तात्पर्यार्थः । तस्य भगवतः । असंहिततया

तमोघन इति अन्यथाप्रतीतिः तमोसह्यतेत्येकं पदं तत्र विशेषणस्य परनिपात इत्यभिप्रेत्य तदर्थमाह असह्यतम इति भक्तेष्वसह्यमित्यर्थः । तमोसह्यमित्यनन्तरं तस्य भावस्तमोसह्यता तया तमोऽसह्यतयेत्यर्थ इति वाक्यशेषः । विशेषणस्य परनिपातास्वरसादेव प्रकारान्तरेण व्याख्याति तमस इति । मुक्तभक्तनिष्टतमस इत्यर्थः । असह्य इत्यनन्तरं तस्य भावस्तत्ता तयेत्यर्थ इति शेषः । वृत्रस्य अज्ञानस्य वृत्रत्वं वृत्रशब्दवाच्यत्वम् । शेषमिति । ऋचीति शेषः ॥ ८ ॥

तंत्वा वाजेषु वाजिनम् । एवम् उक्तगुणमिति । भक्ताज्ञाननाशकत्वादिगुणयुक्तमित्यर्थः । योधयाम इति तवास्मदरिभिरज्ञानादिभिः युद्धं कारयाम इत्यर्थः । अस्माभिः त्वस्तोत्रे कृते सति तेन प्रसन्नस्त्वज्ञानादिप्रतिबन्धकत्वेन अस्मदरिभिरज्ञानादिभिः । युद्धं कृत्वा तान् विनाश्य ज्ञानं देहीति तात्पर्यार्थः । बाह्ये स्पष्टमिति । वाजिनं त्वां प्रसिद्धधनादिलब्धये वाजेषु प्रसिद्धास्मदरिभिः वाजयाम इति स्पष्टोर्थः । अस्मत्स्तोत्रेण प्रसन्नस्त्वं युद्धधनादिप्राप्तिप्रतिबन्धकीभूतान्नोऽस्मद्वैरिणः पराभाव्य धनादिसम्पत्तिं देहीति तात्पर्यार्थो द्रष्टव्यः ॥ ९ ॥

यो रायोवनिर्महान् । राय इति रैशब्दस्य षष्ट्यैकवचनमिदम् । पृथ्वीनामेति । क्षितिरवनिर्वेति वैदिकनिघण्टौ तन्नामसु पाठादित्यर्थः । क्ष्माऽवनिर्मेदिनी महीति प्रसिद्धाभिधानमत्राप्यस्तीति द्रष्टव्यम् । अवनिर्यथा आश्रय इत्यर्थः । एवं रूढ्याऽश्रयणे ऋग्भाष्ययोः अवनिरित्यस्य गौण्यार्थमुक्त्वा योगाङ्गीकारेणार्थान्तरमाह अवनिरिति । ऐश्वर्यकर्मण इति । ऐश्वर्यविषयकस्येत्यर्थः ऐश्वर्यप्रतिपादकस्येति यावत् । ऐश्वर्यं स्वामित्वं स्वामित्वार्थकस्येति फलितोऽर्थः । एवमेव प्राप्तिकर्मणो वेत्येतदपि व्याख्येयम् । अवरक्षणगतिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादान भागवृद्धिष्विति धातोः । स्वाम्यवाप्तिपदाभ्यामैश्वर्यप्राप्त्योरभिधानात् । ऐश्वर्यार्थकात् प्राप्त्यर्थकादवतेः कर्तरि अर्तिसृधुधमिअसिअवितृभ्योऽनिरित्यौणादिके अनिप्रत्यये वकरस्थाकारलोपे चावनिरिति रूपम् । तथाचाशेषद्रविणस्यावनिरीश्वरः स्वामीत्यर्थः । तथा अशेषद्रविणस्यावनिरवाप्ताशेषद्रव्यप्राप्तिमानित्यर्थो द्रष्टव्यः । सु इत्यस्यार्थः सुखादय इति । पार इत्यस्यार्थः संसृतेः पार इति । इन्द्राय साम गायतेति । समाख्यानात्सोमेत्यध्याहार्यमित्याशयेन साम गायत इति । अत्र कर्त्रपेक्षायां सामगानस्योद्गातृकार्यत्वादाह । हे उद्गातार इति । सामेत्यध्याहारो न कर्तव्य इत्याशयेन गायतेत्यस्यार्थमाह । यद्वा गायतिरिति शब्दमात्रार्थः । गौ शब्द इति धातोरित्यर्थः । अत्र हे ऋच इत्यध्याहारः । तस्मै तदर्थमिति तथाच हे ऋत्विजः रायो वनित्वादिगुणवान् यस्तस्मा इन्द्राय तादृशेन्द्रार्थं तादृशेन्द्रमुद्दिश्य गायत स्तुतिरूपान् शब्दान् कुरुत स्तोत्रं कुरुतेत्यर्थ इति योज्यम् । कंप इतीति । अशेषग्रहे

अशेषरूपार्थस्वीकारे लज्जादौ चार्थे हरिणा व्यासेन कम्पो ऋक्संहितोदित इत्यर्थो द्रष्टव्यः ॥ १० ॥ ८ ॥ ४ ॥

## पदार्थदीपिका

दस्यतिर्भेदनार्थ इति । दस भेदन इति धातोः व्याख्यानादिति भावः । तत इति । इषुयुधि इन्धिदसिश्याधूसूभ्योमगिति कर्तरि मक् प्रत्यय इति भावः । अरिरुत अरयोऽपीति । जात्याख्यायामेकवचनमिति भावः । कृष्टयः प्रजा इति । पञ्चविंशतिसंख्याकेषु मनुष्यनामसु पठितत्वेऽपि कृष्टिशब्दस्य मनुष्यप्रजाशब्दयोरेकार्थत्वविवक्षयैवं व्याख्यानम् । वोचेयुरिति । वचपरिभाषण इत्यस्मात् आशीर्लिङि झेर्जुसादेशः । लिङ आशिष्यङ् इति अङ् प्रत्ययः । वच उमित्युमागमः । गुणः । किदाशिषीति यासुट् । छन्दस्युभयथेति लिडादेशस्य सार्वधातुकत्वात् लिङस्सलोपोऽनन्त्यस्येति सकारलोपः । यासुडिति ज्ञेयम् ॥ ६ ॥

वीर्येति । विशब्दस्य वीर्यवाचित्वं नामैकदेशन्यायेन द्रष्टव्यम् । अकार इति । निर्वचनत्वादिति भावः । नृमादनं माद्यन्ते अनेनेति करणाधिकरणयोश्चेति ल्युट् । मदकरमिति तु तात्पर्यम् । बाहुलकत्वात् कर्तर्येव वा ल्युटमाश्रित्येदं बोध्यम् । पतयदुत्पतयन्तमिति । पद गताविति कथादिष्वदन्तेषु पठितस्य चौरादिकस्य णिचि अतो लोप इत्यल्लोपः । अल्लोपस्य स्थानिवत्वात् उपधाया वृध्यभावः । लटः शत्रादेश इति भावः । मदात् मदमुत्पाद्येति । ल्यप्लोपनिमित्ता पञ्चमीति भावः । मन्दयति सखायमिति । अत्रान्यस्य समासप्रापकस्यासम्भवात् आह ॥ मयूरव्यंसकादिदर्शनादिति । तथा च मयूरव्यंसकादित्वात्तत्पुरुषत्वे राजाहःसखिभ्यष्टजिति तत्पुरुषात् विहितः टच् युक्त इति भावः । तत्सखीनामिति । अपीतसोमानामिति भावः । स्वोदर इति शेष इति । हे यजमान आहरेत्यपव्याख्याप्रत्याख्यानाय स्वोदर इति भाष्ये उच्यत इत्यर्थः । ईमित्यनूद्येति । ईमिति निपातनादिदंशब्दार्थ इत्यपव्याख्याप्रत्याख्यानायेति भावः । प्रमाणविरुद्धमिति । सोमपानस्य परमेश्वरयोगार्थतायाः प्रमाणविरुद्धत्वादिति भावः । सम्बुद्धितयेति । न चैवं पदात् परत्वात् अपादादित्वाच्च शवशयस्य निघातः स्यादिति वाच्यम् । व्यत्ययत्वेन समासत्वेन परादिच्छन्दसि बहुलमिति वा पूर्वपदान्तोदात्तत्वसम्भवादिति भावः ॥७॥

अपरिमितनामेति । शतं सहस्रमिति बहुनामसु पाठादिति भावः । क्रतुर्मानमिति । प्रज्ञानामसु पाठादिति भावः ॥ अस्यैनमिति । पूर्वप्रकृतस्यैव सोमस्य परामर्शेन पचि इदमोऽन्वादेशे अनुदात्तस्तृतीयादावित्यशादेशोऽपि व्यत्ययेन सर्वानुदात्ताभाव इति भावेन भाष्येऽपि

अन्तादेशादेनमित्युक्तमिति भावः । पीत्वेति । पिबतेः क्त्वाप्रत्यये घुमास्थेति इत्त्वमिति भावः । घनोऽभेद्य इति । काठिन्यरूपायां मूर्तावभिधेयायां हन्तेरप्रत्ययस्य घनादेशस्य च विधानादिति भावः । तमोभिरिति भाष्यं तात्पर्यकथनमिति भावः । प्रमाणविरुद्धमिति । स्वत एवाज्ञानप्रतिहतिशून्यस्य परमात्मनः सोमपानोपन्नशक्त्या ज्ञानशून्यत्ववर्णनमयुक्तमिति भावः । असह्यमिति । आहिताग्न्यादीनामाकृतिगणत्वात् बहुव्रीहौ प्रत्ययाप्रत्ययान्तस्यापि परनिपात इति भावः । यद्वैतदस्वरसादाह । तमसोऽसह्य इति । कर्तृकर्मणोः कृतीति प्राप्तषष्ठ्याः कृत्यानां कर्तरि वेति विकल्पविधानात् । प्रतिपदविधाना च षष्ठी न समस्यत इति व्यक्तमिति निषेधस्य नायं विषय इति ध्येयम् । निर्वक्तीति । तृत्यजिनीपदिमदिउदीति वृत्तेरकच् प्रत्ययविधानात् इति भावः । वाजेष्वन्नेष्विति । अष्टाविंशतिसंख्याकेष्वन्ननामस्वंधः वाजः पाज इति पाठादिति भावः ॥ ८ ॥

सातय इति । उदात्त इत्यनुदात्त ऊतियूतिजूतिसातिहेतिकीर्तयश्चेति क्तिनो निपातनात् । युद्धेष्विति । रण इत्यादिषु षट्चत्वारिंशत्सु युद्धनामस्वपि पाठादिति भावः ॥ ९ ॥

ऐश्वर्यकर्मण इति । स्वामित्वार्थकादित्यर्थः । अनिप्रत्यय इति । औणादिक इति भावः । यद्वेति । एवं सति न सामपदाध्याहार इति भावः । अत्रापि हे ऋत्विज इति शेषः ।

एवं तर्हि पृथिवीभिन्नत्वात् भगवतो नावनिशब्दार्थता इत्यतो गौण्या वृत्या तामुपपादयति । अवनिरिवेति अवतेरित्यादि । ननु गौणीं वृत्तिमाश्रित्यैव भगवत्यवनिशब्दस्य व्युत्पादितत्वात् पुनरत्रावनिशब्दस्य योगव्युत्पादनमयुक्तम् । न च परमात्मन्यवनिशब्दस्य प्रकारान्तरेण घटनार्थं वर्णकान्तरमेतदिति वाच्यम् । व्याख्यानान्तरत्वसूचकपदादेरभावेन तदसंभवादिति चेन्न, साधुत्वात् व्याख्यानमात्रस्यैवात्राभिप्रेतत्वेनाविरोधात् । वस्तुतः प्रसिद्धावन्यामप्यवनिशब्दप्रवृत्तौ किं निमित्तं येन तत्सारूप्यात् भगवत्यवनिशब्दप्रयोग इत्यतः तन्निर्वचनमेवेदमिति नासङ्गतिरिति ध्येयम् ॥१०॥

## टीकाविवृतिः

सप्तमोवर्गः ॥ उतनः ॥ भेदनार्थ इति ॥ दसुचेत्युपक्षयार्थे पठितस्य धातोरन्तर्णीतण्यर्थाद्भेदनार्थतेति भावः ॥ मप्रत्यय इति ॥ इषियुधीन्धिदसिश्याधूसूभ्योमगित्यनेनेत्यर्थः । वोचेयुरिति बहुवचनान्तक्रियापदानुरोधात्कृष्टय इति विशेष्यानुरोधाच्चारिरिति श्रौतं पदं बहुवचनान्तत्वेन व्याख्यातं भाष्ये तत्संवादयति ॥ अरिरुतेति ॥ उतशब्दान्मित्रोदासीनाः

समुच्चीयन्ते ॥ कृष्टयःप्रजा इति ॥ कृष्टयः चर्षणय इति मनुष्यनामसुपाठादित्यर्थः ॥ सुभगानिति ॥ इन्द्रस्येत्युत्तरवाक्यस्थमत्रापिसम्बन्धनीयम् । तवानुग्रहेणैव नःसुभगानिति वोचेयुरित्यर्थः ॥ वोचेयुरिति ॥ वचधातोर्विधिलिङि छान्दसे अदादित्वप्रयुक्त शब्लुगभावे यासुडादौ अङभावेपि छान्दसेच वच उमित्युमागमे आद्गुण इति गुण इति भावः ॥ ६ ॥

एमाशुम् ॥ विशब्द इति ॥ विट्विज्मनेति बलनामसुपाठात्पृषोदरादित्वेनटकारलोपादिति शेषः ॥ आशुं क्षिप्रं वेगवन्तमिति ॥ अश्नोतेः कृवापाजिमिस्वदिसाध्यशूभ्य उणित्युण् । आशुर्व्रीहौचसत्वरे इति विश्वकोशादिति भावः । सोमरसस्य वेगवत्त्वं कुत इत्यत आह ॥ द्रवत्वादिति ॥ द्रवद्द्रव्यत्वात् । द्रवत्वयुक्तद्रव्यस्य प्रतिबन्धकाभावेऽधोदेशे वेगदर्शनादिति भावः ॥ पतयदुत्पतयन्तमिति ॥ लिङ्गव्यत्ययोतिशयार्थः । चुरादावदन्तेषु पतगतौवेति पाठाण्णिच्यलोपस्य स्थानिवत्त्वान्नोपधावृद्धिरिति भावः । मदादुत्पतनादिक इत्यत्र मदादिति पञ्चमी ल्यब्लोपे कर्मण्यधिकरणे चेति वार्तिकेन जातेत्याशयेनाह ॥ मदात् मदमुत्पाद्येति ॥ मदिङ्स्वपनेजाड्येमदेमोदेश्रुतौगताविति बोपदेवधातुपाठात् जाड्यार्थकमदेरिदित्त्वान्नुमागमे णिजन्ताल्लटः शत्रादेशे मन्दयदिति रूपम् । तस्य सखि शब्देन द्वितीयान्तेन गम्यादित्वात्समासे कृष्णश्रितादिशब्दवत्सखिमन्दयदिति भावं नतु मन्दयत्सखमित्यत आह ॥ मयूरव्यंसकादिदर्शनादिति ॥ लक्षणेनाप्राप्तपूर्वभावानामेतादृशानां मयूरव्यंसकादीनां दर्शनादित्यर्थः । मयूरव्यंसकादेराकृतिगणत्वादस्यापि तद्गतत्वेन ज्ञेयत्वादिति भावः ॥ तत्सखीनामिति ॥ अपीतसोमत्वादिति भावः । हेयजमान आभर आहरेति व्याख्यानेतु यजमानपदाध्याहारो हकारस्य भकारादेशश्चाङ्गीकार्यः स्यादिति भावेन भाष्ये स्वोदर इत्यध्याहृतमित्याह ॥ स्वोदर इति शेष इति ॥ स्वोदरे हृदिवेत्युक्त्यासोमरसस्योभयत्रान्वयप्रतीतावाह ॥ इति व्यवस्थितोविकल्प इति ॥ सोमशब्देन मनोग्रहणे हृदीत्यध्याहृतेनान्वयः । सोमरसग्रहणे स्वोदर इत्यनेनेति भावः ॥ तदुद्रेकेणेति ॥ सोमरसपानजबलातिशयेनवा मनसश्चंचलत्वेनेश्वरैक निष्ठत्वाभावान्मनोजन्याहंकाराद्युद्रेकेणवेत्यर्थः ॥ प्रमाणविरुद्धमिति ॥ परास्यशक्तिर्विविधैव श्रूयते स्वाभाविकीति श्रुतिविरुद्धं परमेश्वरस्य वेगकारणशक्तिसिद्ध्यर्थं सोमपानमिति व्याख्यानमिति भावः । नचाष्टमिकः आमन्त्रितस्येति निघातः शङ्क्यः । तस्य संज्ञापूर्वकोविधिरनित्य इत्यनित्यत्वेनाभावात् । अनुदात्तं सर्वमपादादावित्यस्यानुवृत्तेरनुदात्तत्वस्य च नीचैरनुदात्त इति संज्ञात्वोक्तेः । किंतु बहुव्रीहित्वाद्बहुव्रीहौ प्रकृत्या पूर्वपदमित्याशुशब्दस्य प्रकृतिस्वरेणोणन्तत्वात्परपदस्य वर्जमानस्वरेणानुदात्तत्वे उदात्तादनुदात्तस्य स्वरित इति भावः ॥ ७ ॥

अस्यपीत्वा ॥ अपरिमितनामेति ॥ शतंसहस्रंसलिलमिति बहुनामसु पाठादितिभावः ॥ क्रतुर्ज्ञानमिति ॥ क्रतुरसुर्धीरिति प्रज्ञानामसु पाठादिति भावः । अस्यपीत्वेत्यत्र छान्दसत्वेन नलोकाव्ययेति निषेधाभावात्कर्मणिषष्ठीतिभावेन भाष्ये पूर्वप्रकृतसोमविषयकत्वेनैनमिति व्याख्यातमित्याह ॥ अस्यैनमिति ॥ घनः सान्द्रे दृढे मेघे विस्तारे लोहमुद्गर इति विश्वकोशं मनसि निधायाह ॥ घनोऽभेद्य इति ॥ मूर्तौघन इति सूत्रेण हन्तेरप् प्रत्ययो घनादेशश्च काठिण्यार्थे निपात्यते । मूर्तिःकाठिण्यकाययोरित्यमरः । मूर्तावित्यस्योपलक्षणार्थत्वादभिधानोक्तार्थान्तर-परत्वाद्दृढार्थत्वेनाभेद्यार्थको घनशब्द इतिभावः ॥ प्रमाणविरुद्धमिति ॥ निरनिष्टोनिरवद्य इति सदाऽज्ञानादिदोषशून्यत्वोक्तेः सोमपानसामर्थ्येनाज्ञानप्रतिहतिः प्रमाणविरुद्धेति भावः । असह्यं तमो यस्येत्यत्राहिताग्न्यादिराकृतिगणत्वेन समाधानमाश्रयणीयमित्यरुचेराह ॥ तमसोसह्य इति वेति ॥ कर्तुस्तमसःसोढुमशक्य इत्यर्थः । तमसःकर्तृत्वेन कर्तृकर्मणोःकृतीति कृतायाः षष्ठ्याःप्रतिपद-विधानाषष्ठी न समस्यत इत्येतदपवादभूतकृद्योगलक्षणा षष्ठी समस्यत इति वार्तिकेन समासः । कृत्यानांकर्तरिवेति तु न स्वतन्त्रषष्ठीविधायकम् । कर्तृकर्मणोरिति प्राप्तषष्ठ्याः पक्षे निषेधनादिति भावः ॥ वृत्रशब्दमिति ॥ वृञ्वरणे इत्यतोऽदादिभ्यश्छन्दसीति त्रप्रत्यये बाहुलककित्वाद्गुणोनेति भावः ॥ यदावृणोदिति ॥ सर्वजीवान् यद्यस्मादावृणोत्तमःतत्तस्माद्वृत्रस्य तमसःवृत्रत्वं वृत्रशब्द-वाच्यत्वमिति श्रुत्यर्थः ॥ ह्येवशब्दाविति ॥ हिशब्द एवशब्दश्चेत्यर्थः । वाजः पाज इत्यन्ननामसु पाठादाह ॥ वाजिनमन्नवन्तमिति ॥ इनिप्रत्ययस्य भूमनिन्दाप्रशंसास्वित्युक्तेरतिशयार्थ-त्वाद्दानेनैवान्नस्यातिशयितत्वमित्याशयेन प्रवृत्तं भाष्यं तात्पर्यार्थत्वेन योजयति ॥ अन्नदं नरमिति यावदिति ॥ वाजेष्विति बहुवचनतात्पर्यमाह ॥ सर्वेति ॥ भोगेतिलाक्षणिकार्थोक्तिः ॥ प्राव इति ॥ अवतेर्लङ् । महाधने वाजे इति संग्रामनामसु पाठादाह ॥ वाजिनं योद्धारमिति ॥ ८ ॥

तंत्वा । सातयइति । षणुदान इत्यत औणादिके क्तिचि जनसनखनामित्यात्वे निष्पन्नः सातिशब्दः सातिर्दानेवसानेचेति विश्वोक्तेर्दानार्थः । अस्माकं धनानां दानायेत्यक्षरार्थः । धनलब्धय इति तु तात्पर्यार्थो ज्ञेयः । वाजयाम इति । वाजवच्छब्दाद्युद्धवदर्थात्करोतीत्यर्थे तत्करोति तदाचष्ट इति णिचि णाविष्टवत्प्रातिपदिकस्येतीष्ठवद्भावे विन्मतोर्लुगिति मतुपो लुकि टेरिति टिलोप इति भावः । बाह्ये स्पष्टमिति । त्वां प्रसिद्धधनदानाय अर्थात्तत्प्राप्तये अस्मद्बाह्य शत्रुभिः सह योधयाम इति । अस्माकं ज्ञानप्रसिद्धधनप्रतिबन्धकोभयविधवैरिणो हताश्चेत्तर्हि त्वद्दत्तज्ञानादिकमस्मासु स्थिरं भविष्यतीति भावः ॥ ९ ॥

योरायः । अवनिशब्दस्य क्षितिरवनिरिति पृथिवीनामपाठाद्रूढार्थत्वमाश्रित्य विष्णौ गौण्यावृत्त्या योजयति । अवनिरिवेति । गौणवृत्तेर्जघन्यत्वादरुच्या योगवृत्तिमाह । अवतेरिति । वा

शब्दस्याऽऽवृत्त्याऽवतेरित्यतः पूर्वमपि सम्बन्धः । वा अथवा स्वामित्वार्थकात् प्राप्त्यर्थकाद्वा अवतेः अर्तिसृधृधम्यश्यवितॄभ्योऽनिरिति कर्तर्यनिप्रत्यय इत्यर्थः । भूमौ तु रक्षणाद्यर्थादवतेः कर्मण्यनिप्रत्ययो ज्ञेयः । सुपूजायां भृशार्थेऽनुमतिकृच्छ्रसमृद्धिष्विति विश्वोक्तेः सु शब्दः समृद्ध्यर्थः सर्वसमृद्धिषु सुखसमृद्धेर्मुख्यत्वात्पृषोदरादित्वेन ख शब्दलोपाद्वासुखार्थः सन् लक्षणया तद्दाने वर्तते । पार इत्यत्र योग्यतया संसृतेः सम्बन्ध इत्यभिप्रेत्याह । सुपार इति । तस्मा इन्द्रायेति । इन्द्रं प्रसन्नीकर्तुमित्यर्थः । क्रियार्थोपपदस्य च कर्मणिस्थानिन इति सूत्रेण क्रियार्था याक्रिया तद्वाचकं तुमुनन्तमप्रयुज्य मानं यदुपपदं तत्कर्मणि चतुर्थीविधानादिति भावः । गायतेति शब्देन गायन प्रतीतेस्तद्योग्यकर्तारमध्याहरति । हे उद्गातार इति । उद्गातुरेकत्वाद्गायतेति बहुवचनानुपपत्तेराह । यद्वेति । कैगैरैशब्द इति धातोरिति भावः । पूर्वपक्षे आदरादुद्गातृगणापेक्षया वाबहुवचनं बोध्यम् । अत्रापि हे ऋत्विज इति शेषः । कंपार्थ इति । स्वरितस्योदात्तानुदात्तसमाहाररूपस्य त्रिचतुर्मात्राकालेनोच्चारणं कम्पः । सोपि त्रिविधः एककम्पोद्विकंपस्त्रिकम्प इति ॥ १०,८,४ ॥ अष्टमोवर्गः ।

## ऋक्संहिता पदपाठसहिता

(४१) आ त्वेता निषीदतेन्द्रमभि प्रगायत ॥ सखायःस्तोमवाहसः ॥ १ ॥

(प०) आ । तु । आ । इत । नि । सीदत । इन्द्रम् । अभि । प्र । गायत ॥ सखायः । स्तोमऽवाहसः ॥ १ ॥

(४२) पुरूतमं पुरूणामीशानं वार्याणाम् ॥ इन्द्रं सोमे सचा सुते ॥ २ ॥

(प०) पुरुऽतमम् । पुरूणाम् । ईशानम् । वार्याणाम् । इन्द्रम् । सोमे । सचा । सुते ॥ २ ॥

(४३) सघानो योग आभुवत्सराये सपुरंध्याम् ॥ गमद्वाजेभिरास नः ॥ ३ ॥

(प०) सः । घ । नः । योगे । आ । भुवत् । सः । राये । सः । पुरम्ऽध्याम् ॥ गमत् । वाजेभिः । आ । सः । नः ॥ ३ ॥

(४४) यस्य संस्थे नवृण्वते हरी समत्सु शत्रवः ॥ तस्मा इन्द्राय गायत ॥ ४ ॥

(प०) यस्य । सम्ऽस्थे । न । वृण्वते । हरी इति । समत्ऽसु । शत्रवः ॥ ४ ॥

(४५) सुतपाव्ने सुता इमे शुचयो यन्ति वीतये ॥ सोमासो दध्याशिरः ॥ ५, ९ ॥

(प०) सुत॒ऽपा॑व्ने । सु॒ताः । इ॒मे । शुच॑यः । य॒न्ति॒ । वी॒तये॑ ॥ सोमा॑सः । दधि॑ऽआशिरः ॥ ५, ९ ॥

## ऋग्भाष्यम्

सुपूर्णानां पूर्णतमं वरेण्यानामधीश्वरम् ।
सुते सोमे सुखेनैव सचागायततं प्रभुम् ॥ २ ॥
मुक्तौ योगायासमन्ताद्भवेन्नोघोवधारणे ।
स एव भगवान्ज्ञानवित्ताय सच बुद्धिगः ।
बुद्धिः पुराश्रयत्वेन पुरंधिः पत्न्यथापि वा ।
पत्न्यर्थत्वे तु तादर्थ्यं सोन्नैः सह न आव्रजेत् ॥ ३ ॥
यस्य स्थितौ न वृणुते हर्यग्रमपि शत्रवः ।
मनः पुरोवा विषयहरणान्मन एव च ।
बुद्धिश्च हरिशब्दोक्ते तमआदीनि शत्रवः ॥ ४ ॥
सोमपे शुचयः सोमाः प्राप्त्यै दधिविमिश्रिताः ।
मनांसि ध्यानयुक्तानि वा यांति हरये सदा ॥ ५,९ ॥

## ऋग्भाष्यटीका

आत्वेता । दशर्चमैन्द्रं सूक्तम् । हे सखायः स्तोमवाहसः स्तोमाः सामविशेषाः । तान्वहन्तीति स्तोमवाहसः । छान्दसो ह्रस्वः । उद्गातार इति यावत् । एत आगच्छत । आनिषीदत आगत्योपविशत । इन्द्रमभिप्रगायतच । अगमननिषदनयोरित्थंभावस्य सूचकस्तुशब्दः । स्पष्टत्वादृचो न व्याख्यानं कृतम् । एवमन्यत्रापि ॥ १ ॥

पुरूतमम् । सुपूर्णानाम् । पुरूणां सुपूर्णानां मध्ये पुरूतमं पूर्णतमम् । वार्याणाम् वरेण्यानाम् उपादेयानां वस्तूनाम् । ईशानमधीश्वरमिन्द्रं तं प्रभुं सोमे सुते सति । सचा सुखेनैव मनः प्रसादपूर्वकं गायतेत्यनुवृत्त्या सम्बन्धः । अत्र पुरूतममिति तमप्छान्दसः । व्यत्ययेनोदात्तत्वम् । यद्वा तमु अभिकाङ्क्षायामित्यस्य कर्मणि रूपमेतत् । पुरुभिः पूर्णैस्तम्यत इति पुरुतमस्तम् । पुरूणां वार्याणामिति सामानाधिकरण्यम् ॥ २ ॥

सघ ॥ मुक्तौ ॥ अत्रघशब्दोऽवधारणे वर्तते । ततश्च सघ स एव भगवान्नोऽस्माकमासमन्ताद्योगे मुक्तौ सायुज्यलक्षणाय योगाय भुवत् अभवत् विकरणव्यत्ययात् । भवेत्

कालव्यत्ययात् । स एव राये अध्यात्मं ज्ञानवित्ताय भुवत् बहिर्व्यक्तम् । स एव च पुरंध्यां बुद्धौ सर्वेषां बुद्धिगो वर्तते । कथं बुद्धिः पुरन्धिरित्यत आह ॥ बुद्धिरिति ॥ पुरं शरीरं धीयतेऽस्यामिति पुरन्धिः । कर्मण्यधिकरणे चेति किः उपपदस्य नुमागमश्छान्दसः । वाह्ये व्याचष्टे ॥ पत्नीति ॥ अथवा पत्न्यपि पुरन्धिरित्यन्वयः । तन्नामसु पाठात् । तत्र कथं सप्तम्यन्वय इत्यत आह ॥ पत्न्यर्थत्व इति ॥ पुरन्धिशब्दस्य पत्न्यर्थत्वे तु योग इतिवत्सप्तम्यास्तादर्थ्यमर्थः । पुरन्ध्यां पत्न्यर्थं भुवदिति । किंच स इन्द्रो वाजेभिः वाजैरन्नैः सह । अन्नानि दातुमिति यावत् । नोस्मान्प्रत्यागमत् आव्रजेत् ॥ ३ ॥

यस्य संस्थे । यस्य स्थितौ । यस्येन्द्रस्य संस्थे घञर्थे कविधानम् । स्थितौ सत्याम् । यस्मिन्निन्द्रे रथस्थिते सतीति यावत् । समत्सु युद्धेषु । शत्रवो हरी अश्वौ हर्यग्रमपि न वृण्वते नवृणते । अश्वाग्रमपि न प्राप्नुवन्ति । तस्मा इन्द्राय गायत । अध्यात्मं हरी इत्येतस्यार्थमाह ॥ मनः पुरोवेति ॥ अत्र मनश्शब्देन बुद्धेरप्युपलक्षणम् । हरिशब्दो मनोबुद्ध्योः कथं वर्तत इत्यत आह ॥ विषयेति ॥ एवशब्दो निर्वचनस्फुटतायाम् । शत्रूनाह ॥ तम आदीनीति ॥ ततश्चैवं योजना । यस्येन्द्रस्य संस्थे यस्मिन्परमेश्वरे विशेषतो भक्तशरीरे सन्निहिते सति । समत्सु ज्ञानयुद्धेषु शत्रवः तमःप्रभृतयो हरी मनोबुद्ध्योः पुरो न वृण्वते । मनोबुद्धी नाज्ञानाद्यावृते भवत इति ॥ ४ ॥

सुतपाव्ने ॥ सोमपे । शुचयः शुद्धाः सुता अभिषुता दध्याशिरो दध्याशिराः दधिविमिश्रिताः आशिरशब्दोमिश्रितार्थ इत्येके । अन्येत्वहोरात्रान्तरितं दध्याशिरं ततश्चाशिरं दाधयेषु ते दध्याशिराः तस्य तात्पर्यं दधिविमिश्रिता इति । इमे सोमासः सोमाः वीतये वीतिर्गत्यादौ पठ्यते । यजमानस्येन्द्रप्राप्तौ सुतपाव्ने सोमपे आतो मनिन् क्वनिब्वनिपश्चेति वनिप् । इन्द्राय यन्ति यान्ति । गत्यर्थकर्मणीति चतुर्थी । अध्यात्मन्तु सुता वेदवाक्यसङ्घर्षवन्तः । शुचयो रागादिविधुराः दध्याशिरः आदृगमहनजनः किकिनौ लिट् चेति किप्रत्ययः । दधि परमेश्वरे धारणम् । ध्यानमिति यावत् । तेनयुक्ताः सोमाः मनांसि सुतपाव्ने मनसा सेव्याय हरये सदा यान्ति वीतये तत्प्राप्त्यर्थमिति ॥ ५,९ ॥

## मन्त्रार्थमञ्जरी

अथ पञ्चममपि दशर्चं वर्गद्वयात्मकमैन्द्रं सूक्तम् ॥ (हे) सखायः, सखिभूताः । स्तोमवाहसः, स्तोमान्सामविशेषान्वहन्तीति स्तोमवाहाः, 'कर्मण्यण्' इत्यण्प्रत्ययः, 'अत उपधायाः' इति वृद्धिः, स्तोमवाहा एव स्तोमवाहसः, आज्जसेरसुकि 'स्तोमवाहासः' इति वाच्ये छान्दसो ह्रस्वः,

उद्गातार इति यावत् । आ इत, आगच्छत, आङ्पूर्वादिणः मध्यमपुरुषबहुवचनम्, संहितायां दैर्घ्यमाधिक्ये । आ नि षी (सी)दत आगत्योपविशत, 'व्यवहिताश्च' इत्याङोऽन्वयः ॥ इन्द्रम् अभि प्र गायत (तु) (च), आगमननिषदनयोर्गानरूपक्रियायामित्थंभावसूचकस्तुशब्दः ॥ स्पष्टत्वादियमृक् भाष्यकृता न व्याख्याता, टीकायां तु व्याख्याता ॥ १ ॥

पुरूणाम्, सुपूर्णानां मध्ये । पुरुतमम्, पूर्णतमम्, 'पुरूणाम्' इत्युक्त्यैवातिशयार्थलाभात्तमप् छान्दसः, यद्वा– 'तमु (अभि) काङ्क्षायाम्' इति धातोः कर्मण्यकारप्रत्यये 'तमम्' इति रूपम्, पुरुभिस्तम्यते काङ्क्ष्यत इति पुरुतमस्तम्, 'पुरूणाम्' इत्येतत् 'वार्याणाम्' इत्यस्य विशेषणम् । वार्याणाम्, वरणीयानामुपादेयानां वस्तूनाम् । ईशानम्, अधीश्वरम् । इन्द्रम् । सोमे । सुते, अभिषुते सति । सचा, सुखेनैव, मनः प्रसादपूर्वकम् । (गायत) इत्यनुवृत्त्या योज्यम् ॥ २ ॥

घोऽवधारणे ॥ सः घ, स एव परमेश्वरः, दीर्घः प्राग्वत् नः, अस्माकम् । आ, समन्तात् । योगे, योगाय, सायुज्यलक्षणमुक्तये । भुवत्, अभवत्, व्यत्ययेन शविकरणम्, अडभावश्छान्द-सत्वात्, विकरणस्य 'सार्वधातुकमपित्' इति ङित्त्वेन 'क्ङिति च' इति गुणाभावे 'अचिश्नुधातु' इत्युवङादेशे 'भुवत्' इति रूपम् । सः (एव) । राये, ज्ञानद्रविणरूपधनाय । (भुवत्) सः (एव) पुरंध्याम्, पुरं शरीरं धीयतेऽस्यामिति पुरंधिर्बुद्धिः, 'कर्मण्यधिकरणे च' इति धोः किः, 'अतो लोप इटि च' इत्याकारलोपः, पूर्वस्य मुमागमश्छान्दसः, सर्वबुद्धौ वर्तत इत्यध्यात्ममर्थः, बाह्ये तु– पुरंधिः पत्नी, तन्नामसु पाठात् 'योगे' इत्यत्रेव सप्तमी तादर्थ्ये, स एव च पत्न्यर्थम् । (भुवत्) अभवदित्यर्थः । किं च, सः, इन्द्रः । वाजेभिः वाजैरन्नैः सह, अन्नानि दातुमिति यावत् । नः, अस्मान्प्रति । आगमत्, आगच्छेत्, लिङर्थे लुङ्, 'च्लि लुङि' इति च्लिप्रत्ययः 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इति च्लेरङ्, अडभावश्छान्दसः, 'इतश्च' इतीकारलोपस्तिपः, 'व्यवहिताश्च' इत्याङोऽन्वयः ॥ ३ ॥

यस्य, इन्द्रस्य । संस्थे, समपूर्वस्य तिष्ठतेः 'घञर्थे कविधानम्' इति भावे कप्रत्ययः, आल्लोपः, स्थितौ सत्यामित्यर्थः । यस्मिन्निन्द्रे रथे स्थिते सतीति यावत् । समत्सु, युद्धेषु । शत्रवः । हरी, अश्वौ, अश्वाग्रमपि । न वृण्वते, न प्राप्नुवन्ति । तस्मै इन्द्राय गायत' इति प्राग्वत् । इन्द्राश्वानां सहस्रत्वेऽप्यग्रगामित्वेन प्राधान्याद्द्वयोरेवोक्तिः । अध्यात्मं तु– यस्य, इन्द्रस्य । संस्थे, यस्मिन्परमेश्वरे विशेषतो भक्तशरीरे संनिहिते सति । समत्सु, ज्ञानयुद्धेषु । शत्रवः अज्ञानादीनि । हरी, विषयहरणाद्धरिशब्दोक्त मनोबुद्धी । न वृण्वते, मनोबुद्धी नाज्ञानाद्यावृते भवतः इति ॥४ ॥

शुचयः, शुद्धाः । सुताः, अभिषुताः । दध्याशिरः, दध्याशिराः, 'आशिरशब्दो मिश्रितार्थः' इत्येके, 'अहोरात्रान्तरितं दधि आशिरम्' इत्यन्ये, ततश्चाशिरं दधि येषु ते दध्याशिराः, दधिमिश्रिता इति यावत् । इमे सोमासः, सोमाः । वी तये, प्राप्तये, 'वी गतौ' इति धातुपाठात्, यजमानस्येन्द्रप्राप्त्यर्थम् । सुतपात्रे, सोमपे, 'पा पाने' इत्यतः 'आतो मनिन्क्वनिब्वनिपश्च' इति वनिप्प्रत्ययः, इन्द्राय । यन्ति, यान्ति, 'इण् गतौ' 'गत्यर्थकर्मणि' इति चतुर्थी ॥ अध्यात्मं तु सुताः, वेदवाक्यसङ्घर्षवन्तः । शुचयः, रागादिविधुराः । दध्याशिरः, दध्याशिराः, दधि हरौ धारणम्, ध्यानमिति यावत्, तेन मिश्रिताः, 'डुधाञ् धारणे' इत्यतः 'आदृगमहनजनः किकिनौ लिट् च' इति किप्रत्यये तस्य लिड्वद्भावे 'लिटिधातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इति पूर्वस्याभ्यासत्वे 'ह्रस्वः' इति सूत्रेणाभ्यासस्य ह्रस्वत्वे धातोराकारस्य 'अतो लोप इटि च' इति लोपे 'दधि' इति रूपसिद्धेः । इमे सोमासः, सोमाः मनांसि, सोमपदेन मनोग्रहणे एकदैवत्यत्वयुक्तिः प्रागेवोक्ता । सुतपात्रे, मनसा सेव्याय हरये । वीतये, तत्प्राप्त्यर्थम् । (सदा) यन्ति, 'इण् गतौ' 'इणो यण्' ॥ ५ ॥ इति नवमो वर्गः ॥ ९ ॥

## पदार्थप्रकाशिका

आत्वेता निषीदत । आत्वित्यनुक्रमणिकायां दशेन्द्रमिति पूर्वोक्तमनुवर्तते । तथाच त्वेत्यादि दशर्चमैन्द्रं सूक्तमित्यनुक्रमणिकार्थ इत्यभिप्रेत्याह । दशर्चमिति । असमस्तव्याख्यान-प्रतिज्ञासूचनाय स्पष्टार्थत्वाच्च शिष्याणां बुद्धिपरीक्षायै चैतद्वचो भगवत्पादैरव्याख्यातत्वात् सर्वज्ञकल्पाष्टीकाकाराः स्वयं व्याख्यान्ति । हे सखाय इत्यादिना । वहन्तीति । गानार्थं धारयन्तीत्यर्थः । ननु स्तोमवाहशब्दात् अकारान्तात् जसि जकारलोपे आज्जसेरसुगित्य-कारान्ताज्जसेरसुगागमविधानात् जसोऽसुगागमे ककारलोपे स्तोमवाह असु इति जाते प्रथमयोः पूर्वसवर्ण इति सवर्णदीर्घे स्तोमवाहास् इति जाते तस्य रुत्वे विसर्गे च सति स्तोमवाहा इति स्यादित्यत आह छान्दसो ह्रस्व इति । ह्रस्व इत्यनेन अतोगुणे हकारस्थस्याकारस्य पररूपमभिप्रैति । तथाच पररूपस्य छान्दसत्वात् स्तोमवाहस इति युक्तमित्यर्थः । स्तोमवाहस इत्यस्य फलितार्थमाह । उद्गातार इति यावदिति । आत्वेतेत्यत्र आ तु आ इत इति पदच्छेदः । तत्रैकस्या इत्यस्य इतेत्यनेन सम्बन्ध इत्यभिप्रेत्याह एतेति । आ इतेत्यत्राकारेकारयोर्गुणे एतेति भवति इत्याशयेन एतेत्युक्तम् । द्वितीयस्य निषीदतेत्यनेन सम्बन्ध इत्याशयेनाह । आनिषीदतेति । आगमननिषीदनयोः पौर्वापरीभावाभिप्रायेणाह । आगत्योपविशेति । इत्थंभावस्येति । शीघ्रमागच्छतेत्यागमने शैघ्र्यरूपेत्थंभावस्यात्र सावधानतयानिषीदतेत्येवमादिरूपेण निषीदने

इत्थंभावस्य सूचकस्तुशब्द इत्यर्थः । अत एवोभयत्रेत्थंभावस्य अनेकविधत्वादित्थंभावस्य सामान्येनोक्तिरिति भावः । एवमन्यत्रापीति । सेमन्नस्तोममागहीत्यादिऋचोपि यद्यव्याख्यानं न कृतं तत् स्पष्टार्थत्वाभिप्रायेणेति ज्ञातव्यमित्यर्थः ॥ १ ॥

पुरूतमं पुरूणाम् । भाष्ये सचेति अनूद्य सुखेनैवेति । व्याख्यानमसदित्याशयेनाह सचा सुखैनैवेति । तत्तात्पर्यमाह मनःप्रसादपूर्वकमिति । गायतेत्यनुवृत्तस्यैवेति । पूर्वं ऋक्संस्थेन गायतेति क्रियापदेन सम्बन्ध इत्यर्थः । सोमस्य सृतत्वात्तत्पानार्थमागमनाय गायतेति भावः । ननु पुरूणां मध्ये पुरुरित्येवं निर्धारणषष्ठीबलेनैव अतिशयितपूर्णत्वस्य अतिशायने तमबिष्ठनिति विहितातिशयार्थकतमपो वैय्यर्थ्यम् । अत एव महाभाष्ये युधिष्ठिरः श्रेष्ठतमः पुरूणाम् इत्यादयो अपप्रयोगा एवेत्युक्तम् । तथा बहुव्रीहिनिर्धारणे भवन्ति मतुबादय इत्यनेन मतुप्प्रत्ययार्थस्य बहुव्रीहिणैव लाभे सति न प्रत्ययोत्पत्तिरित्यभिहितम् । तन्न्यायेन प्रकृतेपि तमप्प्रत्ययार्थस्य अतिशयस्य निर्धारणषष्ठीबलेनैव लाभे सति तत्प्रयोगस्य वैय्यर्थ्यादित्याशंक्याह । अत्र पुरुतममिति । तमप् छान्दस इति । अत एव महाभाष्ये देवः सविता प्रार्पयत् श्रेष्ठतमाय कर्मण इत्यत्रेष्ठन् प्रत्ययबलादेवातिशयलाभात् तमप्छान्दस इत्युक्तमिति भावः । इयांस्तु विशेषः श्रेष्ठतमायेत्यत्र प्रशस्य श्रय इति प्रशस्यशब्दस्य श्रादेशविधानात् श्रशब्दभिन्नेष्टन्प्रत्ययेनातिशयलाभे सति तमप् छान्दसत्वम् । अत्र पुरूणां पुरुरिति निर्धारणषष्ठीबलनैवेत्येवंशब्दमहिम्नैवातिशयलाभे सति तमपः छांदसत्वमुच्यते । प्रकारान्तरेण प्रत्ययार्थलाभे पुनस्तत्प्रयोगः छान्दसत्वादि-त्यस्योभयत्राप्यविशिष्टत्वादित्यवगन्तव्यम् । तथा युधिष्ठिरः श्रेष्ठतमः कुरूणामित्यत्र निर्धारणषष्ठीबलनैव अतिशयलाभे अतिशयार्थकेष्ठन् प्रत्ययतमप्प्रत्ययौ महाकविप्रयोगस्य छन्दःकल्प्यत्वात् नदोषवहाविति समाधातव्यम् । प्रकारान्तरेण गत्यभावादिति द्रष्टव्यम् ।

ननु तथापि न पुरूतममिति तमप्प्रत्ययान्तं युक्तं तथात्वे अनुदात्तौ सुप्पिताविति सुकारस्य पकारसंज्ञकौ यौ प्रत्ययौ तदा न तदाद्यवर्णौ अनुदात्तस्वरयुक्तौ भवत इति विहितत्वेन प्रकृते तमप्प्रत्यस्य पित्वेत तदाद्यवर्णे तकारे अनुदात्तस्वरः प्रसज्येत । न चेष्टापत्तिः तकारस्य उदात्ततया पठ्यमानत्वादतः कथमुदात्तस्वर इत्यत आह । व्यत्ययेनोदात्तत्वमिति । सूत्रादनुदात्तस्वरव्यत्ययेन नकारस्योदात्तस्वरयुक्तत्वमुपपन्नमित्यर्थः । नच प्रत्ययः परश्च आद्युदात्तश्चेति प्रत्ययादेरुदात्तस्वर-विधानान्नचाशङ्का नचोत्तरमिति वाच्यम् ॥ आद्युदात्तश्चेत्यस्य सामान्यसूत्रत्वेनानुदात्तौ-सुप्पितावित्यस्य विशेषवचनत्वेन तदपवादकतयोक्तरीत्या प्रसक्तौ सत्यां तत्समाधानं युक्तमित्यवधेयम् । अत एवास्वरसादाह । यद्वेति । नायं तमप्प्रत्ययः येनोक्तरीत्या शङ्कासमाधाने स्तः । किन्नाम तमु अभिकांक्षायामित्यभिकांक्षार्थकतमुधातोः कर्मणि अच्प्रत्यये सति तम इति

रूपं अतो न कोऽपि दोष इत्यर्थः । अस्मिन् पक्षे पूर्णतममित्येतद्भाष्यं पुरूतममित्येतद्व्याख्यानरूपं यथास्यात्तथा प्रदर्शयन् व्याचष्टे । पुरुभिरिति । योग्यतानुसारेण पूर्णैर्ब्रह्मादिभिः गम्यते आकांक्ष्यत इत्यर्थः । ननु अस्मिन् पक्षे पुरूणां पूर्णानां मध्ये पुरुतमं पूर्णैराकांक्ष्यमित्यर्थासङ्गतिरित्यतोऽत्र न पुरूणामित्यस्य निर्धारणषष्ठीत्वमङ्गीकृत्य पुरूतममित्यनेन संम्बन्धः । किन्नाम वार्याणामित्येतद्विशेषणतया तेनैव पदेन संम्बन्ध इत्याशयेनाह । पुरूणामिति तथाच भाष्येऽपि सुपूर्णानां वरेण्यानामिति संम्बन्धो द्रष्टव्यः । सघानो योग आभुवत् । ऋचि अयोग इति संम्बन्ध इत्यभिप्रेत्यासमंतात् मुक्ताविति भाष्यं प्रवृत्तं तत्र सप्तमी तादर्थ्य इत्याशयेन योगायेति भाष्यमित्याशयेनाह । आसमंतात् इत्यादिना । ननु भुवदिति कथं भूसत्तायामस्माल्लिङि तस्य इप् इत्यस्य लोपे शब्विकरणे शस्येत्संज्ञायामकारमात्रे उर्वरिते सति भू अत् इति जाते लङ्लुङ्लङ्क्षु अडुदात्त इत्यडागमे तकारलोपे अभू अदितिजाते ऊकारस्य गुणे तस्य चावादेशे अभव अत् अभवदिति व्यक्तत्वादित्यत आह । विकरणव्यत्ययादिति । शब्विकरणस्य व्यत्ययेन शब्विकरणत्वमित्यर्थः । व्यत्ययोबहुलमिति सूत्रादिति भावः । तथाच भूधातोः लिङि तिपि शविकरणे शस्य लोपे भू अत् इति जाते सर्वधातुकमपित् अपित्सार्वधातुकं ङिद्वत्स्यादित्युक्तत्वात् प्रकृते च शविकरणस्यापित्वेन ङित्कार्यकारित्वात् ङितश्च क्ङिति चेति गुणप्रतिषेधकत्वेन झपरे गुणाभावे तस्य चावादेशाभावे अचिश्नुधातुभ्रुवोय्वोरियङुवङाविति उकारस्य उवङादेशे उकारलोपे बहुलंछन्दस्यमाङ्योगेपीति अडभावे च भुवदिति रूपं द्रष्टव्यम् ।

कथं तर्हि भूतार्थकस्य लङः भवेदिति भविष्यदर्थकविधिलिङ्व्याख्यानमित्यत आह । कालव्यत्ययादिति । न्यो बहुलमिति अतीतकालार्थक लङःभविष्यदर्थकविधिलिङत्वेन व्यत्ययः कार्य इत्यर्थः । अत एवाडभावः । ज्ञानवित्ताय ज्ञानाख्यवित्ताय बहिर्व्यक्तमिति । योग आभुवदित्यस्य पूर्वोक्त एवार्थः । राय इत्यस्य बाह्यधनायेति बाह्ये स्पष्टत्वात् भाष्येऽव्याख्यातमित्यर्थः । कर्मण्यधिकरणे चेति । किरिति कर्मण्युपपदे घुसंज्ञकेभ्यो धातुभ्यो अधिकरणकारके किप्रत्यये भवतीति सूत्रार्थः उदधिरित्याद्युदाहरणम् । दाधाध्वदाबिति दारूपाणां धारूपाणांच धातूनां च घुसंज्ञायाः विधानात् दुधाञ् धारणपोषणयोरिति धातोरपि धारूपत्वेन घुसंज्ञकत्वं ज्ञातव्यम् । तथा पुरुशब्दे कर्मण्युपपदि धाधातोरधिकरणे किप्रत्यये ककारलोपे आतो लोप इटि चेति धात्वाकारलोपे पुरुध् इ पुरधीति रूपम् ।

ननु तर्हि पुरुध्यामिति स्यादित्यत आह । उपपदस्येति उपपदेत्यस्य नकारस्य नुमागमे मित्वादंत्यादचो रकारस्याकारात् । रंजाते पुरंधीति रूपं तस्य सप्तमी पुरंध्यामिति भवतीति

द्रष्टव्यम्। पत्नी पुरंधी उशतीति चतुस्त्रिंशदधिकशतसङ्ख्याकपत्नीनामसु पाठादित्यर्थः। उपलक्षणमेतत्। पुरंधियोषिदित्याहेति श्रुतिरपि द्रष्टव्या। योग इति। वपतीति योग इति सप्तम्याः यथा तादात्म्यार्थकत्वं तद्वदित्यर्थः। पत्न्यर्थं भुवदिति। यज्ञाद्युपयुक्तपत्नीसंपादको भवेदित्यर्थः। आव्रजेदिति। आगमदिति पञ्चमो लकारः। आव्रजेदिति च लिङ् तथाच लिङर्थे लेडिति लिङलेटोरैक्यार्थत्वादागमदित्यस्य आव्रजेदिति लिङ्व्याख्यानं युक्तमित्यवधेयम्॥ ३॥

यस्य संस्थे न वृण्वते। नचातश्चोपसर्ग इत्युपसर्गे उपपदे अकारान्ताद्धातोः कर्तरि क्तप्रत्ययविधानात् संस्थ इत्येतद्भाष्ये स्थिताविति कथं व्याख्यातं स्थिते इति वक्तव्यत्वादित्यत आह। घञर्थे कविधानमिति। भावस्यापि घञर्थत्वादिति भावः। तथा समित्युपसर्गपूर्वकात् स्थाधातोर्भावे कप्रत्यये कित्वाद्धात्वाकारलोपे संस्थेति भावे निष्पन्नत्वात् स्थिताविति व्याख्यानं युक्तमिति ज्ञातव्यम्। समत्सु युद्धेष्विति पृत्समत्समरारण इति संग्रामनामसु पाठादित्यर्थः॥ विषयेति॥ विषयान् प्रति इन्द्रियाणि हरणादित्यर्थः। तस्मा इन्द्रायेति रथे स्वावस्थानेन शत्रुं प्राप्य तापापादकायेत्यर्थः। उत्तरत्र हरिशब्दार्थत्वेन बुद्धेरपि ग्रहणादाह अत्रेति। निर्वचनेति हरणाद्धरिरिति निर्वचनस्येत्यर्थः। यस्येन्द्रियस्येति षष्ठ्योः सप्तम्यर्थ इति भावेनाह यस्मिन्निति। पुरः पुरोभागं मतिबुध्योः पुरोभागः। यन्त्रात्रवो न वृण्वत इति शङ्कायां तात्पर्यमाह। मनोबुद्धीति॥ ४॥

सुतापाव्ने सुता इमे। अभिषुताः खंडिताः। एकवचनं बहुवचनार्थ इत्याह। दध्याशिरा इति। अहोरात्रान्तरितमिति। नन्वहोरात्रान्तरितदघ्न आशिरशब्दवाच्यत्वे दधिपदं व्यर्थमिति चेत्सत्यम्। अत्र हि दघ्नि अहोरात्रान्तरितदधित्वं रूपमाशिरं विधीयत तत्र प्राप्ताम्नाच्च वैय्यर्थ्यात् प्राप्तिप्राप्तविभेदः। बाधश्चतुर्विधः प्रोक्त इति बाधचातुर्विध्यस्य मीमांसकैरुक्तत्वात्। दघ्नि दधित्वरूपविशेषणांशस्य सिद्धत्वेन विधानवैय्यर्थ्यात्। बाधे सविशेषणे हीति न्यायेनाहोरात्रान्तरितरूपविशेषमात्रं बाधनमेव बोद्धव्यम्। न चाशिरशब्दस्य मिश्रितार्थपक्षे श्रुतिभाष्यपदयोः संवादेपि द्वितीयपक्षे कथं संवादः मिश्रिता इत्यर्थस्यानेनालाभादितः अहोरात्रान्तरितं अग्र्याहितादिवद्विशेषणस्य परनिपाते बोद्धव्यः। तस्येति। एष्वित्युक्तबहुव्रीहेः तात्पर्यमित्यर्थः। गत्यादौ पठ्यत इति। वीप्रजननकान्तिगतिष्विति धातोरिति भावः। तदर्थकथनपरप्राप्त्यै इति भाष्यं अपेक्षितपूरणेन योजयति यजमानस्येति। सोमपं इत्याकारान्त-पुल्लिङ्गसोमपाशब्दस्य चतुर्थीम्। ननु सुतपाव्ने इति कथं सोमप इतिवत् सुतप इति वक्तव्यत्वादित्यत आह। आत इति। तथाच सुतशब्दोपपदात् पा पाने इत्याकारान्तधातोः वनिपूप्रत्यये इपूइत्यस्य

लोपे सुतपावन् इति प्रातिपदिके पश्चात्स्वाद्युत्पत्तौ सुतपाव्ने इति चतुर्थ्येकवचनं द्रष्टव्यम् । इन्द्रियं यन्तीति द्वितीया स्याच्चतुर्थी कथमित्यत आह गत्यर्थेति । गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि गत्यर्थानां धातूनां कर्मणि अध्ववर्जे द्वितीयाचतुर्थ्यौ स्तश्चेष्टायां गम्यमानायामिति सूत्रार्थः । व्रजं व्रजति व्रजाय व्रजति । इत्युदाहरणम् । चेष्टायां किं मनसा वनं यान्ति । अनध्वनि किं मार्गं व्रजतीति प्रत्युदाहरणम् । तथाच प्रकृते प्रापणगत्योरेकत्वात् या प्रापण इति गत्यर्थकधातोः कर्मणीन्द्रपदे चतुर्थी युक्तेति भावः । ध्यानापरपर्यायं धारणं कथं दधिशब्दार्थ इत्याह । अदृगमेत्यादिना । आकारान्तेभ्यो ऋकारान्तेभ्श्च गमहनजनादिभ्यश्च किकिनौ प्रत्ययौ भवतः तौ च प्रत्ययौ लिटिधातोरनभ्यासस्येति लिङ्द्वित्वरूपलिट्कार्यकारिणौ भवत इति सूत्रार्थः

तथाच डुधाञ् धारणपोषणयोरस्मात्किप्रत्यये किप्रत्ययस्य लिट् चेति सूत्रशेषेण लिट्कार्यकारिताविधानेन द्वित्वे धाधा इति जाते । अभ्यासस्य ह्रस्वे धधा इति कित्वात् लोप इटिचेति धात्वाकारलोपे धधइति जाते आदिधकारस्य दकारे दध् इ दधीतिरूपं द्रष्टव्यम् । आशिरशब्दस्य मिश्रार्थकत्वादित्याह । युक्ता इति । ननु सूतपाव्ने इत्युक्तं सोमस्य मनःपातृत्वं हरेः कीदृशमित्यतः । तत्तात्पर्यमाह । मनसायेति । सदा यान्तीति हरिप्राप्त्यर्थं ध्यानयुक्तानि मनांसि ध्यानादिना तं यान्तीति सदा तं ध्यायन्तीति तात्पर्यम् ॥ ५ ॥

## पदार्थदीपिका

अत्यविचमितमिरभिलभिनभितुभि पतिभ्योऽसच् इत्यतोऽसचित्यनुवृत्तौ वहियुवभ्यां णिदिति वहेरसच्प्रत्यये तस्य च णित्वादत उपधाया इत्युपधावृद्धौ च वाहसशब्दनिष्पत्तिरिति भावः । नन्वेवमकारान्ततया वाहसशब्दाज्जसि प्रथमयोः पूर्वसवर्ण इति पूर्वसवर्णदीर्घे सति स्तोमवाहसा इति प्रथमा बहुवचनेन भवितव्यम् । स्तोमवाहस इति ह्रस्वस्तु कथमित्यतो वाहसशब्दाकारस्य जसोऽकारस्य च पूर्वसवर्णदीर्घे सति स्तोमवाहसा इति प्राप्ते अतो गुण इति पररूपं छान्दसमित्यर्थः । यद्यप्यत्र वेदापभाष्योक्तरीत्या वहेवीहि हाधाञ्थ्यश्छन्दसीति असुन् प्राप्तये तत्र च णिदित्यनुवृत्या तस्य णित्वात् अत उपधाया इत्युपधावृद्धौ सकारान्तस्तोमवहस्शब्दस्य स्तोमवाहस इति बहुवचननिष्पत्युपपत्तेः ह्रस्वछान्दसात्वाश्रयणमनर्थकम् । तथापि ततः पूर्वम् असुन्विधौ णिदित्यनुवृत्या वहिहाधाञ्भ्यच्छन्दसीत्यत्र तदनुवृत्याश्रयणं क्लिष्टमेवेत्यभिप्रेत्य क्लिष्टतदनुवृत्याश्रयणह्रस्वछन्दसत्वाश्रयणपक्षयोरविशेषात् यत्किञ्चित्क्लिष्टकल्पनया तन्निर्वाहे कर्तव्ये णिदित्यनुवृत्याश्रयणेनैव तन्निर्वाह इत्यत्र मानाभावात् टीकायां तदनाश्रयणेन ह्रस्वछान्दसत्वमेवाश्रितमिति ध्येयम् ।

यत्तु कर्मण्यणिति वहेरणप्रत्यये णित्वात् उपधावृद्धौ निष्पन्नाकारान्तवाहशब्दात् अंजसः आज्जसेरसुक् इति असुगागमे वाहास इति भवितव्यम् । वाहस इति ह्रस्वस्तु कथमित्याशंक्य असुकः कित्वात् अन्ते प्राप्तौ प्रथमयोः पूर्वसवर्ण इति पूर्वसवर्णे दीर्घे च स्तोमवाहस इति प्राप्ते अतो गुण इति पररूपं छान्दसमित्येतत् अर्थवर्णनं तदसत् । तथासति नृवाहस इत्यादेरनुपपत्तिप्रसङ्गात् । नहि तत्रोक्तः प्रकारः सम्भवति । यदि च तत्र नॄन् वहत इति वहेरसुनि णिदित्यनुवृत्या उपधावृद्धौ च सकारान्तवाहस् शब्दस्येदं द्विवचनान्तमिति वेदापभाष्योक्तरीत्या आश्रीयते तर्हि तत्रेवात्रापि तत्प्रकाराश्रयणेनैव ह्रस्वोपपत्तेः तच्छान्दसत्ववर्णनानर्थक्यम् । न हि तत्राकारान्त एव वाहशब्दोऽभिमतः । तत्र तु सकारान्तो वाहस्शब्द इत्यत्र नियामकं किञ्चिदस्ति । ह्रस्वच्छान्दसत्ववर्णनं तु टीकाकारीयं उक्तरीत्या अन्यथासिद्धमिति न नियामकमिति ।

इतेति । इण् गतौ द्व्यचोतस्तिङ इति संहितायां दीर्घत्वमिति ज्ञेयम् । सीदत इति । पाघ्राध्मेत्यादिना सदेः सीदादेशः । सदिरप्रतेरिति संहितायां षत्वमिति भावः । इत्थम्भावेति । शीघ्रमागच्छतात्रोपविशतेत्यादिरूपेणेत्यर्थः । इत्थंभावस्यानेकविधत्वात् सामान्योक्तिरिति भावः । एवमन्यत्रापीति । भाष्यकृता यत्र यत्र व्याख्यानं न क्रियते तत्र सर्वत्र स्पष्टत्वमेव निमित्तं ज्ञातव्यमित्यर्थः ॥ १ ॥

पुरूणां सुपूर्णानामिति । पृपालनपूरणयोरित्यस्मात् कुरित्यनुवृत्तौ पृदित्याधिगृधि दृशिदर्शिभ्यश्च इति कर्तरि कर्मणि वा कुप्रत्ययः । कित्वाद्गुणनिषेधे उदोष्ट्यपूर्वस्येति उकार इति । पृणाति पूर्यते वेति पुरुः पूर्णः । पुरूतममिति । संहितायामन्येषामपि दृश्यत इति दीर्घ इति भावः । वार्याणां वरेण्यानामिति । नन्वेतिस्तुशास्वृदृहजुषः क्यबिति ण्यतोऽपवादतया क्यप् विधानेऽपि ग्रहणे वृञोऽग्रहणात् वृङ्सम्भक्तावित्यस्मात् ऋहलोर्ण्यदिति ण्यप्रत्यये सति निष्पन्नस्य वार्याणामिति श्रौतपदस्य कथं वृञ् वरणे इति धातोः वृञ एण्य इत्येण्यप्रत्यये सति निष्पन्नेन वरेण्यानामिति भाष्यपदेन व्याख्यानमिति चेन्न, सम्भक्ति, वरणयोः शब्दभेदेऽपि तात्पर्यैक्यात्, बहुलवचनात् वृङो एण्यसम्भवात् वृङ एण्य इत्त्यपि वृत्यन्तरे पाठाददोषः । अत एवाहोपादेयानामिति ॥ तमप् च्छान्दस इति ॥ अत्र तु यदा च प्रकर्षवतां पुनः स्पर्धा विवक्ष्यते तदातिशायकान्तपदात् प्रत्ययो भवति । देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे, युधिष्ठिरः श्रेष्ठतमः कुरुणामिति काशिकावाक्यं पदमञ्जर्यां प्रकर्षप्रत्ययान्तादपरेण प्रकर्षप्रत्ययेन न भाव्यम् । तेनैव प्रकर्षस्य द्योतितत्वात् इत्त्यवतार्य प्रकर्षरहितप्रतियोग्यपेक्षया यः प्रकर्षः इष्टन् विहितः । तमप् प्रत्ययस्तु प्रकर्षवत्प्रतियोग्यपेक्षया यः प्रकर्षः इष्टन् प्रत्ययेन न विहितः तस्मिन्नित्त्यादिनेति

व्याख्यानमिति तदुभयानुसारात् आतिशायकप्रत्ययान्तादतिशायकप्रत्ययसम्भववत् पुरूणां पुरुमिति निर्धारणेनैवातिशयस्य लाभे अप्रकृष्टवत् प्रतियोगिकप्रकर्षस्य तेन लब्धत्वात् प्रकृष्टपूर्णत्व-वत्प्रतियोगिकस्यातिशयस्य लाभार्थं तमप्सार्थक्यसम्भवेन छान्दसत्वं न वक्तुमुचितमिति । अत्रास्मद्गुरवः महाभाष्ये यत्र त्रयाणामेकः शुक्लः द्वितीयः किञ्चित् प्रकृष्टः अत्यन्तं प्रकृष्टश्च तृतीयः तत्र प्रथमापेक्षया सतोऽपि द्वितीय उत्कर्षस्य तृतीयसन्निधावकिंञ्चित्करत्वेन तद्विवक्षया असम्भवेन द्वितीयात्तरबुत्पत्यसम्भवेन तृतीयाच्च द्विवचनोपपदत्वाभावेन तरबुत्त्पत्तेरसम्भवात् तरबन्तात्तरबुत्पत्यसम्भवमुपपाद्य तेनैव न्यायेनेयसुनोऽप्यसम्भवमुपपाद्य यत्र चतुर्णां द्वौ शुक्लौ तृतीयः किञ्चिदुत्कृष्टः चतुर्थश्चात्यन्तं तत्र तृतीये सतोऽपि पूर्वद्वयापेक्षयोत्कर्षस्य चतुर्थसन्निधावकिञ्चित्करत्वेन तदपेक्षया तमबुत्पत्तेरसम्भवात् । चतुर्थात्तु तमप एवोत्पत्त्या तमबन्तात्तमबसम्भवमुपपाद्य तेनैव न्यायेनेष्टनोऽप्यसम्भवमुपपाद्य तदन्ताच्च स्वार्थे छन्दस्युपसंख्यानमिति वार्तिकेण च श्रेष्ठतमाय कर्मण इत्येतत्समाधाय युधिष्ठिरः श्रेष्ठतमः कुरूणामित्यस्य चान्याय्यत्वमेवेत्यभिप्रेत्य

पूर्वेण स्पर्धमानोऽयं मध्यमोलभते सितः । परस्मिन्न्यूनतामेति तदन्यूनः प्रवर्तते ॥
अपेक्ष्य मध्यमः पूर्वमाधिक्यं लभते सितः । परस्मिन्न्यूनतामेति यथामात्यः स्थिते नृपे ॥
अस्तु वा पितरस्तस्मात् नापशब्दो भविष्यति । वाचकश्चेत्प्रयोक्तव्यो वाचकश्चेत्प्रयुज्यते ॥

इत्यादि श्लोकैरेत्प्रमेयस्य सङ्गृहीतत्वात् तत्रातिशायकप्रत्ययान्तादतिशायकप्रत्ययोत्पत्ते रनभिप्रेतत्वेन तदनुसारेण छान्दसत्वोक्तेः श्लिष्टतरत्वमेव । तथाहि । किमत्र सकाशादि-त्यध्याहारेण विभज्योपपदत्वेन निर्धारणाभावात् तपस्तपीयान् लघोर्लघीयान् गुरोर्गुरीया-नित्यादिवत् अप्रकर्षप्रतिपादकत्वेन यथास्थितस्यैव तमपः सम्भवात् छान्दसत्वमनु-चितमित्यभिप्रेतम् । आहोस्वित् प्रकृते निर्धारणाभिप्रायेऽपि निर्धारण स्यातिशयासमर्पकत्वेन प्रकारान्तरेणातिशयालाभात् यथास्थित एव तमबिति न छान्दसत्वमिति । अथवा निर्धारणेनातिशयलाभेऽपि आतिशायकप्रत्ययादेवातिशायकप्रत्त्ययस्य भाष्य कारानभिप्रेतत्वेन प्रकृते च आतिशायकप्रत्ययाभावात् न तमबनुत्पत्तिरिति छान्दसत्वमिति ॥ न तावदाद्यः विभज्योपपदत्वेच तरपस्तमपूबाधकत्वस्य द्विवचनविभज्योपपदे तरबियसुनावित्यत्रोक्तत्वेन पुरूणामित्यस्य पुरुमिति विभज्योपपदत्वेन तरप्प्रसङ्गेन तमपोऽनुपपत्या पूर्णानां मध्ये इति टीकाकारीयज्ञापकेन निर्धारणाभिप्रायस्यावश्यकत्वात् । न द्वितीयः । लोके योग्यानां योग्य इत्यत्र निर्धारणेन अतिशयप्रतीतेः सर्वजनसिद्धत्वेन व्याकरणे च तत्र तत्र निर्धारणस्यातिशयार्पक-त्वस्योक्तत्वेन नित्यो नित्यानामित्यादौ निर्धारणसामर्थ्यात् जीवानां नित्यत्वमीश्वरस्य

परमनित्यत्वमवगम्यत इत्यादिगीताभाष्यटीकाद्यनुसाराच्च निर्धारणस्यातिशयसमर्पकत्वेऽस्याप्यावश्यकत्वात् । नान्त्यः । तमप्प्रत्ययसमर्पणीय प्रकर्षावधिमध्यपुरूणामित्युक्तप्रतियोगिकप्रकर्षेसत्वेऽपि तमप्प्रत्ययसमर्पणीयप्रकर्षवत्सविधौ तस्याकिञ्चित्करत्वेन प्रत्ययेनेव निर्धारणसर्माणीयत्वासम्भवात् । मध्यमस्यापि तत्सन्निधौ पुरूणामित्त्युक्तकोटिप्रवेशेन पुरूणां पुरुमित्यनेन निर्धारणेन तमप्समर्पणीयप्रकर्षवत्त्येव प्रकर्षस्य समर्पितत्वेन तमपो वैय्यर्थ्ये निर्धारणसमर्पकपुरूणामित्यस्य वैय्यर्थ्यापेक्षया प्रत्ययवैय्यर्थ्यस्य ज्यायस्त्वेन तदन्ताच्च स्वार्थे छन्दस्युपसंख्यानमिति न्यायलब्धत्वाच्च भाष्योक्तन्यायेन छान्दसत्वस्यैव श्लिष्टत्वात् । भाष्येत्येतद्युक्त्या प्रत्ययान्तात्प्रत्ययाभावसाधने तद्युक्तिसञ्चारविषये प्रत्ययाभावस्य अभिप्रेतत्वात् । अन्यथाभासयुक्तिर्नोपन्यसनीया स्यादिति दिक् ।

ननु तमपः पित्वात् अनुदात्तौ सुप्पितावित्यनुदात्तत्वेन भवितव्यमित्यत आह ।। व्यत्ययेनेति ।। उदात्तत्वमिति ।। आद्युदात्तमित्यर्थः । एतदस्वरसादेवाह ।। यद्वेति ।। कर्मणि डप्रत्यये तस्य च नित्यत्वात्तम शब्दस्याद्युदात्तत्वे समासस्वरापवादककृदुत्तरपदप्रकृतिस्वरेण यथास्थितस्वरोपपत्तिरिति भावः । अस्मिन् पक्षे पुरूणामित्यस्य पुरुतममित्यनेनान्वयासम्भवात् केनान्वय इत्यत आह ।। पुरूणां कार्याणामितीति ।। २ ।।

विकरणव्यत्ययादिति ।। वस्तुतः शब्विकरणत्वेऽपि भवतेर्लेङि व्यत्ययेन शब्विकरणस्य ङित्वेन गुणाभावे उवङादेशे बहुलं छन्दस्यमाङ्योगेऽपीति अडभावे भुवदिति रूपमित्यर्थः । कथं तर्हि भाष्ये भवेदिति लिङा व्याख्यानमित्यत आह ।। भवेत् कालव्यत्ययादिति ।। भविष्यत्वसमनियतविधौ प्रयोक्तव्ये भूतप्रयोग इति भावः ।। बहिर्व्यक्तेति ।। अतो भाष्ये न व्याख्यातमिति भावः ।। कर्मण्यधिकरणे चेति ।। उपसर्गयोः किरित्यनुवर्तते । ततश्च कर्मण्युपपदे अधिकरणेऽर्थे घोः किरिति सूत्रार्थः ।। छान्दस इति ।। निरुक्तत्वेन वर्णागम इति भावः । आगमत् आव्रजेदिति ।। गमेर्लेटस्तिप् इतश्च लोपः । परस्मैपदेष्वितीकार लोपः । बहुलं छन्दसीति शपो लुक् । लेटोडाटावित्यडागमः । तेन गमदिति रूपसिद्धिः । लिङर्थे लेडिति लिङ्लेटोरेकार्थत्वात् आव्रजेदिति लिङा भाष्ये व्याख्यानं कृतमिति भावः ।। ३ ।।

नन्वातश्चोपसर्ग इति कर्तरि भावे कप्रत्त्ययविधानात् कथं भावार्थतया भाष्ये स्थिताविति व्याख्यानमित्यत आह ।। घञर्थ इति ।। भावः कर्तृव्यतिरिक्तं च कारकं घञर्थः तत्र कविधानम् । स्थानापाव्यधिहनि युद्ध्यर्थमिति वाक्यशेषः ।। वृण्वते इति । वृणोतेः वृणोतिना व्याख्यानमिति भावः ।। वृणत इति ।। श्नाभ्यस्तयोरात इत्याकारलोपः । आत्मनेपदेष्वनत इति झस्यादादेश इति

ज्ञेयम् । पुरः इति ॥ पूर्वापराधराणामसिपुरधवसैषामिति पूर्वशब्दादसिप्रत्यये तत्सन्नियोगेन पूर्वशब्दस्य पुर इत्यादेशे सति पुरः पुरोभागमित्यर्थः ॥ ४ ॥

शुचयः शुद्धा इति ॥ अण्वीभिरिति शेषः ॥ अभिषुता इति ॥ सोमास इति पृथग्ग्रहणादिति भावः ॥ दध्याशिरम् इति ॥ वदन्तीति शेषः । ततश्चेति । आहिताग्न्यादित्वादिति भावः । गत्यादाविति ॥ अदिपदेन प्रयोजनकान्त्यादेः परिग्रहः । ततश्च गत्याद्यर्थात् अस्मात् मंत्रेवृषेषपचमनभूवीरा उदात्त इतिक्तिनि कित्वात् गुणाभाव इति भावः ॥ आतो मनिनिति ॥ अत्र छन्दसीत्यनुवर्तते । सुप्यनुपसर्गेऽपीति च । तथा च आकारान्तेभ्यो धातुभ्यः छन्दसि विषयेऽनुपसर्गे सुप्युपपदे मनिन् क्वनिप् वनिप् एते प्रत्यया भवन्ति । चकाराद्विचेति सूत्रार्थः । यन्ति इण्गतौ । यान्ति याप्रापणे प्राप्नुवन्ति । अर्थादैकार्थ्यमिति भावः । नन्विन्द्रं यान्तीति स्यात् इन्द्रायेति तु कथमिति तत्राह ॥ गत्यर्थेति ॥ गत्यर्थानां धातूनां चेष्टाक्रियाणां परिस्पन्दनक्रियाणां कर्मणि कारके च वर्जिते द्वितीयाचतुर्थ्यौ भवत इति सूत्रार्थः ॥ आदृगमेति ॥ आकारान्तेभ्यो धातुभ्यः ऋकारान्तेभ्यश्च गमहनजन इत्येतेभ्यः छन्दसि विषये किकिनौ प्रत्ययौ भवतः । ताच्छीलिकादिषु कर्तृषु लिड् भवतः । आदिति तकारः सुखमुखोच्चारणार्थः । न तु तपरः । माभूत् तात्परः तपर इति ऋकारे तत्कालग्रहणमिति सूत्रार्थः ॥ किप्रत्यय इति ॥ दधातेरिति शेषः । लिड्भावाद्द्विर्भावः । कित्वात् आतोलोप इटि चेति आकारलोप इति भावः ॥ ५ ॥

## टीकाविवृतिः

आत्वेता । दशर्चमिति । अनुक्रमणिकायामात्विति सूक्तप्रतीकमात्रं गृहीतं तत्र सुरूपकृत्नुं दशैंद्रमित्यनुवृत्त्या अयमर्थ इति भावः । छान्दसोह्रस्व इति । स्तोमोपपदाद्वहतेः कर्मण्यणित्यणि अत उपधाया इति वृद्धौ स्तोमवाहशब्दोऽदंतस्तस्माज्जसि आज्जसेरसुगित्यसुगागमे कित्त्वादन्ते प्रथमयोः पूर्वसवर्ण इति दीर्घे स्तोमवाहास इति प्राप्ते अतोगुण इति पररूपं छान्दसमिति भावः । आङ्द्वयस्यैकेनेतशब्देन योगे वैयर्थ्यादितशब्दावृत्तावपि तथात्वादिति भावेनाह । आनिषीदतेति । तद्व्याचष्टे । आगत्येति । आङः ससाधनक्रियावाचकत्वाभिप्रायेणागत्येति व्याख्यानं ज्ञेयम् । निषीदतेत्यस्योपविशतेति । इत्थंभावस्येति । आतु आगत्यतु निषीदतेत्युपवेशनस्यागमनानन्तर्य-रूपेत्थंभावस्येत्यर्थः । कश्चनप्रकार इत्थं भावः । भाष्यकाराव्याख्यातऋक्ष्वेतं न्यायमतिदिशति । एवमन्यत्रापीति ॥ १ ॥

पुरुतमम् । पुरूणां सुपूर्णानामिति । पॄपालनपूरणयोरित्यतः पॄभिदिव्यधिगृधिधृषिभ्य इति कु प्रत्यये उदोष्ठ्यपूर्वस्येति धातो ऋकारस्योकारे पुरुः पूर्ण इत्यर्थसिद्धिः । पुरूतममित्यत्रान्येषामपि दृश्यत इति दीर्घ इति भावः । वृञ्वरण इत्यत ऋहलोर्ण्यदिति ण्यत्प्रत्ययेऽचोञ्णितीति वृद्धौ वार्येति रूपसिद्धिः । एवं वृञ एण्य इत्येण्ये च वरेण्येति रूपसिद्धेर्भाष्ये वार्याणामित्यस्य वरेण्यानामिति प्रतिपदमुक्तमित्याशयेन व्याख्याति । वार्याणां वरेण्यानामुपादेयानामिति । भाष्ये सचेत्यनूद्य सुखेनैवेति व्याख्यातं तत्तात्पर्यमाह । मनः प्रसादपूर्वकमिति । ननु नित्योनित्यानां चेतनश्चेतनानामित्यादिवत् पुरु पुरूणामिति वक्तव्ये कथं पुरूतमं पुरूणामिति । तमबर्थस्यातिशयस्य पुरूणां पुरुमिति वाक्येनैवोक्तेरुक्तार्थानामप्रयोगात्तमपोऽसम्भवात् । न चायमेकः पुरूणां पुरुरयमेकः पुरूणां पुरुः पुनरयमेकः पुरूणां पुरुरेतेषां मध्येऽयमतिशयेन पुरूणां पुरूरिति विवक्षायां पुरूणां पुरुतम इति स्यादिति वाच्यम् । पुरुशब्दस्य पुरूणामित्येतदपेक्षितत्वेना सामर्थ्यात्प्रत्ययोत्पत्त्ययोगात् । पुरूणामित्यत्रैवावान्तरातिशयित पुरूणामन्तर्भावात्पृथग्विवक्षाया अनुचितत्वाच्चेत्यत आह । तमप् छान्दस इति । यथादेवोवः सविता प्रार्पयतु श्रेष्ठतमायेत्यत्रातिशयार्थकेष्ठनंतात्तमप्सिद्धये वार्तिकं तदंतात्स्वार्थे छन्दसिदर्शनं श्रेष्ठतमायेति प्रवृत्तं तथेहापि स्वार्थे छन्दस्त्वादनेन वार्तिकेन तमप् । दर्शन ग्रहणसामर्थ्यात्तदन्तादित्युपलक्षणम् । यत्रातिशयोर्थः प्रत्ययेन वा पुनरुच्चारितेन तेनैव पदेन वाप्रतीयते तस्मात्पदात्स्वार्थे तमप्प्रत्यय इति भावः । इदं तु पररीत्योक्तम् । वस्तुतस्तु । अतप्यतस्माखिललोकतापनं तपस्तपीयान् तपतां समाहित इति द्वितीयस्कन्धश्लोके तपतां तपीयानित्येतद्व्याख्यानार्थतात्पर्यम् । महान्महीयसामादि-ब्रूयादत्युत्तमोत्तमम् । यत्राधिकं वदेत्किंचिज्ज्ञेयोर्थस्तत्र चाधिक इति । तद्रीत्या पुरूणां पुरुतममित्यत्रापि तमप् निरवधिकार्थक इति स्वरीत्या द्रष्टव्यम् । तमपः पित्त्वादाद्युदात्तश्चेत्यस्यापवादेनानुदात्तौ सुप्पितावित्यनेनाद्यनुदात्तत्वेन भाव्यमित्यत आह । व्यत्ययेनोदात्तत्वमिति । प्रत्ययस्वरेणाद्युदात्तत्वमेवेत्यर्थः । तमपश्छान्दसत्वं स्वरव्यत्ययाश्रयणं च जघन्यमित्यत आह । यद्वेति । तमेर्घञर्थे कविधानमिति कर्मणिकप्रत्यये निष्पन्नेन तमशब्देन तृतीयातत्पुरुषसमासे सति समासस्वरापवादे तत्पुरुषे तुल्यार्थेति तृतीयां तपूर्वपदप्रकृतिस्वरे प्राप्ते परादिश्छन्दसि बहुलमिति परपदाद्युदात्तत्वमिति भावः । तर्हि पुरूणामित्यसङ्गतमित्यत आह । पुरूणां वार्याणामिति ॥ २ ॥

सघानः । अवधारण इति । सघशब्दः सराये सपुरंध्यामित्युभयत्रापि सम्बध्यत इति भावः । विकरणव्यत्ययादिति । शब्विकरणस्थभवतेर्लेङि व्यत्ययोबहुलमित्यनेन तौदादिकेशप्रत्यये तस्य

सार्वधातुकमपिदिति ङित्वाद्धातोर्गुणाभावे उवङादेशे बहुलं छन्दस्यमाङ्योगेपीत्यडभावे भुवदिति रूपमिति भावः। मधुछन्दःप्रभृत्येतद्वाक्यद्रष्टृऋषीणामद्यापि मुक्त्यभावादतीतार्थासम्भवाद्भाष्ये भुवदित्येतद्भवेदिति व्याख्यातं तद्घटयति। कालव्यत्ययादिति। अत्र लुङ्प्रत्ययोपि लिङर्थे नत्वतीतार्थ इति भावः। बहिर्व्यक्तमिति। स एवेन्द्रो न आ सम्यक् योगे योगाय उपायप्राप्तये भुवत्। स एव राये प्रसिद्धधनाय भुवदिति स्पष्टमित्यर्थः। बुद्धिग इति। नियामकत्वेनेति शेषः। पुरंशरीरमिति। उपासकेन परमेश्वरमिति शेषः। कर्मण्यधिकरणे चेतीति। कर्मण्युपपदे घुसंज्ञिक धातोराधिकरणार्थे किप्रत्यय इति सूत्रार्थः। नुमागमश्चेति। पृषोदरादित्वादिति भावः। तन्नामवति। अत एव तैत्तिरीयश्रुतौ पुरंधिर्योषाजिष्णूरथेष्ठेति प्रयुज्यते। तद्वाक्यार्थोपि तत्रैवोक्तः। पुरंधिर्योषित्याह। योषित्येव रूपं दधातीत्यादि। तेन परमात्मा यस्यां योषिति पुरं रूपं भर्तृप्रियं वेषं दधाति सा पुरंधिरिति विग्रहः सूचितः। भाष्ये पत्नीतितात्पर्यार्थ उक्त इति भावः। सप्तम्यास्तादर्थ्यमर्थ इति। योग इत्यत्र पुरंध्यामित्यत्र च तादर्थ्यचतुर्थीस्थाने सुपां सुप इति वार्तिकेन सप्तम्यादेशे पुरंध्यामित्यस्य पत्नीप्राप्तय इत्यर्थ इति भावः। गमेर्लिङर्थे लेडिति लेटि तिपि बहुलं छन्दसीति शब्लुकि लेटोडाटावित्यडागमे इतश्चलोप इतीकारलोपे गमदिति रूपमित्याशयेन भाष्ये आव्रजेदिति व्याख्यातमिति भावेनाह। आगमदाव्रजेदिति ॥ ३ ॥

यस्यसंस्थे। संस्थ इत्यत्राऽऽतश्चोपसर्गे इति कर्तरिकप्रत्ययविधानाद्भाष्ये स्थितावितिभावार्थत्वेन व्याख्यानमयुक्तमित्यत आह। घञर्थ इति। भावादावित्यर्थः। समत्सुसमरणे इति सङ्ग्रामनामसुपाठं मनसि निधायाह। समत्सु युद्धेष्विति। श्रुतौ हरी न वृण्वत इत्युक्त्या सम्पूर्णाश्व प्राप्तिर्नास्ति किंत्वश्वावयवादिप्राप्तिरस्तीति प्रतीतिवारणाय भाष्ये हर्यग्रमित्युक्तम्। तत्र हरिशब्दस्यानेकार्थत्वाद्व्याचष्टे। अश्वाग्रमपीति। अश्वपुरोदेशमपीत्यर्थः। अश्वाग्रेप्यागन्तुं नसमर्था इति भावः। वृञः स्वादिक्र्यादि गणपठितत्वाद्वृण्वत इत्यस्य प्रतिपदं भाष्ये वृणत इति। तत्र वृञोझस्य आत्मनेपदेष्वनत इत्यदादेशे श्रुतौ श्नुप्रत्यये हुश्नुवोरिति यणादेशे रूपसिद्धिं भाष्ये श्नाप्रत्ययस्य श्नाभ्यस्तयोरात इत्याकारलोपे श्नुश्नाप्रत्यययोर्ङित्वाद्धातोर्गुणाभावे रूपसिद्धिं मत्वाव्याचष्टे। प्राप्नुवन्तीति। उत्तरत्र हरिशब्दनिरुक्त्यनुसारेणाह। बुद्धेरपीति। अन्येतु हरी इत्यत्र द्विवचनोपपत्त्यर्थमाह। अत्र मनःशब्देनेतीत्याहुः। अध्यात्मं योजनामाह। ततश्चैवमिति। अज्ञानादि शत्रूणां पुरोभागप्राप्त्यभावोक्तेर्भावमाह। मनोबुद्धी इति ॥ ४ ॥

सुतपाव्ने। सोमास इति पृथग्ग्रहणात्सुता इत्येतदभिषुता इति व्याख्येयमित्याह। अभिषुता इति। खण्डिता इत्यर्थः। इत्येक इति। आहुरिति शेषः। अस्मिन्पक्षे श्रुतौ दध्ना आशिराः

मिश्रिता इति विग्रहेण तत्पुरुषसमासे तत्पुरुषे तुल्यार्थतृतीयेति तृतीयांतपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमिति भावः । अन्येत्विति । आशिरशब्दार्थस्त्वहोरात्रान्तरितत्वमात्रं दधीति विशेष्योक्तिरतोन पुनरुक्तिरिति भावः । द्वितीयपक्षे बहुव्रीहिविग्रहं दर्शयन् भाष्यं सङ्गमयति । ततश्चेति । अस्याहिं ताग्र्यादित्वं बहुव्रीहौ प्रकृत्यापूर्वपदमिति पूर्वपदाद्युदात्तत्वं च ज्ञेयम् । अशेर्णिदित्यनेना शूव्याप्ताविंत्यतः किरचि आशिरमिति रूपं ज्ञेयम् । गत्यादाविति । वीगतिप्रजननकांत्य सनखादनेष्विति पठ्यते इत्यर्थः । वीतये इन्द्रस्य भक्षणायेत्यपव्याख्येति सूचयितुं वीतय इत्ये तत्प्राप्त्या इति व्याख्यातम् । तत्र कर्तृकर्मानुक्तेस्तदध्याहरति । यजमानस्येति । वनिबिति । सुतपूर्वस्य पापाने इत्यस्याकारान्तत्वाद्वनिपि अल्लोपोन इत्यल्लोप इति भावः । श्रुतौ यन्तीतीणोरूपम् । भाष्ये यान्तीति याप्रापणे इत्यस्य । इन्द्रस्य कर्मत्वाद्द्वितीया प्राप्तावाह । गत्यर्थेति । गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनीति सूत्रेणेत्यर्थः । किप्रत्यय इति । धाञआदंतत्वात्किप्रत्यये लिङ्वद्भावात् द्वित्वे आतोलोप इटिचेत्याकारलोपे अत्र उपलक्षितेन नित्येन आद्युदात्तत्वमिति भावः ॥ ५ ॥ नवमोवर्गः ॥

## ऋक्संहिता पदपाठसहिता

(४६) त्वं सुतस्यं पीतयें सद्यो वृद्धो अंजायथाः ॥ इन्द्रज्यैष्ठ्यांय सुक्रतो ॥ ६ ॥

(प०) त्वम् । सुतस्यं । पीतयें । सद्यः । वृद्धः । अजायथाः ॥ इन्द्रं । ज्यैष्ठ्यांय । सुक्रतो इतिसुऽक्रतो ॥ ६ ॥

(४७) आत्वां विशन्त्वाशवःसोमांस इन्द्रगिर्वणः ॥ शंतें सन्तु प्रचेंतसे ॥ ७ ॥

(प०) आ । त्वा । विशन्तु । । आशवंः । सोमांसः । इन्द्र । गिर्वणः ॥ शम् । ते । सन्तु । प्रऽचेंतसे ॥ ७ ॥

(४८) त्वां स्तोमां अवीवृधन्त्वामुक्था शंतक्रतो ॥ त्वां वंर्धन्तु नोगिरंः ॥ ८ ॥

(प०) त्वाम् । स्तोमांः । अवीवृधन् । त्वाम् । उक्था । शतक्रतोइतिशतऽक्रतो ॥ त्वाम् । वर्धन्तु । नः । गिरंः ॥ ८ ॥

(४९) अंक्षितोतिः सनेदिमं वाजमिन्द्रंः सहस्रिणंम् ॥ यस्मिन्विश्वांनि पौंस्यां ॥ ९ ॥

(प०) अक्षितऽऊतिः । सनेत् । इमम् । वाजंम् । इन्द्रंः । सहस्रिणंम् ॥ यस्मिंन् । विश्वांनि । पौंस्यां ॥ ९ ॥

(५०) मानो मर्तां अभिर्द्रुहन्तनूनांमिन्द्र गिर्वणः ॥ ईशांनो यवयावधम् ॥१०,१०,५ ॥

(प०) मा । नः । मर्तांः । अभि । द्रुहन् । तनूनांम् । इन्द्र । गिर्वणः ॥ ईशांनः । यवय । वधम् ॥ १०,१०,५ ॥

## ऋग्भाष्यम्

सदापूर्णः शुभज्ञानज्यैष्ठ्यव्यक्त्यै सुताप्तये ।
नक्षुदादेरभिव्यक्तो भवः ॥ ६ ॥
गीर्भिर्वृतप्रभो ।
प्रकृष्टचेतास्त्वद्भृत्यो योऽस्मै स्युः शङ्कराः सुताः ॥ ७ ॥
व्यञ्जयंत्यधिकं स्तोमाः साम्न्युक्थान्यृक्षु चैवहि ।
महागुणैर्व्यंजयन्तु गिरोस्माकमपि प्रभो ।
आकाशवृद्धिवद्वृद्धिर्विष्णोः स्यान्नैव चान्यथा ।
नवर्धते नोकनीयानिति ह्येनं श्रुतिर्जगौ ।
महातात्पर्यरोधाच्च श्रुत्यर्थो नापरो भवेत् ।
यद्यन्यापेक्षया वृद्धिरीशत्वं स्यात्कुतोस्य च ।
अक्षितोतिरिति ह्यस्मात् पूर्णाभिप्रायतोदिता ॥ ८ ॥
अनन्तफलदं वाजमस्मत्तो लभतां स च ।
ददातु वा पौरुषाणि शक्तयो यत्र चाखिलाः ।
अतश्चानंत शक्तित्वान्नवृद्ध्याद्याः कथञ्चन ।
सर्वोपेतेत्येतमर्थमभिप्रेत्याह वेदराट् ॥ ९ ॥
मामर्ता नस्तनूनां तु द्रोग्धारः स्युः कथञ्चन ।
ईशोस्यपाकुरुवधं तेन नो मुक्तिदानतः ।
मानुषेभ्यस्तनूनां च नैव नः स्युर्विपत्तयः ।
कालेन दैवतः प्राप्तः स्याददेहत्वतो वधः ॥ १०, १०, ५ ॥

## ऋग्भाष्यटीका

त्वं सुतस्य सदापूर्णः । हेइन्द्र सुक्रतो शुभज्ञान सद्योवृद्धः समानेऽहनि यस्मिन्नहनि स्वयं वर्तते तस्मिन् सदाच वर्तते । अतः सदावृद्धः सदापूर्णस्त्वं सुतस्य पीतये सोमस्य पानाय सुताप्तय इति

तात्पर्यम् । यद्वा अपि पूर्वस्येणः क्तिनि रूपमेतत् । वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोरित्य-पेरल्लोपः । सोमस्य पीतये सुताप्तये यज्ञे यदजायथाः अभिव्यक्तोऽभवस्तत् ज्यैष्ठ्याय ज्यैष्ठ्यव्यक्त्यै सर्वदेवताभ्योतिशयेन सोमपानादिना स्वकीयं ज्यैष्ठ्यं प्रकटयितुमेव । न तु क्षुदादेर्हेतोः ॥ ६ ॥

आत्वा । गीर्भिः । हे गिर्वणो गीर्भिर्वेदवाक्यैर्वननीय भजनीय । वनतेरसुन् वृतेति तात्पर्यम् । यद्वा वृणोतेः कर्मण्यनस्प्रत्ययो डित् । इन्द्र प्रभो आशवः क्षिप्राः सोमासः सोमास्त्वा त्वामाविशन्तु । त्वामाविष्टाश्च ते सुताः प्रचेतसे यः प्रकृष्टचेतास्ते त्वदीयस्त्वद्भृत्यो यजमानोऽस्मै अस्य शं शंकराः सन्तु स्युः ॥ ७ ॥

त्वां स्तोमाः । व्यञ्जयन्ति । हेशतक्रतो प्रभो त्वां साम्नि सामविशेषाः स्तोमा अवीवृधन् व्यञ्जयन्तिस्म । एवमृक्षूक्था उक्थानि च त्वामेवावीवृधन् । हि यस्मादेवं तस्मान्नोस्माकमपि गिरस्त्वां वर्धन्तु वर्धयन्तु । महागुणैर्युक्तं त्वां व्यञ्जयन्तु । त्वामित्यस्य पुनरुक्तेरधिकमित्युक्तम् । णिज्लोपस्य तात्पर्यं स्वातन्त्र्यादिमहागुणैर्युक्तमिति । नन्वत्र वृद्धिशब्दस्य प्रसिद्ध एवार्थो युक्तः व्यक्तौ प्रयोगादर्शनादित्यत आह ॥ आकाशेति ॥ कुड्याद्यपसरणादिनाऽऽकाशेऽभिव्यक्ते वृद्ध आकाश इति प्रयोगवद्विष्णावपि वृद्धिशब्दप्रयोगो न तूपचयार्थतया । आकाशे बाधक वशादुपचरितोऽङ्गीक्रियत इति चेत् समं प्रकृतेपीत्याह ॥ नवर्धत इति ॥ जगौ वृद्धिक्षयरहितमिति शेषः । बाधकान्तरमाह ॥ महातात्पर्येति ॥ विष्णोरीश्वरत्वे यत्सर्ववेदानां महातात्पर्यं तद्विरोधाच्च न वृद्धिः श्रुत्यर्थो भवेत् । कथं विरोध इत्यत आह ॥ यदीति ॥ यदि विष्णोः स्तोमाद्यधीना वृद्धिः स्यात्तर्हीश्वरत्वं न स्यात् पराधीनश्चेश्वरश्चेति विप्रतिषेधात् । ततश्च यत्तत्र वेदानां महातात्पर्यं तद्विरुध्येतेति । विष्णोर्वृध्यङ्गीकृतावुत्तरवाक्यविरोधोऽपि स्यादित्याह ॥ अक्षितोतिरिति ॥ अस्माद्वृद्ध्याद्यभावेन स्वातन्त्र्यादेव हि विष्णोरक्षितोतिरित्युदिता पूर्णाभिप्रायता युज्यते नान्यथेत्यर्थः ॥ ८ ॥

अक्षितोतिः । अनन्त । यस्मिन्यत्रेन्द्रे विश्वानि पौंस्या पौरुषाण्यखिलाश्च शक्तयः सन्ति सोऽक्षितोतिः पूर्णाभिप्रायो वांछितस्याखिलस्य पूर्तिमानिन्द्रः सहस्रिणं सहस्रशब्दोनन्तवाची तद्वन्तम् अनन्तफलदमिति यावत् । इमं वाजमन्नं हविः सनेत् अस्मत्तो लभताम् । अथवाऽऽत्मपूजार्थं वाजमस्माभिः सनेत् सनयेत् लम्भयेत् अस्मभ्यं ददात्वित्यर्थः । यस्मिन्विश्वानि पौंस्येत्यनेनापि वाक्येन पूर्वत्र वृद्ध्यङ्गीकारे विरोध इति सिंहावलोकितेनाह ॥ अतश्चेति ॥ ब्रह्मसूत्रविरोधं च तत्राह ॥ सर्वेति ॥ एतमर्थं सर्वशक्तित्वादीश्वरस्य वृद्ध्याद्यभावम् ॥ ९ ॥

मानः ॥ मामर्ताः । हे गिर्वणः इन्द्र मर्ताः मर्त्याः नोऽस्माकं तनूनां शरीरेभ्यो माभिद्रुहन् द्रोग्धारः कथंचन मा स्युः । कथम् । येन कारणेन त्वमीशान ईशोऽसि तेन नोऽस्माकं वधं यवय अपगमय अपाकुरु । संसारे वधाभावोऽसम्भवीत्यतो मुक्तिदानत इति शेषमाह । ऋचं प्रकारान्तरेण व्याख्याति ॥ मानुषेभ्य इति ॥ मर्तानस्तनूनां माभिद्रुहन् अस्मत्तनूनां मानुषेभ्यो विपत्तयो नैवस्युः । वरमीशानस्त्वं वधं यवय प्रापय । कालेन दैवतस्त्वत्तः प्राप्तोऽदेहत्वतो देहाभावरूपेण वधः स्यात् । दुर्जनैः क्रियमाणादुपद्रवाद्देवाधीनं मरणमेव वरम् । अतस्तत्परिहारं कुर्वित्याशयः ॥ १०, १०, ५ ॥

## मन्त्रार्थमञ्जरी

सुक्रतो, शोभनज्ञान । (हे) इन्द्र । सद्यः वृद्धः, समानेऽहनि 'सद्यः' इति निपातनात्, यस्मिन्नहनि स्वयं वर्तते तस्मिन्नहनीत्यर्थः, सदा च वर्तते, अतः सद्योवृद्धः सदा वृद्धो नित्यपूर्ण इत्यर्थः । त्वम् । सुतस्य पीतये, सोमस्य पानाय । (यज्ञे यत्) अजायथाः, अभिव्यक्तोऽभवः । (तत्) ज्यैष्ठ्याय, ज्यैष्ठ्यव्यक्त्यै, सर्वदेवताभ्योऽतिशयेन सोमपानादिना ज्यैष्ठ्यं प्रकटयितुमेव, न तु क्षुदादिहेतोरित्यर्थः ॥ ६ ॥

गिर्वणः, गीर्वणः, गीर्भिर्वननीय भजनीय, 'वनं सम्भक्तौ' इत्यतोऽसुन्, वनतेर्णत्वम् । (हे) इन्द्र, प्रभो । आशवः, क्षिप्राः द्रवत्त्वात् । सोमासः, सोमाः । त्वा, त्वाम् । आ विशन्तु ॥ (आविष्टाश्च ते) प्रचेतसे, प्रकृष्टचित्ताय । ते, त्वदीयाय, त्वद्भृत्याय यजमानाय । शम्, सुखम् । सन्तु, सुखकरा भवन्तु ॥ ७ ॥

(हे) शतक्रतो, सम्पूर्णज्ञान, शताश्वमेध । त्वाम् । स्तोमाः, सामविशेषाः । अवीवृधन्, व्यञ्जयन्ति स्म, 'वृधु वर्धने' लुङ् । त्वाम् । उक्था, उक्थानि, ऋक्षु गता मन्त्रविशेषाः । (अवीवृधन्) यस्मादेवं तस्मात्, नः, अस्माकम् । गिरः त्वाम् वर्धन्तु, महागुणैर्युक्तं त्वां व्यञ्जयन्तु ॥ ८ ॥

यस्मिन् इन्द्रे । विश्वानि । पौंस्या, पौंस्यानि, पौरुषाणि सामर्थ्यानि । (सन्ति), 'ॐ आत्मनि चैवं विचित्राश्च हि ॐ' (२।१।२९) इत्यादेः । अक्षितोतिः, अक्षीणाभिप्रायः, वाञ्छितस्याखिलस्य पूर्तिमान् । इन्द्रः । सहस्रिणम्, सहस्रशब्दोऽत्रानन्तवाची, अनन्तवन्तम्, अनन्तफलदमिति यावत् । इमम् । वाजम्, अन्नं हविः । सनेत्, अस्मत्तो लभताम्, 'वन षण

सम्भक्तौ' यद्वा– आत्मपूजार्थमन्यान्प्रति वाजमस्माभिः सनेत्, सनयेत्, अस्मभ्यं यथेष्टं ददात्वित्यर्थः ॥ ९ ॥

(हे) गिर्वणः, प्राग्वत् इन्द्र । मर्ताः, मर्त्याः । नः, अस्माकम् । तनूनाम्, तनूभ्यः, व्यत्ययेन षष्ठी (चतुर्थ्यर्थे बहुलं छन्दसि' इति वा षष्ठी), शरीरेभ्यः । मा अभि द्रुहन्, द्रोग्धारो मा भूवन् ॥ (येन) कारणेन । (त्वम्) ईशानः, समर्थः । (तेन) कारणेन । (नः) अस्माकम् । वधम् । यवय, अपगमय, 'यु मिश्रणामिश्रणयोः' इति धातोः । यद्वा– नः तनूनाम्, अस्मच्छरीराणाम् । मर्ताः । मा अभि द्रुहन्, मनुष्येभ्यो विपत्तयो नैव स्युः । (वरम्) ईशानः । (त्वम्) वधम् । यवय, प्रापय ॥ दुर्जनैः क्रियमाणादुपद्रवाद्दैवाधीनं मरणमेव वरम्, अतस्तत्परिहारं कुर्वित्याशयः ॥ १० ॥ इति दशमो वर्गः ॥ १० ॥ पञ्चमं सूक्तम् ॥ ५ ॥

## पदार्थप्रकाशिका

त्वं सुतस्य पीतये । सद्यःशब्दवाच्यार्थं दर्शयति समाने अहनीति । सद्यः परुत्परार्यैष परेद्युव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरुभयेद्युरुत्तरेद्युः एते सद्य इत्याद्याः । सप्तम्यन्ताः कालविशेषाः निपात्यन्ते तत्र समाने अर्थे समानशब्दस्य सादेशे अस्मात् अभिधेये द्यप्रत्यये सद्यइति निपात्यते इत्युक्तत्वेन समाने अहनीति सद्यःशब्दार्थो युक्तः । समाने अहनीत्यनन्तरं वृद्ध इति शेषः । ततः किमित्यतः सद्य इत्यस्य तात्पर्यमाह । यस्मिन्नहनीति । तत्समानमहः तस्मिन् समाने अहनि वृद्ध इति शेषः । तथाच समाने अहनि वृद्ध इत्यस्य स्वसत्ताधिकरणभूतसमानेह्नि वृद्ध इत्यर्थः । तथाच वृद्धिर्भगवत् सत्तासमानकालीना एककालीनेत्युक्तं भवति । नन्वथापि सदेतिभाष्यं कथं सद्यःशब्दार्थकथनपरमित्यतस्तदा यस्मिन्नहनि स्वयं वर्तते तत्समानम् इत्युक्तौ तत्र कालनियमो नास्तीत्यभिप्रेत्य स्वसत्ताधिकरणभूतकालं दर्शयति । सदानेति । सच हरिः सदा सर्वस्मिन् काले वर्तत इत्यर्थः । अथापि किं इत्यत आह । अत इति । भगवतः सदा सत्वे वृद्धे तत्समानकालीनत्वे सदावृद्धत्वमायातमित्यर्थः । इदानीं सद्योवृद्धमित्येतद्व्याख्यानपरं भाष्यं सङ्गमयति । सदापूर्ण इति ॥ ननु पीतये इत्यस्य पा पाने इति धातुजत्वादाप्तय इति भाष्यस्याप्लृव्याप्ताविति धातुजत्वात्कथं तयोर्व्याख्यानव्याख्येयभाव इत्यत आह । सुतात्पये इति । तात्पर्यमिति । सुतस्य पाने सुतस्य प्राप्तिं विना न सम्भवतीत्याशयेन सुतस्य पीतय इत्यस्य सुताप्तय इति तात्पर्यमुक्तमित्यर्थः । पीतय इति ऋक्पदस्वारस्यमङ्गीकृत्य भाष्यं तात्पर्यकथनमिति व्याख्यायेदानीं सुताप्तय इति भाष्यस्वारस्याय पीतय इत्यस्यैव तदनुसारेणार्थमाह । यद्वेति । एतत्

पीतय इत्येतत्। तथाचापीत्युपसर्गपूर्वकात् इण् गतावित्यस्मात् कित् प्रत्यये ककारनकारयोर्लोपे अपि इतीति जाते सवर्णदीर्घे अपीतीतीकारान्तप्रातिपदिके सिद्धे पश्चात्स्वाद्युत्पत्तौ अपीतय इति भवतीति द्रष्टव्यम्। ननु तर्हि ऋचि पीतय इति कथमित्यत आह। वष्टीति। वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरिति वचनादित्यर्थः। भागुरिनामा ऋषिरवाप्योरुपसर्गयोरकारस्य लोपं वक्तीति तदर्थ इत्यर्थः। तथापेरुपसर्गस्याकारलोपे पीतय इत्युक्तम्। एवं च सुतस्य पीतये सुताप्तय इति जनी प्रादुर्भाव इति। धातोराह। अभिव्यक्तय इति। यज्ञ अभिव्यक्तेः कथं ज्यैष्ट्याभिव्यक्त्यर्थत्वमित्यत आह। सर्वदेवताभ्य इति। अतिशयेनेति। अग्रत इत्यर्थः। भाष्ये ज्यैष्ठ्याभिव्यक्त्यै इत्यत्रावधारणमभिप्रेतं सर्वं वाक्यं सावधारणमितिन्यायात्। अत एव न क्षुदादेरियमिति तद्व्यावर्त्यं कथितमित्याशयेनाह। ज्यैष्ठ्यं प्रकटयितुमेवेति ॥ ६ ॥

आत्वाविशंत्वाशवः। गीर्वणाः देवो भवति गीर्भिरेनं वनयतीति हृदि निधाय तदनुसारेण गीर्वण इत्यस्यार्थमाह। गीर्भिरित्यादिना। भजनीयेति। वनषणसम्भक्ताविति धातोरिति भावः। वनतेरसुन्निति। गीरित्युपपदात् वनषण सम्भक्तावित्यस्मात् कर्मणि असुन्प्रत्यये नकारलोपे रेफात्परस्य नस्य णत्वे गिर्वणस् इति प्रातिपदिके सति संबुद्धौ सोर्लोपे प्रातिपदिकान्त्यसकारस्य रुत्वविसर्गे च सति गिर्वण इति संबुद्धिर्द्रष्टव्या। ननु वृतस्य वृञ्वरण इत्यस्मात् क्तप्रत्यये सति निष्पन्नत्वात्तेन कथं भजनार्थकवनधातोर्व्याख्यानमित्यत आह। वृतेतीति। तथाच वरणीयेति वनधातोस्तात्पर्यकथनमेव न व्याख्यानमित्यर्थः। ऋकूपदस्वारस्याय भाष्यपदं तत्तात्पर्यकथनरूपमिति व्याख्यायेदानीं भाष्यपदस्वारस्याय तदनुसारेण ऋकूपदस्यैव व्युत्पत्यंतरमाह। यद्वेति। तथाच गीरित्युपपदात् वृञ्वरणे अस्मात् कर्मण्यसुन्प्रत्यये तस्य डित्कार्यकारित्वाङ्गीकारात् टीभूतस्य ऋञ् इत्यस्य लोपे गिर्वनस् इति जाते नस्य णत्वे गिर्वणस् इति प्रातिपदिकं तत्सम्बुद्धिः गिर्वण इति। तथाच हे गिर्वणः गीर्भिर्वृत वरणीय स्वीकर्तव्येति ऋग् भाष्ययोरैकार्थ्यमिति भावः। क्षिप्राः वेगवन्तः द्रवत्वादिति भावः। अध्यात्मं मनसां चञ्चलत्वादाशुत्वं द्रष्टव्यम्। त्वामाविशंतु प्राविशन्तु। तान् पिबेति यावत् ॥ ७ ॥

त्वां स्तोमा अवीवृधन्। साम्नीति। सामवेदे विद्यमानाः सामविशेषा इत्यर्थः। ऋक्ष्विति। ऋग्वेदे विद्यमानाः उक्थाः शस्त्रविशेषाः इत्यर्थः। युक्तमिति भाष्ये अध्याहारः। भाष्येऽधिकमहागुणैर्युक्तमित्यनेन व्याख्येयपदस्य ऋच्यप्रतीतेराह। त्वामित्यस्येति। पुनरुक्तेरभ्यासादित्यर्थः। त्वां स्तोमा उक्थाश्चावीवृधन्नित्येतावता चरितार्थत्वात् पुनर्यस्त्वामित्यभ्यासस्तस्यार्थो अधिकमितीति द्रष्टव्यम्। णिज्लोपस्येति। वृधुवर्धनइति धातोरात्मनेपदित्वेपि

व्यत्ययेन परस्मैपदमिति लिटि तिबादेशे यकारलोपे कर्तरि शपि तयोर्लोपे णिचि तयोर्लोपे वृध् इतीति स्थिते ऋकारस्यगुणे तस्य रपरत्वे वर्धवृद्धीतिजाते इकारस्यैकारे तस्यचायादेशे वर्धयतीति जाते नुमागमे एरुरिति इकारस्य उकारे वर्धयंत्विति भाव्ये यत् णिचोलोपेनान्निमित्तकायदेशाभावे च सति वर्द् अन्तुवर्धंत्विति रूपम् । तस्येदं तात्पर्यकथनमित्यर्थः । स्वातन्त्र्यादिति । महागुणैर्युक्तमित्येव वक्तव्ये स्वातन्त्र्यादीत्युक्त्या स्वातन्त्र्याल्लप्रत्ययो भवेदिति नियामकमनेन सूचयति । य इति रूपलक्षणमिति पूर्वव्याख्यानत्वादिति ज्ञातव्यम् । वृद्धिशब्दस्येति । वृद्धिप्रतिपादकस्य वर्धतिशब्दस्येत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । प्रसिद्धोऽवयवोपचयाख्याभिवृद्धिरूपः । व्यक्तौ अभिव्यक्तौ । कुडच्याद्यपसरणादिनेति । प्रयोगवत् उपचारेणेति शेषः । बाधकेति । अव्याकृताकाशस्य नित्यत्वेनावयवोपचयरूपाभिवृद्धिरूपप्रसिद्धार्थसम्भवादित्यर्थः । उपचरितोभिव्यक्तिरूपो । सममिति । बाधकमित्यर्थः । रहितमेनं भगवन्तमित्यर्थः । विरोधो महातात्पर्यविरोधः । नान्यथेति पराधीनवृद्धिसद्भावे स्वातन्त्र्याभावप्राप्त्या अक्षितोतिरिति वक्ष्यमाणा पूर्णताभिप्रायता न युक्ता स्यादित्यर्थः । तथाचैवं श्रुतिमाह । तात्पर्योत्तरवाक्याभ्यां विरोधाभिव्यक्तिरेव वृद्धिशब्दार्थ इति सिद्धमिति भावः ॥ ८ ॥

अक्षितोतिः सनेदिवम् । अक्षिता क्षयरहिता ऊतिरभिप्रायो अस्येति अक्षितोतिरिति श्रौतपदस्य पूर्णाभिप्रायतोदितेति प्राचीनभाष्यानुसारेण प्रतिपाद्यमाह । पूर्णाभिप्राय इति । इति यावदिति । भाष्ये तात्पर्यमात्रमेवोच्यत इत्यर्थः । पूर्वत्रेति त्वां वधीत्विति पूर्ववाक्य इत्यर्थः । पूर्वत्र वृध्यङ्गीकारे अनेनापि वाक्येन विरोध इत्यन्वयः । सिंहावलोकनेनेति । सिंहावलोकनन्यायेनेत्यर्थः । ब्रह्मसूत्रेति । सर्वोपेता च तद्दर्शनादिति सूत्रेत्यर्थः । सर्वैर्युक्ता शक्तिभिर्देवता सा परेति यां प्राहुरजस्रशक्तिं नित्यानन्दा नित्यरूपाश्वराच या शाश्वतात्मेति च यां वदन्तीति भाष्योक्तश्रुत्या सूत्रार्थो ज्ञातव्यः ॥ ९ ॥

मानोमर्ता अभिद्रुहन् । मर्ता मर्त्या इति मर्त्यो मर्ता यं प्रति कोप इति द्रुहधातोर्योगे चतुर्थीविधानादाह । तनूनां शरीरेभ्य इति । वधं मरणं युमिश्रण अमिश्रणाविति धातोरविमिश्रार्थकस्य यवयेत्यस्याभिप्रायमाह अपगमयेति । तत्र भाष्यं संवादयति अपाकुर्वंत्विति । शेषमाहेति ऋचीति शेषः । विपत्तयः क्लेशाः । वरमिति ऋच्यध्याहारः । वधं यवयेत्येतद्विष्णोः त्रिकालेनेत्यादिना मिश्रार्थकस्य यवयेत्यस्य तात्पर्यं प्रापयेति । तसेः सार्वविभक्तिकत्वादाह । अदेहत्वतो देहाभावरूपेणेति । वधः स्यादित्येतदेव वरमित्यन्वयः । भाष्यस्यापि तात्पर्यमाह । दुर्जनैरिति । तत्परिहारमाह । दुर्जनैः क्रियमाणोपद्रवपरिहारमित्यर्थः ॥ १० ॥ १० ॥ ५ ॥

## पदार्थदीपिका

सद्यः शब्दार्थमाह ॥ समानेऽहनीति ॥ सद्यः परूत्परुरिति सूत्रे समानशब्दे सभावस्य द्यप्रत्ययस्य चाहन्यभिधेयेति निपातनादिति भावः । ततः किमित्यतः समानेऽहनीत्यस्य तात्पर्यमाह ॥ यस्मिन्निति ॥ तथापि कथं सदेति लब्धमित्यत उक्तम् ॥ सदा च स्वयं वर्तत इति ॥ पिबतेः स्थागापापचोभाव इत्यनेन क्तिन्प्रत्यये घुमास्थागायेत्यादिना चेत्वे सति निष्पन्नस्य पीतय इत्यस्यार्थमाह ॥ पानायेति ॥ भाष्यस्वारस्यमनुसृत्य पीतय इत्यस्यार्थान्तरमाह ॥ यद्वेति ॥ नन्वेवमपीतय इति भवितव्यं, पीतय इति तु कथमित्यत आह ॥ वष्टीति ॥ ६ ॥

असुन्निति ॥ कर्मण्यसुन् प्रत्यय इत्यर्थः । भाष्यस्वारस्यार्थमाह ॥ यद्वेति ॥ डिच्चेति ॥ डित्वाट्टिलोप इति भावः ॥ ७ ॥

ननु वृधुवृद्धावित्यस्माण्यन्ताल्लुङि णिश्रिद्रुस्तुभ्यःकर्त्तरिचङिति चङि उर्कृत् इति वर्तमाने नित्यं छन्दसीति ऋकारस्य रकारविधिसामर्थ्यात् अन्तरङ्गस्यापि गुणस्य बाधे सन्वल्लघुनीत्यादिना सन्वद्भावे द्विर्भावे हलादिशेषे अभ्यासस्येत्वे दीर्घत्वे च अडागमे च सति निष्पन्नस्य वीवृधन्निति श्रौतपदस्य कथं भाष्ये व्यञ्जयन्तीति प्रतिपदमित्यतो नायं वर्तमानार्थको लट्, किन्नाम स्मयोगे भूतानद्यतनपरोक्षे लट्स्म इति विहित एव । अतो व्यञ्जयन्तीति पदं युक्तमित्याशयेन शेषं सम्पूर्य व्याचष्टे ॥ व्यञ्जयन्ति स्मेति ॥ वर्धन्तु वर्धयन्त्विति ॥ अन्तर्णीतण्यर्थात् वृधेरनुदात्तेतो व्यत्ययेन परस्मैपदमिति भावः ॥ णिज्लोपस्य तात्पर्यमिति ॥ वर्धन्त्वित्यत्रेति शेषः । यथा चैतत्तथाग्रे स्फुटम् ॥ ८ ॥

पौंस्या पौरुषाणीति ॥ पुंसः कर्मेत्यर्थे ब्राह्मणादेराकृतिगणत्वात् गुणवचनं ब्राह्मणादिभ्यः कर्मणि चेत्यनेन षञि ञित्वादादिवृध्दौ द्वितीयाबहुवचनस्य सुपांसुलुगित्यादिनाऽदेशे च पौंस्येति अभिमतरूपसिद्धिः । ननु च स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादित्यनेन धान्यानां भवने क्षेत्रे खञित्येत् तात्पर्यं तेषु अपत्याद्यर्थेषु नञ्स्नञयोर्विधानात् यथा पुंसः अपत्यं पौस्नः, पुंसः आगतः पौस्नः इत्यदि भवति तद्वत् पुंसो भावः कर्मवेत्यस्मिन्नर्थे ष्यञं बाधित्वा स्नञ्प्रत्यये पौस्नानि इत्येव भवितव्यं, तत्कथमुच्यते पौंस्यानीति इति चेदत्र ब्रूमः । आचत्वादिति सूत्रे त्वादित्यवधिनिर्देशात् ब्रह्मणस्तु इत्येतत्पर्यन्तैरिमनिजादिभिः समावेशः एवं तत्रैव चशब्दात् नञ्स्नञोरपि ष्यञादिभिः समावेशस्यैवाङ्गीकृततया स्त्रीपुंसाभ्यां इत्यस्य ष्यञ्बाधकत्वाभावेन ष्यञ्प्रत्यये पौंस्यानीत्यस्य युक्ततरत्वादिति भावः । पुरुषकर्माणीत्यर्थे हायनान्तयुवादिभ्योऽण् इत्यनेन युवादिपुरुषा से इति

पाठात् अण्प्रत्यये पौरुषाणीति सिध्यतीति भावः ॥ अखिला इति ॥ अखिलाः शक्तयः इति भाष्यं श्रौतपदस्य तत्पदस्य च तात्पर्यमिति भावः ॥ ९ ॥

शरीरेभ्योमाभिद्रुहन्निति ॥ द्रुहेर्ष्यासूयार्थानां यं प्रतिकोपः इत्यनेन चतुर्थी । न चोपसर्ग-योगाभावे देवदत्ताय क्रुध्यति, यज्ञदत्ताय द्रुह्यतीत्यादौ तेन चतुर्थीसम्भवेऽपि उपसर्गयोगे क्रुधद्रुहोरुपसृष्टयोः कर्मेति कर्मसंज्ञायां तद्बाधे देवदत्तमभिद्रुह्यतीत्यादाविव माभिद्रुहन्निति अभियोगस्य प्रकृते सद्भावेन कर्मसंज्ञायां द्वितीयैव स्यात् न चतुर्थीति वाच्यम् । द्रोग्धारः स्युः कथंचनेति भाष्ये अभिशब्दस्य कथञ्चनेति व्याख्यातत्वात् । तस्य च प्रत्ययार्थान्वयोऽपि देवदत्तमभिद्रुह्यतीत्यादाविव प्रकृत्यर्थान्वयात् निषेधार्थकमाशब्देन च अन्वितत्वात् । उपसृष्टयोरित्यत्र च अभिशब्दार्थस्य धात्वर्थे अन्वये सत्येव कर्मसंज्ञाविधानेन प्रकृते तदप्राप्तेः सामान्यप्राप्तचतुर्थ्या एव सम्भव इत्याशयात् ॥ माभिद्रुहन्निति ॥ द्रुह जिघांसायामित्यस्माल्लिङर्थे लेडिति प्रार्थनायां लेटि झोऽन्त इति झेरन्तादेशे इतश्चलोपः परस्मैपदेष्वितीकारलोपे शपि लुकि सार्वधातुकमपिदिति ङो ङित्वात् लघूपधगुणाभाव इति भावः । ॥ यवय इति ॥ यौतेर्णिचि संज्ञापूर्वकविधेरनित्यत्वात् न वृद्धिरिति भावः ॥ यवय प्रापयेति ॥ यौतेरुच्छ्रयार्थत्वात् ॥ १० ॥

## टीकाविवृतिः

त्वंसुतस्य ॥ सद्यःशब्दार्थमाह ॥ समानेऽहनीति ॥ सद्यःपरुदितिसूत्रेण समानशब्दादहन्यर्थे द्यस्प्रत्ययः तस्य सादेशश्च निपात्यत इत्याशयः । सद्योवृद्ध इत्यस्यसदापूर्ण इति व्याख्यानं सङ्गमयितुमाह ॥ यस्मिन्नहनीति ॥ तथापि कथं सदेति लब्धमित्यत आह ॥ सदाचेति ॥ पिबतेःक्तिनि घुमास्थागापाजहातिसांहलीतीत्वेपीति शब्दनिष्पत्तिमाश्रित्य व्याकुर्वन्भाष्यं च संगमयति ॥ सोमस्य पानायेति ॥ भाष्यं पदार्थकथनपरत्वेन योजयति ॥ यद्वेति ॥ तर्हि अपीतय इति स्यादित्यत आह ॥ वष्टीति ॥ भागुरिराचार्यः । वष्टि इच्छति । वशकान्तौ कान्तिरिच्छेत्युक्तेः ॥ नक्षुदादेरिति ॥ भाष्योक्तव्यावृत्तिघटनाय ऋक्पूर्वोत्तरार्धौ यत्तच्छब्दाध्याहारेण योजयति ॥ यदजायथा इति ॥ क्षुदादेरिति हेतौ पञ्चमीत्याशयेनाह ॥ क्षुदादेर्हेतोरिति ॥ क्षुदादिशब्देन तन्निवृत्तिर्लक्ष्यते । मशकेभ्यो धूम इति यथा ॥ ६ ॥

आत्वाविशंतु ॥ गीर्वाणो देवो भाति गीर्भिरेनं वनयन्तीति निरुक्तं मनसि निधायाह ॥ गीर्भिरिति ॥ भाष्योक्तः पदार्थ एवेत्याशयेनाह ॥ यद्वेति ॥ वशेःकनसिरित्युक्तो बाहुल-काद्वृत्रोपीति भावः । ते तव प्रचेतस इति वैयधिकरण्येनान्वयमभिप्रेत्य भाष्ये व्याख्यातं

प्रकृष्टचेतास्त्वद्भृत्य इति । तद्योजयति ॥ यःप्रकृष्टचेता इति ॥ प्रचेतसे ते तुभ्यमिति समानाधिकरणं नित्यसुखत्वेन विष्णोःसोमपानजन्यसुखाभावाद्बाधितमिति भावः ॥ ७ ॥

त्वांस्तोमाः ॥ निर्धारणे सप्तमीत्याशयेनाह ॥ साम्नीति ॥ समुदायविवक्षयैकवचनम् । सामसमुदायमध्ये ये स्तोमा इत्यर्थः । सामविशेषा इति तु तात्पर्यार्थ इति ज्ञेयम् । वृधेर्णिजन्ताल्लुङि च्लेर्णिश्रीति चङि उर्ऋत् नित्यं छन्दसीत्यन्तरङ्गगुणापवादेनोपधाया ऋकारादेशे द्वित्वे उरदिति धात्वभ्यासस्यात्वे सन्वद्भावेनेत्त्वे दीर्घोलघोरिति दीर्घे णिलोपे अवीवृधन्निति रूपम् । अस्य भूतार्थस्य भाष्ये व्यंजयन्तीति वर्तमानार्थकलडन्तप्रतिपदप्रतीतेस्तद्घटयितुं स्मेत्यध्याहरति ॥ व्यञ्जयन्तिस्मेति ॥ नायं वर्तमाने लडिति विहितोलट् किन्तु लट्स्म इति स्मशब्दयोगे भूतानद्यतनपरोक्षार्थकधातोर्विहित इतिभावः । अवीवृधन्निति णिच्प्रकरणादन्तर्भावितण्यर्थो वृधिरित्याशयेनाह ॥ वर्धन्तु वर्धयंत्विति ॥ यद्यपि वृधुधातुरनुदात्तेत्त्वादात्मनेपदी । ते वर्धन्त स्वतवसः वर्धतांद्यावोनरः वर्धतां चते यज्ञपतिः अभ्यवर्धन्त सम्यंच इत्यादिप्रयोगात् । तथाप्यनुदात्तेत्त्वनिमित्तमात्मनेपदमनित्यं चक्षिङो ङित्करणसामर्थ्यादिति वैयाकरणसिद्धान्तादुभयपदित्वम् । अथाभ्यवर्धन् धर्मोवर्धत्वित्यादिप्रयोगादवगन्तव्यम् ॥ पुनरुक्तेरिति ॥ अभ्यासरूपाया इत्यर्थः । आधिक्येऽधिकमिति महाव्याकरणसूत्रादित्याशयः ॥ णिज्लोपस्येति ॥ अन्तर्णीतणिच इत्यर्थः । वर्धत्वित्यत्रेति शेषः । महाव्याकरणेऽन्तर्णीतणिचः स्वातन्त्र्यादौ विधानादिति भावः । वृद्धिशब्दस्य व्यक्तिपरत्वेन व्याख्यानादाकाशवृद्धिवदित्यादिभाष्यं व्यर्थमित्यतोवतारयति ॥ नन्विति ॥ प्रसिद्ध एवार्थः अवयवोपचयरूपः ॥ बाधकवशादिति ॥ अनादिर्वा अयमाकाश इति श्रुत्याऽव्याकृताकाशस्यानादित्वोक्त्योपचयाभावसिद्धेः पुनस्तदङ्गीकारे श्रुतिरेव बाधिकेति भावः । भाष्ये नवर्धत इत्यनेन नकर्मणा वर्धते नोकनीयानिति श्रुतिरुपात्ता ज्ञेया । क्षिक्षय इत्यतः कर्मणिक्तप्रत्यये नञ्समासे अक्षिता अक्षीणा पूर्णेति यावत् । ऊतिरभिप्रायो यस्य सोक्षितोतिरित्यर्थं मनसि निधायाह ॥ पूर्णाभिप्रायतेति ॥ वाञ्छिताखिलपूर्तिरिति यावदित्याशयः ॥ ८ ॥

अक्षितोतिः ॥ पुंसः कर्मणीत्यर्थे स्त्रीपुंसाभ्यांनञ्स्नञौ भवनादिति तथा आचत्वादिति त्वतलोश्चाधिकारात्स्नञ्प्रत्यये त्वतलोश्च प्राप्तौब्राह्मणादेराकृतिगणत्वाद्गुणवचनब्राह्मणादिभ्यः कर्मणिचेति ष्यञि पौंस्येति रूपमिति भावेन पौरुषाणीति भाष्ये व्याख्यातम् । तथा भावार्थे चपौंस्येतिशब्दनिष्पत्तिमाश्रित्याखिलाश्च शक्तय इति व्याख्यानान्तरं कृतमिति भावेनाह ॥ पौंस्यापौरुषाणीत्यादि ॥ युवादिगणे पुरुषासे इति पाठात्पुरुषशब्दादसमासे कर्मार्थे

हायनान्तयुवादिभ्योणित्यणिति भावः । अखिलाश्च शक्तय इत्यस्य तात्पर्यार्थत्वाङ्गीकारेच शब्दस्य भिन्नक्रमत्वादिकं कल्प्यम् ॥ अनन्तवाचीति ॥ सहस्रशब्दस्य बहुनामसु पाठादितिभावः ॥ सनेदिति ॥ वनषणसंभक्तावित्यतःप्रार्थनायां लिङ् । संभजेदित्यर्थः । लभतामिति तात्पर्यार्थः । अन्तर्णीतण्यर्थत्वमाश्रित्य ददातुवेति भाष्यं प्रवृत्तमित्याशयेनाह ॥ अथवेति ॥ ब्रह्मसूत्रेति ॥ सर्वोपेताचतद्दर्शनादिति ब्रह्मसूत्रविरोधमित्यर्थः । सर्वैर्युक्ता शक्तिभिर्देवतासा परेति यां प्राहुरजस्रशक्तिम् । नित्यानन्दा नित्यरूपा जराचया शाश्वतात्मेति चयांवदन्तीति श्रुतौ कण्ठतः सर्वशक्त्युक्तेः नित्यरूपेत्यादिविशेषणाद्वृद्ध्यभावोक्तेश्च सूत्रं विष्ण्वाख्यदेवतासर्वशक्त्युपेता चशब्दाद्वृद्ध्यादिदोषशून्याचेति व्याख्येयमिति भावेन भाष्योक्तैतच्छब्दं सन्निहितपरामर्शकमिति भ्रान्तिवारणाय व्याचष्टे ॥ एतमर्थमिति ॥ ९ ॥

मानोमर्ताः ॥ मर्ताःमर्त्या इति ॥ मर्त्याः मर्ताः व्राता इति मनुष्यनामसु पाठादिति भावः । श्रुतौ भाष्येच तनूनामित्यत्र क्रुधद्रुहेत्यादिना संप्रदानत्वं नविवक्षितम् । अतः शेषत्वविवक्षया षष्ठ्येवेति भावेन स्वयं व्याचष्टे ॥ तनूनां शरीरेभ्य इति ॥ ननु क्रुधद्रुहोरुपसृष्टयोः कर्मेति सूत्रेणात्राभिशब्दयोगेन कर्मत्वाच्छरीराणीति द्वितीयान्तं प्रतिपदं वाच्यमित्यतो भीत्यस्यार्थं भाष्योक्तं सङ्गमयति ॥ कथंचनेति ॥ तथाच द्रुहेरुपसृष्टत्वाभावान्न कर्मत्वमिति भावः । द्रुहजिघांसायामित्यतोमाङ्योगात्प्रार्थनालिङपवादे माङिलुङिति लुङि पुषादित्वात्पुषादिद्युता-दीत्यादिनाच्लेरङि झेरन्तादेशे इकारलोपे संयोगान्तलोपेऽडभावेच द्रुहन्निति रूपमिति भावेन भाष्योक्तार्थं संयोजयति ॥ द्रोग्धारो मास्युरिति ॥ मा स्युरिति तु निषेधार्थको माशब्दोयं नमाङ् । युमिश्रणामिश्रणयोरित्युक्तेरमिश्रणार्थकयौतेर्णिचि छान्दसोवृद्ध्यभाव इतिभावेन पदार्थं वदन् भाष्यं सङ्गमयति ॥ अपगमयेति ॥ प्रकारान्तरेणेति ॥ पूर्वार्धे द्रुहेर्हननेच्छारूपार्थाङ्गीकारेण व्याख्यातमिदानीं विपत्तिकरणरूपार्थाङ्गीकारेणेति प्रकारभेदः उत्तरार्धेतु सर्वोप्यर्थो भिन्न एवेतिभावः । मानुषेभ्यस्तनूनाञ्चेति भाष्यंतात्पर्यार्थकथनपरम् । अक्षरयोजनातु पूर्वोक्तैवेत्याशयेनाह ॥ मर्तान इति ॥ अस्मिन्पक्षे द्वितीयार्धं वरमित्यध्याहारेण योजयति ॥ वरमीशान इति ॥ केचित्तु यवया वधमित्यत्र संहिताकाले श्रूयमाणस्य दैर्घ्यस्य संहितायां यत्रदैर्घ्यं पदे यत्र नदृश्यते । आधिक्यं तत्र विज्ञेयमित्युक्तत्वेनाधिक्यार्थकत्वात्तदेवाधिक्यं विवक्षितं भाष्ये वरमिति पदाध्याहारेण तस्यचवधमित्यनेनान्वयं दर्शयति वरमितीत्याहुः । यौतेर्मिश्रणार्थमाश्रित्याह ॥ यवय प्रापयेति ॥ कालेनेत्यादि भाष्यं तात्पर्यार्थकथनपरमिति भावेन व्याचष्टे ॥ कालेनेत्यादि ॥ कालेन मरण-कालेन । ऋचोऽभिप्रायमाह ॥ दुर्जनैरिति ॥ तत्परिहारमुपद्रवपरिहारम् ॥१०॥ दशमोवर्गः॥

## ऋक्संहिता पदपाठसहिता

(५१) युञ्जन्ति ब्रध्नमरुषं चरन्तं परितस्थुषः ॥ रोचन्ते रोचना दिवि ॥ १ ॥

(प०) युञ्जन्ति । ब्रध्नम् । अरुषम् । चरन्तम् । परि । तस्थुषः । रोचन्ते । रोचना । दिवि ॥ १ ॥

(५२) युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे ॥ शोणा धृष्णू नृवाहसा ॥ २ ॥

(प०) युञ्जन्ति । अस्य । काम्या । हरी इति । विऽपक्षसा । रथे ॥ शोणा । धृष्णूइति । नृऽवाहसा ॥ २ ॥

(५३) केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे ॥ समुषद्भिरजायथाः ॥ ३ ॥

(प०) केतुम् । कृण्वन् । अकेतवे । पेशः । मर्याः । अपेशसे ॥ सम् । उषत्ऽभिः । अजायथाः ॥ ३ ॥

(५४) आदह स्वधामनु पुनर्गर्भत्वमेरिरे ॥ दधाना नाम यज्ञियम् ॥ ४ ॥

(प०) आत् । अह । स्वधाम् । अनु । पुनः । गर्भऽत्वम् । आऽईरिरे ॥ दधानाः । नाम । यज्ञियम् ॥ ४ ॥

(५५) वीळुचिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः ॥ अविन्द उस्रिया अनु ॥ ५, ११ ॥

(प०) वीळु । चित् । आरुजत्नुऽभिः । गुहा । चित् । इन्द्र । वह्निऽभिः ॥ अविन्दः । उस्रियाः । अनु ॥ ५,११ ॥

## ऋग्भाष्यम्

पौंस्यानि वासुदेवस्य ब्रध्नं वृद्धं दिवाकरम् ।
अरुणं चरन्तं परितो गिरीन्युञ्जन्ति सर्वदा ।
तैरेवान्यानि चन्द्रादिरोचनानि त्रिविष्टपे ।
रोचयन्ति ॥ १ ॥
हरीचास्य मनोबुद्धी स्वशक्तयः ।
युञ्जंत्यधिगुणत्वेन काम्यावश्चावथापि वा ।
विशिष्टपक्षसंयुक्ताविव क्षिप्रतरौ सदा ।

रथे देहेपि वादेवाः स्वमनो बुद्धिमेव च ।
अस्य देहे प्रयुञ्जन्ति सूर्यादीन्स्थापयन्ति च ।
सूर्यादिस्थापकत्वं च ब्रह्मादीनां भवेत्सदा ।
शोणौ च शमणौ प्रोक्तौ सुखप्राप्तौ यतस्सदा ।
श्यामौ मूर्धनि शोणौ च शक्राश्वावग्रगौ स्मृतौ ।
धृष्णौ नृन्प्रति तं वेशं वहंतौ तावुभावपि ॥ २ ॥
अज्ञाय कुर्वन्सज्ज्ञानं हेमाहेमाय चेश्वर ।
उपद्भिः सम्प्रकाशद्भिः शक्तिभिर्व्यक्ततामगाः ।
मर्या मरणवन्तोपि देवा एवम् ॥ ३ ॥
हरेर्वशात् ।
तदेव सुखमन्वेव पुनर्गूढत्वमापिरे ।
स्वेच्छयैव परेशस्य शक्तयो देवता अपि ।
यज्ञे वाच्यं दधानाश्च नाम ॥ ४ ॥
वीळुदृढं ह्यपि ।
आरुजद्भिः स्वसामर्थ्यैर्गुहायां संस्थितोपि सन् ।
वहद्भिरखिलं लोकं प्रकाशत्वानि लब्धवान् ।
देवैर्वैतादृशैः साकमानुकूल्येन लब्धवान् ॥ ५, ११ ॥

## ऋग्भाष्यटीका

युञ्जन्ति । दशर्चमेतत्सूक्तम् । तत्र प्रथमा द्वितीया चतुर्थीच मारुत्यः । तृतीया पञ्चमी चैन्द्रमारुत्यौ । शेषाश्चैंद्र्य इति विभागः । तत्रेश्वरविषये तावद्व्याख्याति ॥ पौंस्यानीति ॥ यस्मिन्विश्वानि पौंस्येति प्रकृतानि वासुदेवस्य पौंस्यानि अरुषमरुणं वर्णतः । तस्थुषः स्थावरान् गिरीन् परितश्चरन्तं ब्रध्नं दिवाकरम् । कथम् । वृद्धं वृद्धत्वेन ब्रध्नशब्दवाच्यम् । वृधुवृद्धावित्यस्यैतद्रूपम् । अत एव महन्नामसु पाठः । सर्वदा युञ्जन्ति नियुञ्जते प्रवर्तयन्ति । किं चैतैरेव पौंस्यैर्निमित्तैरन्यानि दिवाकराच्चन्द्रादीनि रोचनानि ज्योतींषि दिवि त्रिविष्टपे रोचन्ते दीप्यन्ते रोचयन्ति चान्यान् ॥ १ ॥

युञ्जंत्यस्य । हरीच । प्रकृता वासुदेवस्य स्वशक्तयः स्वरूपभूताः शक्तयोऽस्य हरी एतदधीने मनोबुद्धी रथे भक्तानां देहे युञ्जन्ति योजयन्ति । तान्मनस्विनो बुद्धिमतश्च कुर्वन्ति । एतामृचं मरुद्विषये व्याख्याति ॥ अपि वेति ॥ देवा मरुतोपि वा अस्येन्द्रस्य हरी अश्वौ तस्यैव रथे युञ्जन्ति

योजयन्ति । अथवा देवाः स्वीयं मनोबुद्धिं चास्य जीवजातस्य ये देहे युञ्जन्ति तत्प्रेरणाय प्रयुञ्जते । पूर्वामप्यृचं मरुद्विषयतया तात्पर्यतो व्याचष्टे ॥ सूर्यादीनिति ॥ वासुदेवस्य पौंस्यानीति स्थाने देवा इति वक्तव्यम् । समानमन्यत् । सूर्यादिस्थापकत्वं किं सर्वदेवतासु प्रतिपत्तव्यं नेत्याह ॥ सूर्यादीति ॥ अन्येषु लक्षणया प्रयोग इति भावः । ब्रह्मादीनामित्युक्त्या मरुच्छब्दः सर्वदेवतावचनः प्रतिपत्तव्यः । द्वितीयस्यामृचि काम्यादिविशेषणानि मनोबुद्ध्योरश्वयोश्च योजयति ॥ अधिगुणत्वेनेत्यादिना । अधिगुणत्वं काम्यत्वे हेतुर्नतु शब्दार्थः । विशिष्टौ पक्षौ ययोस्तौ विपक्षौ । असम्भवात् गौण्या वृत्त्या योजयति । विशिष्टेति ॥ पक्षिणाविति शेषः । शमणावित्यस्यैव विवरणं सुखप्राप्तौ यतः सदेति । अणतेः पचाद्यच् । शं सुखमणौ प्राप्तौ शमणौ । तावेव शोणौ । शंशब्दसमानार्थः शशब्दः अकारस्योकारः । तस्यार्थः सदेति । नन्वस्तु मनोबुद्ध्योरिदं व्याख्यानमश्वयोस्तु शोणत्वं प्रसिद्धमेव किं न स्यादित्यत आह ॥ श्यामाविति ॥ यतः शक्राश्वौ श्यामौ प्रमितौ अतोऽसम्भवाद्योगस्तत्राप्यनुसर्तव्य एव । प्रकारान्तरेण शोणशब्दमश्वयोर्व्याचिष्टे ॥ मूर्धनीति ॥ उत्तमाङ्गसम्बन्धिना गुणेन लक्षणया शोणावुच्येते । नन्विन्द्रस्य सहस्राश्वत्वात् द्वयोरेवाश्वयोर्ग्रहणं कस्मादित्यत आह ॥ अग्रगाविति ॥ प्राधान्यात् द्वयोरेव ग्रहणमिति भावः । धृष्णू धृष्टौ वियातौ । नॄन्प्रतीत्यनेन नृवाहसावित्येतत् नॄन्प्रति वहंताविति नरन्तमीशमिन्द्रं विष्णुं वा वहन्ताविति च द्वेधा व्याख्यातम् । तावुभावपीति मनोबुद्धी अश्वौ चेत्यर्थः । काम्यावित्यादौ सर्वत्रेदं सम्बध्यते ॥ २ ॥

केतुम् । अज्ञाय हे इन्द्र ईश्वर त्वमकेतवे अज्ञाय अज्ञस्य केतुं सज्ज्ञानं कृण्वन् कुर्वन्नपेशसे अहेमाय हेमवर्जितस्य पेशो हेमच कुर्वन्नुषद्भिः । वशकान्तावित्यस्येदं रूपम् । शकारषकार आधिक्यार्थः । सम्प्रकाशद्भिः सम्प्रकाशमानैः पौंस्यैः शक्तिभिः । सह समजायथाः यज्ञे व्यक्ततामगाः । न केवलं त्वं किन्तु मर्यामरणवन्तो देवाः अप्येवम् । अकेतवे केतुमपेशसे पेशश्च कुर्वतः स्वसामर्थ्यैः सह समजायन्तेति ॥ ३ ॥

आदह ॥ हरेर्वशात् । यज्ञियं यज्ञे भवं यज्ञे वाच्यं नाम दधानाः परेशस्य शक्तयः । आत् अकारवाच्याद्विष्णोर्निमित्तात् । स्वेच्छयेति यावत् । अह तदैव यज्ञे व्यक्तत्वादनन्तरमेव स्वधामनु सुखमनु सुखेनैव न तु भयेन पुनर्गर्भत्वं गूढत्वमेरिरे आपिरे आप्ताः । देवता अप्येवम् ॥ ४ ॥

वीळुचित् । वीळुदृढम् । हे इन्द्र गुहाचित् गुहायां संस्थितोपि लोकानां गूढत्वेनावस्थितोपि संस्त्वं वीळु दृढं चित् अपि ब्रह्माण्डादिकमारुजत्नुभिः आरुजद्भिः रुजोभङ्गे संहरद्भिः वह्निभिः

अखिलं लोकं वहद्भिः पौंस्यैः स्वसामर्थ्यैः सह उस्रियाः प्रकाशत्वानि प्रकटत्वानि नानाविधं प्राकट्यमनु स्वेच्छानुसारेणाविन्दो लब्धवानसि । प्रकाशो वर्तसे । यद्वैतादृशैर्वीळुचिदारुजत्नुभिः वह्निभिर्देवैः साकं त्वमुस्रिया अन्वविन्दः आनुकूल्येन लब्धवानसि ॥ ५, ११ ॥

## मन्त्रार्थमञ्जरी

अथ षष्ठमपि दशर्चं वर्गद्वयात्मकं सूक्तम् । तत्र (आद्यास्तिस्र ऐन्द्र्यः । चतुर्थी षष्ठ्यष्टमी नवमी च मारुत्यः । पञ्चमी सप्तमी चैन्द्रमारुत्यौ दशमी त्वैन्द्री । इत्यनुक्रमणिकोक्तदेवतानां भाष्यकारैर्दूषितत्वात्तदुक्तदिशा) आद्या द्वितीया चतुर्थी च मारुत्यः, मरुच्छब्दितास्त्वत्र सर्वे ब्रह्मादिदेवा ध्येयाः । तृतीया पञ्चमी चैन्द्रमारुत्यौ । शेषाश्चैन्द्र्यः (६।७।८।९।१०) इति विभागः । (ब्रह्मादिसर्वदेवाः) इति ग्राह्यम् । अरुषम्, अरुणवर्णम् । तस्थुषः, स्थावरान्गिरीन् । परि, परितः । चरन्तम् । ब्रध्नम्, वृद्धत्वेन ब्रध्नशब्दवाच्यं दिवाकरम्, 'वृधु वृद्धौ' इत्यतो नक्प्रत्यये धातोरमागमे यणादेशे वकारस्य बकारे 'ब्रध्न' इति सिद्धत्वात् । युञ्जन्ति, नियुञ्जते, प्रवर्तयन्तीति यावत् । किं च, (तैरेव देवैर्दिवाकरादन्यानि निशाकरादीनि) रोचना, रोचनानि, ज्योतींषि । दिवि, त्रिविष्टपे । रोचन्ते, दीप्यन्ते, अन्यान्रोचयन्ति चेत्यर्थः ॥ विष्णुपक्षे पूर्वस्मात् मन्त्रात्पौंस्यपदं मण्डूकप्लुत्यानुवृत्य (यस्य), हरेः । (पौंस्यानि), सामर्थ्यानि । अरुषम् । ब्रध्नम्, सूर्यम् । तस्थुषः परिचरन्तम् । युञ्जन्ति, नियुञ्जते । (तैरेव) (पौंस्यैः) निमित्तैः । रोचना, रोचनानि । दिवि । रोचन्ते, दीप्यन्ते, रोचयन्ति चान्यानिति, 'रुचदीपने' ॥ १ ॥ इति प्रथमा मारुती ॥ १ ॥

(ब्रह्मादिदेवाः) (प्रकृतविष्णुपौंस्यानि) वा । अस्य, इन्द्रस्य । रथे । काम्या, काम्यौ, गुणाधिकत्वेन कमनीयौ । विपक्षसा, विपक्षसौ, विशिष्टौ पक्षौ ययोस्तौ विपक्षौ, विपक्षावेव विपक्षसा, विशिष्टपक्षयुक्तपक्षिणाविव शीघ्रगतिमन्तावित्यर्थः । शोणा, शोणौ, श्यामवर्णत्वेऽप्यग्रगाम्यश्वयोर्मूर्ध्नि शोणत्वसम्बन्धाल्लक्षणया 'शोणौ' इत्युच्यमानौ । धृष्णू, धृष्टौ । नृवाहसा, नृवाहसौ, नॄन्प्रति वहन्ताविति वा नरमिन्द्रं वहन्ताविति वा नृवाहसौ । हरी, इन्द्ररथाग्रगामिनावश्वौ । युञ्जन्ति, योजयन्ति प्रवर्तयन्तीति यावत् ॥ यद्वा (देवाः), (प्रकृतविष्णुपौंस्यानि) वा । अस्य, भक्तजातस्य । रथे, देहे । काम्या, गुणाधिकत्वेन काम्यौ । विपक्षसा, विपक्षसौ, क्षिप्रगामिनौ । शोणा, शोणौ, सुखं प्राप्तौ, शम्शब्दपर्याये शशब्द उपपदे 'अण गतौ' इत्यतः पचाद्यच्प्रत्यये धात्वकारस्योकारे 'शोण' इति रूपसिद्धेः, अव्याकुलाविति यावत् । धृष्णू, धृष्टौ

धैर्ययुक्तौ । नृवाहसा, नृवाहसौ, नरमीशं वहन्तौ । हरी, विषयहरणाद्धरिशब्दोक्ते मनोबुद्धी । युञ्जन्ति, योजयन्ति प्रवर्तयन्ति, उक्तगुणविशिष्टे स्वकीयमनोबुद्धी भक्तरथे प्रेरणाय युञ्जन्ति । इति ॥ २ ॥ इति द्वितीया मारुती ॥ २ ॥

(हे इन्द्र) ईश्वर । (त्वम्) अकेतवे, अज्ञाय, षष्ठ्यर्थे चतुर्थी, अज्ञस्य । केतुम्, सज्ज्ञानम्, 'केतुः केतश्चितिश्चित्तं मतिः क्रतुर्मनीषा माया' इति चतुर्थे गीताभाष्योक्तेः । कृण्वन्, कुर्वन् । अपेशसे, अपेशसो हेमहीनस्य । पेशः, हेम । (च) (कृण्वन्), कुर्वन् । उषद्भिः, सम्यक्प्रकाशमानैः, 'वश कान्तौ' इत्यतः शतृप्रत्यये 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चति पृच्छति भृज्जतीनां ङिति च' इति सम्प्रसारणे पूर्वरूपे शकारस्यातिशयार्थे षकारे 'उषद्भिः' इति सिद्धत्वात् । (पौंस्यैः) इत्यनुवृत्तिः शेषो वा, सामर्थ्यातिशयैः सह । सम् अजायथाः यज्ञे व्यक्ततामगाः । न केवलं त्वम्, किं तु मर्याः मरणवन्तो देवाः । (अपि) अकेतवे केतुम् अपेशसे पेशः (कुर्वन्तः स्वसामर्थ्यैः सह यज्ञे) सम् (अजायन्त) इति ॥ ३ ॥ इति तृतीयैन्द्रमारुती ॥३॥

यज्ञियम्, यज्ञे भवम्, यज्ञशब्दाद्भवार्थे घप्रत्यये घस्येयादेशे 'यस्येति च' इत्यलोपे 'यज्ञियम्' इति सिद्धेः यज्ञे वाच्यम् । नाम दधानाः । (हरेः शक्तयः) (देवताः) वा । आत्, अकारवाच्याद्विष्णोर्निमित्तात्, विष्णिवच्छयेति यावत् । 'अह' इति निपातः 'तदा' इत्यर्थे, यज्ञे व्यक्तत्वादनन्तरमेव । स्वधाम् अनु, सुखेनैव, न तु भयेनेत्यर्थः । पुनः । गर्भत्वम्, गूढत्वम् । एरिरे, आपिरे प्राप्ताः ॥ ४ ॥ इति चतुर्थी मारुती ॥ ४ ॥

(हे) इन्द्र । गुहा चित्, गुहायां संस्थितोऽपि, लोकानां गूढत्वेनावस्थितोऽपि सन् । (त्वम्) वीळु, दृढम् । चित्, अपि, दृढमपि । (ब्रह्माण्डादिकम्) आरुजत्नुभिः, आरुजद्भिः, 'रुजो भङ्गे' क्त्नुप्रत्ययोऽडागमश्च, संहरद्भिः । वह्निभिः, लोकं वहद्भिः, वहतोः निप्रत्ययः । (पौंस्यैः), स्वसामर्थ्यैः सह उस्रियाः, प्रकाशत्वानि प्रकटत्वानि, नानाविधप्राकट्यम् । अनु, स्वेच्छानुसारेण । अविन्दः, 'विद्लृ लाभे' लब्धवानसि, स्वप्रकाशो वर्तसे ॥ यद्वा वीळु चित् दृढमपि । (ब्रह्माण्डादिकम्) आरुजद्भिः, संहरद्भिः । वह्निभिः, लोकान्वहद्भिर्देवैः सह । (त्वम्) उस्रियाः प्राकट्यानि । अनु, आनुकूल्येन । अविन्दः लब्धवानसि ॥ ५ ॥ इति पञ्चम्यैन्द्रमारुती ॥ ५ ॥ इत्येकादशो वर्गः ॥ ११ ॥

## पदार्थप्रकाशिका

युञ्जन्ति ब्रध्नमरुषम् । अनुक्रमणिकायां युञ्जतीति सूक्तप्रतीकमात्रस्यैव गृहीतत्वेन ऋक्संख्यायाः अनुक्तत्वात् सुरूपकृत् दशेति दशसंख्यानुवर्तत इत्यभिप्रेत्याह । दशर्चमेतन्दिनि । तत्र सूक्ते

अनुक्रमणिकोक्तदेवताप्रकारस्य भाष्ये दूष्यमाणत्वाद्भाष्याभिप्रेतसूक्तदेवता आह तत्रेति । प्रथमा मुंजतीति ऋक् द्वितीया युञ्जत्यस्येति ऋक् चतुर्थी आदहस्वाधामिति ऋक् । मारुत्य इति । मरुच्छब्दो ब्रह्मादिसर्वदेवतापरो ज्ञातव्यः । तृतीयापञ्चम्यौ केतुं कृण्वन् वीलुचिदित्यृचौ इन्द्रमारुत्याविति । मर्या इति बहुवचनबलात् मरुद्देवताकत्वेऽपि विशिष्येन्द्रदेवताकत्वमप्यस्ति कृण्वन्नित्येकवचनबलात् । नन्वथापीन्द्रादन्यदेवता किं न स्यादिति चेन्न अनाख्यातेत्विन्द्रो देवतेति परिभाषितत्वादिति भावः । शेषाः देवयन्त इत्याद्या ऋचः ऐन्द्र्यः केवलेन्द्रदेवताका इत्यर्थः । तावदिति । मरुद्विषयतया भाष्य एवोत्तरत्र व्याख्यास्यमानत्वात् तावदित्युक्तम् । श्रुतौ कर्तृप्रतीतेराह । यस्मिन्निति । पौंस्यानिति शक्त्यपरपर्यायाणि पौरुषाणि । तस्थुष इत्यस्य वाच्यार्थमाह । स्थावरानिति । के ते स्थावरा इत्यतो भाष्यं सङ्गमयति गिरीनिति । मेर्वादिगिरीनित्यर्थः । कथमिति । दिवाकरस्य ब्रध्नशब्दवाच्यत्वं कथमित्यर्थः । वृद्धत्वेनेति । देशतः कालतो गुणतश्च वृद्धत्वेनेत्यर्थः । वृद्धत्वं कथं ब्रध्नशब्दप्रवृत्तिनिमित्तमित्यत आह । वृधवृद्धाविति वृधवृद्धावित्यस्मात्कप्रत्यये ककारलोपे अमागमे मित्वादन्ते जाते वृ अधूतेति जाते यणादेशे व्रधूतेति जाते रदाभ्यां निष्ठातोनः पूर्वस्यद इति सूत्रेण रकात्परस्य निकारे व्रध्नेति जाते वबयोरभेदात् ब्रध्नेतिरूपं द्रष्टव्यम् । अत एवेति । ब्रध्नशब्दस्य वृध्यर्थकधातुनिष्पन्नत्वादेव । वृषभो महिषो महान् ब्रध्न इतिमहन्नामसु पाठः । अन्यथा स न स्यादिति भावः । अन्यत्वस्योपाधिसापेक्षत्वाद्दिवाकरादित्युक्तम् । तैरेवेति । प्रकृतैरेवेत्यर्थः ॥ १ ॥

युञ्जन्त्यस्य काम्या प्रकृताः पौंस्यशब्देनेति भावः । अस्येतिपदं प्रकृतवासुदेवपरमित्याशयेन षष्ठ्यर्थसम्बन्धं दर्शयति एतदधीन इति । विषयहरणान्मन एव च बुद्धिर्हरिशब्दोक्त इत्युक्तत्वादाह । मनोबुद्धीति । द्वितीयाद्विवचनमेतत् । तत्तात्पर्यमाह तानिति । भक्तानित्यर्थः । देवा इत्यनूद्य मरुत इति व्याख्यानम् । तस्यैव इन्द्रस्यैव युञ्जन्तीति पूर्वर्क्चौ भगवदितरदेवतापरत्वपक्षे पौंस्यानां कर्तृत्वासम्भवादाह वासुदेवस्येत्यादि । सूर्यादीत्यादिपदेन चन्द्रादिरोचनपरिग्रहः । ननु सूर्यादिस्थापकत्वस्य ब्रह्मादिषु सम्भवेपि सूर्यादधमेषु वरुणमरुदादिष्वसम्भवात् कथं युञ्जन्ति ब्रध्नमिति प्रयोग इत्यत आह । अन्वेष्विति । सूर्यादधमेषु मरुदादिदेवेषु सूर्यादिस्थापक ब्रह्मादिसाहचर्याल्लक्षणया युञ्जन्तीति शब्दप्रयोग इति भावः । ननु ब्रह्मादीनामिति सर्वदेवताकत्वोक्तेः प्रथमा द्वितीया चतुर्थी च मारुत्य इति भवद्भिर्मरुद्देवताकत्वं कथमुक्तं भाष्यविरोधापातादित्यत आह । ब्रह्मादीनामित्युक्तेति । प्रथमा द्वितीया चतुर्थी मारुत्य इत्यत्र अस्माभिः प्रयुक्तो मरुच्छब्द इत्यर्थः । हेतुरिति । अधिकगुणवत एव काम्यत्वादिति भावः । मनोबुध्योर्भगवत्सेवोपयुक्तत्वाद्यधिकगुणवत्वं द्रष्टव्यम् । अश्वयोस्तु स्पष्टशब्दार्थकाम्यशब्दार्थः ।

उत्तरवाक्यमवतारयति । विशिष्टावित्यादि । विपक्षौ तावेव विपक्षसा इति शेषः । असम्भवादिति । परत्वापरपर्यायियोः पक्षयोर्मनोबुध्यो अश्वयोर्वाऽसम्भवादिति भावः । पक्षिणाविति शेषः विशिष्टसंयुक्तौ पक्षिणाविवेत्यर्थः । गौण्येति । प्रसिद्धपतत्रोपेत-पक्षादिनिष्ठक्षिप्रतरत्वगुणायोगेनेत्यर्थः । अणतेरिति । अणपणगतावित्यस्मात्कर्तरि पचाद्यचि णकारस्थाकारलोपेऽणेति रूपम् । विवरणप्रकारम् दर्शयति । शंसुखमिति । शमणौ । कथं शौणौ अत आह । शंशब्देति । शणाविति स्यादित्यत आह । अकारस्योकार इति । तथाच शकारस्थस्याकारस्य उभावे धात्वकारस्य पूर्वरूपे शोणाविति युक्तमिति । तस्यार्थ इति अकारस्योकाररूपवर्णविकारस्येत्यर्थः । प्रसिद्धमेवेति । रूढम् उक्तिसत्वमेवेत्यर्थः । तथाच तव शमणाविति योगेन शोणत्वं कस्माद्व्यक्तव्यमित्याशयः । उत्तमाङ्गेत्यादि शिरोरूपोत्त-माङ्गसम्बन्धिना रक्तिमाख्यगुणेन योगलक्षणया सर्वाङ्गेष्वङ्गीकृत्य शोणावित्युच्यत इत्यर्थः । तथाचैकदेशस्य विशिष्टे लक्षणेति भावः । सहस्राश्वत्वादिति भावः । इन्द्रो दशशतैर्हयैर्युक्तं स्यन्दनमादायेति भागवते अष्टमे प्रयोगादिति भावः । धृष्टोधृष्णुर्विं यातश्चेत्यभिधानं हृदि निधायाह । वियात इति । वैय्यात्यं प्राप्तावित्यर्थः । नृन् प्रतीत्यनेनेति । इत्यादिनेत्यर्थः । तमित्यनूद्य नरमिति व्याख्यानम् । इन्द्रं विष्णुं बाह्याध्यात्मविवक्षयोक्तम् । इत्यादौ सर्वत्र विशेषणे इदं मनोबुद्धी अश्वौ चेत्युभाविति विशेष्यपदमित्यर्थः । तथाच काम्यत्वादिकं मनोबुध्योः प्रसिद्धाश्वयोश्च योजनीयमिति भावः । तथाचायं ऋगर्थसङ्ग्रहः वासुदेवस्य शक्तयः भगवत्सेवाद्युपयुक्तत्वाद्यधिकगुणवत्वेन काम्यौ विपक्षसा क्षिप्रतरौ शोणा शमणौ सुखप्राप्तिमन्तौ यद्वा मूर्धनि शोणत्वाल्लक्षणया शोणशब्दौ धृष्णू वियाताविति वैय्यात्यं प्राप्ताविति धाष्टर्योपेताविति यावत् । नृन्प्रतीत्यनेन नृवाहसेति । नृन्प्रति भगवन्तं वहंतौ नृणां भगवदज्ञानापादकौ इति यावत् । अथवा नरीयत इति नरं नरीशं विष्णुं वहन्तौ विषयीकारिण्यौ अस्य एतद् बाधने हरी विषयान् प्रति इन्द्रियाणां हरणात् हरिशब्दवाच्ये मनोबुद्धी । द्वितीयाद्विवचनमेतत् । रथे भक्तानां शरीरे युञ्जन्ति तान् मनस्विनो बुद्धिमतश्च कुर्वन्तीत्यर्थः । अथवा देवाः काम्याः समीचीनगत्यादिरूपाधिकगुणवत्वेन काम्यौ विपक्षसा क्षिप्रतरौ शोणा शमणौ सुखप्राप्तिमन्तौ हरी स्वसम्बन्धिन्यौ मनोबुद्धी अस्य जीवजातस्य रथे देहे युञ्जन्ति तत्प्रेरणाय प्रयुञ्जत इत्यर्थः ॥ २ ॥

केतुं कृण्वन्नकेतवे । पेशो हेमेति । जातरूपं पेशो हेमेति सुवर्णनामसु पाठादित्यर्थः । वश कान्तावित्यस्येति । वश कान्तावित्यस्मात् तृन्प्रत्यये नकारलोपे वकारस्योकाररूपे सम्प्रसारणे

शकारस्य षकारे उषदिति प्रातिपदिकं तस्य तृतीयाबहुवचनम् उषद्भिरिति । सम्प्रकाशवद्भिरिति । वशधातोः कांत्यर्थकत्वात् प्रकाशवद्भिरित्येव वक्तव्ये शकारस्य षकाररूपवर्ण विकारस्याधिक्यार्थत्वात् तमित्युपसर्गमिति भावः । अत्र विभक्तिव्यत्ययेन पौंस्यैरिति विशेषपदमभिप्रैतमित्याशयेन तदर्थपरं भाष्यं सङ्गमयति । शक्तिभिः सहेति । शक्तियुक्तः सन्नित्यर्थः । देवतांतरविषये योजयति । मर्याइत्यादि । एतच्च उभयपरत्वम् ऋचः सम्पादयितुमुक्तमित्यन्यो ग्रन्थो अधिक इति टीकाकारैर्न व्याख्यातम् । तस्य ग्रन्थस्य सर्वविद्वच्छिरोमणिभिरस्मद्गुरुचरणैरेवं व्याख्यातमस्ति तथाहि तच्चेति । देवतांतरतया योजनमित्यर्थः । ऋच इति सम्पूर्णाया इति शेषः । नकेवलमिति । वस्तुतस्त्विति शेषः । एवं च न काप्यनुपपत्तिरिति । न केवलं त्वमिति । केतुं कृण्वन्नित्यादिगुणयुक्तः सन् उषद्भिः सह केवलं त्वमेव यज्ञे समजायत इति न किंतु इत्यर्थः॥ ३ ॥

आदह स्वधामनु । यज्ञे वाच्यमिति यज्ञे प्रयोक्तव्यमित्यर्थः । यज्ञे उच्चरितमिति यावत् । आत्ताधिति ऋगताविति धातोरिति भावः । एवमित्येतदत्राप्यनुवर्तत इत्याशयेनाह । देवा अप्येवमिति । स्वेच्छयेति तात्पर्यकथनं विहाय सर्वं योज्यम् । तथाच यज्ञीयं यज्ञकाण्डे वाच्यम् इन्द्रादिकं नाम दधाना इन्द्राद्याः देवाः आत् अकारवाच्यात् विष्णोर्निमित्तात् हरीच्छानुसारेणेति यावत् । अह तदैव यज्ञे व्यक्त्यनन्तरमेव स्वधामनु हविरादिकं गृहीत्वा पुनर्गूढं तिरोभावमेरिरे इति देवतान्तरेऽप्येवं योज्यमित्यर्थः ॥ ४ ॥

वीळ्वित्यनूद्य दृढमिति व्याख्यानम् । दक्षो वीळ्व इत्यादि बलनामसु पाठादिति भावः । चिदित्यनूद्यापीति । दृष्टमपि ब्रह्माण्डादिकमित्यर्थः । ऋचि प्रकृतविशेष्यमाह । पौंस्यैरिति । उस्रियानूद्य प्रकाशत्वानीत्यनूद्य प्रकटत्वानीति व्याख्यानम् । वशकान्तावित्यस्मात् यकूप्रत्यये ककारलोपे वकारस्य सम्प्रसारणे निकारस्य स्त्रीत्यादेशे उस्रियेत्येतत्प्रकाशार्थकमिति भावः । लब्धवानिति । विद्लृलाभ इति धातोरिति भावः । अविन्द उस्रिया अनु इत्यस्य तात्पर्यमाह । स्वप्रकाश इति । हृदयगुहास्थितोऽपि भगवान् वीळुचिदारुजत्नुभिः वह्निभिः पौंस्यैः सत्वं स्वप्रकाशनं स्थिते हृदयगुहास्थिते हरौ सामर्थ्यानि प्रकटानि सन्ति सोपि स्वप्रकाश इति ऋक्फलितोर्थः । तादृशैरित्यनूद्य वीळुचिदित्यादि व्याख्यानं त्वमित्यनन्तरं गुहाचिदिति शेषः । तथाच त्वद्गुहास्थितत्वं स्वप्रकाशस्तत्रत्यदेवाश्च त्वदनुग्रहेण स्वप्रकाशाः सन्तीति फलितोर्थः ॥५॥

## पदार्थदीपिका

॥ युञ्जन्ति ब्रध्नम् ॥ तावदिति ॥ मरुद्विषयतया व्याख्यास्यमानत्वात् तावदित्युक्तम् ॥ अरुषमिति ॥ ऋहनिभ्यामुषन्निति अर्तेरुषन् प्रत्यये सति अरुषशब्द आरुण्येन निमित्तेनादित्य

वाचीत्यर्थः ॥ तस्थुषः स्थावरानिति ॥ ष्ठागतिनिवृत्तावित्यस्मात् लिटः क्वसुरादेशः । वस्वेका जाद्धसामितीटमन्तरङ्गमपि बाधितत्वात् संप्रसारणं संप्रसारणाश्रयं च बलीय इति शसि परतो भत्वाद्वसोः सम्प्रसारणं पूर्वरूपत्वं शसिवसिघसीनां च इति षत्वम् । तेन तस्थुष इति रूपसिद्धिरिति ध्येयम् । स्थावरानिति ॥ स्थेशभासपिसकसो वरजिति तिष्ठतेर्वरच् प्रत्ययः । ननु वधेर्नुक्प्रत्यये ब्रजादेशे च सति निष्पन्नस्य ब्रध्नशब्दस्य कथं वृद्धत्वं प्रवृत्तिनिमित्तमित्यत आह ॥ वृधु वृद्धावित्यस्येति ॥ अस्माद्धातोः नकारप्रत्ययेन वकारस्य बकारे गुणे रेफस्य स्थानव्यत्यास लक्षणो विपर्ययो निरुक्तत्वादिति भावः । वृद्धेः कर्तरि निष्ठा क्तप्रत्यये तत्सन्नियोगेन वृधेर्ब्रध्नादेशो निष्ठातकारस्य नत्वं चेत्यर्थ इत्यप्याहुः । कुत एतदित्यत आह ॥ अत एवेति ॥ वृद्धिधातुरूपत्वादेव बर्हिष्ठादिशब्दवत् महोब्रध्न इति महन्नामसु पाठात् । अन्यथा स न स्यादित्यर्थः । यद्वा ननु ब्रध्नशब्दस्य महन्नामसु पठितत्वात् तादृशधातुरूपत्वे वक्तव्ये कथमेतादृशधातुरूपत्वमित्यतो गुणादिवृद्धेरपि वृद्धित्वात् तस्यापश्रमहत्वप्रयोजकत्वात् नामसु पाठेऽपि तद्धातुरूपत्वमेवेत्याह ॥ अत एवेति ॥ १ ॥

अस्येन्द्रस्येति ॥ अस्येत्यस्य सर्वानुदात्तत्वात् इदमोऽन्वादेशेऽनुदात्तस्तृतीयादा वित्यनेनानादेशाभावे तस्यासम्भवात् । आदेशचान्वादेशस्य प्रयोजकत्वात् तस्य चोक्तस्य पुनरुक्तिरूपत्वेन, इन्द्रस्य च पूर्वऋच्यप्रसक्तत्वेन अन्वादेशायोगात् कथमस्येन्द्रस्येति व्याख्यानमिति वाच्यम् । पूर्वसूक्ते इन्द्रस्य प्रसक्तत्वाभिप्रायेण वा पूर्वऋचो देवपरत्वेन व्याख्यास्यमानत्वात् तत्र देवशब्देनेन्द्रस्यापि प्रकृतत्वमभिप्रेत्य वान्वादेशसम्भवात् इति भावः ॥ एतदधीनेति ॥ अनेनास्येति षष्ठ्यर्थः सम्बन्धो दर्शितः ॥ समानमिति ॥ देवाः मरुतः बृध्नं युञ्जन्तीति अरुषमित्यादि पूर्ववद्योज्यमित्यर्थः ॥

ननु यद्यत्र ब्रह्मादीनामेव सूर्यादिस्थापकत्वमभिमतं तर्हि देवाः ब्रध्नं युञ्जन्तीति सर्वदेवतासाधारण्येन स्थापकत्वव्यवहारः श्रौतः कथं सङ्गच्छत इत्यतो यथाछत्रिणो गच्छन्तीत्यत्र गन्तृमात्रपरस्यापि छत्रिशब्दस्य गन्तरि छत्रिणि मुख्यत्वमछत्रिणि च तस्मिन् लक्षणेति मुख्यामुख्यवृत्योभयपरत्वं, तथा देवमात्रे नियोजकपरस्यापि, युञ्जन्तीतिशब्दस्य नियोजकब्रह्मादि-देवेषु मुख्यत्वं अनियोजकत्वेतु लक्षणेति मुख्यामुख्यवृत्योभयपरत्वोपपत्तेरदोष इत्याह ॥ अनियोजकेष्विति ॥ क्वचिदन्येष्वित्यपि पाठः ॥ तत्रानियोजकेष्वित्येवार्थः ॥ वृत्तिद्वयविरोधस्तु न दूषणमिति भावः ॥ मरुच्छद्ब इति ॥ उदाहरिष्यमाणानुक्रमणिकास्थस्य मारुत इत्यस्य पदस्य प्रातिपदिकभूतो मरुच्छद्ब इत्यर्थः ॥ अपि वादेवेति भाष्यस्थदेवशब्दस्य देवा मरुतोवेत्येवंरूपव्याख्यानपरो मरुछद्ब इत्यर्थः ॥ नन्विति ॥ कमेर्णिङि अत उपधाया, इति वृद्धौ

अचोयदिति, यत्प्रत्यये, णिलोपे कामयितव्यत्वमेव प्रवृत्तिनिमित्तमित्यर्थः ॥ ययोस्ताविति ॥ पक्षशब्दपर्यायोऽयं पक्षसृशब्द इति भावः ॥ असंभवात् अश्वमनोबुद्धीनां पक्षासंभवात् ॥ विवरणमित्येतदुपपादयति ॥ अणतेरिति ॥ सुखंप्राप्ताविव्यत्र द्वितीयाश्रितेत्यादि द्वितीयासमास इति भावेन शं सुखमित्युक्तमिति ज्ञेयम् ॥ तस्येति ॥ वर्णविकारस्येत्यर्थः ॥ इदं व्याख्यानमतिरिक्तवर्णत्वस्य बाधितत्वादिति भावः ॥ प्रसिद्धमेव रक्तवर्णत्वमेवेत्यर्थः ॥ अतोऽसंभवादिति ॥ अनेनापव्याख्यानप्रत्याख्यानं सिद्धमिति भावः ॥ उत्तमांगेति ॥ शोणोत्तमांगसम्बन्धेनेत्यर्थः ॥ धृष्टौ वियाताविति ॥ ञिधृषाप्रागल्भ्ये इत्यस्मात् श्लुविकरणात् त्रसिगृधिधृषिक्षिपेः कुरिति कुप्रत्यये इडभावे कित्वात् गुणाभावेच धृष्टशब्दोनिष्पन्नः । अस्मादेव निष्ठाक्तप्रत्यये आकार इद्भवतीति आदितश्चेति निष्ठाप्रत्ययस्येण् निषेधे गुणाभावेच धृष्टशब्दः । तस्य प्रतिपदं प्रागल्भ्याविति वक्तव्यं तत्कथं वियाताविति ॥ नहि विरुद्धं यावधि-नीताविवत्यर्थप्रातिपदिकादस्मात्पदादयमर्थः प्रतिभातीति चेत्सत्यम् ॥ नह्ययं निष्ठाप्रत्ययान्तो धृषिः प्रागल्भार्थः । तथात्वे इटः प्रकृत्या धर्षिताविति स्यात् ॥ नचादितश्चेतीण् निषेधादोषः । धृषिशशीवैयात्य इति तन्नियमनात् ॥ ञिधृषा प्रागल्भ्ये, शशुहिंसायाम् अनयोरादितत् तत्र यस्य विभाषेति सूत्राभ्यां निण् निषेधो यदि प्रवर्तेत तर्हि निष्ठायामपि नञार्थकयोरेव नान्यार्थयोरिति तस्मात् धृष्टु धृष्टौ वियाताविति त्रयाणामप्येकार्थत्वम् ॥ धृष्टो धृष्टुर्वियाातश्चेत्यमरोक्तिरप्यनुकूलैवेति ॥ धृष्ट् इति ॥ ञिधृषाप्रागल्भ्ये त्रसिगृधिधृषि क्षिपेः कुः कित्वाद्गुणाभाव इति भावः ॥ वियाताविति मूलपाठः ॥ वैय्यात्येताविवत्यर्थः ॥ धृष्टो धृष्टुर्वियातश्चेत्यमरोक्तेः ॥ वहन्ताविति ॥ णिदित्यनुवृत्तौ वहिहाधाञ्भ्यः छन्दसीति वहेरसुन् णिच्चेति भावः ॥ इत्यर्थ इति ॥ द्विकद्वित्वापेक्षया उभावित्युक्तिरिति भावः ॥ २ ॥

अकेतवे अज्ञायेति ॥ कित् ज्ञान इत्यतो निष्पन्नस्य केतुशब्दस्य केतुः केतुरिति प्रज्ञानामसु पाठादिति भावः ॥ कृञण्विवित्वति कृषिहिंसाकरणयोश्चेत्यस्माल्लटः शत्रादेशः ॥ इदितोनुम् धातोरिति नुमागमः ॥ कर्तरि शपि प्राप्ते धिन्विकृण्वोरचेत्युप्रत्ययः ॥ तत्संनियोगेन च वकारस्य वाकारः अतोलोप इत्यकारलोपः तस्य स्थानिवद्भावात्पूर्वस्य लघुपद्गुणो नभवतीति भावः ॥ अहेमायेति ॥ एवश्चाकारान्तो हेमशब्दोस्तीतिभावः ॥ देवताप्येवमिति स्वेच्छयेति तात्पर्यं विहाय देवतास्वपि ऋग्भाष्ये योजनीय इत्यर्थः ॥ गुहाचित् गुहायां संस्थितोपीति सप्तम्या डादेश इति भावः ॥ ऋजोभङ्ग इति अस्माद्धद्यौणादिकः कलुन् प्रत्ययः कित्वाद्गुणाभावः ॥ आधिक्यार्थ इति ॥ हल्व्यत्ययस्याधिक्यार्थत्वादेव भाष्ये संप्रेत्युपसर्गद्वयमित्यभिप्रायः ॥ काशृ दीप्ताविति धातोः

स्वरितेतो व्यत्ययेन भाष्ये परस्मैपदमिति भावेनाह ॥ संप्रकाशयद्भिः संप्रकाशमानैरिति ॥ उस्रियाः प्रकाशत्वादीति ॥ वशकान्तताविति धातोः भावे रिक् प्रत्ययः ॥ शकारस्य सत्वंच बाहुलकादेव द्रष्टव्यम् ॥ ३ ॥

## टीकाविवृतिः

युञ्जन्ति ब्रध्नम् ॥ दशर्चमिति ॥ अनुक्रमणिकायां युञ्जन्त्यादहेत्येताःषण्मारुत्य इति वाक्ये युञ्जन्तीति सूक्तप्रतीकम् । तत्र सुरूपकृत्नुं दशेत्यनुवृत्तेः सूक्तसङ्ख्यासिद्धिरिति भावः । अनुक्रमणिकोक्तदेवतानां भाष्ये दूष्यमाणत्वात् भाष्यानुसारेण सूक्तदेवता आह ॥ तत्रप्रथमेति ॥ ईश्वरविषये तावदिति ॥ मरुद्विषये तूत्तरऋग्व्याख्यानकाले सूर्यादीन् स्थापयन्ति चेत्यनेन भाष्येण व्याख्यास्यत इति भावः ॥ अरुषमरुणमिति ॥ अर्तेश्चेति सूत्रेणार्तेरुनत्प्रत्यये गुणेच निष्पन्नेऽरुणशब्दे णकारस्य षकारादेशः पृषोदरादित्वादितिभावः । अव्यक्तरागस्त्वरुण इत्यभिधानादरुणमीषद्रक्तवर्णमित्यर्थः । स्थाधातोर्लिटः क्वस्वादेशे वस्वेकाजाद्घसामित्यनेन वसुप्रत्ययस्यान्तरङ्गमपीडागमं शसि भत्वेन वसोःसंप्रसारणमिति संप्रसारणं बाधते । संप्रसारणं तदाश्रितंचकार्यंबलीय इत्युक्तेः । एवंनिष्पन्नतस्थिवश्शब्दं भाष्योक्तगिरीनिति प्रतिपदेन संवादयितुं व्याचष्टे ॥ तस्थुषः स्थावरानिति ॥ स्थेशभासपिसकसोवरजिति वरच्प्रत्यये स्थावरशब्दोनिष्पन्न इति ज्ञेयम् । गिरीन्मेर्वादीन् । ब्रध्नशब्दस्य वृद्धत्वार्थकत्वमुपपादयति ॥ वृधुवृद्धाविवितीति ॥ वधेर्ब्रधिवुधीचेत्युक्तो नक्प्रत्ययो ब्रध्यादेशश्च बाहुलोक्ते वृधेरपीति भावः । केचित्तु वृधेर्निष्ठातकारस्य नत्वं वकारस्य बत्वं यणादेशश्चछान्दस इत्याहुः । अत्र ज्ञापकमाह ॥ अत एवेति ॥ यदिबन्धेरेव नक्प्रत्यय ब्रध्यादेशौ तर्हिबन्धार्थकस्यास्यमहः ब्रध्नः ऋष्व इति महन्नामसु पाठो नयुज्येतेति भावः ॥ युञ्जन्ति नियुञ्जत इति ॥ युजेः स्वरितेत्त्वेपि सूर्यनियोजनस्य यत्पुन्नमर्थप्रकाशनादि तस्य परगामित्वात्कर्तृगामित्वाभावेन नात्मनेपदं किन्तु परस्मैपदमेव श्रुतिभाष्ययोः । निशब्द-स्याजन्तोपसर्गत्वात्तत्परस्य युजेः स्वराद्यन्तोपसर्गादित्यात्मनेपदमिति भावेन टीकायामात्मने-पदप्रयोगो ज्ञेयः । रुचेरन्तर्णीतणिच्त्वमाश्रित्यरोचन्त इति पदं रोचयन्तीति भाष्ये व्याख्यातम् । तत्र हरीचेत्यतश्चशब्दाकर्षणेनान्वयमाश्रित्य रोचन्त इत्यस्य यथाश्रुतोप्यर्थो भाष्ये विवक्षित इति भावेनाह ॥ रोचन्ते दीप्यन्ते रोचयन्तिचेति ॥ अन्यान् घटादीन् ॥ १ ॥

युञ्जन्त्यस्य ॥ स्वशक्तय इतिभाष्यपदं कस्य श्रौतपदस्य व्याख्यानमित्याकांक्षायामाह ॥ प्रकृता इति ॥ पौंस्येति पूर्वप्रकृता इत्यर्थः । अस्येति सम्बन्धे षष्ठीत्यभिप्रेत्य व्याचष्टे ॥ एतदधीने इति ॥

विष्णवधीने । रथे देह इत्युत्तरग्रन्थं मनसि निधायोपयुक्तमध्याहरति ॥ भक्तानामिति ॥ युञ्जन्तीति पदेन युजिर्योग इति धातोः संबद्धा भवन्तीति प्रतीतेः हरी इति कर्मसम्बन्धासंभवादन्तर्णीतणिच्त्वमाश्रित्याह ॥ युञ्जन्ति योजयन्तीति ॥ तात्पर्यार्थमाह ॥ तान्मनस्विन इति ॥ तान्भक्तान् । अपिवादेवा इत्यत्रत्यदेवा इत्यनेन रथे इत्येतावन्मात्रेण चाश्वावथापि वेत्यस्यान्वयमभिप्रेत्य ऋचं मरुद्विषये योजयति ॥ देवा मरुतोपि वेति ॥ अस्येत्यस्यावृत्तिमेवशब्दान्वयं चाश्रित्याह ॥ तस्यैवेति ॥ इदानीं अपिवादेवाःस्वमनोबुद्धिमेवचेत्यादि ऋचःप्रकारान्तरेण व्याख्यानपरं भाष्यं योजयति ॥ अथवेति ॥ तात्पर्यमाह ॥ तत्प्रेरणायेति ॥ जीवजातदेहप्रेरणायेत्यर्थः ॥ तात्पर्यत इति ॥ ब्रध्नं वृद्धं दिवाकरमित्यादिनाक्षरार्थस्य कृतत्वादिति भावः ॥ समानमन्यदिति ॥ अरुषादिपदव्याख्यानं पूर्ववदेवेत्यर्थः ॥ लक्षणयेति ॥ छत्रिन्यायेन स्थापकब्रह्मादिसाहचर्यादस्थापकदेवेष्वपिस्थापकशब्दप्रयोग इति भावः ॥ मरुच्छब्द इति ॥ अनुक्रमणिकोक्तमारुतीशब्दप्रकृतिभूत इत्यर्थः ॥ अधिगुणत्वेनेत्यादिनेति ॥ आदिशब्दादधिगुणत्वेनेत्यतः परं काम्याविति पदं विशिष्टेत्यर्द्धः शोणौ चेतिसार्द्धश्लोकश्च गृह्यते । कमेर्णिङ्चुपधावृद्धौ अचोयदिति यत्प्रत्यये णेरनिटीति णिलोपे निष्पन्नकाम्यशब्दस्येष्टार्थकत्वादधिगुणत्वेनेति कथं व्याख्यानमित्यत आह ॥ अधिगुणत्वमिति ॥ विर्लयेचविशेषेचेत्येकाक्षररत्नमालोक्तेर्विशब्दो विशिष्टार्थः । पचेः पचिवचिभ्यां सुट्चेति ससुट्कासुन्प्रत्यये सकारान्तपक्षस्शब्दः पक्षसीतु स्मृतौ पक्षावित्यभिधानात्पतत्राद्यर्थकपक्षपर्यायः । तयोः समासः । तस्मात् द्वितीयाद्विवचनस्य सुपांसुलुगित्याकारादेशे विपक्षसेति श्रौतं रूपमित्यभिप्रेत्य तस्य तात्पर्यमाह ॥ विशिष्टाविति ॥ असंभवादिति ॥ मनोबुद्ध्योरश्वयोश्च तत्राभावादिति भावः ।

शमणावित्यस्य सुखप्राप्तावित्यर्थकत्वमुपपादयति ॥ अणतेरिति ॥ शमणावित्यत्र षष्ठीसमासः सुखप्राप्तावित्यत्र द्वितीयाश्रितेतिसमास इतिभावः ॥ शंशब्देति ॥ शंसुखे शर्मणि प्रोक्तमिति विश्वोक्तेः सुखार्थकशंशब्देन शकारः पुंसि गिरिशे शिष्ये स्वस्ति तनूकृतावित्येकाक्षररत्नमालायां स्वस्त्यर्थकत्वेन शकारस्य सुखरूपमङ्गलार्थकत्वात्समानार्थत्वमिति भावः ॥ तस्यार्थ इति ॥ व्यत्ययोऽतिशयकुत्सनाभेदेष्वित्युक्तेरण शब्दस्याद्यकारस्य स्थाने यो व्यत्ययेनोकारस्तस्यार्थःसदेतीति भावः ॥ श्यामाविति ॥ जंभभेदीहरिहय इत्यमरोक्तेरित्यर्थः । श्यामःस्यान्मेचके वृद्धे दारके हरितेघन इति विश्वकोशे हरिद्वर्णार्थत्वेनोक्तश्यामशब्दस्य हरिर्वाच्यवदाख्यातोहरित्कपिलवर्णयोरिति हरिशब्दसमानार्थत्वात् हरिहय इत्यस्य श्यामाश्व इत्यर्थोबोध्यः ॥ उत्तमाङ्गेति ॥ लक्षणाबीजमिदम् । उत्तमाङ्गसम्बन्धित्वाच्छोणगुणस्य संपूर्णावप्यश्वौ शोणावित्युच्येते इत्यर्थः

॥ वियाताविति ॥ धृष्टोधृष्णुर्वियातश्चेत्यमरोक्तेर्वैयात्यवन्तावित्याशयः ॥ नॄन्प्रतीति ॥ आद्ये व्याख्याने इन्द्रं विष्णुं वेत्यध्याहारोज्ञेयः । नरशब्देनेन्द्रादिग्रहणे तुभक्तान्प्रतीति शेषो ज्ञेयः । नृपूर्वाद्वहेर्वसेर्णिदित्यतोणिदित्यनुवृत्तौ वहिहाधाञ्भ्यश्छन्दसीत्यसुनि णित्वाद्वृद्धौ नृवाहसेति रूपम् । उभावपीत्यस्यार्थमाह ॥ मनोबुद्धी अश्वौचेत्यर्थ इति ॥ काम्यावित्यादाविति । इदं उभाविति पदम् । आदिशब्दात् विशिष्टेत्यर्द्धे शौणौचेत्यर्द्धे चेत्यर्थः ॥ २ ॥

केतुम् ॥ केतुश्चेत इति प्रज्ञानामसु पाठं मनसि निधायाह ॥ अकेतवे अज्ञायेति ॥ कृण्वन्कुर्वन्निति । कृविहिंसाकरणयोश्चेत्यतोलटः शत्रादेशे इदित्वान्नुमागमे धिन्विकृण्व्योरचेत्यु प्रत्ययसंनियोगेन धातुवकारस्याकारादेशे तस्यातोलोप इति लोपे लोपस्य स्थानिवत्त्वाल्ल-घूपधगुणो नेत्याशयः । हिरण्यं पेश इति हिरण्यनामसु पाठमाश्रित्याह ॥ अपेशसे अहेमायेति ॥ ननु हेमन्शब्दो नकारान्तो नपुंसकलिङ्गो भवति । तत्कथं भाष्येऽहेमायेत्यकारान्तत्वेन प्रयोगः । उच्यते । अर्तिस्तु सुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्योमन्नित्युक्तो मन्प्रत्ययो हिगतावित्यस्मादपि बहुलोक्तेर्भवतीत्यकारान्तो हेमशब्दः । यथेन्प्रत्ययान्तोप्यृषिशब्द इकारान्त एवं तथामन्प्रत्ययान्तोपि हेमशब्दो नकारान्तो न भवति । किंत्वकारान्त एव । अन्यथा ऋषिशब्दोपीन्नन्तःस्यात् । तथा सर्वधातुभ्यो मनिन्निति मनिन्प्रत्यये तुनान्तोपि हेमशब्दोस्तीत्याशयेन भाष्ये हेमायेति द्विविधोपिप्रयुक्तः ।

उष् दाहे इत्यतो लटःशत्रादेशे व्यत्ययेन शब्लुकि शतुर्ङित्वाद्गुणाभावे उषच्छब्दोदा-हकत्वार्थकःस्यादतःकथं संप्रकाशद्भिरिति व्याख्यातं भाष्य इत्यत आह ॥ वशकान्ताविति ॥ अत्र कान्तिः प्रकाशः । क्वचिदिच्छा गृह्यते । अदादित्वाच्छब्लुकि ग्रहिज्येति संप्रसारणे शतुर्ङित्वाद्गुणो नेति भावः । भाष्ये संप्रकाशद्भिरित्यत्र संप्रेत्युपसर्गाभ्यां कस्यार्थ उच्यत इत्यत आह ॥ षकार इति ॥ काशृदीप्तावित्यस्यानुदात्तेत्त्वनिमित्तात्मनेपदस्यानित्यत्वात्संप्रकाशद्भिरिति भाष्ये शतृप्रयोग इत्यभिप्रेत्य शानजन्तप्रतिपदमाह ॥ संप्रकाशमानैरिति ॥ श्रुत्युक्तोषद्भिरित्यस्य विशेष्याकांक्षायामनुवृत्तपौंस्येत्यस्य भिसःसुपांसुलुगित्याकारादेश इत्याशयेनान्वयमाश्रित्य भाष्ये शक्तिभिरित्युक्तमित्याशयेनाह ॥ पौंस्यैः शक्तिभिरिति ॥ मर्याइति बहुवचनानुसारेण मरुतोप्य त्रग्राह्या इत्याशयेन मर्या मरणवन्तो देवा एवमित्युक्तं भाष्ये । तद्विवृणोति ॥ नकेवलमिति ॥ छन्दसि निष्टर्क्येत्यादिना मृङो यत्प्रत्ययस्य कर्तरि निपातनादाह । मर्यामरणवन्त इति ॥ अस्मिन्पक्षे कृण्वन्नित्येतत्पदं वचनव्यत्ययेन अजायथा इति पदं पुरुषवचनव्यत्ययेन योजयति ॥ कुर्वत इति अजायन्तेतिच ॥ ३ ॥

आदह ॥ पूर्वस्यामृचि परमेश्वरस्य तच्छक्तीनां मरुतांच यज्ञेऽभिव्यक्तिरुक्ता । अस्यांतुशक्ति-मरुतामभ्यक्तिरुच्यते । यज्ञकाललक्षकाद्यज्ञशब्दात् यज्ञर्त्विग्भ्यांघखञाविति यज्ञमर्हतीत्यर्थे घप्रत्यये तस्यायनादिसूत्रेण इयादेशे यज्ञियमिति रूपमित्यभिप्रायेण भाष्ये यज्ञे वाच्यमित्युक्तम् । तस्य तात्पर्यमाह ॥ यज्ञे भवमिति ॥ नायं विग्रहः किंतु यज्ञे उच्चारणविषयत्वेन विद्यमानमित्यर्थप्रदर्शनमात्रम् ॥ अकारवाच्यादिति ॥ अः इतिब्रह्मेति श्रुतेरितिभावः ॥ अहतदैवेति ॥ अहशब्दो नियोगार्थ इति विश्वोक्तेर्नियोगशब्दस्य चावधारणार्थत्वात्तदेत्यस्य शेषोक्तेरिति भावः ॥ सुखमन्विति ॥ स्वं आत्मानं दधाति पुष्णातीति स्वधा सुखम् । आतोमनिन्कनिब्वनिपश्चेति चाद्विजिति भावः । अथवा स्वधाशब्दस्यान्ननामसु पाठादत्रापि तत्प्राप्तिलक्षणां विना प्रकृतेऽनन्वयादल्पत्वाच्चान्नार्थकत्वं विहाय सुखस्यान्नादिजन्यत्वाल्लक्षणया तदर्थकत्वमिति भावः गर्भत्वमित्यस्य गौणीं वृत्तिमाश्रित्यभाष्ये उक्तमर्थं संगमयति । गर्भत्वं गूढत्वमिति । एरिर इति । आङ्पूर्वादीरगतौ कंपनेनेत्यतोलिटि छंदसत्वादिजादेरित्यामोभावे झस्य लिटस्तझयोरेशिरोजितीरेजादेश इति भावः ॥ देवता अप्येवमिति ॥ अत्र आत् हरेर्वशात् विष्णोःप्रसादादिति विशेषं विनाऽन्यत्समानमितिभावः ॥ ४ ॥

वीळुचित् ॥ गुहाशब्दात्सप्तम्याः सुपांसुलुगिति डादेश इति भावेनाह ॥ गुहायामिति ॥ संस्थित इति शेषोक्तिः । चिच्छब्दस्याप्यर्थत्वमिति भावः ॥ वीळुदृढमिति ॥ दक्षोवीळु इति बलनामसु पाठाद्गुणवचनेभ्यो मतुपो लुग्विधानाद्वीळुशब्दो बलविशिष्टवचन इति भावः ॥ रुजोभङ्गे इति ॥ कृहनिभ्यांक्तुरित्युक्तःक्तुर्बहुलोक्तेराङ्पूर्वरुजेरडागमसहितो भवतीति भावः । आरुजद्भिरिति भाष्येतु लटःशत्रादेशे तौदादिकशप्रत्ययस्य ङित्वाद्गुणाभावः । उस्राःवसव इत्युस्रशब्दस्य रश्मिनामसु पाठात्प्रकाशार्थकोस्रशब्दात्तद्धिता इति बहुवचनाद्भावार्थे यप्रत्यय इति भावेनाह ॥ उस्रियाःप्रकाशत्वानीति ॥ बहुवचनतात्पर्यमाह ॥ नानाविधमिति ॥ लब्धवानिति ॥ विदॢलृलाभ इतिधातोरिति भावः । भाष्योक्तमेतादृशैरिति पदमनूद्य व्याचष्टे ॥ एतादृशै वीळुचिदिति ॥ ५ ॥ एकादशोवर्गः ॥

## ऋक्संहिता पदपाठसहिता

(५६) देवयन्तो यथा मतिमच्छा विदद्वसुं गिरः ॥ महामनूषत श्रुतम् ॥ ६ ॥

(प०) देवऽयन्तः । यथा । मतिम् । अच्छ । विदत्ऽवसुम् । गिरः ॥ महाम् । अनूषत । श्रुतम् ॥ ६ ॥

(५७) इन्द्रे॑ण॒ सं हि दृक्ष॑से संज॒ग्मा॒नो अबि॑भ्युषा ॥ म॒न्दू स॑मा॒नव॑र्चसा ॥ ७ ॥

(प०) इन्द्रे॑ण । सम् । हि । दृक्ष॑से । स॒म्ऽज॒ग्मा॒नः । अबि॑भ्युषा ॥ म॒न्दू इति॑ । स॒मा॒नऽव॑र्चसा ॥ ७ ॥

(५८) अ॒न॒व॒द्यैर॒भिद्यु॑भिर्म॒खः सह॑स्वदर्चति ॥ ग॒णैरिन्द्र॑स्य॒ काम्यैः॑ ॥ ८ ॥

(प०) अ॒न॒व॒द्यैः । अ॒भिद्यु॑ऽभिः । म॒खः । सह॑स्वत् । अ॒र्च॒ति॒ ॥ ग॒णैः । इन्द्र॑स्य । काम्यैः॑ ॥ ८ ॥

(५९) अतः॑ परिज्म॒न्ना ग॑हि दि॒वो वा॑ रोच॒नादधि॑ ॥ सम॑स्मिन्नृञ्ज॒ते गिरः॑ ॥ ९ ॥

(प०) अतः॑ । प॒रि॒ऽज्म॒न् । आ । ग॒हि॒ । दि॒वः । वा॒ । रो॒च॒नात् । अधि॑ ॥ सम् । अ॒स्मि॒न् । ऋ॒ञ्ज॒ते॒ । गिरः॑ ॥ ९ ॥

(६०) इ॒तो वा॑ सा॒तिमीम॑हे दि॒वो वा॒ पार्थि॑वा॒दधि॑ ॥ इन्द्रं॑ म॒हो वा॒ रज॑सः ॥१०,१२,६ ॥

(प०) इ॒तः । वा॒ । सा॒तिम् । ईम॑हे । दि॒वः । वा॒ । पार्थि॑वात् । अधि॑ ॥ इन्द्र॑म् । म॒हः । वा॒ । रज॑सः ॥ १०, १२, ६ ॥

ऋग्भाष्यम्

सम्यक्प्रद्योतयंतोमुं मतिरूपं यथास्थितम् ।
विदद्भित्तं महांतं च विश्रुतं सुगिरोऽस्तुवन् ॥ ६ ॥
तस्य संदर्शनायैव सङ्गतस्तेन शङ्करः ।
मखात्मा पुरुहूतो वा श्रीभूमी च सुखात्मिके ॥ ७ ॥
अनवद्यैर्महाज्ञानैः प्रियैर्देवगणैः सह ।
वायुनाच सहार्चन्ति सुधीत्वात्परमेश्वरम् ॥ ८ ॥
अतो हेतोरिहायाहि दिवोवा सूर्यमण्डलात् ।
परिज्मन्सर्वगास्माकमधिकृत्य समर्हणम् ।
अस्मिन्गिरः प्राप्नुवन्ति सम्यक्परममुख्यतः ।
युञ्जन्तीत्यत्र बाहुल्याद्देवयन्तोत इत्यपि ।
बाहुल्याद्द(दृ)ष्टितो गीर्भिर्विनार्थो नान्य इष्यते ॥ ९ ॥
इतो दिवोवा पातालात्सातिं लाभस्वरूपिणम् ।
महतो रञ्जकाद्धिष्णोर्लोकाद्वा तमधीमहे ॥ १०, १२, ६ ॥

## ऋग्भाष्यटीका

देवयन्तः । सम्यक् । अच्छेति निपातः संशब्दार्थः । अच्छ देवयन्तः । सम्यक् प्रद्योतयन्तः सम्यक् प्रकाशयन्त्यो गिरो वेदरूपाः सुगिरः । लिङ्गव्यत्यासः छान्दसः । अथवा गिर इति कर्तृसाधनः पुल्लिङ्गः । अत एव शोभना गिरो येषां ते सुगिरः । यथा यथास्थितं निर्विकारं मतिं मतिरूपं विदद्वसुं विदद्वित्तं विददिति कर्मणि छान्दसं रूपम् । लब्धवित्तम् । महां महान्तं श्रुतं विश्रुतं प्रसिद्धममुमिन्द्रमनूषत अस्तुवन् ॥ ६ ॥

इन्द्रेण । तस्य । अत्र मखात्मेत्युत्तरस्यामृचि स्थितस्य मखशब्दस्य व्याख्यानम् । वाचशब्दौ व्यत्यासेन योज्यौ । मं मदं सुखं ददातीति मन्दुः शङ्करः पुरुहूतश्च । श्रीभूमीवा मन्दू । कथम् । सुखात्मिके । ततश्च मन्दू शङ्करपुरुहूतौ श्रीभूमीवा संदृक्षसे । दृशेस्तुमर्थेकसे । तस्य परमेश्वरस्य संदर्शनाय अबिभ्युषा निर्भयेन समानवर्चसा निर्विकारतेजसा इन्द्रेण तेनैव परमेश्वरेण संजग्मानः संजग्मानौ सङ्गतः सङ्गतौ बभूवतुः । प्रसिद्धेन्द्रविषये मन्दू इति द्यावापृथिव्यौ । मदहेतुत्वात् । अन्यत्समानम् ॥ ७ ॥

अनवद्यैः । मखो मखात्मा मखाभिमानी पुरुहूतोऽनवद्यैः निर्दोषैः अभिद्युभिरभितो द्यौः प्रकाशो ज्ञानं येषां तैः महाज्ञानैः इन्द्रस्य परमेश्वरस्य काम्यैः प्रियैर्गणैर्देवतागणैः सह सहस्वत् सहस्वान् । सहो वायुस्तद्वान् । सहस्वद्यथाभवति तथेति वा । वायुनाच सहेति यावत् । इन्द्रस्य इन्द्रं परमेश्वरमर्चति । तात्पर्यमाह ॥ अर्चतीति ॥ वायुरिन्द्रः सर्वे देवाश्च परमेश्वरमर्चन्तीत्युक्तं भवतीति । अनवद्यैरित्यादिविशेषणानि हेतुगर्भाणीत्यभिप्रेत्य सर्वेषां संग्रह उक्तः सुधीत्वादिति । इन्द्रविषये त्वनवद्यैरभिद्युभिरिन्द्रस्य काम्यैः ऋत्विग्गणैः क्रियमाणो मखः सहस्वद्बल-वदतिशयेनेन्द्रमर्चतीति करणे कर्तृत्वोपचारेण योज्यम् ॥ ८ ॥

अतः । अतो हेतोः । परितो ज्मां भूमिं वर्तत इति परिज्मा हे परिज्मन् सर्वग यत एवं त्वं सर्वयज्ञानां भोक्ता अतो हेतोर्दिवः स्वर्गात् रोचनात्सूर्यमण्डलाद्वा अधि अस्माकं समर्हणमधिकृत्य इह यज्ञस्थानम् आगहि आयाहि । किञ्च । अस्मिंस्थाने गिरः स्तुतिरूपा वेदवाचः सं सम्यक् तस्यैव विवरणं परममुख्यतस्त्वामृञ्जते । धातूनामनेकार्थत्वात्प्राप्नुवन्ति । अतोप्यायाहि । अत्र सूक्ते प्रथमस्तृच ऐन्द्रः । आदहेत्याद्याः षट्मारुत्यः । तत्रापि वीळुचिदिन्द्रेणेति द्वे ऐन्द्र्यौ च । दशमी त्वैन्द्रीति केचिद्ब्रुवते । यथा युञ्जन्त्यादहेत्येताः षण्मारुत्यो वीळुचिदिन्द्रेणेत्यैन्द्र्यौ चेति । अनाख्याते त्विन्द्रो देवतेति च । तदेतद्दशम्यां विप्रतिपत्त्यभावात्तद्व्याख्यानात्प्रागेव निराकरोति ॥

युञ्जन्तीत्यत्रेति ॥ युञ्जन्ति ब्रध्नं युञ्जन्त्यस्येत्यत्र ऋग्द्वये देवताभ्योन्य इन्द्रलक्षणोर्थो नेष्यते प्रमाणिकैः । कुतः । बाहुल्यात् बहुवचनश्रवणात् । तस्य यथाकथंचिद्व्याख्याने ब्रध्नशब्दस्यादित्ये रूढिर्विरुध्यते । असौवा आदित्यो ब्रध्न इति श्रुत्यन्तरव्याख्यानविरोधश्च । उपलक्षणं चैतत् । केतुं कृण्वन्नित्यस्यामृचि कृण्वन्नित्याद्येकवचनस्य मर्या इति बहुवचनस्य च श्रवणादन्यः केवलेन्द्रलक्षणोर्थो नेष्यते । चतुर्थ्यां पञ्चम्यां च न विप्रतिपत्तिः । उत्तरासु चतुर्षु प्रतिपाद्येऽर्थे बाहुल्याद्दष्टितो बहुवचनस्याश्रवणादन्योर्थो देवतालक्षणो नेष्यते । कथंचिद्योजनातु क्लिष्टतरा ।

ननु देवयन्त इत्यस्यामृच्यतःपरिज्मन्नित्यस्यामपि बहुवचनश्रवणात्कथं बाहुल्याद्दष्टित इत्युच्यत इत्यत उक्तं देवयन्तोऽत इत्यपि गीर्भिर्विना बाहुल्याद्दष्टित इति । गिरां तत्र बहुवचनविषयत्वं न प्रतिपाद्यस्येत्यर्थः । बाहुल्याद्दृष्टित इति । क्वचित्पाठः । तत्र युञ्जन्तीत्यत्र बाहुल्यात् देवानामेवार्थ-त्वमन्यस्त्विन्द्रलक्षणोर्थो नेष्यत इत्युक्ते शङ्कते एवं तर्हि देवयंत इत्यत्रात इत्यत्रापि बाहुल्याद्देवार्थत्वमेवेन्द्रस्त्वर्थो नेष्यत इति । तत्रोत्तरं देवयन्त इति । देवयन्तोत इत्यपि बाहुल्याद्बहुवचनसामर्थ्यादन्यो देवतारूपोर्थो नेष्यते । तर्हि बहुवचनं निरर्थकं स्यात् तत्राह ॥ गीर्भिर्विनेति ॥ कुत एतदित्यत आह ॥ दष्टित इति ॥ स्फुटं तथाप्रतीयमानत्वात् । विषयान्तराप्रतीतौ सत्यां प्राग्बहुवचनं हेतुत्वेनोक्तमिति भावः ॥ ९ ॥

इतोवा । इतोदिवः । वयमितो दिवोऽर्वाक्तनात् द्युलोकाद्वा । पार्थिवात्पृथिवी सम्बन्धिनः पातालाद्वा । महो महतो महतां रजसो रञ्जकाद्रिष्णोर्लोकाद्वा । एतेषु लोकेषु स्थितमिति यावत् । सातिं षणसम्भक्तावित्यस्येदं रूपम् । लाभस्वरूपिणं भगवानेव हि भक्तानां लाभः । तमिन्द्रमधीमहे स्मरामः । इक् स्मरणे स्तुमोवा इङ् अध्ययने । याचामहेवा । याच्ञाकर्मसु पाठात् ॥ १०, १२, ६ ॥

## मन्त्रार्थमञ्जरी

'अच्छ' इति निपातः सम्शब्दार्थे, संहितायां दैर्ध्यम्, अच्छ देवयन्तः, सम्यग्द्योतयन्तः, दीव्यतिः अत्र द्युत्यर्थः लिङ्गव्यत्ययश्छान्दसः, सम्यक्प्रकाशयन्त्यः । गिरः, वेदरूपा वाचः, यद्वा– गिरन्तीति गिरः, 'गॄ निगरणे' इत्यतः कर्तरि क्विप्, वेदरूपवाचमुच्चारयन्तः पुरुषा इत्यर्थः, तदा तु न लिङ्गव्यत्ययः । यथा, यथास्थितम्, निर्विकारमिति यावत् । मतिम्, मतिरूपम् । विदद्वसुम्, लाभार्थस्य विदेः कर्मणि च्छान्दसं रूपम्, लब्धवित्तम् । महाम्, महान्तम् । श्रुतम्, विश्रुतं प्रसिद्धम् । (अमुमिन्द्रम्) अनूषत, 'णु स्तुतौ' लुङ्, आत्मनेपदम्, अस्तुवन्नित्यर्थः ॥६॥

मं सुखं दत्त इति मन्दूसुखप्रदौ शंकरपुरंदरौ मखात्मकत्वात्, सुखरूपत्वाद्धेतोः श्रीभूमी वा मन्दू। सम् दृक्षसे, परमेश्वरसन्दर्शनाय, सम्पूर्वस्य दृशेः 'तुमर्थे सेसेनसेऽसेन्क्सेकसेन्' इत्यादिना कसेन्प्रत्यये शकारस्य क्सादेशे 'इण्कोः' इति षत्वे कषयोगे 'क्षः' इति सिद्धेः। अबिभ्युषा, निर्भयेन। समानवर्चसा, निर्विकारतेजसा। इन्द्रेण, परमेश्वरेण। संजग्मानः, संजग्मानौ व्यत्ययात्, संगतौ बभूवतुः, गमेः कर्मणि लिटः कानच्। हि, प्रसिद्धम्। प्रसिद्धेन्द्रविषये तु 'मन्दू' इति सुखहेतुत्वाद्द्यावाभूमी गृह्येते, अन्यत्समानम् ॥ ७ ॥

मखः, मखाभिमानी पुरुहूतः। अनवद्यैः, निर्दोषैः। अभिद्युभिः, अभितो द्यौः प्रकाशो ज्ञानं येषां तैर्महाज्ञानैः। इन्द्रस्य, परमेश्वरस्य। काम्यैः प्रियैः। गणैः, देवगणैः सह। सहस्वत्, सहो वायुः, तद्वत्, सहस्वद्यथा भवति तथेति वा, वायुना च सहेति यावत्। (इन्द्रस्य) इत्यावृत्तिः, इन्द्रम्, व्यत्ययात्, परमेश्वरम्। अर्चति, अर्चयति ॥ वायुरिन्द्रो देवाश्च महाज्ञानित्वादनवद्यत्वान्मखाभिमानित्वादति- प्रियत्वाच्च भगवन्तमर्चयन्तीति भावः। प्रसिद्धेन्द्रविषये तु– अनवद्यैः अभिद्युभिः इन्द्रस्य काम्यैः। ऋत्विजां गणैः। क्रियमाणः मखः। सहस्वत् बलवत्। अतिशयेन (इन्द्रम्) अर्चति। इति करणे कर्तृत्वोपचारेण योज्यम् ॥ ८ ॥

परितो ज्मां भूमिं वर्तत इति परिज्मा, तस्य सम्बुद्धिः (हे) परिज्मन्, सर्वगत। अतः, प्रागुक्तदिशा सर्वयज्ञभोक्तृत्वादेव। दिवः, स्वर्गात्। रोचनात्, दीप्यमानात्सूर्यमण्डलात् वा। अधि, अस्माकं समर्हणामधिकृत्य। (इह) यज्ञस्थानम्। आ गहि, आयाहि, गमेः छत्वाभावश्छान्दसः, अनुनासिकलोपः ॥ आगमने हेत्वन्तरं चास्तीत्युच्यते– अस्मिन्, यज्ञस्थाने। गिरः, स्तुतिरूपावाचः। सम्, सम्यक्, परममुख्यया वृत्त्या। (त्वाम्) ऋञ्जते, ऋञ्जन्ते, प्राप्नुवन्ति ॥ अतश्च 'आ गहि' इति ॥ ९ ॥

(वयम्) इतः। दिवः, अर्वाक्तनाद्द्युलोकात्। वा पार्थिवात्, पृथिवीसम्बन्धिनः पातालात्। वा। महः, महतः। रजसः, रञ्जकाद्विष्णुलोकात् वा। एतेषु लोकेषु स्थितमिति यावत्। सातिम्, लाभस्वरूपिणम्। इन्द्रम्। अधि ईमहे, स्मरामः– 'इक् स्मरणे' स्तुमो वा 'इङ् अध्ययने' इति धातोः, याचामहे वा– याच्ञाकर्मसु पाठात्। अत्र सूक्ते देवताविवादनिरासो भाष्यादौ व्यक्तः ॥ १० ॥ इति शेषा ऐन्द्र्यः ॥ इति द्वादशो वर्गः ॥ १२ ॥ षष्ठं सूक्तम् ॥ ६ ॥

## पदार्थप्रकाशिका

देवयन्तो यथामतिम् । प्रद्योतयंत्य इति । दिवु क्रीडाविजिगीषाद्युतिस्तुतीत्यादिधातोर्दीव्यतेः द्योतनार्थत्वादिति भावः । भाष्योक्तसुशब्दार्थभूतं शोभनत्वमुपपादयितुं वेदरूपा इत्युक्तम् । सुगिर इति अपौरुषेयत्वेन शोभनाश्च ताः गिरश्चेति सुगिर इत्यर्थः । ननु तर्हि देवयंत्य इति स्यादित्यत आह । लिङ्गव्यत्यास इति । अत एवास्वरसादाह । अथवा कर्तृसाधन इति । कर्त्रर्थं साधयन्ति प्रतिपादयन्तीति कर्तृसाधन इत्यर्थः । तथाच गृशब्दे अस्मात् कर्तरि क्विपि तस्य लोपे ऋत इत्यातोरिति इत्वे गिर इति कर्तरि निष्पद्यते । तथाच गृणन्तीति गिरःस्तोतार इत्यर्थः । अस्मिन्नर्थे भाष्यं घटयति अत एवेति । ते भक्ताः ।

ननु विददिति कथं विद्लृलाभ इत्यस्य आत्मनेपदिनि कर्तरि लटः शानचादेशे यागमे आनेमुगिति आने परे मुगागमे च सति विद्यमानेति वक्तव्यत्वात् । न च परस्मैपदित्वमाश्रित्य लाभार्थस्य विदधातोः कर्तरि लटः शत्रादेशे शकारऋवर्णयोर्लोपे विद् अत्विददिति रूपं युक्तमिति वाच्यम् । तथात्वे लब्धं वित्तमिति वक्तव्यतया लब्धवित्तमिति व्याख्यानायोगात् । न च कर्मणि शतृप्रत्ययमङ्गीकृत्येदं व्याख्यानमिति वाच्यम् । कर्मणि शतुरननुशासनादित्यत आह । विदितिकर्मणीति । न च लाभे विन्दति विन्दत इत्यादि प्रयोगात् नुमागमे विददिति स्यादिति वाच्यम् । नुमभावेपि छन्दस्त्वादेवेति भावः ॥ ६ ॥

इन्द्रेण संहि दृक्षसे । व्यत्यासेनेति । शङ्करः पुरूहूतश्चेति श्रीभूमीवेति व्यत्यासेत्यर्थः । मन्दुरिति । दाधातोः कर्तरि युप्रत्यये मन्दुरिति भवति । शङ्कर इति । शङ्करशब्दस्यापि सुखकारित्वार्थकत्वेन मुन्दुशङ्करशब्दयोः एकार्थत्वादिति भावः । पुरुहूत इति तस्यापि सुखदत्वादिति भावः । दृशेस्तुमर्थेकसे इति तुमर्थेसेसेनसेत इत्यादिसूत्रेण कसेप्रत्ययस्याविधानात् न तेन सूत्रेण कसेप्रत्ययः । किन्नाम दृशेविख्येचेतिसूत्रे चशब्दस्यानुक्तप्रत्ययसंग्राहकत्वेन कसेप्रत्ययोपि व्याख्येय इति भावः । तथाच सम्पूर्वकात् दृशप्रेक्षण अस्मात् तुमर्थे दृशेविख्येचेति कसेप्रत्यये ककारलोपे व्रश्चसृजमृजयजराजम्भाजछशांष इत्यनेन शस्य षत्वे षढोःकःसीति षस्य कत्वे आदेशप्रत्यययोरिति प्रत्ययाद्यस्य सस्य षत्वे कषयोगे क्ष इति जाते संदृक्षस इति भवति । कृन्मेजन्त इत्येकारान्ताव्ययमिदम् । अत्र कित्वाद्गुणाभावः । अन्यथा द्रक्षस इति स्यात् एवं संदृक्षस इत्यस्य सन्द्रक्षितुमित्यर्थो द्रष्टव्यः । समानशब्द एकप्रकारार्थ इत्याशयेनाह निर्विकारेति एकवचनं द्विवचनार्थ इत्याशयेन सङ्गतावित्युक्तं शङ्करः पुरुहूतश्च संदृक्षसे परमेश्वरापरोक्षज्ञानाय तेन परमेश्वरेण सङ्गतौ मनसा सम्बभूवतुः तद्ध्यानादिकं चक्रतुरित्यर्थो द्रष्टव्यः ।

तथा श्रीभूमी संदृक्षसे तस्य परमेश्वरस्य नमने वसुविशेषोपलम्भाय तेन परमेश्वरेण सम्बन्धौ तद्ध्यानं चक्रतुः । लक्ष्मीरक्षा दीक्षेत्याद्यभियुक्तवचनादित्यर्थः । मदहेतुत्वादिति सुखहेतु-त्वादित्यर्थः । मधुद्यौरस्तु नः पितेत्यादि प्रयोगादिति भावः । तथाच मन्दू द्यावापृथिव्यौ संदृक्षसे इन्द्रसाक्षात्काराय अबिभ्युषो समानवर्चसा प्रसिद्धेन्द्रेण सञ्जग्मानः सङ्गतौ तद्ध्यानपराव-भवतामित्यर्थः ॥ ७ ॥

अनवद्यैरभिद्युभिः । अनवद्यैरिति ऋग्भाष्ययोः उभयोरपि प्रतीकग्रहणमितिं मन्तव्यं मखात्मा पूर्वं मखशब्दस्य व्याख्यातत्वात् तदाह । मखात्मेति । सहस्मानिति भाव्ये मतुपो वकारस्य जातत्वात् सहस्वानित्युक्तम् । सहोवायुरिति श्रुषः सहो बलमिति सहःशब्दस्य बलनामसु पठितत्वात् वायोश्च बलदेवतात्वादिति भावः । ननु तर्हि सहस्वदिति तदिति नपुंसकलिङ्गं कथमित्यतः क्रियाविशेषणमव्ययमेतदित्याशयेन प्रकारान्तरेण योजयति । सहस्वदिति । योजनाद्वये भाष्यं तात्पर्यकथनपरमित्याह । वायुनानेति । कर्मणि षष्ठीत्याशयेनेन्द्रमित्युक्तं श्रुतिस्थमे-वार्चयतीति भाष्ये अन्वेतीत्याशयेनाह परमेश्वरमर्चयतीति । ननु तर्हि भाष्ये अर्चयतीति पदमविशिष्यत इत्यत आह । तात्पर्यमाहेति । तर्हि तस्य कुत्रान्वय इत्यतः तात्पर्यं विवृणोति । वायुरिन्द्र इति । त्वादित्यनेन व्याख्येयपदस्य ऋच्यभावादेवावतारयति अनवद्यैरित्यादिनेति । हेतुगर्भाणीति । वाय्वाद्याः कथमिन्द्रमर्चयन्ति तत्रासामर्थ्यादित्याशङ्कायाम् अनवद्यैरभिद्युभि-रित्यादिहेतुगर्भाणि विशेषणानि कथितानीत्यभिप्रेत्येत्यर्थः । अतिशयेनेत्यस्य सूचित इत्यर्थः । बलवत्सुष्टु किमुतेत्यभिधानादिति भावः । नन्वर्चने मखस्य करणत्वात् कथं मखैरर्चयतीति कर्तृत्वोक्तिरित्यत आह । करण इति । हर्ता रामशर इतिवदिति भावः । तथाच ऋत्विजो मखैरिन्द्रमर्चन्तीति तात्पर्यम् ॥ ८ ॥

अतः परिज्मन्नागहि । भूमिं परितो वर्तत इत्यन्वयः । अनेककर्तृकभिन्नस्थानगता-नेकयज्ञभोक्तृत्वं युगपद्धरेरसम्भावितमित्याशङ्कापरिहाराय परिज्मन्नित्यनेन सर्वगतत्वमुक्तमि-त्यनुसन्धेयम् । अस्माकं समर्हणं पूजामधिकृत्य तां गृहीतुमिति यावत् । इह भूमौ विद्यमानं यज्ञस्थानं प्रति दिवो रोचनाद्वा आगहीत्यन्वयो द्रष्टव्यः ।

ननु रुजिवर्तमान इति धातोर्वर्तमानार्थत्वादृजन्त वर्तन्त इति वक्तव्यं प्राप्नुवन्तीति प्राप्त्यर्थकत्वं कथमित्यत आह । धातूनामिति । केचित्तु ऋजिधातोर्वर्जनार्थत्वादाह । धातूनामितीत्याहुः । अतोपीति । यज्ञस्थाने ऋत्विजो वेदवाग्भिः परममुख्यवृत्या त्वामेव प्रतिपादयन्तीति यावदिति

यतोऽतोऽप्यायाहीत्यर्थः । अनुक्रमणिकां दूषयितुमुत्तरो ग्रन्थः । तत्र तदर्थाज्ञानेन तद्दूषणस्य ज्ञातुमशक्यत्वात्तत्परिज्ञानाय व्याचष्टे । अत्रेत्यादिना । युञ्जतीत्यनन्तरम् ऐन्द्रमित्यनुवर्तत इत्याशयेन देवताविवेकमाह । प्रथमास्तृच इति । आदहेत्याद्यानां षण्णां मरुद्देवताकत्वं किं चेत्याशयेन प्रवृत्तं वीळूचीत्यादि तदर्थमाह तत्रापीति । षण्णाम् ऋचां मध्ये वीळुचिदिति इन्द्रेणेति द्वे ऋचौ न केवलं मारुत्यौ किंत्वैन्द्र्यो चेत्यर्थः । दशमीति । इतो वासातिमिति ऋगित्यर्थः । ऐन्द्री केवलमिन्द्रदेवताकेत्यर्थः । तामनुक्रमणिकामुदाहरति ।

ननूदाहृतानुक्रमणिकायामादहेत्यादीनां षण्णां मरुदादिदेवताकत्वमुक्तं न प्रथमऋचस्तथांत्य ऋचश्च देवतोक्ता अतः प्रथमऋचः इन्द्रः दशमीत्वैन्द्रीति कथमुच्यते अन्यैव देवता किन्न स्यादित्यत आह अनाख्यात इति । युञ्जतीति सूक्तप्रतीकं गृहीत्वा ऋगष्टकस्यैव देवता उक्त्वा यत्प्रथमऋचोंऽत्यऋचश्च प्रतिपाद्यदेवतायाः अकथनं तदिन्द्रदेवताकत्वमेव सिद्धमित्याशयेनाह । अनादेशे त्विन्द्रो देवतेतिपरिभाषितत्वादिति भावः । तदेतन्निराकरोति इत्यन्वयः । ननु दशम्याः ऋचो देवतां स्वयमुक्त्वा व्याख्याय सूक्तसमाप्त्यनन्तरं पश्चात्परोक्तानुक्रमणिका दूषणीया तद्व्याख्यानात् प्रागेव निराकरणे को हेतुरित्यत आह । दशम्यामिति । इतोवेत्यस्यां ऋचि इन्द्रस्य प्रतिपाद्यत्वं अस्माकमपि संमतं अतः इन्द्रे देवताकत्वे विप्रतिपत्यभावात् तद्व्याख्यानात् प्रागेव निराकरोतीत्यर्थः । बहुवचनेति । तथाच बहुवचनश्रवणान्मरुद्देवताकत्वमेव युक्तमिति भावः । तस्य यथाकथंचिद्व्याख्यानं इति ब्रध्नं बद्धं त्रैलोक्याधिपत्याभिषिक्तं महन्नामसु पाठात् । महान्तं वा इन्द्रं अरुषं अक्रोधं दिवि चरन्तं परितस्थुषस्तस्थिवांसो देवभृत्याः युञ्जन्ति सङ्गच्छन्ति स्थितमनुतिष्ठन्ति चरन्तमनुचरन्तीति यावत् । रोचनात्सूर्यादिज्योतींषि ब्रध्नेनेन्द्रेणैव रोचन्त इत्येवं इन्द्रभृत्ये बहुपरतया बहुवचनस्य व्याख्यान इत्यर्थः । असौ वा इति युञ्जन्ति ब्रध्नमित्याह । असौ वा आदित्यो ब्रध्न इति ब्राह्मणेन युञ्जन्तीत्यत्र ब्रध्नशब्दस्यादित्यपरत्वेन व्याख्यातत्वात् । ब्रध्नशब्दस्येन्द्रपरत्वं न सम्भवतीत्यर्थकं एतद्युञ्जन्तीत्यत्रेति भाष्यमित्यर्थः । केवलेन्द्रलक्षण इति तस्मादेकवचनबहुवचनश्रवणेनेन्द्रमरुद्देवताकत्वमेव वक्तव्यमिति भावः । नविप्रतिपत्तिरिति । आदहेत्येताः षण्मारुत्य इत्युक्तत्वेन तन्मध्ये आदह वीळुचिदित्यनयोः मरुद्देवताकत्वस्योभय सम्मतत्वादिति भावः ।

उत्तरासु देवयन्त इत्याद्यासु देवतालक्षणः मरुद्देवताकत्वरूपोऽर्थो नेष्यते तस्मादिन्द्रदेवताकत्वमेव वाच्यमिति भावः । कथंचिद्योजना त्विति । बहुवचनस्याश्रवणेऽपि मरुद्विषयत्वं युक्तम् । देवयन्त इत्यत्र मतिमित्येकवचनस्य मरुद्गणैकत्वेन तद्विषयतया योजनात् । यथा

इन्द्रेणेत्यस्य मरुदिन्द्रदेवताकत्वेन हे इन्द्रेत्यध्याहृत्य इन्द्रेण परमैश्वर्यवता बिभ्युषा मरुद्गणेन सञ्जग्मानः सङ्गतः सन् संदृक्षसे संदृश्यसे युवां इन्द्रमरुद्गणौ मन्दू मदयुक्तौ समानवर्चसौ स्थः । समानवर्चसेन्द्रेण चेत्येवमुभयपरत्वेन योजनात् । अनवद्यैरित्यत्र तृतीयाबहुवचनानां द्वितीयाबहु-वचनत्वेन विपरिणामं विधाय मरुद्गणान् मखं अर्चतीति मरुद्विषयतयैव योजनात् । अतः परिज्मन्नित्यत्र तु हे मरुद्गणेत्यध्याहृत्य तद्विषयतयैव योजनादित्येवं यथाकथंचिद्योजनादित्यर्थः । इत्यस्यामपीति । गिर इति बहुवचनश्रवणादित्यर्थः । तदभिप्रायमाह । गिरामिति । देवयन्त इत्येतद्गिरामेव विशेषणं न प्रतिपाद्यस्यातः प्रतिपाद्यः इन्द्र एक एव न मरुत इत्यर्थः । देवानामिति अनुक्रमणिकास्थमरुछब्दस्य सर्वदेवतावचनत्वादिति भावः । इत्युक्त इति । सिद्धान्तिभिः प्रतिपादिते सति देवार्थत्वं सर्वदेवार्थत्वमेवास्त्वित्यर्थः । इन्द्रः केवलेन्द्रः गीर्भिर्विनेतीति गिरामेव तत्र बहुवचनविषयत्वं न प्रतिपाद्यस्येत्यर्थः । तयेति । गिरां विशेषणत्वेनेत्यर्थः ।

ननु तर्हि युञ्जन्तीत्यत्र बाहुल्यादिति प्राक् बहुवचनस्य मरुद्देवताकत्वसाधकत्वं कथमुक्तं देवयन्त इत्यादावभावेन व्यभिचारादित्यत आह । विषयान्तरेति । प्रतिपाद्यान्तरेत्यर्थः । तथाच देवयन्त इत्यस्य गिरां विशेषणत्वेन गिरामेव तत्पदप्रतिपाद्यत्वेन विषयान्तरस्यैव प्रतीतेर्नात्र व्यभिचार इति भावः । हेतुत्वेनेति । प्रतिपाद्यदेवताबाहुल्यहेतुत्वेनेत्यर्थः ॥ ९ ॥

इतो वा सातिमीमहे । इतो दिव इति । बिशेषणविशेष्यभावाभिप्रायेण व्याचष्टे । इतोदिवोर्वाक्तनात् द्युलोकादिति इत इत्यस्यार्थोर्वाकृतनादिति । दिव इत्यस्यार्थो द्युलोकादिति । वैकुण्ठस्यापि द्युत्वेन तदपेक्षयार्वाक्स्थाने द्युलोकः स्वर्गलोक इति ज्ञेयम् । पृथिवीसम्बन्धिन इति पातालादेर्भूविवरत्वप्रसिद्धिरिति भावः । रञ्जकात् मनोहरादिति यावत् । विष्णोरिति षष्ठी । षण सम्भक्तावित्यस्येति सम्भजनमेव लाभ इत्याशयः । इत्यस्य धातोरिदं रूपमित्याशयेन सूत्रे ऊतियूतिजूतिसातिहेतिव्रीतयश्चेति निपातितत्वात् न प्रत्ययाद्यपेक्षेति भावः । भक्तानाम् एकान्तभक्तानाम् । अध्ययनमिति । अध्ययनं नाम स्तुतिरेवेति भावः । यांचाकर्मस्विति । ईमहे यामेध्मह इत्यादियांचार्थकदशनामसु ईमह इत्यस्य पाठादित्यर्थः ॥ १० ॥ १२ ॥ ६ ॥

## पदार्थदीपिका

देवयन्त इति दीव्यतेः द्युत्यर्थाणि इति णिजन्ताल्लटः शत्रादेश इति ज्ञेयम् ॥ शोभनत्वस्य श्रुतौ कथं लाभ इत्यत आह ॥ लिङ्गेति ॥ देवयन्त इति ॥ देवयन्त इति विशेषणीयलिंगव्यत्यास इत्यर्थः ॥ न च देवयन्त इत्यस्य प्रद्योतयन्तः प्रकाशयन्त इति व्याख्याने णिजन्ताच्छतरि

एतद्रूपसिद्धेरभिप्रेतत्वात् ॥ तथात्वेच प्रत्ययस्वरेण धातुस्वरेण तिपूस्वरेणवा वकाराकारस्य चतुरः कल्पयन्तो संयोजयन्तो दुरितानि विश्वेत्यादित्यादिवदुदात्तत्वापत्तेर्बाधकत्वात् ॥ प्रत्ययमध्ये अवग्रहस्यासंभवाच्च कथमेतद्व्याख्यानमिति वाच्यम् ॥ शतुः छन्दस्युभयथेत्यार्धधातुकत्वेन शब्दभावेनादुपदेशादित्यनुदात्तरूपसार्वधातुकस्वरासंभवात् इति शिष्टप्रत्ययस्वरेण शतुरुदात्तत्वेन-विपधिच्छब्दस्याखण्डंप्रातिपदिकत्वेपित्वन्मते तन्मध्येऽवग्रहवत्सर्वेविधयश्छन्दसि विकल्प्यन्त इति न्यायेन प्रत्ययमध्येप्यवग्रहसंभवेन चैतद्व्याख्यानस्याकलंकत्वादिति भावः ॥

कर्तृसाधन इति ॥ गृध् शब्द इत्यस्मात् क्विप्चेति कर्तरि क्विपि ऋत इत्यातोरितीत्वे परत्वेच सति गृणन्ति स्तुवन्तीति गिरः स्तोतार इत्यर्थः ॥ अस्मिन्नर्थे भाष्यं घटयति ॥ अत एवेति ॥ स्थितमिति ॥ श्रौताध्याहारः ॥ वेत्तेः कर्तरि लिटः शतरि विददिति रूपस्य संभवेपि तस्य न विद्वत्त्वयोग्यता अंतर्णीतस्य ण्यर्थताङ्गीकारे योग्यतायां सत्यामप्यल्पार्थत्वं विद्यतेः कत्रर्थे योग्यतायामपि परस्मैपदं श्यन् विकरणलोपश्चेति द्वयं कल्प्यं अतो विन्दतेरेव कर्मणि रूपमित्याह ॥ विददिति ॥ नन्वेवमर्थविशेषलाभेपि कर्मण्यात्मनेपदस्य भावकर्मणोरिति नियतत्वात्सार्वधातुके यश्चावश्यकत्वात् ॥ विद्यमान इति भवितव्यं विददिति कथमित्यत उक्तं छान्दसमिति ॥ महान्तमिति ॥ नकारतकारयोर्लोपच्छान्दस इति भावः ॥ अनूषतेति ॥ णुस्तुतावित्यस्मद्धातोः व्यत्ययेनात्मनेपदे लुङि झस्यादेशे सिचि कुटादित्वेनङित्वात् गुणाभावे उकारदीर्घे रपरत्वे च विवक्षितरूपसिद्धिरिति भावः ॥ ६ ॥

तुमर्थ इति ॥ तुमर्थेसेसेनसेअसेन्क्सेन् इति सूत्रे वसेप्रत्ययोप्युपसंख्येय इति भावः ॥ कस इति पाठेपि सडागमश्च प्रत्ययस्य बोध्यः तस्य च कित्वाद्गुणाभावः व्रश्चेत्यादिना षत्वं षढोः कःसीति तस्य कत्वम् आदेशप्रत्यययोरिति प्रत्ययाद्यसकारस्य षत्वं कषयोगे क्ष इति क्षत्वं चेति द्रष्टव्यम् ॥ अबिभ्युषेति ॥ ञिभी भये अस्मात् क्लिट्शेषात् कर्तरिपरस्मैपदमिति परस्मैपदम् ॥ क्वसुश्चेति किट् क्वसुरादेशः तस्य कित्वाद्गुणाभावः द्विर्भावः अभ्यासस्य ह्रस्वश्च ॥ क्रादिति नियमाप्राप्त इति ॥ ईट्वस्वेकाजाश्रद्घसामिति नियमात् निवर्तते नञ्समासे तृतीयैकवचने भत्वाद्वसोः संप्रसारणमिति वकारस्य उकारः संप्रसारणाच्चेति पूर्वरूपम् आदेशप्रत्यययोरित्यनेन सकारस्य षत्वं भवत्ययं स्थानिवत्वात्प्रत्ययावयवः यङादेशं बाधित्वा एरनेकाचू इति यणादेश इति भावः ॥ संजग्मानमिति ॥ गमेः संपूर्वच्छन्दसि लुङ्लिट् इति वर्तमाने लिट्संमोगम्यृच्छीत्यात्मनेपदविधानात् लिटः कानचादेशः द्विर्भावो हलादिः शेषः अभ्यासस्य चुत्वं गमकहनजनेत्युपधालोपश्चेति भावः ॥७ ॥

सहस्वानिति ॥ धय इति मतुपो वत्वमितिभावः ॥ सहोवायुरिति ॥ सहोवायुरस्मिन्निर्वचने कर्मण्यस्तीति सहस्वदित्यर्थः ॥ तसौ मत्वर्थ इति भसंज्ञया पदसंज्ञाया बाधितत्वात्सकारस्य रुत्वाभाव इति भावः ॥ काम्यैरिति ॥ कमेर्णिङि अत उपधाया इति वृद्धौ जनिजृकसुरंजोमतोश्चेत्यमन्तत्वेन प्राप्तस्य मित्वस्य नकारस्य प्रतिषेधात् मितांह्रस्व इत्युपधाह्रस्वत्वं न भवति । ण्यन्तात्सौयत् णिलोपश्चेति द्रष्टव्यम् ॥ सङ्गह इति ॥ अभिद्युत्वस्य साक्षादनवद्यत्वेन्द्रप्रियत्वयोः समनियतत्वेनेति संक्षेप इति भावः ॥ ८ ॥

परितो ज्मामिति ॥ गौक्ष्माज्मेति पृथिवीनामसु पाठात् ॥ ज्माशब्दः पृथिवीपरः ॥ ततोन्यत्रापि दृश्यत इत्यस्याभितः अन्तर्भावाद्वर्तत इत्युक्तं साकल्यार्थे अव्ययीभावश्चायं ततोऽव्ययीभावात् ॥ तद्धिता इति समासान्तो निचुप्रत्यय इति भावः ॥ यद्यप्यत्र परिपूर्वादजगति क्षेपयोरित्यस्मादन्येभ्योपि दृश्यन्त इति मनिन्प्रत्यये जेवीभावाभावोऽकारलोपश्च निपातित इति परिज्मन् सर्वगतेत्यपिभाष्यं शक्यते व्याख्यातुं तथापि परिसमयानिकषाहा ऋते प्रतियोगेष्वपीति व्याख्याततत्वात् परितोयोगे ज्मामिति द्वितीया ॥ ज्मायतश्चरेत् ॥ परिज्मानो रथे इति परिज्मन् शब्दस्य भाष्ये उत्तरत्र व्युत्पादयिष्यमाणत्वादित्थं व्युत्पादितः । इयांस्तुभेदः यत्तत्र रथविषये व्याख्यास्यमानत्वात्भाष्ये वृत्यन्तर्भूता चरणक्रियोक्ता ॥ अत्र पुनः आत्मात्मविषये व्याख्याततत्वाद्वृत्तिक्रियावृत्यन्तर्भूतोक्तेति ध्येयम् ॥ रोचनादिति ॥ रुचिदीप्तावित्यस्मादनुदात्तेतश्च हलादेरिति कर्तरि युच् प्रत्यय इति भावः ॥ ननु ऋजिवर्जन इति ऋजंतिर्वर्जनार्थकः पठ्यते तत्कथंभाष्ये प्रान्पुवन्तीति व्याख्यानमित्यत आह ॥ अनेकार्थत्वादिति ॥ आगहीति ॥ गमेर्बहुलं छन्दसीति शपो लुक् हेर्ङित्वादनुदात्तोपदेशइत्यादिना मकारलोपः अतोहेरिति हिलोपस्तु नभवति ॥ तस्मिन् कर्तव्ये असिद्धवदत्राभादिति मलोपस्यासिद्धत्वेनानाकारान्तत्वादिति ध्येयम् ॥ ननूदाहृतानुक्रमणिकायामादहेत्यादीनां षण्णां ऋचामिवोक्तदेवताकत्वं उक्तं न तु युञ्जतीति ऋतस्य ज्ञतोवेत्यृचश्चेन्द्रदेवताकत्वमित्यत आह ॥ अनारव्यात इति ॥ उदाहृतानुक्रमणिकायां सूक्तप्रतीकं गृहीत्वा ऋकूचतुष्टयस्य देवतानुक्तावपि अनादेशा देवेन्द्रदेवताकत्वमुक्तप्रायम् अनादेशेत्विन्द्रो देवतेति परिभाषितत्वादित्यर्थः ॥

ननु परितस्थुष इत्यत्र परितो अवस्थिताः प्राणिन इत्यर्थं संपाद्य ब्रध्नमित्यस्य च सूर्यरूपेणावस्थितमिन्द्रमितीन्द्रपरत्वं संपाद्य प्राणिनः इन्द्रं युञ्जन्ति देवतात्वेन स्वकर्मणि सम्बन्धयन्तीति व्याख्याने द्वितीयर्चि च सारथय इति कर्तृपदमध्याहृत्य व्याख्यानेन बहुवचनविरोध इत्यत आह ॥ तस्येति ॥ परितस्थुष इत्यस्य ब्रध्नारुषादिसमक्षतया श्रुत्यन्तव्याख्यानानुपपत्तिं

सूचयितुं यथाकथंचिदित्युक्तम् । रूढिरिति । भास्करोहस्करब्रध्नेत्याद्यभिधानसिद्धा रूढिरित्यर्थः ।। ननु ब्रध्नशब्दस्यादित्ये रूढत्वेपि अत्र रूढित्यागेन योग एव स्वीक्रियत इत्यत आह ।। असौवा इति ।। युञ्जन्ति ब्रध्नमित्याह ।। असौवा आदित्यो ब्रध्न इत्येतन्मन्त्रस्थब्रध्नशब्दव्याख्यानरूप-ब्राह्मणान्तरविरोधश्चेत्यर्थः।। ननु देवयन्त इत्यस्यामृचि मरुद्गणमिति विशेष्यमध्याहृत्य इन्द्रेण संहिदृक्षस, इत्यत्र मरुद्गणेति संबोधनमध्याहृत्य अनवद्यैरित्यत्र चेन्द्रस्येति षष्ठ्यन्तमिन्द्रमिति द्वितीयान्ततया विपरिणाम्य अतः परिज्मन् इत्यत्र च मरुद्गणस्थानादित्यध्याहृत्य व्याख्याने नकाप्यनुपपत्तिरित्यत आह ।। कथंचिदिति ।। ननु तथापि युञ्जन्तीत्यत्र बाहुल्यादिति भाष्यप्रतिपाद्यदेवताबाहुल्यहेतुत्वे चोक्तं बहुवचनं व्यभिचारिस्यात् ।। अन्यथा देवयन्त इत्यत्रापि प्रतिपाद्यबाहुल्यं स्यादित्यत्र किं नायातमित्यत आह ।। विषयान्तरेति ।। ९ ।।

इतोदिव् इति पञ्चम्यौ समानाधिकरण इति भावेनानूद्य व्याचष्टे ।। इतोदिव इति ।। इतइत्यस्यार्थोर्वाक्तनादिति ।। दिव इत्यस्यार्थो द्युलोकादिति ।। पातालादिति भाष्यपदेन संवादयितुं पार्थिवादिति पदं व्युत्पादयति ।। पृथिवीसम्बन्धिन इति । महो महत इति ।। महेःक्विप् पञ्चम्यां नकारलोपो वा छान्दस इति ज्ञेयम् ।। रञ्जकादिति रञ्जेरौणादिकोसुन् किच्च कितादनिदितमिति नकारलोप इति भावः ।। इत्यस्या रूपमिति ।। भावेक्तिनि जसनखनांसन् झलोरित्यात्वेति तुत्रथसिसुसरकसेषुचेतीट् निषेधे नित्स्वरबाधके जूति यूतिरुतिसातिहेतिकीर्तयश्चेत्यन्तो-दात्तत्वेचैतद्रूपनिष्पत्तिरिति भावः ।। स्मराम इत्यर्थोपपादकं पठति इक्स्मरण इति व्यत्ययेनात्म-नेपदम् ।। अधीगर्थदयेशां कर्मणीत्यत्र शेष एवषष्ठीविधानात् प्रकृते च कर्मत्वस्यैव विवक्षितत्वेन शेषत्वविवक्षाया विरहात् कर्मणि इन्द्रमिति द्वितीयेति ज्ञेयम् ।। स्तचराम इत्येतदर्थप्रातिपदिकं पठति ।। इङ्अध्ययन इति ।। याचामह इत्यर्थमुपपादयति ।। यांचाकर्मस्विति ।। १० ।।

## टीकाविवृतिः

देवयन्तः ।। द्योतयन्त इति ।। णिजन्ताद्दीव्यतेर्दिवुक्रीडा- विजिगीषाव्यवहारद्युतिस्तुतिमोदम-दस्वप्नकान्तिगतिष्वित्युक्तेर्द्युत्यर्थाल्लटः शत्रादेश इतिभावः ।। वेदरूपा इति ।। ऋचि गिर इत्यस्य मुख्यान्यायाश्रयणेन विशेषणीकृतभाष्योक्तसुशब्दार्थोयम् । अनेन शोभनाश्च ता गिरश्चेति विग्रहःसूचितः । तर्हि देवयन्त इत्यस्य गीर्विशेषणत्वात्पुल्लिङ्गत्वं कथमित्यत आह ।। लिङ्गव्यत्यास इति ।। व्यत्यासार्थोवा भाष्ये सुशब्देनोक्तः । व्यत्यासाङ्गीकारारुचेराह ।। अथवेति ।। गृशब्दे अस्मात्कर्तरि क्विपि ऋत इद्धातोरितीत्वे गृणन्ति स्तुवन्तीति गिरःस्तोतार इत्यर्थः । अत्रार्थे भाष्यं

योजयति ॥ शोभना इति ॥ रि᳚नशब्दाध्याहारेण लब्धमर्थमाह ॥ निर्विकारमिति ॥ विदद्वसुमित्यत्र विदज्ञान इत्यादिधातुरूपाङ्गीकारेऽल्पार्थत्वाल्लाभार्थस्यकर्तरि शत्रंतस्य प्रकृतेऽनुपयोगात्कर्मणि रूपाङ्गीकारे यगात्मनेपदे स्याताम् । लाभार्थकविदॢधातोरात्मनेपदित्वेन यक्शानचि सति विद्यमानवसुमिति स्यान्नतु विदद्वसुमित्यत आह ॥ कर्मणिछान्दसमिति ॥ महं महान्तमिति ॥ अकारान्तमहशब्दादमःछान्दसःपूर्वसवर्ण दीर्घइतिभावः ॥ अनूषतेति ॥ णुस्तुतावित्यतो लुङि व्यत्ययेनात्मनेपदे झस्यादादेशे सिच इडभावे छान्दसत्वाद्धातोर्दीर्घ इतिभावः ॥६॥

इन्द्रेण ॥ वाचशब्दाविति ॥ वाशब्दःश्रीभूमिशब्देनान्वितः चशब्दस्तु पुरुहूत इत्यनेनेत्यर्थः । तदेव दर्शयति ॥ मं मदमिति ॥ सत्साक्षिणि मदेचम इत्येकाक्षररत्नमालोक्तेरिति भावः ॥ मन्दुरिति ॥ ममित्युपपदाद्द्वाञ औणादिको डुप्रत्यय उपपदविभक्त्यलोपश्चेति भावः ॥ सुखात्मिके इति ॥ अस्मिन्पक्षे मदिम्स्तुतिमोदमदस्वप्नकान्तिगतिष्वित्यस्मादौणादिक उप्रत्यय इतिभावः ॥ दशेरिति ॥ बाहुलक औणादिके सुडागमसहितकसेप्रत्यये कित्वाद्गुणाभावे व्रश्चादिसूत्रेण षत्वे षढोःकःसीति कत्वे आदेशप्रत्यययोरिति सुटःसस्य षत्वमिति भावः । तुमर्थेसमे इतिपाठेतु ससेप्रत्ययस्य औणादिकत्वात् कित्वमात्रं वाच्यम् । क्ससे इति पाठेतु नकाप्यनुपपत्तिः ॥ अबिभ्युषेति ॥ भीधातोर्लिटःक्वसुश्चेतिक्वस्वादेशे द्वित्वादौ तृतीयैकवचने भत्वाद्वसोःसंप्रसारणमिति संप्रसारणमिति भावः ॥ सञ्जग्मानः सञ्जग्मानाविति ॥ संपूर्वगमेःसमोगम्यृच्छिभ्यामित्यात्मनेपदोक्तेर्लिटः कानजादेशे द्वित्वादौ गमहनेत्युपधालोपे सुपां सुलुगिति द्विवचनस्य स्वादेश इतिभावः । भाष्ये शङ्करपुरुहूतयोरेकवचनान्तेनोक्तेः सङ्गत इत्येकवचनान्तेनान्वयसंभवेपि मन्दू इति श्रुत्यनुसारणायाह ॥ सङ्गतः सङ्गताविति ॥ ७ ॥

अनवद्यैः ॥ पूर्वऋग्व्याख्यानान्तर्गतमखात्मेति भाष्यं व्याख्याति ॥ मखाभिमानीति ॥ द्यौः प्रकाश इति ॥ द्युत्यर्थाद्दीव्यतेर्भावे क्विपि दिव उदित्युत्वे अभिद्युभिरिति रूपमिति भावः ॥ देवगणैःसहेति ॥ श्रुतौ वृद्धो यूनेति ज्ञापकात्सहशब्दाभावेपि सहार्थे तृतीयेति भावः ॥ सहोवायुरिति ॥ सहःशब्दस्य नित्यनपुंसकस्य शषसहः इति बलनामसुपाठाद्वायोर्बलाभिमानित्वादिति भावः । सहस्वत्सहस्वामन्ख इति मखविशेषणत्वेन व्याख्याने लिङ्गव्यत्ययाश्रयणास्वारस्येन क्रियाविशेषणपरत्वेन व्याख्याति ॥ सहस्वद्यथेति ॥ सहोवायुरस्मिन्नर्चनकर्मण्यस्तीति तत्सहस्वदित्यर्थः । भाष्ये श्रुतिस्थार्चतीति पदं योज्यमित्याह ॥ परमेश्वरमर्चतीति ॥ तर्हि भाष्येऽर्चन्तीतिपदं व्यर्थमित्यत आह ॥ तात्पर्यमाहेति ॥ तात्पर्यप्रकारं दर्शयति ॥ वायुरिन्द्र इति ॥ भूवादौ पठितस्य अर्चपूजायामित्यस्य धातोश्चुरादावपि पाठादाह ॥ अर्चयन्तीति

।। सर्वेषां सङ्ग्रह इति ।। उपलक्षणत्वेनेति शेषः । अत्राभिद्युभिरित्यस्य हेतुत्वं सुधीत्वादित्यनेनोक्तम् । एवमनद्यत्वात्काम्यत्वादित्यनवद्यकाम्यपदयोर्हेतुगर्भत्वं ज्ञेयम् ।। बलवदतिशयेनेति ।। बलवत्सुष्ठु किमुतेत्यमरोक्तेरिति भावः ।। करण इति ।। यजमानस्य कर्तृत्वान्मखस्य करणत्वादिति भावः ।। ८ ।।

अतःपरिज्मन् ।। ज्मां भूमिमिति ।। गौःग्माज्मेति पृथिवीनामसु पाठादिति भावः । यद्यप्युणादिवृत्तिकारैःश्वशुक्षन्नित्यादिसूत्रव्याख्याने परिज्मन्नित्यत्र परिपूर्वजुगतावित्यतः कनिन्प्रत्यय उकारस्य मकारादेश इति व्याख्यातं तेनापि परितःसर्वत्र जवते गच्छतीति सर्वगत्वरूपार्थो लभ्यते । तथापि उपेयप्रतिपत्त्यर्थमुपाया अव्यवस्थिता इति शाब्दिकोक्तेः परिज्मन्मातरिश्वन्मघवन्निति निपातनान्निपातनेष्वलाक्षणिकस्यापि ज्ञेयत्वात्परिज्मापूर्वाद्भूतुधातोः कनिन्प्रत्यये निपातनाद्धातुलोपोपपदांत्यलोपयोः परिज्मन्निति रूपसिद्धिमाश्रित्य परितो ज्मामिति व्याख्यातमिति ज्ञेयम् । अनेनैवाशयेनोत्तरत्रभाष्येऽयं शब्दः परितो ज्मांयतश्चरेत् । परिज्मातोरथ इति व्याख्यास्यते ।। एवमिति ।। पूर्वऋगुक्तप्रकारेणेत्यर्थः । रुचदीप्तावित्यतःकर्तरि अनुदात्तेतश्च हलादेरिति युजिति भावेनाह ।। रोचनादिति ।। युजःचित्वाद्रोचनादित्यस्याचित इत्यन्तोदात्तत्वम् । ल्युटितु नित्स्वरेणाद्युदात्तत्वं स्यात् ।। आगहीति ।। गमेर्बहुलं छन्दसीति शब्लुकि लोटःसिपो ह्यादेशे अनुदात्तोपदेशेतिमकारलोपस्याभीयत्वादतोहेरिति नलुगिति भावः ।। ऋजिभृजीभर्जन इति धातुपाठे पाठात्कथं भाष्ये प्राप्नुवन्तीति व्याख्यातमित्यत आह ।। अनेकार्थत्वादिति ।। क्रियावाचित्वमाख्यातुमेकैकोर्थःप्रदर्श्यते । प्रयोगतोनुसर्तव्या अनेकार्थाहि धातव इत्युक्तेरिति भावः । अत एव ऋंजतिःप्रसाधनकर्मेति निरुक्त उक्तम् । प्राप्नुवन्ति स्तुवन्ति ।। तत्रापीति ।। षड्टक्ष्वपीत्यर्थः ।। केचिदिति ।। अनुक्रमणिकाकाराः । तद्वाक्यमुदाहरति ।। यथेति ।। अस्मिन्वाक्ये युंजतीत्यादिप्रथमतृचस्यांत्यायाश्चेन्द्रदेवताकत्वानुक्तेराह ।। अनाख्यातेति ।। परिभाषायां यत्र स्वेन देवता नोच्यते तत्रेन्द्रो देवतात्वेन ज्ञेय इति भावेनानादेशेत्विन्द्रो देवतेत्युक्तेस्तत्सिद्धिरिति भावः ।। विप्रतिपत्त्यभावादिति ।। बहुवचनादिलिङ्गाभावेनेन्द्रमात्र-विषयत्वस्यास्माभिरप्यङ्गीकारादिति भावः ।

ननु युञ्जन्तीति बहुवचनस्य ब्रध्नमिन्द्रं परितस्थुषः परितस्थिवांसःपरितःस्थिताः सेवका देवादयो युञ्जन्ति सङ्गच्छन्तेऽनुचरन्तीति व्याख्यानात्कथमिदं देवताबाहुल्ये लिङ्गं यस्मिन्वाक्ये यस्य महिमाविशेषः प्रतिपाद्यते सादेवता । अतःकर्तृणां सेवकत्वोक्त्या नदेवतात्वमित्यत आह ।। तस्य यथाकथंचिदिति ।। अस्मिन्पक्षे तस्थुष इति द्वितीयाबहुवचनस्य व्यत्ययाङ्गीकारात्परितः

स्थितिमात्रेण सेवकत्वकल्पनाद्युंजन्तीत्यस्यानुचरणार्थत्वकल्पनाच्च कथंचिदित्युक्तम् ॥ आदित्ये रूढिरिति ॥ भास्कराहस्करब्रध्नेत्यमरोक्तेरिति भावः । ननु रूढत्वेपिब्रध्नशब्दस्य महन्नामसु पाठबलाद्रूढिं त्यक्त्वेन्द्रपरत्वं किं नस्यादित्यत आह ॥ असौवा आदित्य इति ॥ युंजन्ति ब्रध्नमित्याह असौवा आदित्योब्रध्न इति श्रुत्यन्तरेण ब्राह्मणरूपेण यदेतन्मन्त्रस्थब्रध्नशब्द-व्याख्यानंतेन विरोधश्चेत्यर्थः । एतदुत्तरब्राह्मणे अरुषमित्याह अग्निर्वा अरुषः अग्निमेवास्मै युनक्तीत्यादिना अरुषं चरन्तं तस्थुषःरोचना इति शब्दानग्निवायुलोकनक्षत्रपरत्वेन व्याख्यानेपि युनक्तीति क्रियायाः कर्तुरनुक्तेर्भाष्योक्तानां पौंस्यानां ब्रह्मादिदेवानां कर्तृत्वसंभवादस्मदुक्तार्था-विरोध्यर्थान्तरपरत्वेनास्मदुक्तार्थस्य नतद्विरोध इति भावः । बाहुल्यादिति हेतोः केतुं कृण्वन्नित्यत्र व्यभिचरमाशंक्याह ॥ उपलक्षणमिति ॥ नविप्रतिपत्तिरिति ॥ आदहेत्यत्र मरुद्देवताकत्वस्य वीळुचिदित्यत्रेन्द्रमरुद्देवताकत्वस्य चोभाभ्यामङ्गीकारादित्यर्थः । ननु मतिमित्याद्येकवचनस्य मरुद्गणमित्यध्याहृतेनान्वयसंभवादिन्द्रेणेत्यत्रेन्द्रेणैश्वर्ययुक्तेन मरुद्गणेनेति अनवद्यैरित्यत्र गणैःमरु-द्गणैरिति अतःपरिज्मन्नित्यत्र हेमरुद्गणेत्यध्याहारेण व्याख्यास्यत इत्यत आह ॥ कथंचिद्योजनेति ॥ इन्द्रशब्दस्य रूढार्थत्यागेनाध्याहारेण योजनया क्लिष्टत्वं मतिमित्यत्र परिज्मन्नित्यत्र चज्ञेयम् । गणैरित्यत्र सहयुक्तेऽप्रधान इत्यप्राधान्ये तृतीयाङ्गीकारेण चक्लिष्टतरत्वंच ॥ तर्हि बहुवचनमिति ॥ देवयन्त इति गिर इति बहुवचनमित्यर्थः ॥ कुत एतदिति ॥ गीर्विषयकत्वमित्यर्थः । तर्हि युञ्जन्तीत्यत्र बहुवचनेन मरुद्देवताकत्वसाधनं न स्याद्व्यभिचरितत्वादित्यत आह ॥ विषयान्तरेति ॥ तथाच न व्यभिचार इति भावः ॥ ९ ॥

इतोवा ॥ इतोदिव इतिश्रौतपदद्वयं भाष्ये अनूदितम् । तत्स्वयमनूद्यव्याचष्टे ॥ इतोदिव इति ॥ इत इत्यनेन वक्ष्यमाणवैकुंठपरामर्शः । अर्वाक्तनादित्यध्याहारः । दिव इत्यस्य द्युलोकादित्यर्थः । विष्णुलोकस्यापि द्युत्वान्महोरजस इत्यनेन पौनरुक्त्यपरिहारायार्वाक्तनादिति दिवो विशेषणं ज्ञेयं न तद्व्याख्यानम् । पार्थिवादिति श्रौतपदं पातालादिति भाष्येणसंवादयितुमाह ॥ पृथिवीसम्बन्धिन इति ॥ पृथिवीशब्दात्तस्येदमित्यणिति भावः ॥ महोमहत इति ॥ महेःक्विविति भावः ॥ रजसो रंजकादिति ॥ भूरंजिभ्यां किदिति रञ्जधातोरसुनि कित्त्वादनिदितामिति नलोपः । महःरजस इति विशेषणद्वयसामर्थ्याल्लब्धोर्थो भाष्ये विष्णोर्लोकादिति कथित इति ज्ञेयम् ॥ षणसंभक्ताविति ॥ अस्माद्भावे क्तिन्प्रत्यये जनसनखनांसन्झलोरिति नस्याऽऽकार इति भावः ॥ भक्तानां लाभ इति ॥ एकान्तानामिति शेषः ॥ इक्स्मरण इति ॥ छान्दसे अध्युपसर्गसम्बन्धाभावात्मनेपदं ज्ञेये । अधीगर्थदयेशांकर्मणीति कर्मणः शेषत्वविवक्षायामेव षष्ठीविधानादिन्द्रमित्यत्र

शेषत्वविवक्षाभावाद्द्वितीयेति भावः । अस्मादस्वरसादाह ॥ स्तुमोवेति ॥ धातूनामनेकार्थत्वादिङःस्तुत्यर्थत्वमाश्रयणीयमित्यरुचेराह ॥ याचामहेवेति ॥ याच्ञाकर्मस्विति ॥ ईमहेयामीतिपाठात् । अदादौ वीगतिव्याप्तिप्रजनकांत्यसनखादनेष्वित्यत्र शाब्दिकैःई इतिधात्वंतरप्रश्लेषात्तस्य व्यत्ययेनात्मनेपदमिति भावः ॥ १०-१२-६ ॥ इतिद्वादशोवर्गः ॥

## ऋक्संहिता पदपाठसहिता

(६१) इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः ॥ इन्द्रं वाणीरनूषत ॥ १ ॥

(प०) इन्द्रम् । इत् । गाथिनः । बृहत् । इन्द्रम् । अर्केभिः । अर्किणः ॥ इन्द्रम् । वाणीः । अनूषत ॥ १ ॥

(६२) इन्द्रइद्धर्योः सचा संमिश्ल आवचो युजा ॥ इन्द्रो वज्री हिरण्ययः ॥ २ ॥

(प०) इन्द्रः । इत् । हर्योः । सचा । सम्ऽमिश्लः । आ । वचःऽयुजा ॥ इन्द्रः । वज्री । हिरण्ययः ॥ २ ॥

(६३) इन्द्रो दीर्घाय चक्षस आसूर्यं रोहयद्दिवि ॥ विगोभिरद्रिमैरयत् ॥ ३ ॥

(प०) इन्द्रः । दीर्घाय । चक्षसे । आ । सूर्यम् । रोहयत् । दिवि ॥ वि । गोभिः । अद्रिम् । ऐरयत् ॥ ३ ॥

(६४) इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च ॥ उग्र उग्राभिरूतिभिः ॥ ४ ॥

(प०) इन्द्र । वाजेषु । नः । अव । सहस्रऽप्रधनेषु । च ॥ उग्रः । उग्राभिः । ऊतिऽभिः ॥ ४ ॥

(६५) इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे ॥ युजं वृत्रेषु वज्रिणम् ॥ ५, १३ ॥

(प०) इन्द्रम् । वयम् । महाऽधने । इन्द्रम् । अर्भे । हवामहे ॥ युजम् । वृत्रेषु । वज्रिणम् ॥ ५, १३ ॥

## ऋग्भाष्यम्

तमेव गाथिनः साम्ना स्तुवंत्यृग्भिश्च बह्वृचाः ।
बृहंतमन्यवाणीभिरपि ॥ १ ॥
हर्यो विमिश्रितः ।
रथेऽथवा मनोबुद्ध्योर्वाङ्मात्रेणैव योगिनोः ।
सचा सुखेन वज्रीच ज्ञानानन्दोहि धातुतः ।

हितश्च रमणीयश्च हिरण्यय इतीरितः ॥ २ ॥
दीर्घकालंदर्शनाय सूर्यमारोहयद्दिवि ।
ज्ञानैरादरयोग्यं च प्राणात्मानं समैरयत् ॥ ३ ॥
बहुभिर्युध्यमानेषु युद्धेष्वपि सदाऽवनः ।
दुष्टोग्रैः सदभिप्रायैः ॥ ४ ॥
महदल्पधनार्थिनः ।
हवामहेऽरिवर्जं तं तमसां प्रतियोगिनम् ॥ ५, १३ ॥

## ऋग्भाष्यटीका

इन्द्रमित् । दशर्चमैन्द्रं सूक्तम् । तमेव । बृहत् बृहन्तम् इन्द्रमेव गाथिनः गाथाः गानानि तद्वन्तः सामवेदिन उद्गातारः साम्नाऽनूषत अस्तुवन् । सदा स्तुवन्ति । अर्किणः । अर्का ऋचः तद्वन्तो बह्वृचा होतारश्चार्केभिः ऋग्भिरिन्द्रमनूषत । अन्याश्च यजुराद्या वाणीः वाण्यः । सुपां सुलुक्पूर्वसवर्णेति पूर्वसवर्णः । इन्द्रमनूषत । अत्र करणे कर्तृत्वोपचार इति भावेनान्यवाणीभिरपीति मुख्यार्थो दर्शितः । अध्वर्युप्रभृतय इति शेषः । उभयत्र करणस्य दर्शनात्साम्नेत्यध्याहृतम् ॥ १ ॥

इन्द्र इत् । हर्योः । स इन्द्र इत् इन्द्र एव वचोयुजा वचोयुजोः । सुपामित्यनेनैवादेशः । वाङ्मात्रेणैव योगिनोर्हर्योरश्वयो रथे सचा सुखेनैव आसमन्तात्संमिश्लः संमिश्रो विमिश्रितः सारथेरतिप्रयत्नमन्तरेण रथयोगवद्भ्यामश्वाभ्यां युक्तं रथमारूढ इति यावत् । अथवेन्द्रः परमेश्वरो भक्तशरीरे वचोयुजा वेदवाक्यानुवर्तिनोर्हर्योर्मनोबुद्ध्योः संमिश्लः तद्युक्तं शरीरं विशेषतोऽध्यतिष्ठत् । किं च स इन्द्रो वज्री प्रसिद्धे स्फुटम् । विष्णौ व्याख्याति ॥ ज्ञानानन्द इति ॥ तदुपपादयति ॥ धातुत इति ॥ वजगतौ रमुक्रीडायामिति धातुभ्यां भावे डप्रत्ययः । तद्वान्वज्रीत्यर्थः । विशेषादेवेनिप्रत्यय इति ज्ञापयितुं ज्ञानानन्द इत्येव व्याख्यातम् । अर्शआदिभ्योऽज्वा । हितश्चेत्यत्र वर्णलोपादिकमूह्यम् ॥ २ ॥

इन्द्रोदीर्घाय । दीर्घकालम् ॥ स इन्द्रो दीर्घाय चक्षसे जनानामहर्लक्षणं दीर्घकालं पदार्थदर्शनाय सूर्यं दिवि गगने आरोहयत् आरोपितवान् । किं च । आद्रियत इत्यद्रिः । अद्रिं आदरयोग्यं प्राणात्मानं गोभिर्ज्ञानैः व्यैरयत् ज्ञानयुक्तं प्रावर्तयत् । प्रसिद्धेन्द्रस्तु गोभिर्वज्रैरद्रिं पर्वतं वज्रेण पर्वतान्व्यैरयत् हतवान् । यद्वोदकैर्वृष्ट्या पर्वतं हतवान् । अथवोदकैर्निमित्तैरुदकार्थमिति यावत् । (अद्रिं) मेघं व्यैरयत् नियमितवान् ॥ ३ ॥

इन्द्रवाजेषु । बहुभिः । हे इन्द्र दुष्टानामुग्रस्त्वं वाजेषु युद्धेषु अस्मासु सहस्रप्रधनेषु सत्सु सहस्रेण प्रधनं येषां ते तथोक्ताः । तेषु बहुभिरपि युध्यमानेषु सत्स्विति यावत् । नोऽस्मानुग्राभिरूतिभिः । दुष्टानामुग्रैः स्वयं तु सद्भिरनुग्रैरेवाभिप्रायैरव सदा रक्ष ॥ ४ ॥

इन्द्रं वयम् । महत् । वृत्रेषु तमस्स्वज्ञानेषु युजं विरोधितया घटमानं तमसां प्रतियोगिनम् । प्रसिद्धेन्द्रविषये बहुवचनमाद्यर्थे । वज्रिणं वृजीवर्जन इत्यस्येदं रूपम् । भीतिवशेनारिभिर्वर्ज्यं तं इन्द्रं महाधने महाधनार्थं मोक्षार्थम् अर्भे अल्पेच धने अल्पधनार्थं सांसारिकपुरुषार्थार्थं महदल्पधनार्थिनो वयं हवामहे । आह्वयामः ॥ ५, १३ ॥

## मन्त्रार्थमञ्जरी

अथ सप्तममपि दशर्चं वर्गद्वयात्मकमैन्द्रं सूक्तम् । बृहत्, बृहन्तम् । इन्द्रम् इत्, इन्द्रमेव । गाथिनः, गाथा गानानि, तद्वन्तः सामवेदिन उद्गातारः । 'अर्केभिः' इत्यग्रे श्रवणादिहापि 'साम्ना' इति योज्यम्, (साम्ना) अनूषत, अस्तुवन्, 'णु स्तुतौ' लुङ् सार्वकलिकः, सदा स्तुवन्तीत्यर्थः, एवमग्रेऽपि ॥ अर्किणः, अर्का ऋचः, तद्वन्तो बह्वृचाः । अर्केभिः अर्कैः, अर्कशब्दितैर्ऋग्भिः । इन्द्रम् । (अनूषत) वाणीः, वाण्यः, 'सुपां सुलुक्पूर्वसवर्ण' इति पूर्वसवर्णदीर्घः, अन्याश्च यजुराद्या वाण्यः । इन्द्रम् । (अनूषत), सर्वशः स्तुवन्तीति सार्वकालिकोऽयं लुङ् ध्येयः करणे कर्तृत्वोपचारः ॥ यद्वा (अध्वर्युप्रभृतयः) इत्यध्याहृत्य वाणी, वाणीभिः, (व्यत्ययात्) । (अनूषत) इति योजना ॥ १ ॥

इन्द्रः इत्, इन्द्र एव । वचोयुजा, वचोयुजोः, 'सुपां सुलुक्' इत्यादिना 'आ' इत्यादेशः, वाङ्मात्रेणैव योगिनोः ।हर्योः, अश्वयोः (रथे) सचा, सुखेनैव । आ, समन्तात् । संमिश्लः, संमिश्रः, विमिश्रितः, सारथेरतिप्रयत्नमन्तरेण रथयोगवद्भ्यामश्वाभ्यां युक्तं रथमारूढ इति यावत् । अध्यात्मं तु– इन्द्रः इत्, परमेश्वर एव । (भक्तदेहे) वचोयुजा, वचोयुजोः, वेदवाक्यानुवर्तिनोः । हर्योः, मनोबुद्ध्याख्याश्वयोः । सचा, सुखेनैव । आ, समन्तात् । संमिश्लः, तद्युक्तं तत्तद्देहाख्यं रथमध्यतिष्ठत् । इति योजना । किं च, (सः) इन्द्रः । वज्री, वज्रायुधवान्, परमेश्वरस्तु वज्री, ज्ञानानन्दवान्, 'व्रज गतौ' 'रमु क्रीडायाम्' इत्याभ्यां धातुभ्यां भावे औणादिके डप्रत्यये रलोपे 'वज्र' इति रूपसिद्धौ तद्वान् 'वज्री' इति सिद्धेः । हिरण्ययः, हितश्च रमणीयश्चेति हिरण्ययः, हितशब्दे तलोपश्च 'रमु क्रीडायाम्' इति धातोः (रमणीयार्थे) न्ययप्रत्ययेऽन्तलोपश्च 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि' इति निपातनात् ॥ २ ॥

इन्द्रः, पुरंदरः परमेश्वरो वा दीर्घाय चक्षसे, जनानामहर्लक्षणं दीर्घकालं पदार्थदर्शनाय । सूर्यम् । दिवि, गगने । आरोहयत्, आरोपितवान् । किं च, (इन्द्रः), पुरंदरः । गोभिः, वज्रैः । अद्रिम्, पर्वतम् । वि ऐरयत्, हतवान्, पक्षच्छेदमकरोत् । यद्वा गोभिः, उदकैः वृष्ट्येति यावत् । अद्रिम्, पर्वतम् । वि ऐरयत्, हतवान् । अथ वा गोभिः, उदकैर्निर्निमित्तैः, उदकार्थमिति यावत् । अद्रिम्, मेघम् । वि ऐरयत्, विमिश्रितवान् (नियमितवान्) इत्यर्थः । (इन्द्रः), परमेश्वरस्तु । अद्रिम्, आदरणयोग्यं मुख्यवायुम् । गोभिः, ज्ञानैः । वि ऐरयत्, समैरयत्, ज्ञानयुक्तं प्रावर्तयत्, इत्यर्थः । आङ्पूर्वात् 'दृङ् आदरे' इति धातोः कर्मणि किप्रत्ययः, यणादेशश्च, आङो ह्रस्वश्च । 'व्यवहिताश्च' इत्युपसर्गान्वयः ॥ ३ ॥

(हे) इन्द्र । उग्रः, दुष्टानाम् क्रूरः (त्वम्) वाजेषु, युद्धेषु । (अस्मासु) सहस्रप्रधनेषु च, सहस्रेण प्रधनं युद्धं येषां तेषु सत्स्वपि, अस्मासु बहुभिर्युध्यमानेषु सत्स्वपीति यावत् । नः, अस्मान् उग्राभिः, दुष्टानां क्रूरैः, स्वयं त्वनुग्रैः । ऊतिभिः, अभिप्रायैः । अव, सर्वदा रक्ष ॥ ४ ॥ वृत्रेषु, पूर्वोक्तनिरुक्त्या वृत्रशब्दवाच्येष्वज्ञानेषु । युजम्, तद्विरोधितया घटमानम् । प्रसिद्धेन्द्रपक्षे– वृत्रेषु, वृत्राद्यसुरेषु– इति बहुवचनमाद्यर्थे व्याख्येयम् । वज्रिणम्, शत्रुभिर्वर्जितम्, भीतिवशेनारयो नैनं प्राप्नुवन्तीति यावत्, 'वृजी वर्जने' इत्यतो रिनिप्रत्यय ऋकारस्याकारो रपरत्वाभावश्च । इन्द्रम् । महाधने, निमित्तसप्तमी, मोक्षरूपमहापुरुषार्थसिद्ध्यर्थम् । इन्द्रम् । अर्भे (च) अल्पे च धने, सांसारिकपुरुषार्थार्थं च महदल्पधनार्थिनः वयम् । हवामहे, आह्वयामः ॥ ५ ॥ इति त्रयोदशो वर्गः ॥ १३ ॥

## पदार्थप्रकाशिका

इन्द्रमिद्गाथिनोबृहत् । अनुक्रमणिकायां इन्द्रमिदिति सूक्तप्रतीकमात्रस्यैव ग्रहणात् संख्यान्तरानुक्तेर्दशर्चसूक्तमनादेशपरिभाषयाचेन्द्रमित्याशयेनानुक्रमणिकां व्याचष्टे दशर्चमैन्द्रं सूक्तमिति । गाथा एषां सन्तीति गाथिनः । इत्यभिप्रेत्याह । गाथा इत्यादि । अर्क ऋच इति । अर्च्यते एभिरित्यृक् इति व्युत्पत्येति भावः । अर्को मन्त्रो भवति यदनेनार्चयतीति यास्कोक्तेरिति ज्ञेयम् । ननु वाणीति कथं वाणीति प्रातिपदिकात् प्रथमाबहुवचनं जसि जकारलोपे यणादेशे रुत्वे विसर्गे च सति वाण्य इति वक्तव्यत्वात् इत्यत आह । सुपां सुलुक्पूर्वसवर्णेति । तथाच वाणी जस् इत्यत्र जलोपे वाणी अस् इतिस्थिते यणादेशमनङ्गीकृत्येकारः पूर्वस्य इकारस्य सवर्णो जशः इकार एव जात इत्यर्थः । तथाच वाणीस् इति जाते रुत्वे विसर्गे च प्रथमाबहुवचनमेव वाणीरिति भवति इति ज्ञेयम् ।

ननु वाणीरिति ऋचि श्रवणात् वाणीभिरिति कथं भाष्य इत्यत आह । अत्र करण इति । मुख्योर्थः करणरूपः । ऋचि साम्नेत्यध्याहारकरणे ज्ञापकमाह । उभयत्रेति । इन्द्रमर्केभिरित्यत्र होतृकर्तृकस्तोत्रे अर्काणां कर्तृत्वोक्तेः इन्द्रं वाणीरित्यत्रापि अध्वर्युकर्तृकस्तोत्रे यजुरादिकाणां न करणत्वोक्तेरिन्द्रमिद्गाथिन इत्यत्रापि उद्गातृकर्तृके स्तोत्रे करणस्यापेक्षितत्वात् साम्नेत्यध्याहृतमित्यर्थः ॥ १ ॥

इन्द्र इद्धर्योः सचा । तर्हि ऋचि वचोयुजेत्यकारः कथमत्राह । सुपामित्यनेनैव आदेश इति । अ आदेश इति पदच्छेदः । अकारादेश इत्यर्थः। वचोयुक् इत्यत्र वचोयुज् इति स्थिते षष्टीद्विवचनस्य वा इत्यस्य सुपां सुलुक्पूर्वसवर्णाछेयाडाड्याजाल इत्यनेन सुपामाकारादेशे वचोयुजेति साध्वित्यर्थः । अश्वयोः सम्बन्धिनि रथे इत्यर्थः । ऋचि रोल इत्याभिप्रेत्याह संमिश्ल इति । भाष्यं सङ्गमयति विमिश्रित इति । वचोयुजेत्यादेस्तात्पर्यमाह सारथेरित्यादि । विषयहरणान्मन एव च बुद्धिश्च हरिशब्दोक्तः इत्युक्तत्वात् हरीत्यस्यार्थमाह मनोबुध्योरिति । तात्पर्यार्थमत्रापि दर्शयति तद्युक्तमिति । वेदवाक्यानुवृत्तिमनोबुध्याख्यहरियुक्तभक्तशरीराख्यरथमित्यर्थः । प्रसिद्धे स्फुटमिति । प्रसिद्धपुरंदरे वज्ररूपायुधवत्वेन वज्रित्वं स्फुटमित्यर्थः । तदिति । ज्ञानानन्दादयो वज्रशब्दार्थत्वमित्यर्थः । भावे ङप्रत्यय इति । ङित्वाट्टीभूतस्यामित्यस्य लोपे जकारलोपे च वजूर वज्रेति रूपम् । धातुद्वयादुपरि एकः प्रत्ययस्तु पूर्वमेवोपपादित इति भावः । भाष्ये इनिप्रत्ययानुक्तेराह । ज्ञानानन्दवान् वज्रीत्यर्थः । भाष्ये इनिप्रत्ययार्थवचने किं निमित्तमित्यत आह । विशेषादेवेति । अभेदे भेदकार्यकारिणो विशेषादित्यर्थः । इनिप्रत्ययः । इनिप्रत्ययार्थभूतं तद्वत्वं वस्तुतो ज्ञानानन्दाद्यभिन्नेपि तद्वत्वं केवलं विशेषबलादेवोपपादनीयं नान्यथा स्यादित्येवं ज्ञापयितुं ज्ञानानन्द इत्येवोक्तं नतु प्रत्ययार्थ उक्त इति भावः । अत एवास्वरसादाह । अर्शादिभ्योज्वेति । ज्ञानानन्द इति वज्रीत्यस्यैव व्याख्यानम् । ज्ञानानन्दशब्दादर्शादिभ्यो अजित्यनेनास्याप्यर्शादिगणस्थत्वान्मत्वर्थीयाच्प्रत्यये चकारलोपे यस्येतिचेति दकारस्थस्याकार-लोपे ज्ञानानन्दशब्दस्तद्वत्वादित्यर्थः । ननु हितश्च रमणीयश्च हितरमणीय इति स्याद्धिरण्यय इति कथमित्यत आह हितश्चेत्यत्रेति । वर्णलोपादिकमित्यत्रादिपदेन ईकारस्य यकाररूपे वर्णविकारे च सति हिरण्यय इति साध्विति भावः ॥ २ ॥

इन्द्रोदीर्घाय चक्षसे ॥ अहर्लक्षणं दीर्घकालमिति । दीर्घकालमित्यनूद्याहर्लक्षणमिति व्याख्यानम् । कालाध्वनोरत्यन्तसंयोग इति द्वितीया षट्त्रिंशदघटिकात्मकत्वादह्नो दीर्घत्वमिति ज्ञातव्यम् । तथाह्नि पदार्थदर्शनायेति यावत् । आरोपितवान् स्थापितवानित्यर्थः । प्राणात्मानं

मुख्यप्राणम् । समिति वीत्युपसर्गार्थः । समैरयदिति । ईरगताविति धातोरिति भावः । तस्याभिप्रायमाह । ज्ञानयुक्तमिति । ज्ञानयुक्तं कृत्वा कर्तव्येषु प्रवर्तितवानित्यर्थः । गोभिर्वज्रैरिति । गोशब्दो वर्तते ज्ञाने स्वर्गवज्राम्बुभूमिष्वित्यभिधानादिति भावः । हतवानिति । उपसर्गबलेन धातूनामनेकार्थत्वादिति भावः । तादर्थ्ये तृतीयेत्याशयेनाह । उदकार्थमिति । अद्रिं मेघमिति । अद्रिरभ्रं बलाहको मेघ इति मेघनामसु अद्रिशब्दस्य पाठादिति भावः । ईरधातोर्गत्यर्थत्वादाह । नियमितवानिति । मेघजातं शृङ्खलया विनिर्मुच्य बहिर्निर्यापितवानित्यर्थः । विनिर्मितवानिति पाठेऽप्ययमेवार्थो द्रष्टव्यः ॥ ३ ॥

इन्द्रवाजेषु । नोवा अस्मास्विति ऋग्भाष्ययोः शेष इति ज्ञातव्यम् । प्रधनमिति । युद्धमित्यर्थः । प्रधनं शूरसातिरिति सङ्ग्रामनामसु पाठादिति भावः । भाष्यं सङ्गमयति बहुभिरपीति । वाजेषु अस्मासु बहुभिर्युध्यमानेषु सत्स्वित्यर्थः । ऋचि उग्राभिरित्युक्ते ऊतिशब्दो-क्ताभिप्रायाणां स्वभावत एवोग्रत्वप्रसक्तौ सत्यां उग्राभिर्भक्तानामवनं विरुद्धमित्यतो उग्रैरित्युग्रत्व-मापेक्षिकमित्युक्तम् । तच्छब्दार्थं दर्शयितुं प्रकृतं सदभिप्रायैरिति । भाष्यं स्वयं त्वित्यध्याहृत्य सन्तश्च अभिप्रायाश्चेति कर्मधारयाभिप्रायेण व्याचष्टे स्वयंत्वित्यादि । स्वयं स्वभावत इत्यर्थः । भक्तान् प्रतीति शेषः । अस्माकमपि भक्तत्वादिति भावः ॥ ४ ॥

इन्द्रं वयं महाधने । अज्ञानेषु अज्ञानैरित्यर्थः । भागवते अज्ञानैर्घटमानत्वस्य विरुद्धत्वादाह विरोधितयेति । भाष्यं सङ्गमयति तमसामिति । बहुवचनमाद्यर्थ इति । वृत्रासुरशम्बरनमुचि प्रभृतिष्वित्यर्थः । नन्वत्राद्यर्थे बहुवचनस्य न तावच्छक्तिरस्ति बहुवचनमिति बहुत्वस्यैव बहुवचन-वाच्यत्वेन आद्यर्थस्य तद्वाच्यत्वाभावात् । किञ्च यदि बहुवचनस्याद्यर्थकत्वं तदा वृत्रेष्वित्यस्य वृत्रादीत्येव प्राप्त्या वृत्रादिष्वित्यर्थलाभो न स्यात् । नापि लक्षणा । विभक्तौ लक्षणानङ्गीकारात् । तस्मादेतत्कथमिति चेदुच्यते वृत्रप्रातिपदिकस्यैवाद्यर्थे लक्षणा । तथाच वृत्रादीति लब्धे तत्र बहुवचनान्वये वृत्रादिष्वित्युपपत्तेः । वृत्रप्रातिपदिकस्याद्यर्थलक्षणकत्वे किं ज्ञापकमिति चेत् । वृत्रेष्विति बहुवचनमेवेति वदामः । यदि वृत्रप्रातिपदिकं आद्यर्थलक्षकं न स्यात् तदा एकस्मिन्नेव वृत्रेष्विति बहुवचनं न स्यात्तेन ज्ञायते वृत्रप्रातिपदिकं आद्यर्थे लक्षकमिति । तथाच बहुवचनमाद्यर्थे इति वृत्रप्रातिपदिकमाद्यर्थे लक्षणया वर्तत इत्यस्य ज्ञापकम् । यद्वा आद्यर्थ इति भावप्रधानो निर्देशः । तथा च बहुवचनमेव वृत्रप्रातिपदिकस्याद्यर्थत्वे ज्ञापकम् । अन्यथा तदनुपपन्नं स्यादिति भावः । अनेनैकस्मिन् वृत्रे बहुवचनायोग इति मुख्यार्थानुपपत्तिर्लक्षणा बीजभूतास्तीति सूचितं भवतीति ज्ञातव्यम् । ततश्च वृत्रासुरादिषु तदादिभिर्विरोधितया घटमानमिन्द्रं महाधना इति

योजना द्रष्टव्या । वृजीवर्जन इत्यस्येदं रूपमिति । अत्र ईकारो अनुबन्धार्थः । गमेरिनिरिति विधीयमान इनिरुणादयो बहुलमिति बहुलग्रहणात् वृजधातोरपि कर्मणि भवति । एवंच वृजअस्मात् कर्मणि औणादिके इनिप्रत्यये नकारस्थस्येकारस्य लोपे गुणे परत्वेन वर् ज इति जाते निरुक्तात् वकारात्परस्य रेफस्य स्थानव्यत्यासरूपे वर्णविपर्यये वज्र् इन्वज्रिन् इति नकारान्तप्रातिपदिकनिष्पत्तिर्द्रष्टव्या । पश्चादमि नस्य णत्वे वज्रिणं इति रूपमिति भावः ॥ ५ ॥

## पदार्थदीपिका

तद्वन्त इति ॥ गाथा एषां सन्तीति गाथिनः ॥ व्रीह्यादिभ्यश्चेतीति भावः ॥ अर्का ऋच इत्यादि अर्चपूजायामित्यस्मात् कारणे पुंसि संज्ञायां घप्रायेणेति घप्रत्ययः ॥ चजोःकुघिण्यतोरिति कुत्वम् ॥ अर्चन्त एभिरित्यर्का मन्त्राः एषां सन्तीत्यर्किण इत्यर्थः ॥ बहुलं छन्दसीति भिस ऐसादेशो न भवति इति भावः ॥ उभयत्रेति ॥ इन्द्रकर्मेभिरर्किण इत्याद्युत्तरवाक्य इत्यर्थः ॥ यद्यप्यत्र बृहदित्यस्याप्यावृत्या बृहतेति व्याख्याने प्रथमवाक्येपि करणेक्तिर्लभ्यते अत एवोभयत्रान्वयद्योतनाय बृहदित्यविभक्तिको निर्देशः ॥ तथापि बृहतेत्यस्यापि विशेषण-तया विशेष्यलाभार्थं साम्नेत्यध्याहार्यमेव ॥ इन्द्राय सामगायत विप्राय बृहते बृहदित्यादिना तद्दर्शनादिति भावः ॥ १ ॥

वचोयुजोरिति ॥ सत्सूद्विषद्रुहदुहयजेत्यादिना युजेः क्विबिति भावः ॥ आदेश इति ॥ वचोयुजोरिति षष्ठीद्विवचनस्याकारादेश इत्यर्थः ॥ विशेषादेवेति ॥ भेदप्रतिनिधि विशेषबलादित्यर्थः ॥ अर्शआदिभ्योऽजिति ॥ ज्ञानानन्दौ अस्य विद्येते इति ज्ञानानन्द इति भाष्ये अर्शआदिभ्योजिति मत्वर्थेऽच्प्रत्यय इति भावः ॥ वर्णलोपादिकमिति ॥ तवर्णमवर्णयोर्लोपः णीत्यत्रैकारस्य यण् च क्रुत्यवात्स्यवास्त्यवास्त्वमाध्वीहिरण्यानिछन्दसीति निपातबलादेवेत्यर्थः ॥ २ ॥

दीर्घकालमिति ॥ कालाध्वनोरत्यन्तसंयोगे द्वितीया ॥ दर्शनायेति ॥ चक्षेः सर्वधातुभ्योऽसुन्नित्यसुन् ॥ बहुलग्रहणात् ख्यात्रादेशाभाव इतिभावः ॥ आद्रीयत इत्याद्रिरिति वंक्र्यादयश्चेति निपातबलाद्धातोः किन् प्रत्यये ऋकारलोपे उपसर्गभूताङो ह्रस्वत्वं चेति भावः ॥ आदरयोग्यमिति ॥ अर्के कृत्यतृचश्चेति स्मरणादिति भावः ॥ व्यैरयदिति ॥ ईरगतावित्यस्मात् ण्यन्ताल्लङिति भावः ॥ ३ ॥

बहुवचनाद्यर्थ इति प्रसिद्धेन्द्रपक्षे वृत्रस्यैकत्वेपि नवृत्रेष्विति बहुवचनानुपपत्तिः ॥ छत्रिणो गच्छन्तीत्यत्र छत्रिसहचरितेषु छत्रिषु छत्रिशब्दस्याजहत्स्वार्थलक्षणया प्रवृत्तिवत्

वृत्रसहचरितवृत्रेतरादिष्वजहत्स्वार्थलक्षणया वृत्रशब्दो वर्तते तत्र बहुवचनशब्दः प्रमाणमित्यर्थः ॥ अत एवोक्तं सप्तमीशौण्डैरिति, सूत्रे पदमञ्जर्याम् अत्र साहचर्यात् धूर्तादिष्वजहत्स्वार्थ एव शौण्डशब्दः प्रवर्तते यथा छत्रिणो गच्छन्तीति अतोन्तरेणाप्यादिशब्दा(अं)न्तर्गततदर्थो गम्यत इत्याह ॥ शौण्डादिभिरितीत्यादिनेति भावः ॥ वृजी वर्जन इत्यस्येदंरूपमिति । गमेरिनिरिति विधीयमान इनिप्रत्ययो बाहुलकादस्मात्कर्मण्यपि भवति ॥ गुणे रपरत्वे च चकारात्परस्य रेफस्य स्थानव्यत्यासलक्षणो वर्णविपर्ययो निरुक्तत्वादितिभावः ॥ वंक्रादित्वात् ॥ क्तिन्प्रत्ययो लाक्षणिककार्यं च निपातनादितिभाव इत्यप्याहुः ॥ हवामह इति ॥ ह्वेञ् स्पर्धायां शब्देच, ञित्वात् कर्त्रभिप्राये क्रियाफल इत्यात्मनेपदं लटः स्थाने महिङ् टित आत्मने पदानां टेरेकत्वं कर्तरि शप् ह्वःसंप्रसारणमित्यनुवृत्तौ बहुलं छन्दसीति संप्रसारणं चकारस्यौकारः पररूपत्वं गुणावादेशौ अतोदीर्घोयञीति दीर्घत्वमिति भावः ॥ ५-१३ ॥

## टीकाविवृतिः

इन्द्रमित् ॥ अनुक्रमणिकायामिन्द्रमिति सूक्तप्रतीकम् अनुवृत्त्या दशसङ्ख्यासिद्धिरनादेशपरिभाषयेन्द्रदेवताकत्वसिद्धिरित्याशयेनाह ॥ दशर्चमिति ॥ श्रुतौ लिङ्गव्यत्यय इतिभावेनाह ॥ बृहद्बृहन्तमिति ॥ गाथाःगानानीति ॥ गैशब्द इत्यतः उषिकृषिगार्तिभ्यस्थन्निति थन्प्रत्यये टाबंतात् व्रीह्यादिभ्यश्चेतीनिप्रत्यय इति भावः ॥ अनूषतेति ॥ लुङ् छान्दसत्वात्सार्वकालिक इत्याशयेनाह ॥ सदा स्तुवन्तीति ॥ अर्का ऋच इति ॥ ऋचस्तुतावित्यतः पुंसि संज्ञायां घःप्रायेणेतिकरणे घप्रत्यये चजोःकुघिण्यतोरिति कुत्वम् । अर्च्यंत्येभिरित्यर्काः ऋच इत्यर्थः । यास्केनार्चपूजायामित्यस्येदं रूपमिति भावेनोक्तं अर्को मन्त्रो भवति यदनेनार्चतीति । वाणीरिति श्रौतपदस्यान्यवाणीभिरिति भाष्यमसंबद्धमित्यत आह ॥ अत्र करण इति ॥ श्रुताविति शेषः ॥ इति शेष इति ॥ भाष्ये शेषोयम् ॥ उभयत्रेति ॥ ऋग्द्वितीयतृतीयपादयोरर्कैभिर्वाणीभिरिति करणदर्शनात्प्रथमपादेसाम्नेत्यध्याहृतमिति भावः । यद्यपि बृहदित्यस्यावृत्तिमाश्रित्यैकस्यैन्द्र विशेषणत्वमन्यस्य सुपांसुलगिति तृतीयायाः लुकि बृहत् तन्नामकेन साम्नेति व्याख्यातुं शक्यते तथापि सर्वसाम्नामनागतत्वात्त-द्ग्रहणार्थमध्याहृतमित्युक्तम् ॥ १ ॥

इन्द्र इत् ॥ पूर्वोक्तस्यैव माहात्म्यं पुनरुच्यत इतिभावेनाह ॥ स इति ॥ आदेश इति । डा इति शेषः । युजेः सत्सूद्विषेति क्विपि ओसोडादेशे आदेशत्वात्पूर्वं

डकारस्येत्संज्ञाभावादनुबन्धत्वाभावेन नानुबन्धकृतमनेकाल्त्वमित्यस्याप्रवृत्तेर्डा इत्यस्यानेकाल्त्वात्सर्वादेशत्वे छान्दसत्वेन टिलोपाभावे युजेति रूपसिद्धिरिति भावः । आइत्यादेशे त्वलोंत्यपरिभाषया ओसः सकारस्य स्यात् । वचोयुजेत्यत्र वचेरसुन्प्रत्ययो बोध्यः । एकदैकस्य युगपदश्वद्वयारोहासंभवाद्भाष्ये रथ इत्यध्याहृतमिति ज्ञेयम् । रेफस्य लत्वं वर्णव्यत्ययेनेत्याशयेनाह ॥ संमिश्लःसंमिश्र इति ॥ मिश्रधातोःपचाद्यजिति भावः । भाष्येतु कर्तरि क्तेविमिश्रित इत्युक्तमिति ज्ञेयम् ॥ अश्वाभ्यां युक्तमिति ॥ अनेन हर्योरिति षष्ठी तृतीयार्थे तृतीयाच सहार्थेत्युक्तं भवति ॥ तद्युक्तमिति ॥ मनोबुद्धियुक्तमित्यर्थः । वज्रीचेति चशब्दःसंमिश्ल इत्यनेन समुच्चयार्थ इत्याशयेनाह ॥ किंचेति ॥ प्रसिद्ध इति ॥ प्रसिद्धेन्द्रे वज्रीति पदंवज्रायुधवत्त्वार्थवत्त्वेन स्पष्टमित्यर्थः ॥ डप्रत्यय इति ॥ औणादिक इति शेषः । भगवद्गुणानां भगवदभिन्नत्वात्कथं वज्रीति प्रयोग इत्यतआह ॥ विशेषादेवेति ॥ भेदप्रतिनिधिभूतविशेषादित्यर्थः । इदानीं श्रौते निप्रत्ययानुसरणायाह ॥ अर्श आदिभ्य इति ॥ ज्ञानानन्दशब्दान्मत्वर्थे अर्शआदिभ्योजिति सूत्रेणाच्प्रत्यय इत्यर्थः । ननु वज्रीति व्याख्येयपदे इन्नन्तश्रवणाद्भाष्येपि ज्ञानानन्दीति तदन्तत्वेनैव प्रयोक्तव्यम् । तत्कथं ज्ञानानन्द इत्येवं प्रयुक्तमित्यतो वाह ॥ अर्श आदिभ्य इति ॥ वर्णलोपादिकमिति ॥ हितशब्दे तशब्दलोपः रमणीय शब्दे मशब्दलोपः णीइत्यत्रेकारलोपः आदिशब्दाद्वर्णागमग्रहणाद्य इत्यागम इत्येतत् ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसीति निपातनेनोह्यमित्यर्थः ॥ २ ॥

इन्द्रो दीर्घाय चक्षस इति ॥ चक्षिङःऔणादिके असुनि असनयोश्चेति वार्तिकेन अस्प्रत्यये अन्प्रत्यये वा ख्याञादेशनिषेधे सति सकारान्तनपुंसक इतिभावः । केचित्तु चक्षिङस्तुमर्थेकसेप्रत्यये सतीदं रूपमित्याहुः । रात्रौ सूर्यस्य पदार्थदर्शनं प्रति प्रयोजकत्वाभावात्कथं दीर्घकालमित्युक्तमित्यत आह ॥ अहर्लक्षणमिति ॥ दीर्घकालस्याधिकरणत्वेपि कालाध्वनोरत्यन्तसंयोग इति द्वितीया ज्ञेया ॥ रोहयदिति ॥ रुहजन्मनि प्रादुर्भाव इत्यतो ण्यन्ताल्लङि बहुलं छन्दस्यमाङ्योगेपीत्यडभावे आङ्योगेन स्थापनार्थत्वमिति ज्ञेयम् । अर्हे कृत्यतृचश्चेत्युक्तत्वादादरयोग्यमित्युक्तमिति ज्ञेयम् ॥ आद्रियत इत्यद्रिरिति ॥ अनेनाङ्पूर्वाद्दृङ् आदर इत्यतःकर्मण्यौणादिकः किप्रत्यय उपसर्गस्य ह्रस्वतेत्युक्तं भवति ॥ गोभिर्ज्ञानैरिति ॥ स्वर्गे रश्मौ विधौ वज्रे बलीवर्दे चगौःपुमान् । स्त्रीबाणरोहिणीनेत्रदिग्वाग्भूष्वप्सु भूम्निचेति विश्वकोशे रश्मिग्रहणेन ज्ञानस्य रश्मिसाम्यादिति भावः । ईरगतावित्यतो हेतुमण्णिचमभिप्रेत्याह ॥ प्रावर्तयदिति ॥ गोशब्दस्य वज्रोदकार्थद्वयमाश्रित्याह ॥ गोभिर्वज्रैरिति ॥ आदराद्बहुवचनम् ॥ व्यैरयत् हतवानिति ॥ ईर क्षेप इतिचुरादिपाठादिति भावः ॥ अद्रिं मेघमिति । अद्रिःग्रावा गोत्रः इतिमेघनामसु पाठादिति भावः ॥ ३ ॥

इन्द्रवाजेषु ॥ इन्द्रस्य स्वत उग्रत्वासंभवाद्विवक्षितमध्याहरति ॥ दुष्टानामिति ॥ प्रधने शूरसाताविति सङ्ग्रामनामसु पाठात्सहस्रप्रधनेष्वित्यत्र कर्मधारयाश्रयणाद्वाजेष्विति पुनरुक्तिः स्यादतो व्यधिकरणबहुव्रीहिराश्रयणीय इत्याशयेन बहुभिर्युध्यमानेष्विति भाष्ये उक्तमिति भावेनाह ॥ अस्मास्विति ॥ ४ ॥

इन्द्रंवयम् ॥ वृत्रेषु तमस्स्विति ॥ वृत्रोरिपौ घने ध्वान्त इति विश्वोक्तेरिति भावः ॥ बहुवचनमाद्यर्थ इति ॥ तेन वृत्रासुरस्यैकत्वेपीन्द्रविरोधित्वेन लक्षणया वृत्रशब्देनजंभनमुच्यादि-ग्रहणाद्वृत्रेष्विति बहुवचनोपपत्तिरिति सूचितम् । बहुवचनमाद्यर्थे ज्ञापकत्वेन वर्तत इत्यर्थः ॥ इदं रूपमिति ॥ गमेरिनिरित्युक्ते बाहुलकत्वात् वृजेरपीनिप्रत्यये जातेपुगन्तेति गुणे रपरत्वे तस्य रेफस्य निरुक्तत्वाज्जकारात्परत्वे चेति शेषः । भीतिवशेनेति । वस्तुतो दैत्याद्यरिषु सत्स्वपि ते दैत्याः स्वमरणे भयेनेंद्रसमीपे नायान्तीत्यर्थः । अर्भे अल्प इति । अर्तिगृभ्यांभन्निति भन्प्रत्ययान्तोऽर्भशब्दः शिशुवाचकत्वात्तत्साद्दश्येनाल्पार्थो व्याख्यात इत्यर्थः ॥ ५ ॥ इति त्रयोदशोवर्गः ॥ १३ ॥

## ऋक्संहिता पदपाठसहिता

(६६) सनो वृषन्नमुंचरुं सत्रादावन्नपावृधि ॥ अस्मभ्यमप्रतिष्कुतः ॥ ६ ॥

(प०) सः । नः । वृषन् । अमुम् । चरुम् । सत्राऽदावन् । अप । वृधि ॥ अस्मभ्यम् । अप्रतिऽस्कुतः ॥ ६ ॥

(६७) तुञ्जे तुञ्जे यउत्तरे स्तोमा इन्द्रस्य वज्रिणः ॥ नविन्धे अस्य सुष्टुतिम् ॥ ७ ॥

(प०) तुञ्जेऽतुञ्जे । ये । उत्ऽतरे । स्तोमाः । इन्द्रस्य । वज्रिणः ॥ न । विन्धे । अस्य । सुऽस्तुतिम् ॥ ७ ॥

(६८) वृषा यूथेव वंसगः कृष्टीरियत्योजसा ॥ ईशानो अप्रतिष्कुतः ॥ ८ ॥

(प०) वृषा । यूथाऽइव । वंसगः । कृष्टीः । इयर्ति । ओजसा ॥ ईशानः । अप्रतिऽस्कुतः ॥ ८ ॥

(६९) य एकश्चर्षणीनां वसूनामिरज्यति ॥ इन्द्रः पञ्चक्षितीनाम् ॥ ९ ॥

(प०) यः । एकः । चर्षणीनाम् । वसूनाम् । इरज्यति ॥ इन्द्रः । पञ्च । क्षितीनाम् ॥ ९ ॥

(७०) इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः ॥ अस्माकमस्तु केवलः ॥१०,१४,७,२॥
(प०) इन्द्रम् । वः । विश्वतः । परि । हवामहे । जनेभ्यः ॥ अस्माकम् । अस्तु । केवलः ॥१०,१४,७,२॥

## ऋग्भाष्यम्

अस्मदीयं चरुंभोज्यमानन्दं तमपावृणु ।
मोक्षगं सर्वदाऽतस्त्वमप्रतिद्वंद्व नो वृषन् ॥ ६ ॥
त्वयैव प्रेरणे जाते तत्र तत्र य उत्तराः ।
तेपि स्तोमाः सुष्टुतित्वमस्यानंत्यान्न चाप्नुयुः ॥ ७ ॥
प्रतिवीरो वृषावंसस्तद्वंतावंसगो विभीः ।
यूथान्याकर्षति यथा प्रजाः प्रेरयति प्रभुः ।
अल्पस्यापि प्रसिद्ध्यैव दृष्टान्तत्वं तु युज्यते ॥ ८ ॥
राजा भवति वित्तानां प्रजानां चैक एव यः ।
देवगन्धर्वदैतेयपितृमानुषभेदतः ।
प्रजानामपि पञ्चानां सामान्याच्च विशेषतः ॥ ९ ॥
सम्यग्धवामहे सर्वगतं च व्यक्तरूपतः ।
स्थातुमेकत्र वोर्थाय जनानोऽस्तु सकेवलः ॥ १०, १४, ७, २ ॥

## ऋग्भाष्यटीका

सनः । अस्मदीयम् । हेवृषन् वर्षितः श्रेष्ठवा सत्रादावन् सत्राशब्दः सर्वपर्यायः सहार्थो वा । तदुपपदाद्दातेर्वनिप् । हे सर्वदातः । सहार्थत्वेऽर्थतः सर्वेष्टदातृत्वमेव लभ्यते । त्वं नोऽस्मदीयममुं तं परोक्षं मोक्षगं चरुम् । चरतिर्भक्षणार्थः । तत; कर्मण्युकारः । भोज्यमनुभवनीयमानन्दमस्मभ्यं अस्मदर्थमपावृधि अविद्यावृतमपावृणु । यतस्त्वमेवाप्रतिष्कुतः । ष्कुञ्आप्रवणे । आप्रवणमागमनम् । प्रतिष्कुतः प्रत्यागतः । नैवं त्वमित्यप्रतिष्कुतः । वैरिभिर्युद्धेष्वप्रत्यागतः । अप्रतिद्वन्द्वः अप्रतिद्वन्द्वेति लुप्तविभक्तिको निर्देशः । प्रसिद्धेन्द्रं प्रति तु चरुं हविरपावृधि स्वीकारेण सफलीकुरु । यद्वा चरुं मेघम् । वज्रः चरुः वराह इति मेघनामसु पाठात् । नोऽस्मदर्थमेव जातमस्मभ्यमपावृधि उद्धाटयेति योज्यम् ॥ ६ ॥

तुंजे । त्वयैव । तुंजतिर्गतिकर्मा दानकर्मावा । ततश्च त्वया क्रियमाणे तुंजे तुंजे गमने दानेवा क्रियाया इति शेषः । प्रेरण इति तु तात्पर्यम् । यद्वा अनेकार्थत्वाद्धातूनां तुंजतिः प्रेरणे वर्तते ।

तुंजेतुंजे तत्र तत्र स्तोतृषु त्वयैव प्रेरणे जाते सति ये प्रवृत्ता उत्तरे उत्तरा उत्तमाः स्तोमा । स्तुतिविशेषास्तेप्यस्येन्द्रस्य तव सुष्टुतिं सुष्टुतित्वं निर्विधे वर्णव्यत्यासादिना न विन्दन्ते नाप्नुयुः आनंत्यात् । गुणैरनंतत्वेन सर्ववर्णकत्वाभावादिति भावः ॥ ७ ॥

वृषा । प्रतिवीरः । एकस्य वृषस्य यः प्रतिवीरो वृषा स वंस उच्यते । तं वंसं प्रति यो विभीः युद्धाय गच्छति स वृषा वंसगः । स यूथेव यूथानीव यथागवां यूथान्याकर्षति एवमीशानः प्रभुरप्रतिष्कुतः अप्रतिद्वन्द्व इन्द्रः कृष्टीः प्रजाः ओजसा सामर्थ्येनेयर्ति गतिकर्मायम् । अन्तर्णीतण्यर्थः । गमयति प्रेरयतीति यावत् । नन्वीश्वरस्याल्पो वृषा दृष्टान्तः कथमुच्यत इत्याह । अल्पस्यापीति ॥ दृष्टान्तोहि प्रत्यायनार्थं वक्तव्यः । तच्च प्रसिद्धेनैव भवतीति भावः ॥ ८ ॥

य एकः । राजा । य इन्द्र एक एव चर्षणीनां प्रजानां वसूनां वित्तानां च पञ्चक्षितीनां देवादिभेदेन पञ्चविधानां प्रजानामपीरज्यति ऐश्वर्यकर्मायं राजा भवति । सकृष्टीरियर्ति इति पूर्वेण सम्बन्धः । चर्षणीनामित्यादि षष्ठी द्वितीयार्थे । चर्षणीनां पञ्चक्षितीनां चेति पुनरुक्तिरित्यत आह ॥ सामान्यादिति ॥ चर्षणीनामिति सामान्यादुक्तं पञ्चक्षितीनामिति च विशेषतः । अतो नोक्तदोषः ॥ ९ ॥

इन्द्रं वः । सम्यक् । जनेभ्यो व इति वचनाज्जनान्प्रतीदं वचनमिति विज्ञायते । अत उक्तं हे जनाः विश्वतः सर्वत्रास्थितं सर्वगतमिन्द्रं जनेभ्यो वो युष्माकमर्थाय परि सम्यक् हवामहे आह्वयामः । सर्वगतस्य कथमाह्वानमित्यतोभिप्रायमाह ॥ व्यक्तरूपत एकत्र स्थातुमिति ॥ आहूतश्चासौ केवल इन्द्रो नः सर्वेषामस्तु इष्टद इति शेषः ॥ १०, १४, ७, २ ॥

## मन्त्रार्थमञ्जरी

(हे) वृषन्, अभीष्टवर्षक, श्रेष्ठेति वा । सत्रादावन्, सर्वप्रद, सर्वशब्दपर्यायसत्राशब्दोपपदात् 'डुदाञ् दाने' इति धातोर्वनिप्प्रत्ययः । सः (त्वम्) नः, अस्मदीयम् । अमुम्, परोक्षम्, मोक्षगतमिति यावत् । चरुम्, चर्वणीयं, भक्षणीयं, अनुभवनीयमानन्दमित्यर्थः, 'चर गतिभक्षणयोः' इत्यस्मात्कर्मण्युकारप्रत्ययः । अस्मभ्यम्, अस्मदर्थम् । अपवृधि, अविद्यावृतमपावृणु ॥ यतस्त्वमेव अप्रतिष्कुतः, अप्रतिद्वन्द्वः, 'स्कुञ् आप्रवणे' आप्रवणमागमनम्, वैरिभिर्युद्धेषु प्रत्यागतो नेत्यप्रतिष्कुतः, अप्रतिद्वन्द्व इति फलितार्थः ॥ प्रसिद्धेन्द्रपक्षे तु चरुं, हविः । अपवृधि, स्वीकारेण सफलीकुरु । यद्वा– चरुम्, मेघम्, व्रजः । चरुः । वराहः । इति

(वैदिकनिघण्टौ १।१०) मेघनामसु पाठात्। नः, अस्मदर्थमेव जातम्। अस्मभ्यम्। अपवृधि, उद्घाटय ॥ इति योज्यम् ॥ ६ ॥

(हे इन्द्र) तुञ्जेतुञ्जे, 'तुजि गतौ दाने वा' इति धातोस्त्वया क्रियमाणे गमने क्रियमाणे दाने वा, धातूनामनेकार्थत्वात्प्रेरणार्थो वा, स्तोतृषु त्वयैव प्रेरणे जाते सति। ये, प्रवृत्ताः। उत्तरे, उत्तराः, उत्तमाः स्तोमाः, स्तुतिविशेषाः। (तेऽपि) अस्य वज्रिणः इन्द्रस्य (तव) सुष्टुतिम्, सुष्टुतित्वम्। न विन्धे, न विन्दन्ते, न प्राप्नुवन्ति, भगवतोऽनन्तगुणत्वेन सर्वविषयकत्वाभावादिति भावः, वर्णव्यत्ययझप्रत्ययलोपादिना छान्दसं रूपम् ॥ ७ ॥

एकस्य वृषस्य यः प्रतिवीरोऽपरो वृषा वर्तते स वंस इत्युच्यते, तं वंसं प्रति यो निर्भयो युद्धाय गच्छति स वंसगः। वृषा, वृषभः। यूथेव, यूथानीव, गवां यूथानि यथाकर्षत्येवम्। ईशानः, प्रभुः। अप्रतिष्कुतः, पूर्वोक्तदिशा अप्रतिद्वन्द्वः। (इन्द्रः) कृष्टीः, प्रजाः। ओजसा, सामर्थ्येन। इयर्ति, 'ऋ गतौ' अन्तर्णीतण्यर्थः, गमयति प्रेरयतीति यावत् ॥ ८ ॥

यः इन्द्रः एकः (एव)। चर्षणीनाम्, प्रजानाम्। वसूनां (च), वित्तानां च। पञ्चक्षितीनाम् (अपि), देवगन्धर्वदैतेयपितृमानुषभेदेन पञ्चविधानां प्रजानामपि, अत्र षष्ठ्यन्तानां द्वितीयार्थत्वं ज्ञेयम्। इरज्यति, नियमयति, 'इरज् ऐश्वर्ये' इति धातोस्तेषां राजा भवतीति फलितार्थः। (सः) कृष्टीः इयर्ति इति पूर्वेण अन्वयः अत्र 'चर्षणीनाम्, पञ्च क्षितीनाम्' इति सामान्यविशेषभावात् (भाग० १०।१।६) अपौनरुक्त्यं ध्येयम् ॥ ९ ॥

(हे जनाः) विश्वतः, सर्वतः, सर्वत्र स्थितं सर्वगतम्। इन्द्रं जनेभ्यः। वः, युष्मभ्यम्, युष्माकमर्थायेति यावत्। परि, सम्यक्। हवामहे, व्यक्तरूपतयैकत्र स्थातुमाह्वयाम इत्यर्थः ॥ आहूतश्च (असौ) केवलः (इन्द्रः) अस्माकम्, नः। अस्तु। (इष्टदः) इति शेषः। वः जनेभ्यः इति (श्रुतौ) श्रवणात् 'हे जनाः' इति (व्याख्याने) संबोधनलाभ इति ध्येयम् ॥ १० ॥ इति चतुर्दशो वर्गः ॥ १४ ॥ सप्तमं सूक्तम् ॥ ७ ॥ द्वितीयोऽनुवाकः ॥ २ ॥

## पदार्थप्रकाशिका

सनोवृषन्नमुञ्चरम्। वर्षितृशब्दस्य सम्बुध्यैकवचनं वर्षितरिति। वृषसेचन इति धातोः भक्ताभिलषितसेचक इत्यर्थः। श्रेष्ठवेति। स्युरुत्तरपदे व्याघ्र वृषन् वृषभंकुजराः सिंहशार्दूल-नागाद्याः पुंसि श्रेष्टार्थवचाचका इति वृषन्शब्दस्य पूर्वपदसमस्ततयोत्तरपदत्वं यदा तदैव

श्रेष्ठवाचकत्वमुक्तं न केवलस्य अत एव पुरुषव्याघ्रः पुरुषऋषभः पुरुषसिंह इत्यादिप्रयोगाः। तथाप्युपचरिता श्रैष्ठ्यविवक्षायामेव पूर्वपदापेक्षा न तु निरुपचरितश्रैष्ठ्यविवक्षायाम्। प्रकृते च हरेर्निरुपचरित श्रैष्ठ्यविवक्षितत्वोक्तेः केवलस्यापि वृषन्शब्दस्य श्रैष्ठ्यवाचकत्वं युक्तमिति भावः। सत्राशब्दः सर्वपर्याय इति। अव्ययानामनेकार्थत्वादिति भावः। सहार्थो वेति। साकं सत्रा समं सहेत्यभिधानादिति भावः। वनिति। आतो मनिन् क्वनिब्वनिपश्चेति सूत्रेणेत्यर्थः। तथाच सत्राशब्दोपपदात् दा दाने अस्मात् वनिप्प्रत्यये इप् इत्यस्य लोपे सत्रादावन् इति प्रातिदद्दिके सति सम्बुद्धौ सोर्लोपे सत्रादावन् इति रूपं द्रष्टव्यम्। सत्राब्दस्य सर्वपर्यायत्वपक्षेऽर्थमाह। सर्वदातरिति। ननु सहार्थपक्षे सत्रादावन्नित्यस्य सहदातरित्यर्थः स्यात्। तथा इष्टानिष्टैः सह मिलित्वा दातरित्यर्थस्तु बाधितः। भक्तान् प्रति भगवतः केवलेष्टदातृत्वेनानिष्टदातृत्वाभावात्। अत आह। सहार्थत्व इति। सर्वेष्टदातृत्वमेव लभ्यते नानिष्टदातृत्वमित्येतत् कुत इत्यत उक्तम्। अर्थत इति। स्तुतिसमये अशुभदातृत्वेन सम्बोधनस्य बाधितत्वादिति भावः। यद्वा सत्रा सह युगपदित्यर्थः। अर्थादभीष्टसमुदायमिति यावत्। तथाच सर्वेष्टदातृत्वमेव लभ्यत इत्यर्थः। अमुमिति। ऋक्पदस्य तमिति व्याख्यानं तदर्थमाह परोक्षमिति। अदस्शब्दस्य परोक्षत्वादिति भावः।

भक्षणार्थ इति। चरगतिभक्षणयोरिति भावः। उकार इति। चरधातौ कर्मणि उकारप्रत्यये रकारस्थाकारलोपे चरुरिति रूपम्। शृतचरुशब्देनैकार्थ्याय भाष्ये भोज्यं भक्ष्य इति निपातितो भोज्यशब्दः प्रयुक्तः। वस्तुतस्तु अनुभवनीयत्वरूपे भोग्यत्वमेव तस्य तात्पर्यमित्याशयेनाह। भोज्यमनुभवनीयमिति। अपवृधीत्येव वक्तव्ये संहितानुसारेणैव अपावृधीत्युक्तम् एवमुत्तरत्रापि ज्ञातव्यम्। आवृतस्यैवाभिव्यक्तिप्रार्थनौचित्यादावृतत्वद्योतनाय संहितायां दीर्घनिर्देशः। अत एव अविद्यावृतमित्याहेति ज्ञातव्यम्। अपावृण्विति। भगवानेव कस्मात् प्रार्थ्यत इत्यतोऽप्रतिष्कुत इत्युक्तम्। तद्धेतुगर्भं विशेषणमित्याशयेन अप्रतिद्वन्द्व इति संयोजयितुं पदार्थं तावदाह यतस्त्वमित्यादिना। धातुव्याख्यानभूतप्रवणशब्दस्य दुर्गमार्थत्वादाह आप्रवणमागमनमिति। नन्वप्रतिष्कुत इति प्रथमान्तपदसद्भावात् अप्रतिद्वन्द्व इति वक्तव्ये अप्रतिद्वन्द्वेति कथमुक्तमित्यत आह। लुप्तेति। हविः दर्भादिनाच्छादितं सद्ध्रियमानं अपावृधि इत्यस्याभिप्रायमाह। स्वीकारेणेति। अस्मदर्थमेव जातमिति प्राणिनां जीवनप्रदांबुप्रदानार्थमेव जातमित्यर्थः। अस्मभ्यं अस्माकं वृष्ट्याद्युपकाराय उद्घाटयेति शृंखलाबद्धमुच्यतेत्यर्थः॥ ६॥

तुञ्जे तुञ्जे य उत्तरे। गतिकर्मेति। तुञ्ज गताविति धातोर्गत्यर्थकत्वं इत्यर्थः। दानकर्मा वेति। सिंजति तुंजति महते ददानीति दानार्थकधातुषु पाठादित्यर्थः। अर्थद्वयमपि दर्शयति। ततश्चेति।

तुञ्जे लोकानां गमने लोककर्तृकप्रवृत्तौ त्वपाक्रियमाणे सतीत्यर्थः । क्रियाया इति । लोकानां गमनेतरसमस्तक्रियायाः दाने त्वया क्रियमाणे सतीत्यर्थः । तर्हि प्रेरण इति भाष्यमसङ्गत-मापन्नमित्यत आह । प्रेरण इतीति । लोकानां गमने क्रियापादाने वा क्रियमाणे सतीत्यस्य त्वया प्रेरणे क्रियमाणे सतीत्यत्र तात्पर्यमित्यर्थः । तुञ्जेतुञ्जे इति वीप्सानुसारेणाह तत्र तत्रेति । वर्णव्यत्यासादिनेत्यत्रादिपदेन वर्णलोपो गृह्यते । तथाच न विन्दत इति भाव्ये दकारस्य धकाररूपे वर्णव्यत्यासे अनुस्वारतकारयोर्लोपे नविन्ध् ए नविन्धे इति भवतीति द्रष्टव्यम् । नापुरित्यनन्तरं कुत इति शेषः । सर्ववर्णकत्वाभावादिति । भगवतोऽनन्तत्वेन स्तोमानां सर्वगुणव्याख्यान-रूपत्वाभावादित्यर्थः । त्वत्प्रेरणाय स्तोत्रं कुर्वतामपि स्तुतिविशेषस्त्वां साकल्येन न प्रतिपादयति अनन्तगुणत्वात्तवेति भावः ॥ ७ ॥

वृषायूथेववंसगः । आकर्षतीति । स्वगत्यनुकूलगतिमन्ति करोति प्रेरयतीति यावदित्यर्थः । कृष्टीः प्रजा इति । क्षितयः कृष्टयः चर्षणय इति मनुष्यनामसु पाठादिति भावः । गतिकर्मा गत्यर्थः रणातियर्तीति गत्यर्थकधातुपाठात् ऋगतावित्यस्येदं छन्दसि रूपमिति भावः । णिजर्थं दर्शयति गमयतीति । प्रत्यायनार्थं परबोधनार्थम् । तत्र प्रत्यायनं प्रसिद्ध्यैनैवेति महत्वमल्पत्वं वा न प्रायिकमित्यर्थः ॥ ८ ॥

य एकश्चर्षणीनाम् । ऐश्वर्यकर्मेति ईश प्रेरणे ईश्वरस्य प्रेरकस्य भावः ऐश्वर्यं तदर्थ इत्यर्थः । इरज्यति प्रच्यते क्षयति राजतीति चतुर्ष्वैश्वर्यकर्मसु धातुषु पठितत्वादिति भावः । तथाच इरज्यति ईश्वरो भवतीत्यर्थो द्रष्टव्यः । राजा भवतीति तात्पर्यकथनमिति ज्ञातव्यम् । इरज्यते प्रेरकत्व-रूपैश्वर्यार्थकत्वेन सकर्मकत्वाच्चर्षणी वसूनीति द्वितीयया भाव्यम् । कथं षष्ठीत्यतः अधीगर्थदयेशां कर्मणीति ईशधातोः कर्मणि षष्ठीविधानात् कर्मणिषष्ठीयमित्याशयेनाह चर्षणीनामित्यादीति । पुनरुक्तिरिति । पञ्चक्षितीनामेव चर्षणीत्वादिति भावः । नोक्तदोष इति । ब्राह्मणपरिव्राजकन्यायेनेति भावः ॥ ९ ॥

इन्द्रं वो विश्वतस्परि । वेदद्रष्टुर्मधुछन्दस इत्यर्थः । कथमाह्वानमिति । आह्वानस्य स्वसमीपं प्राप्तगमनार्थत्वाद्भगवतश्च सर्वगतत्वेन सदा समीपे सत्वादाह्वानं व्यर्थमिति भावः । व्यक्तरूपत इति । तसेः सार्वविभक्तिकत्वात् व्यक्तरूपेणेत्यर्थः । एकत्र यज्ञादिस्थाने । केवलः सर्वोत्तमः पालयिता टीकाकारैः तथोत्तरत्र व्याख्यातत्वादिति द्रष्टव्यम् । नः भवदर्थमाह्वयितॄणां सर्वेषां युष्माकमस्माकं चेत्यर्थः ॥ १० ॥ १४७ ॥

## पदार्थदीपिका

सर्वपर्याय इति ॥ अव्ययानामनेकार्थत्वादिति भावः ॥ कर्मण्युकार इति । भृमृशीत्यौणादिकसूत्रेणेति शेषः ॥ अपावृधीति ॥ निपातस्य चेति दीर्घः ॥ वृञ्वरणे सेट्सिप् तस्य सेर्ह्यपिच्चेति हिः ॥ स्वादिभ्यश्नुः ॥ तस्य बहुलं छन्दसीति लुक् ॥ श्रुश्रुणुवृकृभ्यश्छन्दसीति हेर्धिरादेशः ॥ तस्य चङित्वात्पूर्वस्य गुणाभाव इति भावः ॥ अप्रतिष्कुत इति कर्मणि क्तिप्रत्यय इति भावः ॥ लुप्तविभक्तिको निर्देश इति भाष्यीयनिर्देश इत्यर्थः ॥ ६ ॥

तुंजतिर्दानकर्मेति ॥ तुजतेर्भावाद्यञि उंच्छादित्वादन्तोदात्तत्वे द्विर्वचने आम्रेडितस्यानुदात्तत्वे तुंजेतुंजे इति साध्विति भावः ॥ सुष्टुतित्वमिति करणे कर्तृत्वोपचारेण स्तावकवाक्यानां स्तुतिशब्देनोपादानात् क्तिच, क्तौच संज्ञायामिति क्तिच् प्रत्यये तदन्तस्यान्तोदात्तत्वेन समासस्वरापवादकाव्ययपूर्वपदप्रकृतिस्वरेणान्तोदात्तत्वेनैवोपपन्नेति भावः ॥ अत एव वक्ष्यति सर्ववर्णकत्वाभावादितीति ॥ वर्णव्यत्यासादिनेति ॥ विदॢ लाभ इत्यस्माल्लट् स्वरितत्वादात्मनेपदं प्रथमपुरुषबहुवचनं झः तुदादिभ्यः शः शेमुचादीनामिति नुम् दकारस्य व्यत्ययेन धकारः तकारलोपश्चेति भावः ॥ ७ ॥

गतिकर्मायमिति ॥ ऋगतावित्यस्मात्तिप् शपः श्लुः श्लाविति द्विर्भावः अभ्यासस्योदात्तत्वहलादिशेषौ अर्तिपिपर्त्योश्चेत्यभ्यासाकारस्येकारः ॥ अभ्यासस्यासवर्ण इति रजङादेशः तस्य गुणे परत्वं चेति भावः ॥ ८ ॥

इरज्यतीति ॥ अपवादित्वाद्यगितिभावः ॥ ऐश्वरकर्मायमिति ॥ अत्र ऐश्वर्यार्थः ॥ धातूनामनेकार्थत्वादित्यत्राभिमतम् ॥ न तु ऐश्वर्यार्थ एवायं प्रतिपत्तव्यः ॥ कण्ड्वादिषु इरज् ईर्षायामितीर्षार्थत्वश्रवणादिति ध्येयम् ॥ ननु इरज्यतेरैश्वर्यार्थत्वेपि अधीगर्थदयेशां कर्मणीत्यत्रेषधातोः स्वरूपग्रहणेनार्थग्रहणाभावात् चर्षणीनामिति कथं षष्ठीत्यत आह ॥ चर्षणीनामिति षष्ठीति ॥९॥

## टीकाविवृतिः

सनोवृषन् ॥ हे वृषन् वर्षितरिति वर्षितृशब्दसंबोधनम् । भक्ताभीष्टसेचकेत्यर्थः । ऋचि वृषुसेचन इति धातोः कनिन्युवृषितक्षीत्यादिना कनिन्प्रत्ययः । श्रेष्ठवेति ॥ वृषशक्तिबन्धने इति धातोः शक्तिसम्बन्धार्थकात्कनिन्प्रत्यये श्रैष्ठ्यार्थकत्वसिद्धेरिति भावः । यद्यपि स्युरुत्तरपदे व्याघ्रवृषभर्षभपुंगवाः । सिंहशार्दूलनागाद्याः पुंसिश्रेष्ठार्थवाचका इत्यभिधानाद्वृषन् शब्दस्य

तुल्यन्यायतया श्रैष्ठ्यवाचकत्वमुत्तरपद एव युक्तम् । तथापि प्रकृते उत्तरपदत्वाभावेपि वृषन्शब्दस्य सापेक्षश्रैष्ठ्यविवक्षायामेव पूर्वपदापेक्षेति हेतोर्निरपेक्षश्रैष्ठ्यस्यात्राभिप्रेतत्वेन श्रैष्ठ्यवाचकत्वं सम्बोभवीतीति श्रेष्ठेत्युक्तमिति सूरिभिर्ज्ञेयम् । सर्वपर्याय इति । सर्वशब्दाद्द्वितीयांताद्देव-मनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलमिति बहुलोक्तेस्त्राप्रत्यये सर्वस्य सोन्यतरस्यान्दीत्यत्र सर्वस्य स इति योगविभागात्सर्वशब्दस्य सादेशे निष्पन्नः सत्राशब्दः सर्वार्थः क इत्यर्थः । एतदरुचेराह । सहार्थोवेति । साकं सत्रा समं सहेत्यमरोक्तेरिति भावः । वनिबिति । आतोमनिन्क्वनिब्वनिपश्चेति सूत्रेणेति शेषः । अर्थत इति । सत्रादावन्नित्यनेन सहदातृत्वकथनात्कर्मप्रतियोगिनोरनुक्त्या सर्वेष्टस्य स्वेच्छयेति लाभात्सर्वेष्टं स्वेच्छया ददातीति तात्पर्यार्थत इत्यर्थः । भाष्ये असुमित्यस्य तमिति पदार्थमुक्त्वा मोक्षगमिति तात्पर्यार्थ उक्तस्तद्घटनाय तमित्यनूद्य व्याचष्टे ॥ तं परोक्षमिति । उकार इति । भृमृशीतृचरित्सरित निधनिमिमस्जिभ्य उरित्यनेनेत्यर्थः । भोग्यमितिवक्तव्ये भोज्यं भक्ष्य इति भक्ष्यार्थे निपातितो भोज्यशब्द आनन्दे भोज्यसाम्यमाश्रित्य श्रौतचरुशब्देनैकार्थ्याय भाष्ये प्रयुक्त इति भावेनाह । भोज्यमनुभवनीयमिति । अस्मदर्थमिति । अस्माकमनुभवार्थमित्यर्थः ॥ अविद्यावृतमिति ॥ हेतुगर्भमेतत् । अविद्यावृतत्वादपावृणु अपगतावरणं कुर्वित्यर्थः । श्रुतावपेत्यस्य निपातस्य चेति दीर्घस्त्वावृतत्वद्योतनाय । आवृतस्यैवाभिव्यक्तिप्रार्थनौचित्यादिति ज्ञेयम् । वृञो लोटि श्रुशृणुपृकृविभ्यश्छन्दसीति एभ्यः परस्य हेर्धित्वविधिसामर्थ्यात् श्नुप्रत्ययलोपे हेर्धित्वे चवृधीति रूपं ज्ञेयम् । नैवं त्वमिति । मन्त्रद्रष्टुरुक्तिरियम् । एतदनंतरमत इत्यध्याहार्यम् । अनेन नविद्यते प्रतिष्कुतः प्रत्यागतोयं सोऽप्रतिष्कुत इति विग्रहः सूचितः । सुषामादिषु चेति षत्वम् । स्वीकारेणेति । अपेतिनिषेधार्थकोपसर्ग पूर्वस्य आवृधीत्यस्यास्वीकाररूपावरणार्थस्य विवक्षित-त्वादिति भावः । अस्मदर्थमेवेति । परोपकारायेश्वरेण सृष्टत्वात् । पिबन्ति नद्यः स्वयमेव-नांभःखादंति न स्वादु फलानि वृक्षाः । पयोधरो नक्वचिदत्ति सस्यं परोपकाराय सतां विभूतय इत्युक्तेरित्यर्थः ॥ ६ ॥

तुंजे तुंजे । गतिकर्मेति । धातूनामनेकार्थत्वादिति भावः । दानकर्मेति । तुंजते मंहते इति दानकर्मसु पाठादिति भावः । तुजिदान इत्यतो घञर्थे कविधानमिति कः । इदित्वान्नुम् । केचित्तु तुजेर्भावे घञ्प्रत्यय इति भावः । अजन्तत्वाभावादेवाचोञ्णितीति न वृद्धिरित्याहुः । क्रियाया इतीति । व्यापार रूपाया इत्यर्थः । तथाच व्यापारस्य गमने प्रापणे दाने वा इत्यर्थः सम्पद्यते । तात्पर्यमिति । व्यापारस्य प्राप्तिर्दानं वा प्रेरण एव भवतीति भावः । तत्र तत्रेति । तुंजेतुंजे

इत्युक्तवीप्सार्थकथनमेतत् । सुष्टुतिमित्यस्य भावप्राधान्यमाश्रित्याह । सुष्टुतित्वमिति । उपसर्गात्सु-नोतीत्यादिना षत्वम् । वर्णव्यत्यासादिनेति । विद्धलाभ इत्यस्य स्वरितेत्त्वादात्मनेपदे व्यत्ययो बहुलमिति वर्णव्यत्ययेन दस्य धकारे आदिपदेन प्रथमपुरुषबहुवचनयोर्व्यत्यये नोत्तमपुरुषैकवचनयोः शेमुचादीनामिति नुमि विंधे इति रूपमिति भावः । सर्ववर्णकत्वाभावादिति । साकल्येन प्रतिपादकत्वाभावादित्यर्थः । इति भाव इति । श्रुतेर्भावोभाष्य उच्यत इत्यर्थः ॥ ७ ॥

वृषायूथेव । एकस्येति । वृषस्य बलीवर्दस्य प्रतिवीरः प्रतियोद्धाऽन्योवृषभो वंस इत्युच्यते । तादृशप्रतिवीरं प्रति विभीः सन्युद्धाय यो वृषभो गच्छति स वंसग इत्युच्यत इत्यर्थः । अन्येष्वपि दृश्यत इत्यत्र दृशिग्रहणसामर्थ्याद्गमेरपि डः । यूथेवेति । यूथशब्दात्परस्य शसः जस्शसोः शिरितिशयादेशे नपुंसकस्य झलच इति नुमागमे सर्वनामस्थाने चासम्बुद्धाविति दीर्घे शेश्छंदसि बहुलमिति शेर्लुकि नलोपः प्रातिपदिकान्तस्येति न लोप इति भावः । कृष्टीः प्रजाइति । कृष्टयः चर्षणय इति मनुष्यनामसु पाठादित्याशयः । गतिकर्मायमिति । इयर्तिरीयते इति गतिकर्मसु पाठादिति भावः । जुहोत्यादौ ऋसृगताविति पठितात् ऋधातोस्तिपि शपःश्लौ द्वित्वे अभ्यासस्योरदित्यत्त्वे तस्य अर्तिपिपर्त्योश्चेतीत्वे द्वितीयस्य सार्वधातुकार्धधातुकयोरिति गुणेरपरत्वे अभ्यासस्यासवर्ण इतीयङादेशे रूपमेतत् । दृष्टान्तोहीति । विवक्षितधर्मज्ञापनमेव दृष्टान्तेन क्रियते तत्र दृष्टान्ताल्पत्वादिकमप्रयोजकमिति भावः ॥ ८ ॥

य एकः । वसूनां वित्तानामिति । वसुराय इति धननामसु पाठादिति भावः । ऐश्वर्यक-र्मायमिति । इरज्यति पत्यते इत्यैश्वर्यकर्मसु पाठादिति भावः । यद्यपि कंड्वादिषु इरस् इरज् इरञ् ईर्ष्यायामिति पाठात्कंड्वादित्वात् यकिरज्यतीति रूपसिद्धिस्तथापि इयस् ऐश्वर्य इत्युत्तर सूत्रादैश्वर्य इत्यस्याकर्षणाद्धातूनामनेकार्थत्वाद्वा ऐश्वर्यार्थकता ज्ञेया । य एक इति यच्छब्दस्य तच्छब्द-सापेक्षत्वादाह । सकृष्टीरिति । इरज्यतीत्यस्यैश्वर्यार्थत्वे तन्नियमनार्थत्वेन सकर्मकत्वात्कथं चर्षणीनामित्यादि षष्ठीत्यत आह । षष्ठीद्वितीयार्थ इति । सुपां सुपो भवन्तीति वार्तिकाद्द्वितीयायाः षष्ठ्यादेश इति भावः । पुनरुक्तिरिति । क्षितयः कृष्टयः चर्षण य इति मनुष्यनामसु पाठादिति भावः । नोक्तदोष इति । यथादूषणार्थानुवादे पुनरुक्तिर्न दोष एवं विशेषविधानार्थं पुनः क्षितीनामित्युक्तेपि नदोष इति भावः ॥ ९ ॥

इन्द्रं वः । श्रौतजनेभ्य इति चतुर्थ्यंतपदस्य कथं जना इति सम्बुद्ध्यन्तेन व्याख्यानं भाष्य इत्यत आह । जनेभ्यो व इतीति । तथाच जनेभ्य इत्यस्य हेजना इति न व्याख्यानं किं त्वध्याहार इति

भावः । विश्वत इति तसेः सप्तम्यर्थत्वं तसेः सार्वविभक्तिकत्वाश्रयेणाह । सर्वत्रेति । स्थितमिति शेषोक्तिः । विश्वतस्पस्परीति संहितायां कस्कादित्वात्सः । तेनोपध्मानीयो न । व इति चतुर्थ्यंतं व्याख्याति । वो युष्माकमर्थायेति । अत्र रंधनाय स्थालीत्यादिवत्तादर्थ्ये चतुर्थीति भावः । ऋत्विग्यजमानेभ्य इत्यर्थः । कथमाह्वानमिति । मध्यमपरिमाणस्य दूरे स्थितस्याह्वानेनागमनसम्भवाद्व्याप्तस्य तदसम्भवादिति भावः । व्यक्तरूपत इति । अभिव्यक्त मध्यमपरिमाणरूपेणेत्यर्थः ॥ केवल इति । असहाय इत्यर्थः । अस्माकमिति श्रौतपदं भाष्यस्थन इति प्रतिपदं चायुक्तम् । ऋत्विगाद्यर्थमाह्वानमुक्त्वा स्वार्थमिष्टदत्वप्रार्थनासङ्गतेरित्यत आह । नः सर्वेषामिति । युष्माकमस्माकमित्यर्थः । युष्मदस्मच्छब्दयोरेकशेषे त्यदादिषु यत्परं तच्छिष्यत इति वचनादस्मच्छब्दशेषादिति भावः ॥ १०, १४, ७, २ ॥ इति चतुर्दश वर्गः ।

## ऋक्संहिता पदपाठसहिता

(७१) एन्द्रं सानसिं रयिंसजित्वानं सदासहम् ॥ वर्षिष्ठमूतयेभर ॥ १ ॥

(प०) आ । इन्द्र । सानसिम् । रयिम् । सऽजित्वानम् । सदाऽसहम् ॥ वर्षिष्ठम् । ऊतये । भर ॥ १ ॥

(७२) नियेन मुष्टिहत्यया निवृत्रारुणधामहै ॥ त्वोतासोन्यर्वता ॥ २ ॥

(प०) नि । येन । मुष्टिऽहत्यया । नि । वृत्रा । रुणधामहै ॥ त्वाऽऊतासः । नि । अर्वता ॥ २ ॥

(७३) इन्द्र त्वोतास आवयं वज्रं घना ददीमहि ॥ जयेम संयुधि स्पृधः ॥ ३ ॥

(प०) इन्द्र । त्वाऽऊतासः । आ । वयम् । वज्रम् । घना । ददीमहि ॥ जयेम । सम् । युधि । स्पृधः ॥ ३ ॥

(७४) वयं शूरेभिरस्तृभिरिन्द्रत्वया युजा वयम् ॥ सासह्याम पृतन्यतः ॥ ४ ॥

(प०) वयम् । शूरेभिः । अस्तृऽभिः । इन्द्र । त्वया । युजा । वयम् ॥ ससह्याम । पृतन्यतः ॥ ४ ॥

(७५) महाँइन्द्रः परश्चनु महित्वमस्तु वज्रिणे ॥ द्यौर्नप्रथिना शवः ॥ ५, १५ ॥

(प०) महान् । इन्द्रः । पर । च । नु । महिऽत्वम् । अस्तु । वज्रिणे ॥ द्यौः । न । प्रथिना । शवः ॥ ५, १५ ॥

## ऋग्भाष्यम्

जयिनासहितं लाभयुक्तं वित्तं सदाबलम् ।
वर्षिष्ठं सुमहद्रक्षानिमित्तं नित्यदा भर ॥ १ ॥
येनारीन्मुष्टियुद्धेन तमांसि ज्ञानयुद्धतः ।
त्वत्प्रेरिता निरुंधामः कांश्चिद्वा तुरगादिभिः ।
आवृत्त्यैवोपसर्गस्य क्रियावृत्तिर्भविष्यति ॥ २ ॥
त्वत्प्रेरिता ज्ञानरतिं दृढत्वेनाददीमहि ॥ ३ ॥
त्वया पृतन्यतः शत्रूनभिष्याम सुयोद्धृभिः ॥ ४ ॥
यस्मान्महाननादिश्च विष्णुर्जीवोऽवरस्तथा ।
तस्यैवास्तु महत्त्वंतन्न जीवब्रह्मतां स्मरेत् ।
आकाशवत्प्रथिम्नासौ शवः सुखबले तथा ॥ ५, १५ ॥

## ऋग्भाष्यटीका

एन्द्रः । दशर्चमेतदैन्द्रं सूक्तम् ॥ जयिना । हे इन्द्र सानसिं सानो लाभः मतुबर्थे सिः लाभयुक्तम् । सजित्वानं जित्वना जयिना पुत्रादिना सहितं सदासहं सदाबलं सदाबलवत् । वर्षिष्ठं वृद्धतमम् । सुमहदूतये रक्षायै रक्षानिमित्तं रयिं वित्तं अस्मभ्यं नित्यदा भर आहर । देहीति यावत् ॥ १ ॥

नियेन येनारीन् ॥ येन वित्तेन निमित्तेन त्वोतासः । छन्दसि युष्मदस्मदोः प्रत्ययोत्तर पदयोराकारादेशः । अवतिः प्रेरणार्थः । त्वत्प्रेरिता वयं मुष्टिहत्यया मुष्टिघातेन मुष्टियुद्धेनारीन्निरुणधामहै निरुंधाम । धात्वन्तरस्यैतद्रूपम् । किंच येन वृत्रा वृत्राणि तमांसि निरुणधामहै ज्ञानयुद्ध इति शेषः । अत्र येनेति ज्ञानवित्तमुच्यते । येन चार्वता तुरगेण तुरगादिभिः कांश्चिदरीन्निरुणधामहै तादृग्वित्तमाभरेति पूर्वेण सम्बन्धः । ननु येन वृत्राण्यरींश्च मुष्टिहत्ययाऽर्वता च निरुणधामहै इत्येकमेव वाक्यं कस्मान्न क्रियते तत्राह ॥ आवृत्यैवेति ॥ अत्र नीत्युपसर्गस्य त्रिरावृत्या रुणधामहा इति क्रियाया धातोरप्यावृत्तिरङ्गीकर्तव्यैव । उपसर्गाः क्रियायोग इति क्रियायोग एवोपसर्गत्वस्मरणात् । वाक्यभेदेन सम्यगन्वयसिद्धावभ्यासकल्पनानुपपत्तेः । प्रप्रवस्त्रिष्टुभमित्यादौ वाक्यस्य भेत्तुमशक्यत्वात् तत्कल्पनम् । आपंचभ्यः प्रयोक्तव्या उपसर्गा मनीषिभिरित्यपि विजातीयापेक्षम् ॥ २ ॥

इन्द्रत्वोतासः ॥ त्वत्प्रेरिताः । हे इन्द्र त्वोतासः त्वत्प्रेरिता वयं वज्रं ज्ञानं रतिं च ज्ञानविषयां ज्ञाननिमित्तां रतिं वा घना तृतीयैकवचनान्तमेतद्भावप्रधानम् । दृढत्वेनाददीमहि त्वत्प्रेरणयैव ज्ञानरतिमन्तो भवामः । त्वत्प्रेरिता एव युधि स्पृधः स्पर्धिनो युद्धानि वा संजयेम ॥ ३ ॥

वयं शूरेभिः । त्वया । हे इन्द्र त्वया युजा युनक्तीति युक् । सख्या सता त्वत्प्रसादेनैव शूरेभिः शूरैरस्तृभिरस्त्रिभिः सुयोद्धृभृत्यैः सह पृतन्यतो युद्ध्यतः शत्रून् सासह्याम अतिशयेन पुनः पुनर्वा सहामहै । अभिष्यामाभिमुखाः स्याम । उपसर्गप्रादुर्भ्यामस्तिर्यच् परः । किञ्च । वयं च त्वयैव च त्वदधीनसत्ताका इत्यर्थः ॥ ४ ॥

महाँ इन्द्रः । यस्मात् । नु यस्मादसाविन्द्रो विष्णुर्महान् गुणैरनन्तः परश्चानादिः । कालतोऽप्यनन्तः । प्रथिना प्रथिम्ना द्यौर्न आकाशवत् । देशतोऽप्यनन्तश्च । तथा शवः सुखबले । उभयनामसुपाठात् । नित्याभिव्यक्तसुखबलात्मकश्च । शशब्दः सुखवाचीवशब्दो बलवाचीति वा । जीवस्त्ववरो गुणादिनेति शेषः । तत्तस्मान्महित्वं ब्रह्मत्वं वज्रिणे तस्य विष्णोरेवास्तु तस्यैव जानीयात् । न पुनर्जीवस्य ब्रह्मतां स्मरेदिति तात्पर्यार्थः ॥ ५, १५ ॥

## मन्त्रार्थमञ्जरी

अथाष्टममपि दशर्चं वर्गद्वयात्मकमैन्द्रं सूक्तम् ॥ (हे) इन्द्र । सानसिम्, सानो लाभः, मतुबर्थे सिप्रत्ययः, लाभयुक्तम् । सजित्वानम्, जित्वना जयिना पुत्रादिना सहितम् । सदासहम्, सदा बलवत् । वर्षिष्ठम्, वृद्धतमम्, सुमहदिति यावत् । ऊतये, रक्षायै, रक्षानिमित्तम् । रयिम्, वित्तम्, ज्ञानद्रविणरूपम् । आ भर, आहर, 'हृग्रहोर्भश्छन्दसि' इति हस्य (हकारस्य) भकारः, देहीति यावत् ॥ १ ॥

येन, द्रविणेन वित्तेन निमित्तेन । त्वोतासः, त्वत्प्रेरिताः । (वयम्) मुष्टिहत्यया, मुष्टिघातेन । (अरीन्) बाह्यशत्रून् । नि रुणधामहै, निरुन्ध्मः । किं च, (येन) वित्तेन । वृत्रा, वृत्राण्यज्ञानानि । नि (रुणधामहै) । (येन) (च) वित्तेन । अर्वता, तुरगेण, तुरगादिभिः । (कांश्चिदरीन्) । नि (रुणधामहै) । (तादृशं वित्तम्) । 'आभर' इति पूर्वेण अन्वयः । उपसर्गस्यात्र त्रिः श्रवणाद्धातोरप्यावृत्तिर्ज्ञेया ॥ २ ॥

(हे) इन्द्र । त्वोतासः, त्वत्प्रेरिताः, अवतेः औणादिके तक्प्रत्यये 'तितुत्रतथ' इतीड-भावे केषांचिन्मते 'क्ङिति' इत्यनुवृत्तेः 'ज्वरत्वर' इत्यूठि 'छन्दसि युष्मदस्मदोः

प्रत्ययोत्तरपदयोराकारादेशः' इति युष्मद आकारादेशे गुणे चाज्जसेरसुकि 'त्वोतासः' इति रूपम्। वयम्। वज्रम्, 'इन्द्रो॒ व॒ज्री हि॑र॒ण्यय॑ः' इत्यत्रोक्तदिशा वज्रशब्दस्य ज्ञानानन्दार्थत्वाज्ज्ञानं रतिं चेति (ज्ञानविषयरतिमिति) ज्ञाननिमित्तरतिमिति वार्थः। घना, तृतीयैकवचनान्तं भावप्रधानं च, घनत्वेन दृढत्वेन। आ ददीमहि, लभेमहि, त्वत्प्रेरणयैव ज्ञानरतिमन्तो भवामः। (त्वोतासः), त्वत्प्रेरिताः। (एव) युधि। स्पृधः, स्पर्धिनः, तस्य सम्बन्धीनि युद्धानि वा। सम् जयेम, तत्र जयवन्तो भवामः इति ॥ ३ ॥

(हे) इन्द्र त्वया। युंजा, युनक्तीति युक्, तेन सख्या सता, त्वत्प्रसादेनेति यावत्। शूरेभिः, शूरैः अस्तृभिः, अस्त्रिभिः, सुयोद्धृभिर्भृत्यैः सह। पृतन्यतः, युध्यतः शत्रून्। वयम्। समह्याम, अतिशयेन पुनःपुनर्वा सहामहै। किं च, वयम् (च) (त्वया) (एव) त्वदधीनसत्ताका इत्यर्थः ॥ ४ ॥

नु, यस्मात्। (असौ) इन्द्रः, विष्णुः। महान्, गुणैरनन्तः। परः च, कालतोऽनन्तश्च। प्रथिना, प्रथिम्ना। द्यौः न आकाशवत्, देशतोऽप्यनन्तश्च। तथा, शवः, सुखबलात्मकश्च। (तत्) तस्मात्। महित्वम्, महत्त्वं ब्रह्मत्वम्। वज्रिणे, तस्य वज्रिनाम्नो विष्णोरेव। अस्तु, जानीयादित्यर्थः, जीवस्य ब्रह्मतां न स्मरेदिति तात्पर्यार्थः ॥ ५ ॥ इति पञ्चदशो वर्गः ॥ १५ ॥

## पदार्थप्रकाशिका

ऐन्द्रसानसिं रयिम्। अनुक्रमणिकायां ऐन्द्रसानसिमिति सूक्तप्रतीकग्रहणाद्दशैन्द्रमित्यनुवर्तत इत्याशयेन तां व्याचष्टे दशर्चमिदमिति। सानो लाभमिति। षणसम्भक्ताविति धातोः सम्भजनमेव लाभ इत्याशयः। मतुबर्थे सिरिति। तद्धिता इति। सूत्रस्यानुक्तप्रत्यय सङ्ग्राहकत्वादिति भावः। तथा सानोस्यास्तीति सानसिस्तमित्यर्थो द्रष्टव्यः। भाष्यं संवादयति लाभयुक्तामिति। द्रव्येणैव हि समस्तधान्यादिलाभ इति भावः। सदाबलमिति सहशब्दस्य बलार्थत्वादिति भावः। अर्शाद्यजन्तमित्यभिप्रेत्याह सदाबलवदिति। सदा बलप्रदमित्यर्थः। द्रव्येणैव हि देहे बलमित्याशयः। सुमहदिति भाष्यपदेन संवादयितुं वर्षिष्ठशब्दार्थमाह वृद्धतममिति। वृद्धशब्दाद-तिशयार्थे इष्टन्प्रत्यये प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीघर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्-द्राधिवृन्दा इत्यनेन सूत्रेण वृद्धशब्दस्य वर्षादेशे वर्षिष्ठमिति भवतीत्याशयः। सुमहदिति। अक्षयमिति यावत्। रक्षार्था इति द्रव्येणैव पुमान् रक्षितो भवतीति सुप्रसिद्धमिति भावः। नित्यदाभरेत्यत्र नित्यदा आभरेति पदच्छेदः। छन्दसि परेपि व्यवहिताश्चेति वचनाद्व्यवधानं न दोषायेति ज्ञातव्यम्। आहरेति। हृग्रहोर्भश्छन्दसीति हस्य भकारं द्रष्टव्यम् ॥ १ ॥

नियेन मुष्टिहत्या। त्वत्प्रार्थनानुसारेण मया द्रव्ये दत्ते सति किं तेन तव स्यादित्याशंकायामेषा ऋक् प्रवृत्तेति ध्येयम्। ननु त्वोतास इति कथं युष्मदो मपर्यन्तस्थत्वादेशे त्व इति जाते रक्षणार्थस्यावतेः कर्मणि क्तप्रत्यये ककारलोपे ज्वरत्वरेत्यादिना अकारवकारयोरूठि त्वेति जाते त्वदूतास इति वक्तव्यत्वादित्यत आह। छन्दसीति। प्रत्यययोरन्तरपदयोश्चेति सूत्रेण प्रत्यये उत्तरपदे च परे युष्मदस्मदोर्दकारस्य आत्वविधानात् अत्रापि ऊतास इति उत्तरपदे परे युष्मदोर्दकारस्याकारादेश इति योज्यम्। प्रत्यययोरन्तरपदयोरित्यस्य प्रत्ययोत्तरपदयोश्चेत्यनेन सूत्रेणेत्यर्थो द्रष्टव्यः। एवं च दकारस्यात्वे त्वा आ उतेति जाते सवर्णदीर्घे त्वा इति जाते पश्चादकारस्य उकारस्य च मिलितत्वात् ओकाररूपे गुणे त्वोतास इति रूपं युक्तमिति भावः। हनधातोः हिंसार्थत्वादाह। मुष्ठिघातेनेति। भाष्यं तात्पर्यकथनमात्रपरमित्याशयेनाह मुष्टियुद्धेति। द्रव्ये सति मुष्टियुद्धमायातीति भावः। वृत्राणीत्यस्यार्थोऽरीनिति।

ननु निरुन्धाम इति कथं रुधिर आवरण इति ऋधधातोः लोटि आत्मनेपदबहुवचने महिङादेशे ङकारलोपे रुधादिभ्यःश्नम् इति श्नम् विकरणे मित्वाच्च ऋ इत्यस्मात् परं जाते शकारमकारयोर्लोपे नस्य णत्वे रुणधमहीति जाते आडुत्तमस्येति सूत्रेण लोडुत्तमपुरुषे आडागमे टकारलोपे रुणधामहीति जाते टित आत्मनेपदानां टेरे इति इकारस्य एकारे एकारस्य एतऐ इति सूत्रेणैकारे रुणधामहैं इत्येव वक्तव्यत्वात् इत्यत आह धात्वन्तरस्यैतद्रूपमिति इति। न रुन्धाम रुधिर्वरण इति धातुरूपं येन श्नम् विकरणत्वादिनोक्तरीत्या रूपापत्तिः। किं नाम रुध्विनाश इत्यादि विनाशाद्यर्थकप्रकृतोषयुक्तस्य कस्यचिद्धातो रूपम्। तथाच व्यत्ययो बहुलमिति वचनात् रुध्धातोः लटि परस्मैपदिनि मस् आदेशे अनुस्वारे अडागमे सस्य रुत्वे विसर्गे च रुन्धाम इति रूपं द्रष्टव्यम्। इति शेष इति। ऋचि शेषोक्तिरित्यर्थः। बाह्यवित्तस्य तमोनिरोधकत्वासम्भवादाह अत्रेति। किं चेत्युक्ताध्यात्मपक्ष इत्यर्थः। येन चेति वित्तेन निमित्तेनेत्यर्थः। तुरगेणेति अर्वन् वाजीत्यश्वनामसु पाठादिति भावः। सति वित्ते अश्वादिलाभ इति ज्ञेयम्। तादृगेवेति। युद्धे अरिनिरोधनीभूतमुष्टियुद्धसामर्थ्यापादकयुद्धे अरिनिरोधक तुरगादिप्राप्तिहेतुभूतं च बाह्यवित्तं तथा ज्ञानयुद्धे अज्ञानादिनिरोधसाधनं ज्ञानवित्तं चाभरेत्यर्थः। तथाच पूर्वं रयिशब्देनोभयमपि वित्तं विवक्षितमिति द्रष्टव्यम्। अरींश्चेति। यद्यप्यत्र वृत्रशब्द एवारिपरोऽतश्चशब्दोऽत्यर्थस्तथापि अध्यात्मं वृत्रशब्दस्य तमःपरत्वात्तदपेक्षया वृत्राण्यरींश्चेति उक्तमिति भावः। भाष्ये आवृत्त्येत्यस्य त्रिवारमुक्त्येत्यर्थः। रुणधामह इति। क्रियायाः इत्यत्र रुणधामहे इति क्रियाया इत्यर्थः। पदकाले पठ्यमानस्यैकारस्यात्वं अरङ्गमामव इत्यत्रेव द्रष्टव्यम्।

ननूपसर्गावृत्तिसद्भावेपि क्रियाया आवृत्तिः कस्मादङ्गीकार्येत्यत आह ॥ उपसर्गा इति । प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युरिति सूत्रार्थः । ननु अनेकेषामुपसर्गाणां एकक्रियान्वयमङ्गीकृत्य उपसर्गाभ्यासः तात्पर्यार्थ इति कस्मान्न कल्प्यते । किं तद्बलात् क्रियावृत्तिकल्पनयेत्यत आह ॥ वाक्यबलेनेति ॥ पूर्वोक्तयोजनयेति शेषः ॥ ननु कर्मनिर्णये भगवत्पादैः प्रप्रवस्त्रिष्टुभमित्यत्र प्रप्रेत्युपसर्गद्वयस्य अविवासतीत्येकक्रियासम्बन्धमङ्गीकृत्य प्रप्रकर्षेण प्रकर्षणेत्यभ्यासार्थतया उपसर्गद्वयं कथं व्याख्यातं इत्यत आह ॥ प्रप्रव इति ॥ अत्र तु पूर्वोक्तरीत्या वाक्यभेदः शक्यते कर्तुमित्याशयः । ननु आपञ्चभ्यः इति वाक्ये एकक्रियायां प्रयोगः संभवतीति चेत् तत्राह । आपञ्चभ्य इति । पञ्चसङ्ख्यां मर्यादीकृत्य उपसर्गाः प्रयोक्तव्या इत्यर्थः ॥ विजातीयोपसर्गप्रयोगापेक्षं तद्वाक्यमित्यर्थः । ततश्च एकस्यां क्रियायां विजातीयाः पञ्चोपसर्गाः प्रयोक्तव्याः । न सजातीया इति तदर्थः । प्रकृते च नीत्युपसर्गाः त्रयोपि सजातीयाः । अतः नैकक्रियायां प्रयोगार्हा इति तद्बलात् क्रियावृत्तिः अङ्गीकार्येत्याशयः ॥ २ ॥ छ ॥

इन्द्रत्वोतास आवयम् ॥ ज्ञानं रतिं चेति । ज्ञानरतिमित्युक्त्वा भाष्ये ज्ञानसहितां रतिमिति मध्यमपदलोपीसमास इति ज्ञातव्यम् । अत एव अस्वरसादाह ॥ ज्ञानविषयमिति ॥ ज्ञाननिमित्तामिति ॥ ज्ञाने सति या रतिः तामित्यर्थः । तृतीयैकवचनमिति । ननु घनेति कथं तृतीयैकवचनं इति चेत् । उच्यते । घनशब्दात् तृतीयैकवचने टा इति स्थिते टाङसिङसामिनात्स्य इत्यनेन इनादेशे घनेन इति प्राप्ते सुपां सुलुक् इत्यादिना तृतीयैकवचनस्य आकारादेशे घना इत्येवं तृतीयैकवचनं द्रष्टव्यम् । अभिप्रायमाह ॥ त्वत्प्रेरिता इति ॥ दृढत्वेनेत्यपि पूरणीयम् ॥ युधि युद्धे स्पर्ध सङ्घर्षे इत्यस्मात्कर्तरि क्विपि तस्य लोपे रेफस्य संप्रसारणे ऋकारे धकारस्थाकारलोपे च सति स्पृधृशब्दः स्पर्धावद्वाचीत्याशयेनाह ॥ स्पर्धिन इति ॥ स्पृध इत्यस्यैवार्थान्तरमाह । युद्धानिवेति । पृतनास्पृधामृध इति सङ्ग्रामनामसु पाठादिति भावः । अस्मिन् व्याख्याने युधि प्रसक्तायां सत्यां स्पृधा युद्धानि जयेम युद्धे प्राप्तान् तिरस्कुर्म इति यावदिति योज्यम् ॥ ३ ॥

वयं शूरेभिरस्तृभिः ॥ जयेमेत्यस्यार्थमाह ॥ युनक्तीति ॥ स्नेहेन सदा संबद्ध इत्यर्थः ॥ तत्तात्पर्यमाह सख्येति ॥ तस्यापि तात्पर्यमाह । त्वत्प्रसादेनैवेति असु क्षेपण इत्यस्मात्ताच्छीलिकतृन्नंतस्य तात्पर्यमस्त्रिभिरिति तस्यापि तात्पर्यं सुयोद्धृभिरिति । भृत्यैः सहेति स्वपरिवारैः सहेत्यर्थः । शत्रून् प्रधानयोद्धृन् सासह्यामेति पदार्थं दर्शयन् अभिष्यामेति भाष्यं तत्तात्पर्यकथनपरमित्याह अतिशयेनेत्यादिना । सासह्यामेत्यस्य यङ्लुङंतत्वात् यङश्च भृशाद्यर्थे यङिति केचिदिति कौमुदीवचनेन भृशाद्यर्थत्वादतिशयेनेत्युक्तम् । भृशशब्दस्यातिशयार्थकत्वादित्याशयः ।

पुनःपुनर्वेति । धातोरेकाचो हलादेः क्रियासमभिहारे यङिति सूत्रेण पौनःपुन्यरूपे क्रियासमभिहारे यङो विधानात् । पुनःपुनर्वेत्युक्तम् ।

ननु अभिष्यामेति सकारस्य षत्वं कथं अतआह । उपसर्गप्रादुर्भ्यामिति । उपसर्गात्परस्य प्रादुरित्यस्माच्च परस्यास्तेः असभुवीति धातोः सस्य षत्वं स्यात् । सचास्तिर्यकारपरश्चेदिति सूत्रार्थः । तत्र यकारे परे उपसर्गप्रादुर्भ्यामस्तेः सस्य षत्वं यथा निस्यात् निष्यात् प्रादुष्यात् । अचि परे ताभ्यां परस्यास्तेः सस्य षत्वं यथा । निस् अति निषति प्रादुष्यति । यकारात्परः किं अभिस्त इति । एवंच प्रकृते अभीत्युपसर्गात् परस्यास्तेः सकारस्य यकारे परे षत्वे अभिष्यामेति युक्तमित्यर्थः । ऋचि एकस्य वयमिति पदस्याधिकत्वात् तद्योजनामाह । किञ्चेति । द्रव्यादिदान रूपराजाद्यनुग्रहेण भृत्यानां योद्धृभिमुखेनावस्थानमिव त्वदनुग्रहेण नास्माकमवस्थानमित्याशयेनोच्यते । द्वितीयेन वयमितिपदेनेत्यर्थः । त्वदधीनसत्ताः त्वददीनसत्तावंत इत्यर्थः ॥ ४ ॥ छ ॥

महान् इन्द्रः परश्चनु । निपातानामनेकार्थत्वादाह नुं यस्मादिति ॥ अनादिरिति ॥ बहुतरणिपरिस्पंदान्तरितजन्मत्वं परत्वमिति न्यायविदः । प्रथिनेत्यत्र छान्दसो मकारलोप इत्याशयेनाह प्रथिम्नेति ॥ उभयनामस्विति ॥ शवःशब्दस्य सुखनामसु बलनामसु च पाठादित्यर्थः । ननु तर्हि भाष्ये सुखात्मको बलात्मकश्चेत्यर्थप्रतिपादनाय सुखं बलं चेति वाच्ये सुखबलेत्युक्तिरयुक्ता । तथोक्त्या शकारवकारयोरर्थकथनमेतदिति प्रतीतेरित्याशयेन तथैवार्थमाह ॥ शशब्द इति ॥ शेष इति ऋचि शेषोऽयमित्यर्थः । तथाच जीवेति । त्रिविधानंत्यं मिलितं नास्तीति भावः । तस्यैवेत्यादि तात्पर्यकथनम् ॥ ५ ॥ छ ॥

## पदार्थदीपिका

लाभ इति ॥ वनषणसंभक्तावित्यस्मात् सानः संभजनमेव लाभ इत्यर्थः । मतुबर्थे सिरिति । तद्धिता इति बहुवचनबलादित्यर्थः ॥ जित्वेनेति ॥ जेरन्योभ्येपि दृश्यन्त इति किनि पित्वात्तृगागमः । कित्वाद्गुणाभाव इति भावः ॥ सदा बलवदिति ॥ सदा सहो यस्य स सदासहः तद्धिता इति समासान्तो डप्रत्यय इति भावः ॥ वृद्धतममिति ॥ वृद्धशब्दादतिशयार्थे इष्ठनि प्रियस्थिरेत्यादिना वृद्धशब्दस्य वर्षादेश इति भावः ॥ आभर आहरेति ॥ हृग्रहोर्भश्छन्दसीति छन्दस्त्वात् हकारस्य भकार इति भावः ॥ वर्णव्यत्ययार्थो नित्यदेति ॥ १ ॥

प्रत्ययोत्तरपदयोरिति ॥ प्रत्ययोत्तरपदयोश्चेति युष्मदोर्मपर्यन्तस्य त्वादेशे युष्मदस्मदोरनादेश इत्यत्र युष्मदस्मदोरिति योगविभागाकारादेशो व्याख्येय इति भावः ॥ तेन दकरलोपः छान्दस इति

व्याख्यानमपास्तम् ॥ दकारे दीर्घान्तावग्रहाभावप्रसङ्गादिति बोध्यम् ॥ मुष्टिहत्ययेति ॥ हनस्तमेति सुप्युपदे भावे हनः त्त्यपुप्रत्ययः ॥ तत्सन्नियोगेन नकारे तत्वस्य विधानादिति भावः ॥ ननु रुधेः स्वरिते लोपे लट् उत्तमपुरुषवचनेन तस्य महिङादेशे श्नष्करणे टेरेत्वे ऐत ऐत्वे आडुत्तमस्यपिच्चेत्यडागमे तत्सन्नियोगेनोत्तमपुरुषस्यापि पित्वेनाङित्वात् श्नसोरल्लोप इत्यकार-लोपाभावे च निष्पन्नस्य रुणधामहा इति श्रौतपदस्यात्मगामिफलाभिप्रायेणात्मनेपद-स्यैवावश्यकत्वात् भाष्येपि निरुणधामहेत्येव भाव्यम् ॥ परस्मैपदपक्षेवा निरुणधामेति भवितव्यम् ॥ तत्कथं भाष्ये निरुधाम इति प्रतिपदं इत्यत आह ॥ धात्वन्तरस्येति ॥ रुंध् इति धातोः शप् विकरणस्य लोटीदं रूपमिति भावः ॥ बुहलमेतन्निदर्शनमिति वचनात् रुधेरिदितो भौवादिकस्य लटि रूपमेतदित्यप्याहुः ॥

ननु च प्रप्रवस्त्रिष्टुभमित्यत्र प्रकर्षेण प्रकर्षेणेत्यभ्यासकल्पनयोरपि क्रियान्वयवत् अत्रापि नितरां नितरामित्यभ्यासकल्पनया त्रयाणां नीत्युपसर्गाणां क्रियान्वयसंभवादुपसर्गत्वमप्रत्यूहमित्यत आह ॥ वाक्यभेदेनेति ॥ मुष्टिहत्ययेति अर्वतेतीचूकरणाभेदाद्धत्रेत्यस्यावृत्या कर्मभेदेन विशेषलाभात् प्रप्रव इत्यत्र करणभेदाभावेन विशेषार्थलाभासंभवात्तत्र तथात्वेपि न प्रकृतेऽभ्यासकल्पनेति भावः ॥ वाक्यस्येत्युपलक्षणम् ॥ प्रमेयस्यैकपदत्वेन पदस्यापि भेत्तुमशक्यत्वादिति द्रष्टव्यम् ॥

ननूपसर्गावृत्या क्रियाया आवृत्तिर्नाङ्गीकार्या ॥ एकस्यामेव क्रियायामुपसर्गाभ्यासस्यापञ्चभ्यः प्रयोक्तव्या इति स्वयमेव विधानात् अन्यथा तद्विरोधादित्यत आह ॥ आपञ्चभ्य इति ॥ विजातीयापेक्षमिति ॥ विजातीया उपसर्गाः पञ्चपर्यन्तमपि प्रक्रियायां प्रयोक्तव्याः नतु विजातीयाः पञ्चत्वापेक्षयाधिकसङ्ख्या नवा सजातीयास्तावत्संख्याका अपीत्यनेन प्रकारेण विजातीयोपसर्गा-वृत्तिविषयमित्यर्थः ॥ २ ॥

ज्ञानं रतिंचेत्यादि ॥ अनेन भाष्ये ज्ञानसहितरतिपदं मध्यमपदलोपीसमास इत्युक्तं भवति ॥ आद्ये वजनेः रमेश्च डप्रत्ययः वजनं वज् रमणं वर्जिरं वज्रमित्युक्तं भवति ॥ तृतीयैकवचनान्तमिति ॥ वचनस्य सुपांसुलुगित्यादिना डादेश इत्यर्थः ॥ ददीमहीति ॥ डुदाञ्दाने प्रार्थनायां लिङ् क्रियाफलस्य कर्तृगामित्वात्स्वरितञित इत्यात्मनेपदोत्तमपुरुषवचनं महिङ् जुहोत्यादित्वाच्छपः श्लुः श्लाविति द्विर्भावः लिङः सलोपोऽनंत्यस्येति सीयुटः सकारस्य लोपः । श्नाभ्यस्तयोरात इत्याकारलोप इतिभावः ॥ स्पृध इति स्पर्धत इति स्पृधः स्पर्धसंघर्ष इत्यस्याः क्विप्चेतिक्विप् ॥ बहुलं छन्दसीति रेफस्य संप्रसारणं ऋकारः ॥ आकारलोपश्चेति ध्येयम् ॥ वस्तुतः

सुधोक्तरीत्यास्पर्धत्यर्थकस्पृधधात्वन्तरस्यैव इदं फलमिति न कश्चित् क्षुद्रोपद्रवः ।। युद्धानिवेति ।। संपदादित्वाद्धाष्ये क्विप् नचैव संप्रसारणमिति ध्येयम् ।। ३ ।।

युनक्तीति युगिति क्विप् चेति कर्तरि क्विबिति भावः ।। अस्तृभिरिति ।। असु क्षेपण इत्यस्मात्ताच्छील्यादिषु तृन् रुधादिभ्यश्चेति विकल्पविधानात्पक्षे इडभाव इति भावः ।। पृतन्यत इति ।। पृतनाशब्दः सङ्ग्रामनामसु पठितः । योद्धुं पृतनामात्मन इच्छन्तीत्यर्थे सुप् आत्मनः । क्यच् क्यबित्यनुवृत्तौ कव्यध्वरपृतनस्य त्रिर्लोप इत्यकारलोपः सनाद्यन्ता धातव इति धातुसंज्ञाया लटि तस्य शतरि पृतन्यत्शब्दनिष्पत्तिरिति भावः ।। तस्य प्रतिपदं युध्यत इति ।। युद्धार्थे स्पर्धतेरर्थेन स्पृधेति धात्वन्तराश्रयणे न कश्चिद्दोषः ।। युधशब्दात्पूर्ववत् क्यचि धातुसंज्ञायां लटि शतरि युध्यत्प्रातिपदिकनिष्पत्तिरिति भावः ।। युध् संप्रहार इत्यस्मात् श्यनीदं रूपमिति केचित् तन्न ।। अनुदात्तत्वेन नित्यात्मनेपदित्वाच्छतुरसंभवात् ।। प्रहर्षणे अनुदात्तेत् भौवादिकः धात्वादेः षःसः अस्य पौनःपुन्ये भृशार्थे वा धातोरेकाचोहलादेरिति यङ् तस्मिन् परतः सन्यङोरिति अनभ्यासस्य धात्ववयवैकाचो द्वित्वं हलादिः शेषः दीर्घोऽकित इत्यभ्यासस्य किति दीर्घः सनाद्यन्ता धातव इति धातुसंज्ञा अस्माल्लोटि ङित्वादात्मनेपदे प्राप्ते व्यत्ययेन परस्मैपदोत्तमपुरुषबहुवचनं असूधातोःशप् अतोगुण इति पररूपत्वं मसो यञादित्वात् सार्वधातुकत्वाच्च तत्परतो दीर्घोयञिति अकारस्य दीर्घः ।। लोटोलुङ्वदिति लोडादेशस्य मसो लङ्वद्भावान्नित्यंङित इति ङिल्लकारोत्तरसकारस्य नित्यं लोपः ।। ततः सासह्यामेति रूपसिद्धिः ।। यङन्ताल्लिङर्थे लोडिति तात्पर्यकथनाय भाष्यमित्याशयेन यङोऽर्थकथनपूर्वकं सहामहै इति लोडन्तं प्रतिपदं टीकायां दत्तं क्वचिट्टीकायां सहामहे इति लडन्तः पाठः सुडर्थे सासह्यामेति लोट् अभिष्यामेति लिङ्चेति सूचनार्थतया कथंचित्समाधेयः ।। इदं च सासह्यामेति पदपाठमभिप्रेत्योक्तम् । ससह्यामेति शाकल्यदृष्टपदपाठेतु दीर्घोकित इति प्राप्तस्य दीर्घस्याभावः छान्दस इति समाधानम् ।। अत एव वेदभाष्यकारीयं दीर्घोकित इति दैर्घ्योपपादनं पदकाले दीर्वत्वाभावात्संहितायां त्वन्येषामपि दृश्यत इति दीर्घतायाः स्वतः सिद्धत्वाच्च नानर्थकमिति ध्येयम् ।। सासह्यमिति ।। सहसहणे धात्वादेः षः सः धातोरेकाचो हलादेः क्रियासमभिहारे यङ् यङोऽचिचेति तस्य लुक् सन्यङोरिति द्विर्भावं हलादिशेषः दीर्घोकित इति दीर्घः प्रार्थनायां लिङ् च कर्तरि परस्मैपदमदादिवद्द्रष्टव्यमिति परस्मैपदोत्तमपुरुषबहुवचनमतः कर्तरि शप् अदादिवद्भावात् तस्य लुक् नित्यंङित इत्यन्तसकारस्य लोपः यासुट्परस्मैपदे-षूदात्तोङिच्चेति यासुट् लिङः सलोपोनन्तस्येति सकारलोप इति भावः ।। श्रौतपदो यङ्लुकोर्थं वदन्येव लोडन्तं प्रतिपदमाह ।। अतिशयेनेति ।। चर्करीतमिति वैय्याकरणानां यङ्लुकः संज्ञेति

ज्ञेयम् ॥ उपसर्गेति । यद्यस्तिर्यकार्थपरोच् परावातर्ह्युपसर्गे प्रादुर्भ्यां परस्यास्तेः सकारस्य षत्वं भवतीति सूत्रार्थः ॥ ४ ॥

नु यस्मादिति । निपातानामनेकार्थत्वादितिभावः ॥ प्रथिनेति ॥ पृथोर्भाव इत्यर्थे पृथ्वादिभ्य इति इमनिच् ऋतोर्हलादेर्लघोरिति ऋकारस्य रभावः तुरिष्ठमेय्यस्त्विवति अनुवृत्तौ टेरिति टिलोपः ॥ तृतीयैकवचने भवादलोपो न इति हेमनिच् रकारलोपः छान्दसः मकारलोप इति भावः ॥ महित्वमिति ॥ महेरित्यौणादिके कित्प्रत्यये महेर्भावो महित्वमिति भावः॥ ५ ॥

## टीकाविवृतिः

एन्द्रसानसिम् । दशर्चमिति । पूर्ववद्व्याख्येयम् । सानोलाभ इति । षणुदान इत्यतो धातोर्वनषणसम्भवक्ताविति धातोर्वा घञि सानः सत्पात्रदानहरिभजनरूपलाभ इत्यर्थः । मतुबर्थ इति । तद्धिता इति बहुवचननिर्देशेनेत्यर्थः । जित्वनेति । जिजय इत्यतोऽन्येभ्योपि दृश्यंते इति कनिपि ह्रस्वस्य पितिकृतीति तुगिति भावः । सदाबलवदिति । सहोबले सहामुद्रपर्ण्यां तु नखभेषजे इति विश्वोक्तेरकारान्तोपि सहशब्दो बलवाची तस्मादर्श आद्यच् । अत एव रूपभेदे विश्वः सहंचसहसासार्धं महंचमहसाद्युताविवितीति भावः । वृद्धतममिति । वृद्धशब्दादतिशायिकेष्ठनि प्रियस्थिरेत्यादिना वर्षादेशे वर्षिष्ठमिति रूपम् । भाष्योक्तं सुमहदिति तु तात्पर्यार्थ इति भावः । नित्यदेति । आभरेत्यत्र हृधातोर्हग्रहोर्भश्छन्दसीति हकारस्य भकारादेशो व्यत्ययरूपस्त-स्यार्थोऽयमिति भावः ॥ १ ॥

नियेन । येनेत्यनेन पूर्वऋगुक्तरयिः परामृश्यत इत्याह । येन वित्तेनेति । युष्मच्छब्दस्य ऊत शब्दे परे प्रत्ययोत्तरपदयोश्चेति मपर्यन्तस्यत्वादेशे त्वत्पुत्र इतिवत् त्वदूतास इत्येव स्यात्कथं त्वोतास इतीत्यत आह । छन्दसीति । युष्मदस्मदोरित्यतः परं इति योग विभागेनेति शेषः । युष्मदस्मदोरनादेश इत्यत्र युष्मदस्मदोरिति योगविभागेन आकारादेशमात्रं विधीयते । तस्य छन्दसि प्रत्ययोत्तरपदयोरेव प्रयोगात्तथोक्तम् । न तु सूत्रार्थाभिप्रायेण । अत एव विग्रहकाले दीर्घन्तस्त्वाशब्दः पठ्यते इति भावः । अवतेःक्तप्रत्यये ज्वरत्वरेत्यूठि निष्पन्न ऊतशब्दो भाष्ये प्रेरिता इति व्याख्यातस्तद्घटयितुमाह । अवतिरिति । अवरक्षणगतिकान्तीत्यादिनाऽवतेर्गतौ प्रयोगाद्गत्यर्थावतेरन्तर्णीतण्यर्थस्य प्रेरणार्थकत्वादिति भावः । मुष्ट्युपपदात् हनधातोर्हनस्तचेति भावे क्यपि नकारस्य तकारादेशे निष्पन्नमुष्टिहत्याशब्दो मुष्टिघातवाचकः । भाष्योक्तं मुष्टियुद्धेनेति तु तात्पर्यार्थ इत्याशयेनाह । मुष्टिहत्ययेति । रुधधातोर्लोटि स्वरितेत्त्वादात्मनेपदे श्नमि महिङः

आडुत्तमस्यपिच्चेत्याटि एत्वैत्वयोः श्रौतनिरुणधामहै इति रूपसिद्धावपि भाष्यस्थं यत्प्रतिपदं निरुंधाम इति तत्कथम्। कर्तृगामिक्रिया फलत्वात्परस्मैपदायोगात्। कथंचित्तद्योगेपि लडन्तरुधेः श्नमि श्नसोरल्लोप इति त्यल्लोपे निरुंध्म इति भाव्यमित्यत आह। धात्वंतरस्येति। बहुलमेतन्नि-दर्शनमिति धातुपाठान्तसूत्राद्रुधीति इदितो भौवादिकस्य परस्मैपदिनोरुधधातो रूपमेतदि-त्यङ्गीकारान्नायं दोष इति भावः। इति शेष इति। श्रुतौ शेषोक्तिरित्यर्थः। अत्रेति। अस्यामृचि येनेति शब्देन ज्ञानाख्यं वित्तमुच्यत इत्यर्थः। अर्वता तुरगेणेति। अर्वन्शब्दस्यार्वणस्त्र सावनञ इति तृ इत्यंतादेशादर्वा वाजीत्यश्वनामसु पाठाच्चेति भावः। क्रियाया अर्थात्मिकाया आवृत्त्या शब्दात्मकोपसर्गसम्बन्धासम्भवादाह। धातोरप्यावृत्तिरिति। निनीत्यभ्याससम्भवे वाक्यभेदा-ङ्गीकारो न युक्त इत्यत आह। सम्यगन्वयेति। साक्षादन्वयः सम्यगन्वयः। सचाभ्यासपक्षेनास्तीति भावः। तर्हि प्रप्रवस्त्रिष्टुभमित्यत्राभ्यासाङ्गीकारेण कर्मनिर्णये प्रकर्षेण प्रकर्षेणेति व्याख्यानं यत्कृतं तदयुक्तं स्यादित्यत आह॥ प्रप्रेति॥ इषमिति कर्मादिकार-काणामैक्यादिति शेषः। वाक्यस्येत्युपलक्षणम्। प्रप्रेत्यस्यैकपदत्वात्पदस्यापि भेत्तुमशक्य-त्वादित्यपि ज्ञेयम्। बहूपसर्गप्रयोगस्य विशेषतोविधानादुपसर्गावृत्तिबलेन क्रियावृत्तिकल्प-नानुपपत्तिरित्यत आह। आपंचभ्य इति। इदं वाक्यं विजातीयोपसर्गपञ्चक प्रयोगविषयम्। अत्र तु नीत्येकजातीयं त्रयमिति भावः॥ २॥

इन्द्रत्वो तासः। वजगतौ अस्मात्सम्पदादित्वाद्भावेक्विप्। रमेरौणादिकोडः। तथाच वजूचरश्चेति वज्रं द्वंद्वैकवद्भाव इत्याशयेनाह। वज्रं ज्ञानं रतिं चेति। भाष्येतु ज्ञानसहितां रतिमित्युत्तरपदलोपो ज्ञेयः। उत्तरपदलोपपक्षस्य महाभाष्ये प्रत्याख्यातत्वात्प्रकारान्तरमाह। ज्ञानविषयां ज्ञाननिमित्तामिति। अनेन वजि ज्ञाने रं रतिमिति विग्रहः सप्तम्याविषयत्वं निमित्तत्वं वार्थ इति सूचितम्॥ तृतीयेति। सुपां सुलुगिति तृतीयाया डा इत्यादेश इति भावः॥ आददीमहीति॥ डुदाञ्दान इत्यतः प्रार्थनायां लिङि शपः श्लौ द्वित्वे सीयुटः सलोपे श्नाभ्यस्तयोरित्याकारलोपे रूपमेतत्। स्पृधः स्पर्धिन इति। स्पर्धसंघर्ष इत्यतः कर्तरिक्विप्चेति क्विप्। ह्वः सम्प्रसारणमित्यधिकारे बहुलं छन्दसीति सम्प्रसारणे रेफस्य ऋतिस्पात्परस्या कारस्य लोपे स्पृध इति रूपम्। सङ्घर्षस्य पराभिभवेच्छारूपत्वात्पराभिभवेच्छावन्त इत्यर्थः। युद्धानि वेति। स्पर्धेर्भावे सम्पदादित्वात्क्विप्। पृतनास्पृधोमृध इति सङ्ग्रामनासु पाठादिति भावः। अस्मिन्पक्षे युधीत्यस्य युद्धे प्राप्तेसतीत्यर्थोज्ञेयः॥ ३॥

वयं शूरेभिः । ऋत्विगादिसूत्रेणात्र किनं किप्चेति किपं वाश्रित्याह । युगिति । सत्सूद्विषेति किपः सुप्युपपदे विहितत्वादत्र न आगमशासनमनित्यमिति वचनाद्युजेरसमास इति न नुमिति बोध्यम् । शूरेभिरिति । अतोभिस ऐस् बहुलं छन्दसीति भिस ऐस्त्वं नेति भावः । अस्तृभिरस्त्रिभिरिति । अस्त्रं मन्त्रमायुधं वा एषामस्तीत्यस्त्रिणः । ऋचि सम्प्रसारणं छान्दसम् । भाष्योक्तं सुयोद्धृभिरिति तु तात्पर्यार्थ इति भावः । अन्ये तु असुक्षेपण इत्यस्मात्तृच्य-स्तृशब्दोनिष्पन्नः । अस्तृभिरायुधक्षेपशीलैरित्यर्थ इत्याहुः । पृतनास्पृधोमृध इति सङ्ग्रामनामसु पठितपृतनाशब्दात्सुप आत्मनः क्यजिति क्यच् । क्यचि परतः कव्यध्वरपृतनस्य र्चि लोप इत्याकारलोपे लटः शत्रादेशे निष्पन्नपृतन्यत इति शब्दं व्याचष्टे । पृतन्यतो युध्यत इति । यद्यपि युधसम्प्रहारे इत्यस्य श्यन्विकरणस्यानुदात्तेत्त्वान्न शतुरुपपत्तिस्तथापि भावे क्विबंताद्युध् शब्दाद्युद्धार्थकात्क्यचि शतरि युध्यत इति शब्दोपपत्तिरिति बोध्यम् । सहेर्यङ्लुगन्तात्प्रार्थनालिङि चर्करीतं चेति यङ् लुगन्तस्यादादिवद्भावविधानात् शब्लुकि यासुटि सलोपे दीर्घोकित इति संहितायामभ्यासदैर्घ्ये पदकाले तु संज्ञापूर्वकोविधिरनित्य इति दैर्घ्याभावात् ससह्यामेति रूपमित्यभिप्रेत्यार्थमाह । अतिशयेनेति । चर्करीतमिति यङ्लुगन्तस्य संज्ञा । अभिष्यामेति तात्पर्यार्थ इति भावेनास्तेः षत्वे सूत्रं पठति । उपसर्गेति । उपसर्गेणः परस्य प्रादुषश्च परस्यास्तेः सस्य षःस्याद्यकारे अचिच परे इति सूत्रार्थः । अत्र यकारपरत्वात्ष इति भावः । द्वितीयवयमित्यस्यान्वयं वदन् भावमाह । किंचेति । अनेनत्वयेत्यस्यावृत्तिः अस्तिर्भवन्ति परोप्यप्रयुज्यमानोप्यस्तीत्युक्तेरस्त्यन्वय इति सूचितम् । तथात्वयाभिष्यामेति भाष्यखण्डं चोभयथा व्याख्येयमिति सूचितम् ॥ ४ ॥

महाँइन्द्रः । अव्ययानामनेकार्थत्वमभिप्रेत्याह । नुयस्मादिति । द्यौर्नप्रथिनेत्यनेन देशव्याप्त्युक्ते-स्तत्समभिव्याहाराद्गुणशब्दाध्याहारेण महच्छब्दं व्याख्याय तेन पुनरुक्तिपरिहाराय भाष्ये परशब्दोऽनादिरिति व्याख्यातस्तस्य तात्पर्यमाह । कालत इति । प्रथिनेति । पृथोर्भाव इत्यर्थे पृथ्वादिभ्य इमनिजितीमनिचि टेरिति टिलोपेनोकारलोपे र ऋतोहलादेर्लघोरिति ऋकारस्य रादेशे प्रथिमन् शब्दात्तृतीयैकवचनेऽल्लोपे व्यत्ययो बहुलमिति मकारलोप इति भावः । प्रथिम्ना व्याप्त्या द्यौर्न आकाशवदिति । नेति पदं लोकेप्रतिषेधार्थकमेव वेदे त्वन्वीयमानपदात्पूर्वं प्रयुज्यमानं

तन्निषेधार्थकम् । ततः परतः प्रयुज्यमानं तु साधृश्यार्थकं तदुक्तं निरुक्ते । नेति प्रतिषेधार्थो भाषायामुभयमन्वध्यायेनेंद्रं देवममंसतेति प्रतिषेधार्थीयः पुरस्तादुपचारस्तस्य यत्प्रतिषेध इति । दुर्मदासो न सूरायामित्युपमार्थीय उपरिष्टादुपचारस्तस्य येन उपमीयत इति । अन्वध्यायो वेदः । उपचारः प्रयोगः । यत् यत्र नकारःप्रतिषेधे वर्तते तत्र तस्य नकारस्य पुरस्तात्प्रयोगः कृतो ज्ञेयः । येन उपमानेन उपमीयते तस्य उपमानवाचकस्य शब्दस्य परस्तात् उपमार्थीय नशब्दस्य प्रयोग इति निरुक्तार्थः । अत्र परतःप्रयुज्यमानत्वात् नेत्यस्य सादृश्यार्थकत्वमिति भावः ॥ उभयेति ॥ शवःतर इति बलनामसु पाठात्सुखनामसुतु शवः शिवमिति कांचित्कपाठादित्यर्थः । प्रायःशेवं शिवमित्येव पाठादरुच्या व्याख्यानान्तरमाह ॥ शशब्द इति ॥ सुखनामसु पाठादिति शेषः ॥ बलवाचीति ॥ बवयोरभेदान्नपुंसके बले स्यादित्येकाक्षररत्नमालोक्तेरित्यर्थः । शंच बंच शबेते अस्यस्त इत्यर्श आद्यजिति भावः ॥ महित्वं महत्त्वमिति ॥ तृतीयोऽतिशय इतिमहाव्याकरणसूत्रादकारस्येकारः । विष्णोः सदासतोमहत्त्वस्यास्त्विति प्रार्थनं कथमित्यतस्तात्पर्यमाह ॥ तस्यैवेति ॥ ५ ॥ पञ्चदशोवर्गः ॥ १५ ॥

## ऋक्संहिता पदपाठसहिता

(७६) समोहे वाय आशंत नरंस्तोकस्य सनिंतौ ॥ विप्रांसो वा धिया यवंः ॥ ६ ॥

(प०) सम्ऽओहे । वा । ये । आशंत । नरंः । तोकस्यं । सनिंतौ ॥ विप्रांसः । वा । धियाऽयवंः ॥ ६ ॥

(७७) यः कुक्षिः सोमपातंमः समुद्र ईव पिन्वंते ॥ उर्वीरापो न काकुदंः ॥ ७ ॥

(प०) यः । कुक्षिः । सोमऽपातंमः । समुद्रःऽईव । पिन्वंते ॥ उर्वीः । आपंः । न । काकुदंः ॥ ७ ॥

(७८) एवा ह्यंस्य सूनृतां विरप्शी गोमंती मही ॥ पक्का शाखा न दाशुषें ॥ ८ ॥

(प०) एव । हि । अस्य । सूनृतां । विऽरप्शी । गोऽमंती । मही ॥ पक्का । शाखां । न । दाशुषें ॥ ८ ॥

(७९) एवा हि ते विभूतय ऊतयं इन्द्रमावते ॥ सद्यश्चित्सन्ति दाशुषे ॥ ९ ॥

(प०) एव । हि । ते । विऽभूतयः । ऊतयः । इन्द्र । मावते ॥ सद्यः । चित् । सन्ति । दाशुषे ॥ ९ ॥

(८०) एवा ह्यस्य काम्यास्तोमं उक्थं च शंस्या ॥ इन्द्राय सोमपीतये ॥ १०,१६,८ ॥

(प०) एव । हि अस्य । काम्या । स्तोमः । उक्थम् । च । शंस्या ॥ इन्द्राय । सोमऽपीतये ॥ १०, १६, ८ ॥

## ऋग्भाष्यम्

अन्यसंवहनेनापि येतं प्राप्ता जनार्दनम् ।

ज्ञानलाभेन तु नरस्त एव पशवो परे ।

विप्राश्चैव धियायुक्ता मूर्खाः शूद्रसमा मताः ॥ ६ ॥

यः कुक्षिस्तस्य देवस्य समुद्र इव सोऽखिलान् ।

कामान्क्षरति भक्ताय महाप इव तर्पकाः ।

काकुदस्तस्य जिह्वास्तु बह्वयो बहुमुखेषु याः ॥ ७ ॥

एवमेवास्य वाणी च वेदेता महती तथा ।

पक्वाशाखेव यजते वरदात्री विरञ्चिनः ।

बलिष्ठस्य हिते ॥ ८ ॥

संति सद्योपि यजते हिते ।

मावते ज्ञानिने नित्यमूतयश्च विभूतयः ॥ ९ ॥

स्तोमा उक्थानि चैवास्य तस्मै काम्यानि सर्वदा ।

गेयाः शंस्यानि सोमस्य पीतये नान्यथा पिबेत् ॥ १०, १६, ८ ॥

## ऋग्भाष्यटीका

समोहे । अन्य । ये समोहे संवहने अन्यसंवहनेन वा अपि । अन्यैः प्रेरिता अपीति यावत् । तोकस्यापत्यस्य । ज्ञानमेव हि जीवतोऽपत्यम् । सनितौ लाभे सति ज्ञानलाभेन तमिन्द्रं जनार्दनमाशत आश्नुवत प्राप्ताः । शरणमिति शेषः । त एव तु नरः पुरुषाः अपरे पशव इति शेषः। किंच । ये धियायवः धियायुक्ताः । युमिश्रणे । अन्येभ्योपि दृश्यन्त इति विच् । दृशिग्रहणद्गुणा-भावः तृतीयाया अलुक् । भगवज्ज्ञानिनः । तेवा त एव विप्रासो विप्राः मूर्खाः शूद्रसमा मता इति शेषः ॥ ६ ॥

यः कुक्षिः । तस्येन्द्रस्य देवस्य यः सोमपातमोऽतिशयेन सोमपाः कुक्षिः स समुद्र इव रत्नाकर इव तत्र सोमं समर्पितवते भक्तायाखिलान् कामान्पिन्वते पिविमिहिसेचने । क्षरति सततं ददाति । किञ्च । तस्य काकुदो जिह्वाश्च ककुदिति तालुनाम तत्र भवा जिह्वा काकुत् । अकारलोपात् । उर्वीः उर्व्यः आपोन आप इव महाप इव भक्तानां तर्पकाः कथं वहुवचनं बह्वयः तदेव कथं बहुमुखेषु याः ॥ ७ ॥

एवाह्यस्य ॥ एवमेव ॥ यस्त्वं विरप्शी विशिष्टबलवांस्तस्य विरप्शिनो बलिष्ठस्यास्य ते तव सम्बन्धिनी गोमती वाग्युता वेदेता वेदैः स्तुत्या मही महती या सूनृता साध्वी वाणी साप्येवाहि एवमेवहि कुक्ष्यादिवदेव दाशुषे यजते । पक्वफलवती कल्पतरुशाखेव वरदात्री भवतीति शेषः । यद्वा विरप्शिनो बलिष्ठस्यास्य ते तव सम्बन्धिनी हि यस्मात्तस्माद्विरप्शीति प्रत्ययान्तर्भावेन सूनृताया विशेषणमुक्तम् । यद्यपि विरप्सीति महन्नामसु पठितम् । तथापि महीत्यनेन गतार्थत्वादन्यथाव्याख्यातम् ॥ ८ ॥

एवाहिते । सन्ति । हे इन्द्र ते दाशुषे त्वां यजते मावते ज्ञानिने दातुं ते तव विभूतयः ऐश्वर्याण्यूतयो रक्षाश्च तद्यश्चित्सद्योपि नित्यमिति यावत् । संत्येवहि ॥ ९ ॥

एवाह्यस्य । स्तोमाः । अस्य परमेश्वरस्य काम्या काम्यानि प्रियाणि । उक्थ्यमुक्थानि । सोमपीतये सोमपानार्थम् । तस्मै इन्द्राय । शंस्या शंस्यान्येवहि । स्तोमः स्तोमाश्च इन्द्राय सोमपीतये गेया इति शेषः । सोमपीतय इत्युपपादयति ॥ नान्यथेति ॥ स्तुत्या प्रसन्न एवहि । पिबति । नत्वभिलाषेणेति ॥ १०, १६, ८ ॥

# मन्त्रार्थमञ्जरी

समोहः संवहनम्, वा शब्दोऽप्यर्थः ॥ ये । समोहे, संवहनेन, व्यत्ययात् । वा, प्रेरणेनापि, अन्यैः प्रेरिता अपीति यावत् । तोकस्य, अपत्यस्य, ज्ञानमेव हि जीवतोऽपत्यम् । सनितौ, लाभे सति । (इन्द्रम्) विष्णुम् । आशत, आश्नुवत, प्राप्ताः । (शरणम्) इति शेषः । 'ये' इति (श्रुतौ) श्रवणात् 'ते' इति (व्याख्याने) लभ्यते, (ते) (वा), त एव । नरः, पुमांसः, तदन्ये पशव इत्यर्थः । किं च, (ये) धियायवः, धिया युक्ताः, 'यु मिश्रणे' 'अन्येभ्योऽपि दृश्यन्ते' इति विच्, दृशिग्रहणसामर्थ्यात् 'सार्वधातुकार्धधातुकयोः' इति प्राप्तगुणाभावः, तृतीयाया अलुक्, भगवज्ज्ञानिनः । (ते) वा, त एव । विप्रासः, विप्राः, भगवदज्ञानिनस्तु शूद्रसमा इत्यर्थः ॥ ६ ॥

(तस्येन्द्रस्य देवस्य) यः कुक्षिः । सोमपातमः अतिशयेन सोमपाः । समुद्र इव, रत्नाकर इव । पिन्वते, क्षरति, यदीयं सोमं पिबति तस्मै सर्वान्कामान्ददाति, 'पिवि सेचने' इति धातोः । किं च, (तस्य) काकुदः, जिह्वाश्च, 'ककुद्' इति तालुनाम, 'तत्र भवः' इत्यर्थेऽण्प्रत्यये कृते आदिवृद्धावण्प्रत्ययाकारस्य लोपे 'काकुद्' इति रूपसिद्धेः, बहुवचनं तु बहुमुखेषु बहूनां जिह्वानां भत्त्वेन बहुत्वाज्ज्ञेयम् । उर्वीः, उर्व्यः, बह्व्यः । आपः न, आप इव, तर्पका इत्यर्थः ॥ ७ ॥

(यस्त्वम्) विरप्शी, विशिष्टबलवान् । अस्य, विरप्शिनो बलिष्ठस्य तव सम्बन्धिनी । गोमती, वाग्युक्ता, वेदेता, वेदैः स्तुत्या । मही, महती । (या) सूनृता, साध्वी वाणी । (सापि) एव हि एवमेव हि, कुक्ष्यादिवदेव दाशुषे, यजते । पक्वा, पक्वफलवती । शाखा न, कल्पतरुशाखेव, वरदात्री भवतीत्यर्थः ॥ ८ ॥

(हे) इन्द्र । (ते) दाशुषे, त्वां यजते । मावते, ज्ञानिने । (दातुम्) ते, तव । विभूतयः, ऐश्वर्याणि । ऊतयः (च) रक्षाश्च । सद्यः चित्, सद्योऽपि, प्राक् 'स॒द्यो वृ॒द्धो' इत्यत्रोक्तदिशा नित्यमिति यावत् । सन्ति एव हि ॥ ९ ॥

अस्य, इन्द्रस्य, परमेश्वरस्य । काम्या, काम्यानि, प्रियाणि । उक्थम्, उक्थानि । सोमपीतये, सोमपानार्थम् । इन्द्राय । शंस्या, शंस्यानि । 'एव हि' इत्येवहिशब्दयोरन्वयः । स्तोमः, स्तोमाः सामविशेषाः । च । (इन्द्राय सोमपीतये) (गेयाः) इति शेषः । स्तुत्या प्रसन्न एव पिबति, न त्वभिलाषेणेति, 'आप्तकामस्य का स्पृहा' (मा० उ० १।१५) इत्यादेरिति भावः ॥ १० ॥ इति षोडशो वर्गः ॥ १६ ॥ अष्टमं सूक्तम् ॥ ८ ॥

## पदार्थप्रकाशिका

समोहेवाय आशत । संवहन इति । वहप्रापण इत्यस्मात् घञर्थे भावे क्तप्रत्यये वकारस्य संप्रसारणे तस्य गुणे ओहावनं प्रेरणमित्यर्थः तत्तात्पर्यमन्यसंवहनेनापीति । वेत्यनूद्य भाष्यं सङ्गमयति ।। आ अपीति ।। अन्यैरिति ।। न केवलं स्वबुध्येत्यर्थः । तोकस्यापत्यस्येति । तुक् तोकः सूनुरित्यपत्यनामसु पाठादित्यर्थः । शेष इति । ऋचि शेषोक्तिरित्यर्थः । तदुपपादयति । युमिश्रण इति । ननु युधातोः विच्प्रत्यये तस्य सर्वस्य लोपे आर्धधातुकत्वात् गुणे यो इत्योकारान्तः शब्दः स्यात् । न तु युरित्युकारान्तः शब्द इत्यत आह । अन्येभ्योपीत्यादिना दृशिग्रहणादिति ।। सूत्रे अन्येभ्योपीत्येतावतैव पूर्त्या दृशिग्रहणस्य व्यर्थत्वेन व्यर्थं सत् किञ्चिदिष्टं ज्ञापयतीति न्यायेन दृशिग्रहणसामर्थ्यात् गुणाभावः । ननु तर्हि सुपो धातुप्रातिपदिकयोरिति तृतीयाविभक्तिलोपे धीयव इति स्यादित्यत आह । तृतीया इति । धिया युक्ता इत्यस्य तात्पर्यमाह । भगवद्ज्ञानिन इति । ते वा इति । तथाच ये धियायवः त एव विप्रा इत्यर्थः । मूर्खा इति भगवद्ज्ञानरहिता इत्यर्थः । तथाच ये धियायवो न भवति अत एव मूर्खास्ते विप्रासो न भवन्ति । किन्तु शूद्रसमा इति ऋचि शेषो भाष्य उक्त इत्यवधेयम् ।। ६ ।। छ ।।

यः कुक्षिः सोमपातमः । यः कुक्षिरिति । ऋग्भाष्ययोरुभयोरपि तन्त्रेण प्रतीकग्रहणमिति मन्तव्यम् । कुक्षिः पार्श्वभागः । इन्द्रस्य कुक्षेति विशेषणं सोमपातम इति । पीतस्य सोमस्य कुक्षौ स्थितत्वात् सोमपातमत्वं कुक्षेरित्यवगन्तव्यम् । रत्नाकर इवेति हेतुगर्भम् । यथा समुद्रो रत्नाकरत्वादेव रत्नाद्यभीष्टं ददाति । तथा इन्द्रस्य कुक्षिरपि तत्र सोमं समर्पितवते भक्ताय अभीष्टं ददातीत्यर्थः । सेचनं रक्षणमित्याशयेनाह ।। क्षरतीति ।। क्षर सन्तत दान इति धातोरिति भावः । तत्र तालुस्थाने । ननु ककुदि भवाः काकुदिति कथं तकारान्तः शब्दः ककुछब्दादण्प्रत्यये णित्वादादिवृद्धौ झलांजशोऽन्त इति पदान्तस्य तकारस्य दत्वे काकुदेत्यकारान्तशब्दः स्यादिति चेत् तत्राह ।। अकारलोपादिति ।। तद्धितादण् प्रत्ययस्याकारलोपादित्यर्थः । तथाच काकुत् इति तकारान्त एव शब्दो युक्त इत्यर्थः । कथमिति । जिह्वायाः एकत्वादिति भावः । बह्वच इति । तथाच जिह्वानां बहुत्वात् बहुवचनं युक्तमिति भावः । तदेव जिह्वानां बहुत्वमेव एकस्मिन् मुखे विद्यमानायाः जिव्हायाः एकत्वादिति भावः । यास्ता जिव्हास्तर्पकाः इत्यन्वयः ।। ७ ।।

एवा ह्यस्य सूनृता । विरप्शीति भगवद्विशेषणमेव । न सूनृताविशेषणम् । विर्पशिनो बलिष्ठवाचकत्वेन तत्संबधित्वेन वाचो विरप्शीत्वे सम्बन्धवाचको मतुब्वा ङीब्वा दृश्येत । तथाच विरप्शीमतीति वा स्यादित्यत उक्तम् ।। प्रत्ययान्तर्भावेनेति ।। तथाच सम्बन्धवाचकोप्रत्ययो

लुप्तोस्ति छन्दस्त्वादिति भावः । महन्नामस्विति । महान् विरप्स्यद्भुतमिति पठितत्वादित्यर्थः । तथाच विरप्शिनो महतस्ते सम्बन्धिनी विरप्शी महतीति व्याख्यातत्वमिति भावः ॥ ८ ॥ छ ॥

एवाहि ते विभूतयः । दातुमिति शेषोक्तिः । रक्षा इति रक्षणोपाया इत्यर्थः ॥ ९ ॥

एवाह्यस्य काम्या । प्रियाणीति तात्पर्योक्तिः । उक्थं शस्त्रविशेषः । स्तोम सोमविशेषाः । शेषो ऋचि शेषोक्तिः । उपपादयतीति । सोमपानार्थे उक्थस्तोमयोः शंसनगाने कस्मात्कर्तव्ये । अभिलाषश्चेत् स्वयमेवागत्य पास्यतीत्याशङ्कापरिहारायेति शेषः । नान्यथेति । उक्थादेः शंसनाभावे स्तुत्यभावप्राप्त्या प्रसन्नत्वाभावेन न पिबेदित्यर्थः । कुत इत्यत आह । स्तुत्येति । यत इति शेषः अतः सोमपीतये उक्थादिशंसनं कार्यमित्याशयः । नत्वभिलाषेणेति । यद्यभिलाषेण पिबेत् तर्हि स्वयमेवागत्य पास्यति अतः तदर्थं उक्थशंसनादिकं व्यर्थं स्यादिति भावः ॥ १० ॥ १६ ॥ ८ ॥

## पदार्थदीपिका

संवहन इति ॥ वहप्रापण इत्यस्मात् घञर्थेकविधानमिति कप्रत्यये यजादित्वात्संप्रसारणे आङ्पूर्वत्वाद्गुणे अहोवहनमिति भावः ॥ सनिताविति स्त्रियां क्तिन् तितुत्रसु क्तिनीट् निषेधादिडागमः छान्दसः ॥ यद्वा तितुत्रेष्वग्रहादीनां इति वचनात् निगृहीतिरित्यादाविव सनितावित्यत्रापिनेट् निषेध इति बोध्यम् ॥ आशतेति ॥ छान्दसः श्नोर्लोप इति भावः ॥ अश्नोतेर्व्यत्ययेन शप् तस्य बहुलं छन्दसीति सुगिति भाव इत्यन्ये ॥ विजिति ॥ आतोमनिन् क्वनिप् वनिपश्चेति पूर्वसूत्रे चकारेण विचः संगृहीतत्वादिति भावः ॥ ननु च युमिश्रणामिश्रणयोरित्यतो विचि धातूकारस्योकारे गुणे सति यो इत्योकारान्तःशब्दः स्यादित्यत आह ॥ दृशिग्रहणादिति ॥ उदाहृतसूत्रे अन्यभ्योपीत्येतावत्येव कर्तव्ये प्रदृश्यत इत्यधिकमुक्तं तेनायमर्थः सूचित इति भावः ॥ अलुगिति ॥ तत्पुरुषेकृति बहुलमिति बहुलग्रहणात्तृतीयाया अलुगित्यर्थः ॥ ६ ॥

पिविसेचन इति ॥ इदितोनुम् धातोरितीत्वादनुम् कर्तरिशप् उदात्तेतो व्यत्ययेनात्मनेपदे पिन्वत इति प्रथमपुरुषैकवचनमिति बोध्यम् ॥ तत्रभवेति भवार्थ अण् णित्वादादिवृद्धिरिति भावः ॥ अकारलोपादिति तद्धिताकारलोपादित्यर्थः ॥ उर्वीरुष्यन्त इति ॥ वोतोगुणवचनादिति ङीष् प्रणादेशो दीर्घाज्जसिचेति पूर्वसवर्णदीर्घनिषेधस्यवा छन्दसीति विकल्पनात् जसिपूर्वसवर्णदीर्घ इति ज्ञेयम् ॥ महाप इति समासान्तो विधिरनित्य इति ऋक्पूरब्धूःपथामानक्षे इत्यादिना समासान्ताभाव इति ज्ञेयम् ॥ ७ ॥

एवाहि। एवमेषहीति संहितायां निपातस्य चेति दीर्घः ॥ एवशब्दः आवर्तनीयः सचैवमित्यर्थः ॥ अवधारणार्थश्चेति भावः ॥ प्रत्ययान्तर्भावेनेति विरप्शसंबन्धोपेतप्रत्ययान्तर्भावेनेत्यर्थः ॥ उपलक्षणमेतत् ॥ तल्लोपेनेत्यपि द्रष्टव्यम् ॥ ततश्च बलवत्सम्बन्धिनी बलवतीत्येव लब्धं भवति ॥ अस्मिंश्चपक्षे गोमती, महीतिवदेव विरप्शीत्यस्यापि वाणीविशेषत्वमेवेति स्वारस्यं द्रष्टव्यम् ॥८॥

## टीकाविवृतिः

समोहे ॥ संआङ्पूर्वाद्वहेर्घञर्थेकविधानमिति भावेकप्रत्यये यजादित्वात्संप्रसारणे आद्गुण इत्याङा गुणे समोहशब्दनिष्पत्तिरित्याशयेनव्याचष्टे ॥ संवहन इति ॥ इयं निमित्तसप्तमीति भावेन भाष्ये तृतीयान्तं प्रतिपदमिति भावः। वाऽव्ययं स्यात्समुच्चय इत्येकाक्षररत्नमालोक्तेः श्रौतवाशब्दसमुच्चयार्थत्वेन व्याख्यातं भाष्ये तत्संगमयन्समोह इत्यस्य तात्पर्यार्थमाह ॥ वा अपीत्यादिना ॥ वहेःप्रापणार्थत्वात्प्रापणस्य च प्रेरणारूपत्वादिति भावः ॥ तोक स्यापत्यस्येति ॥ तोकंतनयमित्यपत्यनामसु पाठादिति भावः। प्रसिद्धापत्यस्य लाभेनेति विहाय ज्ञानलाभेनेति भाष्ये व्याख्यातं तस्याभिप्रायमाह ॥ ज्ञानमेवेति ॥ सदपत्यस्य नरकोद्धारकत्वाज्ज्ञानस्य तु स्वरूपोद्धारकत्वान्मुख्यापत्यत्वमिति भावः। सनिताविति निमित्तसप्तमीत्याशयेनाह ॥ ज्ञानलाभेनेति ॥ अशू व्याप्तौ संघातेचेत्यतोलङि श्नुव्यत्ययेन शपि आडागमेच आत्मनेपदेष्वनत इति झस्यादादेशे चाशतेति रूपमिति भावेनास्यप्रतिपदमाह ॥ आश्नुवतेति ॥ हुश्नुवोःसार्वधातुके इत्यत्रासंयोगपूर्वस्येत्यनुवृत्तेर्न त्रयप् ॥ इतिशेष इति ॥ शेषोक्तिर्भाष्येत्तूच्यते इत्यर्थः। ऋचि तु तमित्यस्यापि शेषो ज्ञेयः। एवमुत्तरत्र द्रष्टव्यम् ॥ दृशिग्रहणादिति ॥ दृशिग्रहणस्य प्रयोगानु-सरणार्थत्वाद्धिया युशब्दे विच्प्रयुक्तसार्वधातुकेति गुणरहितत्वादिति भावः ॥ तृतीयाया अलुगिति ॥ ओजःसहोंभस्तमसस्तृतीयाया इत्यत्र तृतीयाया इति योगविभागादिति भावः ॥ तेवात एवेति ॥ वोपमायां विकल्पे चनिश्चये चनिगद्यत इत्येकाक्षररत्नमालायामवधारणरूपनिश्चयार्थत्वोक्तेरिति भावः ॥ मूर्खा इति ॥ पण्डितंमन्या येमूर्खास्ते शूद्रसमा इति श्रुतिशेष इत्यर्थः ॥ ६ ॥

यःकुक्षिः ॥ अतिशयेन सोमपा इति ॥ कुक्षेः सोमपानकर्तृमुखसान्निध्याल्लाक्षणिकं सोमपानं बोध्यम्। यद्वा सोमं पाति रक्षतीति सोमपः पारक्षणे आतोमनिन्निति विच्। पीतसोमरक्षकः रक्षणं च फलोन्मुखत्वमिति भावः। पिन्वते इति प्रतीकमगृहीत्वा तात्पर्यतो व्याचष्टे ॥ सोमं समर्पितव इति ॥ पिवेःसेचनार्थस्य शतरि इदित्वान्नुमि चतुर्थ्यन्तस्येदं रूपम्। पिन्वत इत्यस्यावृत्तिमभ्युपेत्य द्वितीयस्य तिङन्तत्वमाश्रित्यापि व्याख्याति ॥ पिन्वत इति ॥ अत्र व्यत्ययेनात्मनेपदं ज्ञेयम् ॥

पिवीति ॥ इतिधातोःसिंचतीत्यर्थ इति शेषः । षिचक्षरण इति धात्वर्थं मनसि निधाय भाष्ये क्षरतीत्युक्तम् । तद्व्याचष्टे ॥ सततमिति ॥ तालुनामेति ॥ अमरे तालु तु काकुदमित्युक्तेस्ताल्वर्थक-काकुदशब्दपर्यायककुदशब्दस्य पृषोदरादित्वादकारलोपे ककुदिति तालुनामेत्यर्थः । अत एव शब्दभेदे विश्वः । काकुदं ककुदं स्मृतमिति । ककुच्छब्दाद्भवार्थेऽणि आदिवृद्धौ टिड्ढाणिति ङीपि काकुदीति प्राप्तावाह ॥ अकारलोपादिति ॥ द्विगोर्लुगनपत्य इत्यत्र लुगनपत्य इति योगविभागादणो लोपादित्यर्थः ॥ उर्वीःउर्व्य इति ॥ उरुशब्दात् वोतोगुणवचनादिति ङीषि जसि दीर्घाज्जसिचेतिपूर्वसवर्णदीर्घनिषेधस्य वाच्छन्दसीति विकल्पनाद्दीर्घ इति भावः । उर्वीरापो नेत्यस्य महाप इवेति भाष्ये व्याख्यानं तथा पिन्वत इत्यस्य वचनव्यत्यासेनात्रानुवृत्त्यभिप्रायेण तर्पका इति तात्पर्यार्थ उच्यते इति भावेनाह ॥ महाप इति ॥ ऋक्पूरब्धूःपथामानक्ष इत्यकाररूप-समासान्तप्रत्ययस्त्वत्र नभवति । समासान्तविधेरनित्यत्वात् ॥ कथंबहुवचनमिति ॥ विष्णोरेकत्वात्तज्जिह्वायाश्चैकत्वादिति भावः ॥ तदेवेति ॥ बहुत्वमेवेत्यर्थः ॥ बहुमुखेष्विति ॥ सहस्रशीर्षत्वादित्यर्थः ॥ ७ ॥

एवाह्यस्य ॥ विशिष्टबलवानिति ॥ विपूर्वात् रपलपव्यक्तायां वाचीत्यतोऽन्येभ्योपि दृश्यन्त इत्युणादिसूत्रेण शक्प्रत्यये उपसर्गबलादुणादिप्रत्ययान्तानां रूढत्वाद्वा रप्शशब्दो बलार्थकः तस्मान्मत्वर्थीय इनिप्रत्ययः । तदुक्तं शाब्दिकैः । उपसर्गेणधात्वर्थो बलादन्यः प्रतीयते । प्रहाराहारसंहारविहारपरिहारवदिति । अतएव विरप्शी अद्भुत इति महन्नामसु पाठ इति भावः । बलवच्छब्दादिष्ठनि विन्मतोर्लुगिति मतुपो लुकि टेरिति टिलोपे भाष्यस्थबलिष्ठशब्दनिष्पत्तिरिति ज्ञेयम् । गोमतीत्यत्र गोशब्दस्य भूवाग्वारिषु गौर्मत इति विश्वोक्तेर्वाग्वाचित्वाद्वाग्विशेषे वेदे लक्षणेत्याशयेनाह ॥ वाग्युक्ता वेदेतेति ॥ भूमनिन्दाप्रशंसास्वित्युक्तेर्मतुपः स्तुत्यर्थत्वमभिप्रेत्याह ॥ वेदैःस्तुत्येति ॥ महीति ॥ महपूजायां अस्मात्सर्वधातुभ्य इन्निततीनि प्रत्यये कृदिकारादिति ङीषिनित्वादाद्युदात्तत्वे प्राप्ते व्यत्ययेनान्तोदात्तत्वमिति भावः ॥ सूनृता साध्वीति ॥ मङ्गलरूपा सत्यभूता प्रियरूपाच । सूनृतं मङ्गले सत्ये प्रियवाचिच सूनृतमिति विश्वोक्तेरित्यर्थः । एवाहीत्यत्रैवशब्दस्य संहितायां निपातस्य चेति दीर्घो ज्ञेयः । अस्यैवशब्दस्यावृत्तिमाद्यस्यैव-मित्यर्थत्वं द्वितीयस्यावधारणार्थत्वं चाभिप्रेत्य भाष्ये एवमेवेत्युक्तम् ॥ तद्व्याचष्टे ॥ कुक्ष्यादिवदेवेति ॥ अनेन किमतिदिश्यत इत्यतो वरदात्रीति श्रुतिशेषो भाष्य उक्तः । तत्र यस्यकस्यचिच्छाखाया दृष्टान्तत्वायोगान्मुख्यत्वात्कल्पवृक्षशाखा गृह्यते तथा पक्वत्वं फलापेक्षयेत्याह ॥ पक्वफलेति ॥ अस्यां योजनायां यस्त्वमित्यध्याहाराद्योजनान्तरमाह ॥ यद्वेति ॥ अस्मिन्पक्षे विरप्शीति कस्य

विशेषणमित्यत आह ॥ सूनृताया इति ॥ वाण्या इत्यर्थः । तत्कथमित्यत उक्तं प्रत्ययान्तर्भावेनेति । सम्बन्धषष्ठ्याः सुपांसुलुगितिस्वादेशेन षष्ठ्यर्थस्यादेशभूतसुप्रत्ययेऽन्तर्भावेनेत्यर्थः । तथाच विरप्शीत्यस्य विरप्शिसम्बन्धिनीत्यर्थो ज्ञेयः । अथवा विशिष्टं रप्शं बलंयस्य सविरप्शो विष्णुः सोस्या अस्तीति विरप्शी ङीबभावश्छान्दसः । इतीनि प्रत्यये विष्णुसम्बन्धरूपार्थस्यान्तर्भावेनेत्यर्थः ॥ ८ ॥

एवाहिते ॥ श्रुतौ ते तुभ्यं दाशुषे हविरादिदात्रे इत्यर्थो भाष्येतु तात्पर्यार्थ उच्यत इत्याशयेनाह ॥ त्वांयजत इति ॥ त्वामुद्दिश्य हविरादिदात्र इत्यर्थः । भाष्येत इत्येतत्कर्मणःशेषत्वविवक्षया षष्ठीति भावेन त्वामिति व्याख्यातम् ॥ मावते ज्ञानिन इति ॥ माङ्माने इत्यतो भावक्विबन्तान्मतुप् । दातुमिति श्रुतिशेषो ज्ञेयः । त इत्यस्यावृत्तिः । प्रथमं चतुर्थ्यन्तं व्याख्यातम् । द्वितीयं षष्ठ्यन्तपदमिति भावेनाह ॥ ते तवेति ॥ त्वत्स्वामिकैश्वर्याणि भक्तेभ्यो दातुमेव सन्ति नतु स्वानुभवार्थं स्वस्य नित्यानन्दपूर्णत्वेन प्रयोजना भावात् । तथा त्वत्कर्तृकरक्षाश्च भक्तविषयास्तव सन्तीत्यर्थः । सद्यश्चिदित्यत्र सद्यश्शब्दः सद्यःपरुदित्यादिना सूत्रेण समानेऽह्नीत्यर्थे निपातितः । चिच्छब्दश्च समुच्चयार्थः । तथाच सद्यश्चिच्छब्दात्कालान्तरेपि अर्थात्सर्वदेति पर्यवस्यतीत्याशयेन भाष्ये नित्यमित्युक्तमिति भावेनाह ॥ सद्यश्चिदित्यादिना ॥ ९ ॥

एवाह्यस्य ॥ काम्यानीति ॥ कमेः ऋहलोर्ण्यदिति ण्यति सुपांसुलुगिति जसःपूर्वसवर्णदीर्घः । एवं शंस्येत्यत्रापि । तथा उक्थं स्तोम इत्यत्र जसःसु इत्यादेशो ज्ञेयः ॥ गेया इति शेष इति ॥ उक्थानामृग्रूपत्वेन शंस्येति पदान्वयसंभवेपि स्तोमानां सामत्वात्तदसंभवाद्गेया इति शेषोक्तिर्भाष्य इति भावः ॥ नत्वभिलाषेणेतीति ॥ नित्यानन्दपूर्णत्वादिति भावः ॥ १०,१६,८ ॥

## ऋक्संहिता पदपाठसहिता

**(८१)** **इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः ॥ महाँअभिष्टिरोजसा ॥ १ ॥**

**(प०)** **इन्द्र । आ । इहि । मत्सि । अन्धसः । विश्वेभिः । सोमपर्वऽभिः ॥ महान् । अभिष्टिः । ओजसा ॥ १ ॥**

**(८२)** **एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने ॥ चक्रिं विश्वानि चक्रये ॥ २ ॥**

**(प०)** **आ । ईम् । एनम् । सृजत । सुते । मन्दिम् । इन्द्राय । मन्दिने ॥ चक्रिम् । विश्वानि । चक्रये ॥ २ ॥**

(८३) मत्स्वा सुशिप्रमन्दिभिः स्तोमेभिर्विश्वचर्षणे ॥ सचैषु सवनेष्वा ॥ ३ ॥

(प०) मत्स्व । सुऽशिप्र । मन्दिऽभिः । स्तोमेभिः । विश्वऽचर्षणे ॥ सचा । एषु । सवनेषु । आ ॥ ३ ॥

(८४) असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत । अजोषा वृषभं पतिम् ।

(प) असृग्रम् । इन्द्र । ते । गिरः । प्रति । त्वाम् । उत् । अहासत ॥ अजोषाः । वृषभम् । पतिम् ॥ ४ ॥

(८५) संचोदय चित्रमर्वाग्राध इन्द्रवरेण्यम् ॥ असदित्ते विभुप्रभु ॥ ५, १७ ॥

(प०) सम् । चोदय । चित्रम् । अर्वाक् । राधः । इन्द्र । वरेण्यम् ॥ असत् । इत् । ते । विऽभु । प्रऽभु ॥ ५, १७ ॥

## ऋग्भाष्यम्

सोमपाः सोमपर्वाणः सर्वं यस्मात्तदिच्छया ।
अभिष्टिरोजसा नित्यं मदं सुखमवाप्स्यसि ॥ १ ॥
एनमासृजतेंदौ च विष्णुं तं मदकारिणम् ।
मन्दिने विष्णवे सम्यक्कर्मिणं सर्वकर्मिणे ॥ २ ॥
स्वानन्दविश्वजीवेशमत्स्वास्मद्रक्षया सह ॥ ३ ॥
त्वन्निस्सृता वेदवाचस्त्वां प्रत्येवाप्यनारतम् ।
उच्चैर्मुख्यतया सम्यग्विसृष्टाः स्वपतिं प्रति ।
अजोषाः स्तुत्यरूपेण त्वत्सेव्यास्त्वदृते क्वचित् ॥ ४ ॥
अर्वाङ्नीचान्प्रतित्वस्मान्भद्रं राधः प्रचोदय ।
अस्त्येव ते विशेषेण प्रकृष्टं शुभमच्युतम् ॥ ५, १७ ॥

## ऋग्भाष्यटीका

इन्द्रेहि । एतदपि दशर्चमैन्द्रं सूक्तम् । सोमपर्वशब्दार्थमाह ॥ सोमपा इति ॥ सोमशब्दोपपदात्पिबतेरर्वन् प्रत्यये कृते सोमपाः सोमपर्वाण इत्युच्यन्त इत्यर्थः । यद्वा सोमस्य यानि पर्वाणि अवदानानि तानि येषान्ते सोमपर्वाणः । योहि यस्याहारः स तस्य भवतीति सोमपा इत्यर्थः । अभिष्टिपदं व्याख्याति । सर्वमिति ॥ सर्वं जगद्यस्मात्तदिच्छया वर्ततेऽतोसावभिष्टिः

अभितः सर्वविषये इष्टिरिच्छा यस्येति शकंध्वादित्वाद्दीर्घाभावः । ओजसेत्यस्याभिष्टित्वोपपादकत्वं सूचयितुं स्वरूपेण ग्रहणम् । मत्सीति व्याख्याति ॥ मदमिति ॥ विकरणादिव्यत्यासेनेत्यर्थः । अवाप्स्यसीत्युक्त्या प्राप्तामनित्यत्वशङ्कां निवारयति ॥ नित्यमिति ॥ हे इन्द्र महानोजसा सामर्थ्येनाभिष्टिश्च त्वं विश्वेभिर्विश्वैः सोमपर्वभिर्देवैः सह एहि । एत्य चान्धसोऽन्धसाहविरादिनाऽस्मद्दत्तेन मत्सि मदं प्राप्स्यसि ॥ १ ॥

एमेनम् । एनम् । हे ऋत्विजः तमेनं मन्दिं मदकारिणम् । करणे इकारः । चक्रिं आदृगमेति करणे किः । आ इत्युपसर्गस्य चक्रिमित्यनेनापि सम्बन्धः । सम्यक्कर्मिणं विष्णुम् । मन्दिने मदशीलाय । विश्वानि चक्रये विश्वानि कार्याणि कृतवते सर्वकर्मिणे । इन्द्राय विष्णवे तस्य पानार्थम् । सुते इन्दौ सोमे आसृजत । सन्निहितं कुरुतैव । स्वसन्निधानपवित्रितमेव सोमं देवः पिबतीति ॥ २ ॥

मत्स्व । स्वानन्द । हे सुशिप्र स्वानन्द शोभनानन्द । विश्वाश्चर्षणयः प्रजा यस्यासौ विश्वचर्षणिः । विश्वचर्षणे विश्वजीवेश एषु त्रिषु सवनेषु सचा सह अस्मद्रक्षयेति शेषः । अस्मद्रक्षां कुर्वन् । मन्दिभिर्मदहेतुभिः स्तोमेभिरस्माभिः क्रियमाणैः स्तोमैरामत्स्व सम्यक् मदमवाप्नुहि ॥ ३ ॥

असृग्रम् । त्वन्निःसृताः । हे इन्द्र अजोषास्त्वदृतेऽन्ये न स्तुत्यरूपेण क्वचिदप्यसेव्यास्ते त्वदीयास्त्वन्निःसृता गिरो वेदवाचोऽसृग्रमनारतं वृषभं श्रेष्ठं पतिं स्वपतिं त्वां प्रत्येव उत् उच्चैः सम्यक् मुख्यतयैवेति यावत् अहासत अगमन् । ओहाङ्गतौ विसृष्टाः । त्वामेव मुख्यया वृत्या प्रतिपादयितुमस्माभिरुच्चारिता इति तात्पर्यम् ॥ ४ ॥

संचोदय । अर्वाक् । हे इन्द्र अर्वागधस्तात्स्थितानस्मान्प्रति चित्रं भद्रं वरेण्यं वरणीयं राध ऐश्वर्यं संचोदय अस्मभ्यं देहीति यावत् । दातुं च ते तव विशिष्टं भवतीति विभु प्रकृष्टं भवतीति प्रभु विशेषेण प्रकृष्टमिति यावत् । शुभमिति शेषः । विप्रसंभ्योड्वसंज्ञायाम् । असदित् । लडर्थे पञ्चमो लकारः । अस्त्येव । प्रभु प्रभूतमक्षयमिति प्रभुशब्दस्यार्थान्तरमाह ॥ अच्युतमिति ॥ ५, १७ ॥

## मन्त्रार्थमञ्जरी

अथ नवममपि दशर्चं वर्गद्वयात्मकमैन्द्रं सूक्तम् । 'इन्द्र, आ, इहि' इति विभागः, 'ओमाङोश्च' इति पररूपम्, 'इन्द्रेहि' इति संहिता । (हे) इन्द्र । ओजसा, सामर्थ्येन ।

अभिष्टिः, अभितः सर्वविषये इष्टिरिच्छा यस्यासावभिष्टिः, 'अभीष्टिः' इति वाच्ये 'शकन्ध्वादिषु पररूपं वाच्यम्' इति पररूपेण 'अभिष्टिः' इत्युक्तम्, सामर्थ्येन हेतुना सर्वं जगदिच्छाधीनं यस्य वर्तते तादृश इति फलितोऽर्थः । महान् । ओजसा अभिष्टिः (च त्वम्) विश्वेभिः विश्वैः । सोमपर्वभिः, सोमपातृभिर्देवैः सह, सोमशब्दोपपदात् 'पा पाने' इत्यतोऽर्वन्प्रत्यये (तस्य कित्त्वे ङित्त्वे वा) आतो लोपे च 'सोमपर्वन्' इति सिद्धेः । आ इहि । एत्य च– अन्धसः, अन्धसाः, हविरादिनान्नेन । मत्सि, माद्यसि, मदं सुखं प्राप्स्यसि, 'मदी हर्षे' व्यत्ययेन लुग्विकरणम् ॥१॥

'आ, ईम्, एनम्' इति विभागः । (हे ऋत्विजः) एनम् । मन्दिम्, मदकारणम्, 'मदीहर्षे' करणे इकारप्रत्ययो नुमागमश्च । चक्रिम्, 'एमेनम्' इत्यत्र श्रुताकारोपसर्गस्येहाप्यन्वयः, (आ) चक्रिम्, सम्यक्कर्मसाधनं विष्णुम्, 'आदृगमहनजनः किकिनौ लिट् च' इति कृञः करणे किप्रत्यये तस्य लिड्वद्भावे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे यणादेशेऽभ्यासस्य 'उरत्' इति 'कुहोश्चुः' इत्याभ्यामत्त्वचुत्वयोः 'चक्रिम्' इति सिद्धेः । मन्दिने मदशीलाय । विश्वानि चक्रये, विश्वानि कार्याणि कृतवते । इन्द्राय, विष्णवे, तस्य पानार्थमिति यावत् । सुते सोमे । आ सृजत ईम्, संनिहितं कुरुतैवेत्यर्थः । स्वसंनिधानपवित्रितमेव सोमं देवः पिबतीति यथा संनिधिस्तस्य भवति तथा कुरुत, भो ऋत्विजः । इति भावः । 'सृजता' इति दैर्घ्यं संहितायाम् ॥ २ ॥

(हे) सुशिप्र, शोभनानन्द । विश्वचर्षणे, विश्वाश्चर्षणयः प्रजा यस्यासौ यथा तस्य संबुद्धिः, विश्वजीवेश्वर । एषु (त्रिषु) सवनेषु । सचा, सह । (अस्मद्रक्षया) इति शेषः, अस्मद्रक्षां कुर्वन् । मन्दिभिः, प्रागुक्तरीत्या मदहेतुभिः । स्तोमेभिः, अस्माभिः क्रियमाणैः स्तोमैः । आ मत्स्व, सम्यङ्मदं सुखमवाप्नुहि ॥ ३ ॥

(हे) इन्द्र । अजोषाः, त्वदृतेऽन्येन स्तुत्यरूपेण क्वचिदप्यसेव्याः । ते, त्वदीयाः, त्वन्निःसृताः । गिरः, वेदवाचः । असृग्रम्, अनारतम् । वृषभम्, श्रेष्ठम् । पतिम्, स्वपतिम् । त्वाम् प्रति (एव) उत्, उच्चैः, सम्यङ्मुख्यतयैवेति यावत् । अहासत, अगमन्, 'ओहाङ् गतौ' लुङात्मनेपदं बहुवचनम् । त्वद्विसृष्टास्त्वामेव मुख्यया वृत्त्या प्रतिपादयितुमस्माभिरुच्चारिता इति तात्पर्यार्थः ॥ ४ ॥

(हे) इन्द्र । अर्वाक्, अधस्तात्स्थितानस्मान्प्रति चित्रम्, भद्रम् । वरेण्यम्, वरणीयम् । राधः, ऐश्वर्यम् । सम् चोदय, अस्मभ्यं देहीति यावत् । दातुं च– ते, तव । विशिष्टं भवतीति विभु, प्रकृष्टं भवतीति प्रभु, विशेषेण प्रकृष्टमिति यावत्, प्रभु प्रभूतमक्षयमिति वा, 'विप्रसंभ्योड्वसंज्ञायाम्' इति

भवतेर्डुप्रत्ययः । (शुभम्) इति शेषः । असत् इत्, अस्त्येवेत्यर्थः, 'अस भुवि' इत्यस्य लडर्थे लेट्, 'लेटोऽडाटौ' इति तिपोऽडागमः, 'इतश्च लोपः परस्मैपदेषु' इतीकारलोपः ॥ ५ ॥ इति सप्तदशो वर्गः ॥ १७ ॥

## पदार्थप्रकाशिका

इन्द्रेहिमस्त्यंधसः । अनुक्रमणिकायां इन्द्रेहीति सूक्तप्रतीकग्रहणं तत्र दशसङ्ख्या अनादेशपरिभाषया च इन्द्रमित्यनुवर्तत इत्याशयेनाह एतदपि दशर्चमैन्द्रं सूक्तमिति ॥ अर्वनुप्रत्यय इति ॥ सोमशब्दोपपदात् पा पान इत्यस्मादर्वनुप्रत्यये सवर्णदीर्घे तद्बाधेन शकंध्वादित्वात्पररूपे च सति सोमपर्वन्निति प्रातिपदिकं द्रष्टव्यम् । ननु सोमावदानवान् यजमान एव । अतः भाष्योक्तं सोमपत्वं देवानां कथं लभ्यत इत्यत आह ॥ यो हीति ॥ तथाच यजमानेन देयानामप्यवदानानां देवाहारभूतत्वात् पातृत्वं युक्तमिति भावः । ननु अभिष्टिरित्यत्र सवर्णदीर्घे अभीष्टीरिति स्यात् इत्यत आह । शकंध्वादित्वादिति । ननु पदव्याख्यानपरमिदं भाष्यम् । अतः अव्याख्यायमानस्य ओजसे इत्यस्य कथं तूष्णीं भाष्ये अनुवादः इत्यत आह ॥ ओजसेत्यस्येति ॥ अव्याख्यायमानस्य अस्य स्वरूपेण ग्रहणस्य व्यर्थत्वात् व्यर्थं सत् किञ्चित् ज्ञापयतीति न्यायादिति भावः ।

ननु मदिहर्षे अस्मात्सिपि स्यन्विकरणे शकारनकारलोपे तिपामामष्टानां दीर्घः स्यादिति दीर्घे माद्यतीति स्यात् । अतः कथं मत्सीति तत्राह ॥ विकरणादिति ॥ श्यन्विकरणस्य शुग्विकरणत्वेन व्यत्यास इत्यर्थः । शमामष्टानां इत्यनेन दीर्घाभाव आदिशब्दार्थः । तथाच मद अस्मात् मध्यमपुरुषे सिपि श्यन् विकरणे तस्य लुकि दीर्घाभावे च मद्सी इति जाते चर्त्वे मत्सीति रूपमिति द्रष्टव्यम् ॥ सामर्थ्येनेति ॥ निमित्तेनेत्यर्थः । ततश्चाभीष्टोपपादकत्वं युक्तमिति भावः । मदं प्राप्स्यसीति । मदशब्दोक्तसुखाभिव्यक्तिं प्राप्स्यसीत्यर्थः ॥ अन्धसेति ॥ भक्तं वाजं थमन्नमन्ध इत्याद्यन्ननामसु पाठादित्यर्थः ॥ १ ॥ छ ॥

एमेनंसृजतासु ते ॥ करण इति ॥ तथाच मदहर्षे अस्मात् माद्यन्त्यनेनेति इदित्वादिदितो नुम् धातोरिति नुमागमे मन्द इ मन्दीति रूपम् । करणे किरिति ॥ तथाच कृञ्करणे अस्मात् आदृगमहनजनःकिकिनौ लिट्चेति ऋकारान्तत्वात् क्रियते अनेनेति करणार्थकिप्रत्यये ककारलोपे किप्रत्ययस्य लिटि धातोः अनभ्यासस्येति विहिताभ्यासरूपलिट् कार्यकारितायाः लिट् चेति सूत्रशेषेणोक्तत्वात् अभ्यासे कृकृ इति जाते कुहोश्चुरिति ककारस्य चकारे चकृ इति जाते यणादेशे चक्री इति रूपम् । इति तात्पर्यार्थं इत्यवगन्तव्यम् । पूर्वं करणे किप्रत्ययो अभिप्रेतः । अत्र तु

कर्तरीत्याशयेन कृतवत इत्युक्तमिति ज्ञातव्यम् । कुरुतैवेत्यत्र एवेति इमित्यस्यार्थः । ननु सुतस्य सोमस्य विष्णुना पानकरणे तत्र विष्णुसंनिधानकरणं कस्मादिति आह । स्वसन्निधानेति ॥ २ ॥ छ ॥

मत्स्वासुशिप्रमन्दिभिः । शेष इति । ऋचि शेषोक्तिरित्यर्थः ॥ ३ ॥

असृग्रमिन्द्र ते गिरः । ननु वेदानां सर्वैरभ्यास्यमानत्वेन सर्वसेव्यत्वात् कथमेतदित्यत उक्तम् । स्तुत्यरूपेणैवेति । वेदैः स्तुत्यः भगवानेव नत्वन्य इत्याशयः । त्वन्निःसृता इति । हयग्रीवव्यासादिरूपेण त्वन्निःसृता इत्यर्थः । 'वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः' 'समस्तवेदान् मुखतः समुद्गिरन्' इत्यादि वचनादिति भावः ॥ अनारतमिति ॥ विरतिमन्तरेण सर्वदेत्यर्थः । अहासतेत्यस्य अगमन्निति व्याख्यानमुपपादयति । ओहाङ्गताविति । त्वन्निसृताः गिरः त्वामेवोच्चैः प्रतिपादितवत्य इत्युक्तौ स्तोतॄणां किमायातं इत्यतो विसृष्टा इति भाष्यपदमनूद्य तदर्थमाह । विसृष्टा इति । त्वामेव प्रतिपादयितुं त्वन्निसृताः वेदवाचो अस्माभिर्विसृष्टाः उच्चारिता इत्यन्वयः ॥ ४ ॥ छ ॥

सञ्चोदयचित्रमर्वाक् । अर्वागित्यदि । त्वदपेक्षया नीचानिति यावत् । भवतां राधसो दाने मम सामर्थ्यं देहीति प्रार्थना अयुक्ता इत्यत आह । दातुंचेति । विभ्वित्यस्य विशेषणेति तात्पर्यम् । प्रकृष्टिमित्यस्य प्रभ्विति तात्पर्यम् । विभुप्रभ्वित्यस्य विशेष्याप्रतीतेः भाष्ये शुभमिति ऋक्शेषः पूरित इत्याह । शुभमिति शेष इति । शेषोक्तिरित्यर्थः । ननु विप्रेत्युपसर्गपूर्वकस्य भूधातोः ऊकारान्तत्वात् विभू प्रभू इति स्यादित्यत आह । विप्रसंभ्य इति । विप्रसं इत्युपसर्गेभ्यः परस्य भूधातोः डुप्रत्ययः स्यात् यौगिकार्थविवक्षायामिति सूत्रार्थः । एवंच प्रकृते डित्वात् टीभूतस्य ऊकारस्य लोपे विभु प्रभु इति रूपं युक्तम् । नन्वसदिति असभुवीति धातोः लेटि रूपम् । अतःस्तासस्त्योर्वेति लटाव्याख्यानम् । लिङर्थे लेडिति लेटो लिङर्थत्वादित्यत आह ॥ लडर्थ इति ॥ ५ ॥ छ ॥

## पदार्थदीपिका

अर्वन्प्रत्यय इति ॥ बाहुलकादिति भावः ॥ प्रसिद्धप्रत्ययेनैवोपपत्तौ किं पूर्वप्रत्ययकल्पनयेति भावेन पक्षान्तरमाह ॥ यद्वेति ॥ नच समासान्तोदात्तापवादकबहुव्रीहिपूर्वपदप्रकृतिस्वरेण सोमशब्दस्याद्युदात्तत्वं स्यादिति वाच्यम् । परादिः छन्दसि बहुलमिति परादेशाद्युदात्तत्वोपपत्तेरिति भावः । शकंध्वादित्वादिति ॥ ननुचैवमभिशब्देकारस्वरितः स्यात् स्वरितोवानुदात्ते

पदादाविति स्वरितस्य विहितत्वात् ॥ न च स्वरितत्वस्य वैकल्पिकत्वात्तदभावपक्षे नानुपपत्तिरिति वाच्यम् ॥ विकल्पस्य व्यवस्थितत्वेन ऋग्वेदे स्वरितत्वस्यावश्यकत्वात् अत एवहि ईकारयोश्च प्रश्लेषे क्षेप्राभिनिहितेषु च । उदात्तः पूर्वरूपेषु शाकल्यस्यैवमाचरेदिति प्रातिशाख्ये उक्तम् ॥ अत्रपूर्वपदप्रकृतिस्वरेण झेरन्तोदात्तत्वेनोदात्तपूर्वपदत्वस्य सत्वात् ॥ अत एवचाभीद्धोधर्षः वीवक्षाजं तैः दिवीवचक्षुराततमित्यादौ स्वरितप्रयोग उपपद्यत इति ॥ नन्वित्स्वरापवादकमन्त्रे वृषेषु पचेत्युक्तोदात्तस्वरस्य समासान्ततयापि प्राप्तस्यबहुव्रीहिस्वरेण बाधे प्राप्तेपि परादिः छन्दसीति परान्ततया प्रतिप्रसवे सत्युत्तरपदान्तस्यैवोदाहृततयोदात्तपूर्वपदत्वाभावेन प्रातिशाख्योक्त-प्रकाशविषयत्वेन स्वरितत्वस्याप्रसरात् ॥ अत एव त्वदुदाहृतोदाहरणेष्ववनाभीष्टिपदे पदकाले पूर्वान्तोदात्तताप्रतिभास इति भावः ॥

ननु मत्सीत्यस्य मदमवाप्स्यसीति व्याख्यानं कथमित्यत आह ॥ विकरणादिव्यत्यासेनेति ॥ मत्सीति लडर्थे लोडिति लकारव्यत्यास इत्यर्थः ॥ ननुच लोट्त्वे महीहर्षम्लापनयोरित्यतो लोटि सिपि सेर्ह्यपिच्चेति सेर्ह्यादेशे दिवादिभ्यः श्यन् इति श्यनि श्यमामष्टानां दीर्घः श्यनीति उपधादीर्घतायाम् अतोहेरिति हेर्त्तिमेद्येति भवितव्यं मत्सीतितु कथमित्यत उक्तम् ॥ विकरणव्यत्ययेनेति । श्यन्विकरणस्य लुग्विकरणत्वं विकरणव्यत्यय इत्यर्थः ॥ ततश्च लोटः सिप् सर्वे विधयश्छन्दसि विकल्प्यन्त इति वचनात् सेर्हिरादेशोन भवति ॥ दिवादिभ्यः श्यन् बहुलं छन्दसीति श्यनोलुक् नलुमन्तागस्येति ॥ प्रत्यक्षेणनिषिद्धत्वात् ॥ शमामष्टानांदीर्घः श्यनीत्युपधादीर्घो नभवति स्वरिते चर्त्वं ततो मत्सीति रूपनिष्पत्तिरिति भावः ॥ १ ॥

अन्वादेशार्थं वक्तुं भाष्ये तमित्युक्तमिति भावेनाह ॥ तमेनमिति ॥ मदिं मदकारणमिति ॥ मदं कारयतीति मदकारणस्तमित्यर्थः ॥ भाष्यपदेन संवादनाय मन्दिपदं व्युत्पादयति ॥ करण इति ॥ मन्दतेर्ण्यन्तात्कर्तरि हित्वान्नुम अव इतीकारप्रत्ययः णेरनिटीति णिलोप इत्यर्थः ॥

करणे किरिति । आकारान्तेभ्यो धातुभ्यः ऋकारान्तेभ्यश्च गम् हन् जन इत्येतेभ्य छन्दसि विषये किकिनौप्रत्ययौ भवतः ॥ तच्छीलतद्धर्मतत्साधुकारिषुकर्तृषु लिड्वतौभवत इति सूत्रार्थः ॥ ततश्चानेन सूत्रेण छयः क्रियते अनेनेति करणे किं प्रत्यस्तस्य कित्वाद्गुणाभावः यणादेशः लिड्भावाद्द्विर्वचनेचीति यणादेशस्य स्थानिवद्भावात् कृशब्दो द्विरुच्यते अभ्यासस्यादरपरत्वे चुत्वहलादिशेषेषुच चक्रिशब्दनिष्पत्तिरिति भावः ॥ मन्दिने इति ॥ मन्दितेः तच्छीलार्थे औणादिक इनिरित्यर्थः ॥ मदिशब्दस्यैव इकारान्तस्य चतुर्थ्येकवचने नुमागम इत्यप्याहुः ॥

मदशीलायेति वचनं द्वितीयान्तमन्दिशब्दार्थभेदार्थं कार्याणि कृतवत इति इदं तात्पर्यकथनमिति द्रष्टव्यम् ॥ अत्र विश्वानीत्यस्य चक्रय इति कृदन्तेन योगेपि कर्तृकर्मणोः कृतीति षष्ठीन भवति कि क्तिनौलेड्वेति लिड्भावात् किक्तिनोर्निष्ठात्वात् नलोकाव्ययनिष्ठाखलर्थतृनामिति षष्ठीप्रतिषेधादिति बोध्यम् ॥ भाष्ये कर्मिण इत्यत्र व्रीह्यादित्वादिन् द्रष्टव्यः ॥ २ ॥

आमत्स्वेति । मन्दतेर्लोटि बहुलं छन्दसीति शपो लुडुदित्वेप्यानित्यागमशासनमिति कृत्वा इदितो नुम्धातोरिति नुमागमाभावश्चेत्यवधेयम् ॥ ३ ॥

अजोषा इति ॥ जुषीप्रीतिसेवनयोरित्यस्मात्कर्मणि घञ् इतिभावः ॥ असृग्रमिति ॥ सृजेः कर्मणिरक्प्रत्ययः । न्यक्वादीनां चेति कुत्वं संज्ञापूर्वकस्य विधेरनित्यत्वान्न लघूपधगुणः ततश्चासृग्रमित्यर्थः ॥ ततश्चानारतमिति व्याख्यानं नानुपपन्नमिति ज्ञेयम् ॥ ओहाङ् गताविति ॥ अस्माल्लङि भस्यादेशः कः शिजिति सिचि अडागम इति भावः ॥ ४ ॥

विभिर्भूं भवतीत्यादि व्याख्यानमुपपादयितुं सूत्रं पठति ॥ विप्रसंभ्य इति ॥ भुवः संज्ञान्तरयोरित्यर्थः ॥ भुव इत्यनुवर्तमाने विप्रसह्यमित्येतत् पूर्वाद्भवतेर्डुप्रत्ययो भवति नचेत् संज्ञा गम्यत इति सूत्रार्थः ॥ डित्वाट्टिलोप इति भावः ॥ पञ्चमोलकार इति । अस् भुवीत्यस्माल्लेट् प्रथमपुरुषैकवचने तिपि इतश्चलोप इति तदिकारलोपे लेटोडाटावित्यडागमे अदिप्रभृतिभ्यः शप इति शपूलुकि चैतद्रूपसिद्धिरिति भावः ॥ ५ ॥

## टीकाविवृतिः

इन्द्रेहि ॥ अर्वन्प्रत्यय इति ॥ उणादयो बहुलमिति बहुलग्रहणादर्वन्प्रत्ययो ज्ञेयः । संज्ञासुधातुरूपाणिप्रत्ययाश्चततःपरे । कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिष्वित्युक्तेः । अर्वन्प्रत्ययस्य कल्पनीयत्वादरुच्या पक्षान्तरमाह ॥ यद्वेति ॥ अर्तेर्वन्नित्युक्तो बहुलोक्तेःपृधातोरपि वन्नितिभावः ॥ पर्वाण्यवदानानीति ॥ चर्वाद्यवदानस्यांगुष्ठपर्वपरिमितत्वाल्लक्षणया पर्वशब्देनावदानमुच्यत इति भावः । भाष्योक्तं सोमपा इति प्रतिपदं घटयति ॥ योहियस्येति ॥ येषान्त इति बहुव्रीह्यर्थत्वेन यः सम्बन्धः स भोज्यभोक्तृत्वरूप इति भावः । यद्यपि पॄपालनपूरणयोरितिधातोःकर्तरि वन्प्रत्यये सोमं पिपुरतिमुखेपूरयन्तीति सोमपानकर्तृत्वं साक्षादेव लभ्यते तथापीदं स्फुटत्वान्नोक्तमिति ज्ञेयम् । अभिष्टिरित्यस्य तात्पर्यार्थपरं भाष्यं व्याख्याय विग्रहंदर्शयति ॥ अभित इति ॥ शकंध्वादित्वादिति ॥ शकंध्वादेराकृतिगणत्वादिति भावः । भाष्ये ओजसेति श्रौतपदस्यार्थानुक्तेरनुवादो व्यर्थ इत्यत आह ॥ ओजसेत्यस्येति ॥ विकरणादीति ॥

आदिपदाल्लकारव्यत्ययः। अत्रेन्द्रस्यागमनं प्रार्थ्यते आगमनानन्तरं चान्नभोजनेनमदप्राप्तिरिति मदस्यभविष्यत्कालिकत्वाल्लृटि मदिष्यसीति भाव्यं मदीहर्षे इत्यस्य श्यन्विकरणत्वात् श्यनि माद्यसीति भाव्यं तदुभयं व्यत्यासेनेत्यर्थः। तथाच लृङ्व्यत्ययेन लटि शब्लुकि मत्सीति रूपमिति भावः। अनित्यत्वेति। उक्त्या सुखप्राप्तेर्भविष्यत्त्वप्राप्त्या पूर्वं तदभावप्रतीतेरिति शेषः। व्यत्ययस्य नित्यत्वरूपातिशयार्थकत्वस्य विवक्षितत्वादिति भावः। अंधसेधसेति। अन्धः वाज इत्यन्ननामसुपाठाद्धविराद्यन्नवाचकादंधस् शब्दात्करणत्वरूपविशेषमविवक्षित्वा हेतुत्वमात्रविवक्षया श्रुतौ पञ्चमीति भावः। आगमनस्यान्नेन सुखप्राप्तेः सम्बन्धघटनार्थमाह। अस्मद्दत्तेनेति। भुक्तेनेति शेषः॥ १॥

एमेन सृजतेति। मध्यमपुरुषप्रयोगत्सम्बुद्ध्यन्तमध्याहरति। हे ऋत्विज इति। करणे इकार इति। मदेर्हेतुमण्ण्यन्तादच इरितीकारप्रत्ययो बाहुलकत्वात्करणे नुम्च ज्ञेयः। माद्यतेऽनेन मन्दिरित्यर्थः। आदृगमेतीति। आदृगमहनजनः किकिनौ लिट् चेति सूत्रेण आकारान्ताद-कारान्ताद्गमादेश्च किकिनौ प्रत्ययौ विधीयेते तयोर्लिड्वद्भावोऽपि। कृधातो ऋकारान्त-त्वात्किन्प्रत्यये तस्य लिड्वद्भावेन द्वित्वादौ चक्रिरिति रूपम्। कृत्यल्युटो बहुलमिति बहुलग्रहणात्करणे किर्ज्ञेयः। क्रियतेऽनेन कर्मणा जगदिति चक्रि सृष्ट्यादिकर्म। गुणवचनेभ्यो मतुपो लुग्विधानात्कर्मणोधर्मत्वेन गुणत्वाच्च चक्रिशब्दान्मतुब्लु कि चक्रिशब्दस्य कर्म्यर्थकत्वमिति भावः। चक्रिमित्यनेनापीति। अपिशब्दात्सृजतेत्यनेनेति गृह्यते। मन्दिने मदशीलायेति। मन्दतेः सुप्यजातौ णिनिस्ताच्छील्य इति णिनिश्छान्द सत्वादुपपदाभावेपि ज्ञेय इति भावः। विश्वानि कार्याणीति। सृष्ट्यादीनीत्यर्थः। सुत इति। अभिषुते खण्डित इत्यर्थः। षुञ् अभिषव इति धातोःक्तः। इन्दौ सोम इति। चन्द्राभिमन्यमानत्वात्सोमलताचन्द्रवाचकशब्दैरुच्यत इति भावः। संनिहितं कुरुतैवेति। ईमित्यस्यार्थ एवेति। अभिमन्त्रणादिनाऽनुसन्धानेन चेति शेषः। सन्निहितकरणप्रयोजनमाह। स्वेति॥ २॥

मत्स्वासुशिप्र। हे सुशिप्र॥ स्वानन्देति। सुपूर्वात् दृपहर्षमोहनयोरित्यतः स्फायितं चिवं चिशकिक्षिपिक्षु दिसृपितृपिदृपिवन्दीत्यादिना रक्प्रत्यये बाहुलके दृ इत्यस्य शि इत्यादेशो शिप्र शब्द आनन्दार्थक इति भावः। आमत्स्वेति। मदेर्लोटि बहुलं छन्दसीति शब्लुक् आगमशासनस्यानित्यत्वान्न नुम्॥ ३॥

असृग्रमिन्द्र। अजोषा इति। जुषीप्रीतिसेवनयोरित्यतः कर्मणिघञ् ततो नञ्समासे असेव्या इत्यक्षरार्थः। त्वदृत इत्यादि त्वाकाङ्क्षापूरणार्थमध्याह्रियते। त्वमेव वेदैः स्तुत्य इति बुद्ध्या

भक्तैर्वेदाः सेव्याः त्वदन्यः स्तुत्य इति बुद्ध्यातु न सेव्या इत्यर्थः । अन्ये नस्तुत्यरूपेणेति । हेतौतृतीया । अन्यस्य स्तुत्यत्वनिमित्तेन नसेव्या इत्यर्थः । असृग्रमनारतमिति । सृजेः कर्मणि रक्प्रत्यये न्यंकादित्वात्कुत्वे सृग्रस्त्यक्तो सृग्रोऽत्यक्तः कालः सदेत्यर्थः । क्रियाविशेषणं चेदमिति भावः । वृषभं श्रेष्ठमिति । वृषभः पुंगवे वृष इति विश्वोक्तेरिति भावः । ओहाङ्गताविति । लुङि झादेशे सिचि आत्मनेपदेष्वनत इति झस्यादादेश इति शेषः ॥ ४ ॥

संचोदय । अर्वाक् शब्दस्य नीचानित्यर्थघटनायाध्याहरति । स्थितानिति । चित्रं भद्रमिति । आलेख्याद्भुतयोश्चित्रमित्यमरोक्तेश्चित्रशब्दोऽद्भुतवाची यद्यपि तथापि मङ्गलस्यैवाद्भुतत्वाद्भद्र-मित्युक्तमिति ज्ञेयम् । वरेण्यमिति । वृञएण्य इत्यौणादिक एण्यप्रत्ययः कर्मणि बोध्यः । राध ऐश्वर्यमिति । रायः राध इति धननामसु पाठादिति भावः । विभुप्रभुशब्दौ व्युत्पादयितुं सूत्रं पठति विप्रसंभ्य इति । लडर्थ इति । लिङर्थे लेटित्युक्तविध्याद्यर्थस्य प्रकृतानुपयोगाद्व्यत्ययेन लडर्थे ज्ञेयः । उत्तरेदेशेलडित्यमङ्गले भाषान्तरेण प्रयोगात्तद्देशीय शाब्दिकादिभिर्लेट् प्रत्ययः पञ्चमलकारशब्देन व्यवह्रियते तद्रीत्यात्रापि व्यवहारः । लेटः पञ्चमत्वं चाकारादि क्रमाल्लट् लिडादिव्यवहारेण ज्ञेयम् । असुधातोर्लेटि तिबादेशे लेटोडाटावित्यडागमे इतश्चलोप इति तिप इकारलोपे असदिति रूपम् । इच्छब्द एवार्थः । तदेवाह । अस्त्येवेति । प्रभूतमिति । सदाऽभिवृद्धमित्यर्थः । अक्षयमिति तु तात्पर्यार्थ इति भावः ॥ ५ ॥ सप्तदशोवर्गः ॥ १७ ॥

## ऋक्संहिता पदपाठसहिता

(८६) अस्मान्त्सु तत्रं चोदयेन्द्रं राये रभंस्वतः ॥ तुविंद्युम्न यशंस्वतः ॥ ६ ॥

(प०) अस्मान् । सु । तत्रं । चोदय । इन्द्रं । राये । रभंस्वतः । तुविंऽद्युम्न । यशंस्वतः ॥ ६ ॥

(८७) संगोमंदिन्द्र वाजंवदस्मे पृथुश्रवों बृहत् ॥ विश्वायुंर्धेह्यक्षितम् ॥ ७ ॥

(प०) सम् । गोऽमंत् । इन्द्र । वाजंऽवत् । अस्मेइतिं । पृथु । श्रवंः । बृहत् ॥ विश्वऽआंयुः । धेहि । अक्षिंतम् ॥ ७ ॥

(८८) अस्मे धेहि श्रवों बृहद्द्युम्नं संहस्रसातंमम् ॥ इन्द्र ता रथिनीरिषंः ॥ ८ ॥

(प०) अस्मेइतिं । धेहि । श्रवंः । बृहत् । द्युम्नम् । सहस्रऽसातंमम् ॥ इन्द्रं । ताः । रथिनीः । इषंः ॥ ८ ॥

(८९) वसोरिन्द्रं वसुपतिं गीर्भिर्गृणन्तं ऋग्मियम् ॥ होम गन्तारमूतये ॥ ९ ॥

(प०) वसोः । इन्द्रम् । वसुऽपतिम् । गीःऽभिः । गृणन्तः । ऋग्मियम् ॥ होम । गन्तारम् । ऊतये ॥ ९ ॥

(९०) सुतेसुते न्योकसे बृहद्बृहत एदरिः ॥ इन्द्राय शूषमर्चति ॥ १०, १८, ९ ॥

(प०) सुतेऽसुते । निऽओकसे । बृहत् । बृहते । आ । इत् । अरिः ॥ इन्द्राय । शूषम् । अर्चति ॥ १०, १८, ९ ॥

## ऋग्भाष्यम्

रभस्वतः शब्दवतः स्तोतॄनस्मान्यशस्वतः ।
तत्र त्वयि महाराये महाकीर्ते सुचोदय ॥ ६ ॥
अस्मास्वति बृहज्ज्ञानं नित्य सन्धेहि चाक्षयम् ॥ ७ ॥
विद्यां कीर्तिं सदेहान्नं बहुलाभयुतं बृहत् ।
प्रार्थने पौनरुक्त्यं न चोदयेति ततः पुनः ॥ ८ ॥
वसोर्वसूनां च पतिं देवदेवेश्वरं प्रभुम् ।
ऋङ्नेयमाह्वयामोऽत्र गृणन्तोऽभीष्टसिद्धये ॥ ९ ॥
अविनाश्यरिरुद्दिष्टो बृहच्छूषं सुखं प्रति ।
सुते सुते सद्बृहाय देवाय बृहतेऽर्चति ॥ १०, १८, ९ ॥

## ऋग्भाष्यटीका

अस्मान् । रभस्वतः । हे तुविद्युम्न महाकीर्ते इन्द्र रभस्वतः शब्दवतः स्तोतॄनिति यावत् । रेभतीति तत्कर्मसु पाठात् । यशस्वतो यशास्विनोऽस्मान् राये सप्तम्येषा । महाराये महैश्वर्यरूपे तत्र त्वयि सुचोदय । त्वद्विषयबुद्ध्यादियुक्तान्कुरु ॥ ६ ॥

संगोमत् ॥ अस्मासु । हे इन्द्र विश्वं सम्पूर्णमायुर्यस्यासौ विश्वायुः नित्य (त्यः) त्वमस्मे अस्मासु गोमत् गोयुक्तं वाजवदन्नेनापि सहितं अक्षितमक्षयं पृथु बृहत् अतिबृहत् । श्रवसा श्रवणेन जायत इति श्रवो ज्ञानं सन्धेहि सम्यक् देहि ॥ ७ ॥

अस्मे । विद्याम् । हे इन्द्र अस्मे अस्मासु बृहच्छ्रवो महतीं विद्यां सहस्रसातममतिशयेन सहस्रलाभसहितं बहुलाभयुतं द्युम्नं कीर्तिं च ताः प्रसिद्धाः रथिनीरिषः रथो देहस्तद्वतीः ।

सदेहान्नमिति यावत् । अविकलेन देहेन युक्तमन्नं च धेहि । ननु संचोदय चित्रमित्यादि-नोक्तमेवोच्यत इत्यतः पुनरुक्तिदोषस्तत्राह ॥ प्रार्थन इति ॥ पौनरुक्त्यं न दोषो यत इति शेषः । ततश्चोदयेत्युक्त्वा पुनः सन्धेहीत्यादिवचनं युज्यत इति योज्यम् ॥ ८ ॥

वसोः । वसुपतिम् । वसुशब्दो देवपर्यायः जातावेकवचनं वसूनां ये वसवस्तेषां पतिं देवदेवेश्वरम् ऋग्मियं ऋङ्मेयं ऋग्भिर्ज्ञेयं इन्द्रं प्रभुं भक्तान्प्रतिगन्तारं गीर्भिर्गृणन्तः स्तुवन्तो वय मूतयेऽभीष्टसिद्धयेऽत्र होम आह्वयामः ॥ ९ ॥

सुते । अरिशब्दं व्याख्याति । अविनाशीति ॥ यद्यप्यरिशब्द ईश्वरनामसु पठितस्तथाप्यत्रानन्व-यादन्यथा व्याख्यातः । न रिष्यति न रीयते वेत्यरिः । योऽरिरविनाशी आत्मनोऽविनाशेच्छुरदुष्टो वा पुरुषः स बृहच्छूषं महासुखं प्रति तच्चोद्दिश्य सुतेसुते प्रतिसोमसवनं ओकसे गृहाय सदिति योग्यतया सम्बन्धः । सतामाश्रयाय बृहते पूर्णायेन्द्राय देवाय न्यर्चेति । द्वितीयार्थे चतुर्थी । इष्टानिष्टप्राप्तिपरिहारकामः परमेश्वरमेवार्चेदिति ॥ १०, १८, ९ ॥

## मन्त्रार्थमञ्जरी

(हे) तुविद्युम्न, महाकीर्त्ते । इन्द्र । रभस्वतः, शब्दवतः, स्तोतॄनिति यावत् । यशस्वतः, यशस्विनः । अस्मान् । राये, सप्तम्येषा, महैश्वर्यरूपे । तत्र, त्वयि । सुचोदय, सम्यक्प्रेरय, 'चुद प्रेरणे', त्वद्विषयबुद्धियुक्तान्कुर्वित्यर्थः ॥ ६ ॥

(हे) इन्द्र । विश्वं सम्पूर्णमायुर्यस्यासौ विश्वायुः, नित्यः । (त्वम्) अस्मे, अस्मासु, 'सुपां सुलुक्' इत्यादिना सुपः 'शे' इत्यादेशे शेषे लोप 'अस्मे' इति रूपम् । गोमत्, गोयुक्तम् । वाजवत्, अन्नादिसहितम् । अक्षितम्, अक्षयम् । पृथु बृहत्, अतिबृहत् । श्रवः, ज्ञानं, श्रवसा श्रवणेन जातत्वाद्धेतोः श्रवस्शब्देन ज्ञानमुच्यते । सम् धेहि, सम्यग्देहीति, वर्णव्यत्ययः ॥ ७ ॥

(हे) इन्द्र । अस्मे, अस्मासु । बृहत् श्रवः, महतीं विद्याम् । सहस्रसातमम्, अतिशयेन सहस्रलाभसहितं, बहुलाभप्रदम् । द्युम्नं, कीर्त्तिम् । (च)ताः, प्रसिद्धाः । रथिनीः, रथो देह आसामस्तीति रथिन्यस्ता रथिनीः । इषः, अन्नानि, अविकलेन देहेन युक्तमन्नम् । (च) । धेहि, देहि, वर्णव्यत्ययः । अत्र 'संचोदय चित्रम्' इत्यादिनोक्तस्य पुनः पुनः कथनेऽपि प्रार्थनारूपत्वान्न पौनरुक्त्यदोषः ॥ ८ ॥

वसोः, वसुशब्दो देववाची, जातावेकवचनम्, वसोर्वसूनां देवानाम्,ये वसवस्तेषां पतिं =वसुपतिम्, देवदेवेश्वरम् । ऋग्मियं, ऋग्भिर्ज्ञेयम् । इन्द्रम्, प्रभुम् । गन्तारं, भक्तान्प्रति

गन्तारम् । गीर्भिः । गृणन्तः, स्तुवन्तः । (वयम्) ऊतये, अभीष्टसिद्धये । होम, आह्वयामः, 'ह्वेञ् शब्दे' इति धातोश्छान्दसं रूपम् ॥ ९ ॥

(यः) अरिः, अविनाशी, नञुपपदात् 'रिष हिंसायाम्' इत्यतः 'रीङ् क्षये' इत्यतो वा कर्तरि डिप्रत्यये 'अरिः' इति सिद्धेः, आत्मनोऽविनाशेच्छुः पुरुषः । (सः) बृहत्, महत् । शूषम्, सुखं प्रति, तच्चोद्दिश्य । सुतेसुते, प्रतिसोमसवनम् । ओकसे, गृहाय । (सताम्) इति योग्यतयान्वयः, सतामाश्रयाय । बृहते, पूर्णाय । इन्द्राय इत्, परमेश्वरायैव । आ नि अर्चति, द्वितीयार्थे चतुर्थी, इष्टानिष्टप्राप्तिपरिहारकामः परमेश्वरमेवार्चयेदिति भावः ॥ १० ॥ इत्यष्टादशो वर्गः ॥ १८ ॥ नवमं सूक्तम् ॥ ९ ॥

## पदार्थप्रकाशिका

अस्मान्त्सु तत्रचोदय । रभतीति तत्कर्मसु पाठादिति । गायसि रभसि स्तोभसीति शब्दार्थकधातुपाठादित्यर्थः । राय इति चतुर्थीभ्रान्तिवारणायाह ॥ सप्तम्येति ॥ ६ ॥ छ ॥

सङ्गोमदिन्द्र वाजवत् । नित्येत्यविभक्तिको निर्देश इति भावेन नित्यस्त्वमित्युक्तम् । श्रवणवाचिनो श्रवःशब्देन तज्जन्यज्ञानमुपलक्ष्यते । तत्र जन्यजनकभाव एव शक्यसम्बन्ध इत्याशयेनाह । श्रवसेत्यादि ॥ ७ ॥

अस्मे धेहि श्रवो बृहत् । अस्मे इत्यत्रास सुपां सुलुगित्यनेन सप्तम्याः शे इत्यादेशशकारलोपः । तथाच स्मे इति युक्तमिति ज्ञेयम् । सहस्रं सनोति वनषणसम्भक्ताविति धातोः सम्भजति लभन्त इति सहस्राः इत्यकारान्तपुलिङ्गः ततः तमबित्याशयेनाह । अतिशयेनेत्यादि । अतिशयेनेति तमपोर्थः । सदेहान्नमित्यस्यापि तात्पर्यमाह अविकलेनेति । उक्तं राधःशब्दवाच्यैश्वर्यप्रार्थनरूपं प्रमेयं उच्यते सङ्गोमदित्यनेनेत्यर्थः । सश्चोदयेत्यनेन ऐश्वर्यस्य प्राक्प्रार्थितत्वात् गवादेरपि ऐश्वर्यरूपत्वात् संगोमदित्यत्र सन्धेहीति पुनस्तत्प्रार्थने पुनरुक्तिः । तथाच अस्मे पृथुश्रवो बृहत् इत्युक्तमेव अस्मेधेहि श्रवोबृहदित्युच्यत इति च पुनरुक्तिरित्यर्थः । युज्यत इति । तथाच आर्थिकशब्दपुनरुक्त्योः स्तुतित्वमेव समाधानमवधातव्यमिति भावः ॥ ८ ॥

वसोरिन्द्रं वसुपतिम् । जाताविति । सिद्धान्ते अनुगतजातेरभावात् जातिशब्दः समुदायपरः । तथाच समुदायापेक्षयैकवचनमित्यर्थो द्रष्टव्यः । वसूनां ये वसव इति देवानां ये देवाः इत्यर्थः । ऋङ्गयमिति । ऋचि एकारस्य ईकार इति भावः । इन्द्रमित्यनूद्य प्रभुमिति व्याख्यानं अत्र यज्ञस्थाने ॥ ९ ॥

सुतेसुतेन्योकसे । अत्रानन्वयादिति । प्रकृते वाक्यार्थे अन्वयायोगादित्यर्थः । नञ् उपपदात् ऋषहिंसायां रीङ्क्षये इत्यतोवा डिप्रत्यये डित्वाट्टिलोपे सति अरिरिति भवतीत्याशयेनाह नरिष्यतीत्यादिदोषयुक्तपुरुषेषु नष्टशब्दप्रयोगदर्शनादिति गीताभाष्यं हृदि निधाय विनाशीति भाष्यपदस्यार्थान्तरमाह अदुष्टोवेति । तच्चोद्दिश्येति । न केवलमनिष्टनिवृत्तिमुद्दिश्य किं नाम महासुखरूपमुद्दिश्येत्यर्थः । वीप्सार्थमाह प्रतिसोमसवनमिति । ऋकृतात्पर्यमाह । इष्टानिष्टेत्यादि । परमेश्वरमेवेत्युक्त्या द्वितीयार्थकेन इन्द्रायेति चतुर्थ्यान्तपदेन एवार्थस्य इदित्यस्य सम्बन्ध इत्युक्तं भवतीति द्रष्टव्यम् ॥ १० ॥ १८ ॥ ९ ॥

## पदार्थ चन्द्रिका

रभस्वत इति । रेभृशब्द इत्यस्मादसुन् प्रत्यये व्यत्ययेनैकारस्याकर इति भावः ॥ स्तोतृनितिभाष्योक्तं तात्पर्यमुपपादयति ॥ रेभतीति ॥ गायति रेभति, स्तोभति, इतिस्तु तिसमानार्थकार्चतिकर्मसुपाठादित्यर्थः ॥ यशस्वत इति ॥ यशोस्यास्तीति मतुप् असु मायामेधा स्रजोविनिरिति विनिना मतुपः सर्वत्र समुच्चयादिति भावः ॥ सत्पम्येषेति ॥ रैशब्दात्सप्तम्येकवचनस्य शे आदेशः ॥ भाष्येतु समासान्तोऽच्प्रत्यय इति भावः ॥ रायशब्दोकारान्तोप्यस्तीति भाव इत्यन्ये ॥ चोदयेति ॥ चुदप्रेरणे ण्यन्ताल्लोडिति भावः ॥ ६ ॥

अस्मे अस्मास्विति ॥ अस्मच्छब्दात्सप्तमीबहुवचनस्य रो आदेश इति भावः ॥ अक्षितमिति ॥ क्षि क्षय इत्यस्माद्भावेक्तः ततो नञः क्षितिशब्देन बहुव्रीहिः ॥ अत एवाजनिष्ठाया भावरूपण्यदर्थकत्वेन निष्ठायामन्यदर्थ इति दीर्घाग्रसरात् क्षियोदितार्थादिति नेर्णत्वमिति ध्येयम् ॥ श्रवणेन जायत इति ॥ एतच्च स्वशक्यसम्बन्धप्रतिपादनं कार्यकारणयोरैकशब्ददिति ध्येयम् ॥ ७ ॥

सहस्रलाभसहितमिति ॥ सहस्रोपपदाद्वनषण संभक्तावित्यस्मात् जनसनखनक्रमगमो विडिति विट्प्रत्ययः ॥ विदितोरनुनासिकः स्यादिति नकारस्याकारादेशः ततश्च सहस्रं सनतिं संभजते लभते इति ॥ लब्धत्वमेव लाभयुक्तत्वमन्तर्णीतण्यर्थो वा सनतिरिति भावः ॥ ८ ॥

ऋग्मियम् ॥ ऋग्मेय इति ॥ व्यत्ययेनैकारस्येकारः । गीर्भिर्गृणन्तहति ॥ गृशब्देन तस्माल्लटः शत्रादेशः ॥ क्र्यादिभ्यःश्ना ॥ शतुः सार्वधातुकमपिति ङित्वात् श्नाभ्यस्तयोरात इत्याकारलोप इति भावः ॥ होम आह्वयाम इति ह्वेञ्स्पर्धायां शब्देच अस्माल्लडुत्तमपुरुषबहुवचनं सकारस्य व्यत्ययेन लोपः शपो बहुलं छन्दसीति लुक् ॥ बहुलं छन्दसीति ह्वः संप्रसारणं परपूर्वत्वं गुणश्चेतेन होमेति रूपसिद्धिरितिभावः ॥ ९ ॥

अनन्वयादिति ॥ ईश्वरस्यार्चनकर्तृत्वानन्वयादित्यर्थः ॥ नन्वयमप्यर्थोऽनन्वित इत्यत आह आत्मन इति ॥ नन्वेवंसति किमपराद्धमैश्वर्यार्थिनेत्यत आह ॥ अदुष्टोवेति ॥ दुष्टनष्टशब्दयोगादिति भावः ॥ न्यर्चतीति ॥ यद्यपि निशब्द ओकस इत्यनेन समस्तः शाकल्यैः पठ्यते शक्यते च सत् ग्रहायेति भाष्यानुसारेण नियतानामोकस इति व्याख्यातुं भाष्ये शिशब्दस्यार्चतीत्यनेन सम्बन्धानुक्तेः तथापि नीत्युपसर्गस्य क्रियाकांक्षस्यार्चतीत्यनेनैवान्वययोग्यत्वाद्वैपद्येन विच्छेद एव न्याय्य इति भावेन व्यर्चयतीति योजितमिति ध्येयम् ॥ १० ॥

## टीकाविवृतिः

अस्मान्त्सुतत्र ॥ हेतुविद्युम्न महाकीर्ते इति । तुविपुवीति बहुनामसु पाठात् द्युम्नं द्योततेर्यशोवा अन्नं वेति निरुक्ताच्च नृम्णं द्युम्नमिति धननामसु पाठादत्र यशोरूपधनग्रहणाद्वेति भावः ॥ रभस्वतः शब्दवत इति । अभिरभिचेति शब्दे पठितादभेरसुनि आगमशासनस्यानित्यत्वात् रभेरशब्लिटोरिति नुमभावे मतुपि रूपमेतदिति भावः । रेभतीति । रभिसमानार्थस्य रेभतीत्यस्य गायति रेभतीति स्तोत्ररूपार्चतिकर्मसु पाठात् । अत एवरेभः जरितेति असुन्नंतस्य रेभतेः स्तोतृनामसुपाठादिति भावः । रेभृशब्द इत्यतोसुनि वर्णव्यत्ययेन एकारस्याकारे रभस्वत इति रूपमित्यप्याहुः । अस्मिन्पक्षे रभेरेव विहितस्य नुमोत्राप्राप्तेरनित्यत्वसमाधानं न मृग्यमिति ज्ञेयम् । अस्मायामेधास्रजोविनिरिति विनिनामतुप्समुच्चयान्मतुबिति भावेनाह । यशस्वतो यशस्विन इति । राये सप्तम्येषेति । रैशब्द इत्यत औणादिकेऽच्प्रत्ययेऽकारान्तोयम् । भाष्ये महाराय इत्यत्राप्ययमेव प्रत्ययः । अत एव वसुराय इत्यकारान्तो धननामसु पठित इति भावः ॥ ६ ॥

सङ्गोमत् । विश्वं सम्पूर्णमिति । विश्वं पूर्णमिहोच्यते इति वचनादिति भावः । ऋचि विश्वायु शब्द उकारान्तस्त्वमित्यस्य विशेषणं भाष्ये तु सम्बुद्ध्यन्तनित्यशब्देन तस्य तात्पर्य मुच्यते इत्याशयेनाह । विश्वायुर्नित्येति । क्वचिन्नित्य इति सविसर्गः पाठस्तस्मिन्पक्षे स्पष्ट एवान्वयस्त्वमित्यनेनेति ज्ञेयम् । वाजवदन्नेनापि सहितमिति । वाजः पाज इत्यन्ननामसु पाठादिति भावः । पृथुबृहच्छब्दयोः पौनरुक्त्यपरिहाराय भाष्योक्तं तात्पर्यार्थमनुवदति । अतिबृहदिति । श्रवसा श्रवणेनेति । श्रवणेन्द्रियेण । श्रुतिः स्त्री श्रवणं श्रव इत्यमरोक्तेरित्याशयः । गोभिः श्रीणीतमत्सरमित्यत्र कारणशब्दानां कार्ये प्रयोगादाह । इति श्रवो ज्ञानमिति । श्रवोवित्तमिति धननामसु पाठेऽपि ज्ञानस्यैव मुख्यसाधनत्वात्तद्ग्रहणमित्याशयः । सन्धेहि सम्यग्देहीति । डुदाञ्दाने इत्यतो लोटि सिपि शपःश्लौ द्वित्वादौ ध्वसोरेद्धावभ्यासलोपश्चेत्येत्वाभ्यासलोपयोः वर्णव्यत्ययेन दकारस्य धकार इत्याशयः ॥ ७ ॥

अस्मेधेहि । श्रुतौ भाष्ये च व्यवहितपदानामन्वयपूर्वकं व्याख्याति ॥ हे इन्द्रेति । विद्यां ज्ञानम् । सहस्रसातममित्यत्र सहस्रं बहु सहस्रशब्दस्य बहुनामसु पाठात् सन्यते संभज्यत इति साः । सहस्रोपपदाद्वनषणसम्भक्तावित्यतो जनसनखनक्रमगमोविडिति छान्दसत्वात्कर्मणि विट् प्रत्यये विड्वनोरनुनासिकस्यादिति नकारस्यात्वम् । ततस्तमपि अर्श आद्यजिति भावेन तात्पर्यार्थमाह । बहुलाभयुतमिति । रथोदेह इति । आत्मानं रथिनं विद्धिशरीरं रथमेतव चेति काठकश्रुतेः । अधिष्ठितो रथो दिव्यः सोध्मात्संदेहनामक इत्यैतरेय संहितोक्तेश्च । इषमूर्क् इत्यन्ननामसु पाठादाह । सदेहान्नमिति ॥ देहस्य कर्मजन्यत्वेन स्वतः सिद्धत्वात्प्रार्थनायोग इत्यत आह । अविकलेनेति । आरोग्ययुक्तेनेत्यर्थः । इत्यादिनोक्तमिति । आदिशब्दात्सङ्गोमदिति ऋक् गृह्यते । इति योज्यमिति । भाष्ये इत्युक्त्वेत्यारभ्य युज्यते इत्येतत्पर्यन्तमध्याहारेण योज्यमित्यर्थः ॥ ८ ॥

वसोरिन्द्रम् । देवभेदेन लेरश्मौ वसूरत्नेधनेवस्वित्यमरोक्तेर्वसुशब्दस्य देवविशेष धनवाचित्वेन वसोरग्न्यादेर्वसुपतिं धनस्वामिनं धनदातारमित्यर्थस्याल्पत्वेन भाष्ये देवदेवेश्वरमिति देववाचित्व-मुक्तम् । तद्घटयितुमाह । वसुशब्द इति । वसन्ति शरीरेन्द्रियादिष्विति वसव इति योगादिति भावः । जातावेकवचनमिति । जातौ समुदाये । जातिश्छन्दसि समान्येमालत्यामोघ जन्मनोरिति विश्वोक्तेरित्यर्थः । ऋग्मियं ऋङ्मेयमिति । मामान इत्यतोऽघ्न्यादयश्चेत्यौ णादिकोयक्प्रत्ययो निपातनादित्वं धातोरिति भावः । ह्वेञो लेटि शब्लुकि ह्वः सम्प्रसारणमित्यधिकारे बहुलं छन्दसीत्यनेन संप्रसारणे सर्वे विधयश्छन्दसि विकल्प्यन्त इति कितिचेति निषेधाभावेन सार्वधातुकेति गुणे छान्दसे सलोपे होमेति रूपमिति भावेनाह ॥ होम आह्वयाम इति ॥ ९ ॥

सुतेसुते । अत्राानन्वयादिति । सर्वकर्तृत्वेनार्चनकर्तृत्वेपि महासुखोद्देशेनार्चनकर्तृत्वान्वया-भावादित्यर्थः । नञ्पूर्वाद्रीङ्क्षय इत्यतः कर्तरि कर्मणि वौणादि को डिप्रत्यय इति भावेनाह । नरिष्यतीत्यादिना । अर्चकस्याविनाशित्वं बाधितमित्यतोलाक्षणिकार्थमाह । अविनाशेच्छुरिति । अत एवारुचेरर्थान्तरमाह । अदुष्टोवेति । धात्वर्थभूमिति सुखनामसु पाठादिति भावः । ओकसेगृहायेति । ओकः सद्मनिचाश्रय इत्यभिधानादिति भावः । निशब्दस्य विष्णुनियतत्वार्थ-कत्वमाश्रित्यन्योकस इत्येक पदस्य भाष्योक्तं सद्गृहायेति । व्याख्यानं योजयितुं शक्यते यद्यपि तथाप्यर्चने भक्त्याद्यतिशयद्योतनाय समासावयवस्यापि निशब्दस्यार्चतीत्यनेनान्वयस्यावश्य-कत्वादाह । सदिति योग्यतयेति । निशब्दस्य साक्षेपस्यापि छान्दसत्वादोकःशब्देन समासोबोध्यः । सुपांसुपोभवन्तीति मनसि निधायाह । द्वितीयार्थे चतुर्थीति । ऋचोभावमाह । इष्टेति । अनेनाङोप्यन्वयः सूचितः ॥ १०, १८, ९ ॥ अष्टादशोवर्गः ॥

## ऋक्संहिता पदपाठसहिता

(९१) गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ॥ ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥ १ ॥

(प०) गायन्ति । त्वा । गायत्रिणः । अर्चन्ति । अर्कम् । अर्किणः ॥ ब्रह्माणः । त्वा । शतक्रतोइति शतऽक्रतो । उत् । वंशम्ऽइव । येमिरे ॥ १ ॥

(९२) यत्सानोः सानुमारुहद्भूर्यस्पष्ट कर्त्वम् ॥ तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥ २ ॥

(प०) यत् । सानोः । सानुम् । आ । अरुहत् । भूरि । अस्पष्ट । कर्त्वम् ॥ तत् । इन्द्रः । अर्थम् । चेतति । यूथेन । वृष्णिः । एजति ॥ २ ॥

(९३) युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा ॥ अथान इन्द्रसोमपागिरामुपश्रुतिंचर ॥ ३ ॥

(प०) युक्ष्व । हि । केशिना । हरीइति । वृषणा । कक्ष्यऽप्रा ॥ अथ । नः । इन्द्र । सोमऽपाः । गिराम् । उपऽश्रुतिम् । चर ॥ ३ ॥

(९४) एहिस्तोमाँअभिस्वराभिगृणीह्यारुव ॥ ब्रह्मचनोवसोसचेन्द्रंयज्ञंचवर्धय ॥ ४ ॥

(प०) आ । इहि । स्तोमान् । अभि । स्वर । अभि । गृणीहि । आ । रुव ॥ ब्रह्म । च । नः । वसोइति । सचा । इन्द्र । यज्ञम् । च । वर्धय ॥ ४ ॥

(९५) उक्थमिन्द्रायशंस्यंवर्धनंपुरुनिःषिधे ॥ शक्रोयथासुतेषुणोरारणत्सख्येषुच ॥५॥

(प०) उक्थम् । इन्द्राय । शंस्यम् । वर्धनम् । पुरुनिःऽसिधे ॥ शक्रः । यथा । सुतेषु । नः । ररणत् । सख्येषु । च ॥ ५ ॥

(९६) तमित्सखित्वईमहेतंरायेतंसुवीर्ये ॥ सशक्रउतनःशकदिन्द्रोवसुदयमानः॥६,१९ ॥

(प०) तम् । इत् । सखिऽत्वे । ईमहे । तम् । राये । तम् । सुऽवीर्ये ॥ सः । शक्रः । उत । नः । शकत् । इन्द्रः । वसु । दयमानः ॥ ६, १९ ॥

## ऋग्भाष्यम्

गायन्ति सामगास्त्वृग्भिः शंसंत्यृग्वेदिनोऽन्तिकम् ।
विरिंचास्त्वां बहुज्ञानशक्रकेतुमिवोच्छ्रितम् ।
व्यजानन् ॥ १ ॥
उच्चतोप्युच्चं सामर्थ्यं करणे तव ।
ततोपि भूरि यत्तेन चेतत्यर्थमतो भवान् ।
मुक्तामुक्तसमूहेन शोभते गूढशक्तिमान् ।
उच्चादुच्चं विरिंचादिगतं कर्तृत्वमेव यत् ।
भूरि स्पष्टमभूत्तेन परेशस्य ततश्च सः ।
चेतत्यर्थानशेषांश्च महायूथेन चेष्टते ॥ २ ॥
कक्ष्याभिपूरकौ पुष्ट्या युंक्ष्व त्वं केशिनौ हरी ।
अथोपगम्य शृणु नो गिरः ॥ ३ ॥
अभिस्वरवस्तुतिम् ।
प्रशंसां कुरुशब्दं च पुनर्हर्षान्महत्तरम् ।
ब्रह्मयज्ञं च नोऽतस्थो बहिष्ठश्चैव वर्धय ॥ ४ ॥
नित्यवृद्धत्वतो विष्णोर्वर्धनं तु प्रकाशनम् ।
बहुशत्रून्निष्पिदसौ हरिर्दनुजघातकः ।
अस्मत्सख्याय शब्दं च चकारास्मासु संस्थितः ।
यथा सुतेषु सोमेषु करोत्यृत्विक्षु चस्थितः ॥ ५ ॥
तमेव शरणं नित्यं सखित्वाद्यर्थमीमहे ।
शक्त्यानन्दस्वरूपत्वाच्छक्रः सर्वत्र चाशकत् ।
अस्माकं च सदा वित्तं ददेव प्रवर्तते ॥ ६, १९ ॥

## ऋग्भाष्यटीका

गायन्ति । द्वादशर्चमेतदैन्द्रं सूक्तम् । हे शतक्रतो बहुज्ञान अर्क अरं कं अतिकं अतिशयेन सुखरूपं त्वां गायत्रिणः गायत्रं सामविशेषः । तद्वन्तः सामगा गायन्ति । अर्किणः अर्का ऋचस्तद्वन्तः ऋग्वेदिनस्त्वामर्चन्ति । ऋचस्तुतौ । ऋग्भिः शंसन्ति । किञ्च । ब्रह्माणो विरिञ्चा उद्वंशमिव उच्चं वंशमिव शक्रकेतुमिवोच्छ्रितमिति यावत् । त्वां येमिरे व्यजानन् । यद्यपि यमिर्न

ज्ञाने पठ्यते तथाप्युद्येमिरे उदयच्छन् उच्छ्रयन्तीति व्याख्यानस्य पूर्वोक्तन्यायेन दुष्टत्वाज्ज्ञानार्थो व्याख्यातः। यद्वा उद्येमिरे उच्छ्रितमकुर्वन् करणं तु न सम्भवतीत्युच्छ्रितं व्यजानन्निति ॥ १ ॥

यत्सानोः। उच्चतः। अस्पष्टो गूढशक्तिमांस्तत्सम्बुद्धिः हे अस्पष्ट यद्यस्मात्तव कर्त्वं कर्तृत्वं करणे सामर्थ्यम्। सानोःसानुमारुहत्। सानुशब्दो गिरिशिखरवाची। उपचारेणोच्चतोऽप्युच्चम-भवत्। भूरि ततोप्यधिकं चाभवत्। तत्तेन कारणेन वृष्णिः वर्षिता इन्द्रो भवान् अर्थं सर्वपदार्थांश्चेतति जानाति। अत एव च यूथेन मुक्तामुक्तसमूहेन एजति। एजृदीप्त्यर्थः। शोभते। न हि पूर्णशक्तित्वमन्तरेण सार्वज्ञं सर्वसेव्यत्वं च युज्यते। ऋचं प्रकारान्तरेण व्याचष्टे ॥ उच्चादिति ॥ यद्यस्मात्कारणादिन्द्रस्य परमेश्वरस्य कर्त्वं कर्तृत्वं सानोः सानुमारुहत् उच्चादुच्चं विरिञ्चादिदेवताजातं गतं प्राप्तम्। परमेश्वरोहि तेषु स्थित्वा करोति। तेनैव कारणेन। तत्कर्तृत्वं भूर्यस्पष्ट अतिशयेन स्पष्टमभूत्। स्पश अज्ञातदृशाविति वक्ष्यति। नह्यन्यान्तर्गततया विना साक्षादीश्वरगतं कर्तृत्वं मन्दैर्ज्ञायते। ततश्च सर्वकर्मकर्तृत्वादेव स इन्द्रोऽर्थमशेषार्थांश्चेतति। यूथेन स्वरूपाणां महायूथैनैजति कम्पते चेष्टते। यद्यपि कृत्यार्थे त्वविहितस्तथापि कृत्यल्युटो बहुलमिति तृजर्थे भवति। सच भावप्रधान इति कर्त्वं कर्तृत्वम्। यद्वा तृचो लोपोत्र द्रष्टव्यः। अथवा कर्तव्यमेव कर्त्वं लक्षणया कर्तृत्वमित्युक्तम् ॥ २ ॥

युक्ष्वाहि ॥ कक्ष्या। हे सोमपा इन्द्र केशिना केशिनौ प्र प्रलम्बकेशवन्तौ वृषणौ सेचकौ युवानौ कक्ष्यप्रा कक्ष्यप्रौ। कक्ष्येति यया रज्वाऽश्व उरसि बध्यते सोच्यते। प्रापूरणे पुष्ट्याकारणेन कक्ष्याभिपूरकौ। हरी अश्वौ युक्ष्व युंक्ष्व रथे योजय। अथ तदनन्तरमिहोपगम्य नो गिरामुपश्रुतिमुपश्रवणं च कुरु। स्तुतिरूपा नो गिरः शृणु ॥ ३ ॥

एहि। अभिस्वर। हे इन्द्र एहि स्तोमान् स्तुतिमभिस्वरच स्वीकारानुसारिणं स्वरं कुरु। अभिगृणीहि प्रशंसां कुरु। अस्मदीयामिति शेषः। हेस्तोतारः साधुकृतमिति। आरुव पुनर्हर्षान्महत्तरं शब्दं च कुरु। सर्वत्र वसति सर्वस्यान्तस्थो बहिष्ठश्च वर्तते इति वसुः। हेवसो नोऽस्मदीयं ब्रह्म वेदं स्तुतिं च यज्ञं च सचा सहैव सुखेनैव वा वर्धय प्रवर्तय ॥ ४ ॥

उक्थम्। नित्यवृद्धत्वतः। इन्द्राय परमेश्वराय तस्यैव वर्धनम्। उक्थं शंस्यं शंसनीयम्। अत्रोक्थस्येन्द्रवर्धनत्वं प्रतीयते तत्कीदृशमित्यत आह ॥ नित्येति ॥ ततश्च वर्धनं प्रकाशकम्। पुरुनिष्षिध इतीन्द्रविशेषणम्। तद्व्याचष्टे ॥ बह्विति ॥ निषेधतीति निष्षित्। पुरुशब्दस्य बह्विति व्याख्यानम्। शत्रूनिति तस्य विशेष्यम्। उपपदं द्वितीयान्तमिति दर्शयितुं शत्रूनित्युक्तम्। अथवा

विभक्तिव्यत्ययेन शत्रूणामित्यर्थः । तात्पर्यार्थमाह ॥ दनुजघातक इति ॥ स शक्रो यथा सोमेषु सुतेषु सत्सु रारणत् शब्दं करोति । ऋत्विक्षु स्थितः स्तुतीः प्रवर्तयति एवं नः सख्येषु अस्मत्सख्याय च रारणत् अस्मासु संस्थितः शब्दं चकार सखाहमस्मीति । रारणदिति रणतेर्यङ्लुगन्ताल्लेट् । सच लडाद्यर्थे ॥ ५ ॥

तमित् ॥ तमेव । वयं सखित्वे सखित्वार्थं तमित् तमेवेन्द्रं नित्यं शरणमीमहे । राये वित्तार्थं च तमीमहे । सुवीर्ये साधुवीर्यार्थं च तमीमहे । सर्वस्य सङ्ग्रहणोक्तिः सखित्वाद्यर्थमिति । शरणं प्राप्तश्च स यस्माच्छक्रः शक्त्यानन्दस्वरूपत्वाच्छक्रशब्दार्थः । शक्लृशक्तौ रमुक्रीडायां द्वाभ्यां डः । उत तस्माच्छकत् सर्वत्र तत्तत्प्रार्थितसम्पादनेऽशकत् शक्तो भवत्येव । किञ्च । स इन्द्रो नोऽस्मभ्यं वसु वित्तं दयमानः । दयदानगतिरक्षणेषु । ददेव सदा प्रवर्तत इति शेषः । अतश्च तमीमहे ॥ ६, १९ ॥

## मन्त्रार्थमञ्जरी

अथ 'गायन्ति त्वा' इत्येतदपि द्वादशर्चं वर्गद्वयात्मकमैन्द्रं दशमं सूक्तमनुष्टुप्छन्दस्कम् । अनुष्टुप्छन्दोभिमानिनी तु ब्रह्माणी (रोहिणी च) (हे) शतक्रतो, बहुज्ञान । अर्कम्, अर् अति, कं सुखम्, अतिशयेन सुखरूपम् । त्वा, त्वाम् । गायत्रिणः, गायत्रं सामविशेषः, तद्वन्तः सामगा इति यावत् । गायन्ति ॥ अर्किणः, अर्का ऋचः तद्वन्त ऋग्वेदिनः । (त्वा) त्वाम् । अर्चन्ति, 'ऋच स्तुतौ' ऋग्भिः शंसन्तीत्यर्थः । किं च, ब्रह्माणः, विरिञ्चाः । उत् वंशमिव, उच्चवंशमिव, शक्रकेतुमिवोच्छ्रितमिति यावत् । त्वा, त्वाम् । येमिरे, व्यजानन्, धातूनामनेकार्थत्वाद्यमिः अत्र ज्ञानार्थः, यद्वा– 'उत् येमिरे' इत्युपसर्गान्वयः, उदयच्छन्नित्यर्थः, तस्योच्छ्रितत्वेन करणं न सम्भवतीत्युच्छ्रितत्वेन व्यजानन्नित्यर्थः, 'येमिरे' इति लिडात्मनेपदं छान्दसम् ॥ १ ॥

(हे) अस्पष्ट, गूढशक्तिमन् । यत्, यस्मात् । (तव) कर्त्वम्, करणे सामर्थ्यम्, 'कृत्यार्थे तवैकेन्केन्यत्वनः' इति कृञः भावे त्वन्, लक्षणया सामर्थ्यलाभः । सानोः सानुम् आ अरुहत् । सानुपदस्य गिरिशृङ्गवाचित्वेऽप्यत्र तदयोगाल्लक्षणयोच्चादुच्चमभवदित्यर्थः । भूरि, ततोऽप्यधिकं चाभवत् । तत्, तेन कारणेन । वृष्णिः, वर्षिता, अभीष्टसेचकः । इन्द्रः (भवान्) अर्थम्, सर्वपदार्थान् । चेतति, 'चिती संज्ञाने' जानाति ॥ अत एव, यूथेन, मुक्तामुक्तसमूहेन । एजति, एजतिः अत्र दीप्त्यर्थः, नहि पूर्णशक्तितामन्तरेण सार्वज्ञं सर्वसेव्यत्वं च युज्यत इति भावः ॥ यद्वा– यत्, यस्मात्कारणात् । (इन्द्रस्य) परेशस्य । कर्त्वम्, कर्तृत्वम्, 'तृ' इत्यस्य च्छान्दसो लोपः ।

सानोः सानुम्, उच्चादुच्चम् । (ब्रह्मादिदेवताजातम्) आ अरुहत्, प्राप्तम् । परमेश्वरस्तेषु स्थित्वा करोति । (तत्) तेन कारणेन । तत् कर्तृत्वम् । भूरि अस्पष्ट, 'स्पश अज्ञातदृशौ', असंशयेन स्पष्टमभूदित्यर्थः, नह्यन्यान्तर्गततया विना साक्षादीश्वरकर्तृत्वं मन्दैर्ज्ञायते । (तत्) ततश्च सर्वकर्मकर्तृत्वादेव । इन्द्रः । अर्थम्, अशेषार्थान् । चेतति, जानाति । वृष्णिः, वर्षिता । यूथेन, स्वीयरूपाणां महासमूहेन । एजति, 'एजृ कम्पने' कम्पते चेष्टत इत्यर्थः ॥ २ ॥

(हे) सोमपाः इन्द्र । केशिना, केशिनौ, प्रलम्बकेशवन्तौ । वृषणा, वृषणौ, सेचकौ युवानौ । कक्ष्यप्रा, कक्ष्यप्रौ, 'कक्ष्या' इत्यश्वस्योरसि बध्यमानरज्जुरुच्यते, 'पॄ पालनपूरणयोः' कप्रत्ययः, पुष्टत्वहेतुना कक्ष्याभिपूरकौ । हरी, अश्वौ । युक्ष्व, युङ्क्ष्व, नलोपश्छान्दसः, अन्तर्णीतणिच्, रथे योजय । 'हि' इत्यवधारणे । अथ, तदनन्तरम् । (इहोपगम्य) नः, अस्माकम् । गिराम् स्तुतिरूपवाचाम् । उपश्रुतिम्, उपश्रवणम् । चर, कुरु, अस्मदीयस्तुतिगिरः शृण्वित्यर्थः ॥ ३ ॥

(हे) इन्द्र । आ इहि, आगच्छ ॥ स्तोमान्, स्तुतिम् । अभि स्वर, स्वीकारानुसारेण स्वरं कुरु ॥ अभि गृणीहि, हे स्तोतारः 'साधु कृतम्' इत्येवमस्मत्प्रशंसावाक्यमुच्चारय ॥ आ रुव, 'रु शब्दे' पुनर्हर्षान्महत्तरं शब्दं च कुरु । (हे) वसो, वसति सर्वत्रेति वसुः, सर्वस्य बहिरन्तर्विद्यमान, वसतेः उप्रत्ययः । नः, अस्मदीयम् । ब्रह्म च, स्तुतिं च । यज्ञम् च । सचा, सहैव, सुखेनैव वा । वर्धय, प्रवर्तय ॥ ४ ॥

पुरुनिःषिधे, शत्रूणां बहुनिषेधकाय, दनुजघातकायेति यावत्, निर्(स्) पूर्वकात्सेधतेः क्विप्, 'उपसर्गात्सुनोति' इति षत्वम् । इन्द्राय, परमेश्वराय । तस्यैववर्धनम्, वृद्धिकरम्, प्रकाशकरमिति यावत् । उक्थम्, उक्थनामकऋग्जातम् । शंस्यम्, शंसनीयम् । (सः) शक्रः यथा (सोमेषु) सुतेषु, सत्सु । (ररणत्), 'रण शब्दे' शब्दं करोति, ऋत्विक्षु स्थितः स्तुतिं प्रवर्तयति । (एवम्) नः सख्येषु, अस्मत्सख्याय । च । ररणत्, शब्दमकरोत्, अस्मासु स्थितः 'सखाहमस्मि' इति ररणदित्यर्थः, 'रणतेः यङ्लुकि लेटि तिपीकारलोपे तिपोऽडागमे 'ररणत्' इति रूपम् ॥ ५ ॥

तम्, इन्द्रम् । सखित्वे, निमित्तसप्तमी, सखित्वार्थम् । (नित्यं शरणम्) ईमहे, गताः 'ईङ् गतौ' राये, वित्तार्थम् । (च) तम् । (ईमहे) शरणं प्राप्नुमः । सुवीर्ये, साधुवीर्यार्थम् । (च) तम् । (ईमहे), शरणं प्राप्ताः । (च) सः शक्रः, शक्तिसुखरूपत्वेन शक्रशब्दवाच्यः, 'शक्लृ शक्तौ' 'रमु क्रीडायाम्' इत्याभ्यां धातुभ्यां डप्रत्यये टिलोपे 'शक्र' इति सिद्धेः । उत, तस्मात् । शकत्, अशकत्, अडभावश्छान्दसः, तत्तत्प्राप्तिसम्पादने शक्तो भवत्येव ॥ किं च, (सः) इन्द्रः । नः,

अस्मभ्यम् । वसु, वित्तम् । दयमानः इत्, 'दय दानगतिरक्षणहिंसादानेषु' ददेदेव । (सर्वदा वर्तते) इति शेषः । अतश्च तमीमहे इति भावः ॥ ६ ॥ इत्येकोनविंशो वर्गः ॥ १९ ॥

## पदार्थप्रकाशिका

गायन्तित्वा गायत्रिणः । गायन्ति द्वादशानुष्टभमित्यनुक्रमणिकायां गायन्तीति सूक्तप्रतीक-ग्रहणम् । अनादेशपरिभाषया च इन्द्रमित्याशयेनाह । द्वादशर्चमित्यादि । अरं अलम् । अन्तिकमिति तात्पर्यार्थः । ऋचस्तुताविति । तथाच अर्चतीत्यस्य स्तुवन्तीत्यर्थो द्रष्टव्यः । शक्रकेतुः इन्द्रस्य ध्वजस्तम्भः । यद्वा चतुस्तम्भं ध्वजाकारं राजद्वारे प्रतिष्ठितम् । आहुः शक्रध्वजं नाम पौरलोकसुखावहम् । इति वचनप्रसिद्धः शक्रकेतुरन्य एव द्रष्टव्यः । तथापीति । अनन्यगत्या धातूनां अनेकार्थत्वमाश्रित्य व्यजानन्निति व्याख्येयमित्याशयः । ननु कथं अनन्यगतिः । उद्येमिरे उच्छ्रूतीति व्याख्यानसम्भवादित्यत आह । उद्येमिरे इति । पूर्वोक्तन्यायेनेति । यद्यन्यापेक्षया वृद्धिरीशत्वं स्यात् कुतोस्य च नवर्धते नोकनीयानिति ह्येनं श्रुतिः जगाविति भगवतः स्तोमाद्यधीनवृध्यभावसमर्थनन्यायेन ब्रह्मकर्तृकोछ्रयस्यापि प्रमाणविरुद्धत्वेन दुष्टत्वादित्यर्थः । अत एवास्वरसादुद्येमिरे इत्यस्य पदस्य परोक्त एव मुख्योर्थः । भाष्यं तु तात्पर्यकथनमित्याशयेनाह । यद्वेति । करणंत्विति । भगवतो ब्रह्मकर्तृकोछ्रयकरणमित्यर्थः । पूर्वोक्तन्यायेन दुष्टत्वादिति भावः ॥ १ ॥

यत्सानोः सानुमारुहत् । करणें जगत् सृष्ट्यादिकरणे उपचारेणेति गिरिशिखराद्रि-रिशिखरमारुहदिति मुख्यार्थस्य बाधात् । गिरिशिखराद्रिरिशिखर मारूढवस्तु निष्ठोच्चादुच्चत्व-रूपधर्मसाम्यमाश्रित्य सानोः सानुमारुहदित्युपचारेणोच्यत इत्यर्थः । उच्चतोऽप्युच्च इति । परिपूर्णमिति यावत् । तेन कारणेनेति । पूर्णशक्तिसद्भावरूपकारणेनेत्यर्थः । अत एव पूर्णशक्तित्वादेव । एजृकम्पन इतिधातोः कम्पत इत्यर्थप्रतीतेराह । एजृर्दीप्त्यर्थ इति शोभत इति । मुक्तामुक्तसमूहेन सेव्यतया शोभत इत्यर्थः । अत एव सर्वसेव्यत्वं चेति वक्ष्यति धातूनामने-कार्थत्वादिति भावः । अर्थचेतनयूथेन योजने कर्तृत्वस्य हेतुत्वमुपपादयति । नहीति । ननु परमेश्वरकर्तृत्वं कथं विरिञ्चादिगतं जातमित्यत आह । परमेश्वरो हीति । तेनैव कारणेनेति । विरिञ्चादिदेवताजातिगतत्वेनैव कारणेनेत्यर्थः । पूर्वमस्पष्टेति सम्बुध्यन्ततया व्याख्यातमिदानीं इदं क्रियापदमित्याशयेनाह । भूर्यस्पष्टेति । स्पश इति । अज्ञातस्य दृशौ स्पशधातुरस्तीत्यर्थः । वक्ष्यतीति । द्वितीयाध्याये यतो व्रतानि पस्पश इत्यत्र स्पशाज्ञातदृशौ यस्मादिति वक्ष्यतीत्यर्थः ।

ननु पारमेश्वरकर्तव्यत्वज्ञानं कथं विरिञ्चादिदेवताजातगतत्वाधीनमित्यत आह । नहीति । तन्निष्ठैः ब्रह्मादिदेवैः ज्ञायमानत्वात् मन्दैरित्युक्तम् । परमेश्वरस्वरूपाणां मत्स्यादीनां भयादिकार्यभूतं कम्पविशेषस्य बाधादाह चेष्ट इति । ननु कर्त्वशब्दः कृत्यार्थे तवैकेन्केन्यत्वत इति सूत्रेण कृत्यार्थे विहितत्वनुप्रत्ययान्तः । कृञ्धातोः त्वनुप्रत्यये न लोपे गुणे रपरत्वे च सति कर्त्वमिति निष्पन्नत्वात् कृत्यार्थश्च कर्मा तयोरेव कृत्यर्थखलर्था इति कृत्यादीनां कर्मणि विधानात् । एवं च प्रकृते कर्तव्यमेव कर्त्वशब्दार्थ इति वक्तव्यम् । न कर्तृत्वमित्याशङ्क्य समाधत्ते यद्यपीत्यादिना । इति तृजर्थेपीति । इति सूत्रेण बहुलग्रहणेन तृजर्थे कर्तरि त्वनरूपः कृत्यप्रत्ययो भवतीत्यर्थः । तृजकाभ्यां कर्तृरीत्यत्र कर्तृत्रिजकाभ्यामिति कर्तुः त्रिजकोक्तेरिति भावः । नन्वथापि कर्तर्थे तृचो विहितत्वात् कर्तैव कर्त्वशब्दार्थः स्यात् । न कर्तृत्वरूपः तद्धर्म इत्याह । सचेति । कर्तृत्वमिति भावप्रधानो विवक्षितो यतोतः कर्त्वं कर्तृत्वमिति युक्तमित्यर्थः । यद्वा नायं कर्त्वशब्दः कृत्यार्थत्वनुप्रत्ययान्तः किं नाम कृञ्धातोः कर्तरि तृच्प्रत्यये चकारलोपे गुणे कर्त इति जाते पश्चात्तस्य भावस्त्वतलाविति भावे त्वप्रत्यये च सति कर्त्वमिति निष्पन्नत्वात् । तर्हि श्रुतौ भूर्यस्पष्टकर्तत्वमिति तत्राह तृचो लोप इति । तथाच कृञ्धातोः कर्तरि तस्य समग्रस्य लोपे पश्चात् त्वनुप्रत्यये गुणे च सति कर्त्वमिति युक्तं एवं च सति कर्तृत्वमेव तृजूलोपेन कर्त्वमुच्यत इत्याशयः । कर्तव्यमेवेति । तथाच कर्मणि विहितत्वनुप्रत्ययरूपकृत्यप्रत्ययान्त एवायमतः कर्तव्यमेव कर्त्वमित्यर्थः तर्हि कर्तव्यमेव यदिति भाषितव्यं कर्तृत्वमेव यदिति भाषणमनुपपन्नमित्यत आह । लक्षणयेति । कर्तव्यं भूर्यस्पष्टेत्य-स्यासङ्गतत्वेन तस्यार्थस्यायोगात् कर्तव्यवाचिकर्त्वशब्देन लक्षणया कर्तृत्वं ग्राह्यमित्यर्थः ॥ २ ॥

युक्ष्वाहि केशिनाहरी । भूमनिन्दाप्रशंसासु भवन्ति मतुबादयः इति वचनात् मतुबर्थस्येनेः प्रशंसार्थकत्वात् आह । प्रलम्बकेशवन्ताविति । सेचका रेतःसेचकसमर्थौ युवानाविति यावत् । विजिति । तस्य सर्वस्यापि लोपे कक्ष्यप्रेति प्रातिपदिकं क्विपं विहाय विच्करणं प्रेत्यत्रोदात्तस्वरार्थं अन्यथा अनुदात्ततापत्तेरिति ध्येयम् । तत्तात्पर्यमाह स्तुतिरूपा इति ॥ ३ ॥

एहिस्तोमा अभिस्वरा । अस्मदीयां प्रशंसामित्यर्थः । तदुभयप्रकारं दर्शयति । हे स्तोतार इति । सर्वत्रेति योग्यतया सम्बन्धः । वसतीति वसुः । तत्तात्पर्यकथनपरं भाष्यमित्याह । सर्वस्येति । सहैव ब्रह्मयज्ञं च मिलित्वैवेत्यर्थः ॥ ४ ॥

उक्थमिन्द्राय शंस्यम् । निषेधति निराकरोति । विशेषणीभूतस्य विशेष्यसापेक्षस्य बहुत्वार्थक पुर्वित्यस्य । ननु निष्षिदित्यस्य क्विबन्तत्वेन क्विपश्च कृत्वात् तद्योगे कर्तृकर्मणोः कृतीति षष्ठ्या

भाव्यं कथं शत्रूनिति द्वितीयेत्यत आह । उपपदमिति । कर्तर्यपि षष्ठ्याः विहितत्वेन पुर्वित्येतत् प्रथमान्तमिति प्रतीतिं वारयितुं किबन्तस्य निष्षिदित्यस्योपपादकभूतं पुर्वित्येतत् द्वितीयान्तमिति वस्तुस्थितिप्रदर्शनायैव शत्रूनित्युक्तम् । अन्यथा वस्तुस्थितिज्ञापनरूपप्रयोजनाभिप्राये कर्तृकर्मणोः कृतीत्येतदनुसारेण द्वितीयाविभक्तिव्यत्ययेन शत्रूणामिति कर्मणि षष्ठ्येव वक्तव्येत्यर्थः । स्तुतिर्देवताह्वानरूपम् । अस्मत्सख्यायेति । अस्मत्कर्मके स्वकर्तृकसख्याज्ञापनायेत्यर्थः । शब्दं चकारेति । पुनः पुनः भृशं वेति पूरणीयम् । कुत इत्यत आह । रारणदिति । रणशब्दे अस्माल्लेटि परस्मैपदिनि तस्य तिपि पुनःपुनरित्यर्थे भृशार्थे वा यङि सन्यङोरिति द्वित्वे यङश्चेति लोपे अभ्यासस्य दीर्घ शब्विकरणलोपे लेटोडाटाविति अडागमे इतश्च लोपः परस्मैपदेष्विति इकारलोपे सति रारणदिति लेटि रूपम् । ननु रारणदित्यस्य लेड्रूपत्वे तस्य दृष्टान्ते करोतीति लडन्तेन दार्ष्टान्तिके चकारेति लिडन्तेन च पदेन व्याख्यानमयुक्तम् । ऋत्विक्षु संस्थितो यथा स्तुतिं चकारेति दृष्टान्तदार्ष्टान्तिकयोः अर्थस्वारस्यं चेत्यत आह । सचेति । लेडित्यर्थः । लेटो लडर्थत्वात् करोतीति व्याख्यानमुपपन्नम् । आदिपदेन लिडर्थग्रहणम् । तथाच चकारेति व्याख्यानं उपपन्नमित्यर्थः । लेटः सर्वलकारार्थत्वात् दृष्टान्तदार्ष्टान्तिकयोरर्थस्वारस्याय चकारेत्येतत् करोत्विति लोडर्थतयापि व्याख्यानं कर्तव्यमित्यवधेयम् ॥ ५ ॥

तमित्सखित्व ईमहे । शक्लृइत्यत्र लकारोऽनुबन्धार्थः । द्वाभ्यां ड इति । तथाच टित्वात् टीभूतस्य म इत्यस्य लोपे शक्र् शक्रेतिरूपं धातुद्वयादुपरि प्रत्ययोपपादनं पूर्वकृतमनुसन्धेयम् । दयदानेति । दयधातोरात्मनेपदिनि शानचि शकारचकारयोः लोपे आनेमुगिति मुगागमे उक् इत्यस्य लोपे दयमानेति रूपं द्रष्टव्यम् । अतश्चेति । दयमानः प्रवर्तते यतोतश्चेत्यर्थः ॥ १९ ॥ ६ ॥

## पदार्थदीपिका

ऋचस्तुताविति ॥ अस्य तौदादिकत्वेपि छान्दसो गुणो व्यत्ययेन शप्विकरणताचेति बोध्यम् ॥ यद्यपि वेदव्याख्यानोक्तरीत्या अर्चपूजायामिति भौवादिकधात्वनुसारेण न व्यत्ययानुसरणम् ॥ तथापि शंसतीति भाष्यानुसारात् तौददिकस्य ऋचतेरेवानुसरणं कृतमिति ध्येयम् ॥ पूर्वोक्तन्याये-नेति त्वांस्तोमा अवीवृधन्नित्यत्र नवर्धते नोकनीयानिति उक्तन्यायेनेत्यर्थः ॥ ज्ञानार्थक इति ॥ उपलक्षणमेतत् ॥ उच्छब्दस्य क्रियान्वयं विहाय यथास्थितान्वयः कृत इत्यपि बोध्यम् ॥ यद्वेति ॥ पूर्वमुच्छब्दोच्छ्रितार्थकत्वेनेन्द्रविशेषणत्वं इदानीन्तूपसर्गत्वमिति भेद इति द्रष्टव्यम् ॥ १ ॥

वृष्णिरिति ॥ स्त्वदपिभ्यां किदिति वृषेर्निप्रत्ययः किच्चेति भावः ॥ कृत्यार्थ इति ॥ भावे कर्मरूपे कृत्यार्थे तवैकेन् केन्यत्वन, इति सूत्रेणेति भावः ॥ कृत्य ल्युट इति ॥ यद्यपि नायं कृत्यः तथापि बहुलग्रहणादन्योऽपि कृतः आप्तमभिधेयं व्यभिचरन्तीत्युक्तत्वात् ॥ अकृत्यार्थे तृजर्थेपि कृत्यल्युटौ बहुलमिति त्वनूप्रत्ययो भवतीत्यर्थः ॥ भावकर्मणोर्विहितानां कृत्यानां प्रकारान्तरेपि विधानेन कर्तुः कृत्यार्थत्वात् कृत्यार्थ इत्यादिना तृजर्थे त्वप्रत्ययो भवतीत्यर्थ इत्यप्याहुः ॥ तृचो लोप इति ॥ द्वितीयव्याख्याने परमेश्वरस्यैव स्वातन्त्र्येण ब्रह्मादीनां कर्तृत्वाभावज्ञापनार्थतृचो लोप इत्यर्थः । प्रत्ययलक्षणेन गुणः करः कर्तृकत्वमित्यर्थः ॥ यद्वा तृच् इत्यनेन वृच् समानार्थको विच् प्रत्ययो लक्ष्यते तस्य सर्वापहारीलोप इत्यर्थः ॥ २ ॥

केशिना केशिनाविति ॥ सुपांसुलुगित्यादिना द्विवचनस्याकारादेश इति भावः ॥ प्रलंबकेशिनाविति ॥ प्रशस्ताः केशाः अनयोः सन्तीति प्रशंसायां मत्वर्थीय इनिप्रत्यय इति अर्थः ॥ युवानाविति तयोरेव सेचनसामर्थ्यादिति भावः ॥ कक्ष्यप्रा कक्ष्यप्राविति ॥ कक्ष्यां प्रातः पूरयतः तौ कक्ष्यप्रौ कक्ष्याशब्दो छान्दसोह्रस्वः सुपांसुलुगित्यादिना द्विवचनस्याकारादेशश्चेति भावः ॥ विजिति ॥ आतोमनिन् क्वनिप्वनिपश्चेत्यत्र चकारादिति भावः ॥ युक्ष्व युंक्ष्वेति ॥ शमो लोपश्छान्दस इति भावः ॥ युनक्तेरन्तर्णीतण्यर्थाच्छप् तस्य बहुलं छन्दसीति लुगित्यर्थः इत्यप्याहुः ॥ ३ ॥

एहीति ॥ आ इहीति पदच्छेदः ॥ इण् गतौ अपित्वेन ङित्वाद्गुणाभावः ॥ आङासहगुणे एहीति रूपसिद्धिरिति भावः ॥ स्तोमानित्यस्योत्तरपदेन संहितायां नकारस्य दीर्घादटि समानपाद इति रुत्वम् आतोटिनित्यमित्याकारस्यानुनासिकः ॥ भोभगो अघो अपूर्वस्ययोशीति यत्वं तस्य लोपः शाकल्यस्येति लोपः ॥ तस्यासिद्धत्वात्स्वरसन्धिर्न भवतीति ध्येयम् ॥ अभिगृणीहीति ॥ गृशब्दे अस्माल्लोटि सेर्ह्यपिच्चेति सेर्हिः ॥ क्र्यादिभ्यः श्ना ईहल्यघोरितीत्वं घादीनां ह्रस्व इति ऋकारस्य ऋकारः ऋवर्णाच्चेति वक्तव्यमिति भावः ॥ आरुवेति ॥ रुशब्दे अस्माल्लोण्मध्य-मपुरुषैकवचनं सिप् सेर्ह्यपिच्चेति सेर्हिःशपि प्राप्ते व्यत्ययेन शः तस्य ङित्वेन गुणाभावात् उवङादेशः अतोहेरिति हेर्लुगिति भावः ॥ ४ ॥

वर्धनमिति ॥ करणाधिकरणयोश्चेति करणेल्युडिति भावः ॥ शंस्यमिति ॥ शंसु स्तुतौ ण्यन्तादस्माच्चयदिति यत् णेरनिटीति णेर्लोप इतिभावः ॥ निषेधतीति ॥ निःषिदिति षिधुगत्यामित्यस्मात् क्विप् चेति कर्तरिक्विप् ॥ धात्वादेःषःसः अत्र निरित्युपसर्गस्य

सनिशब्दसमानार्थस्य प्राक्प्रयोगः क्विपः सर्वापहारी लोपः ॥ कुगति प्रादय इति समासः ॥ तिसः सकारण इणोव्यवधानछान्दसत्वादनादृत्योपसर्गात्सुनोतीत्यादिना धातुसकारस्य षत्वमिति भावः ॥ सुषामादित्वात् षत्वमित्यप्याहुः ॥

ननु पुरुशब्दस्य बहुनामसु पठितत्वाद्बहुवाचकत्वेपि न बहुशत्रुवाचकत्वमित्यत आह ॥ पुरुशब्दस्येति ॥ ननु कर्तृकरणयोः कृतीति कृद्योगे कर्तरि कर्मणिच षष्ठीविधानात् प्रकृते च निःषिच्छब्दस्य किपि कृतुप्रत्ययान्तत्वेन तद्योगे शत्रूणामिति षष्ठ्याः प्रयोक्तव्यत्वे शत्रूनिति भाष्ये द्वितीयाप्रयोगः कथमित्यतः ऋचि पुरुशब्दस्य निःषिच्छब्देन समासस्योपपदसमासत्वात् पुरुशब्दस्योपपदत्वं च द्वितीयान्तत्वेनेति सूचयितुमेव द्वितीयान्तशब्दप्रयोगो नत्वर्थस्य तथैवसम्भवात् ॥ किं त्वर्थो विभक्तिव्यत्ययेनान्यथैव संपादनीय इत्यभिप्रेत्याह ॥ उपपदमित्यादिना इत्यर्थ इत्यन्तेन ॥ क्विप् चेतिसूत्रे सोपपदेभ्यो निरूपपदेभ्योपि क्विपो विहितत्वात् प्रकृते सोपपदात् क्विप् चेत् उपपदं द्वितीयान्तमिति प्रदर्शयितुं शत्रूनित्युक्तम् ॥ अन्यथा निरुपपदादित्यत्र क्विप् चेत् द्वितीयान्तस्य षष्ठ्यन्ततयार्थ इत्यप्याहुः ॥ यङ्लुङन्ताल्लेडिति रसतेः शब्दार्थाद्धातोरेकाच इति यङ् यङोचिचेति तस्य लुक् प्रत्ययलक्षणेन द्विर्भावः ॥ हलादिः शेषः दीर्घोकितरिति दीर्घः ॥ प्रत्ययलक्षणेन सनाद्यन्ताधातव इति धातुसंज्ञायां लट् लिट् स्तियइतश्चलोपः परस्मैपदेष्वितीकारलोपः लेटोडाटावित्यडागमः । कर्तरिशप् तस्य चकारेति परस्मैपदं अदादिवच्च द्रष्टव्यमित्यदादिवद्भावाददिप्रभृतिभ्यः शपइति प्राप्ते लुक् बहुलंछन्दसीति निषिध्यत इति भावः ॥ लडाद्यर्थ इति ॥ आदिपदेन लिटः परिग्रहः ॥ लिङर्थे डिति लिङर्थे विहितस्यापिलेटः बहुलग्रहणाल्लडाद्यर्थत्वमिति ज्ञेयम् ॥ ५ ॥

## टीकाविवृतिः

गायन्तित्वा । द्वादशर्चमिति । गायन्ति द्वादशानुष्टुभं त्वित्यनुक्रमणिकायां गायन्तीतिं द्वादशर्चसूक्तं द्वात्रिंशदक्षरात्मकत्वादनुष्टुप् छन्दस्कमित्युक्त्वा तुशब्देन विशेषणादुत्तरसूक्तं चानुष्टुप्छन्दस्कं ज्ञेयम् । तु हि हवैतच्छब्दविशिष्टान्यृषिदैवतछन्दांसि द्वित्रिचतुष्पंच षट् सूक्तभाजियथासंख्यमिति परिभाषोक्तेः । ऋषिर्दैवतं छन्दश्च यदि तुशब्दयुक्तमुच्यते तदा सूक्त द्वये तदेव ऋष्यादिज्ञेयम् । हिशब्दयुक्तं चेत् सूक्तत्रये । हशब्दयुतं चेत्सूक्तचतुष्टये । एवं वैतच्छब्दयोगे क्रमात्सूक्तपञ्चके सूक्तषट्के तदेव ऋष्यादि ज्ञेयमिति परिभाषार्थः । अर्कमिति श्रौतपदस्यातिकमिति भाष्योक्तार्थं घटयति ॥ अरं कमिति । अरंरलयोरभेदविवक्षयाऽलमित्यर्थः ।

अस्यार्थोऽतिशयेनेत्याशयः । ऋचस्तुताविति । अर्चपूजायामिति भौवादिकस्य ग्रहणे शंसंतीति भाष्योक्तार्थासम्भवात्तौदादिकोयं गृहीतः । अत्र व्यत्ययेन शपि गुणेर्र्चन्तीति रूपमिति भावः । शक्रकेतुमिवेति राजाद्यागमनकाले ऊर्ध्ववंशं सवस्त्रं प्रासादादूर्ध्वदेशे स्थापयन्ति सवंशः शक्रकेतुरित्युच्यते । केन धर्मेण साम्यमित्यतो भाष्योक्तं तात्पर्यमित्याह । उच्छ्रितमिति यावदिति । पूर्वोक्तन्यायेन दुष्टत्वादिति । सुतेसुतत्यस्यामृच्यरिशब्दस्येश्वरार्थत्वमनन्वयाद्यथा बाधितं तथानित्योच्छ्रितस्येश्वरस्योच्छ्रयकरणस्य बाधितत्वादित्यर्थः । नवर्धते नोकनीयानिति ह्येनं श्रुतिर्जगावित्यत्रानन्यसाध्योक्तर्षप्रतिपादनात्तन्यायेनेत्यर्थ इत्यप्याहुः । पूर्वमुपमानेन लब्धोऽर्थ छच्छ्रितमित्युक्तः । इदानीमुद्येमिर इत्येतस्योच्छ्रितं व्यजानन्निति लाक्षणिकोर्थ इत्याह ।। यद्वेति ।। १ ।।

यत्सानोः । हे अस्पष्टेति । अत्राष्टमिक आमन्त्रितस्येति निघातो न । छान्दसत्वादिति भावः ।। सानुशब्द इति । सानुः शृंगे बुधे मार्ग इति विश्वोक्तेरिति भावः । उपचारेणेति । सानोरुच्चत्वेन तत्सदृशोच्चत्वगुणयोगाद्ब्रह्मादिकर्तृत्वे सानुशब्दप्रवृत्तिः । तदुच्चे विष्णुकर्तृत्वेऽप्येवं सानुसानुशब्द प्रवृत्तिरिति भावः । आरुहदित्यस्याभवदित्यर्थस्त्वस्तिभवतिकरोतीनां सर्वक्रियान्तर्भावेन लक्षणया बोध्यः । तत्तेनेति ।। अत्युच्चकर्तृत्वेनेत्यर्थः ।। वृष्णिरिति ।। सृवृषिभ्याङ्किदिति निप्रत्ययः कर्तरि सच किच्चेति भावः ।। अर्थं सर्वपदार्थानिति ।। जात्येकवचनाभिप्रायेण भाष्ये अर्थानशेषानिति व्याख्यास्यत इति भावः ।। दीप्त्यर्थ इति ।। एजृभ्रेजृभ्राजृदीप्ताविति दण्डकपाठात् । परस्मैपदं तु व्यत्ययेनेति भावः । पूर्वोत्तरार्धार्थयोः कार्यकारणभावं व्युत्पादयति । नहीति ।। कर्तृत्वं शक्तिविशेषः । अतोत्युच्चकर्तृत्वं निरवधिकपूर्णशक्तिरेवेति तद्युक्तस्यैव सार्वज्ञादि युज्यते । अल्पकर्तुस्तदुपयुक्तकारणादिज्ञानमात्रं कतिपयसेव्यत्वं चेति भावः । अस्पष्टेत्यस्य सम्बुद्ध्यंतत्वे आमन्त्रितनिघाताभावस्य व्यत्ययाश्रयणास्वारस्यं मनसि निधायाह ।। ऋचं प्रकारान्तरेणेति । पूर्वं सानोः सानुमित्येतल्लिङ्गव्यत्ययेन प्रथमान्तकर्तृत्वविशेषणत्वेनोक्तम् इदानीं द्वितीयांतं ब्रह्मादीति विशेष्याध्याहारेण योज्यत इति भावेनाह ।। उच्चादुच्चं विरिंचादीति ।। विष्णुकर्तृत्वं विरिंचादिकं प्राप्तमित्यस्य तात्पर्यमाह ।। परमेश्वर इति ।। स्पशेर्लिङि सिचि आगमशासनस्यानित्यत्वादिडभावे झलोझलीति सिचोलोपे व्रश्चादिना षत्वे अडागमे चास्पृष्टेति रूपमिति भावेनाह ।। स्पष्टमभूदिति ।। पूर्वमज्ञातमिदानीं ज्ञातमभूदित्यर्थः । अस्पष्टेत्यत्र तिङ्ङतिङ इति निघातोन । यद्वृत्तान्नित्यमिति निषेधात् । निघातोनामसर्वानुदात्तता । ईशकर्तृत्वं ब्रह्माद्यंतर्गतत्वेनैव ज्ञायत इत्येतत्कुतः साक्षादेव ज्ञानं किं नस्यादित्यत आह ।। नह्यन्येति ।। देवादिव्यावृत्त्यर्थं मदैरित्युक्तम् । स्वरूपाणां मत्स्यादिस्वकीयरूपाणाम् । कृत्यार्थ इति ।। कृत्यार्थे तवैकेन्केन्यत्वन इत्यनेनेति शेषः । कृत्यार्थो

भावः कर्मवेत्यर्थः ॥ कृत्यल्युट इति ॥ त्वनः कृत्यार्थे विधानात्कृत्यग्रहणेन ग्रहणाद्बहुलग्रहणसामर्थ्याद्वा प्रत्ययांतरस्यापि स्वार्थव्यभिचारात्त्वन्नपि कर्तरीति भावः । बाहुलकत्वभावप्रधानत्वाश्रयणास्वारस्यादाह । यद्वेति ॥ पृषोदरादित्वादिति शेषः । प्रत्ययलक्षणेन गुणः ततो भावार्थे त्वप्रत्यय इति भावः । उपलक्षणं चैतत् । कृधातोः कर्तरि अन्येभ्योपि दृश्यंत इति विन्नि गुणे रेफान्तकर्शब्दाद्भावेत्वप्रत्यये छान्दसमाद्युदात्तत्वमित्यपि ज्ञेयम् । लोप कल्पनास्वरसादाह ॥ अथवेति ॥ २ ॥

युक्ष्वाहि । प्रलंबकेशवन्ताविति ॥ अतिशयार्थे मत्त्वर्थप्रत्ययविधानादिनिः प्रलम्बार्थ इति भावः ॥ वृषणा सेचकाविति ॥ रेत इति शेषः । रंजेः क्युन्नित्युक्तः क्युन् बाहुलकत्वाद्वृषेरपि युवोरनाकावित्यनादेशे तस्य सुपां सुलुगित्याकार इति भावः । तात्पर्यार्थस्तु युवानाविति ॥ ययारज्ज्वेति ॥ कक्षयोर्भवा कक्ष्या । अपभ्रष्टभाषया तंगु इत्युच्यते । तरुणत्वेन मांसलदेहावित्यर्थः । हरी अश्वाविति ॥ तुरंगस्तुरगोहरिरिति मदनविनोदोक्तेरिति भावः ॥ युक्ष्वयुंक्ष्वेति ॥ युजेरंतर्णीतण्यर्थाल्लोटि थासि रुधादित्वेपि श्नम् व्यत्ययेन शपि तस्य लुगिति भावः । युंक्ष्वेत्यत्र तु श्नमः श्नसोरल्लोप इत्यकारलोपो विशेषः ॥ ३ ॥

एहिस्तोमान् । जात्याख्यायामिति बहुवचनमिति भावेनाह ॥ स्तोमान्स्तुतिर्मिति ॥ स्वीकारेति ॥ स्तोमस्येति शेषः ॥ स्वरं ध्वनिम् ॥ अभिगृणीहीति ॥ गृशब्द इत्यतो लोटि त्रयादित्वाच्छ्नाप्रत्यये सेर्हित्वे ईहल्यघोरितीत्वे प्वादीनां ह्रस्व इति ह्रस्वः । आरुवेति ॥ रुशब्द इत्यतो लुग्विकरणाद्व्यत्ययेन तुदादिभ्यः श इति शे तस्य ङित्वाद्गुणाभावे उवङादेशे अतोहेरिति हेर्लुगिति भावः । अन्तस्थो बहिष्ठश्चेति भाष्योक्तं वसुशब्दव्याख्यानं घटयति ॥ सर्वत्रेति ॥ वसतीति वसुः । योग्यतया सर्वत्रेति सम्बध्यते । तद्विवरणं बहिरन्तःशब्देन क्रियत इति भावः ॥ ब्रह्म वेदमिति ॥ वेदस्तत्वं तपो ब्रह्मेत्यमरोक्तेरिति भावः । षच सम्बन्ध इत्यत उणादयोबहुलमिति वचनादाकारप्रत्यये अव्ययमेतदिति भावेनाह ॥ सचा सहैवेति ॥ यद्वा । षचसेचने सेवने चेत्यतः कर्मणि औणादिके क्विपि चकारान्तात्तृतीयेति भावेनाह ॥ सुखेनैव वेति ॥ सुखस्यैव मुख्यसेव्यत्वादिति भावः ॥ ४ ॥

उक्थमिन्द्राय ॥ वृधेर्णिजंतस्य सकर्मकत्वात्कर्मापेक्षायां वर्धनपदेनाप्यन्वयार्थमिन्द्रायेति पदं विभक्तिव्यत्ययेन षष्ठ्यंतं व्याख्येयमिति भावेनाह ॥ तस्यैवेति ॥ वर्धनं वृद्धिसाधकम् । वृधेर्नं द्यादित्वात्कर्तरि ल्युरिति भावः ॥ निष्षिदिति ॥ निशब्दसमानार्थान्निसुशब्दात्षिधु गत्यामित्यतः

क्विपि धात्वादेः षः स इति सत्वे सुषामादिषु चेति षत्वे उपसर्गात्सुनोतीति वा षत्वे उपसर्गे विसर्गे वाशरीत्यस्य वैकल्पिकत्वेन सत्वे ष्टुत्वे चैतद्रूपमिति भावः । बह्वितीति ॥ बहुनामसु पाठादिति भावः ॥ विशेष्यमिति ॥ योग्यत्वेनाध्याह्रियमाणमित्यर्थः ॥ शत्रूनित्युक्तमिति ॥ प्रदर्शनाभावे कृदन्तनिष्षिच्छब्दयोगात्कर्तृकर्मणोः कृतीति षष्ठी स्यादिति भावः । उपपदसमासस्य नित्यसमासत्वेपि कृदुत्पत्तिसमये कृद्योगाभावेन षष्ठ्यभावाच्छत्रूणां निषेधनं प्रति कर्मत्वाद्वि-तीयायां जातायां पश्चात्सिधेः द्वितीयांतपुरुशब्दोपपदात्क्विपि तदनन्तरं समासे उपपदे षष्ठीविभक्तेः पुनः प्रसक्तिर्नास्तीति भावेनैतदुक्तम् । बहुशत्रूनित्यस्य सूचकत्वाभावेऽर्थमाह ॥ अथवेति ॥ सिधेर्वधरूपार्थकत्वात्सेधतेर्गताविति न षत्वप्रतिषेध इति भावेनोक्तं भाष्येदनुजघातक इतीति ज्ञेयम् ॥ शब्दं करोतीति ॥ पुनः पुनरिति वा भृशमिति वा शेषः । सख्येष्विति निमित्तसप्तमीति भावेन तात्पर्यमाह ॥ सख्यायेति ॥ यङ्लुगन्तादिति ॥ यङोचिचेति बहुलग्रहणाल्लुकि सन्यङोरिति द्वित्वे अभ्यासस्य पदकाले तु छान्दसत्वादभ्यासस्य दीर्घाभावः । दीर्घोकित इति दीर्घे लेटितिप इतश्चलोप इतीकारलोपे लेटोडाटावित्यडागमे चादादित्वाच्छब्लुकि रूपमिति भावः । तर्हि भाष्ये रारणदित्यस्य शब्दं करोति चकारेति च प्रतिपदं कथमित्यत आह ॥ स चेति ॥ लेटोलिङर्थेविधानात्तत्र च काल विशेषानुक्तेरिति भावः ॥ ५ ॥

तमित्सखित्वे ॥ सखित्व इत्यादौ निमित्तात्कर्मयोगेपीति वार्तिकात्सप्तमी । निमित्तमुद्देश्यं तस्य कर्मसम्बन्धे सप्तमीति वार्तिकार्थ इति भावेनाह ॥ सखित्वार्थमित्यादि ॥ अत्र सखित्वादेरुद्देश्यत्वात्कर्मणो विष्णोस्तेन दातृदेयभावादिरूपसम्बन्धादिति भावः । ईमहे प्राप्नुम इत्यर्थः । ईङ् गत्यामित्यतो दैवादिकाच्छ्यन्व्यत्ययेन शब्लुगिति भावः । व्यत्ययार्थो नित्यमिति । शरणमिति शेषोक्तिः । शक्त्यानन्देति ॥ शक्तिश्चानन्दश्च तयोः स्वरूपत्वाच्छक्रशब्दवाच्य इत्यर्थः द्वाभ्यां ड इति । अमन्ताड्ड इत्यनेनेत्याशयः । उत तस्मादिति । सुखरूपत्वेन स्वप्रयो-जनाभावाच्छक्तिरूपत्वाच्चेत्यर्थः ॥ शकदित्यत्र शकः छन्दसि लुङ्लङ् लिट इति सार्वकालिके लुङि लृदित्वादङि बहुलं छन्दसीत्यड भाव इति भावेनाह ॥ अशकत् शक्तो भवत्येवेति ॥ दयदानेति ॥ अनुदात्तेत्वाल्लटः शानजादेशः ॥ ददद्वेति ॥ दाञो ञित्वात्क्रियाफलस्य कर्तृगामित्वाभावात्परस्मैपदाल्लटः शतरि शपः श्लौ द्वित्वे नाभ्यस्ताच्छतुरिति न नुमिति भावः ॥ ६ ॥ एकोनविंशति वर्गः ॥ १९ ॥

## ऋक्संहिता पदपाठसहिता

(९७) सुविवृतंसुनिरजमिन्द्रत्वादातमिद्यशः ॥ गवामपव्रजंवृधिकृणुष्वराधोअद्रिवः ॥ ७ ॥

(प०) सुऽविवृतम् । सुनिःऽअजम् । इन्द्र । त्वाऽदातम् । इत् । यशः ॥ गवाम् । अप । व्रजम् । वृधि । कृणुष्व । राधः । अद्रिऽवः ॥ ७ ॥

(९८) नहित्वारोदसीउभेऋघायमाणमिन्वतः ॥ जेषःस्वर्वतीरपःसंगाअस्मभ्यंधूनुहि ॥ ८ ॥

(प०) नहि । त्वा । रोदसीइति । उभेइति । ऋघायमाणम् । इन्वतः ॥ जेषः । स्वःऽवतीः । अपः । सम् । गाः । अस्मभ्यम् । धूनुहि ॥ ८ ॥

(९९) आश्रुत्कर्णश्रुधीहवंनूचिद्दधिष्वमेगिरः । इन्द्रस्तोममिमंममकृष्वायुजश्चिदन्तरम् ॥ ९ ॥

(प०) आश्रुत्ऽकर्ण । श्रुधि । हवम् । नु । चित् । दधिष्व । मे । गिरः ॥ इन्द्र । स्तोमम् । इमम् । मम । कृष्व । युजः । चित् । अन्तरम् ॥ ९ ॥

(१००) विद्माहित्वावृषन्तमंवाजेषुहवनश्रुतम् ॥ वृषन्तमस्यहूमहऊतिंसहस्रसातमाम् ॥ १० ॥

(प०) विद्म । हि । त्वा । वृषन्ऽतमम् । वाजेषु । हवनऽश्रुतम् ॥ वृषन्ऽतमस्य । हूमहे । ऊतिम् । सहस्रसातमाम् ॥ १० ॥

(१०१) आतूनइन्द्रकौशिकमन्दसानः सुतंपिब ॥ नव्यमायुः प्रसूतिरकृधीसहस्रसामृषिम् ॥ ११ ॥

(प०) आ । तु । नः । इन्द्र । कौशिक । मन्दसानः । सुतम् । पिब ॥ नव्यम् । आयुः । प्र । सु । तिर । कृधि । सहस्रऽसाम् । ऋषिम् ॥ ११ ॥

(१०२) परित्वागिर्वणोगिरइमाभवन्तुविश्वतः ॥ वृद्धायुमनुवृद्धयोजुष्टाभवन्तुजुष्टयः ॥ १२, २०, १० ॥

(प०) परि । त्वा । गिर्वणः । गिरः । इमाः । भवन्तु । विश्वतः ॥ वृद्धऽआयुम् । अनु । वृद्धयः । जुष्टाः । भवन्तु । जुष्टयः ॥ १२, २०, १० ॥

## ऋग्भाष्यम्

विस्पष्टं सुष्ठ्वकाल्यं च यशस्त्वद्दत्तमेवहि ।
गूढं ज्ञानसमूहं त्वं विवृण्वृद्धिं च नः कुरु ।
अद्रिरादरणीयत्वात् प्राणस्तद्धर्तकोद्रिवाः ।
हरिः शक्रस्तथाद्रीणां छेदनाद्धारणादपि ॥ ७ ॥
नत्वामृघायमाणं हि वर्धमानं तु रोदसी ।
सम्प्राप्नुतः श्रीभूमी च सहिते वाऽप्रसादतः ।
अपः प्रजाः सुखवतीरजयस्त्वद्वशत्वतः ।
ज्ञानानि सन्धूनुहि च प्रापचोच्चा अपि स्वयम् ॥ ८ ॥
बहुश्रवणकर्णास्मदाह्वानं शृणु चादरात् ।
अद्यैव च गिरोधेहि मयिस्तोमं च मत्कृतम् ।
प्रियं योगादपि कुरु ॥ ९ ॥
विद्म त्वां शक्तिमत्तमम् ।
श्रोतारं युत्सु चाह्वानमाह्वयामस्तवावनम् ।
बहुलाभोत्तममिति ॥ १० ॥
स्थानांतरगते ऋचौ ।
दृष्ट्वेन्द्रं यज्ञगं याभ्यां मधुच्छन्दाः समस्तुवत् ।
आतून इति तेनैव न विरुद्धा शतर्चिता ॥
मात्रा कुशैर्गृहीतत्वाज्जन्मन्यासीत्सकौशिकः ।
गाधित्वाद्वाहिरण्याण्डकोशस्थत्वाद्धरिस्तथा ।
मन्दसानो नित्यसुखी स्तुत्यमायुश्च नस्तिर ।
ऋषिं सहस्रलाभं मां कुरुच ॥ ११ ॥
त्वा इमागिरः ।
सर्वदा परितः सन्तुमदीयाः सर्वलाभिनम् ।
वृद्धिरूपा गिरोजुष्टाः सेवारूपाश्च सन्तु नः ॥ १२, २०, १० ॥

## ऋग्भाष्यटीका

सुविवृतम् । विस्पष्टम् । हे इन्द्र त्वादातमित् त्वद्दत्तमेव । सर्वे विधयश्छन्दसि विकल्प्यन्त इति दोदद्घोरित्येष विधिर्न भवति । यद्वा दापोदैपोर्वैतद्रूपम् । अनेकार्थत्वाद्धातूनां दत्तमित्युक्तम् । यशः

सुविवृतं विस्पष्टं सु सुष्ठु निरजं अजगतिक्षेपणयोः अकाल्यं अक्षेप्यं निरो निषेधार्थत्वात् अनपहार्यं च हि यस्मादेवं शुभं त्वदीयं दानं तस्मात्त्वं गवां व्रजं ज्ञानसमूहं स्वरूपभूतमपवृधि विवृणु । विवरणप्रार्थनं चावृतस्यैव सम्भुवतीति गूढमित्युक्तम् । नोऽस्माकं राधः ऋद्धिं च कृणुष्व कुरु । अद्रिव इति सम्बद्धचन्तं भगवति व्याख्याति ॥ अद्रिरिति ॥ आङ्पूर्वाद्दरतेः कर्मणि किः । आङश्च ह्रस्वत्वम् । अद्रिशब्दे कर्मण्युपपदेऽन्तर्णीतण्यर्थाद्भृतेरसुन् डिच्च । भाष्ये तु क्वचिदद्रिवेति पाठः । तत्र छान्दसस्सकारलोपः । इन्द्रे व्याख्याति ॥ शक्र इति ॥ छेदनाद्धारणादपीत्यर्थद्वयम् । अद्रिशब्दोपपदाद्भृश्चतेरन्तर्णीतण्यर्थाद्भृञो वाऽसुन् डिच्चेति ॥ ७ ॥

नहित्वा ॥ नत्वाम् । हे इन्द्र ऋघायमाणं कंड्वादिः वर्धमानं सर्वगतं त्वा त्वां रोदसी द्यावापृथिव्यौ तदभिमानिन्यौ श्रीभूमी अपि उभे सहिते वा नहीन्वतो नैव सम्प्राप्नुतो हि । व्याप्तिकर्मसु पाठात् । तयोरपि सर्वगतत्वात्कथमेतदित्यत आह ॥ अप्रसादत इति ॥ त्वत्प्रसादेन विना । किञ्च । त्वं स्वर्वतीः सुखवतीः अपः प्रजाः स्वर्गिणो मुक्ताश्च जेषः अजयः । लङर्थे लेट् । कथं त्वद्वशत्वतस्तासाम् । एवंविधश्च त्वं स्वयमस्मभ्यं गाः ज्ञानानि सन्धूनुहि कम्पय । गमय । अस्मान्प्रति प्रापय । चशब्दात्प्रसिद्धा गाश्च । समित्येतद्गवां विशेषणतया च व्याख्याति ॥ उच्चा अपीति । गा इत्येतदपेक्षया स्त्रीलिङ्गत्वम् । यथायोगं भगवतीन्द्रेच व्याख्यानम् ॥ ८ ॥

आश्रुत् ॥ बहु ॥ हे आश्रुत्कर्ण आसमन्ताच्छृणुत इत्याश्रुतौ कर्णौ यस्य बहुश्रवणकर्णेति यावत् । हवमस्मदाह्वानम् । श्रुधि शृणु । आश्रुत्कर्णश्चेत्स्वयमेव श्रोष्यति किं प्रार्थनेनेत्यत उक्तमादरादिति ॥ नुचित् अद्यैव मे मयि गिरो वेदरूपाः दधिष्व धेहि वेदविदं मां कुरु । हे इन्द्र इमं मम स्तोमं मत्कृतं स्तुतिविशेषं युजश्चिद्योगादपि समाधिलक्षणादन्तरं सन्निकृष्टं प्रियमिति यावत् । कृष्व कुरु चशब्दा मिथःसमुच्चयार्थाः ॥ ९ ॥

विद्माहि ॥ विद्म त्वाम् । हि यस्मात् वृषन्तमं वृषः शक्तिमान् अतिशयेन वृषो वृषन्तमः । छान्दसो नकारागमः । नकारान्ताद्वा तमप् । तत्र नलोपाभावश्छान्दसः । तं वृषन्तमं शक्तिमत्तमम् । वाजेषु युद्धेषु हवनश्रुतं भक्ताह्वानस्य श्रोतारं च त्वा त्वां विद्म विद्मः । तस्माद्वृषन्तमस्य शक्तिमत्तमस्य तव सहस्रसातमामूतिं सहस्रं सनोतीति सहस्रसाः । अतिशयेन सहस्रसाः सहस्रसातमा । तां बहुलाभोत्तममवनमतिलाभयुक्तां रक्षां हूमहे आह्वयामः । प्रार्थयाम इति यावत् । श्रोतारमिति तृन् । तेन द्वितीयोपपत्तिः । ऋक्शतसमाप्त्यर्थ इति शब्दः । नन्वित उत्तरे अपि ऋचौ मधुच्छन्दसा दृष्टे । ऋष्यन्तरे प्रमाणाभावात् । तत्कथं तस्य शतर्चित्वमित्यत आह

।। स्थानान्तरेति ।। येनकारणेनातून इत्यादिके ऋचौ स्थानांतरगते आनुपूर्व्यंतरस्थे तेन कारणेन मधुच्छन्दसः शतर्चिता नैव विरुद्धा । एकानुपूर्वीनिमित्तत्वात्तस्याः । देशकालावस्थान्तरदृष्टत्वाच्च न विरुद्धे इत्याह ।। दृष्ट्वेति ।। याभ्यां ते स्थानान्तरगते इति सम्बन्धः ।। १० ।।

आतूनः । मात्रा । अदित्या जन्मनि जन्मसमये । स इन्द्रः गाधित्वाद्वा कौशिकः । कुशिकापत्यत्वात् गाधिनः हरिस्तथा कौशिकः । हिरण्यग्रहणं ब्रह्माण्डद्योतनार्थं कुशशब्दात् गृहीतार्थे कोशशब्दाद्भवार्थे वा ठक् । मन्दो मदः आधिक्येऽधिकं नित्यसुखम् । तस्य सानो लाभो यस्यासौ मन्दसानो नित्यसुखी । यद्वा सानः सम्भजनम् । संशब्देन नित्यत्वं लभ्यते । हे इन्द्र कौशिक मन्दसानस्त्वं नोऽस्माकं सुतं सोमं तु क्षिप्रमापिब । नव्यं णुस्तुतौ । स्तुत्यमायुश्च नः प्रसूतिर । अतिप्रकर्षेण देहि । मां सहस्रसां सहस्रलाभयुक्तमृषिं ज्ञानिनं च कृधि कुरु ।। ११ ।।

परित्वा ।। त्वा इमाः । हे गिर्वणः इमा मदीया गिरः स्तुतिरूपा वाचो विश्वतः सर्वदा वृद्धः पूर्ण आयो लाभो यस्यासौ वृद्धायुस्तं सर्वलाभिनं त्वा त्वां परि परितो भवन्तु । अतिशयेन त्वद्विषया भवन्तु । किञ्च । वृद्धयो वृद्धिरूपास्त्वद्वृद्धिप्रकाशिन्यो जुष्टाः सेव्याः नो गिरो जुष्टयोऽनुभवन्तु त्वत्सेवानुरूपाश्च सन्तु ।। १२, २०, १० ।।

## मन्त्रार्थमञ्जरी

अद्रिवः, प्राणप्रवर्तक (हे) इन्द्र, विष्णो । अद्रिवः, पर्वतच्छेदक । (हे) इन्द्र, पुरंदर । आङ्पूर्वाद्दृङ्धातोः किप्रत्ययः, 'वृतु वर्तने' इत्यतो डसुन्प्रत्ययः, द्वितीयेऽर्थे तु अद्रिशब्दोपपदाद्वृश्चतेः डसन्नलोपश्च, अद्रिवाः, तस्य सम्बुद्धिरद्रिवः । त्वादातम् इत्, त्वद्दत्तमेव 'त्वोतास' इत्यत्रेव युष्मद आत्वम्, 'दो दद्धोः' इति दत्वाभावश्छान्दसः । यशः । सुविवृतम्, विस्पष्टम्, जगद्विख्यातम् । सुनिरजम्, सु सुष्ठु, निरजम्, 'अज गतिक्षेपणयोः' इत्यतोऽकारप्रत्ययः, निरत्र निषेधार्थः, अक्षय्यं केनाप्यनपहार्यं च ।। यस्मादेवं रूपं त्वदीयं दानं तस्मात् (त्वम्) गवाम्, ज्ञानानाम् । व्रजम्, समूहम्, स्वरूपभूतम् । अप वृधि, अपगता वरणं कुरु । (नः) अस्माकम् । राधः वृद्धिम् । (च) कृणुष्व, कुरु, कृञः व्यत्ययेन श्नुविकरणम् ।। ७ ।।

(हे इन्द्र) ऋधायमाणम्, वर्धमानम्, वृद्ध्यर्थादृधधातोः 'ताच्छील्य' इत्यादिना चानश्प्रत्यये 'आने मुक्' इति मुगागमे 'कण्ड्वादिभ्यो यक्' इति यगागमे 'अकृत्सार्वधातुकयोः' इति दीर्घे च

रूपम्, सर्वगतमिति यावत् । त्वा त्वाम् । रोदसी, द्यावापृथिव्यौ, तदभिमानिन्यौ श्रीभूमी अपि । उभे, सहिते । नहि इन्वतः, नैव सम्प्राप्नुतो हि, 'इवि व्याप्तौ' इति धातोः, त्वत्प्रसादेन विना न प्राप्नुत इति भावः ॥ किं च (त्वम्) स्वर्वतीः, सुखवतीः । अपः प्रजाः, स्वर्गिणो मुक्ताँश्च । जेषः, अजयः, वशीकृतवानिति यावत्, 'जि जये' लङर्थे लेट्, मध्यमपुरुषे सिपि परतः 'लेटोऽडाटौ' इत्यडागमे 'सिब्बहुलं लेटि' इति सिपि तस्य षत्वे धातोर्गुणे लादेशसिपो रुत्वे विसर्गे च 'जेषः' इति रूपम् । एवं विधश्च (त्वं स्वयम्) अस्मभ्यम् । गाः, ज्ञानानि । सम् धूनुहि । यद्वा 'सम्' इति गोविशेषणम्, सम् गाः, प्रसिद्धागाः धूनुहि, कम्पय, 'धूञ् कम्पने' गमय, अस्मान्प्रति प्रापयेति यावत् ॥ ८ ॥

(हे) आश्रुत्कर्ण, आ समन्ताच्छृणुत इत्याश्रुतौ कर्णौ यस्य तस्य संबुद्धिः, बहुश्रवणकर्णेति यावत् । हवम्, अस्मदीयमाह्वानम् । श्रुधि, शृणु, 'श्रुशृणुपॄकृवृभ्यश्छन्दसि' इति हेर्धिरादेशो विकरणलोपश्च । नु चित्, अद्यैव । मे, मयि । गिरः, वेदरूपा वाचः । दधिष्व, 'दध धारणे' धेहीत्यर्थः, वेदविदं मां कुर्विति यावत् । (हे इन्द्र) इमम् । मम स्तोमम्, मत्कृतस्तुतिविशेषम् । युजः चित्, योगादपि समाधिलक्षणात् । अन्तरम्, संनिकृष्टम्, प्रियमिति यावत् । कृष्व, कुरुष्व, लुग्विकरणं छान्दसम्, संहितायां दैर्घ्यम् ॥ ९ ॥

हि, यस्मात् । वृषन्तमम्, वृषः शक्तिमान्, अतिशयेन वृषो वृषन्तमस्तम्, छान्दसो नकारागमः, शक्तिमत्तमम् । वाजेषु, युद्धेषु । हवनश्रुतम्, आह्वानस्य श्रोतारम् । (च) त्वा, त्वाम् । विद्म, विद्मः, जानीमः । (तस्मात्) । वृषन्तमस्य, शक्तिमत्तमस्य । (तव) सहस्रसातमाम्, सहस्रं सनोतीति सहस्रसा(ः), 'षणु दाने' डः, स्त्रीत्वम्, यद्वा– डाप्रत्ययः, अथ वा– 'जनसनखन' इति विटि तस्य सर्वस्य लोपे 'विड्वनोरनुनासिकस्यात्' इति नकारस्याकारः, अतिशयेन सहस्रसा(ः) सहस्रसातमा ताम्, बहुलाभकृत्तमाम् । ऊतिम्, रक्षाम्, अवतेः औणादिके तिप्रत्यये 'तितुत्र' इतीडभावे 'क्ङिति' इत्यननुवर्तनपक्षे 'ज्वरत्वर' इथ्यूठि 'ऊतिः' इति सिद्धेः । हूमहे, आह्वयामः, प्रार्थयामह इति यावत्, 'ह्वेञ् शब्दे' इत्यतो लुग्विकरणादि च्छान्दसम् ॥ १० ॥

(हे) कौशिक, ब्रह्माण्डकोशस्थ, कोशशब्दाद्भावार्थे ठक् (ठञ्) । इन्द्र, विष्णो । (हे) कौशिक, अदितिदेव्या जन्मसमये कुशैर्गृहीतत्वहेतुना गाधित्वहेतुना वा कौशिक शब्दोक्त, कुशशब्दाद्गृहीतार्थे ठक्, तस्येकादेश आदिवृध्द्यन्त्याकारलोपौ, (गाधिनः

कुशिकापत्यत्वात्कुशिक शब्दादपत्यार्थे 'ऋष्यन्धक' इत्यादिनाण् वा) इन्द्र, पुरंदर। मन्दसानः, मन्दो मदः, 'आधिक्येऽधिकम्' (म० व्या० सू०) इति वचनान्नित्यसुखम्, तस्य सानो लाभो यस्यासौ मन्दसानो नित्यसुखी (त्वम्)। नः, अस्माकम्। सुतम्, सोमम्। तु, क्षिप्रम्। आ पिब। नव्यम्, 'णु स्तुतौ' 'अचो यत्' इति यत्प्रत्ययः, स्तुत्यम्। आयुः (च) (नः) अस्मभ्यम्। प्र सु तिर, अतिप्रकर्षेण देहि। (माम्) सहस्रसाम्, सहस्रलाभयुक्तम्। ऋषिम्, ज्ञानिनम्। (च) कृधि, कुरु॥ ११॥

(हे) गिर्वणः, गीर्भिर्वननीय, व्याख्यातं पदमेतत्पुरस्तात् 'आ त्वा विशन्त्वा' इत्यत्र। इमाः, मदीयाः। गिरः, स्तुतिरूपा वाचः। विश्वतः, विश्वस्मिन्काले, सर्वदेति यावत्। वृद्धायुम्, वृद्धः पूर्ण आयो लाभो यस्यासौ वृद्धायुस्तम्, व्यत्ययेनोकारः। सर्वलाभिनम्। त्वा, त्वाम्। परि भवन्तु, परिवृता भवन्तु, अतिशयेन त्वद्विषया भवन्तु। किं च, वृद्धयः, वृद्धिरूपाः, त्वद्वृद्धिप्रकाशिन्यः। जुष्टाः, सेव्याः। (नः) (गिरः) जुष्टयः अनु भवन्तु, त्वत्सेवानुरूपाश्च सन्तु॥ १२॥ इति विंशो वर्गः॥ २०॥ दशमं सूक्तम्॥ १०॥

## पदार्थप्रकाशिका

सुविवृतंसुनिरजम्॥ ननु दातमिति कथम्। दादान इति धातोः क्तप्रत्यये ककारलोपे दतीतिजाते दाधाघ्वदाप् दारूपाः धारूपाश्च धातवो घूसंज्ञाः स्युः दारूपत्वेपि दाप्दैपौविनेत्युक्तत्वेन दाधातोः घूसंज्ञायां दोदत् घोरिति घूसंज्ञकस्य दाधातोः दत् इत्यादेशे दत्तेति प्रातिपदिकसिद्धौ सत्यां पश्चात् स्वाद्युत्पत्तौ त्वद्दत्तमिति भवेदित्यत आह। सर्वे विधय इति॥ भाष्यपदस्वारस्यमङ्गीकृत्य तदनुसारेण श्रुतिपदमुपपाद्य इदानीं श्रुतिपदस्वारस्यमङ्गीकृत्य व्याख्याति॥ यद्वा दापोदैपौवेति॥ दाप्लवने दैप् शोधने इति धातोरिदं रूपमित्यर्थः। दाप्धातोः पकारलोपे क्तप्रत्यये दातमितिभवति। दैप्धातोश्च पकारलोपे क्तप्रत्यये आदेचः उपदेशेशिती-त्यनेनैव च आत्वे च दातमिति भवति। तथाच दापो दैपो वा सूत्रे अदाप् इत्युक्तत्वेन घूसंज्ञायाः अभावात् दोद्घो इत्यस्याप्रवृत्तिरिति भावः। ननु दातमित्यस्य लवनशोधनार्थकधातो दैपो वा रूपत्वे त्वद्दत्तमिति भाष्यव्याख्यानासङ्गतिरित्यत आह॥ अनेकार्थत्वादिति॥ कलसंहार इति धातोः अकाल्यमिति भाष्यमनूद्य अक्षेप्यमिति तदर्थ उक्तः। तदर्थमुपपादयितुं अजेति धातुरुक्त इत्यवगन्तव्यम्। अक्षेप्यं अक्षेपणं क्षयं तथाच क्षीयत अज्जत इति निरजमित्यर्थे द्रष्टव्यम्। ननु नितरामित्यर्थकत्वादक्षेप्यमित्यर्थः कथमागतः इत्यत आह॥ निर इति॥ अक्षेप्यमित्यस्यापि

तात्पर्यमाह । अनपहार्यंचेति परीति शेषः । चशब्दः सुविवृतमिति विशेषणापेक्षया । संबुध्यन्तमिति ।। सकारान्ताद्रिवस्शब्दस्य संबुध्यन्तमित्यर्थः । अन्यथा श्रुतिस्थाद्रिव इत्यस्याकारान्तपुल्लिङ्गत्वे भाष्ये अद्रिवा इति सामानाधिकरण्यायोग इति भावः ।। दरतेरिति ।। आङ्पूर्वात् दृआदरण इत्यस्मात् कर्मणि किप्रत्यये ककारलोपे ऋवर्णस्य रेफादेशे आदृई इति जाते आङश्चऽह्स्वतायां अद्रिरिति रूपम् । कित्वाद्गुणाभावो द्रष्टव्यः । अन्यथा अदरीति स्यादिति ज्ञातव्यम् । वरित्येततत्साधयति ।। अद्रिशब्द इति ।। अद्रिशब्दे कर्मण्युपपदे वर्तयतीत्यन्तर्णीन्तण्यर्थात् वृतुवर्तन इत्यस्मात् धातोः असुन्प्रत्यये अन्नित्यस्य लोपे तस्य डित्कार्यकारित्वात् टीभूतस्य ऋत्वित्यस्य लोपे चाद्रिवस् इति सकारान्तप्रातिपदिकसिद्धिः तस्य प्रथमैकवचनं अद्रिवा इति । तथाच संबुद्धौ सोर्लोपे रुत्वे विसर्गे च अद्रिव इति संबुर्द्धिद्रष्टव्या । सकारलोप इति । अद्रिवस् इत्यत्र छन्दस्त्वात् सकारलोपे अद्रिवेति भवतीति द्रष्टव्या ।। इद्रि इति ।। इन्द्रे अद्रिवमित्येतत् व्याख्यातीत्यर्थः । छेदनादित्यस्य वारणादिति विवरणमिति प्रतीतिवारणायाह । छेदनादिति ।। वृश्चतेरिति ।। अद्रिशब्दोपपदात् आवृश्च छेदने इत्यस्मात् अन्तर्णीतण्यर्थात् असुन् प्रत्यये तस्य डित्कार्यकारित्वात् टीभूतस्य रश्च इत्यस्य लोपे अद्रिवस् इति प्रातिपदिकम् ।। वृत्रो वेति ।। वृञ् आवरणे वरणं वारणमित्यर्थः । तथाचाद्रिशब्दोपपदात् वृञ्धातोरसुन्प्रत्यये डित्कार्यकारित्वाट्टीभूतस्य ऋञ् इत्यस्य लोपे अद्रिवस् इति प्रातिपदिकसिद्धिर्द्रष्टव्या ।। ७ ।। छ ।।

नहि त्वारोदसी उभे । ननु ऋधुवर्धन इतिधातोः शानचि शकारचकारयोर्लोपे आनेमुगिति मुगाममे अट्कुप्वाङ्नुमुव्यवायेपीति नस्य णत्वे ऋघमाणमिति स्यात् । ऋघायमाणमिति कथमित्यत आह । कण्डूवादिरिति । कण्डूवादिभ्यो यगिति कण्डूवादिभ्योयक् प्रत्ययविधानात् कण्ड्वादेराकृतिगणत्वात् यक्प्रत्यये ककारलोपे च सति अन्येभ्योऽपि दृश्यंत इति दीर्घे कण्डूयमान इतिवत् ऋघायमाण इति व्यक्तमिति भावः । श्रीभूमिः श्रीभूमी श्रीभूमय इति हि शब्दः तस्य द्विवचनं श्रीभूमीत्येवभवतीति द्रष्टव्यम् ।। व्याप्तिकर्मस्विति ।। इदिव्याप्ताविति व्याप्त्यर्थक धातुपाठादित्यर्थः । तथाच इदिधातोरिदित्वादिदिनो नुम् धातोरित्यनेन नुमागमे इन्वत इति भवति ।। तयोरपीति ।। श्रीभूम्योरपीत्यर्थः । अन्यथा समनाचेति सूत्रविरोधादित्याशयः । ननु जीजये अस्माल्लेटि मध्यमपुरुषे तस्य बहुलं लेटीति शिबागमे इप् इत्यस्य लोपे जिस् इति जाते आदेशप्रत्यययोरिति इणः परस्य सस्य षत्वे इकारस्य गुणे सस्य रुत्वे विसर्गे च सति जेष इति लेटि रूपम् । तस्य जय इति लङा कथं व्याख्यानमित्यत आह । लडर्थे लेडिति छन्दसि लेटः सर्वलकारार्थत्वादिति भावः ।। कथमिति ।। कथमजयस्तज्जये तवासामर्थ्यादिति भावः ।। कंपयेति

॥ धुञ्कंपन इति धातोरिति भावः । धातूनामनेकार्थत्वादाह । गमयेति । ज्ञानानीत्यस्य विशेषणतया उच्चानीति वक्तव्यत्वेन उच्चा अपीति कथं स्त्रीलिङ्गनिर्देश इत्यत आह । गा इतीति । व्याख्येयऋक्पदापेक्षयेत्यर्थः । श्रीभूमी नहीन्वत इति व्याख्यानस्य प्रसिद्धेन्द्र अयोगादाह । यथायोगमिति ॥ हे इन्द्र प्रसिद्धऋघायमाणं त्वां उभे रोदसी द्यावापृथिव्यौ नहीन्वतः । किञ्च त्वं स्वर्वतीः सुखवतीः अपः प्रजाः स्वर्गिणो जेषः इति प्रसिद्धेन्द्रे योज्यम् ॥ तथा हे इन्द्र भगवन् ऋघायमाणं त्वां भूमी रोदसी तदभिमानिन्यौ श्रीभूमी अपि नहीन्वतः । किञ्च त्वं स्वर्वतीः सुखवतीः अपः प्रजाः मुक्तान् जेष इति भगवति योज्यम् ॥ एवंविधश्च त्वं सङ्गा अस्मभ्यं धूनुहि इत्युभयत्रापि समानमिति यथायोगं व्याख्यानमित्यर्थः ॥ ८ ॥

आश्रुत्कर्णश्रुधीहवम् ॥ आश्रुतौ आसमंतात् शृण्वन्तौ श्रवणवन्तौ युजसमाधाविति धातोराह ॥ समाधीति ॥ मिथ इति हवश्रवणस्य वेदवितरणस्य स्तुतिविशेषस्य समाधियोगादपि प्रियकरणस्य च परस्परसमुच्चयार्था इत्यर्थः ॥ ९ ॥ छ ॥

विद्माहित्वावृषन्तमम् ॥ ननु तर्हि वृषतम इति स्यादित्यत आह ॥ छान्दस इति ॥ यद्वा नायं वृषशब्दः किंनाम नकारान्तो वृषन् शब्द एव ॥ तदन्तात्तमबित्याह ॥ नकारान्ताद्वेति ॥ ननु तर्हि न लोपः प्रातिपदिकान्तस्येति प्रातिपदिकान्तनकारलोपे वृषतम इत्येव स्यादिति चेत् तत्राह ॥ तत्र नलोपाभाव इति ॥ नकारान्तात् तमबिति पक्ष इत्यर्थः ॥ सहस्रं बहुफलं सनोति लंभयति प्रापयतीत्यर्थः ॥ अतिलाभयुक्तमिति ॥ अत्यन्तं बहुलाभं तत्सहितां रक्षां चेत्यर्थः ॥ उभयमपि हूमहे इत्याशयः ॥ नन्वाह्वानं श्रोतारमिति कथं श्रोतृशब्दस्य तृजन्तत्वेन तृचश्च कृत्वात् तद्योगे कर्मणि प्राप्तद्वितीयापवादकत्वेन कर्तृकर्मणोः कृतीति षष्टी विधानादाह्वानस्य श्रोतारमिति स्यादित्यत आह ॥ श्रोतारमिति ॥ तृन्निति ॥ न तृजित्यर्थः ॥ तेनेति ॥ तृन्नंतश्रोतृशब्दयोग इत्यर्थः ॥ तथाच न लोकेति तृन्नन्तशब्दयोगे निषेधात्कर्मणि द्वितीयोपपत्तिरिति भावः ॥ इति शब्दवैयर्थ्यमाशङ्क्याह ॥ ऋक्शतसमाप्त्यर्थ इति । ऋक्शतव्याख्यानसमाप्त्यर्थ इत्यर्थः ॥ ऋष्यन्तरे ऋष्यन्तरदृष्टत्वे ॥ तस्य मधुछन्दसः । ननु तयोः ऋचोरानुपूर्व्यंतरस्थत्वेपि शतर्चिंता कथं न विरुद्धेत्यत आह । एकानुपूर्वीति । शतर्चितायाः मूलवेदगत एकानुपूर्वीस्थऋक्शतदर्शननिमित्तकत्वादित्यर्थः । देशेत्यादि ॥ यज्ञगमिति यज्ञस्थान रूपदेशोक्तिः । दृष्टचेति कालोक्तिः । समस्तुवदिति स्तोत्रकाराणां अवस्थान्तरोक्तिरित्यवधेयम् । न विरुद्धा शतर्चितेति वर्तते ॥ १० ॥ छ ॥

आतून इन्द्रकौशिक ॥ नन्विंद्रस्य गाधित्वेपि कौशिकत्वं कथमित्यत आह ॥ कुशिकेति ॥ तथाहि ॥ उक्तमनुक्रमणिकायां कुशिकस्य इन्द्र एव गाधिनामपुत्रो जज्ञे । गाधिनो विश्वामित्रः । स तृतीयमण्डलमपश्यदिति ॥ तथेत्यनूद्य कौशिक इति व्याख्यानम् । हिरण्यग्रहणमिति ॥ अण्डकोशस्थत्वादित्युक्ते कुक्कुटाण्डकोशस्थत्वप्रतीतेः तद्वारणाय हिरण्यग्रहणम् । तेन ब्रह्माण्डमेवात्र अण्डशब्दवाच्यमित्युक्तं भवति । शुष्मं हिरण्यात्मकमंबुमध्ये ॥ तदण्डमभवद्धैमम् ॥ अण्डकोशं हैमं ससर्ज बहिरावरणरूपमित्यादिवचनादित्यर्थः ॥ मात्रा कुशैः गृहीतत्वात् कौशिक इत्यर्थं व्युत्पादयति ॥ कुशशब्दादिति ॥ तथाच कुशशब्दात् गृहीतार्थे ठक् प्रत्यये ठस्य इकादेशे शकारस्थाकारस्य पररूपे कुशिकेति जाते पश्चात् सार्वधातुके उकारस्यौकाररूपे गुणे तस्य चौकाररूपवृद्धौ सत्यां कौशिकेति रूपम् ॥ अण्डकोशस्थत्वाद्धरिः कौशिक इत्यर्थः । व्युत्पादयति ॥ कोशशब्दादिति ॥ भवार्थे स्थित इत्यर्थे तत्र भव इति सूत्रेणेत्यर्थः ॥ ठस्येकादेशे शकारस्थाकारस्य पररूपे वृद्धौ च सत्यां कौशिकेति रूपमित्यर्थः ॥ आधिक्य इति ॥ अर्थाधिक्ये विवक्षिते अधिकशब्दरूपं भवतीति महाव्याकरणसूत्रादत्रार्थाधिक्यविवक्षायां अनुस्वारो अधिकः समागत इत्यर्थः ॥ अर्थाधिक्यं दर्शयति नित्येति ॥ सानोलाभ इति ॥ षणलाभ इति धातोरित्यर्थः । संभजनमिति ॥ षणसंभक्ताविति धातोरित्यर्थः ॥ संशब्देनेति ॥ नित्यत्वं मन्देत्यत्रत्यानुस्वारार्थ इति भावः । तथाच मन्दस्य सुखस्य सानः संभजनं नित्यं भजनं यस्यासौ मन्दसान इत्यर्थः ॥ एवञ्च नित्यसुखीति लभ्यत इति द्रष्टव्यम् ॥ प्रसू इत्युपसर्ग-द्वयार्थोतिप्रकर्षेणेति । तृष्कवनतरणयोरित्यत्र दानस्य तरणशब्दार्थत्वमभिप्रेत्य तिरेत्यस्यार्थमाह देहीति । मां सहस्रलाभयुक्तं कृधीत्यर्थः ॥ ११ ॥

परित्वागिर्वणोगिरः ॥ सर्वदेत्यर्थकस्य विश्वत इत्यस्य वृद्धायुरित्यनेन वा भवत्वित्यनेन वा सम्बन्धः ॥ आयोलाभ इति ॥ एवं पदार्थमुक्त्वा भाष्यं सङ्गमयति ॥ सर्वलाभिनमिति ॥ सर्वं पूर्णम् ॥ 'दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते' ॥ इति वचनादिति भावः ॥१२॥२०॥१०॥

## पदार्थदीपिका

शब्दस्य लोपः । कर्तृकरणे कृता बहुलमिति तृतीया समासः । तत्पुरुषे कृति बहुलमिति तृतीयाया अलुक् । ततश्च त्वया दातं त्वादातमिति रूपसिद्धिरिति भावः । ननु दाञो दाधाध्वदाप् इति घुत्वात् घुसंज्ञकस्य दोदद्घोरिति सूत्रेण द्यतिस्यतिमास्थामित्ति कितीत्यतः कितीत्यस्यानुवृत्या तकारादौ किति घोर्दो दथादेशविधानात् प्रकृतेऽपि तद्भावेन त्वादत्तमित्येवोपपन्ने कथं

त्वादातमित्युपपन्नमित्यत आह ॥ सर्व इति ॥ छान्दसत्वकल्पाश्रयणेऽरुचिं मनसि निधाय पक्षान्तरमाह ॥ यद्वेति ॥ ततश्च अदाविति प्रतिषेधेन दाप् दैपोर्घुसंज्ञाया अभावसिद्धेः न तद्भावप्रसक्तिरिति भावः । ननु नात्र दाप् लवने दैप् शोधन इति धातुद्वयरूपत्वाश्रयणेन समाधानमुपपद्यते । अदाविति दाप एव प्रतिषेधेन तद्रूपत्वे तद्भावाप्रसक्तावपि दैपोऽदात्वेन तस्य घुसंज्ञाया अप्रतिषेधेन तद्रूपत्वे तद्भावप्रसक्तेरवर्जनीयत्वात् । न च दैपोऽप्यादेच उपदेशेऽशितीति आत्वे कृते अस्ति दाप् रूपत्वं ततश्च अदाविति प्रतिषेधविषयत्वं भविष्यतीति वाच्यम् । आदेच उपदेशेऽशितीति एजन्तस्यैवात्वं विधीयते । न चायमेजन्तः । दैप् इति पकारश्रवणेनानेजन्तत्वात् । न च सत्यपि पकारे नानुबन्धकृतमनेजन्तत्वमिति अभियुक्तोक्तेरेजन्त एवायमित्यात्वं स्यादेवेति वाच्यम् । ज्ञापितश्चायमर्थो उदीचां तीमाङो व्यतिहार इत्यत्र मेङ् कृतात्वस्य निर्देशे नानुबन्धकृतानेजन्तत्वस्य तत्रापि सत्वेन आत्वाप्रसक्त्या कृतात्वस्य मेङोऽपि ग्रहणं न स्यात् । तत्र च सूत्रे न माङ् इत्यस्यायं निर्देशः आश्रयितुं युक्तः । तस्य कर्मव्यतिहारे वृत्यसम्भवात् । किंतु कृतात्वस्य मेङ एव । तेनानुबन्धकृतानेजन्तत्वसिध्या आदेच उपदेशेऽशितीति आत्वं स्यादेव इति वाच्यम् । कृतात्वस्यापि दैपो नादाविति प्रतिषेधविषयत्वम् । दाप् लवन इति प्रतिपदोक्तस्यैव दापः प्रतिषेधविषयत्वसम्भवात् । न च प्रतिपदोक्तस्य दाप इव लाक्षणिकस्य दैपोऽपि प्रतिषेधोऽयमस्तु विनिगमनायां नियामकाभावादिति वाच्यम् । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न लाक्षणिकस्येति परिभाषया तत्सिद्धेः । ततश्च दैपोऽनेजन्तत्वात् कथंचिदेजन्तत्वेन आत्वसम्भवेऽपि लाक्षणिकत्वान्नादविति निषेधविषयत्वम् । ततश्च घुसंज्ञकत्वात् अद्भावोऽवर्जनीय एवेति अनर्थकमेव दैप् रूपत्वाश्रयणमिति चेत्सत्यम् । उभयोरपि दाब्रूपत्वा-विशेषेण लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तं बलवदिति । तथापि ग्रामादाग्रहणेष्वविशेष इति लत्प्रतिप्रसवात् लक्षणप्रतिपदोक्तयोरविशेषसिद्धेः कृतात्वस्य दैपोपि दाप्त्वेन ग्रहणेन सूत्रे गृहीततया युक्त एव घु संज्ञाप्रतिषेधः इति । अस्मिन् पक्षे दत्तमिति भाष्यमुपपादयति ॥ अनेकार्थत्वादिति ॥

अजगति क्षेपणयोरिति ॥ यद्यप्यत्र नद्यजाद्यन्य आर्धधातुः प्रत्ययः सम्भावितः अजेर्व्यघञपोरिति वीभाव प्रसंगात् घञादीनां च नावकाशः वृध्यादिप्रसंगात् । नाप्याप् समदो रजः पशुष्विति नियमात् । तथापि कर्मणि घञि संज्ञापूर्वको विधिरनित्य इति वृध्यभावोप-पत्तिरिति ध्येयम् । अकाल्यमिति । अक्षेप्यमकाल्यमिति योजना ॥ वृधीति ॥ वृञ् वरणे । श्रुशृणुपॄकृवृभ्यश्छन्दसीति हेर्धिरादेशः । बहुलं छन्दसीति श्नोर्लुगिति भावः ॥ कृणुष्वेति ॥ कृवि

हिंसाकरणयोरित्यस्मान्नुम् । व्यत्ययेनात्मनेपदम् । लोटः थासः से सवाभ्यां वामौ । कर्तरि शपि प्राप्ते धिन्विकृण्व्योरचेति उप्रत्ययः । तत्सन्नियोगे वकारस्याकारः । अतो लोप इति लोपः । अचः परस्मिन् पूर्वविधावित्यकारलोपस्य स्थानिवद्भावेन लघूपधगुणो न भवतीति भावः ।। कर्मणि किरिति ।। कर्मण्यधिकरणे चेत्यत्रोपसंख्यानात् गुणदिबाहुलकत्वाद्वा किरित्यर्थः । यत्तु किकिनौ लिड्वेति किरित्यर्थ इति तन्न । तथा सति लिङ्वद्भावेन द्विर्भावप्रसंगात् ।। ह्रस्वत्वमिति ।। निरुक्तत्वादिति भावः । असुन्निति ।। असुन्निति सूत्रेणेति शेषः ।। ङिच्चेति ङित्वाट्टिलोप इत्यर्थः ।। व्रश्चतेरिति ।। व्रश्चू छेदन इत्यस्मादसुन् कित् ङिच्चेत्यर्थः । सम्प्रसारणस्य बलवत्वेन कित्वात् सम्प्रसारणे पश्चाट्टिलोपः । अन्यथा रेफावशेषप्रसङ्गादिति ध्येयम् ।। ७ ।।

ननु कर्मणि यको विधानात् कर्मार्थकयगन्तस्य ऋघायमाणमित्यस्य कथं वर्धत असौ वर्धमान इति कर्त्रर्थकप्रत्ययान्तं वर्धमानमिति व्याख्यानमित्यतः कर्तर्यपि कण्ड्वादिभ्यश्चेति यक् विधानात् कर्त्रर्थकयगन्तस्य तदर्थकप्रत्ययान्तं प्रतिपदं युक्तमित्याह ।। कण्ड्वादिरिति ।। इदं च कण्ड्वादेराकृतिगणत्वमभिप्रेत्योक्तम् । ततश्च ऋघशब्दात् कण्ड्वादित्वाद्यकि अकृत् सार्वधातुकयोर्दीर्घ इति दीर्घतायां सनाद्यन्ता धातव इति धातुसंज्ञायां लडात्मनेपदस्य शानजिति भावः ।। इन्वत इति ।। इदि व्याप्तावित्यतः इदित्वान्नुमि शपि चैतद्रूपसिद्धिरिति भावः । ।। लङर्थे लेडिति ।। लिङर्थाद्विहितो लेट् बहुलग्रहणात् लङर्थेऽपि भवति इत्यर्थः । ततश्च लेटि मध्यम पुरुषैकवचने शपि इतश्च लोपः परस्मैपदेष्वितीकारलोपे शपोऽपवादतया सिप् बहुलं लेटीति सिपि लेटोडाटाविति अडागमे षत्वरुत्वविसर्गयोर्विवक्षितरूपसिद्धिरिति भावः ।। तासामिति ।। मुक्तिस्वर्गस्थप्रजानामित्यर्थः ।। सन्धुनुहीति ।। धूञ् कम्पने लोटि सेर्ह्यपिच्च स्वादिभ्यश्नुः उतश्च प्रत्ययादसंयोगपूर्वात् इति प्राप्तस्य हेर्लुकः छान्दसत्वात् अभाव इति भावः । अत्र भाष्यटीकयोः सन्धुनुहि इति ह्रस्वान्त पाठो ज्ञेयः । धातुपाठे ह्रस्वान्तस्यैव पठितत्वात् ।। दीर्घान्तमप्यमुं केचिदुदाहरन्तीति वृत्तिकारादिभिरुक्तत्वात् धूनुहीति दीर्घान्त पाठोऽपि त्रिषु उपपन्नमिति ज्ञेयम् । ननु ज्ञानानीति पूर्वव्याख्यानमिति उच्चानीति वक्तव्यं कथं उच्चा इति स्त्रीलिङ्गमित्यतः आह ।। गा इत्येतदपेक्षयेति ।। ८ ।।

।। आश्रुत्कर्णेति ।। श्रु श्रवण इत्यस्मात् क्विप् चेति क्विप् । ह्रस्वस्य पिति कृति तुगिति तुगागम इति भावः । ।। इति यावदिति ।। इत्याङस्तात्पर्यं बहुशब्देनोच्यत इत्यर्थः । एवं श्रुधीति पदं पूर्वत्र व्युत्पादितम् । दधिष्व, दधातेर्लोटः थासः से सवाभ्यां वामौ शपःश्लुः । अभ्यासस्य ह्रस्वत्वमिति ।

छन्दस्युभयथेति आर्धधातुकस्यापि स्वीकारादिडागम इति भावः ॥ स्तुतिविशेषमिति ॥ सामसाध्यमिति शेषः ॥ समाधिलक्षणादिति ॥ भुज समाधावित्यस्मात् सम्पदादिलक्षणे भावे क्विबिति भावः ॥ कृष्वेति ॥ डुकृञ् करणे लोटः थासस्से सवाभ्यां वामौ व्यत्ययेन शपि तस्य बहुलं छन्दसीति लुगिति भावः । न च भौवादिकेजन्तधातुगणे डुकृञ्करणे इति पाठात् तत एव शपो लुक् व्याख्यातुं शक्यत इति किं व्यत्ययाश्रयणेनेति वाच्यम् । तथापि हरदत्तादीनां असम्मत्या उक्तकुसृष्ट्याश्रयणस्य आवश्यकत्वात् । यदाहुः कः कप् तु करति कृधिकृतेष्वनदितेरित्य प्रत्ययेन शपित्यादि । न युज्यते च तत्पाठः । कृमृदृरुहिभ्यश्छन्दसीत्यत्र करोतेरङ्विधानानर्थक्य-प्रसंगादिति संक्षेपः ॥ ९ ॥

वृषः शक्तिमानिति ॥ पृषुवृषुमृषु सेचन इत्यस्मात् इगुपधज्ञाप्रीकिरः कः इति कप्रत्ययः सेचक इत्यर्थः । शक्तिमान् इति तु तात्पर्यार्थ इति बोध्यम् । नन्वेवं वृषतममिति भवितव्यं वृषन्तममिति तु कथमित्यत्राह ॥ छान्दस इति ॥ नकारान्ताद्वेति ॥ उदाहृतधातोरेव कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिव इति कनिन्प्रत्यये सति अतिशयेन वृषा इति वृषन्तमम् इत्यर्थः । नन्वेवं नलोपः प्रातिपदिकान्तस्येति नलोपे वृषतममिति भवितव्यम् । वृषन्तममिति तु कथमित्यत आह ॥ नलोपाभाव इति ॥ अयस्मयादीनि छन्दसीति भत्वेन पदत्वाभावात् सर्वे विधयश्छन्दसि विकल्प्यन्त इति परिभाषया नलोपाभावः । पदत्वाच्च टिलोपाभाव इति भावः ॥ भक्ताह्वानस्येति ॥ ह्वयतेर्ल्युटि बहुलं छन्दसीति सम्प्रसारणे पररूपत्वे अनादेशे गुणावादेशयोः हवनशब्दनिष्पत्तिः । ततश्च हवनं श्रुणोतीति कर्तरि क्विप् । ह्रस्वस्य पिति कृति तुगिति तुगागम इति भावः ॥ विद्म इति ॥ विदो लटो वेति विकल्पनात् मसो मादेशाभाव इति भावः । धचोतस्तिङिति संहितायां दीर्घः ॥ सहस्रं सनोतीति सहस्रसा इति ॥ षणलाभ इत्यतो जनसनखनक्रमगमो विडिति विट् । विड्वनोरनुनासिकं स्यादित्यात्नमिति भावः । यद्यपि च स्वादौ षणु दान इत्येव वृत्तिकृता पठितं, तथापि षणु लाभ इत्यपि वृत्यन्तरपाठदर्शनात् धातूनामनेकार्थत्वाभिप्रायेण वा लाभार्थतया व्याख्यानमिति ध्येयम् ॥ अत एव च कर्मनिर्णयटीकायां एवं पठितमिति ध्येयम् ॥ हूमह इति ॥ बहुलं छन्दसीति सम्प्रसारणं शप इत्यनुवृत्तौ बहुलं छन्दसीति शपो लुगिति भावः ॥ द्वितीयोपपत्तिरिति ॥ तृच् पक्षे बाधकाभावात् कर्तृकर्मणोः कृतीति षष्ठीप्रसङ्गेनाह्वानमिति भाष्ये द्वितीयानुपपत्तिप्रसङ्गेऽपि तृन् पक्षे न लोकाव्ययनिष्ठेति षष्ठीनिषेधेन तदप्रसंगात् न द्वितीयानुपपत्तिरित्यर्थः । इदमपि षष्ठीमात्रस्य तृन् योगे निषेधः स च नित्यमित्यभिप्रेत्योक्तमिति न कश्चित् क्षुद्रोपद्रवः ॥ समाप्त्यर्थ इति ॥ ऋकृशात

व्याख्यानसमाप्त्यर्थ इत्यर्थः ॥ एकानुपूर्वीति ॥ एकानुपूर्वीस्थऋक्शतदर्शनमिति तत्वादिति भावः ॥ १० ॥

गृहीतार्थेति ॥ विचित्रा तद्धितागतिरिति वचनादिति भावः ॥ ठगिति ॥ ठस्येकः । कित्वात् आदिवृद्धिः यस्येति चेत्यकारलोप इति भावः । मन्दो मद इति । यद्यपि । छन्दस्यसानजित्यनुवृत्तौ ऋंजिवृद्धिमन्दिसहिभ्यः किदित्यसानच् प्रत्ययो मदिस्तुतिभेदेत्यादि धातोर्विहितस्य च ताच्छील्यार्थे व्याख्याने नित्यसत्सुखत्वमपि लभ्यते तथापि तदपरित्यागे प्रकारान्तरेण शिक्षणायेत्थं व्युत्पादितमिति ध्येयम् । णुस्तुतावित्यतो चो यदिति यत्प्रत्यये गुणे वान्तो यि प्रत्यये इत्यवादेशे नव्यमिति एतत्सिध्यतीति भावः । तिरेति । यद्यपि इत्वोम्यां गुण वृद्धी पूर्वविप्रतिषेधेन इत्युक्तत्वात् तरतेर्भौवादिकतया शपि गुणविषयत्वेन गुण एव स्यात् नेत्वं तथापि व्यत्ययेन शब्विकरणानां शस्य ङित्वेन गुणाप्रयुक्ते ऋत इद्धातोरितीत्वे परत्वेऽतो हेरिति हेर्लुकि तिरेति रूपसिद्धिरिति भावः । न च विपूर्वस्यैव तरतेर्दानार्थत्वप्रसिद्धिः छन्दसि केवलस्यापि दाने प्रयोगात्तदर्थतया व्याख्यानमिति भावः । सहस्रसा इत्येतत् व्युत्पादितमधस्तात् । कृधि कुरु इति । बहुलं छन्दसीति । शपो लुकि हेर्धिरादेश इति भावः ॥ ११ ॥

वृद्ध इति । वृधु वृद्धौ क्तप्रत्ययः । उदितो वेति इटः क्त्वाप्रत्यये विकल्पितत्वात् क्यस्य विभाषेति निष्ठायमिडभाव इति भावः । आयो लाभ इति । छंदसीण इति उणि वृध्ययादेशयोः आयुरिति सिध्यति । तस्यार्थः आय इति भाष्यानुसारेण लाभ इत्युक्तम् ॥ वृद्धय इति ॥ वृधधातोः त्किनिति तुतत्रतसिसुसरकसेषु इडभावः । जुष्टा इति । श्वीदितो निष्ठायामितीडभावः । जुष्टय इति । जुषी प्रीतिसेवनयोरित्यस्मात् क्तिनितु तत्रेति इडभावः इति बोध्यम् ॥ १२, २०, १० ॥

## टीकाविवृतिः

सुविवृतम् । त्वादातमित्यत्र प्रत्ययोत्तरपदयोश्चेति मपर्यन्तस्य त्वादेशे युष्मदस्मदोरिति योग विभागेन तस्याकारादेशेन त्वाशब्दः पूर्वं व्युत्पादितः । दातमित्यत्र यदिदाण् दाने इति गृह्यते तदा तस्य दाधाघ्वदाबिति घुसंज्ञया दोदद्धोरिति सूत्रेण ददादेशः स्यात् । यदिच दाप् दैपोरन्यतरद्गृह्यते तदा अदाबिति घुत्वप्रतिषेधात् ददादेशाभावेपि तयोर्लवनशोधनयोः पाठात् दत्तमिति भाष्योक्तार्थानुपपत्तिरित्यतः पक्षद्वयेपि समाधानमाह ॥ सर्वेविधय इति ॥ घुसंज्ञस्य दाधातोस्तादौ किति प्रत्यये ददादेश इति सूत्रार्थः ॥ अजगतिक्षेपणयोरिति ॥ अस्मात् हंतेरज्धुरचेत्युक्तोऽच्प्रत्ययो बाहुलकत्वादस्मादपि कर्मणि जातः । अजेर्व्यघञपोरिति वीभावाभावस्तु छान्दसत्वाद्बाहुल-

कत्वाद्वा बोध्य इति भावः। इति धात्वर्थं मनसि निधाय भाष्येऽकाल्यमित्युक्तमिति भावेन तदनूद्य व्याचष्टे ॥ अकाल्यमक्षेप्यमिति ॥ अत्याज्यमित्यर्थः। कलबिलक्षेप इति धातोरित्याशयः ॥ निर इति ॥ निर्निःशेषनिषेधयोरिति विश्वोक्तेरिति भावः ॥ अजेर्गत्यर्थत्वमाश्रित्यार्थान्तरमाह ॥ अनपहार्यं चेति ॥ अन्यैरप्राप्यमित्यर्थः। ऋचः पूर्वोत्तरार्धार्धयोर्हेतुहेतुमद्भावसूचनाय भाष्ये हिशब्द इत्याशयेनाह ॥ हि यस्मादिति ॥ गवां व्रजं ज्ञानसमूहमिति ॥ गमेर्डो इति डोप्रत्ययो भावे गत्यर्थानां ज्ञानार्थत्वादिति भावः। बाह्यज्ञानस्यानित्यत्वाद्विवरणप्रार्थनं कथमित्यत आह ॥ स्वरूपभूतमिति ॥ अपवृधि अपगतावरणं कुरु इत्यक्षरार्थं मनसि निधाय भाष्योक्तं तात्पर्यार्थमनुवदति ॥ विवृण्विति ॥ कृणुष्व कुर्विति ॥ डुकृञ्करणे इत्यतः क्रियाफलस्य परगामित्वाद्व्यत्ययेनात्मनेपदं व्यत्ययेन श्नुप्रत्ययश्चेति भावः ॥ सम्बुध्यन्तमिति ॥ ऋचि अद्रिव इति पदमाष्टमिकामन्त्रितस्वरेण सर्वानुदात्तत्वश्रवणात्सकारान्तम्। अत एवाद्रिवा इति भाष्ये सविसर्गो दीर्घान्तो हरिरित्येतद्विशेषणत्वेनोक्त इति भावः।

कर्मणिकिरिति ॥ औणादिक इति शेषः। आङो ह्रस्वत्वं तु बाहुलकं बोध्यम्। आदृगमेति किप्रत्ययेतु लिड्वद्भावाद्धातोः प्राप्तं द्वित्वं छान्दसत्वान्न। पृषोदरादित्वाच्चाङोह्रस्वत्वमिति भावः। प्राणस्तद्वर्तक इति भाष्यानुसारेण व्युत्पादयति ॥ अन्तर्णीतेति ॥ वृतुवर्तन इत्यतो सुनो डित्त्वाट्टिलोप इति भावः ॥ छेदनाद्वारणादिति ॥ अद्रीणां पक्षस्य छेदनादद्रीणां स्वपतनेन लोकनाशकत्वस्य निवारणादित्यर्थः ॥ वृश्चतेरिति ॥ असुनः कित्वात्सम्प्रसारणं सम्प्रसारणाश्रितं च कार्यं बलीय इति परिभाषया सम्प्रसारणे पश्चाट्टिलोप इति भावः। इति शब्दस्याद्रिवः शब्दनिष्पत्तिरित्यध्याहृतेनान्वयो ज्ञेयः ॥ ७ ॥

नहित्वा। कंड्वादिरिति। कंड्वादेराकृतिगणत्वाद्वृद्ध्यर्थाद्दघङ्शब्दादकारान्ताद्यकि अकृत्सार्वधातुकयोरिति दीर्घे ङित्वादात्मनेपदमिति भावः। वर्धमानमिति भाष्येण विष्णोर्विकारप्रतीतेस्तत्तात्पर्यमाह ॥ सर्वगतमिति ॥ हेतुगर्भविशेषणम्। सर्वगतत्वादित्यर्थः। रोदसी इति द्विवचने नद्वित्वसिद्धेरुभे इत्यस्य भाष्योक्तं तात्पर्यमिति भावेनाह ॥ उभेसहिते इति ॥ उभे अभ्यस्तमित्यत्र शाब्दिकैस्तथाव्याख्यानादिति भावः ॥ व्याप्तिकर्मस्विति ॥ इन्वतिननक्षुः इति पाठादित्यर्थः। इविव्याप्ताविति भौवादिकाल्लटि इदित्वान्नुमिति भावः ॥ तयोरपीति ॥ श्रीभूम्योरपि व्याप्तत्वाद्व्याप्तविष्णुप्राप्त्यभावः कथमित्यर्थः ॥ त्वत्प्रसादेन विनेति ॥ अनेनाध्याहृतस्याप्रसादत इत्यस्य न सम्प्राप्नुत इति पूर्वेणान्वयो ज्ञाप्यते। स्वः स्वर्गपरलोकयोरिति विश्वोक्तेः स्वर्गस्य सुखवत्त्वात्स्वःशब्देन लक्षणया सुखं गृह्यत इति भावेनाह ॥ स्वर्वतीः

सुखवतीरिति ।। अपः प्रजा इति ।। अपूशब्दस्य कर्मनामसु पाठात्कर्मकर्तृत्वात्प्रजाः लक्षणयापूशब्देनोच्यन्त इति भावः । जेष इत्यत्र विध्याद्यर्थस्यायोगादजय इत्युक्तं भाष्ये तद्घटयति ।। लङर्थे लेडिति ।। जिधातोर्मध्यमपुरुषसिपोडागमे इकारलोपे च शबपवादस्य सिब्बहुलं लेटीति सिपः षत्वं धातोर्गुणश्चेति भावः ।। मुक्तादीनां मिथ्याज्ञानाभावाद्युद्धाद्यभावेन जयोक्तिः कथमित्यत आह ।। त्वद्वशत्वतस्तासामिति ।। मुक्तादिप्रजानाम् । धूनुहि कंपयेति ।। धूञ् कम्पन इत्यतः स्वादित्वात् श्नुः उतश्च प्रत्ययादसंयोगपूर्वादिति हेर्लुङ्च । तत्सूत्रे छन्दसि वेति वार्तिकोक्तेरिति भावः । पूर्वं ज्ञानानीति विशेष्योक्तेर्विशेष्यनिघ्नस्योचा इति शब्दस्य कथमन्वय इत्यत आह ।। गाइत्येतदपेक्षयेति ।। श्रौतेन गाव इत्यनेनान्वय इति भावः ।। यथायोगमिति ।। इदं कृतं व्याख्यानं विष्णाविन्द्रे च यथायोग्यं सम्बन्धनीयमित्यर्थः । हे इन्द्र विष्णो उभेरोदसी श्रीभूमी ऋघायमाणं सर्वगतं त्वा त्वत्प्रसादेन विना नहीन्वतः स्वर्वतीः सुखवतीरपो मुक्तान् जेषः त्वद्वशं करोषिच । अस्मभ्यं गाः ज्ञानानि सन्धूनुहीति विष्णौ । पुरंदरेतु हे इन्द्र शचीपते उभेरोदसी द्यावापृथिव्यभिमानिन्यौ देवते ऋघायमाणं ऐश्वर्यादिना वर्धमानं त्वां नहीन्वतः त्वत्सदृशैश्वर्यं न प्राप्नुत इति यावत् । तथास्वर्वतीः स्वर्गवासिन्यः अपः प्रजाः जेषः त्वद्वशाः परोषि । अतो अस्मभ्यं गाः प्रसिद्धाः कशुरूपाः सन्धूनुहीति योजनीयमिति भावः ।। ८ ।।

आश्रुत्कर्णः ।। शृणुत इतीति ।। श्रुधातोः कर्तरि क्विपि ह्रस्वस्येति तुगिति भावः । ऋचि करणे कर्तृत्वोपचार इति भावेन भाष्ये करणे ल्युट् प्रयुक्तः आङश्च बहुत्वे तात्पर्यमिति भावेनाह ।। इति यावदिति ।। हवमिति ।। ह्वेञो बहुलं छन्दसीति सम्प्रसारणे ऋदोरबित्यबिति भावः । नु इत्यस्य क्षिप्रनामसु पठितस्य तात्पर्यमाह ।। अद्येति ।। चिदित्यस्यैवेत्यर्थः । युजसमाधावित्यतः सम्पदादित्वाद्भावे क्विबिति भावेनाह ।। समाधिलक्षणादिति ।। अन्तः प्रान्तेंऽतिके नाश इति विश्वोक्तेरन्ते समीपे रमत इत्यन्तरमिति विग्रहमाश्रित्याह ।। अन्तरं सन्निकृष्टमिति ।। स्वमनस इति शेषः । भाष्योक्तं तात्पर्यमित्याह ।। प्रियमिति यावदिति ।। कृष्व कुर्विति ।। करोतेः क्रियाफलस्य कर्तृगामित्वाभावाद्व्यत्ययेनात्मनेपदे तथैव शपि तस्य बहुलं छन्दसीति लुगिति भावः ।। च शब्दा इति ।। भाष्यस्थाः त्रयश्चकाराः क्रियात्रयस्यान्योन्यसमुच्चयार्था इत्यर्थः ।। ९ ।।

विद्मा हित्वा ।। शुक्रलेमूषिके श्रेष्ठे सुकृते वृषभे वृष इत्यमरोक्तेः श्रेष्ठवाचकवृषशब्दस्य भाष्योक्त तात्पर्यार्थमनुवदति ।। वृषः शक्तिमानिति ।। वृषु सेचन इत्यत इगुपधज्ञेति कः ।। नकारागम इति ।। वर्णागमो वर्णविपर्ययश्चेत्युक्तेरिति भावः ।। नकारान्ताद्वेति ।। कनिन्युवृषीति

कनिन्प्रत्ययान्तादित्यर्थः ॥ तर्हि नलोपः प्रातिपदिकान्तस्येति स्यादित्यत आह ॥ नलोपाभाव इति ॥ अयस्मयादित्वेन भसंज्ञया पदसंज्ञयाबाधादिति भावः । वाजेष्वित्यस्य भाष्ये युत्स्विति यत्प्रतिपदं तद्व्याख्याति ॥ युद्धेष्विति ॥ युधसम्प्रहार इत्यतः सम्पदादित्वाद्भावे क्विपि धान्तः शब्दो भाष्योक्तः । तस्माद्यस्य च भावेन भावलक्षणमिति सप्तमी । प्राप्तेषु सत्स्विति शेषः । ह्वेञो ल्युटि सम्प्रसारणे हवनमिति रूपम् । हवनं शृणोतीति हवनश्रुत् शृणोतेः कर्तरि क्विप् तं हवन श्रुतमिति विग्रह इति भावेनाह ॥ भक्ताह्वानस्येति ॥ विद्म विद्मः इति ॥ विदो लटो वेति णलाद्यादेशविकल्पाच्छब्लुकि रूपद्वयमिति भावः ॥ सहस्रसा इति ॥ षणुदान इत्यस्माद्धातू नामनेकार्थत्वेन लाभार्थकाज्जनसनखनक्रमगमो विडिति विटि विड्वनोरनुनासिकस्याऽऽदि-त्यात्त्वमिति भावः । षणुलाभ इति महाव्याकरणपाठाश्रयणेन वाऽयमर्थो बोध्यः । अत एव कर्मनिर्णयटीकायामेवं पठितमिति ज्ञेयम् । अतिलाभयुक्तामिति ॥ अति बहुलाभयुक्तामित्यर्थः । भाष्ये कर्तृकर्मणोरिति षष्ठी प्राप्तेराह्वानमिति कथमित्यत आह ॥ तृन्निति ॥ नलोकेति तृन्योगे षष्ठीनिषेधादिति भावः ॥ द्वितीयोपपत्तिरिति ॥ आह्वानमित्यत्रेति शेषः ॥ ऋक् शतेति ॥ ऋक्शतव्याख्यानसमाप्त्यर्थ इत्यर्थः ॥ तत्कथमिति ॥ तत्तस्मात् ऋग्द्वयस्याधिक्यादित्यर्थः । आनुपूर्व्यन्तरस्थे इति ॥ मधुछन्दसा उपवेदे एकस्मिन् भागे ऋचां यः क्रमस्तेन क्रमेण शतसंख्याका ऋचो दृष्टाः । आतून इति ऋग्द्वयं तु तेनैव दृष्टभागान्तरस्थमिति भावः ॥ एकानुपूर्वीति ॥ शतर्चिताया एकभागस्थऋक्शतद्रष्टृत्वनिमित्तत्वादित्यर्थः । नच उपवेदोक्तानां शतसंख्यानामृचामुपवेदोक्तक्रमेणैव मधुछन्दसा दृष्टत्वे आसु ऋक्षु सूक्तभेदाभावः शंक्यः । सूक्तं त्वनारतमित्यत्र मूलवेदोक्तक्रमेण यासामुपवेदे पाठस्तासामेवैकसूक्तत्वस्य व्याख्याततत्वे-नोपवेदोक्तक्रमस्य सूक्तनियामकत्वाभावात् । देशकालेति ॥ देशान्तरे कालान्तरेऽवस्थान्तरे चैतदृग्द्वयस्य दृष्टत्वादस्य मधुछन्दसः शतर्चिता नबाधितेत्याशयेनाहेत्यर्थः । यज्ञभूमावाहुति-ग्रहणार्थमागतेन्द्रदर्शनसमये याजमान्याद्य वस्थायामेतयोर्ऋचोर्दृष्टत्वादन्यत्र ऋक्शतस्य दृष्टत्वाद्देशैक्यादेश्च शतर्चितायां निमित्तत्वादिति भावः । सूक्तं त्वनारतं प्रोक्तमित्युक्तेः स्थानान्तरस्थऋचोरत्र पठने एकसूक्तत्वभङ्गो न शङ्क्यः । अन्यथात्वं च तत्र स्यादावापोद्वा-पतस्त्वृचामिति तदपवादोक्तेः ॥ १० ॥

आतून इन्द्र । अदित्येति ॥ मात्रेति भाष्येणान्वयः । गाधित्वे कौशिकत्वमुपपादयति ॥ कुशिकापत्यत्वादिति ॥ कुशिकशब्दादृष्यंधकेत्यण् । इञोपवादः । अनेन कुशिकपुत्रत्वं विश्वामित्रस्याङ्गीकृत्येन्द्रस्य तद्रूपेणोत्पत्तिमङ्गीकृत्य कुशिकपुत्रत्वव्युत्पादनं यत्केषांचित्तन्निरस्तं

ज्ञेयम् । कुशिकस्त्वैषीरथिरिन्द्रतुल्यं पुत्रमिच्छन्ब्रह्मचर्यं च चारतस्येन्द्र एव गाधीपुत्रो जज्ञे गाधिनोवि श्वामित्र इत्यनुक्रमणिकाविरोधात् । पुराणादिविरोधाच्च । गृहीतार्थ इति ॥ शेष इत्यधिकारे तद्धिता इति वचनादिति भावः ॥ मदिस्तुतिमोदमदस्वप्नकान्तिगतिष्विति धातोर्मुख्यत्वात् नित्यमोदार्थात् छन्दस्यसानजित्यतोऽसानजित्यनुवृत्ते ऋंजिवृधिमन्दिसहिभ्यः किदिति सूत्रेण कर्तर्यसानच्प्रत्यये चित्वादन्तोदात्तत्वेन नित्यसुखित्वार्थे मन्दसान इति रूपसिद्धेः स्पष्टत्वात्प्रकारान्तरमाह ॥ मन्दोमद इति ॥ मदीहर्षे भावेकप्रत्ययः सुखमित्यर्थः । इदित्त्वाभावान्नुम आधिक्यान्नित्यत्वं तस्यार्थ इति भावः ॥ यस्यासाविति ॥ नासौ बहुव्रीहि समासविग्रहः प्रदर्श्यते येन बहुव्रीहौ प्रकृत्या पूर्वपदमिति पूर्वपदप्रकृतिस्वरः शङ्क्येत किंतु मत्वर्थीय विग्रहः । तथाच मन्दस्य सानो मन्दसानः सोऽस्यास्तीत्यर्शाद्यचि चित्वादन्तोदात्तत्वमिति भावः । मदेः स्तुत्यादौ पठितस्येदित्त्वान्नुं सिद्धेस्तस्येह ग्रहणे बाधकाभावादरुच्या पक्षान्तरमाह ॥ यद्वेति ॥ वनषणसम्भक्ताविति धातोर्मन्दस्य सुखस्य सानः सम्भजनं नित्यानुभवोऽस्यास्तीति मन्दसान इत्यर्थः ॥ संशब्देनेति ॥ वनषणसम्भक्ताविति धात्वर्थनिर्देश इति शेषः । बृहस्पते इन्द्राग्नी इत्यादाववग्रहाभावेन मुख्यपदान्तर्गतपूर्वभागस्यावान्तरपदसंज्ञायां तत्रावग्रहस्या नियतत्वान्नात्रावग्रहः शङ्क्यः । ऋचितु शब्दस्य विशेषार्थत्वात्प्रकृतोपयोगिविशेषमाह ॥ तुक्षिप्रमिति ॥ णुस्तुताविति ॥ अचोयदिति यत्प्रत्यये प्रत्ययस्वरापवादं तित्स्वरितमिति स्वरितं बाधित्वा यतोनाव इत्याद्युदात्तत्वे उदात्तादनुदात्तस्य स्वरित इति स्वरितः । अस्यासिद्धत्वापूर्वस्य सन्नतरः । तित्स्वरे सतितु तस्य षाष्ठिकत्वेनासिद्धत्वाभावात्पूर्वस्य सन्नतरः स्यादिति भावः । तॄप्लवनतरणयोरित्यतो लोटि शपि इत्वोत्वाभ्यां गुणवृद्धिपूर्वविप्रतिषेधेनेति गुणे अतोहेरिति हेर्लुकि तरेति रूपम् । तत्र तृतीयोऽतिशय इति तकाराकारस्येकार इति भावेन प्रसुशब्दसहितस्य तिरेत्यस्यार्थमाह ॥ अतिप्रकर्षेण देहीति ॥ वितरतीत्यत्र दानार्थत्वदर्शनादुपसर्गाणां तु द्योतकत्वादिति भावः ॥ ११ ॥

परित्वा ॥ भाष्ये त्वा इमा इत्यत्राद्गुण इति न गुणः संहितायामित्यनुवृत्तेः प्रकृते सन्धेर विवक्षितत्वादिति ज्ञेयम् ॥ हे गिर्वण इति ॥ गीर्भिः स्तुत्येत्यर्थः । तसेः सार्वविभक्तिकत्वात्सप्तम्यं तात्तसौ ऋचि विश्वत इत्यत्र विशेष्यः कालोध्याहार्य इति भावेनाह ॥ विश्वतः सर्वदेति ॥ देशतः कालतो व्याप्तो वृद्धः तत्र मुख्यत्वात्सर्वदेशकालव्याप्तिर्गृह्यत इति भावेनाह ॥ वृद्धः पूर्ण इति ॥ छन्दसीण इति कर्मण्युणि आयुशब्दोलाभार्थ इति भावेनाह ॥ आयोलाभ इति ॥ अत्रायुरिति शेषः । तथाच वृद्धः पूर्ण आयुरायो लाभोयस्यासौ वृद्धायुरित्युक्तं भवति । गिरां भगवद्बुद्धि

स्वरूपत्वस्य बाधितत्वादाह ॥ तद्वृद्धीति ॥ तथाच वृद्धिं रूपयन्ति निरूयन्ति प्रकाशयन्तीति वृद्धिरूपा इति भाष्यस्यार्थ उक्तो भवति ॥ ऋगुत्तरार्धे वृद्धय इत्यादिविशेषणस्य विशेष्यानुक्तेः पूर्वार्धस्थगिर इत्यस्यानुवृत्त्याश्रयेण भाष्ये पुनर्गिर इत्युक्तमिति भावेनाह ॥ नोगिर इति ॥ १२; २०, १० ॥ विंशोवर्गः ॥

## ऋक्संहिता पदपाठसहिता

(१०३) इन्द्रंविश्वाअवीवृधन्त्समुद्रव्यचसंगिरः ॥ रथीतमंरथीनांवाजानांसत्पतिं पतिम् ॥ १ ॥

(प०) इन्द्रम् । विश्वाः । अवीवृधन् । समुद्रऽव्यचसम् । गिरः ॥ रथिऽतमम् । रथिनाम् । वाजानाम् । सत्ऽपतिम् । पतिम् ॥ १ ॥

(१०४) सख्येतइन्द्रवाजिनोमाभेमशवसस्पते ॥ त्वामभिप्रणोनुमोजेतारमपराजितम् ॥ २ ॥

(प०) सख्ये । ते । इन्द्र । वाजिनः । मा । भेम । शवसः । पते ॥ त्वाम् । अभि । प्र । नोनुमः । जेतारम् । अपराऽजितम् ॥ २ ॥

(१०५) पूर्वीरिन्द्रस्यरातयोनविदस्यन्त्यूतयः ॥ यदीवाजस्यगोमतः स्तोतृभ्योमंहते‍मघम् ॥ ३ ॥

(प०) पूर्वीः । इन्द्रस्य । रातयः । न । वि । दस्यन्ति । ऊतयः ॥ यदि । वाजस्य । गोऽमतः । स्तोतृऽभ्यः । मंहते । मघम् ॥ ३ ॥

(१०६) पुरांभिन्दुर्युवाकविरमितौजाअजायत ॥ इन्द्रोविश्वस्यकर्मणोधर्तावज्रीपुरुष्टुतः ॥ ४ ॥

(प०) पुराम् । भिन्दुः । युवा । कविः । अमितऽओजाः । अजायत ॥ इन्द्रः । विश्वस्य । कर्मणः । धर्ता । वज्री । पुरुऽस्तुतः ॥ ४ ॥

(१०७) त्वंवलस्यगोमतोऽपावरद्रिवोबिलम् ॥ त्वादेवेअबिभ्युषस्तुज्यमानासआविषुः ॥ ५ ॥

(प०) त्वम् । वलस्य॑ । गोऽमतः । अप॑ । अवः । अद्रिऽवः । बिल॑म् ॥ त्वाम् । देवाः । अबि॑भ्युषः । तुज्यमा॑नासः । आविषुः ॥ ५ ॥

(१०८) तवाहंशूररातिभिःप्रत्यांयंसिन्धुमावदन् ॥ उपांतिष्ठन्तगिर्वणोविदुष्टेतस्य॑कारवः ॥ ६ ॥

(प०) तव॑ । अहम् । शूर । रातिऽभिः । प्रति॑ । आयम् । सिन्धु॑म् । आऽवद॑न् ॥ उप॑ । अतिष्ठन्त । गिर्वणः । विदुः । ते । तस्य॑ । कारवः ॥ ६ ॥

(१०९) मायाभिरिन्द्रमायिनंत्वंशुष्णमवांतिरः ॥ विदुष्टेतस्यमेधिरास्तेषाश्रवांस्युत्तिर ॥ ७ ॥

(प०) मायाभिः । इन्द्र । मायिन॑म् । त्वम् । शुष्ण॑म् । अव॑ । अतिरः ॥ मेधिराः । तेषा॑म् । श्रवांसि । उत् । तिर ॥ ७ ॥

(११०) इन्द्रमीशांनमोजंसाभिस्तोमांअनूषत ॥ सहस्रंयस्यंरातयंउतवासन्तिभूयंसीः ॥ ८, २१, ११, ३ ॥

(प०) इन्द्र॑म् । ईशांनम् । ओजंसा । अभि । स्तोमाः । अनूषत ॥ सहस्र॑म् । यस्य॑ । रातयः । उत । वा । सन्ति॑ । भूय॑सीः ॥ ८, २१, ११, ३ ॥

## ऋग्भाष्यम्

अष्टावृचः पुनस्तेन दृष्टा अन्यत्र गास्तपः । कुर्वता ।
सम्यगुद्रिक्त गुणव्यक्तिस्तथाभिधः ॥ १ ॥ ॥ २ ॥
प्रथमानि महत्त्वेन ते दानान्यवनानि च ।
न भिद्यंतेन नश्यन्ति गोमदन्नं यशस्तथा ।
यदि मंहते ददातीशः ॥ ३ ॥ ॥ ४ ॥
वलस्तिर्यग्गतिर्धियः ।
वाचामन्यार्थबुद्धेस्तु बिलं मूलं तमो हियत् ।
तदपावृतवांस्त्वं च प्रदर्श्य विनिवार्य च ।
त्वां हि देवाभयापेताः प्रेर्यमाणास्त्वयैव च ।
छाद्यमानं गिरा दैत्यैररक्षन्निव सद्गिरा ।
इन्द्रस्य गोसवार्थे च समुत्सृष्टा जगत्यपि ।

चर्तुं गावो हृता दैत्यैः सरमारक्षिताः पुरा ।
तस्याः स्वसृत्वमुक्त्वैव तयोच्छिष्टं च गोपयः ।
तदर्थं पणयो नाम ते दैत्या बलपूर्वकाः ।
इन्द्रेण निहताः पश्चाज्ज्ञात्वाच सरमाकृतम् ।
ताडयित्वा पदा वक्त्रात्सृते पयसि तां भयात् ।
शरणागतां प्रेषयित्वा दूत्येन पणिनां पुनः ।
भित्वा गिरिव्रजं तं च गावो यत्र प्रतिष्ठिताः ।
निःसारिताः पुनस्ताश्च गोसवेनेष्टमेव च ।
तदा देवा अभीत्यैव परितो जुगुपुः पतिम् ॥ ५ ॥
तव दानैरहं सिन्धुं नदीं प्रत्यागमं पुनः ।
त्वामावदन्स्तुतिपदैर्यज्ञदीक्षार्थमुद्यताः ।
उपातिष्ठन्त कर्तारो विदुस्त्वां ये गिरोदित ॥ ६ ॥
शक्तिभिः शक्तिमन्तं त्वां शोषकं वृत्रमातिरः ।
तमोवा त्वां विदुर्मेधारतास्तेषां श्रवांसिच ।
विद्या उच्चैस्तरां देहि ॥ ७ ॥
स्तुवन्ति त्वां सहौजसा ॥ ८, २१, ११, ३, ॥

## ऋग्भाष्यटीका

अष्टावृच इत्यस्यापि पूर्ववच्छंकापरिहारौ । अन्यत्रगा आनुपूर्व्यंतरगाः । अनेनेन्द्रमष्टौ जेता माधुच्छंदस इति जेतानाममधुच्छन्दसः पुत्रोष्टाविन्द्रं विश्वा इत्याद्या ऋचोऽपश्यदित्येतदपि निरस्तं भवति ॥ उपपत्तिं तूत्तरत्र वक्ष्यति । इन्द्रं विश्वा । सम्यक् । सम्यगुद्रिक्तानां गुणानां व्यक्तिर्यस्य स तथाभिधः । समुद्रव्यचाः समुत्पूर्वाद्रिचेर्डः । गुणानां योग्यतया सम्बन्धः । व्यचःशब्दो व्याप्तिवद्व्यक्तेरपि वाचकः । समुद्रव्यचसं रथिनां रथितमं वाजानामन्नानां पतिं सत्पतिं सतां पतिं इन्द्रं विश्वागिरः सर्वा वेदवाचोऽवीवृधन् । प्रकाशितवत्यः ॥ १ ॥

सख्येते ॥ हे शवसस्पते सुखस्य बलस्य वा पते इन्द्र ते सख्ये सति त्वदनुग्रहे सति वाजिनो युद्धवन्तो वयं माभेम माभैष्म तदर्थं च परेषां जेतारं स्वयमपराजितं त्वामभिप्रणोनुमः प्रकर्षेण पुनः पुनः स्तुमः ॥ २ ॥

पूर्वीरिन्द्रस्य । प्रथमानि । इन्द्रस्य ते तव रातय ऊतयश्च पूर्वीः पूर्वाः । दानान्यवनानिच प्रथमानि । कथम् । महत्त्वेन कारणेन । किञ्च । न विदस्यन्ति नविदस्यन्ते । दसिर्विभेदनार्थः । न भिद्यन्ते क्षयार्थो वा न नश्यन्ति । स इन्द्र ईशो यदि गोमतो वाजस्य गोमदन्नं मघं यशश्चेत्यादिकं स्तोतृभ्यो मंहते मंहतिर्दानार्थः । ददाति तर्हि तानि दानानि प्रथमानीत्यादि सम्बन्धः ॥ ३ ॥

पुरां भिन्दुः । शरीरपुराणां शंबरस्य पुराणां च भेत्ता युवाकविः सर्वज्ञोऽभितमोजो यस्यासावमितौजाः विश्वस्य कर्मणो धर्ता सर्वकर्मणां प्रेरको वज्री पुरुभिः स्तुतः पुरुष्टुत इन्द्रोऽजायत यज्ञे अभिव्यक्तोऽभवत् ॥ ४ ॥

त्वं वलस्य । ऋचं परमेश्वरे योजयितुं वलशब्दार्थं तावदाह ॥ वल इति ॥ वलतिः परिवर्तनार्थः । अतो वलस्तिर्यग्गतिः धिय इति शेषः । धियो मनसो यदर्थवैपरीत्येन विषयीकरणं स वल इत्यर्थः । धियो ज्ञानस्य वा । विपरीतज्ञानमिति यावत् । इदानीमृचं व्याचष्टे । वाचामिति । हे अद्रिवस्त्वं गोमतः गोसम्बन्धिनो वलस्य मिथ्याज्ञानस्य वेदवाचामन्यार्थबुद्धेरिति यावत् । यद्बिलं मूलं कारणं तमोऽज्ञानं तदपावः अपावृतवानसि । छान्दसो विकरणलोपः । उत्सारितवानसि । कथम् । प्रदर्श्य विनिवार्य च । तत्वप्रदर्शनेन निराकृत्येत्यर्थः । ततश्चाज्ञान मिथ्याज्ञानयोर्नष्टयोर्देवाः सत्त्वप्रकृतयः पुरुषा अबिभ्युषः । प्रथमार्थे द्वितीया । अबिभीवांसः संसारभयापेतास्तुज्यमानास्त्वयैव प्रेर्यमाणाश्च त्वामाविषुः । दैत्यैर्दुष्टगिराछाद्यमानं सद्गिरा अरक्षन्निवहि । प्रकाशितवन्त इति यावत् । एतामृचमिन्द्रपरतया व्याकुर्वन्नितिहासगर्भत्वात्तमाह ॥ इन्द्रस्येति ॥ इन्द्रस्य गावः गोसवो यज्ञविशेषः । जगति चर्तुं चरितुं समुत्सृष्टाः । इन्द्रस्यापीति सम्बन्धः । सरमा देवशुनी तस्याः स्वसृत्वमुक्त्वैव स्वसृत्वादिमृषोक्त्या तां प्रलोभ्य हृताः तदर्थं तन्निमित्तम् । सरमाकृतं व्यापारं कथं ज्ञात्वा पदा ताडयित्वा । ततोपि कथम् । वक्त्रात्पयसि सृते सति । पणिनां सकाशम् । गिरिव्रजं गिरिकूटम् । ज्ञात्वेत्यादीनां भित्वेत्यंतानां इन्द्रेण दैत्या निहता इत्यन्वयः । इष्टमेव चेत्यन्तेन पूर्वार्धो व्याख्यातः । हे अद्रिवस्त्वं गोमतो गोभिर्युक्तस्य बलस्य दैत्यस्य बिलं गिरिकूटाधस्तनं विवरमपावोऽपावृतवानसीति । तदा देवास्तुज्यमानास्त्वयैव प्रेर्यमाणा अबिभ्युषस्त्वामाविषुः अभीत्यैव स्वपतिं त्वां परितो जुगुपुः ॥ ५ ॥

तवाहम् ॥ तवदानैः । हे शूर इन्द्र अहं तव रातिभिर्दानैर्निमित्तैः सिन्धुं नदीं प्रत्यायं प्रत्यागमम् । यज्ञदीक्षार्थमुद्यत इति शेषः । आगत्य पुनरावदन् स्तुतिरूपैर्वेदपदैस्त्वामावदन् सम्यक् स्तुवंश्च जातोस्मि । यद्वा । सर्वदा त्वामावदन्नहं पुनः सिन्धुं प्रत्यायमिति योज्यम् । हे गिर्वणो

गिरा सम्भजनीय वेदगिरोदित तस्य ते तं त्वां ये विदुस्ते कारवः कर्तारः ऋत्विजस्तत्रोपातिष्ठन्त मन्त्रैस्त्वामपूजयन् ॥ ६ ॥

मायाभिः । शक्तिभिः । हे इन्द्र त्वं मायिनं शक्तिमन्तं व्रीह्यादित्वात्साधुः । शुष्णं शोषकं शुषेर्नङ् । वृत्रमिति यावत् । मायाभिः शक्तिभिरवातिरः तिरतिर्वधकर्मा । हतवानसि । तमो वेत्यध्यात्मं मायिनं शुष्णमिति तमोऽज्ञानमुच्यते । शेषं समानमिति । किञ्च । ये मेधिराः मेधारताः । तृतीयस्यातिशयार्थत्वात् । तस्य ते तं त्वां विदुः । तेषां श्रूयन्त इति श्रवांसि विद्याः उत्तिरः उच्चैस्तरां देहि ॥ ७ ॥

इन्द्रमीशानम् । स्तुवन्ति । यस्येन्द्रस्य सहस्रमुतवाऽतोपि भूयसीर्भूयस्यो रातयो दानानि सन्ति तमीशानमिन्द्रं त्वामोजसा ओजःप्रभृतिभिर्गुणैः सहस्तोमा । स्तुतिविशेषा अनूषत । अभ्यनूषत सदा स्तुवन्ति ॥ ८, २१, ११, ३ ॥

## मन्त्रार्थमञ्जरी

अथ 'इन्द्रं विश्वा' इत्यष्टर्चमेकवर्गात्मकमैन्द्रमेकादशं सूक्तम् । जेतृषिकत्वमस्यानुक्रमणिकोक्तं नास्ति, भाष्यविरोधात् । ऋषिः प्रागेवोक्तः । एतदप्यनुष्टुप्छन्दस्कम्' तद्देवता तूक्तैव । समुद्रव्यचसम्, सम्यगुद्रिक्तानां गुणानां व्यचो व्यक्तिर्यस्यासौ समुद्रव्यचास्तम्, समुत्पूर्वाद्रिचेः डः, गुणानां योग्यतयान्वयः, व्यचस्शब्दो व्याप्तेरिव व्यक्तेरपि वाचकः । रथिनाम् रथितमम् । वाजानाम्, अन्नानाम् । पतिम् । सत्पतिम्, सतां पतिम् । इन्द्रम् । विश्वाः गिरः, सर्वा वेदवाचः । अवीवृधन्, प्रकाशितवत्य इत्यर्थः, नित्याभिवृद्धस्य वृद्धिकृतेरयोगात्प्रकाशार्थोऽत्र व्याख्येयः ॥ १ ॥

(हे) शवसः पते, शवसः सुखस्य बलस्य वा पते । इन्द्र । ते सख्ये (सति), त्वदनुग्रहे सति । वाजिनः, युद्धवन्तो वयम् । मा भेम, मा भैष्म, 'ञिभी भये' व्यत्ययेन लुग्विकरणम् । (तदर्थं परेषाम्) जेतारम् (स्वयम्) अपराजितम् त्वाम् । अभि प्र णो (नो) नुमः, प्रकर्षेण पुनः पुनः स्तुमः 'णु स्तुतौ' 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इति यङ्, 'यङोऽचि च' इति तस्य लुकि रूपम् ॥ २ ॥

यदि (इन्द्रः) गोमतः वाजस्य, व्यत्ययेन षष्ठी, गोमदन्नम् । मघम्, यशः । (च) स्तोतृभ्यः । मंहते, 'मंहति, 'मंह दाने' ददाति । (तर्हि) इन्द्रस्य । (ते), तव । रातयः, दानानि । ऊतयः

(च) अवनानि च । पूर्वीः पूर्व्यः, प्रथमानि, महत्त्वेन कारणेन श्रेष्ठानीत्यर्थः । किं च, न विदस्यन्ति, न विदस्यन्ते, 'दसु विभेदने' न भिद्यन्ते, न नश्यन्तीति वार्थः 'दसु (उप)क्षये' इति धातोः ॥ ३ ॥

पुराम्, शरीराख्यपुराणाम्, शम्बरस्य पुराणां च । भिन्दुः भेत्ता । युवा, तरुणः । कविः, सर्वज्ञः । अमितौजाः, अमितमोजो यस्यासावमितौजाः । विश्वस्य कर्मणः धर्ता, सर्वकर्मणां प्रेरकः । वज्री, ज्ञानानन्दवान्, वज्रायुधवान्वा । पुरुष्टुतः, पुरुभिर्बहुभिः स्तुतः । इन्द्रः । अजायत, यज्ञेऽभिव्यक्तोऽभवत् ॥ ४ ॥

(हे) अद्रिवः, प्राणप्रवर्तक विष्णो । त्वम् । गोमतः, मतुपः सम्बन्धोऽर्थोऽत्राभिमतः, गोसम्बन्धिनः । बलस्य, मिथ्याज्ञानस्य, वेदवाचामन्यार्थबुद्धेरिति यावत् । (यत्) बिलम्, मूलकारणमज्ञानम् । (तत्) अप अवः, अपावृतवानसि, तत्त्वप्रदर्शनेनोत्सारितवानसीत्यर्थः, अपपूर्वात् 'वृञ् वरणे' इत्यतो लङ्मध्यमपुरुषैकवचने सिपि श्नुप्रत्यये धातोर्गुणेऽडागमे छान्दसे विकरणलोपे संयोगान्तसकारस्य लोपे रेफस्य विसर्गे च 'अप अवः' इति सिद्धेः । ततश्चाज्ञानमिथ्याज्ञानयोर्नाशे सति– देवाः, सत्त्वप्रकृतयः पुरुषाः । अबिभ्युषः, प्रथमार्थे द्वितीया, अबिभीवांसः, संसारभयापेताः । तुज्यमानासः, त्वयैव प्रेर्यमाणाश्च । त्वाम् । आविषु, दैत्यैर्दुष्टगिराः छाद्यमानं सद्गिराऽरक्षन्निव हि, प्रकाशितवन्त इति यावत् । वलतेः विपरिवर्तनार्थत्वात् 'मनसोऽर्थवैपरीत्येन विषयीकरणं वलम्' इति वलशब्दो विपरीतज्ञानवाची ध्येयः । यद्वा– 'वलस्य' इत्यस्य 'अर्थं वैपरीत्येन विषयीकुर्वतः' इत्येवार्थः । 'ज्ञानस्य' इति शेषो ध्येयः । पुरंदरपक्षे तु (हे) अद्रिवः, पर्वतच्छेदक पुरंदर । त्वम् । गोमतः, गोभिर्युक्तस्य । वलस्य, बलस्य दैत्यस्य (बवयोरभेदात्) बिलम्, गिरिकूटाधस्तनविवरम् । अपअवः । अपावृतवानसि । तदा देवाः । तुज्यमानासः, त्वया प्रेर्यमाणाः । अबिभ्युषः, अबिभीवांसः, त्वाम् आविषुः, अभीत्यैव त्वां परितो जुगुपुरित्यर्थः, 'अव रक्षणे', 'लुङ्' । इन्द्रेण गोसवाख्ययज्ञे क्लृप्तासु जगति चरितुं निसृष्टासु गोषु पणयो नाम दैत्या गोरक्षार्थं नियुक्तां सरमाख्यां देवशुनीं स्वसृत्वादिकं मृषाभूतमेवोक्त्वा प्रलोभ्य तां हित्वा गा अपहृत्य गिरेरधस्तनबिले स्थापितवन्तः । इन्द्रस्तु तत्रागत्य पदा ताडनेन सरमामुखात्पयसि निःसृते सति तत्कृतं पयः पानादिव्यापारं ज्ञात्वा भयेन शरणागतां तामेव दूत्येन पणि(णी)नां सकाशं प्रेष्य गोस्थानं ज्ञात्वा दैत्यान्संहत्य गा निःसार्य गोसवाख्ययज्ञमकरोत् । तदा देवाः दैत्यभयापेतास्त्वां परिवार्यारक्षन्निति भावः । 'ञिभी भये' इत्यस्य क्वसुप्रत्यये तस्य लिड्वद्भावे द्विर्वचने 'बिभीवांसः' इति रूपम् ॥ ५ ॥

(हे) शूर, इन्द्र। अहम् तव। रातिभिः, दानैर्निमित्तैः। (यज्ञदीक्षार्थमुद्यतः सन्) इति शेषः। सिन्धुम् नदीम्। प्रति आयम्, प्रत्यागमम्। आगत्य पुनः आवदन् स्तुतिरूपैर्वेदपदैस्त्वां सम्यक्स्तुवँश्च जातोऽस्मि। यद्वा (सर्वदा त्वाम्) आवदन् अहम् सिन्धुम् प्रति आयम्' इति योजना। (हे) गिर्वणः, गिरा सम्भजनीय, वेदगिरोदित। तस्य ते, षष्ठ्यौ द्वितीयार्थे, तं त्वाम्। (ये) विदुः (ते) कारवः, कर्तारः, ऋत्विजः। (तं त्वाम्) उप अतिष्ठन्त, मन्त्रैस्त्वामपूजयन्, 'उपान्मन्त्रकरणे' इत्युपपूर्वस्य तिष्ठतेः आत्मनेपदम्। सुषामादित्वात् 'विदुष्टे' इति षत्वम्॥ ६॥ (हे) इन्द्र त्वम्। मायिनम्, शक्तिमन्तम्, 'व्रीह्यादिभ्यश्च' इति मायाशब्दादिनिप्रत्ययः। शुष्णम्, शोषकम्, 'शुष शोषणे' इत्यतो नङ् (क्) णत्वम्, वृत्रमिति यावत्, अध्यात्मं तु तमो ज्ञेयम्। मायाभिः, शक्तिभिः। अव अतिरः, 'तिर वेधे' इत्यतो लङ्, हतवानसि। किं च (ये) मेधिराः, अतिशयेन मेधारताः, तृतीयो वर्णोऽतिशयार्थः, 'अ, आ, इ' इत्येवं ह्रस्वापेक्षयोकारस्य तृतीयत्वात्। तस्य ते, तं त्वाम्। विदुः तेषाम्। श्रवांसि, 'श्रूयन्ते' इति कर्मव्युत्पत्त्या विद्याः। उत् तिर, उच्चैस्तरां देहि॥ ७॥

यस्य, इन्द्रस्य। सहस्रम्। उत वा, ततोऽपि। भूयसीः, भूयस्यः। रातयः, दानानि। सन्ति (तम्) ईशानम् इन्द्रम् (त्वाम्) ओजसा। ओजःप्रभृतिभिर्गुणैः सह। स्तोमाः, स्तुतिविशेषाः। अभि अनूषत, सदा स्तुवन्ति, 'णु स्तुतौ' लुङ् आत्मनेपदम्॥ ८॥ इत्येकविंशो वर्गः॥ २१॥ एकादशं सूक्तम्॥ ११॥ तृतीयोऽनुवाकः॥ ३॥

## पदार्थप्रकाशिका

पूर्वशङ्कापरिहाराविति। ननु इत उत्तरा ऋचो मधुछन्दसा दृष्टाः। ऋष्यन्तरदृष्टत्वे प्रमाणाभावात् कथं तस्य शतर्चित्वं इत्यत आह॥ अष्टाविति॥ येन कारणेन तेन मधुछन्दसा इन्द्रंविश्वा इत्यष्टौ ऋचः अन्यत्रगा आनुपूर्व्यन्तरगा दृष्टाःतेन कारणेन मधुछन्दसः शतर्चिता न विरुद्धा। एकानुपूर्वीनिमित्तत्वात् तस्याः। अवस्थान्तरदृष्टत्वाच्च न विरुद्धेत्याह। तपः कुर्वीतित्येवं पूर्ववत् स्थानान्तरगतऋचावित्यस्येव शङ्कापरिहारौ द्रष्टव्यावित्यर्थः। इन्द्रमष्टौ जेतामधुछन्दस इत्यनुक्रमणिकामनूद्य व्याकुर्वन्नेव दूषयति॥ अनेनेति॥ अष्टौ ऋचः पुनः तेन दृष्टा इति। मधुछन्दसा दृष्टवचनेनेत्यर्थः। नहि प्रतिज्ञामात्रेणार्थसिद्धिः इत्यत आह॥ उपपत्तिं त्विति॥ ऋक्संहिताया इत्यादिना। 'श्रुत्यभावादलिङ्गाच्च मुनिर्नान्यः प्रतीयते' इत्यादिना च उपपत्तिं भगवानाचार्य एव वक्ष्यतीत्यर्थः॥ छ॥ इन्द्रंविश्वा अवीवृधन्॥ ऋचेर्ड इति॥ समुत्पूर्वकात् ऋच्

पृथगभावे पृथगभावो वैलक्षण्यम् । उद्रेक इति यावत् । अस्मात्कर्मणि डप्रत्यये डित्वात् टीभूतस्य इच् इत्यस्य लोपे समुत् - र् - अ - समुद्रेति रूपम् । व्याप्तिवदिति । यद्यपि व्यचिर्व्याजीकरण इति पठ्यते । तथापि धातूनामनेकार्थत्वात् यथा व्याप्तिवाचकः तथा व्यक्तिवाचकोऽपि भवतीत्यर्थः ॥ रथीतमम् ॥ अतिशयेन रथिकमित्यर्थः ॥ १ ॥

सख्येत इन्द्रवाजिनः । शवः, सुखबले इति पूर्वं भाष्ये व्याख्यातत्वादाह । सुखस्य बलस्य ॥ युद्धवन्त इति ॥ परैर्युद्धप्रसक्तिमन्तोपि वयं तत्र मा भैष्मेत्यर्थः । तदर्थं भयाभावसंपादकत्वदनुग्रहार्थम् ॥ २ ॥

पूर्वीरिंद्रस्य रातयः । पूर्वाः आद्याः सर्वोत्तमाः । प्रथमानि सर्वोत्तमानि । षष्टी द्वितीयार्थ इत्याशयेनाह । गोमदन्नमिति । गोयुक्तमन्नम् । गामन्नं चेति यावत् । मघं यशश्चेति । यशो वा मघमिति श्रुतेरिति भावः । मंहतिर्दानार्थ इति । शिक्षति तुंजति महन्ते ददाति इति भाष्यसम्बन्ध इत्यर्थः । आदिपदेन अवनानि च प्रथमानीति ग्राह्यम् । अस्माकं गोमदन्नादिकं दत्वा रक्षाकरणे त्वद्दानानामवनानां च महत्वेन प्रथमत्वं वयं जानीमः इत्याशयः ॥ ३ ॥ छ ॥

पुराम्भिन्दुर्युवाकविः । शरीरपुराणां शरीराख्यपुराणां भिन्दुर्भेत्ता भेदनशील इत्यर्थः । विश्वस्य समस्तस्य ॥ ४ ॥

त्वं बलस्य गोमतः । शेषो ऋचि शेषोक्तिः । धियः मनस इति व्याख्याय अर्थान्तरमाह । धियो ज्ञानस्य वेति । धियः तिर्यग्गतिरित्यस्य फलितमाह । विपरीतज्ञानमिति । यावदिति । गोसम्बन्धिनो वेदसम्बन्धिनः । अन्यार्थबुद्धेः । विपरीतविषयबुद्धेरित्यर्थः । तत्वमस्यादिवाक्योक्त्याभेदादिविषयज्ञानस्येति भावः । ननु अपेत्युपसर्गपूर्वकात् वृञवरणे ञकारो अनुबन्धार्थः । अस्मान्मध्यमपुरुषे सिपि हल्ङ्याभ्यो दीर्घादिति सिपो लोपे श्नुविकरणे शकारलोपे रषाभ्यामिति नस्य णत्वे लङ्लुङ्लृङ्क्ष्वडुदात्त इत्यडागमे अपावृणोदिति स्यात् । अपावरिति कथं इत्यत आह । छान्दसो विकरणलोप इति । श्नुविकरणलोप इत्यर्थः । तथाच अपेत्युपसर्गपूर्वकात् वृङ्धातोः शिपि तस्य छान्दसे श्नुविकरणलोपे ऋवर्णस्य गुणे तस्य रपरत्वे लुङि अडागमे अपावर इति जाते खरवसानयोः विसर्जनीय इति रेफस्य विसर्गे सति अपावरिति रूपमिति भावः । प्रदर्श्यविनिवार्यचेति अनयोः हेतुहेतुमद्भावमभिप्रेत्याह । तत्वप्रदर्शनेनेति । तत्वज्ञानमुत्पाद्य तत्वमार्गप्रदर्शनेनेत्यर्थः । पूर्वोत्तरार्धयोः हेतुहेतुमद्भावेन व्याचष्टे । ततश्चेति । नष्टयोः सतोरित्यर्थः । प्रथमार्थ इति । द्वितीयाबहुवचनं प्रथमाबहुवचनार्थ इत्यर्थः ॥ तद्दर्शयति ॥

अबिभीवान् अबिभीवांसौ अबिभीवांस इति शब्दो द्रष्टव्यः । चरितुमिति । अश्वमेघे अश्वस्येव गोसवाख्ययज्ञविशेषे गवामपि भूसंचारस्यावश्यकत्वादिति भावः ॥

इन्द्रस्यापीति ॥ यद्यपीन्द्रः परमसमर्थः तथापि गावः दैत्यैः हृता एवेत्यर्थः । देवशुनीति । देवगोरक्षिका इन्द्रादिदेवदासी नाम्ना सरमा । श्वजातीयेति द्रष्टव्यम् । स्वसृत्वमुक्त्वैवेति । दैत्या हि सरमां प्रलोभयितुं त्वं अस्मत्स्वसेत्यादिकं उक्तवन्त इति भावः । तन्निमित्तमिति । गवाहरणादिनिमित्तेनेत्यर्थः । ननु इन्द्रेण दैत्यहननानन्तरं सरमाव्यापारज्ञानं तस्याः पदा ताडनमित्यादिभाष्यरीत्या प्रतीयते ॥ तदयुक्तम् ॥ सरमायाः पदा ताडनानन्तरं हि तन्मुखात् क्षीरे निःसृते सति पणिभिः सह त्वयापि पय उच्छिष्टं कृतमित्यादि ज्ञात्वा पश्चात्तामेव दैत्यान् प्रति विचारार्थं प्रेषयित्वा पश्चाद्दैत्याः हृताः इति प्रसिद्धेः विरोध इत्यत आह । ज्ञात्वेत्यादीनामिति । तथाच ज्ञात्वा ताडयित्वा प्रेषयित्वा भित्वा स्थितेनेन्द्रेण निहता इति सम्बन्धो द्रष्टव्यः । इतिहासविवरणव्याजेन भाष्यं विव्रीयते । तथाहि । गोसवरूपयज्ञार्थे सरमया रक्षिताः सत्यः इन्द्रस्य गावः जगति चर्तुमुत्सृष्टाः । ताः कथं हृताः सरमायाः रक्षिकायाः सत्वादिति चेत् सत्यम् । तस्याः सरमायाः स्वसृत्वमुक्त्वा त्वमस्माकं स्वसा अतः त्वया तूर्ष्णीं स्थातव्यम् । इत्येवं स्वसृत्वादिं मृषोक्त्या तां प्रलोभ्य दैत्यैरपहृताः । अपहृत्य च गिरिकूटे निरुद्धाः । तथा त्वया गोपयः पीत्वा तदुच्छिष्टं च कृतम् । तेषां दैत्यानां नाम किम् । ते दैत्याः बलपूर्वकाः तथा ते पणयो नामानः । ननु पणीतिनाम कुतस्तेषाम् । तदर्थं पणव्यवहार इति धातोः स्वसृत्वादि-मृषाव्यवहारनिमित्तं पणयो नाम जाताः । एवं तां प्रलोभ्य दैत्यैः गोषु अपहृतासु सतीषु गोपयः सुचोच्छिष्टेषु च सत्सु पश्चात्सरमया कृतं व्यापारं ज्ञात्वा कथं तत्ज्ञानं पदा ताडयित्वा इन्द्रेण पदा ताडनेपि कथं तत्ज्ञातम् । इन्द्रेण पदा ताडितायाः सरमायाः वक्त्रात् भयात् पीते पयसि सृते सति तत् दृष्ट्वा अनया गोपय उच्छिष्टं कृतमिति इन्द्रेण ज्ञातम् । अनन्तरं सा सरमा मया आगः कृतं तत् क्षम्यतां इति इन्द्रं शरणं जगाम । पश्चात् तां शरणागतां सरमामूच इन्द्रः । त्वमस्मद्दूती भव । दूती भूत्वा च त्वयैव च पणिनां सकाशं गत्वा गावो यत्र निरुद्धाः तां गिरिकूटं ज्ञात्वा इन्द्रायोवाच । एवं शरणागतां सरमां दौत्येन पणिनां सकाशं पुनः प्रेषयित्वा तन्मुखतः गावो यत्र प्रतिष्ठिताः तं गिरिकूटं ज्ञात्वा पश्चात् तत्र गत्वा तं गिरिव्रजं भित्वा तस्मात् गिरिकूटात् पुनस्ता गावो निःसारिताः । अनन्तरं तत् ज्ञात्वा असहमानाः पणयः युद्धार्थं समागताः ते च सर्वे इन्द्रेण निहताः तान्निहत्य इन्द्रेण गोसवेनेष्टम् । तत्र यदा इन्द्रस्य पणियुद्धप्रसक्तिर्जाता तदा देवाः पणिप्रयुक्तं भयं विहाय पतिमिन्द्रं जुगुपुरिति । त्वयैव प्रेर्यमाणा इति पणिप्रयुक्तं भयमहपहाय सम्यग्रक्षां कुरुतेति इन्द्रेण त्वर्यमाणा इत्यर्थः ॥ ५ ॥ छ ॥

तवाहं शूररातिभिः । तदा तैर्निमित्तैरिति । त्वया ज्ञानादिसंपत्तेः दत्तत्वात् इत्यर्थः । षष्ठी द्वितीयार्थ इत्याह ॥ तं त्वामिति । सिन्धुं प्रत्यायमिति ॥ आन्तरबाह्ययज्ञदीक्षार्थमित्यर्थः ॥ तत्रेति ॥ नदीतीरे क्रियमाणे यज्ञ इत्यर्थः । त्वया मह्यमान्तरबाह्यस्य च द्रव्यस्य यथेष्टं दत्तत्वात् । यज्ञादिना सार्थक्यकरणाय नदीतीरं प्रत्यागतोस्मीति भावः । आवदन्नित्येतत् घटनार्थं पूर्वमागत्य जातोस्मीत्यध्याहार उक्तः । इदानीं तदनपेक्षं पक्षान्तरमाह ॥ यद्वेति ॥ उपान्मन्त्रकरण इति सूत्रं हृदि निधायाह ॥ मन्त्रैरिति ॥ ६ ॥ छ ॥

मायाभिरिन्द्रमायिनम् ॥ नन्वस्मायामेधास्रजीविनिरिति मायाशब्दात् विनिप्रत्ययस्य विहितत्वेन मायाविनामिति वक्तव्यम् । कथं मायिनमित्युक्तिरित्यत आह ॥ व्रीह्यादित्वादिति ॥ तथाच मायाशब्दस्य व्रीह्यादिगणे पठितत्वेन व्रीह्यादिभ्यश्चेति मायाशब्दादिनि प्रत्यये यस्येतिचेत्यनेन आकारलोपे मायिन्निति प्रातिपदिकनिष्पत्तौ सत्यां पश्चात् अमि मायिनं इति रूपं युक्तमिति भावः । शुषेर्नङिति । शिङशोषणे अस्मात् तृषिशुषिरशिभ्योनङिति कर्तरि नङ् प्रत्यये नस्य णत्वे ष्टुनाष्टुरिति ष्टुत्वे शुष्णमिति रूपम् । नङ्प्रत्ययस्य ङित्वात् गुणाभावः क्ङितिचेत्युक्तत्वात् । अन्यथा शोष्णमिति स्यादिति ज्ञातव्यम् । वृत्रं वृत्रासुरम् । वधकर्मा वधार्थकः ऋक्पदमनूद्य भाष्यपदं संयोज्य व्याचष्टे । मायिनमिति । मायिनं शुष्णमित्यनेन अध्यात्मं तमः कथ्यते । तमःशब्देन च अज्ञानमुच्यते इत्यर्थः । अज्ञानस्यापि मोहकत्वादिमहाशक्तित्वेन शुष्णत्वं ज्ञातव्यम् ॥ शेषमिति ॥ मायाभिरवातिर इत्येतद्बाह्ये । अध्यात्मं च समानमित्यर्थः ॥ मेधारता इति ॥ मेघे यज्ञे आ सम्यक् रता इत्यर्थः । तर्हि ऋचि मेधारा इतिस्यात् इत्यत आह । तृतीयस्येति । अकारापेक्षया तृतीयस्य इकारस्येत्यर्थः । अत एव भाष्ये अतिशयप्रदर्शनार्थमेव अ रता इत्युक्तमिति ज्ञेयम् । देहीति धातूनामनेकार्थत्वात् अत्र तिरतिर्दानार्थ इति द्रष्टव्यम् ॥ ७ ॥ छ ॥

इन्द्रमीशानमोजसा ॥ दानानीति ॥ रादान इति धातोरिति भावः । गुणैः सहेति गुणान् त्वां च अस्तुवन्नित्यर्थः । गुणैः सहितं त्वामस्तुवन्निति यावत् ॥ ८ ॥ २१ ॥ ११ ॥

## पदार्थदीपिका

पूर्ववदिति । ननूत्तरा अप्यष्टावृच मधुच्छन्दसा दृष्टाः ऋष्यन्तरे प्रमाणाभावात् तत्कथं तस्य शतर्चित्वमित्यत आहेत्यवतार्य एकानुपूर्वीगतऋक्शतस्य एकदेशकालावस्थासु दर्शनमेव शतर्चित्वे मानमिति भावो वर्णनीय इत्यर्थः । अनुवादपूर्वकमभिप्रायं वदन् अनुक्रमणिकाया निरासोऽप्यनेन

सिद्ध इत्याह। अनेनेति। मधुच्छन्दस एवाष्टस्वप्यृषित्वकथनेनेत्यर्थः। नन्वष्टस्वपि ऋक्षु कुतो मधुच्छन्दस एव ऋषित्वं परोक्तरीत्या तत्पुत्रस्य जेतुः कस्मान्न स्यात् इत्यत आह॥ उपपत्तिमिति॥ वक्ष्यतीति॥ ऋक्संहितायाः स्वाध्यायात् प्रबन्धात् व्यासनिर्मितात्। ब्राह्मणेभ्यस्तथामानात् इत्यादिनेति शेषः। इन्द्रमिति सूक्तम्। तस्या ऋचः मधुच्छन्दसः पुत्रो जेता नाम ऋषिरित्यक्षरार्थः। रिचेर्ड इति। बाहुलकादिति भावः॥ व्यचः शब्द इति॥ व्यचेरसुन्। यद्यपि कुटादावपठितस्यापि विचतेर्व्यचेः कुटादित्वमनसीति वक्तव्यमिति वचनात् कुटादित्वेन ञ्णितः अस्य प्रत्ययस्य णित्वं विहितम्। तथापि अनसीति पर्युदासेन वा कुटादित्वाज्जसुनो ङित्वाभावेन ग्रहिज्यावयिव्यधिवष्टि विचतीत्यादिना सम्प्रसारणमिति ध्येयम्। व्याप्तिवदिति। अनेकार्थत्वात् धातूनां यथा व्याप्तिवाचकस्तथा व्यक्तिवाचकोऽपीत्यत्र तात्पर्यं न पुनर्यथा श्रुते। व्यच व्याजीकरणे इति पाठादिति बोध्यम्। व्यचसम्भव इति कैश्चित् वृत्तिकृद्भिः पठितत्वात् व्यक्तिवचन इत्यर्थ इत्यप्याहुः। अत्र कश्चित् शब्दादुत्पन्नस्य न छान्दसदीर्घत्वमित्याह। तदसत् पदकाले शाकल्ये दीर्घस्यापाठादिति भावेनाह। रथिनां रथितममिति। संहितायां त्वन्येषामपि दृश्यत इति दीर्घत्वमिति भावः। अवीवृधन्निति। वृधेर्णिचि यञि उरदित्यनुवृत्तौ अनित्यं छन्दसीति रकारस्य ऋकारविधानात् लघूपधगुणाभाव इति भावः॥ १॥

शवसस्पत इति। षष्ठ्याः पतिपुत्रेत्यादिना विसर्जनीयस्य सत्वमिति भावः। वाजिनोऽन्नवन्त इति व्याख्यानमसत् भयहेतोरनुक्तिप्रसंगात् इति भावेनाह। वाजिनो युद्धवन्त इति। भयाभाव हेतुस्तु सख्य इत्यनेनैवोक्तेः इति हृदयम्। मा भेमेति। ञि भी भय अस्मात् कृदुत्तमबहुवचनेमसि। नित्यं ङित इति सलोपः गातिस्थेत्यादिना सिचो लुक् विधौ बहुलं छन्दसीत्यनुवृत्तेः लुङि सिचो लुक्। अत एव न सिचि वृद्धिः। छन्दस्युभयथेति मस आर्धधातुकत्वेन ङित्वाद्गुणः। न माङ्योग इत्यडागमप्रतिषेध इति भावः। णोनुम इति॥ णु स्तुतौ। णो न इति नत्वम्। अस्मात् पौनःपुन्यार्थे धातोरेकाचो हलादेः क्रियासमभिहारे यङिति यङ्। यङोचिचेति यङो लुक्। प्रत्ययलक्षणेन सन्यङोरिति द्विर्भावः। गुणो यङ्लुकोरिति अभ्यासस्य गुणः। प्रत्ययलक्षणेन धातुसंज्ञायां लटो मस आदिवत्वाभावाच्छपो लुक्। उपसर्गादसमासेऽपि णोपदेशस्येति संहितायां णत्वमित्यवधेयम्॥ २॥

पूर्वशब्दस्याकारान्तत्वादादावेवोपपन्ना न तु ङीप् विधायकाभावात् इत्याशयेनाह। पूर्वा इति। तृतीयोऽतिशये इति भावः इत्यप्याहुः। कारणेनेति। महत्वं पूर्वत्वे हेतुर्न प्रवृत्तिनिमित्तमिति भावः ननु भिद्यन्त इति भाष्ये व्याख्याततत्वात् दस्यन्तीत्यस्य सार्वधातुके यगिति कर्मणि यक्प्रत्यय इति

वाच्यम् । तथा सति कथं परस्मैपदम् । भावकर्मणोरिति आत्मनेपदस्यैव विधानादित्यत आह । विदस्यन्त इति । व्यत्ययेनेति भावः । क्षयार्थो वेति । किं व्यत्ययाश्रयेनेति भावेन भाष्ये प्रकारान्तरेण व्याख्यानमित्यर्थः । दसु उपक्षेप इत्यस्मात् कर्तरि दिवादिभ्य श्यनि श्यन उदात्तत्वात् परस्मैपदमिति भावः । दानार्थ इति । दाति दासतीति । दशसु दानकर्मसु महन्त इति पाठादिति भावः । प्रथमानीत्यादिसम्बन्ध इत्यादिशब्देन विनश्यतीत्यस्य सङ्ग्रहः ॥ ३ ॥

भिदुरिति । भिदिर्विदारण इत्यस्मात् कुरित्यनुवृत्तौ पृभिदिव्यधिगृध्रिधृषिधिभ्यः इति कुप्रत्ययः । तस्य छन्दस्युभयथेति सार्वधातुकसंज्ञायां रुधादिभ्यः श्नम् इति श्नम् । मित्वादन्त्या-दचः परो भवति । श्नसोरल्लोपः । अनुस्वारपरसवर्णौ । अचः परस्मिन् पूर्वविधाविति प्राप्तस्य स्थानिवद्भावस्य न पदान्तेत्यादिना निषेध इति भावः । पुरुष्टुत इति । स्तुतस्तोमयोश्छन्दसीति षत्वमिति भावः ॥ ४ ॥

मूलमिति । पूर्वोक्तमिथ्याज्ञानस्येति शेषः । प्रदर्श्य विनिवार्य चेत्यत्र हेतुहेतुमद्भावमभिप्रेत्य व्याख्याति । तत्वप्रदर्शनेनेति । ननु वृसंवरण इत्यस्मात् स्वादित्वात् श्नुप्रत्यये अवृणोदिति भवितव्यं अवरदिति तु कथमित्यत आह । छान्दस इति । बहुलं छन्दसीत्यनेन श्नुप्रत्ययस्य लोप इत्यर्थः । वृसंवरणे अस्माल्लुङ् सिप् इतश्च लोप इतीकार लोपः । स्वादिभ्यः श्नुः । तस्य व्यत्ययो बहुलमिति शप् । तस्य बहुलं छन्दसीति लुक् । गुणो रपरत्वम् । हल ङ्यादिलोपः । विसर्जनीयः । अडागम इति भावः । प्रथमार्थ इति । प्रथमार्थे प्रथमादेर्भत्वाभावेन वसोः सम्प्रसारणानुपपत्तिरिति भावः । अभिभ्युष इति । ञिभीभये लिट् द्विर्भावः । अभ्यासस्य ह्रस्वत्वम् । जस्त्वम् । क्वसुश्चेति लिटः क्वसुरादेशः । क्र्यादिनियमात् प्राप्तेट् वस्वेकाजाद्घसामिति नियमान्निवर्तते । तस्मात् शसि भत्वात् वसोः सम्प्रसारणं पररूपत्वं शासिवसिघसीनां चेति षत्वम् । अचिश्नुधात्वित्यादिना प्राप्तमियङादेशं बाधित्वा एरनेकाच इति यणादेश इति भावः । आविषुरिति । अञ्चतेर्लुङि सिचि इडागमे सिजभ्यस्तविदिभ्यश्चेतिझेर्जुसि च इडागमः । आदेशप्रत्यययोरिति षत्वमिति भावः । सद्भिरेति भाष्यकारेणोक्तत्वात् प्रतियोगितया दैत्यैर्दुष्टगिरेत्युक्तम् । परमात्मनो रक्ष्यत्वासम्भवात् तात्पर्यमाह । प्रकाशितवन्त इति । व्यवहितत्वेऽपि योग्यत्वात् गाव इत्यस्येन्द्रस्येत्यनेन अन्वय इत्याह ॥ इन्द्रस्य गावः इति ॥ गोप्रसव इति भ्रान्तिं निवारयति ॥ गोसव इति ॥ चर्तुं अश्वमेधे अश्वसेवा गोसवे गवामपि चरणमावश्यकमिति भावः । चरितुमिति वदता भाष्ये इडभावच्छान्दस इति सूचितं भवति । योग्यत्वादपि शब्दः इन्द्रस्येत्यनेन सम्बन्धनीय इत्याह ॥ इन्द्रस्यापीति सम्बन्ध इति ॥ यद्यपि इन्द्रस्यापि गावो दैत्यैःहृता एवेत्याशयः ॥ देवशुनीति । देवगोरक्षिका

इन्द्रादिदेवानां दासी नाम्ना सरमा श्वाजातिमतीति भावः ।। स्वसृत्वमुक्त्वैवेति ।। दैत्याः सरमां प्रलोभयितुं तां प्रति त्वमस्मत्स्वसेत्यादिकं उक्तवन्त इत्यर्थः ।। तन्निमित्तमिति ।। गवापहारनिमित्तेनेत्यर्थः । नन्विन्द्रेण दैत्यहननानन्तरं सरमाव्यापारज्ञानं तस्य पदाताडित-मित्यादिभाष्यात् प्रतीयते । तच्चानुपपन्नम् । सरमायाः पादताडनानन्तरं तन्मुखात् क्षीरनिस्सरणे सति प्रतिहतयापि क्षीरमुच्छिष्टं कृतमित्यादिज्ञात्वा पश्चात्तामेव दैत्यान् प्रति विचारणार्थं प्रेषयित्वा पश्चाद्दैत्या हता इति इतिहासस्य भारते प्रसिद्धत्वेन तद्विरुद्धत्वादित्यत आह ।। ज्ञात्वेत्यादीनामिति ।। ततश्च सरमाव्यापार ज्ञानादेः हननात् पूर्वस्यैव भाष्येप्यभिमतत्वान्न विरोध इति भावः ।। ५ ।।

।। प्रत्यायमिति ।। इणो लङि तस्थस्थमिपामिति मिपोऽमादेशः । अदिप्रभृतिभ्यः शपः इति शपो लुक् । अडागमः । वृद्ध्यवादेशाविति भावः । आवदन् प्रत्यायमित्यन्वयेनैकवाक्यत्वे लक्षणहेतोः क्रियाया इति आवदनस्य हेतुत्वप्रतीतेः तस्य च यज्ञदीक्षार्थमागत इति हेत्वन्तरस्योक्तत्वेनायोगात् वाक्यभेदेन व्याचष्टे ।। आगत्य चेति ।। आवदन्नहमिति । आवदन्नित्यस्याहमित्यनेन अन्वयो न प्रत्यायमित्यनेनात एकवाक्यतायामपि न दोष इति भावः ।। मन्त्रैरिति ।। उपान्मन्त्रकरण इति तिष्ठतेरात्मनेपदविधानादिति भावः ।। ६ ।।

ननु मायाशब्दस्यानदन्तत्वात् अत इनिठनावित्यनेनाप्राप्तेः अन्यस्य च मायाशब्दादिनि प्रत्ययस्याभावात् अयस्मायामेधास्रजो विनिरिति विनिप्रत्ययस्यैव विधानात् मेधावी इत्यादिवत् मायावी इत्येव स्यात् माविति तु कथमित्यतो व्रीह्यादिषु मायाशब्दस्य पाठात् व्रीह्यादिभ्यश्चेति अनेन इन् प्रत्ययो युक्त इत्याह ।। व्रीह्यादित्वादिति ।। शुषेर्नञिति ।। शुष शोषण इत्यस्मात् अन्तर्भावितण्यर्थात् नञित्यनुवृत्तौ तृषिशुषिरसिभ्यः किदिति नञ् प्रत्ययः । नङिति पाठे बाहुलकात् नङ्प्रत्यये वृषादित्वादाद्युदात्तत्वमिति भावः । अतिरः तॄ प्लवनतरणयोरित्यतो व्यत्ययेन शे तस्य ङित्वेन गुणाभावात् ऋत इद्धातोरितीत्वे रपरत्वे च धातूनामनेकार्थत्वात् एतत्सिद्धिः । अथवा निवयं त्ववतिरतीति वधकर्मसु पाठात् तदर्थकधात्वन्तरमेवेदमिति द्रष्टव्यम् ।। शेषं समानमितीति ।। इत्येव तमो वेत्यध्यात्मव्याख्यानमित्यर्थः । ननु मेधृ मेधाहिंसयोरित्यस्मात् अदन्ते मेधशब्दे उपपदे रमेर्धातोरिप्प्रत्यये सति निष्पन्नस्य मेधिरा इति श्रौतपदस्य भाष्ये मेधरता इत्येतावन्मात्रं प्रतिपदं युक्तं मेधारता इति आङो मध्ये लाभः कथमित्यतः मेधर इति भवितव्येऽकारस्थाने प्राप्तस्य तृतीयवर्णस्येकारस्यातिशयार्थत्वात् भाष्ये मेधे यज्ञे अतिशयेन रता आरता इत्युक्तमित्याशयेनाह । तृतीयस्येति । विदुरिति । विदज्ञाने लट् । अदिप्रभृतिभ्यः शप इति शपो लुक् । विदो लटो वेति झेर्जुसादेश इति भावः । संहितायां युष्मत्तत्ततक्षुष्वन्तः पादमिति षत्वम् । ष्टुना ष्टुरिति उत्तरतकारस्य ष्टुत्वं च बोध्यम् ।। ७ ।।

॥ अनूषतेति ॥ णुस्तुतौ । णो नः । लुङ् व्यत्ययेन झस्यादादेशः । च्लेः सिच् । अस्य धातोः कुटादित्वेन सिचो ङित्वात् गुणाभावः । इडभावश्छान्दसः । दीर्घत्वं च । अडागम इति भावः ॥ ८, २१, ११ ॥

## टीकाविवृतिः

पूर्ववदिति ॥ उत्तराष्टानामृचां मधुच्छन्दसा दृष्टत्वात्तस्य शतर्चित्वमनुपपन्नमित्यत आह ॥ अष्टावृच इति ॥ आनुपूर्व्यंतरस्थद्रष्टृत्वेनावस्थांतरे द्रष्टृत्वेन च भेदान्न शतर्चित्वभङ्ग इति शङ्कापरिहारावित्यर्थः । अत्रानुक्रमणिकामनूद्यार्थं वदन्दूषयति ॥ अनेनेति ॥ उपपत्तिं तूत्तरत्रेति ॥ ऋक्संहितायाः स्वाध्यायादित्यादिना एतद्वर्गव्याख्यानांते माधुछन्दसस्य जेतुः ऋषित्वाभावे प्रमाणविरोधाप्रामाणिकत्वरूपामुपपत्तिमित्यर्थः ॥ इन्द्रंविश्वा । रिचेर्ड इति ॥ रिचवियोजन सम्पर्चनयोरित्यतः सम्पर्चनार्थात्कर्मणि ड इत्यर्थः । सम्पर्चनं सम्बन्धः सम्यक् सम्बन्धः सदासम्बन्धः उत्कृष्टत्वं सदासम्बद्धत्वं च गुणानामेव योग्यमित्याशयेनाह ॥ गुणानामिति ॥ व्यचः शब्द इति ॥ व्यचव्याजीकरण इत्यतोऽसुन्प्रत्यये व्यचेः कुटादित्वमनसि वक्तव्यमित्यसुप्रत्यय व्यतिरिक्तप्रत्यये कुटादिवद्भावविधानाद्गाङ्कुटादिभ्य इति ङित्वाभावाद्ग्रहिज्येति न सम्प्रसारणमिति भावः ॥ व्याप्तिवदिति ॥ धातूनामनेकार्थत्वाद्यथा उरुव्यचानोमहिषः शर्मयं सदित्यत्रोरु व्यचानो महाव्याप्तिमान्महिषः पूज्यः शर्म सुखं यंसदयं सद्दत्तवानिति व्याप्तिवाचक एवमभिव्यक्तेरपीति भावः । रथिनां रथितममिति ॥ इन्नंतयोरनयोः पदयोः संहितायामन्येषामपि दृश्यते इति दीर्घः । अत एव पदकाले ह्रस्वः पठ्यते । द्वितीयपतिशब्दस्य वाजानामित्यनेनान्वयमाह । वाजानामिति ॥ १ ॥

सख्येते ॥ शवस इति पते इति पदद्वयमनूद्याद्यं पदं व्याचष्टे ॥ सुखस्येति ॥ अस्मात्कर्मण्य सुन्प्रत्यये तनूक्रियमाणं सम्यक् क्रियमाणं सत्कर्म शवःशब्दवाच्यं लक्षणया तत्साध्यसुखवाचित्वं बलनामसु पाठाद्बलवाचित्वं चेति भावः । षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेष्वित्यनेन षष्ठीविसर्गस्य सत्वमिति द्रष्टव्यम् ॥ पते इत्यस्याष्टमिकामन्त्रितस्येति निघातः । तद्योगाच्छवस इत्यस्यापि सुबामन्त्रिते पराङ्गवत्स्वर इति पराङ्गवद्भावात्सर्वानुदात्तता । समयोरेव सख्यसम्भवादीश्वरभक्तयोः साम्याभावेन सख्यासम्भवात्सख्यशब्दतात्पर्यमाह ॥ त्वदनुग्रहे इति ॥ वाजशब्दस्यान्नयुद्धनामसु पाठेपि अन्नवत्त्वस्य प्रकृतानुपयोगादाह ॥ वाजिनो युद्धवन्त इति ॥ माभेम माभैष्मेति ॥ ऋचि त्रिभीभय इत्यतोलुङि मसि च्लेः सिचः गातिस्थेत्यत्रानुवृत्तेन बहुलं

च्छदसीत्यनेन लुका लुप्तत्वात्सिचि वृद्ध्यभावे छन्दस्युभयथेति मम आर्धधातुकत्वेन· ङित्वाभावाद्गुणे नित्यं ङित इति सलोपे माङ्योगादडभावे भेमेति रूपमिति भावः ॥ तदर्थमिति । त्वदनुग्रहार्थमित्यर्थः । ऋचि जेतारमित्यस्याद्युदात्तत्वात्तृन्नंतत्वात्तद्योगे नलोकेति षष्ठीनिषेधा-द्वितीयान्तपरानिति पदमध्यार्यमिति भावेन तृजन्तं प्रतिपदमाह ॥ परेषां जेतारमिति ॥ तथाच परेषामिति कर्मणि षष्ठीति भावः ॥ प्रणोनुम इति ॥ णुस्तुतावित्यतो णोन इति नत्वे यङ् लुकि द्वित्वादौ गुणोयङ्लुकोरित्यभ्यासस्य गुणे लटि मसि अदादित्वाच्छब्लुकि उपसर्गादसमासेपि णोपदेशस्येति णत्वमिति भावः ॥ २ ॥

पूर्वीरिन्द्रस्य । पूर्वीः पूर्वा इति ॥ तृतीयोतिशय इत्युक्तेरिति भावः । रादान इति धातोरातयो दानानि । अवतेः क्तिनि ऊतियूतीतिनिपातनादूतयोऽवनानीत्याशयः । महत्त्वेनेति करणे तृतीयेति भ्रमं वारयति ॥ कारणेनेति ॥ हेतौ तृतीयेति भावः । महत्त्वमन्यासाध्यत्वेन श्रेष्ठत्वम् । उपक्षयार्थो दसिः श्यन्विकरणः परस्मैपदिनि अतोदस्यन्तीति कर्तरिरूपम् । कर्तृव्यत्ययेन कर्मणि व्युत्पादयितुं भाष्ये भिद्यंत इत्युक्तमिति भावेनाह ॥ न विदस्यन्त इति ॥ धातूनामनेकार्थत्वाश्रयेण विभेदनार्थत्वमाश्रयणीयं व्यत्ययश्चाश्रयणीय इत्यरुचेर्भाष्येऽर्थान्तरमुक्तमिति भावेनाह ॥ क्षयार्थोवेति ॥ गोमतोवाजस्येति कर्मणि व्यत्ययेन षष्ठीत्याशयेनाह ॥ गोमदन्नमिति ॥ यशस्तथेति भाष्ये तथाशब्देन मघशब्दस्य धननामसु पाठाद्धनार्थत्वमनुक्तं समुच्चीयत इति भावेनाह ॥ यशश्चेत्यादिकमिति ॥ यशोवाव मघमिति श्रुतेरिति भावः ॥ दानार्थ इति ॥ तुंजते मंहते इति दानकर्मसु पाठादित्यर्थः ॥ तर्हीति ॥ यदिधनयश आदिददाति तर्हीत्यर्थः ॥ आदिपदात् यद्यन्नगवादि ददाति तर्हि तान्यवनानि प्रथमानीति योग्य सम्बन्धो द्रष्टव्यः ॥ ३ ॥

पुरां भिन्दुः । शरीरपुराणामिति ॥ इदं विष्णुपक्षे । शंबरस्येतीन्द्रपक्षे योज्यम् । भिदेः पॄभिदिव्यधिगृधिधृषिभ्य इति कुप्रत्यये बाहुलके नुमि भिन्दुरिति रूपमिति भावेनाह ॥ भेत्तेति ॥ धर्तेत्यत्रान्तर्णीतण्यर्थत्वाश्रयेणाह ॥ प्रेरक इति ॥ जज्ञे अभिव्यक्त इति ॥ जनीप्रादुर्भाव इति धातोरिति भावः ॥ ४ ॥

त्वं वलस्य वलतिरिति ॥ वलवल्लसंवरणे संचरणे चेति धातोः । सञ्चरणं यथेष्टप्रवृत्तिः तस्य तात्पर्यार्थः परिवर्तनमिति भावः । धिय इति शेष इति ॥ ऋचि शेषो भाष्यकारेणोच्यते इत्यर्थः । धियोमनस इति ॥ मनसो बुद्धिकारणत्वात्कार्यवाचकधीशब्देन कारणं मनो लक्ष्यत इति भावः । इदानीं धीशब्दस्य बुद्ध्यर्थत्वे वलशब्दतात्पर्यमाह ॥ विपरीतेति ॥ धियो बुद्धेर्बलो यथेष्टप्रवृत्तिर्विषय

वैपरीत्येन प्रवृत्तिर्विपरीतज्ञानमित्यभिप्रायमाह ।। हे अद्रिव इति ।। हे आदरणीयत्वाददि शब्दवाच्यप्राणप्रवर्तकेत्यर्थः । भूवाग्वारिषु गौर्मत इति विश्वोक्तेर्गोशब्दस्य वाग्वाचित्वेपि मुख्यत्वाद्वेदवागेवार्थो तग्रहा इति भावेन भाष्यतात्पर्यमाह ।। वेदवाचामिति ।। बिलभेदने इति धातोर्बिलति भिनत्ति भूमिमिति बिलं मूलं तच्च वृक्षादेः कारणमिति भावेन प्रकृतोपयोगि कारणमाह ।। बिलं मूलमित्यादिना ।। छान्दस इति ।। वृञ् वरण इत्यतोलुङि सिचः गातिस्थेत्यत्रानुवृत्त बहुलं छन्दसीत्यनेन लुकि सिपि गुणे रपरत्वे सिपोहल्ङ्यादिलोपे अडागमे रेफस्य विसर्गे इति भावः । धातोः तिङ्प्रत्ययादौ परे मध्ये जायमानस्य प्रत्ययस्य विकरणत्वात्सिचोविकरणत्वं ज्ञेयम् । प्रदश्यर्विनिवार्यचेत्यस्य भाष्यस्य ऋगर्थप्रदर्शन-परत्वाभावाद्वैयर्थ्यमाशंक्योत्सारणे प्रकारप्रदर्शन परत्वेन योजयितुं शङ्कते ।। कथमिति ।। तत्त्वमस्यादिवेद वाक्यानामद्वैताद्यर्थ बुद्धेः कारणस्या ज्ञानस्योत्सारणं केन प्रकारेण स्यान्न केनापि । उपक्रमादिभिर्लिंगैरद्वैताद्यर्थ बुद्धेर्दृढत्वादित्यर्थः । तत्र भाष्यमनूद्य तत्वशब्दाध्याहारेण योजयति ।। प्रदर्श्येति ।। वेदवाक्यानां तत्वार्थस्य भेदादि रूपस्योपक्रमाद्यानुकूल्य-प्रदर्शनेनाभेदाद्यर्थे तदभावव्युत्पादनेन चाद्वैताद्यर्थनिराकरणे कृतेऽज्ञानस्योत्सारणादिति भावः ।। ततश्चेति ।। वेदानामन्यार्थनिराकरणादित्यर्थः । दिव्धातोः स्तुतिगत्यर्थत्वात्परमेश्वर-स्तावकास्तज्ज्ञानिनश्च देवशब्देनोच्यन्त इति भावेन तात्पर्यार्थमाह ।। सत्वप्रकृतय इति ।। प्रथमार्थ इति ।। व्यत्ययेनेत्यर्थः । तेनाबिभीवस्शब्दस्य क्स्वंतत्वाच्छसि भत्वेन वसोः सम्प्रसारणमिति सम्प्रसारणमिति भावः ।। प्रेर्यमाणा इति ।। तुजहिंसायामित्यतो धातूनामनेकार्थत्वेन प्रेरणार्थकत्वात्कर्मणि लटश्शानजादेशः ।। आविषुरिति ।। अवतेर्लुङि सिच इडागमे सिजभ्यस्तेति झेर्जुसि धातोराडागम इति भावः । विष्णुरक्षणस्य बाधितत्वाद्भाष्ये इवेत्युक्तं तदभिप्रायमाह ।। प्रकाशितवं त इतीति ।। व्यवहितत्वादन्वयमाह ।। इन्द्रस्य गाव इति ।। गोः सवः कण्डनमुत्पत्तिर्वेत्यर्थ प्रतीतिं वारयति ।। गोसव इति ।। चरेः सेट्त्वेप्यनित्यमागम शासनमित्युक्तेर्नेडिति भावेनाह ।। चर्तुंचरितुमिति ।। संचरणार्थमश्वमेधेऽश्ववदित्यर्थः । जगत्य-पीत्यत्र समुच्चयाद्यर्थाभावादाह ।। इन्द्रस्यापीतीति ।। अपिशब्दः सम्भावनायाम् । महासमर्थ-स्येन्द्रस्यापि गवां हरणं दुष्टानां सम्भावितमित्यर्थः । रमया सहितेति भ्रांतिं वारयति ।। सरमेति ।। एतन्नामिकादेवाज्ञाकारिणी श्वत्वजातिमतीत्यर्थः ।। तन्निमित्तमिति ।। गवापहारनिमित्तमित्यर्थः । व्यापारमिति ।। पयःपानाख्यमित्यर्थः ।। कथं ज्ञात्वेति ।। तज्ज्ञानं कथं केन निमित्तेनेत्यर्थः ।। ततोपीति ।। पदाताडनेनापि कथं ज्ञानमित्यर्थः । सृते बहिर्निःसृते ।। गिरिकूटमिति ।।

गिरिराशिमित्यर्थः ॥ स्यान्निकायः पुंजराशीतूत्करः कूटमस्त्रियामित्यमरोक्तेः ॥ इत्यन्वय इति ॥ पदताडनेन मुखात्पयसि निःसृते पयस्तदुच्छिष्टमिति तथा पणिनां गोमोचनं च ज्ञात्वा हननभयात्पश्चाच्छरणागतां शुनीमेव दैत्यस्थलविचाराय दूतत्वेन प्रेषयित्वा तया तज्ज्ञात्वा गिरिकूटं भित्वेन्द्रेण दैत्या निहता इत्येवंरूपेणेत्यर्थः ॥ असीतीति ॥ इति शब्दस्य पूर्वार्धो व्याख्यात इत्यनेनान्वयः । देवानामिन्द्ररक्षणे कस्सम्बन्ध इत्यतः शेषो भाष्ये उक्तस्तस्य ससंबन्धिशब्दत्वादाह ॥ स्वपतिमिति ॥ ५ ॥

तवाहं शूर । दानैर्निमित्तैरिति ॥ त्वया भक्ताय बहुदत्तमिति कृत्वाहमपि बहुलिप्सया यज्ञं कर्तुमागत इत्यर्थः । सिंधुः समुद्रे नद्यां चेति विश्वोक्तेः सिंधुशब्दो नद्यर्थः । प्रतिपूर्वादिणो लङि आडागमे वृद्धौ मिपोऽमादेशे आयादेशे प्रत्यायमिति रूपम् । शेष इति ॥ शेषोक्तिरित्यर्थः । आवदन्प्रत्यायमित्येऽकान्वयेङ्गीक्रियमाणे लक्षणहेत्वोः क्रियाया इति शत्रादेशो नस्यादावद-नस्यागमनं प्रति तिष्ठतोनुशासति गायका इतिवदर्जयन्वसतीतिवच्च लक्षणत्वहेतुत्वयोरभावात् । आवदन्नहमित्यन्वयेतु अप्रथमासमानाधिकरण इति निषेधान्न लटः शतृ अशानचाविति शत्रादेश इति भावेन वाक्यभेदेन योजयति ॥ आगत्येति ॥ आगत्येत्याद्यध्याहारवाक्यभेदभयात्पक्षान्तरमाह ॥ यद्वेति ॥ लडिति वर्तमाने पुनर्लड्ग्रहणात्प्रथमा सामानाधिकरण्येपि क्वचिच्छत्रादेश इति शाब्दिकैरङ्गीकृतत्वादिति भावः । हे गिर्वण इति ॥ गिर्शब्दोपपदाद्वनसम्भक्तावित्यतः कर्मण्यसुनि उपपदस्य र्वोरुपधाया इति दीर्घाभावश्छांदस इति भावः । ऋचि सम्बन्धसामान्यविवक्षया कर्मणि षष्ठीति भावेनाह ॥ तस्य ते तं त्वामिति ॥ कारुः कीरिरिति स्तोतृनामसु पाठात्कारव इत्यस्य यौगिकार्थ परं कर्तारि इति भाष्यं स्तुतेरिति पदाध्याहारेण योज्यमिति भावेन विशेष्यमाह ॥ ऋत्विज इति ॥ उपातिष्ठन्तेत्यत्रोपान्मन्त्रकरण इत्यात्मनेपदाच्चेति भावेनाह ॥ मन्त्रैरिति ॥ ६ ॥

मायाभिरिन्द्र ॥ शक्तिमन्तमिति ॥ मायावयुनमिति प्रज्ञानामसु पाठात्परवंचनादि प्रज्ञाख्य-शक्तियुक्तमित्यर्थः । व्रीह्यादित्वादिति ॥ मायाशब्दस्यादंतत्वाभावादत इनिठनावितीनि-प्रत्ययाभावेपि व्रीह्यादिभ्यश्चेत्यनेन मायाशब्दस्य व्रीह्यादिषु पाठादिनि यस्येति लोप मायिशब्दः साधुरित्यर्थः ॥ शुषेर्नङिति ॥ तृषिशुषिरसिभ्योङिदिति पाठमाश्रित्यशु षेर्नप्रत्ययोङिच्चेत्युक्तम् । क्वचित्तु किदिति पठ्यते । मायिनमित्यस्य तात्पर्यं भाष्य उच्यत इत्याह ॥ वृत्रमितीति ॥ तिरतिरिति ॥ अवपूर्वक इति शेषः । अवतिरतियतेति वधकर्मसु पाठादिति भावः ॥ शेषमिति ॥ मायाभिरिन्द्रावातिर इति पदत्रयव्याख्यानं समानमेकमेवेत्यर्थः ॥ तृतीयस्येति ॥ मेधः

क्रतौक्रियायां चेति विश्वोक्तेर्मेधे यज्ञे आरता: अतिशयेन रता इति भाष्ये योमेधिरशब्दार्थ उच्यते समेधशब्द उपपदेरमेर्ड प्रत्यये मेधशब्दाकारस्यातिशयार्थे तृतीय इकारादेश इति भावेनेत्यर्थ: । विदो लटोवेति झेर्जुसिति भावेनाह ।। विदुरिति ।। जानन्तीत्यर्थ: । अवपूर्वस्याङ्पूर्वस्य वातिरतेर्वध-कर्मसुपाठात्पूर्वस्य तदभावान्न वधार्थत्वमिति भावेनाह ।। उत्तिर उच्चैस्तरान्देहीति ।। ७ ।।

इन्द्रमीशानम् । भूयसीरिति ।। बहुशब्दादतिशयार्थस्य ईयसुन: बहोर्लोपो भूचबहोरितीकारलोपे बहोर्भू इत्यादेशे उगितश्चेति ङीपि शसि रूपमेतत् । रातय इति ।। रादाने अस्मात् क्तिन् । ओजसेत्यस्य करणार्थत्वभ्रान्तिं वारयितुं भाष्ये सहार्थे तृतीयाङ्गीकृतेति भावेनौज: शब्दमुपलक्षणत्वेन व्याख्याति ।। ओज: प्रभृतिभिरिति ।। णूस्तवन इत्यत: छन्दसि लुङ्लृङ्लृट इति सार्वकालिके लुङि व्यत्ययेनात्मनेपदे सिचि आगमशासनस्यानित्यत्वादिडभावे झस्यादादेशे धातोरडागमे अनूषतेति रूपमिति भावेनाह ।। अभ्यनूषत सदास्तुवन्तीति ।। ८ ।।

उपपत्तिं तूत्तरत्रेत्युक्तं दर्शयितुं शङ्कते । नन्विति ।। अष्टावृच: पुनस्तेनेत्युक्तप्रकारेणेत्यर्थ: । अपिशब्दो गर्हायाम् । शतर्चित्वस्य गतिवचनमप्रामाणिकत्वाद्गर्हितमित्यर्थ: । एतासामृचा-मपीत्यन्वयो वा । नकेवलमग्निमीळ इत्यादीनां किं त्वेतासामृचामप्युच्यते स कस्मात् । ऋक्संहितादीनां प्रामाण्याव्यभिचारान्मानादिति विशेषणं व्यर्थमित्यरुचेराह ।। मानान्मानां तरादिति वेति ।। त एव स्युरिति ।। ऋक्षु मुनय इत्यर्थ: । पूर्वयोजनायां वाक्यभेदादेकवाक्यतया योजयति ।। यद्वेति ।। लिङ्गशब्दसमभिव्याहारात् श्रुतिशब्दो नामधेयपरो न तु वेदपर इति भावेनाह ।। नामाभावादिति ।। नच जेतारमपराजितमिति जेतुर्नाम । त्वामभीत्युक्तेन्द्रविशेषणत्वेन माधुच्छन्दसजेतृप्रतिपादकत्वायोगात् । त्रिष्वादित्यमिति स्थानत्रयबन्धनं ऋच्यादित्रयबन्धनं वा शुन:शेपचिह्नम् ।। तादृशं चिह्नं माधुच्छंदसजेतर्यत्र नोक्तमित्यर्थ: । श्रुतिलिङ्गभावेपि वाक्यप्रकरणादिकं स्यादित्यत आह ।। उपलक्षणं चेति ।। ननु पूर्वास्वृक्ष्वपि मधुच्छन्दसोपि नामादिज्ञापकाभावात्कथमृषित्वमित्यत आह । किं चेति ।। गायत्रं प्र उ गं कुर्यादित्याहुरित्यादिना प्र उग शस्त्रात्मकानां गायत्र्युष्णिगादिच्छंदस्कानामृचां प्रत्येकं फलमुक्त्वा तदुगायत्रमेव कुर्यादिति गायत्रस्य प्र उगकरणब्रह्मप्राप्तिलक्षणविशेषफलमुक्त्वा तादृशं गायत्रं किमित्यतस्तदु माधुच्छन्दसमिति मधुच्छन्दसा दृष्टसूक्तसमुदायमुक्त्वा वायवायाहीत्युत्तर खण्डे तद्दृष्टसूक्तेष्वपि प्रकृतयज्ञोपयुक्त वायवायाहि अश्विनायज्वरीरिति सूक्तद्वयग्रहणात्पूर्वोत्तर सूक्तानामपि मधुच्छन्दसा दृष्टत्वमुच्यत इत्यर्थ: । प्रथमादिपदेन तद्यन्माधुच्छन्दसं शंसतीत्यस्य ग्रहणम् । वायवायाहीत्यादि-सूक्तानामित्यत्र वायवायाहीत्यस्यादि अग्निमीळ इति सूक्तमिति षष्ठीसमास: । वायवायाहीति

सूक्तमादियेषां सूक्तानामिति बहुव्रीहिः । उभयोः पुनरेकशेषः । अग्निमीळ इत्यादि सूक्तानामित्यर्थः । सिद्ध्यति ॥ अत्र द्रष्टेति ॥ इन्द्रं विश्वा इति सूक्त इत्यर्थः । अतिप्रसङ्ग इति ॥ अग्निं दूतमित्यादावपि मधुच्छन्दा एव द्रष्टास्यादित्यर्थः ॥ अन्यज्ज्ञापकमिति ॥ अन्यविषयकं ज्ञापकमित्यर्थः । नचात्रापवादकमिति ॥ अग्निं दूतमित्यादौ तु स्वाध्यायादेरपवादकस्य विद्यमानत्वादिति भावः ॥ एकविंशतितमो गर्वः ॥ २१ ॥

## ऋक्संहिता पदपाठसहिता

(१११) अग्निंदूतंवृणीमहेहोतारंविश्ववेदसम् ॥ अस्ययज्ञस्यसुक्रतुम् ॥ १ ॥

(प०) अग्निम् । दूतम् । वृणीमहे । होतारम् । विश्वऽवेदसम् ॥ अस्य । यज्ञस्य । सुऽक्रतुम् ॥ १ ॥

(११२) अग्निमग्निंहवीमभिःसदाहवन्तविश्पतिम् ॥ हव्यवाहंपुरुप्रियम् ॥ २ ॥

(प०) अग्निम्ऽअग्निम् । हवीमऽभिः । सदा । हवन्त । विश्पतिम् । हव्यऽवाहम् । पुरुऽप्रियम् ॥ २ ॥

(११३) अग्नेदेवांइहावहजज्ञानोवृक्तबर्हिषे ॥ असिहोतानईड्यः ॥ ३ ॥

(प०) अग्ने । देवान् । इह । आ । वह । जज्ञानः । वृक्तऽबर्हिषे ॥ असि । होता । नः । ईड्यः ॥ ३ ॥

(११४) ताँउशतोविबोधययदग्नेयासिदूत्यम् ॥ देवैरासत्सिबर्हिषि ॥ ४ ॥

(प०) तान् । उशतः । वि । बोधय । यत् । अग्ने । यासि । दूत्यम् । देवैः । आ । सत्सि । बर्हिषि ॥ ४ ॥

(११५) घृताहवनदीदिवःप्रतिष्मरिषतोदह ॥ अग्नेत्वंरक्षस्विनः ॥ ५ ॥

(प०) घृतऽआहवन । दीदिऽवः । प्रति । स्म । रिषतः । दह ॥ अग्ने । त्वम् । रक्षस्विनः ॥ ५ ॥

(११६) अग्निनाग्निःसमिध्यतेकविर्गृहपतिर्युवा ॥ हव्यवाड्जुह्वास्यः ॥ ६, २२ ॥

(प०) अग्निना । अग्निः । सम् । इध्यते । कविः । गृहऽपतिः । युवा ॥ हव्यऽवाट् । जुहुऽआस्यः ॥ ६, २२ ॥

## ऋग्भाष्यम्

ऋक्संहितायाः स्वाध्यायात्प्रबन्धाद्व्यासनिर्मितात् ।
ब्राह्मणेभ्यस्तथामानात् प्रोक्ताः स्युर्मुनयोत्र ये ।
श्रुत्यभावादलिङ्गाच्च मुनिर्नान्यः प्रतीयते ।
श्रुतिलिङ्गान्यतायावत्तावत्पूर्वा प्रमा भवेत् ।
शतर्ग्भिरुत्तराभिस्तु वह्निनामानमच्युतम् ।
अस्तौन्मेधातिथिस्ताभ्य- उत्तरा अपि तद्दृशः ।
अन्यत्र गास्तपस्यन्स ता ददर्श कदाचन ।
कालस्थानांतरत्वंचेत्संख्यातोभ्यधिकं भवेत् ।
अन्यस्थानगता अन्यदृष्टा अप्यत्रगा यदि ।
संख्यान्तर्भावमेष्यन्ति ता इतोपगतायतः ।
यज्ञ भागार्थमत्रस्थो देवैः सम्प्रेषितो यतः ।
दूतोग्निर्वासुदेवश्च तत्तत्प्रार्थितकृद्यतः ।
विश्ववेदाः ससर्वज्ञो यज्ञज्ञो यज्ञसुक्रतुः ॥ १ ॥
अग्निनामा जामदग्न्यो भगवान्संप्रकीर्तितः ।
तस्य रूपबहुत्वे वीप्सा चैवोपपद्यते ।
हवीमभिर्ऋगाह्वानैराह्वयंतः प्रजापतिम् ॥ २ ॥
जज्ञानो व्यज्यमानस्तु वृक्तं प्रस्तुत मुच्यते ।
यजमानोवृक्तबर्हिः ॥ ३ ॥
बोधयेशेच्छतःसुरान् ।
देवैः सहोपविशसि ॥ ४ ॥
यस्यते सुघृतं हविः ।
रिषतोनाशकारक्षो जनान्प्रतिदहैव च ॥ ५ ॥
यस्यास्ये हूयते सोग्निः परेशेन समिध्यते ।
अथवाऽऽहवनीयोग्निर्मथितेन समिध्यते ॥ ६, २२ ॥

## ऋग्भाष्यटीका

नन्वेवं शतर्चित्वस्य गतिमुक्त्वाप्येतासामृचां मधुच्छन्दाः कस्माद्दषिरुच्यते माधुच्छन्दसो जेता कस्मान्नस्यादित्यत आह ॥ ऋक्संहिताया इति ॥ तथाशब्दः समुच्चये । मानादिति

प्रत्येकमभिसम्बध्यते । तथा मानान्मानान्तरादिति वा । येऽत्र ग्रन्थे स्माभिर्मुनयः प्रोक्ता
ऋक्संहिताद्यनुसारेणैव अतस्त एव स्युः । यद्वा ऋक्संहितादिना मानेन येऽत्र मुनयः प्रोक्तास्त
स्वीकार्याः स्युः । न मानुषरचितग्रन्थोक्ता इति । युक्त्यंतरमाह ।। श्रुत्यभावादिति ।। शुनःशे
ह्वद्वदित्यादिवत् श्रुत्यभावात् मधुच्छन्दसोऽन्यस्य मुनेर्नामाभावात् । त्रिष्वादित्यं द्रुपदेषु
इत्यादिवदलिङ्गाद्दृष्यन्तरलिङ्गाभावाच्च । उपलक्षणं चैतत् । ऋष्यन्तरज्ञापकप्रमाणाभावादित्यर्थ
अन्यो मधुच्छन्दसः । किञ्च । तदु माधुच्छन्दसमित्यादि वा वायवायाहीत्यादिसूक्त
मधुच्छन्दसा दृष्टत्वमुच्यते । ततोऽपि स एवात्र द्रष्टाऽभ्युपगन्तव्यः । एवं तर्ह्यतिप्रसङ्ग इत्यत अ
।। श्रुतीति ।। श्रुतिलिङ्गयोरन्यता । अन्यज्ञापकं श्रुतिलिङ्गादि यावद्भवेत्तावदेव पूर्वा प्र
सामान्यप्रमाणं ज्ञापकं भवेत् । एतदुक्तं भवति । तदुमाधुच्छन्दसमित्यादि सामान्यवचनम्
तच्चापवादाभावे प्रमाणम् । अपवादेतु संकोचमर्हति । नचात्रापवादकं श्रुत्यादिकमस्तीति ।। अ
व्याचिख्यासितानामृचामृषिमाह ।। शतर्चिरिति ।। विशेषण समासोयम् । नद्विगुः । समासान
विधिरनित्यः । वह्निनामानमित्युपलक्षणम् । एवं चेत्कस्य नूनमित्यतः प्राक्तनीनामृष्यन्तरं वक्त
प्रसज्येतेत्यत आह ।। ताभ्य इति ।। शतसंख्याभ्य उत्तरा एकोनचत्वारिंशदपि स मेधातिथिर्द
द्रष्टा यासां तास्तद्दृशः । तर्हि कथं तस्य शतर्चित्वमित्यत आह ।। अन्यत्रेति ।। अन्यत्र
इत्यानुपूर्व्यन्तरत्वमुक्तम् । तपस्यन्नित्यवस्थांतरत्वम् । कदाचनेति कालान्तरत्वम् । स मेधातिथिः
किमतो यद्येवमित्यत आह ।। कालेति ।। कालान्तरत्वं स्थानान्तरत्वं च दर्शनस्य चेत्त
शतसंख्यातोभ्यधिकमपि तदन्तर्भूतमेव भवेत् । कालस्थानान्तरत्वमित्युपलक्षणम् । अन्यस्थान
गतत्वमन्यदृष्टत्वं च ग्राह्यम् । अत्र युक्तिमाह ।। अन्येति ।। अत्रापि कालान्तरत्वादिकमुपादेयम्
ताः कालान्तरे देशान्तरेऽवस्थान्तरे च दृष्टा ऋष्यन्तरेण वा दृष्टा आनुपूर्व्यन्तरस्थाश्च इतोपगत
अत्र विद्यमाना अप्यविद्यमानकल्पा यतः अतः संख्यान्तर्भावमेष्यन्ति । तासु विद्यमानास्वपि
शतमित्येवोच्यत इति यावत् । एकदेशकालावस्थासु तेनैव ऋषिणा दृष्टा मूलवेदे चैकानुपूर्वीस्था
शतर्चित्वे विवक्षिता इति ।।

अग्निं दूतम् ।। द्वादशर्चमेतदाग्नेयं सूक्तम् । अत्राग्नाविष्णवोर्दूतशब्दं घटयति ।। यज्ञेति
यतोग्निर्यज्ञभागार्थं देवैः सम्प्रेषितस्ततो दूतः । सन्देशेन यः प्रेष्यते सहि दूत उच्यते
अत्रस्थोऽग्निस्थो वासुदेवश्च तत्तत्प्रार्थितकृद्यतोऽतो दूत इव दूतः । विश्वं वेत्तीति विश्ववेदाः । विदे
कर्तर्यसुन् । स विष्णुः । अग्नौ तूपचारत इति भावः । यज्ञस्य सुक्रतुमित्यस्य व्याख्यानं यज्ञ
इति । क्रतुशब्दस्य ज्ञानवाचित्वात् । एवं योजना । वयं दूतं होतारं विश्ववेदसमस्यप्रमाणप्रमितस्य
यज्ञजातस्य सुक्रतुं सम्यक् ज्ञानिनमग्निं वृणीमहे प्रार्थयामह इति यावत् ।। १ ।।

अग्निम् । अत्राग्नीनामनेकत्वादग्निमग्निमिति वीप्सायां द्विरुक्तिर्युज्यते परमेश्वरे तु कथमित्याशङ्कां परिहरन् कंचिद्विशेषं चाह ।। अग्निनामेति ।। तन्मूलाद्विरुक्तिश्चोपपद्यत एव । ऋत्विजो विशां प्रजानां पतिं विश्पतिम् । हव्यं वहतीति हव्यवाट् तं हव्यवाहं पुरुप्रियं पूर्णसुखमग्निमग्निं हवीमभिः ऋग्रूपैराह्वानैः ऋचां योग्यतया सम्बन्धः । सदाहवंत आह्वयन्त आहूतवन्तः ।। २ ।।

अग्नेदेवान् । जज्ञानः । हे अग्ने जज्ञानो जायमानोऽस्मद्यज्ञे व्यज्यमानस्त्वं वृक्तबर्हिषे वृक्तं प्रस्तृतमुच्यते । वृक्तं प्रस्तृतं बर्हिर्येनासौ वृक्तबर्हिर्यजमानस्तस्मै तत्प्रयोजनाय । देवानिह यज्ञे आवह यतस्त्वं होताऽसि नोस्माकमीड्यश्चासि ।। ३ ।।

तान् । बोधय । हे अग्ने ईश यद्यस्माद्दूत्यं दूतस्य भावं कर्म वायासि प्रतिपद्यसे । देवानां दूतो यतस्तस्मादुशतः आगन्तुमिच्छतस्तान्सुरान् विबोधय विज्ञापय । अमुष्य यज्ञो युष्माभिर्गन्तव्य इति । ततश्च देवैः सह बर्हिष्यासत्सि आसीदसि उपविशसि उपवेक्ष्यसि ।। ४ ।।

घृताहवन । यस्यते । घृतं सुघृतं यज्ञयोग्यं हवनं हविर्यस्यते तव स त्वं घृताहवनः । हे घृताहवन । दीदिवः यङ्लुगन्ताद्दीव्यतेरसुन् । देदीप्यमानाग्ने त्वं रिषतः अन्तर्णीतण्यर्थोऽयम् । नाशकान् रक्षस्विनः रक्षांसि येषां सन्ति तान्रक्षसां सम्बन्धिनो जनान्यज्ञघ्नान् प्रतिदहस्म प्रतिदहैव ।। ५ ।।

अग्निनाग्निः । यस्यास्ये हविर्हूयते सजुह्वास्यः । जुहु हवनाधिवरणमास्यं यस्येति । कविः सर्वज्ञो गृहाणां पतिर्गृहपतिः । युवा तरुणो हव्यवाट् अग्निना परेशेन त्वया समिध्यते सन्दीप्तो भवति । अग्न्यादीनां दीप्त्यादिगुणप्रदस्त्वमिति यावत् । अथवा प्रसिद्धाग्निविषये जुह्वास्यः आहवनीयोऽग्निर्मथितेन गार्हपत्येनाग्निना सह समिध्यते । अन्यत्समानम् ।। ६, २२ ।।

## मन्त्रार्थमञ्जरी

इतः परम् 'अ॒ग्निं दू॒तम्' इत्यारभ्य 'कस्यं नू॒नम्' इत्यतः प्राक् एतदृक्चतुष्टयं विना) एकोनचत्वारिंशदुत्तरऋकूशतस्य (केवल) मेधातिथिर्ऋषिर्ज्ञेयः । तत्र अ॒ग्निं दू॒तम् इति द्वादशं द्वादशर्चं वर्गद्वयात्मकमाग्नेयं सूक्तम् । (तत्र 'अ॒ग्निना॒ग्निः' इति पादो निर्मथ्याहव- नीयरूपद्व्यग्निदैवतः' इति विशेषः) एतत्तु गायत्रीछन्दस्कम्, तद्देवतास्तूक्ताः अत्राग्निस्थोऽग्निनामा परशुरामो ज्ञेयः । विश्ववेदसम्, विश्वं वेत्तीति विश्ववेदाः, विदेः असुन्, तं विश्ववेदसम्, विष्णावग्नौ

च यथायोगं विश्ववेदनं ध्येयम् । अस्य, प्रमाणप्रमितस्य । यज्ञस्य सुक्रतुम्, यज्ञजातस्य सम्यग्ज्ञानिनम् । दूतम्, देवप्रार्थितकारित्वादुपचारेण दूतं विष्णुम्, हविर्भागार्थं देवप्रैष्यत्वहेतुना दूतं प्रसिद्धदेवम् । होतारम्, 'अ॒ग्निमी॑ळे' इत्यत्रोक्तदिशा होतृस्थतया होतृनामकम् । अग्निम् (वयम्) वृणीमहे, प्रार्थयामह इति यावत् ॥ १ ॥

(ऋत्विजः) विश्पतिम्, विशां प्रजानां पतिम् । हव्यं हतीति हव्यवाट् तं हव्यवाहम् । पुरुप्रियम्, पूर्णसुखम् । अग्निमग्निम्, प्रत्यग्निम्, हरे रूपबाहुल्यादग्नीनां चानेकत्वाद्वीप्सोपपत्तिः । हवीमभिः, ऋग्रूपैराह्वानैः । सदा । हवन्त, आह्वयन्तः, आहूतवन्त इति । (हे) अग्ने । जज्ञानः, यजमानः, अस्मद्यज्ञे व्यज्यमानः । (त्वम्) वृक्तबर्हिषे, वृक्तं विस्तृतं बर्हिर्येन तस्मै वृक्तबर्हिषे यजमानाय, तत्प्रयोजनाय । देवान् । इह, यज्ञे । आ वह । (यतस्त्वम्) होता असि (अतः) नः, अस्माकम् । ईड्यः (च) (असि) (ततः) इत्यर्थः ॥ ३ ॥

(हे) अग्ने, ईश । यम्, यस्मात् । दूत्यम्, दूतस्य भावं कर्म वा । यासि, प्रतिपद्यसे, देवानां प्रार्थितकृत्त्वेन दूतो यतः । (तस्मात्) उशतः, आगन्तुमिच्छतः । तान्, सुरान् । वि बोधय, 'अमुष्य यज्ञे युष्माभिरागन्तव्यम्' इति विज्ञापय ॥ ततश्च देवैः (सह) बर्हिषि । आ सत्सि । आसीदसि, उपवेक्ष्यसि, सीदतेः विकरणसीदादेशयोरभावश्छान्दसः ॥ ४ ॥

(आ) घृतं सुघृतं शुद्धं यज्ञयोग्यं हवनं हविर्यस्य तस्य सम्बुद्धिः (हे) घृताहवन । दीदिवः, देदीप्यमान, यङ्लुगन्ताद्दुत्यर्थाद्दीव्यतेः असुन्, अग्ने त्वम् । रिषतः, 'रिष हिंसायाम्' अन्तर्णीतण्यर्थोऽयम्, नाशकान् । रक्षस्विनः, रक्षांस्येषां सन्तीति तान्, रक्षसां सम्बन्धिनो जनान्, यज्ञघ्नान् । प्रति दह स्म, प्रतिदहैव, 'दह भस्मीकरणे' नाशयेत्यर्थः ॥ ५ ॥

यस्यास्ये हविर्हूयते स जुह्वास्यः । जुहु हवनाधिकरणमास्यं यस्येति, व्युत्पत्त्या जुह्वास्यः । कविः, सर्वज्ञः । गृहाणां पतिः = गृहपतिः । युवा, तरुणः । हव्यवाट् अग्निः । अग्निना, परेशेन त्वया । सम् इध्यते, संदीप्तो भवति, अग्न्यादीनां दीप्त्यादिप्रदस्त्वमिति यावत् । प्रसिद्धाग्निविषये तु– जुह्वास्यः अग्निः, होमाधारत्वादाहवनीयोऽग्निः । अग्निना, मथितेन गार्हपत्याग्निना । सम् इध्यते । इत्यर्थो ध्येयः । अन्यत्समानम् ॥ ६ ॥ इति द्वाविंशो वर्गः ॥ २२ ॥

## पदार्थप्रकाशिका

गतिमिति ॥ एकानुपूर्वीस्थऋक्शतदृष्टत्वरूपां गतिं इत्यर्थः ॥ एतासाम् ॥ इन्द्रं विश्वा अवीवृधन् ॥ इत्याद्यष्टर्चाम् । समुच्चय इति ॥ ब्रह्मणश्चेत्यर्थः । प्रत्येकमिति ऋक्संहितायाः मानात्

तद्रूपात् मानात् स्वाध्यायान्मानात् प्रबन्धान्मानात् ब्राह्मणेभ्यो मानेभ्यः इति प्रत्येकमित्यर्थः । समुच्चयार्थः । सन्मानादित्यनेन संबध्यत इत्याशयेनाह । तथा मानान्मानान्तरादिति । ऋक्संहितास्वाध्यायप्रबन्धमानान्तराच्चेत्यर्थः । सर्वं वाक्यं सावधारणमिति न्यायेन त एवेत्युक्तं नान्य इत्यर्थः । मानुषरचितग्रन्थोक्ता इति । यास्कप्रणीतानुक्रमणिकोक्ताः माधुछन्दसजेतृप्रभृतय इत्यर्थः । युक्त्यन्तरमिति । इन्द्रं विश्वा इत्याद्यानां माधुछन्दसो जेता ऋषिर्नेत्यर्थः । रूढः शब्दः श्रुतिरित्यभिप्रेत्य श्रुतिशब्दार्थ उक्तो नामेति । बद्ध इत्यादिवदिति । विक्रयेण गृहीतत्वात् स्थानत्रये बद्धत्वं हि शुनःशेफलिङ्गमित्यर्थः ॥ ऋष्यन्तरेति ॥ मधुछन्दोव्यतिरिक्ततत्पुत्रजेतृलिङ्गाभावादित्यर्थः । ननु मधुछन्दा अपि ऋषिर्न स्यात् । ऋषित्वज्ञापकलिङ्गाभावात् इत्यत आह । उपलक्षणं चेति ॥ श्रुत्यभावादलिङ्गाच्च इत्येतत् उपलक्षणं इत्यर्थः । प्रमाणेति । ऋक्संहितादिरूपप्रमाणेत्यर्थः । प्रकृते च मधुछन्दसो ऋषित्वज्ञापकं प्रमाणं ऋक्संहिताद्येव अस्तीति भावः । तदु माधुछन्दस इति । वायवायाहि दर्शतेमे सोमा अरंकृता इत्येतद्वा अरं यजमानाय च इत्युपक्रम्य तदु माधुछन्दसं इत्यादिना ऐतरेयोपनिषद्भाष्येणेत्यर्थः । अतिप्रसंग इति । एतावत्पर्यन्तं मधुछन्दसा द्रष्टेति नियामकाभावेन अग्निं दूतम् इत्यतिप्रसङ्ग इत्यर्थः । अन्यज्ञापकम् ॥ अस्य ऋषित्वज्ञापकम् ॥ पूर्वा प्रमेत्यनूद्य व्याख्याति । पूर्वप्रमा सामान्य प्रमाणमिति । तदु माधुछन्दसमिति सामान्यप्रमाणं मधुछन्दस एव ऋषित्वज्ञापकं भवेदित्यर्थः । कथमनेनातिप्रसङ्गपरिहारः इत्यत आह । एतदुक्तं भवतीति ॥ नचात्रेति ॥ इन्द्रं विश्वा अवीवृधन् इत्याद्यष्टकानां मधुछन्दसा दृष्टत्वे अपवादं नास्तीत्यर्थः । अग्निं दूतम् इत्याद्यानामपि तद्दृष्टत्वे त्वपवादकं ऋक्संहितादिकं आत्वा क एव इत्यादिश्रुतिलिङ्गादिकं च प्रमाणमस्तीत्याशयः ॥ छ ॥

ननु शतानां ऋचां समाहार इति समाहारद्विगुसमासे द्विगोरिति ङीपि शतर्चीभिरिति स्यात् । शतर्ग्भिरिति कथम् । इत्यत आह ॥ विशेषणेति ॥ विशेषणं विशेष्येण बहुलमिति सूत्रात् शतसङ्ख्याकाश्च ताः ऋचश्च शतर्चः । ताभिः शतर्ग्भिरितिकर्मधारयसमास इत्यर्थः । ननु विशेषणसमासेपि ऋक्पूरब्धूःपथामानक्ष इत्यनेन समासान्ताकारप्रत्यये सति शतर्चैरिति भवेदित्यत आह । समासान्त इति । तथाचात्र समासान्ताकारप्रत्ययो न जात इति भावः । उपलक्षणमिति । इन्द्रादिनामानमित्यपि ग्राह्यम् । ततश्चोत्तराभिः अग्निं दूतं इत्याद्याभिः शतर्ग्भिरिति भाष्यार्थो द्रष्टव्यः । एवं चेदिति । उत्तराभिः शतग्भिर्मेधातिथिः स्तौति चेत् । तर्हि तस्य व्रतान्युस्मशीत्येतत्पर्यन्तं शतर्चानां समाप्तत्वात् । विभक्तारमित्यारभ्य कस्य नूनमित्यतः प्राकृतनीनां ऋचां भाष्यान्तरं वक्तव्यमित्यर्थः । उत्तरा याः वाक् शतेत्याद्याः ॥

एकोनचत्वारिंशदपीति ।। ननु कस्य नूनमित्यतः प्राक् माधुछन्दसाभ्यः परासु मेधातिथिदृष्टास्वृक्षु ताभ्यः उत्तरा अपि तादृश इति भाष्ये ताभ्यः शतसङ्ख्याभ्यः उत्तराः एकोनचत्वारिंशदपि तादृशः स मेधातिथिः दृक् दृष्टा यासां ताः तादृश इत्युक्तं भवति । तत्कथं तासां गणनायां त्रयश्चत्वारिंशत्वादि इति चेत् । अत्र केचित् । अप्सु मे सोमो अब्रवीदित्याद्यानां च तिसृणां सप्तमाष्टकगते अयं सयस्येति षष्ठाध्यायरूपस्थानान्तरपठितानां सिन्धुद्वीपांबरीषाख्यऋष्यन्तरदृष्टा नमेधातिथिना दृष्टत्वेन अत्र गणनादित्यभिप्रायेण एकोनचत्वारिंशदित्युक्तमित्याह । तत्रेदं प्रतिभाति । एवं तर्हि सोमानं स्वरणमित्यस्यापि ऋचां कक्षीवता मुनिना दृष्टत्वात् । इळासरस्वतीमहीतिऋचः तृतीयाष्टकेऽपि गतत्वेन ऋष्यन्तरदृष्टत्वात् अत्र गणनं न स्यात् । तथाच सप्तत्रिंशदित्येव कथम् । तथा एकोनचत्वारिंशदिति कथं न स्यात् ।। इत्युक्तत्वात् ।। वस्तुतस्तु सप्तत्रयश्चत्वारिंशदधिकशतं दृश्यत इति त्रयश्चत्वारिंशदित्येव वक्तव्यम् । तथापि आत्वा कण्वा अहूषत मीळते त्वामवस्यवः । सोमानं स्वरणं अयं देवाय जन्मन इति चतसृणाम् ऋचाम् ऋष्यन्तरेणापि दृष्टत्वेन शतर्चित्वाप्रयोजकत्वात् मेधातिथिमात्रदृष्टऋक्शतमध्यवर्तित्वेपि शतमित्येव च मानत्वात् मेधातिथिमात्रदृष्टात् अग्निं दूतमित्यादिकात् अपानयात इत्यन्ताः दृष्टशतादुत्तराः विभक्तारमित्याद्याः कस्यनूनमित्यतः प्राक्तन्यः एकोनचत्वारिंशदेवेति न कोपि क्षुद्रोपद्रव इति संप्रदायविदः । आनुपूर्व्यन्तरत्वम् आनुपूर्व्यन्तरस्थत्वम् । अन्यदृष्टत्वं चेति ।। तथाच स मेधातिथिः तपस्यन् सन् अत्रगाः तथा ता ऋचः कदाचन ददर्शेति योज्यम् ।। किमत इति ।। शतर्चित्वं तस्य कथमित्याशङ्कापरिहारः कथं प्राप्तः इति भावः । स्थानान्तरत्वं देशान्तरत्वं इत्यर्थः । अन्यस्थानगतत्वम् आनुपूर्व्यन्तरत्वम् इत्यर्थः । भाष्ये अपिपदं तदन्तर्भूतमेवेति शेष इत्यभिप्रेत्याह अपिपदं तदन्तर्भूतमेवेति । तथाच दर्शनकालान्तरत्वं स्थानान्तरत्वं कालान्तरे देशान्तरे च दृष्टानामृचां अन्यस्थानगतत्वं अन्यदृष्टत्वं चेति भाष्यार्थः ।। अत्रेति ।।

कालस्थानान्तरत्वं चेत् सङ्ख्यातोभ्यधिकमपि तदन्तर्भूतमेव भवेदित्यत्रेत्यर्थः । भाष्ये आनुपूर्व्यन्तरस्थत्वान्यदृष्टत्वयोरेवोक्तत्वादाह ।। अत्रापीति ।। आदिपदेन देशान्तरत्वम् अवस्थान्तरत्वं चोपादेयम् । अन्यादृष्टा इत्यस्यार्थो ऋष्यन्तरेणादृष्टा इति । अन्यस्थानगता इत्यर्थः । आनुपूर्व्यन्तरस्था वा इति । अत्रगा अपीत्यस्यार्थो अत्र विद्यमाना अपीति । अत्र शतसङ्ख्याकासु ऋक्षु विद्यमाना अपि एकोनचत्वारिंशदृच इति शेषः ।। तात्पर्यमाह ।। तास्विति ।। शतमिति मेधातिथिना ऋक्शतमेव दृष्टमित्युच्यते इत्यर्थः । ननु एतावतापि तस्य शतर्चित्वं कथमित्यस्याशङ्कायाः परिहारः कथं इत्यत आह । एकदेशेत्यादिना । एकानुपूर्वीस्थाः शतऋच

इति शेषः । शतर्चित्वनिमित्ततया विवक्षिता इत्यर्थः तथाच एकोनचत्वारिंशदृचामेतादृशत्वा-भावान्न तस्य शतर्चित्वभङ्ग इति सर्वमवदातमिति भावः ॥ छ ॥

अग्निंदूतं वृणीमहे । अग्निं द्वादश मेधातिथिः काण्वो आग्नेयं इत्यनुक्रमणिकां हृदि निधायाह । द्वादर्शचमेतदाग्नेयं सूक्तमिति ॥ सन्देशेनेति ॥ आज्ञयेत्यर्थः ॥ विदेरिति । विद्ज्ञाने अस्मादसुन् प्रत्यये उन् इत्यस्य लोपे गुणे सवर्णदीर्घे सति सस्य रुत्वे विसर्गे च वेदा इति रूपम् । स सर्वज्ञ इत्यत्र तच्छब्दार्थमाह । स विष्णुरिति । अग्नौ त्विति । अग्नौ तु सर्वज्ञत्वमुपचरितमित्यर्थः । प्रमाणप्रमितस्येति । प्रत्यक्षादिप्रमाणप्रमितस्येत्यर्थः ॥ छ ॥ १ ॥

अग्निमग्निं हवीमभिः । अनेकत्वादिति स्वाभिमानिनश्चाग्नेरात्मजाग्नीनजीजनत् । पावकं पवमानं च शुचिं च हुतभोजनम् । तेभ्यो अग्नयः समभवन् चत्वारिंशच्च पञ्च च । त एवैकोनपञ्चाशत्साकं पितृपितामहैः । वैतानिके कर्मणि यमभिर्ब्रह्मवादिभिः । आग्नेया इष्टयो यत्र निरूप्यन्ते अग्नयस्तुताः । इति भागवतोक्तेरित्यर्थः । अत एव प्रधानाग्नेरनलकुलेन्द्र इति प्रसिद्धिरिति द्रष्टव्यम् । कथमिति । तस्यैकत्वादिति भावः । कञ्चिद्विशेषं अग्निशब्दवाच्य-रूपविशेषमित्यर्थः ॥ तन्मूलेति ॥ रूपबहुत्वमूलकेत्यर्थः ॥ आह्वानैः ॥ आह्वानमन्त्रैः । योग्यतयेति । अग्न्यादिदेवताह्वानकरणत्वयोग्यतयेत्यर्थः ॥ छ ॥ २ ॥

अग्ने देवां इहावह । व्यज्यमान इति । जनिप्रादुर्भाव इति धातोरिति भावः । कुतोहं यज्ञे देवानावाहयामि इत्याशङ्कायाम् आवयोः सम्बन्धोस्तीति आह । यतस्त्वमिति ॥ होतासीति ॥ होतृदेवतात्वादग्नेरिति भावः ॥ छ ॥ ३ ॥

ताम् उशतो विबोधय । दूतशब्दात् तस्य भावे कर्मणि चेति यप्रत्यये सति दूत्यमिति भवति इत्याशयेन दूत्यशब्दार्थमाह ॥ दूतस्य कर्मवेत्यर्थः । तदभिप्रायमाह । देवानां दूत इति । आगन्तुमिच्छत इति । अस्मद्यज्ञं प्रति आगन्तुं तेषामिच्छा स्वत एव पूर्वमस्तीत्यर्थः । अमुष्य यजमानस्य । प्राघ्राध्मेति सदः सीदादेशाभावः छान्दसः इत्याशयेनासीदसीति पदार्थमुक्त्वा भाष्यं सङ्गमयति । उप विशसीति । इदानीमग्नेरुपवेशाभावादाह । उपवेक्ष्यसीति । देवानामागमनन्तनरं तैः समं त्वमप्युपवेक्ष्यसीत्यर्थः ॥ छ ॥ ४ ॥

घृताहवनदीदिवः । घृताहवनेत्यत्रायमकारः सम्यगित्यर्थे इत्याशयेन प्रयुक्तस्य सुशब्दस्य तात्पर्यमाह । यज्ञभोग्यमिति । यङ्लुडन्तात् दीव्यतेरसुनिति । द्युत्यर्थकात् दिव्धातोः असुनप्रत्यये यङि सन्यङोरिति द्वित्वे हलादिशेषे यङो लुकि गुणो यङ्लुकोरिति प्राप्तगुणापवादकत्वेन

दीर्घोऽकित इत्यभ्यासस्य दीर्घे दीदिवसे इति प्रातिपदिकं एवं च संबुद्धौ सोर्लोपे प्रातिपतिकान्तसकारस्य रुत्वे विसर्गे च सति दीदिव इति रूपमिति भावः । रिषतो नाशवत इत्यन्यथाप्रतीतेराह ॥ अन्तर्णीतेति ॥ नाशकानित्यस्याभिप्रायमाह ॥ यज्ञघ्नानिति ॥ छ ॥ ५ ॥

अग्निनाग्निः समिध्यते ॥ हविर्हूयत इति ॥ यस्यास्येतिभाष्यप्रतीकग्रहणस्य कृतत्वात् हविर्हूयत इत्येवोक्तमिति ज्ञातव्यम् । तत्कथमित्यत आह जुह्विति । भगवद्देवताकत्वप्राप्त्यर्थमाह । अग्न्यादीनामिति । आहवनीयोग्निर्मथितेनेति । अग्निनेति पदम् अग्निदेवतानिर्मथित आहवनीयश्चेत्यनुक्रमणिकासंवादोप्यत्र द्रष्टव्यः ॥ अन्यदिति ॥ कवित्वादिविशेषण-पञ्चकमित्यर्थः ॥ ६ ॥ २२ ॥

## पदार्थदीपिका

उपपत्तिं तूत्तरत्र वक्ष्याम इत्युक्तं, तदिदानीं दर्शयितुमाशङ्कते ॥ नन्विति ॥ उक्त्वापीत्यनेन किमर्थ एतावान्प्रयास इति सूचयति । लिङ्शब्दसमभिव्याहारात् श्रुतिपदं रूढशब्दपरं न तु वेदपरमिति भावेन व्याचष्टे ॥ नामाभावादिति ॥ न चात्रापि जेतारमिति जेतृश्रुतिरस्तीति वाच्यम् । जयशीलमिन्द्रमिति इन्द्रविशेषणत्वेन देवतासमर्पकत्वेन तस्याः शतर्चं ऋषित्वासाध-कत्वादिति भावः ॥ अतिप्रसङ्ग इति ॥ अग्निं दूतमित्यत्रापि मधुच्छन्दस एव ऋषित्वं स्यादित्यतिप्रसङ्ग इत्यर्थः । एवमपि कथमतिप्रसङ्गपरिहार इत्यत आह ॥ एतदुक्तं भवतीति ॥ ननु शतानां ऋचां समाहार इति तद्धितार्थोत्तरपदसमाहारे चेति लक्षणप्राप्तसमाहारद्विगुसमासाश्रयणे शतर्चेनेति भवितव्यम् । शताग्भिरिति तु कथम् । द्विगुरेकवचनमिति एकवद्भावस्य, सनपुंसकमिति नपुंसकत्वस्य, ऋक् पूरब्धूःपथामानक्षे इति समासान्ताच्प्रत्ययस्यावश्यकत्वात् इत्यतः शतं च ताः ऋचश्च शतर्चः ताभिः शतर्ग्भिः इति विशेषणं विशेष्येण बहुलमिति लक्षणविहित विशेषण समासाश्रयणान्न द्विगुत्वप्रयुक्तैकवद्भावनपुंसकत्वयोः प्रसङ्ग इत्याशयेनाह ॥ विशेषणसमास एवायं न द्विगुरिति ॥ ननु तथापि ऋक्पूरब्धूःपथामानक्ष इति समासान्ताच्प्रत्यये सति शतर्चैरित्येव भवितव्यम् शतर्ग्भिरिति तु कथमित्यत आह ॥ समासान्तो विधिरनित्य इति ॥ तदनित्यत्वं ऋक् पूरब्धूःपथामिति सौत्रनिर्देशादेव सिध्यति । अन्यथाहि पथानामित्येव ब्रूयात् इति भावः । यद्वा शतर्ग्भिरित्यत्र समाहारवाचित्वात् तद्धितार्थोत्तरपदसमाहारे चेति संख्यायाः समानाधिकरणेन तत्पुरुषसमासः । संख्यापूर्वो द्विगुरिति द्विगुसंज्ञा । ऋगन्तसमासत्वात् ऋक्पूरब्धूःपथामानक्ष इति समासान्तोऽकार प्रत्ययः । समाहारस्यैकत्वात् एकवचनमेव । यदा समाहृतप्रधाने द्विगुस्तदा

ऋग्बाहुल्येन बहुत्वे प्राप्ते द्विगुरेकवचनमिति द्विग्वर्थस्यैकवद्भावः तथा च शतर्चेनेति स्यात् । उभयथापि शताग्र्भिः इत्यनुपपन्नमेव । ननु पञ्चगवे, पञ्चगवानि इत्यादिवदुपपत्तिरिति वाच्यम् । वैषम्यात् । द्विग्वर्थस्यैवाभावात् । तत्र हि प्रथमं द्विग्वर्थस्यैकवद्भावे कृते अनन्तरमेकशेषे कृते योऽयं द्विग्वर्थसमुदायः तस्यैवार्थत्वात् । न च तथा प्रकृते प्राथमिकस्य द्विग्वर्थस्यैव सत्वादित्यत आह ॥ विशेषणसमासोऽयं न द्विगुरिति ॥ विशेषणं विशेष्येण बहुलमिति सूत्रेणेत्यर्थः । ननु शतं च ऋचश्च शतर्चः इति विशेषणसमासस्यापि दिक्संख्ये संज्ञायामिति संज्ञायामेव नियमनात् शतर्क्शब्दस्य चासंज्ञात्वात् कथं विशेषणसमासोऽपीति चेत् मैवम् । ऋक्शब्दोऽत्र समुदायपरः । शतमवयवा यासामिति शतावयवाः । ताश्चताः ऋचश्च शतर्चः । शाकपार्थिवादिरिति मध्यमपदलोपः । तथाच शतावयवरूपबहुव्रीहि पूर्वपदो विशेषणसमास इति न कश्चिद्दोष इति दिक् ॥

एवं चेदिति ॥ शतर्ग्भिः तुष्टाव मेधातिथिरिति चेत् शतर्ग्भिरिति शेषोक्त्या शतर्चित्वबाधनार्थं च तदुत्तराणां मेधातिथिदृष्टशतर्चानन्तरभाविनीनां विभक्तारमित्यादिकानां ऋष्यन्तरं वक्तव्यमित्यर्थः ॥ शतसंख्याभ्यः उत्तरा एकोनचत्वारिंशदपीति ॥ नन्वग्निं दूतमित्यारभ्यैतदध्यायगतसूक्तानामष्टत्वात् तेष्वपि चाद्यानां चतुर्णाम् अग्निं दूतं सुसमिद्धोनः एभिरग्ने इन्द्रसोमं पिबेत्येवं रूपाणां द्वादशर्चत्वात् उत्तरेषां चतुर्णाम् आत्वा वहंतु हरयः इन्द्रावरुणयोः सोमानं स्वरणं प्रतिमित्येवं रूपाणां नवर्चत्वात् उभयेषां मिलितानां अध्यायान्तं चतुरशीत्यृचत्वे उत्तराध्याये कस्य नूनमित्यन्त सूक्तानां चतुष्ट्वात् तत्राप्ययं देवायेत्यस्याष्टर्चत्वात् हे इन्द्राग्नीत्यस्य षष्टर्चत्वात् प्रातर्युजेत्यस्यैकविंशत्यृचत्वात् तीव्राः सोमास इत्यस्य चतुर्विंशत्यृचत्वात् तृतीयसूक्तस्थर्ग्द्वयसहितपूर्वसूक्तद्वयेन पूर्वाध्यायगतसूक्ताष्टकसहितेन ऋक्शते समाप्ते ऋग्द्वयोनतृतीयसूक्तस्य ऋग्गणने त्रयश्चत्वारिंशर्चा शताधिकत्वात् एकोनचत्वारिंशतामेव शताधिकत्वाभिधानं कथं संगच्छत इति चेत् । अत्र केचित् । आत्वा कण्वा अहूषत, इळ ते त्वामवस्यवः, सोमानं स्वरणं अयं देवायेति चतसृणामन्यदृष्टत्वस्यापि भावात् अन्यदृष्टत्वस्य चानुक्तिकारणात् ताः पृथक्कृत्यान्यासामेकोनचत्वारिंशत्वात् तथाभिधानमुपपन्नमेवेति वदन्ति । अत्र अस्मद्गुरुचरणाः । नैतद्विचारपदवीमर्हति । ताभ्य उत्तरा अपि ददृश इति भाष्ये, शतसंख्याभ्य उत्तरा एकोनचत्वारिंशदपीति टीकायां च शतसंख्याकोत्तरमिव देश कालावस्थान्तरान्य-दृष्टत्वानामभिप्रेतत्वेन शतान्तर्गतानामासां चतसृणामन्यदृष्टत्वाद्यभिप्रायेणैतद्ग्रन्थव्याख्याने "एकदेशकालावस्थासु तेनैव ऋषिणा दृष्टा मूलवेदे चैकानुपूर्वीस्था हि शतर्चित्वे विवक्षिता"

इत्युत्तरग्रन्थविरोधापत्तेः । शतर्ग्भिरुत्तराभिस्तु ताभ्य उत्तरा अपीति ग्रन्थस्वारस्यपर्यालोचनया चाग्निं दूतमित्यत उत्तरासां शतत्वस्य एकोनचत्वारिंशतां तदुत्तरत्वस्य च स्फुटं प्रतीयमानत्वात् । न चैतद्भाष्यटीकयोरेतासामन्यदृष्टत्वस्य स्फुटमभिप्रेतत्वेन तन्मूलकमेतद्व्याख्यानमिति वाच्यम् । एतदृक्चतुष्टयभाष्यटीकयोरपि कण्वपदगृहीत कण्वसम्बन्ध्यतिरिक्तर्षिदृष्टत्वाभिप्रायस्यैकदेश-कालावस्थास्वित्याद्युत्तरग्रन्थपर्यालोचनया आवश्यकत्वात् । अन्यत्रापि च अभिनोदेवीः इन्द्राग्नी ता हवामहे इत्यादिशतान्तर्गतासु तद्विप्रास इत्यादि एकोनचत्वारिंशतृक्षु च बहुवचनस्य श्रुतत्वात् भाष्यादेश्चोपलक्षणपरत्वाच्चतसृणामेव पृथक्करणायोगाच्च स्वोदाहृतचतसृष्वपि सोमानमित्यस्या अन्यदृष्टत्वस्य योऽत्र मुनिरित्यादि टीकाविरुद्धत्वाच्चेत्यास्तां तावत् ।

तस्मात् कण्वसम्बन्ध्यतिरिक्तदृष्टत्वे च न सर्वप्रसिद्धानां क्रमिकाणां सिन्धुद्वीपअम्बरीष इत्याद्यनुक्रमणिकाकारस्यापि अन्यदृष्टत्वेनानुमानां सप्तमाष्टकषष्ठाध्यायस्थापोहिष्ठेति नवर्चसूक्तान्तर्गतानां अत्रापि शतात् बहिर्भूततया पठ्यमानानां अप्सु मे सोम इत्यारभ्य चतसृणां ऋचां एकोनचत्वारिंशदपेक्षयान्यदृष्टत्वेनात्र विवक्षयैकोनचत्वारिंशदपीति टीकाकारीयोक्ति-रुपपन्नेति युक्तमुत्पश्यामः ॥ स्थानान्तरत्वमिति ॥ देशान्तरत्वमित्यर्थः ॥ अन्यस्थानगतत्वमिति ॥ आनुपूर्व्यन्तरगतत्वमित्यर्थः ॥ कालान्तरगतत्वादिकमिति ॥ आदिपदेन देशावस्थान्तरत्वे ग्राह्ये ॥ मूलवेदे चैकानुपूर्वीस्था इति ॥ ननु मूलवेदे शतानामप्यृचामेकानुपूर्वीस्थत्वे सूक्तं त्वनारतमिति सूक्तलक्षणाक्रान्तत्वेन तावत एकसूक्तत्वप्रसंग इति चेन्न, पूर्वासामुत्तरत्वस्योत्तरासां पूर्वत्वस्य स्थलान्तरस्थानामप्रतिक्षेपस्यैकानुपूर्वीस्थपदे नव्यावर्तितत्वेऽपि मध्ये विच्छेदस्याव्यावर्त्तिततया तत्तद्विच्छेदस्थले एव सूक्तव्यवहारोपपत्तिरिति सकलमकलङ्कम् ॥

अग्निं दूतम् ॥ प्रार्थयामह इति ॥ वृङ्सम्भक्ताविति धातोरिति भावः ॥ १ ॥

वीप्सा चैवेत्यत्र शब्दार्थं वदन्नेवशब्दोभिन्नक्रम इत्याह ॥ तन्मूला चेति ॥ वीप्सामूलेत्यर्थः । नित्यवीप्सयोरिति स्मरणदिति भावः ॥ हव्यवाडिति ॥ वह् प्रापणे ण्विरित्यनुवृत्तौ वहश्चेति ण्विप्रत्यये णित्वादुपधावृद्धिरिति भावः ॥ पूर्णसुखमिति ॥ प्रियमेव शिरः इत्यादौ सुखविशेषे प्रयुक्तस्यापि प्रियशब्दस्य मोदप्रमोदादिशब्दानामिव सामान्यवाचकत्वमविरुद्धं, प्रियाप्रिये स्पृशत इत्यादौ सुखसामान्येऽपि प्रयोगादिति भावः ॥ हवीमभिरिति ॥ ह्वेञ् स्पर्धायां शब्दे च आह्वानकरणभूतेषु मन्त्रेषु स्वव्यापारं प्रति स्वातन्त्र्यात् कर्तृत्वविवक्षया अन्येभ्योऽपि दृश्यते इति कर्तरि मनिन् । तस्य छान्दस ईडागमः । बहुलं छन्दसीति धातोः सम्प्रसारणम् । पूर्वरूपत्वम् ।

गुणावादेशौ । तेन हवीमभिरिति सिध्यतीत्यर्थः । यद्वा हृभृधृसृशृस्तृइभ्यः मनिजिति ह्वयतेः करणे इमनिच् प्रत्ययः । बहुलं छन्दसीति कृतसम्प्रसारणस्य ह्वयतेरपि हूयते इत्यनेन संगृहीतत्वात् । यद्यपि वृत्तिकारेण ह्रस्वादिमेव प्रत्ययं पठित्वा व्याख्यातमुदाहृतं च हविमभिः इत्यादि । तथापि छन्दसीत्यनुवृत्तेः अस्य छन्दोमात्रविषयत्वात् छन्दसि च अहिः श्रुणोतु बुध्यो हवीमन् इति पिष्टतां नो भरीमभिः अयं जायत मनुषो धरीमणि वातस्य सर्गे अभवत्सरीमणि नेनिक्ते अप्सु यजते परीमणि अद्वेषो अद्य बर्हिषस्तरीमणिति हि देवस्य सवितु सवीमभिरित्यादि प्रयोगदर्शनात् तत्सिध्यर्थं दीर्घादित्वस्यैव विधेयत्वात् ह्रस्वादिपाठो न युज्यते । ह्रस्वादि प्रत्ययस्य हरिमाणं निदध्मसि जनिमा जजानेत्यादि रूपसिध्यर्थं मिमन्निति विधानाच्चेति ज्ञेयम् ॥ हवन्त आह्वयन्तेति ॥ ह्वयतेर्लङि प्रथमपुरुषबहुवचने झे सति विकरणे च शपि सम्प्रसारणं चेति सम्प्रसारणसूत्रोत्तरं बहुलं छन्दसीति सम्प्रसारणे परपूर्वत्वे शब्लोपविधायकादिप्रभृतिभ्यः शपः इत्यस्मादुत्तरेण बहुलं छन्दसीति सूत्रेण विकरणशप्लोपे अत्र बहुलं छन्दसीति माङ्योगेऽपीति बहुलग्रहणात् अडभावे अस्यान्तादेशे गुणावादेशयोर्हवन्तेति सिध्यतीति भावः ॥ २ ॥

॥ जज्ञानो जायमानो व्यज्यमान इति ॥ जनी प्रादुर्भावे अस्मात् कर्मणि लिटः कानच् गमहनेत्युपधालोपः । द्विर्वचनेचि । तस्य स्थानिवद्भावात् द्विर्वचनमिति भावः ॥ वृक्तमिति ॥ ओ व्रश्चू छेदने । निष्ठेति क्तप्रत्ययः । यस्य विभाषेति इट् प्रतिषेधः । ओदितत्वेपि नत्वाभावः छान्दस इति भावः । यद्यपि व्रश्चतेः छेदनार्थतयापि पाठात् वृक्तं छिन्नमिति सिध्यति । न पुनः प्रस्तृतमिति । तथापि विच्छेदस्य प्रस्तरणार्थत्वाल्लक्षणया प्रस्तृतमित्युक्तमित्यवधेयम् । अनेकार्थ-त्वाद्धातूनामित्याशयेन तथोक्तमित्यन्ये । वृश्च प्रस्तरण इत्यपि धातुरस्तीत्यभिप्राय इत्यप्याहुः ॥ होतेति ॥ ह्वयतेः ताच्छीलिकादिषु तृन् । बहुलं छन्दसीति सम्प्रसारणमिति भावः । अस्तेः सिप् । अदिप्रभृतिभ्यः शप इति शपो लुक् । तासत्स्योर्लोप इति सकारस्य लोप इति ज्ञेयम् ॥ ईड्यश्चेति ॥ ईड स्तुतौ ऋहलोर्ण्यदिति ण्यदिति भावः ॥ ३ ॥

॥ दूतस्य भावं कर्मेति ॥ दूतस्य भावः कर्मणीति यत् । तस्य तित्स्वरितापवादत्वेन यतो नाव इति प्राप्तमाद्युदात्तत्वं सर्वे विधयः छन्दसि विकल्प्यन्ते इति निवर्तते । अतस्तित्स्वरितमित्येव भवतीति भावः । ॥ उशत इति ॥ वशकान्तौ लटः शतृप्रत्ययः । अदिप्रभृतिभ्यः शपः शपो लुक् । ङिद्वद्भावात् ग्रहिज्येत्यादिना सम्प्रसारणमिति ज्ञेयम् ॥ असत्सीति ॥ षद्लृविशरणगत्यवसादनेषु । अस्माल्लटि मध्यमपुरुषैकवचने सिपि विकरणे शपि शपो बहुलं छन्दसीति लुक् । न लुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधात् पाघ्राध्मेत्यादिना सीदादेशाभावे खरि

चेति चर्त्वे सत्सीति रूपसिद्धिरिति भावः ॥ उपवेक्ष्यसीति ॥ भाष्ये उपविशसीति लृडर्थे लडिति भावः ॥ ४ ॥

सम्यगर्थेऽयमाकार इति भावेन भाष्ये प्रयुक्तस्य सुशब्दस्य तात्पर्यमाह ॥ यज्ञयोग्यमिति ॥ घृतमिति शेषः ॥ हवनं हविरिति ॥ कृत्यल्युटो बहुलमिति कर्मणि ल्युडिति भावः ॥ यङ् लुगन्तादिति ॥ दीव्यतेर्यङि लुकि द्विर्भावे हलादिशेषे दीर्घोऽकित इत्यभ्यासस्य दीर्घतायां दीदिव इति सिध्यतीत्यर्थः ॥ असुनिति ॥ उपलक्षणं चैतत् । स च किच्च भवतीत्यपि द्रष्टव्यम् । कित्वकरणं च गुणाभावार्थमिति बोध्यम् ॥ रिषत इति ॥ रूषि रिष हिंसार्था इति भौवादिकस्य लटः शत्रादेशे शपि छान्दसो गुणाभावः । यद्वा तौदादिकस्य रुष रिष हिंसायामित्यस्येदं रूपम् । अत्र च पक्षे विकरणस्य शस्य सार्वधातुकमपित् इति ङित्वात् गुणाभावः । षत्वमत्र छान्दसमिति ध्येयम् । ननु रिषत इत्यस्य नाशयान् इति व्याख्यानं युक्तम् । नाशकानिति तु कथमित्यतः आह ॥ अन्तर्णीतेति ॥ रेषयन्ति इति रिषन्त इति अन्तर्णीतण्य इत्यर्थः । अतो नाशकानिति युक्तं व्याख्यानमिति भावः ॥ ५ ॥

मथितेन गार्हपत्येनेति ॥ यद्यपि मथितस्याग्नेः अरणीस्थत्वात् अरणीस्थेन समिध्यत इत्येव वक्तव्यम् न गार्हपत्त्येनेति तथापि अरण्योरपि गार्हपत्याग्नौ पूर्वमेव प्रतपनादिना गार्हपत्याग्नेरेवारणीस्थोऽपि गार्हपत्य एवेति आशयेन गार्हपत्येनेत्युक्तम् । अत एव तासु जिह्वेति ऋग्व्याख्यानसमये मथ्यमानो गार्हपत्य इति वक्तीति ध्येयम् ॥ जुह्विति ॥ क्विप् चेत्यादिना क्विप् दीर्घयोरनुवृत्तौ हुवः श्लुवच्चेति जुहोतेरधिकरणे किप् । तत्सन्नियोगात् दीर्घश्च । श्लुभावात् श्लाविति द्विर्भावः । कुहोश्चुरिति श्चुत्वं झकारः । अभ्यासे चर्चेति जुहोतेर्जस्त्वं जकारः । ह्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्वत्वमिति भावः ॥ ६ ॥ २२ ॥ इति प्रथमे द्वाविंशो वर्गः ॥

## टीकाविवृतिः

शतसंख्याकानामृचां समाहार इत्यर्थे तद्धितार्थेति समासे संख्यापूर्वत्वेन द्विगुत्वात् द्विगुरेक वद्भावे सनपुंसकमिति नपुंसकत्वे ऋक्पूरब्धूरिति समासान्तेऽकारे शतर्चेनेति भाव्यं भाष्ये शतर्ग्भिरिति कथमुक्तमित्यत आह ॥ विशेषणसमास इति ॥ शतं च ता ऋचश्चेति शतर्चस्ताभिः शतर्ग्भिरिति विशेषणं विशेष्येणेति कर्मधारय इत्यर्थः । ननु तथापि समासान्तेऽकारप्रत्यये ऋक्पूरब्धूरित्यनेन सति शतर्चैरिति भाव्यमित्यत आह ॥ समासान्तविधिरिति ॥ अतोऽत्र नसमासान्त इति शेषः । प्राक्तनीनामिति ॥ यावांकशामधुमतीत्यादीनामित्यर्थः ॥ एकोन

चत्वारिंशदपीति ।। यद्यप्यग्निं दूतमित्यादि चत्वारिसूक्तानि प्रत्येकं द्वादशर्चानि उत्तरचतुष्टयं प्रत्येकं नवर्चं अयं देवायेत्यष्टर्चं तत उत्तरमेकं षळर्चं तदनंतरमेकविंशत्यृचं तदनन्तरं चतुर्विंशत्यृचं एवं कस्य नूनमित्येतत्पर्यन्तं विद्यमानानां द्वादशसूक्तानि मिलित्वा त्रिचत्वारिंशदधिकऋक्शतं भवति । तथाप्यप्सुमे सोमो अब्रवीत् आपः पृणीतभेषजं इदमापः प्रवहत आपो अद्यान्वचारिषमिति चतसृणामृचां मन्त्रान्तिमसूक्ते पठितानां सप्तमाष्टकेऽरण्याध्यायेप्यापोहिष्ठेति सूक्तस्य सिन्धुद्वीपों बरीषोवेति ऋष्यन्तरोक्तेरप्सुम इत्यादि चतसृणामृषित्रयदृष्टत्वेन केवलमेधातिथि दृष्टत्वाभावात्तत्त्यागेन केवलमेधातिथिदृष्टर्ग्विवक्षयैकोनचत्वारिंशदित्युक्तमिति सम्प्रदायविदः । दृग्द्रष्टेति ।। दृशेः कर्तरि क्विबित्यर्थः । स्थानान्तरत्वमिति ।। वेदे देशान्तरस्थत्वमित्यर्थः । तदन्तर्भूतमिति ।। शतान्तर्भूतमित्यर्थः । अन्यस्थानगतत्वमिति ।। आनुपूर्व्यन्तरगतत्वमित्यर्थः । निष्कृष्टार्थमाह ।। एकदेशेति ।। अत्र मूलवेदशब्देनोपवेदो गृह्यते । तथाच सूक्तादिविषये यथा नानुपपत्तिः स्थानान्तरगते इति भाष्यव्याख्यानावसरे तथोक्तमनुसन्धेयम् ।

अग्निं दूतम् । द्वादशर्चमिति ।। अग्निं द्वादशमेधातिथिः काण्व आग्ने यमग्निनेति पादो द्व्यग्निदैवतो निर्मथ्य आहवनीयश्चेत्यनुक्रमणिकोक्तेः । अग्निमिति सूक्तं तस्य द्वादशेति संख्या कण्वगोत्रापत्यं मेधातिथिनामा ऋषिः आग्नेयं अग्निदेवताकं अग्निनाग्निः समिध्यत इति पादोऽग्निद्वयदेवताकः तावग्नी निर्मथ्योगार्हपत्य आहवनीयश्चेत्यनुक्रमणिकार्थः ।। देवैः सम्प्रेषित इति ।। अग्नेः पूर्वे भ्रातरो अर्थमेतमिति सूक्ते प्रसिद्धमेतत् ।। दतू इवेति ।। दूतस्याग्नेरन्तः प्रेरणाय स्थित्वाग्निद्वारा तत्तदपेक्षितकरणादिति भावः । अग्नौत्विति ।। बहुवेत्तृत्वेन विश्ववेत्तृत्वसाम्यादित्याशयः ।। यज्ञज्ञो यज्ञ सुक्रतुरिति भाष्यं कस्य श्रौतपदस्य व्याख्यानमिति न प्रतीयते अत आह ।। यज्ञस्येति ।। यज्ञसुक्रतुरित्यर्थानुवाद इति भावः ।। ज्ञानवाचित्वादिति ।। चित्तं क्रतुरिति प्रज्ञानामसु पाठादिति भावः । वृङ्संभक्ताविति धातोः श्नाप्रत्यये ईहल्यघोरितीत्वे सिद्धस्य वृणीमह इत्यस्य भजामह इत्यक्षरार्थमभिप्रेत्य तात्पर्यार्थमाह ।। प्रार्थयामह इति यावदिति ।। १ ।।

अग्निमग्निम् । अनेकत्वादिति ।। गार्हपत्यादिरूपेणेत्याशयः । तन्मूलेति ।। नित्यवीप्सयोरिति सूत्राद्वीप्सामूलेत्यर्थः । हव्यवाडिति ।। वहश्चेति ण्विरिति भावः ।। पूर्णसुखमिति ।। प्रियो हृद्येचेति विश्वोक्तेः सुखस्यैव मुख्यहृद्यत्वात्प्रियमेवशिरः प्रियाप्रियेन स्पृशत इत्यादौ प्रियशब्दस्य सुखे प्रयोगाच्चेति भावः ।। हवीमभिरिति ।। हृभृधृसृस्तृशॄभ्य ईमनिजिति सूत्रेण विहित ईमन्प्रत्ययो

बहुलोक्तेर्बहुलं छन्दसीति कृतसम्प्रसारणात् ह्वेञोपि । यद्यपि पञ्चपाद्यां ह्रस्वेकारादिः प्रत्ययः पठ्यते तथापि दशपाद्यां दीर्घादिपाठादयं शब्दः साधुः । अत एव पिपृतां नोभरीमभिः । अयं जायत मनुषोधरीमणि । वातस्य सर्गो अभवत्सरीमणीत्यादि प्रयुज्यते वेदे । हवन्तेति ॥ ह्वेञो लङि बहुलं छन्दसीति सम्प्रसारणे छान्दसोऽडभाव इति भावः ॥ २ ॥

अग्नेदेवान् । जज्ञान इति ॥ जनीप्रादुर्भाव इत्यतः कर्तरिलिटः कानञ्चि गम हनेत्युपधालोपस्य द्विर्वचनेऽचीति स्थानिवत्त्वाद्वित्वमिति भावः ॥ प्रस्तृतमिति ॥ ओव्रश्चू इत्यस्य छेदनार्थत्वोक्तावपि धातूनामनेकार्थत्वादेवमुक्तम् । ओदितश्चेति निष्ठातत्वं च्छान्दसत्वान्नेति भावः ॥ ३ ॥

तां उशतः ॥ दूतस्य भावमिति ॥ सख्युर्य इति सूत्रे दूतवणिग्भ्यां चेति वाच्यमिति काशिकोक्तेर्भावकर्माधिकाराद्दूतत्वं दूतव्यापारोवा दूत्यशब्दार्थः । प्रत्ययस्वरापवादेन प्रत्ययस्य छान्दसस्वरितत्वं बोध्यम् । दूतस्य भागमिति पाठे तु दूतस्य भागकर्मणी इति सूत्रेण भागकर्मार्थे योर्यत्प्रत्ययेति त्वास्वरितत्वे दूत्यशब्दो दूतस्य देयो योंऽशस्तदर्थस्तद्व्यापारार्थो वेति भावः ॥ उशत इति ॥ वशकान्तावित्यतो लटः शत्रादेशस्य सार्वधातुकमपिदिति ङित्वाद्ग्रहिज्येसम्प्रसारणमिति भावः ॥ आसत्सीति ॥ सदेर्भविष्यदर्थे व्यत्ययेन लटि बहुलं छन्दसीति शब्लुकि सति पाघ्राध्मेति सीदादेशाभाव इति भावः ॥ ४ ॥

घृताहवन दीदिवः । घृतविशेषणस्य कडारादित्वान्मध्ये पतितस्याङोर्थो भाष्ये सुशब्देनोक्तस्तद्विवृणोति ॥ यज्ञयोग्यमिति ॥ कृत्यल्युटोबहुलमित्युक्तेः कर्मण्यपि ल्युडिति भावेनाह ॥ हवनं हविरिति ॥ यङ्लुगन्तादिति ॥ द्वित्वादौ सति संज्ञापूर्वकत्वेनानित्यत्वादभ्यासस्य गुणो यङ्लुकोरिति गुणाभावे दीर्घोऽकित इति दीर्घे असुनि पुगन्त लघूपधस्य चेति न गुणः । कषखषशिषजषझषशषवषमषरुषरिषहिंसार्था इति दण्डके पठितरिषधातोर्लटः शतरि भाष्योक्तनाशकार्थत्वसम्भवात्तदङ्गीकृत्य यज्ञनाशकराक्षस प्रेरकश्रेष्ठरक्षोविवक्षयाप्याह ॥ अन्तर्णीतण्यर्थ इति ॥ रक्षस्विन इत्यत्रास्मायामेधास्रजोविनिरिति मत्वर्थविनिप्रत्ययान्तशब्दव्याख्यानपरं रक्षोजनानिति भाष्यं व्याचष्टे ॥ रक्षसां संबन्धिनो जनानिति ॥ स्वामिभूतान् श्रेष्ठराक्षसानित्यर्थः । अत एव रिषत इत्यत्रांतर्णीतण्यर्थ इति व्याख्यातम् । अस्यैव तात्पर्यार्थो यज्ञघ्नानिति ॥ ५ ॥

अग्निनाग्निः । जुह्विति ॥ हुधातोर्हुवः श्नुवश्चेति क्विब्दीर्घयोः श्नुवङ्गावाद्वित्वादौ च ह्रस्वो नपुंसक इति ह्रस्व इति भावः । इदमेव भाष्यं परेशेनेति व्यतिरिक्तप्रसिद्धाग्निपरत्वेनापि व्याचष्टे ॥

अथवेति ॥ सहसमिध्यत इति ॥ गार्हपत्याद्यग्नित्रयस्य होमकाले सहैव प्रकाशनादिति भावः ॥ अन्यदिति ॥ कव्यादिशब्दार्थजातमित्यर्थः ॥ ६ ॥ इति द्वाविंशोवर्गः ॥ २२ ॥

## ऋक्संहिता पदपाठसहिता

(११७) कविमग्निमुपस्तुहिसत्यधर्माणमध्वरे ॥ देवममीवचातनम् ॥ ७ ॥

(प०) कविम् । अग्निम् । उप । स्तुहि । सत्यऽधर्माणम् । अध्वरे ॥ देवम् । अमीवऽचातनम् ॥ ७ ॥

(११८) यस्त्वामग्नेहविष्पतिर्दूतंदेवसपर्यति ॥ तस्यस्मप्राविताभव ॥ ८ ॥

(प०) यः । त्वाम् । अग्ने । हविःऽपतिः । दूतम् । देव । सपर्यति ॥ तस्य । स्म । प्रऽअविता । भव ॥ ८ ॥

(११९) योअग्निंदेववीतयेहविष्माँआविवासति ॥ तस्मैपावकमृळय ॥ ९ ॥

(प०) यः । अग्निम् । देवऽवीतये । हविष्मान् । आऽविवासति ॥ तस्मै । पावक । मृळय ॥ ९ ॥

(१२०) सनःपावकदीदिवोऽग्नेदेवाँइहावह ॥ उपयज्ञंहविश्चनः ॥ १० ॥

(प०) सः । नः । पावक । दीदिऽवः । अग्ने । देवान् । इह । आ । वह ॥ उप । यज्ञम् । हविः । च । नः ॥ १० ॥

(१२१) सनःस्तवानआभरगायत्रेणनवीयसा ॥ रयिंवीरवतीमिषम् ॥ ११ ॥

(प०) सः । नः । स्तवानः । आ । भर । गायत्रेण । नवीयसा ॥ रयिम् । वीरऽवतीम् । इषम् ॥ ११ ॥

(१२२) अग्नेशुक्रेणशोचिषाविश्वाभिर्देवहूतिभिः ॥ इमंस्तोमंजुषस्वनः ॥१२,२३,१२॥

(प०) अग्ने । शुक्रेण । शोचिषा । विश्वाभिः । देवहूतिऽभिः ॥ इमम् । स्तोमम् । जुषस्व । नः ॥ १२, २३, १२ ॥

## ऋग्भाष्यम्

सत्यधर्मा सद्गुणभृद्दुःखघ्नोऽमीवचातनः ।
चातनं कालनं वा स्यात् ॥ ७ ॥ ८ ॥

देववीतिस्तु तद्गतिः ।
आवासयति यस्त्वां च तं त्वं मृळय सर्वदा ॥ ९ ॥
त्वत्पूजाविषये देवानावहेन्द्रियमानिनः ॥ १० ॥
गायत्रे णस्तूयमानो दृश्यमानेन नो रयिम् ।
पुत्रयुक्तामिषं चैव वीर्ययुक्तामथावह ॥ ११ ॥
ज्वलता तेजसा विश्वदेवाह्वानैर्वृणु स्तुतिम् ॥ १२, २३, १२ ॥

## ऋग्भाष्यटीका

कविमग्निम् । सत्यधर्मामीवचातनपदे व्याख्याति । सत्यधर्मेति ॥ सत्याः साधवो धर्मा गुणा यस्यासौ सत्यधर्मा सद्गुणभृदित्यर्थः । अमीवं दुःखम् । तच्चातयति नाशयतीत्यमीवचातनो दुःखघ्नः । यद्वा चातनं कालनमपसारणं स्यात् । ततश्चामीवचातनो दुःखस्यापसारयिता । फलतस्त्वेक एवार्थः । कविं सर्वज्ञम् । सत्यधर्माणममीवचातनमग्निं देवमध्वरे उपस्तुहीति स्वात्मानं स्वान्तर्यामिणं होतृगं प्रति वोच्यते ॥ ७ ॥

यस्त्वामग्ने ॥ हे अग्नेदेव यो हविष्यतिर्यजमानो दूतं त्वां सपर्यति पूजयतिस्म । तस्य यजमानस्य प्राविता प्रकर्षेण रक्षिता भव ॥ ८ ॥

योअग्निम् । देववीतिपदं व्याख्याति ॥ देववीतिस्त्विति ॥ तद्गतिर्देवानां गतिः । यज्ञं प्रति देवानामागमनम् । देवताप्राप्तिरूपं फलं वा । वीगतिव्याप्तिप्रजनकांत्यसनखादनेषु तस्यै देववीतये । यो हविष्मान्यजमानोऽग्निं त्वाम् आविवासति । आवासयत्याधत्ते ॥ पूजयति च । हे पावक त्वं तस्मै तं यजमानं सर्वदा मृळय सुखय ॥ ९ ॥

सनः पावक । अस्य बाह्ये स्फुटत्वादध्यात्मं व्याख्याति । त्वत्पूजेति । पुनातीति पावकः । हेपावकाग्नेदीदिवः स त्वन्नोऽस्मदीयं यज्ञं हविश्च प्रति त्वत्पूजारूपयज्ञादिविषये तत्सिध्यर्थमिति यावत् । इह शरीरे देवानिन्द्रियाभिमानिन उपावह विशेषतः सन्निहितान्कुरु ॥ १० ॥

सनस्तवानः । गायत्रेण । हे अग्ने नवीयसा अतिनूतनेन गायत्रेण साम्नां अपौरुषेयत्वाद्वेदस्य इदानीमेव दृश्यमानेन व्यज्यमानेन स्तवानः स्तूयमानः स त्वन्नोऽस्मभ्यं रयिं वित्तं वीरवतीं पुत्रयुक्ताम् अथवा वीरं वीर्यं तद्युक्तामिषमन्नं चाभर आवह देहीति यावत् ॥ ११ ॥

अग्नेशुक्रेण । ज्वलता । हे अग्ने शुक्रेण ज्वलतेति यावत् । शोचिषा तेजसा युक्तस्त्वं विश्वाभिः सर्वाभिर्देवहूतिभिर्देवाह्वानैः सह नोऽस्माकमिमं स्तोमं स्तुतिं जुषस्व वृणु ॥ १२, २३, १२ ॥

## मन्त्रार्थमञ्जरी

कविम्, सर्वज्ञम् । सत्याः साधवो धर्मा गुणा यस्यासौ तथा तं सत्यधर्माणम् ।अमीवं दुःखं चातयति = नाशयति, अपसारयति वा = अमीवचातनम्, दुःखघ्नम् । अग्निम् देवम् । अध्वरे यज्ञे । उप स्तुहि ॥ इति स्वात्मानं प्रति, स्वान्तर्यामिणं प्रति वा, होतृगं प्रति वोच्यते ॥ ७ ॥

(हे) अग्ने देव यः । हविष्पतिः, यजमानः । दूतम् त्वाम् । सपर्यति, पूजयति । स्म । तस्य, यजमानस्य । प्राविता, प्रकर्षेण रक्षिता । भव ॥ ८ ॥

देववीतये, देवानां वीतय आगमनाय, तत्प्राप्तिरूपफलाय वा, 'वी गतिव्याप्ति-प्रजनकान्त्यसनखादनेषु' इत्यतः क्तिन् । यः । हविष्मान्, यजमानः । अग्निम् (त्वाम्) आविवासति, आवासयत्याधत्ते पूजयति च । (हे) पावक (त्वम्) तस्मै, तं यजमानम् । (सर्वदा) मृळय, सुखय ॥ ९ ॥

(हे) पावक, पुनाति पवित्रयतीति पावक । दीदिवः, दे दीप्यमान । (हे) अग्ने सः (त्वम्) इह नः यज्ञम् नः हविः च (प्रति) । देवान् उप आ वह । अध्यात्मं तु– इह, शरीरे । देवान्, तत्त्वाभिमानिनः । नः यज्ञम् नः हविः च (प्रति), त्वत्पूजारूपयज्ञादिसिद्ध्यर्थम् । उप आ वह । इत्यर्थः । अन्यत्समानम् ॥ १० ॥

(हे अग्ने) नवीयसा, अतिनूतनेन, इदानीमेव व्यज्यमानेन । गायत्रेण, साम्ना । स्तवानः, स्तूयमानः । सः (त्वम्) नः, अस्मभ्यम् । रयिम्, वित्तम् । वीरवतीम्, पुत्रयुक्ताम्, भावप्रधानेन वीर्ययुक्तां वा । इषम्, अन्नम् । (च) आ भर, देहीत्यर्थः, 'भृञ् भरणे' शब्विकरणम् ॥ ११ ॥

(हे) अग्ने । शुक्रेण शुभ्रेण, ज्वलतेति यावत् । शोचिषा, तेजसा । (युक्तस्त्वम्) । विश्वाभिः, सर्वाभिः । देवहूतिभिः, देवाह्वानैः सह । नः, अस्माकम् । इमम् । स्तोमम्, स्तुतिम् । जुषस्व, 'जुषी प्रीतिसेवनयोः' वृण्वित्यर्थः ॥ १२ ॥ इति त्रयोविंशो वर्गः ॥ २३ ॥ द्वादशं सूक्तम् ॥ १२ ॥

## पदार्थप्रकाशिका

कविमग्निमुपस्तुहि । अमीवं दुःखमिति । यद्यपि अमरोग इति पठ्यते । तथाच रोगघ्न इति वक्तव्यम् । तथापि रोगकार्यत्वात् दुःखस्येति वा धातूनामनेकार्थत्वाद्वा दुःखघ्न इत्युक्तमिति भावः । फलत इति । पदार्थभेदेपि तात्पर्यार्थः एक एवेति भावः ॥ स्वात्मानमिति ॥

मेधातिथिरग्निमुपस्तुहि इति स्वात्मानं प्रति स्वयमेव वक्तीत्यर्थः ॥ स्वान्तर्यामिणमिति ॥ न ऋते त्वत्क्रियते इति सर्वक्रियाया अपि भगवदधीनत्वावगमात् । मेधातिथिः अग्निं स्तुहीति स्वान्तर्यामिणं प्रतीत्यर्थ इत्याहुः । वस्तुतस्तु मेधातिथिः स्वान्तर्यामिणं अग्निशब्दवाच्यं भगवन्तं स्तुहीति स्वात्मानं प्रतिवक्तीत्यर्थः । होतृगं प्रतिवेति अग्नेर्होतृदेवतात्वाद्धोतारं प्रति होतृगमग्निं स्तुहीति वक्तीत्यर्थः इत्याहुः । वस्तुतस्तु स्वान्तर्यामिणमग्निनामानं हरिं स्तुहि तथाग्नेर्होतृदेवतात्वेन होतृगं प्रतिद्धाग्निं वा स्तुहीति स्वात्मानं प्रति उच्यत इत्यन्वयमुखेनार्थो द्रष्टव्यः ॥ छ ॥ ७ ॥

यस्त्वामग्ने हविष्यति ॥ दूतमिति । यज्ञभागार्थं देवैः संप्रेषितो यतः अतः दूत इत्यर्थः ॥ ८ ॥

यो अग्निं देववीतये । विगतीति गतिरागतिः । प्राप्तिश्च तस्यै देववीतय इति । यज्ञं प्रति देवानां आगमनाय देवतालोकप्राप्तिरूपफलाय वेत्यर्थः । आधत्त इति अग्न्याधानं करोतीत्यर्थः । चतुर्थी द्वितीयार्थ इत्याह । तस्मा इति ॥ छ ॥ ९ ॥

सनः पावकदीदिवः ॥ अस्येति ॥ एतदृगर्थस्येर्थः । दीदिवो देहें दीप्यमान इत्यर्थः । देहेन्द्रियदेवानां स्वत एव संनिहितत्वात् इहोपावहेत्ययुक्तमित्यत आह ॥ विशेषत इति ॥ १० ॥

सनस्तवान आभर । ईयसुनोऽर्थः अतीति । गायत्रेण साम्नेति । गायत्रनामकेन साम्नेत्यर्थः । स्तवानः स्तोतेत्यन्यथाप्रतीतिवारणायाह । स्तूयमान इति । ननु वेदस्यापौरुषेयत्वात् नवीयसेत्यसतः सत्तासम्बन्धरूपजन्युक्तिः कथमित्यत आह । अपौरुषेयत्वादित्यादि । इदानीमेव वेदद्रष्ट्रा ऋषिणा दृश्यमानेनेत्यर्थः । तथाच तदपेक्षया नूतनत्वोक्तिरित्याशयः । पुत्रयुक्तामित्यादि । तथाच पुत्रं वीर्यमन्नं च देहीति भावः ॥ छ ॥ ११ ॥

अग्ने शुक्रेण शोचिषा ॥ रूढिमाश्रित्य शुक्रेणेत्यस्य शुभ्रेणेत्यर्थमुक्त्वा भाष्यं तात्पर्यकथन-मात्रपरं इत्याह । ज्वलतेति यावदिति । देवाह्वानैः सहेति देवानामेवाह्वानस्य भवद्भिः क्रियमाणत्वात् तथैवागमिष्यन्ति ॥ नाहमागमिष्यामीति त्वया न वाच्यम् । किन्नाम देवाह्वानैः सह इमं स्तोमं त्वमेव स्वीकुरु । एवंच देवैः सह त्वमायाहीत्याशयः ॥ १२ ॥ २३ ॥१२॥ छ ॥

## पदार्थदीपिका

॥ कविम् ॥ सत्यधर्मेति ॥ अत्र धर्मादनिज् केवलादिति समासान्तो अनिच् प्रत्ययः ॥ अमीवं दुःखमिति ॥ यद्यप्यमीवशब्दो अम रोग इत्यस्मात् सेवा जिह्वा ग्रावा अमीवेति वन्प्रत्यये ईडागमे

चास्त्रियां निपातितः तथापि बाहुलकात् लिङ्गान्तरेऽपि भवतीति भावेनैवमुक्तमिति ध्येयम् ॥ चातयति नाशयतीत्यादि ॥ यद्यप्ययं परिभाषणार्थतया याचनार्थतया च पठ्यते तथापि धातूनामनेकार्थत्वात् नाशार्थकादस्माण्यन्तात् नंद्यादित्वाल्लुप्रत्यये योरनादेशे णेरनिटिति लोप इत्याशयः ॥ ७ ॥

॥ हविष्यतिरिति ॥ नित्यं समासेऽनुत्तरपदस्थस्येति षत्वमिति भावः ॥ सपर्यति पूजयतीति ॥ सपरशब्दात् कंड्वादिभ्यो यगिति यक् । गुणवृद्धिप्रतिषेधार्थककित्करणसामर्थ्यात् धात्वधिकारविहितस्य यकः आर्धधातुकत्वात् अतो लोपः । सनाद्यन्ता धातव इति धातुसंज्ञायां तिप् शप् पररूपाणीति ज्ञेयम् ॥ ८ ॥

॥ आविवासतीति ॥ वा गति गन्धनयोरित्यस्मादिच्छार्थे सन् । सन्यङोरिति द्विर्भावः । अभ्यासस्य ह्रस्वः । सन्यत इति इत्वम् । ततो धातुसंज्ञायां तिपि आविवासतीति रूपसिद्धिः । सेवति विवासतीति परिचरणकर्मसु पाठात् । विवासतीत्यस्य पूजारूपपरिचरणार्थत्वं यथा लभ्यते तथा भाष्यपदं व्याचष्टे ॥ आवासयत्याधत्त इति ॥ क्रियाग्रहणं कर्तव्यमिति । कर्मणि सम्प्रदानत्वात् चतुर्थीति भावेनाह । तस्मै तमिति ॥ ९ ॥

नवीयसेति । नवशब्दादातिशयिक इयसुन्प्रत्ययः । नवीयसेत्यस्य भाष्ये दृश्यमानेनेति किमर्थमर्थः कथित इत्यत आह ॥ अपौरुषेयत्वादिति ॥ स्तुवान इति ॥ ष्टुञ् स्तुतौ । धात्वादेः षः सः । स्वरितञित इत्यात्मनेपदम् । लटः शानच् । व्यत्ययेन कर्तरि शप् । बहुलं छन्दसीति लुगभावः । गुणावादेशौ । आनेमुगिति मुक् न भवति । अनित्यमागमे शासनं इत्यनुशानस्य नित्यत्वादित्यवधेयम् ॥ ११ ॥

देवाह्वानैः सहेति । देवाह्वानमपि त्वमेव कुर्वित्याशयः ॥ १२, २३, १२ ॥

## टीकाविवृतिः

कविमग्निम् । सत्याः साधव इति ॥ साधुत्वं च तथ्यत्वं ज्ञेयम् । सत्यं च शपथे तथ्ये कृते तद्वति चान्यवदिति विश्वोक्तेः । सत्यधर्मेति ॥ धर्मादनिच् केवलादिति समासान्तोऽनिच्प्रत्यय इति भावः । अमीवं दुःखमिति ॥ इण्शीभ्यांवन्नित्युक्तोवन्बाहुलकादमरोग इत्यतोपि प्रत्ययस्य ईकारागमश्च । चतति स्रश्चतीति गतिकर्मसु पठितस्य णिजंतत्वाद्गमयतीत्यर्थे सिद्धे तात्पर्यार्थमाह ॥ चातयति नाशयतीति । मुख्यार्थमाश्रित्याह ॥ यद्वेति ॥ उपस्तुहीत्यत्र कर्तुरप्रतीतेराह ॥

स्वात्मानमिति । कर्मकर्तृत्वस्य भेदसापेक्षत्वादाह ।। स्वान्तर्यामिणमिति ।। तथाप्यन्तर्यामिण आभिमुख्याभावादरुच्याह । होतृगमिति ।। ७ ।।

यस्त्वामग्ने । हविष्पतिरिति ।। नित्यं समासेनुत्तरपदस्थस्येत्युपध्मानीयापवादः षत्वमिति भावः । सपर्यतीति । सपरपूजायामित्यतः कंड्वादित्वाद्यकि अतोलोपे लडादीति भावः ।। ८ ।।

यो अग्निम् । गत्यर्थानां प्राप्त्यर्थत्वादाह ।। प्राप्तिरूपमिति ।। आवासयतीति ।। वसनिवास इत्यस्यान्तर्णीतण्यर्थस्य छान्दसोपधादीर्घत्वादाविवासतीति श्रुतावुक्तमिति भावः ।।। आधत्त इति ।। श्रौताग्न्याधानं करोतीत्यर्थः । च्यवति विवासतीति परिचरणकर्मसु पाठमाश्रित्याप्याह ।। पूजयतिचेति ।। तस्मै तमिति ।। व्यत्ययेन कर्मणि चतुर्थीति भावः ।। ९ ।।

सनः पावक ।। अग्न इत्युक्त्या पुनरुक्तिपरिहारायाह । पुनातीतीति ।। कर्तरि ण्वुल् । यज्ञं हविश्चेति ।। द्वितीये इत्थंभूताख्यानार्थकप्रतिशब्दस्य लक्षणेत्थंभूताख्यानेति कर्मप्रवचनीय-त्वात्तद्योगो बोध्य इति भावेनोक्तं त्वत्पूजाविषय इति भाष्यं योजयति ।। त्वत्पूजारूपयज्ञादिविषय इति ।। तात्पर्यार्थमाह ।। तत्सिद्ध्यर्थमिति ।। फलोन्मुखत्वसिद्ध्यर्थमित्यर्थः ।। १० ।।

सनस्तवानः ।। नवीयसेति ।। यद्यपि द्विवचनं विभज्येति द्वयोर्मध्य एवातिशयविवक्षायामीय सुन्विहितस्तथापि च्छांदसत्वाद्रथंतरादिबहुसामातिशयविवक्षायामप्ययं ज्ञेयः । गायत्रसाम्नः सामवेदत्वेनोत्पत्तिशून्यत्वान्नवीयस्त्वानुपपत्तेर्भाष्ये दृश्यमानेनेति व्याख्यातम् । दृश्यमानत्व-मुत्पन्नस्यापि सम्भवतीत्यतो व्याख्यानबीजं वदन्नध्याहारेण व्याख्याति । अपौरुषेयत्वादिति ।। नूतनत्वं दृष्ट्यपेक्षयेति भावः ।। स्तवान इति ।। स्तौतेः कर्मणि लटः शानजादेशस्य छन्दस्युभयथेत्यार्धधातुकत्वाद्यगभावो ङित्त्वाभावाच्च गुणः ।। ११ ।।

अग्नेशुक्रेण । शुक्रेण शुभ्रेणेति ।। शुक्रं शुक्ले महेन्द्रे स्यादिति विश्वोक्तेरिति भावः ।। शोचति मन्दते इति ज्वलतिकर्मसु पठितस्य शुचेः ऋज्रेन्द्रेत्यौणादिकसूत्रे शुक्रशुक्लेति रन्प्रत्यय कुत्वनिपातनमाश्रित्याह ज्वलतेति यावदिति ।। देवाह्वानैः सहेति ।। देवाह्वानानि भवत्स्तुतिं चाङ्गीकुरु अस्मासु दयया शृण्विति भावः ।। १२, २३, १२ ।। त्रयोविंशोवर्गः ।।

## ऋक्संहिता पदपाठसहिता

(१२३) सुसमिद्धोनआवहदेवाँअग्नेहविष्मते ।। होतःपावकयक्षिच ।। १ ।।

(प०) सुऽसमिद्धः । नः । आ । वह । देवान् । अग्ने । हविष्मते ।। होतरिति । पावक । यक्षि । च ।। १ ।।

(१२४) मधुमन्तंतनूनपाद्यज्ञंदेवेषुनःकवे ॥ अद्याकृणुहिवीतये ॥ २ ॥

(प०) मधुऽमन्तम् । तनूऽनपात् । यज्ञम् । देवेषु । नः । कवे ॥ अद्य । कृणुहि । वीतये ॥ २ ॥

(१२५) नराशंसमिहप्रियमस्मिन्यज्ञउपह्वये ॥ मधुजिह्वंहविष्कृतम् ॥ ३ ॥

(प०) नराशंसम् । इह । प्रियम् । अस्मिन् । यज्ञे । उप । ह्वये ॥ मधुऽजिह्वम् । हविःऽकृतम् ॥ ३ ॥

(१२६) अग्नेसुखतमेरथेदेवाँईळितआवह ॥ असिहोतामनुर्हितः ॥ ४ ॥

(प०) अग्ने । सुखऽतमे । रथे । देवान् । ईळितः । आ । वह ॥ असि । होता । मनुःऽहितः ॥ ४ ॥

(१२७) स्तृणीतबर्हिरानुषग्घृतपृष्ठंमनीषिणः ॥ यत्रामृतस्यचक्षणम् ॥ ५ ॥

(प०) स्तृणीत । बर्हिः । आनुषक् । घृतऽपृष्ठम् । मनीषिणः ॥ यत्र । अमृतस्य । चक्षणम् ॥ ५ ॥

(१२८) विश्रयन्तामृतावृधोद्वारोदेवीरसश्चतः ॥ अद्यानूनंचयष्टवे ॥ ६, २४ ॥

(प०) वि । श्रयन्ताम् । ऋतऽवृधः । द्वारः । देवीः । असश्चतः ॥ अद्य । नूनम् । च । यष्टवे ॥ ६, २४ ॥

## ऋग्भाष्यम्

अस्मद्धविष्मते देवानाहूय यज चादरात् ॥ १ ॥
तनूभ्यो वाक्ततो देवो व्यक्तस्तेन तनूनपात् ॥ २ ॥
नरैः स्तुत्यो नराशंसो वह्नेरन्याथवा तनूः ॥ ३ ॥
मनूनां च हितत्वेन मनुर्हित इतीरितः ॥ ४ ॥
आनुषक्सर्वतो देवस्थानं बर्हिःस्तृणीतच ।
शुद्धस्य विष्णोर्यत्स्थानं घृतपृष्ठं हि तन्मनः ।
यत्रस्याद्दर्शनं विष्णोर्नित्या मरणधर्मिणः ॥ ५ ॥
ऋतरूपेण हरिणा समृद्धाया ऋतावृधः।
द्वारो देव्यः श्रियो दास्यः श्रयंतामिहनो मखे ।

मानसे बाह्ययज्ञे वा ह्यसंगत्वादसश्चतः ।
अद्याहनि तथा नूनमद्यैव यजनार्थतः ।
द्वारभूतः स भगवानपि साक्षान्मुमुक्षतः ।
स्त्रीरूपश्चसः ॥ ६, २४ ॥

## ऋग्भाष्यटीका

सुसमिद्धः । द्वादशर्चमेतदाप्रीसूक्तम् । प्रत्यृचं भिन्नदेवताकम् । अस्मत् । हेहोतः पावकाग्ने सुसमिद्धः अतिसुदीप्तस्त्वं नो हविष्मते अस्मद्धविष्मते अस्मद्यजमानाय तादर्थ्ये चतुर्थी । देवानावह आहूय यक्षिच यजच । देवानावहेति बहुवारमुच्यते । तस्य तात्पर्यमाह । आदरादिति ॥ १ ॥

मधुमन्तम् । तनूनपादित्यग्निविशेषस्य प्रसिद्धं नाम । तद्विष्णौ योजयति ॥ तनूभ्य इति ॥ वाक् जाता तदाश्रयत्वात् ततो वाचो देवः परमेश्वरो व्यक्तो यज्ञ इति तत्पुत्र उच्यते । तेन तनूनपात् नपाच्छब्दस्य पौत्रपर्यायत्वात् । हे कवे तनूनपात्त्वं वीतये यजमानस्य देवताप्राप्त्यै नोऽस्मदीयं मधुमन्तं मधु स्वादु हविरादि तद्वन्तं यज्ञम् अद्यैव देवेषु कृणुहि कुरु । देवान्प्रापय ॥ २ ॥

नराशंसम् । नराशंसपदं विष्णावग्नौ च व्याख्याति । नरैरिति ॥ नरैरित्युपलक्षणम् । शंसुस्तुतौ । नरैराशंस्यत इति नराशंसो विष्णुः । अथवा वह्निरिति वक्तव्ये वह्नेरन्या तनूरिति वदताऽस्मिन्सूक्ते सुसमिद्धादयोपि पृथगग्निविशेषा इति सूचितम् । इह सर्वप्राणिनाम् । प्रियं मधुमती जिह्वा यस्य तं मधुजिह्वं हविष्कृतं हविषः कर्तारं नराशंसं अग्निमस्मिन्यज्ञेऽहमुपह्वये आह्वयामि ॥ ३ ॥

अग्नेसुखतमे । अत्र मनुर्हितपदं व्याख्याति ॥ मनूनां चेति । अनेन मनुशब्दपर्यायो मनुस्शब्दोऽयमित्युक्तं भवति । चतुर्थ्यर्थे षष्ठी । हे अग्ने ईळितः स्तुतस्त्वं सुखतमे रथे सुखतमेनातिशयेन सुखकारिणा रथेन देवानावह यस्मात्त्वं होताऽसि । मनुषां मनुभ्यो देवेभ्यो हितश्चासि । अध्यात्मं देहो रथः । तत्र यथाश्रुतैव सप्तमी ॥ ४ ॥

स्तृणीत ॥ आनुषक् । हेमनीषिणो बुद्धिमन्तः ऋत्विजो यत्र स्थानेऽमृतस्य देवतासमुदायस्य चक्षणं दर्शनं भवति । चक्षिङःख्याञभावश्छांदसः । छन्दस्युभयथेति वा प्रकृत्यन्तरं वा । तद्घृतपृष्ठं घृतस्थानात्पश्चिमतो वर्तमानं देवस्थानं देवस्थाने आनुषक् सर्वतो बर्हिः । स्तृणीत विस्तारयत ।

अध्यात्मं व्याचष्टे । शुद्धस्येति ॥ घृतः शुद्धो विष्णुः पृष्ठे यस्योपरि तद्धृतपृष्ठमित्यर्थः । यत्र मनसि । अत्र बृहत्त्वाद्बर्हिर्वेदवाक्यम् । तत् स्तृणीतेति तेन मनः संयोजयत । अत्र बर्हिर्देवता ॥५॥

विश्रयन्ताम् ॥ ऋत । ऋतरूपेण यथार्थज्ञानरूपेण हरिणा वृधो वृद्धाः समृद्धा यास्ता ऋतवृधः । असङ्गत्वादसश्चतः सश्चतिः सङ्गार्थः । ततःक्विप् । द्वारोदेवीर्द्वारो देव्यः श्रियो दास्योऽद्यास्मिन्नहनि तथा नूनं निश्चितम् । अद्यैवेति यावत् । यष्टवे यष्टुम् । यजनार्थतः यजनं चासावर्थः प्रयोजनं च तस्मै विश्रयन्तां नो मानसे मखे बाह्ययज्ञेवा वर्तताम् । भगवद्विषये योजयति । द्वारभूत इति ॥ मुमुक्षतः साक्षातूद्वारभूत इत्यनेन मोक्षस्य मुख्यसाधनमित्युक्तं भवति । देवशब्दः प्रागेव व्याख्यातः । तस्माद्भगवानपि द्वारो देव्यः । कथं स्त्रीलिङ्गादिप्रयोगः स्त्रीरूपश्च सः । चशब्दाद्बहुरूपश्च । ततो बहुवचनं च युज्यते । ऋतवृध इति नित्यवृद्ध इति प्रागेव व्याख्यातम् ॥ ६, २४ ॥

## मन्त्रार्थमञ्जरी

अथ 'सुसमिद्धो न' इति त्रयोदशं द्वादशर्चं वर्गद्वयात्मकमाप्रीसूक्तं गायत्रीछन्दस्कं प्रत्यृचं भिन्नदेवताकम् । ताश्च देवता अग्निविशेषादयः । तत्र (आद्यायास्तावदिध्मः समिद्धो वाग्निर्देवता) (हे) होतः पावक अग्ने व्याख्यातानि पदानि । सुसमिद्धः, अतिसुदीप्तः । (त्वम्) नः हविष्मते, अस्मद्यजमानाय, तादर्थ्ये चतुर्थी । देवान् आ वह । आहूय यक्षि च, यज च, यजतेः व्यत्ययेन लुग्विकरणम्, सिप्, षत्वम्, कत्वं च । 'देवान्, आ, वह' इति बहुवारोक्तिरादरार्था ॥ १ ॥

(द्वितीयस्यामृचि तनूनपाद्देवता) 'तनूनपात्' इत्यग्निविशेषस्य नाम । विष्णोस्तु नपात् शब्दस्य पौत्रपर्यायत्वात्तनूभ्यो देहेभ्यो जातया वाचा व्यज्यमानत्वेन जातप्रायतया तनूपौत्रत्वेन 'तनूनपात्' इति नाम ज्ञेयम् । (हे) कवे तनूनपात् (त्वम्) वीतये, यजमानस्य देवताप्राप्त्यर्थम् । नः, अस्मदीयम् मधुमन्तम्, मधु स्वादु, तद्युक्तं हविरादि, तद्वन्तम् । यज्ञम् अद्य (एव) देवेषु ! कृणुहि, कुरु, देवान्प्रापय ॥ २ ॥

(तृतीयस्यामृचि नराशंसो देवता) इह, सर्वप्राणिनाम् । प्रियम् । मधुमती जिह्वा यस्य तं मधुजिह्वम् । हविष्कृतम्, हविषः कर्तारम् । नराशंसम्, 'शंसु स्तुतौ' नरैराशंस्यतया नराशंसनामकमग्निविशेषं हरिं च । अस्मिन् यज्ञे । उप ह्वये, अहमाह्वयामि ॥ ३ ॥

(चतुर्थ्या ऋच इळो देवता) (हे) अग्ने । ईळितः, स्तुतः । (त्वम्) सुखतमे रथे, सुखतमेन रथेन, अतिशयेन सुखकारिणा रथेन देवान् आ वह । (यस्मात्त्वम्) होता असि । मनुर्हितः,

मनुशब्दपर्यायोऽत्र मनुश्शब्दः, मनुर्भ्यो मनुभ्यो देवभ्यो हितः । (च) (असि) अध्यात्मं तु – देव इन्द्रियाभिमानिनः । रथो देहः तत्र यथाश्रुतैव सप्तमी । अन्यत्समानम् ॥ ४ ॥

(पञ्चमी तु बर्हिर्देवताका) (हे) मनीषिणः, बुद्धिमन्त ऋत्विजः । यत्र, स्थाने । अमृतस्य, देवतासमुदायस्य । चक्षणम्, दर्शनं भवति, चक्षिङः ख्याञादेशाभावश्छान्दसः, 'छन्दस्यु-भगयथा' इति ल्युटः सार्वधातुकत्वेन वा, 'चक्ष दर्शने' इति धात्वन्तरं वा । (तत्) तत्र घृतपृष्ठम्, घृतस्थानात्पश्चिमतो वर्तमानं देवस्थानम्, देवस्थाने । आनुषक्, सर्वतः । बर्हिः स्तृणीत, विस्तारयत । अध्यात्मं तु घृतपृष्ठम्, घृतः शुद्धो विष्णुः पृष्ठे उपरिभागे यस्य तद्धृतपृष्ठमित्यर्थः । (हे) मनीषिणः, देवाः । यत्र, मनसि । अमृतस्य, मृतिहीनस्य विष्णोः । चक्षणम्, दर्शनं भवति । (तत्) घृतपृष्ठम्, तत्र घृतपृष्ठे मनसि । आनुषक्, वर्ततः । बर्हिः, बृहत्त्वाद्बर्हिस्शब्दितं वेदवाक्यम् । स्तृणीत, तेन मनः संयोजयत इति ॥ ५ ॥

(षष्ठ्यामृचि द्वारोदेवीर्देवताः) ऋतवृधः, ऋतरूपेण यथार्थज्ञानरूपेण हरिणा वृधो वृद्धाः । असश्चतः, सङ्गहीनाः, सश्चतेः (धा० वैदिकनिघण्टौ २।१४) सङ्गार्थात्किप्, 'ह्रस्वस्य' इति तुक् । द्वारः देवीः, द्वारो देव्यः, श्रियो दास्यः । अद्य, अस्मिन्नहनि । नूनम्, निश्चितम्, अद्यैवेति यावत् । यष्टवे, यष्टुम्, यजनरूपप्रयोजनाय । च । वि । श्रयन्ताम्, नो मानसे यज्ञे बाह्ययज्ञे च वर्तन्ताम् । यद्वा– ऋतवृधः, ज्ञानरूपा वृद्धाश्चेत्यृतवृधः । द्वारः, मुमुक्षूणां साक्षाद्द्वारभूताः । सर्वतः सङ्गहीनत्वेन असश्चतः । देवीः, देव्यः, क्रीडादिगुणोपेता भगवतः स्त्रीरूपविशेषाः । अद्य नूनम्, अद्यैव । यष्टवे च । विश्रयन्ताम्, नो बाह्याभ्यन्तरयज्ञे वर्तन्तामित्यर्थः । अत्र 'ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॐ' (१।४।२४) इत्यत्रोक्तदिशा अव्यवधानेन सूतिहेतुत्वरूपस्त्रीत्वस्य भावेन स्त्रीलिङ्गत्वम्, 'ॐ गुहां प्रविष्टावात्मानौ' (१।२।११) इत्यादावुक्तदिशा रूपबाहुल्येन बहुवचनम्, 'ॐ फलमत उपपत्तेः ॐ' (३।२।३९) इत्यत्रोक्तन्यायेन भगवत एव मुख्यतो मोक्षसाधनत्वं चोपपादनीयम् ॥ ६ ॥ इति चतुर्विंशो वर्गः ॥ २४ ॥

## पदार्थप्रकाशिका

सुसमिद्धो न आवह । सुसमिद्ध इति इध्मः समिद्धोऽग्निस्तनूनपात् नराशंस इलो बर्हिर्देवीद्वार उषासानक्तदैव्याहोतारौ प्रचेतसौ तिस्रो देव्यः । सरस्वतीलाभारत्यः त्वष्टा वनस्पतिः स्वाहालंकृतिरिति प्रत्यृचं देवता एतदाप्रीसूक्तमनुक्रमणिकां हृदि निधायाह ॥ द्वादशर्चमेतदिति ॥ कः आप्रीसूक्तशब्दार्थ इत्यतो अनुक्रमणिकोक्तं तच्छब्दार्थमाह ॥ प्रत्यृचमिति ॥ प्रत्यृचं

भिन्नदेवताकं यत्सूक्तं तदाप्रीसूक्तम् । इदं च एतादृशमतः आप्रीसूक्तमित्युच्यत इत्यर्थः । तदर्थमिति । यजमानार्थमित्यर्थः । बहुवारमिति । अग्ने देवा इहावह । जज्ञानः सनः पावक-दीदिवोग्ने देवा इहावहेति पूर्वं सुसमिद्धो न आवह देवा अग्ने इतीदानीं अग्नेसुखतमे रथे देवा इळित आवहेत्याद्युत्तरत्रेति बहुवारमित्यर्थः ॥ आदरादितीति ॥ अग्नेदेवानावहेति न व्यसनितया देवाह्वानं क्रियते ॥ किन्नाम आदरादेव । आदरान्निमित्ताब्दहुवारं देवानावहेत्युक्तिर्युक्तेत्यर्थः ॥ यजेति ॥ यजदेवपूजासङ्गतिकरणदानेष्विति धातोरस्मद्दत्तं हविरादिकं तेभ्यो देहीत्यर्थः ॥ छ ॥ १ ॥

मधुमन्तं तनूनपात् । वागिन्द्रियरूपायाः वाचः तनुजातत्वं घटयति ॥ तदाश्रयत्वादिति ॥ सैव तनूः आश्रयो यस्याः वाचः सा तदाश्रया तस्याः भावः तत्ता तस्मादिति वागिन्द्रियस्य तन्वाश्रितत्वादिति यावत् । शरीरसंयुक्तं ज्ञानकारणमतीन्द्रियमिति हि पदार्थविदो मन्यन्त इति द्रष्टव्यम् । मधु स्वादुहविरादीति । यद्यपि मधुशब्दो मधुरस्थरसवाची तथापि रसस्य हविरादिधर्मत्वेन यज्ञस्य तद्वत्वायोगेन मधुमन्तं यज्ञमिति सामानाधिकरण्यायोगात् । मधुशब्दो मधुररसवदित्यर्थः तद्वन्तमिति ॥ स्वादुहविराद्युपेतमित्यर्थः । अग्नेर्यज्ञकर्तृत्वासंभवादाह ॥ देवान् प्रापयेति ॥ २ ॥ छ ॥

नराशंसमिह प्रियम् । आशंस्यन्त इति । सम्यक्स्तूयत इत्यर्थः । अग्निविशेषा इति । अग्नीनामेकोनपञ्चाशतां सत्वादेते प्रधानाः इत्यवगन्तव्यम् । हविषः कर्तारमिति । अग्नेः पचनकरणत्वात् करणे कर्तृत्वोपचार इति द्रष्टव्यम् ॥ ३ ॥

अग्ने सुखतमे रथे । ननु तर्हि मनूनां हितो मनुहित इति स्यात् मनुर्हित इति कथमित्यत आह ॥ अनेनेति ॥ ज्ञानिवाचकमनुशब्देनेत्यर्थः । ननु मनूनामिति षष्ठी न युक्ता चतुर्थीतदर्थार्थब-लिहितसुखरक्षितैरिति हितशब्दयोगे चतुर्थी विधानात् । मनुभ्यो हितत्वेनेति वक्तव्यत्वादित्यत आह । चतुर्थ्यर्थ इति । सप्तमी तृतीयार्थ इत्याशयेनाह । सुखतमेन रथेनेति । कुत इत्यतः आवयोः सम्बन्धसद्भावात् इत्यत आह ॥ होतासीति ॥ होतृसंस्थोऽसीत्यर्थः । तत्र यथाश्रुतैवेति । ज्ञानयज्ञे देहाख्यरथे इन्द्रियदेवान् आवह विशेषतः संन्निहितान् कुर्वित्यर्थो द्रष्टव्यः ॥ छ ॥ ४ ॥

स्तृणीत बर्हिरानुषक् ॥ ननु धातूनामनेकार्थत्वात् चक्षिङ् व्यक्तायां वाचीत्यस्मात् ल्युटि युवोरनाकावित्यनादेशे पश्चात् चक्षिङः ख्याञ् आर्धधातुके प्रत्यये परे चक्षिङः ख्याञ् इत्यादेशः स्यात् इत्युक्तत्वेन अर्धधातुकं शेष इति तिङशिद्भ्योऽन्यस्य प्रत्ययस्य आर्धधातुकत्वविधानात् ल्युटश्च तथात्वेन आर्धधातुकत्वात् तस्मिन् परे चक्षिङः ख्याञादेशे ख्यानमिति स्यात् ।

चक्षणमिति कथं इत्यत आह । चक्षिङ इति । ॥ समाधानान्तरमाह ॥ छन्दसीति । धात्वधिकारोक्तः सर्वोऽपि प्रत्ययः सार्वधातुकार्धधातुकसंज्ञो भवतीति सूत्रार्थः । तथाच अस्मिन् पक्षे ल्युटः तिङ्शित्सार्वधातुकमिति विहिततिङः शित्वाभावेपि छन्दसि उभयथेति सूत्रेण सार्वधातुकतायाः विवक्षितत्वात् । आर्धधातुकप्रत्ययनिमित्तख्याञादेशाभावो न दोषायेति भावः । पुनरपि समाध्यन्तरमाह । प्रकृत्यन्तरं वेति ॥ चक्षणं इत्येतत् न चक्षिङ्धातोः रूपं येन ख्याञादेशप्रसक्तिः । किन्नाम चक्षदर्शन इति धातोरेषः । तथाच चक्षधातोः ल्युटि तस्य अनादेशे नस्य णत्वे चक्षणम् इति युक्तमित्याशयः । घृतस्थानादिति । यज्ञे यत्र आज्यपात्रं स्थाप्यते तत्स्थानात् पश्चिमत इत्यर्थः । सप्तम्यर्थ इत्याह । देवस्थान इति । देवाहि आसादितघृतपात्रेभ्यः पश्चिमतो वर्तन्त इति भावः ॥ तस्योपरीति ॥ मनोरूपस्थानस्योपरीत्यर्थः । तत् मनोरूपस्थानं मनोरूपस्थाने प्रसिद्धबर्हिषः आस्तरणस्य बाधितत्वादाह ॥ अत्रेति ॥ तेन मन इति । वेदवाक्येन मनः सम्बधं कुरुत इत्यर्थः । भगवद्व्यक्तिस्थानभूतमनसा वेदविचारं कुरुत इत्याशयः । मनसि भगवद्व्यावृत्यर्थं मनसा वेदार्थो विचारितव्य इति फलितोर्थ इत्यवधेयम् । अत्र देवता अप्रतीतेः उदाहृतानुक्रमणिकानुसारेण देवतां दर्शयति ॥ अत्रेति ॥ बर्हिस्तृणीतेत्युक्तत्वात् बर्ह्यभिमानिनी तन्नाम्नी काचिद्देवतेति ब्याख्येयम् । अन्यथा केवलदूर्वाया एव देवतात्वापत्तेरिति ज्ञातव्यम् ॥ ५ ॥

विश्रयन्ता मृतावृधः । वृध इति वृधुवृद्धौ । वृधु इति शब्दस्येदं बहुवचने ॥ संगार्थ इति । सश्च सङ्ग इति धातोरिति भावः । द्वारमात्रं सा देवी ब्रह्मणोहि मुमुक्षुतः इत्यादि प्रयोगात् द्वारशब्दः श्रियो वाची । दिवु क्रीडेत्यादिधातोः देवशब्दः गतिमत्वार्थः । गतिरनुगतिरिह विवक्षिता । तथाच देवीशब्दश्च दासीपद इत्याशयेनाह । श्रियो दास्य इति । न दीनदेवताः । ननु त्वया यज्ञः कालान्तरे कर्तव्योऽस्ति । ताभिरिदानीमागत्य किं कार्यमित्यत आह ॥ अद्यास्मिन्नहनीति ॥ यष्टवे यष्टुमिति ॥ तुमर्थे सेसेन् इत्यादि सूत्रेण यजेः तुमर्थे तसेन् प्रत्ययः षत्वं ष्टुत्वं च । तथाच यष्टव इति भवतीति भावः । श्रौतपदस्य यजनायेति प्रतिपदे दातव्ये यद्यजनार्थत इति प्रतिपदमुक्तं तद्व्युत्पादयति । यजनं चासाविति ॥ तथाच यजनरूपप्रयोजनायेत्यर्थः । साक्षादित्यस्य द्वारभूत इत्यनेनान्वय इत्याशयेनाह ॥ मुमुक्षुत इति ॥ मुमुक्षुतो भगवतः साक्षात् द्वारत्वासंभवात् तत्तात्पर्यमाह ॥ मोक्षस्येति ॥ गुर्वादिषु स्थित्वा उपदेशादिकरणद्वारेत्यर्थः । अगम्यत्वाद्धरिस्तस्मिन् आविष्टो मुक्तिदो भवेदिति वचनादिति भावः । भगवत्पक्षे देवीरिति अत्रत्यदेवशब्दार्थः कः इत्यत आह । देवशब्द इति ॥ प्रागवेति यज्ञस्य देवमित्येतद्व्याख्यानसमये द्योतनाद्विजयात्कान्त्या स्तुत्या व्यवहृतेरिति । रत्या गत्या च देवाख्यमिति व्याख्यात इत्यर्थः ।

स्त्रीलिङ्गादिति । बहुवचनप्रयोगश्च कथमित्यादिशब्दार्थः । भगवतः पुंस्त्वात् एकत्वाच्चेति भावः । ऋतावृध इत्यत्र ऋतेन हरिणा वृध इति व्याख्यानस्य भगवत्पक्षे अयोगादाह ॥ ऋतवृद्ध इतीति ॥ ऋतेन मित्रावरुणावृता वृधा इत्येतद्व्याख्यानावसरे नित्यवृद्धः स भगवान् ऋतेनानुपचारतः इत्यनेन व्याख्यातमित्यर्थः ॥ ६ ॥ २४ ॥

## पदार्थदीपिका

॥ आप्रीसूक्तमिति ॥ सम्यक् प्रीयते परमात्मा आभिरिति आप्रियो भगवत्प्रियकारिणो मन्त्राः तद्युक्तं सूक्तम् आप्रीसूक्तम् । अत्यन्तं भगवत्प्रीतिकरं सूक्तमिति यावत् । सूक्तदेवता आह । प्रत्यृचमिति ॥ अति सुदीप्त इति ॥ इन्धी दीप्ताविति धातोरिति भावः ॥ हविष्मत इति । हविरस्यास्तीति मतुप् । तसौ मत्वर्थ इति भत्वेन पदत्वस्य बाधितत्वान्न रुत्वमिति भावः ॥ यक्षि च यज चेति ॥ यजेर्लोटः सिपि बहुलं छन्दसीति शपो लुक् । व्रश्चादीनां षत्वम् । षढोः कःसीति कत्वम् । सेर्हिरादेशः छान्दसत्वान्न भवति । आदेशप्रत्यययोरिति सिपः षत्वम् । कषयोगे क्ष इति क्षत्वमिति भावः ॥ १ ॥

॥ तेन तनूनपादिति ॥ तनूत्पन्नवागभिव्यज्यत्वात् यतस्तन्वाः नप्ता भवान् तेनेत्यर्थः । कृणुहीति । कृवि हिंसाकरणयोश्च । इदितो नुम् धातोरिति नुम् । लोटः सेर्हिरादेशः । धिन्विकृण्व्योरचेति शपोपवादे विकरण उ प्रत्यये तत्सन्नियोगेन वकरस्याकारः । तस्यातो लोप इति लोपः । तस्य स्थानिवद्भावात् लघूपधगुणो न भवति । उतश्च प्रत्ययादसंयोगपूर्वादिति हेर्लुक् न भवति । उतश्च प्रत्ययात् छन्दोवचनमिति वचनात् । ततश्च कृणुहीति रूपनिष्पत्तिरिति भावः ॥ २ ॥

दैवैरपि शंस्यत्वात् भगवतोऽनर्थकं नरैः शंस्यत्वाद्यभिधानमित्यत आह ॥ नरैरित्युपलक्षणमिति ॥ आशंस्य इति ॥ हलश्चेति कर्मणि घञिति भावः । प्रियमिति । प्रीणातीति प्रियः । इगुपधज्ञाप्रीकिरः कः इति कप्रत्यय इति भावः । हविष्कृतमिति । हविः करोतीति हविष्कृत् । क्विपि ह्रस्वस्य पिति कृति तुक् । नित्यं समासेऽनुत्तरपदस्थस्येति षत्वमिति भावः ॥ ३ ॥

ननु बलिहितयोगे च इत्यनेन हितशब्दयोगे चतुर्थ्या एव विधानात् मनुभ्यो हितत्वेनेति वक्तव्यं तत्कथं मनूनामिति षष्ठीत्यत आह ॥ चतुर्थ्यर्थ इति ॥ ईळित इति । ईडस्तुतौ निष्ठाक्तः । ईडागम इति भावः । अतिशयेन सुखकारिणेति । सुखमस्मिन् अस्तीति मतुप् । तस्य गुणवचनेभ्यो मतुपो लुग्वक्तव्येति लुक् । अतिशयेन सुखः सुखतमः । सप्तमी च तृतीयार्थ इत्युक्तं भवति ॥ ४ ॥

ननु चक्षिङ् व्यक्तायां वाचीत्यस्मात् धातोः ल्युट् चेति भावे ल्युटि चोरनदेशे तस्य तिङ्शिद्भिन्नत्वेन आर्धधातुकत्वात् तस्मिन् परतः चक्षिङः ख्याञिति ख्याञादेशे ख्यातमिति भवितव्यम् तत्कथं चक्षणमिति उक्तिरित्यत आह ।। छान्दस इति ।। नृचक्षाः विचक्षणाः इत्यादि प्रयोगसंरक्षणार्थं प्रवृत्तैतत्सूत्रीयवार्तिके असनयोश्च प्रतिषेधो वक्तव्य इति असि अने च परतः चक्षिङः ख्याञादेशस्य निषेधात् अनप्रत्यये परतोऽत्रापि तदभावो युक्तः । न चैवं सति चक्षिङः ख्याञादेशोसनयोर्न स्यादेवेति वाच्यम् । बहुलं संज्ञाच्छन्दसोर्वक्तव्यमिति बहुलवचनात् क्वचिदुप-पत्तेरिति भावः ।। छन्दस्युभयथेति वेति ।। छन्दस्युभयथेति ल्युटः सार्वधातुकत्वे-नार्धधातुकत्वाभावात् आर्धधातुकाधिकारविहितख्याञादेशाभावो न दोष इत्यर्थः ।। प्रकृत्यन्तरं वेति ।। बहुलमेतन्निदर्शनमिति वचनात् चक्षदर्शन इत्यस्य धात्वन्तरस्येदं रूपं न चक्षिङ् व्यक्तायां वाचीति धातोरतो न ख्याञादेशप्रसक्तिरित्यर्थः । अत एव भाष्ये दर्शनमिति व्याख्यातमिति भावः ।। पश्चिमतो वर्तमानमिति ।। आसादितघृतादिपात्रेभ्यः पश्चिमभागे देवानां विद्यमान-त्वादिति भावः ।। आनुषक् सर्वत इति ।। षच संगे । धात्वादेः षः सः । क्विप् चेति क्विप् । अनिदितामिति नलोपः । आङ्चयोरुपसर्गयोः प्राग् प्रयोगः । गतिसमासः । उपसर्गात् सुनोतीत्यादिना षत्वम् । ततश्च आसमन्तात् अनुषक्तं यथा तथेति क्रियाविशेषणमित्यर्थः । स्तृणीतेति । स्तृञ् आच्छादने लोट् मध्यमपुरुषस्य बहुवचनम् । लोटो लङ्वत् । ततः तस्थस्थमिपामिति थस्य तादेशः । क्र्यादिभ्यः श्ना । ईहल्यघोरितीत्वम् । ऋवर्णाच्चेति वक्तव्यमिति णत्वम् । स्वादीनां ह्रस्व इति ह्रस्वः । विस्तार एवाच्छादनमिति भावः । घृतः शुद्ध इति । घृ क्षरण दीप्त्योरस्मात् निष्ठेति क्तः । कित्वान्न गुण इति भावः । पूर्वोक्तप्रत्यृचं देवताकत्वमस्पष्टत्वाद्विशदयति अत्रेति ।। ५ ।।

।। ऋतरूपेणेति ।। 'ऋगताविति धातोस्तु पूर्वावगतवत्सदा । स्थितेर्ब्रह्मर्तमित्युक्तम्' इत्युक्तत्वादिति भावः । वृध इति । ऋतेन वर्धन्त इति वृधेः क्विप्चेति क्विबिति भावः । अत्र संहितायामन्येषामपि दृश्यत इति पूर्वपदस्य दीर्घत्वमिति ज्ञेयम् । सश्चतिः संगार्थ इति ।। यद्यप्ययं सचति सक्षति रंहतीति गतिकर्मसु पठितः तथापि गत्यर्थानां फलतः संसर्गार्थत्वमभिप्रेत्यै-वमुक्तमिति ध्येयम् । ततः क्विबिति । अदन्तोऽयं धातुः । अतो ह्रस्वस्य पिति कृति तुगिति तुगागम इति भावः । देवी देव्य इति । अत्र वा छन्दसीति पूर्वसवर्णदीर्घत्वमिति भावः । यष्टवे यष्टुमिति । तुमर्थे सेसेनेत्यादिना यजस्तवेत् प्रत्ययः । व्रश्चादिना षत्वम् । ष्टुना ष्टुरिति ष्टुत्वमिति भावः । यष्टव इति श्रौतपदस्य यजनायेति प्रतिपदे वक्तव्ये यजनार्थत इति प्रतिपदं तत् व्युत्पादयति ।। यजनं चेति ।। प्रागेवेति । ऋतेन मित्रावरुणावृता वृधावित्यत्रेत्यर्थः ।। ६, २४ ।।

## टीकाविवृतिः

सुसमिद्धः ॥ द्वादशर्चमिति ॥ सुसमिद्ध इतीध्मः समिद्धोवाग्निरित्यनुक्रमणिकायां द्वादशेत्यनुवृत्तेर्दैवतोक्त्यनन्तरमेतदाप्रीसूक्तमित्युक्तेश्चेति भावः । आसम्यक् प्रीयते येन विष्णुस्तत्सूक्तं समिद्धाग्न्यादिदेवताकमाप्रीत्युच्यते ॥ प्रत्यृचमिति ॥ अनुक्रमणिकानुसारेण तत्र तत्रैव वक्ष्यामः । आद्याया ऋचस्तावदिध्माग्निः समिद्धाग्निर्वादेवता । सुसमिद्धोऽतिसुदीप्त इति ॥ ञि इन्धीदीप्तावित्यतः क्तप्रत्यये अनित्यमागमशासनमितीडागमाभावे अनिदितामिति नलोपे झषस्तथोर्धोध इति भावः । नामंत्रिते समानाधिकरणे सामान्यवचनमिति सूत्रेण विशेषणे सम्बुद्ध्यन्ते परतः पूर्वं विशेष्यमामन्त्रितं नाविद्यमानवत्स्यादिति निषेधात् होतरित्यस्य पावकशब्द परत्वेनामन्त्रितं पूर्वमविद्यमानवदित्यविद्यमानवत्त्वाभावात्पावकशब्दस्य पदात्परत्वादामन्त्रि-तस्येत्याष्टमिको निघातः । होतरित्यस्य तु पदात्परत्वाभावादामन्त्रितस्येति षाष्ठिकमुदात्तत्वम् । यक्षीत्येतं प्रति होतः पावकेत्येतयोरविद्यमानवत्त्वादस्य धातुस्वरेणाद्युदात्तत्वं नतिङ्ङतिङ इति निघातः । नामंत्रित इत्यस्य आमन्त्रितस्वरमात्रविषयत्वात् नञा निर्दिष्टस्यानित्यत्वाद्वा तिङ्स्वराप्रवृत्तेः । यक्षिच यजचेति ॥ यजेर्लोटः सिपि बहुलं छन्दसीति शब्लुकि षत्वकत्वयोर्वा छन्दसीति सेर्हित्वाभावे सस्य ष इति भावः ॥ बहुवारमिति ॥ अग्नेदेवाँ इहावह जज्ञानोवृक्त बर्हिषे । सनःपावकदीदिवोग्ने देवां इहावहेत्यादाविति भावः ॥ १ ॥

मधुमन्तं तनूनपात् । अस्यामृचि तनूनपाद्देवता ॥ तनूनपादिति को देव इत्याशंकायामाह ॥ अग्निविशेषस्येति ॥ अग्नेः समित् तनूनपात् इळोबर्हिः स्वाहाकार इत्यादिबहुविधत्वादिति भावः ॥ वाचस्तनूजातत्वं विवृणोति ॥ तदाश्रयत्वादिति ॥ तन्वाश्रयत्वादित्यर्थः ॥ व्यक्त इति भाष्यार्थो ज्ञेय इति ॥ तेन तनूनपादिति ॥ देहादुत्पन्नवाज्ज्ञेयत्वेनेत्यर्थः ॥ नपाच्छब्दस्येति ॥ नपातयति स्वोत्पत्त्या पितृकुलमिति व्युत्पत्त्या नप्तृशब्दवन्नञ्पूर्वात्पतेरपि क्विब्वचीत्यत्र बहुलोक्तेः क्विब्दीर्घयोर्नभ्राण्नपान्नवेदा इति नलोपाभावे नपाच्छब्दनिष्पत्तेरिति भावः ॥ मधुस्वाद्विति ॥ मधुरशब्दस्य स्वादुवाचित्वात्पृषोदरादित्वे नरशब्दलोपे मधुशब्दोपि स्वाद्वर्थकः ॥ कृणुहीति ॥ कृञोव्यत्ययेन श्नुप्रत्यये छान्दसो हेर्लुगभाव इति भावः ॥ २ ॥

नराशंसम् । अत्र नराशंगोदेवता । प्रजावै नरो वाक्शंस इति ब्राह्मणानुकूलनाय देवादि प्रजाविवक्षयाह । नरैरित्युपलक्षणमिति ॥ शंसधातोरनेकविधत्वाद्भाष्यानुकूलनायाह । शंसु स्तुताविति ॥ आङ्पूर्वादस्माद्धलश्चेति कर्मणि घञिति भावः ॥ विग्रहस्त्वाशंस्यत इत्याशंसो

नराणामाशंसो नराशंस इत्येव । नरैरित्यादितात्पर्यकथनं ज्ञेयम् ॥ इहेति सप्तमीषष्ठ्यर्थ इत्याशयेनाह ॥ इहसर्वप्राणिनामिति ॥ मधु जिह्वा यस्येति विग्रहमभिप्रेत्य मधुशब्दस्य लक्षणया तद्वदर्थकत्वमाश्रित्याह ॥ मधुमतीति ॥ हविषः कर्तारमिति ॥ कृञः क्विप्चेति कर्तरि क्विपितु किनित्यं समासेऽनुत्तरपदस्थस्येति विसर्गस्य ष इति भावः ॥ ३ ॥

अग्ने सुखतमे ॥ अत्रेलिताख्योऽग्निविशेषो देवता ॥ मनुस्शब्द इति ॥ जनेरुसिरित्युक्त उसिर्बहुलोक्तेर्मनेरपि ॥ अत एव क्षेत्राय विष्णुर्मनुषे दशस्यन्नित्यन्यत्रापि प्रयुज्यते ॥ ननु चतुर्थी तदर्थार्थबलिहितेति हितशब्देन चतुर्थीसमासविधानाज्ज्ञापकाद्धितशब्दयोगे चतुर्थ्या भाव्यमतः कथं मनूनां च हितत्वेनेति भाष्योक्तिरित्यत आह ॥ चतुर्थ्यर्थ इति ॥ ज्ञापकसिद्धं न सर्वत्रेति परिभाषया चतुर्थ्यभावादिति भावः ॥ सुखकारिणेति ॥ सुखतम इत्यत्र सुखशब्दोर्शाद्यचि त द्वति विद्यमानः साध्यसाधनभावसम्बन्धमाहेति भावः ॥ अत एवामरोपि अथत्रिषु द्रव्ये पापं पुण्यं सुखानिचेत्याह ॥ यथाश्रुतैवेति ॥ बाह्याग्निपक्षे विष्णुपक्षे वा यज्ञार्थं रथे देवानयनस्य प्रयोजनाभावा दानयने रथस्य करणत्वाद्व्यत्ययेन सप्तमी व्याख्याता ॥ अध्यात्मार्थे तु देहे सर्वदेवसान्निध्यस्यापेक्षिततत्वाद्व्यत्ययो नाश्रयणीय इति भावः ॥ ४ ॥

स्तृणीत बर्हिः । हेमनीषिण इति ॥ व्रीह्यादित्वादिनिरिति भावः ॥ ख्याञभाव इति ॥ असनयोश्चेति वार्तिकेन चक्षिङोसुप्रत्ययेऽन्प्रत्यये च ख्याञादेशनिषेधादिति भावः । पक्षान्तरमाह ॥ छन्दसीति ॥ आर्धधातुके ख्याञादेशविधानात् ल्युटश्छन्दस्युभयथेति सार्वधातुकत्वात्ख्याञ भाव इति भावः ॥ प्रकृत्यन्तरं वेति ॥ बहुलमेतन्निदर्शनमिति धातुपाठान्तिमसूत्रादपठितधात्वं तराभ्यनुज्ञानाच्चक्षदर्शन इत्यतो ल्युट् न तु चक्षिङ्व्यक्तायां वाचीत्यतः । अन्यथा दर्शनार्थत्वं नस्यादिति भावः ॥ पश्चिमत इति ॥ आहवनीयाग्नेः पश्चिमभागे घृतस्थानं ततः पश्चिम भागे देवास्तिष्ठन्तीति भावः ॥ आनुषक् सर्वत इति ॥ आसमन्तादनुसंजनं सम्बन्धः आनुषक् स यथास्यात्तथेति क्रियाविशेषणम् । आङनुपूर्वात्षंजसंग इत्यतः क्विप् । सर्वत इति तात्पर्यार्थ इति भावः ॥ स्तृणीत विस्तारयतेति ॥ स्तृञ् आच्छादन इत्यतो विधिलिङिश्नाप्रत्यये तस्य ईहल्यघोरितीत्वेप्वादीनां ह्रस्व इति धातोर्ह्रस्वः । वेदिकाया आच्छादनं वेदिकायां विस्तारणमेवेति भावः । घृतः शुद्ध इति ॥ घृक्षरणदीप्त्योरित्यतः क्तप्रत्यये घृतो दीप्तः शुद्ध इति तात्पर्यमिति भावः ॥ यस्योपरीति ॥ यस्य मनसः । बृह त्वादिति ॥ बृह बृहिवृद्धावित्यतो बृंहेर्नलोपश्चेति इसिप्रत्यय इति भावः । अत्रैवमृग्योजना । हे मनीषिणः । यत्र मनसि अमृतस्य नित्यामरणधर्मिणः ।

विष्णोश्चक्षणं दर्शनं स्यात्तस्मिन्घृतपृष्ठं घृतपृष्ठे मनसि आनुषक् बर्हिस्तृणीतेति ॥ अस्यामृचि मनीषिणां देवतात्वसन्देहादाह ॥ बर्हिरिति ॥ बर्हिः बर्हिर्नामकोग्निरित्यर्थः ॥ ५ ॥

विश्रयंतामृतावृधः । अत्र द्वारोदेवीर्देवता ॥ यथार्थज्ञानरूपेणेति ॥ ऋतशब्दस्यावृत्त्या ऋतेन यथार्थेन ऋतेन ज्ञानरूपेणेत्यर्थो बोध्यः । याः देवीः । सश्चतिरिति ॥ सश्चगतावित्युक्तेपि विषयान्प्रतिगमनमर्थात्तत्सम्बन्ध इति प्रतीतेर्धातूनामनेकार्थत्वाद्वेति भावः ॥ ततः किबिति ॥ धातोरकारान्तत्वाश्रयणादुध्रस्वस्यपितिकृतितुगिति तुगिति भावः । श्रियो दास्य इति ॥ द्वारो द्वारभूता उपसर्जनभूताः देव्यः सम्बध्यंतराकांक्षायां श्रिय इत्यध्याहार इति भावः । चशब्दं तथेति व्याख्यायाद्यशब्दस्याहनीति व्याख्यातस्य नूनमित्यन्वय इत्याशयेन भाष्येऽद्यैवेति पुनरुक्तमित्याह ॥ अद्यैवेति यावदिति ॥ यष्टवे यष्टुमिति ॥ यजेस्तुमर्थे सेसेनिति तवेन्प्रत्यये व्रश्चेति षत्वे ष्टुत्वमिति भावः । यष्टव इत्येतद्व्याख्यारूपं यजनार्थत इति भाष्यं योजयति ॥ यजनं चेति ॥ इतराभ्योपि दृश्यंत इति चतुर्थ्यंतात्तसिमाश्रित्याह ॥ तस्मा इति ॥ तात्पर्यमाह ॥ नो मानसे मख इति ॥ द्वारशब्देन विष्णोरुपसर्जनत्वमुच्यत इति शंकावारणायाह ॥ साक्षादिति ॥ अत्र द्वारशब्दः साधनार्थः मुख्यामुख्यन्यायेन मुख्यपरश्च मोक्षस्येति त्वपेक्षिताध्याहार इत्याशयः । स्त्रीरूपश्चेति भाष्यनिवर्तनीयाशंकामाह ॥ कथं स्त्रीलिङ्गादीति ॥ आदिशब्दाद्बहुवचनं गृह्यते । ननु भगवत्पक्षे ऋतवृध इत्यस्य न पूर्वव्याख्यानं युज्यते इत्यत आह । प्रागेवेति ॥ ऋतमनुगतं सर्वकाल इति ऋतशब्दो नित्यपर्यायः वर्धतेरिगुपधलक्षणः कः ऋतं नित्यं वृधोवृद्धः ऋतवृध इति ऋतेनमित्रावरुणेत्यत्र व्याख्यातमित्यर्थः ॥ ६, २४ ॥

## ऋक्संहिता पदपाठसहिता

**(१२९) नक्तोषासासुपेशसास्मिन्यज्ञउपह्वये ॥ इदंनोबर्हिरासदे ॥ ७ ॥**

**(प०) नक्तोषसा । सुऽपेशसा । अस्मिन् । यज्ञे । उप । ह्वये ॥ इदम् । नः । बर्हिः । आऽसदे ॥ ७ ॥**

**(१३०) तासुजिह्वाउपह्वयेहोतारादैव्याकवी ॥ यज्ञंनोयक्षतामिमम् ॥ ८ ॥**

**(प०) ता । सुऽजिह्वौ । उप । ह्वये । होतारा । दैव्या । कवीइति ॥ यज्ञम् । नः । यक्षताम् । इमम् ॥ ८ ॥**

**(१३१) इळासरस्वतीमहीतिस्रोदेवीर्मयोभुवः ॥ बर्हिःसीदन्त्वस्रिधः ॥ ९ ॥**

(प०) इळा । सर॑स्वती । म॒ही । ति॒स्रः । दे॒वीः । म॒य॒ःऽभुवः॑ ॥ ब॒र्हिः । सी॒द॒न्तु॒ । अ॒स्रिधः॑ ॥ ९ ॥

(१३२) इ॒हत्वष्टा॑रमग्रि॒यंवि॒श्वरू॑प॒मुप॑ह्वये ॥ अ॒स्माक॑मस्तु॒केव॑लः ॥ १० ॥

(प०) इ॒ह । त्वष्टा॑रम् । अ॒ग्रि॒यम् । वि॒श्वऽरू॑पम् । उप॑ । ह्व॒ये॒ ॥ १० ॥

(१३३) अव॑सृजावनस्पते॒देव॑दे॒वेभ्यो॑ह॒विः ॥ प्रदा॒तुर॑स्तुचेत॑नम् ॥ ११ ॥

(प०) अव॑ । सृ॒ज॒ । व॒न॒स्प॒ते॒ । देव॑ । दे॒वेभ्यः॑ । ह॒विः ॥ प्र । दा॒तुः । अ॒स्तु॒ । चेत॑नम् ॥ ११ ॥

(१३४) स्वाहा॑य॒ज्ञंकृ॑णोत॒नेन्द्रा॑यय॒ज्वनो॑गृ॒हे ॥ तत्र॑दे॒वाँउप॑ह्वये ॥ १२, १५, १३ ॥

(प०) स्वाहा॑ । य॒ज्ञम् । कृ॒णो॒त॒न॒ । इन्द्रा॑य । यज्व॑नः । गृ॒हे ॥ तत्र॑ । दे॒वान् । उप॑ । ह्व॒ये॒ ॥ १२, २५, १३ ॥

ऋग्भाष्यम्

नक्ता स्यान्नाक्तो यस्मात्स सर्वतः ।
उषाः प्रकाशरूपत्वात्सुभद्रेते उपह्वये ।
अस्मिन्बर्हिषि संस्थित्यै ॥ ७ ॥
होतारौ देवगावपि ।
मथ्यमानोपरश्चैव वह्नी तद्गोथ वाहरिः ।
आत्मान्तरात्मरूपेण द्विरूपो वा व्यवस्थितः ।
देवेषु यजतां यज्ञमस्मदीयमिमं सदा ॥ ८ ॥
इळेड्यत्वाद्धरिः श्रीर्वा भूरूपा सैव चापरा ।
महीतु भारतीनाम वायव्या ब्रह्मणोऽपरा ।
तद्गतस्तादृशै रूपैः पृथक्स्थोवा हरिस्तथा ॥ ९ ॥
त्वष्टा तेजस्त्वतो विष्णुर्बलत्वाद्वा समीरितः ।
विश्वरूपकरत्वाच्च विश्वरूपोथ पूर्तितः ॥ १० ॥
वननीयपतित्वेन वनस्पतिरितीरितः ।
ज्ञानं तु चेतनम् ॥ ११ ॥
स्वाहा स्वभागगतिमान्स्मृतः ।
अव्ययत्वादमोषश्च ॥ १२, २५, १३ ॥

## ऋग्भाष्यटीका

नक्तोषासा । नक्तेति रात्रिदेवता उषा इत्यपररात्रिकृज्ज्योतिर्देवतेति प्रसिद्धम् । शब्दद्वयं विष्णौ योजयति ।। नक्तेति ।। यस्मात्सविष्णुः सर्वेण पापादिना नाक्तो न सङ्गतस्तस्मान्नक्ता स्यात् । अंजतेःक्तः । नसमासः (नञ्समासः) । शकंध्वादित्वात्पररूपम् । स्त्रीरूपत्वात्स्त्रीलिङ्गत्व-मित्युक्तमेव । वशकान्तावित्यस्मात्कसुन् प्रकाशरूपत्वादुषाः अहं सुपेशसौ सुरूपे सुभद्रे नक्ताच उषाश्च तेनक्तोषसौ नोऽस्माकमस्मिन्यज्ञे इदं बर्हिरस्मिन्बर्हिषि आसदे आसदनाय सम्पदादित्वात्क्विप् । संस्थित्यै उपह्वये उपाह्वयामि ।। ७ ।।

तासुजिह्वा । अत्र दैव्यौ होतारौ नाम कावित्यत आह । होताराविति ।। अपिपदेनोपह्वय इत्यनेनान्वयं सूचयति । मथ्यमानो गार्हपत्यः । अपरः आहवनीयः । तद्वो वह्निद्वयगतः द्विरूपो व्यवस्थितोऽध्यात्मं शोभना जिह्वा ययोस्तौ सुजिह्वौ कवी दैव्यौ देवगौ दूतत्वेन देवसम्बन्धिनौ होतारौ वह्नी उपह्वये आगत्य च नः इममस्मदीयं यज्ञं यक्षतां देवेषु सदा यजतां प्रयच्छताम् ।। ८ ।।

इळा । सरस्वतीशब्दस्य प्राक् भगवद्विषयतया व्याख्याततत्वान्मही चेति महीशब्दस्यापि व्याख्यास्यमानत्वादिळाशब्दं व्याचष्टे । इळेति । ईड स्तुतौ कर्मण्यकारप्रत्ययः धातोर्ह्रस्वताच । देवतान्तर विषयतया चेळादिशब्दत्रयं व्याख्याति । श्रीर्वेति ।। श्रीर्वा इळा ईड्यत्वादेव अपरा चेळा सरस्वतीभ्यामन्या महीच सा श्रीरेव तत्कथम् । भूरूपा । महीशब्देन भारतीच विवक्षितेत्याह ।। महीत्विति ।। भारतीच महीनामेति तुशब्दश्चशब्दार्थः । इळाव्यावृत्त्यर्थो वा । भारतीशब्दस्य ब्रह्माण्यामपि प्रसिद्धत्वाद्विवेकार्थमाह ।। वायव्येति ।। वायुभार्या । ब्रह्मणो भार्याऽपरा इळामहीभ्यामन्या सरस्वतीत्यर्थः । स्त्रीलिङ्गं बहुवचनं च हरौ घटयति ।। तद्गत इति । लक्ष्म्यादिगतः । तादृशैस्त्र्याकारैः तथा स्त्रीलिङ्गबहुवचनविषय इत्यर्थः । इळासरस्वतीमहीत्येता मयोभुवः सुखाश्रयभूता अस्रिधोऽविनाशास्तिस्रो देवीर्दैव्यो बर्हिः बर्हिषि सीदन्तु उपविशन्तु ।। ९ ।।

इह । त्वष्टृविश्वरूपशब्दौ भगवति योजयति ।। त्वष्टेति ।। त्विषधातोर्दीप्तिवद्बलमपि वाच्यं भवतीत्याशयेन बलत्वाद्वेत्युक्तम् । यद्वा त्विषदीप्तावित्यत्रैव दीप्तिपदेन तेजसो बलस्य च ग्रहणम् । त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वं चेति तृन् । विश्वरूपकरत्वादित्यनेन विश्वानि रूपाणि यस्मादिति निर्वक्ति । अथ पूर्तित इति ।। विश्वं पूर्णं रूपमस्येति । अहमग्रियमग्रे भवं प्रधानं विश्वरूपं त्वष्टारं इह यज्ञे उपह्वये स त्वष्टाऽस्माकं केवलोऽस्तु अस्माकमेव पालयितास्तु ।। १० ।।

अवसृज ॥ वनस्पतिशब्दं हरौ योजयित्वा चेतनशब्दार्थमाह ॥ वननीयेति ॥ वननीयाः सम्भजनीयाः वनतेः कर्मण्यसुन् । वनसां पतिः वनस्पतिः । यद्वा वनोऽकारः । पारस्करप्रभृतित्वात्समासे सुट् । तेन वनानां पतिर्वनस्पतिः । हेवनस्पते देव त्वं देवेभ्यो हविरवसृज देहि । तेन च प्रदातुर्यजमानस्य चेतनं ज्ञानमस्तु । चिती संज्ञाने भावेल्युट् ॥ ११ ॥

स्वाहा ॥ स्वाहाशब्दं भगवति त्रेधा व्याचष्टे ॥ स्वाहेति ॥ स्वभागं प्रतिगतिमानित्यनेन स्वशब्दे कर्मण्युपपदे आङ्पूर्वादोहाग्गतावित्यस्मात्कर्तर्यकारः प्रत्ययः ततस्त्रियां टाबित्युक्तं भवति । अव्ययत्वाच्च स्वाहेत्यनेन सुष्ठ्वासमन्तान्न हीयत इति व्युत्पादितं भवति । ओहाक्त्याग इत्यस्य कर्मणीदं रूपम् । अमोषश्च स्वाहेत्यनेन सुष्ठ्वासमंतान्न ह्रियत इति । हरतेः कर्मणि डः । स्वाहादेवी यज्वनो यजमानस्य गृहे वर्तमानं यज्ञमिन्द्राय कृणोतन करोतु । इन्द्रं प्रापयत्विति यावत् । उत्तमप्रयाजाख्ये यज्ञे स्वाहा यक्ष्यमाणा न तत्रेन्द्रसम्बन्धोस्तीत्यस्मिन्मते इन्द्राय इन्द्रस्य सम्बन्धिनो यज्वनो गृहे यज्ञं कृणोतन प्रवर्तयत्विति योज्यम् । किंच तत्र यज्ञे देवानुपह्वये ॥ १२, २५, १३ ॥

## मन्त्रार्थमञ्जरी

(सप्तम्यामृचि नक्ता चोषासा च देवते) सुपेशसा, सुपेशसौ, शोभनरूपयुक्ते । नक्तोषसा, नक्तोषसौ, रात्र्युषः कालाभिमानिदेवते (दुर्गादिव्यश्विभार्या च), पापाद्यसङ्गत्वप्रकाशरूपत्व निमित्ताभ्यां नक्तोषस्शब्दितभगवदीयस्त्रीरूपविशेषौ वा । नः, अस्माकम् । अस्मिन् यज्ञे । इदम् बर्हिः, अस्मिन्बर्हिषि । आसदे, आसदनाय, सम्पदादित्वाद्भावे क्विप्, संस्थित्यै । उप ह्वये, उपह्वयामि । 'अन्जू व्यक्तिमर्षणकान्तिगतिषु' इत्यतः क्तप्रत्यये 'अनिदितां हल उपधायाः क्ङिति' इति नलोपे नसमासे शकन्ध्वादित्वेन पररूपे (टापि) 'नक्ता' इति विष्ण्वर्थत्वपक्षे व्युत्पत्तिर्ज्ञेया । तथा– 'वश कान्तौ' इत्यतः कसुन्प्रत्यये 'ग्रहिज्या' इति सम्प्रसारणे पूर्वरूपे षत्वे च 'उषस्' इति रूपम्, स्त्रीत्वं प्राग्वत् द्वित्वं च ॥ ७ ॥

(अष्टम्यां तु प्रचेतसौ दैव्यौ होतारौ देवते ।) सुजिह्वौ, शोभना जिह्वा ययोस्तौ सुजिह्वौ । कवी, सर्वज्ञौ । दैव्या, दैव्यौ, दूतत्वेन देवसम्बन्धिनौ । होतारा, होतारौ गार्हपत्याहवनीयौ, तद्गतविष्णुरूपविशेषौ च । उप ह्वये । आगत्य च– ता, तौ । नः, अस्मदीयम् । इमम् यज्ञम् । यक्षताम्, देवेषु सदा यजताम्, प्रयच्छताम्, यजतेः लेट्यडागमसिप्षत्वकत्वानि ॥ ८ ॥

(नवम्या ऋचः सरस्वतीळाभारत्यस्तिस्रो देव्यो देवताः) इळा ईड्यत्वेन हेतुना श्रीरिळा, 'ईड स्तुतौ' इत्यतोऽकारप्रत्ययटाप्प्रत्ययौ, ईकारस्य ह्रस्वता। सरस्वती, ब्रह्माणी, व्युत्पादितमेतत्पदं पुरस्तात् 'पावका नः सरस्वती' इत्यादौ । मही, महत्त्वेन हेतुना 'मही' इत्युक्ता श्रियोऽपररूपात्मिकाभूदेवी, वायुभार्या भाती वा । एतन्निष्ठा इळादिनामानो भगवदीयस्त्रीरूपविशेषाश्च। मयोभुवः, सुखाश्रयभूताः। अस्रिधः, अविनाशाः। तिस्रः। देवीः, देव्यः, देवशब्दार्थ उक्तः 'अग्निमीळे' इत्यत्र। बर्हिः, बर्हिषि। सीदन्तु, उपविशन्तु ॥ ९ ॥

(दशम्यामृचि त्वष्टा देवता) त्वष्टारम्, तेजस्विनम्, बलवन्तं वा, 'त्विष दीप्तौ' इत्यतस्तृन्प्रत्यय उपधाया अकारोऽनिट्त्वं च। अग्रियम्, अग्रे भवं प्रधानम्, अग्रशब्दाद्घप्रत्ययः। विश्वरूपम्, विश्वानि रूपाणि वस्तूनि यस्मादिति व्युत्पत्त्या विश्वरूपकर्तारम्, विश्वं पूर्णं रूपं यस्येति वा विश्वरूपम्। इह, यज्ञे। उपह्वये। (स त्वष्टा) अस्माकं केवलः अस्तु, अस्माकमेव पालयितास्त्वित्यर्थः। प्रसिद्धत्वष्टर्यग्रियत्वादि यथा योग्यं ध्येयम् ॥ १० ॥

(एकादशी वनस्पतिदेवताका) (हे) वनस्पते, वनसां वनानां वा भजनीयानां पते, वनतेः कर्मण्यसुन्, अकारप्रत्ययो वा, तत्पक्षे पारस्करादित्वेन समासे सुडागमः। देव (त्वम्) देवेभ्यः हविः। अव सृज, देहि। तेन च प्रदातुः, यजमानस्य। चेतनम्, ज्ञानम्। अस्तु। 'चिती संज्ञाने' भावे ल्युट् ॥ ११ ॥

(द्वादश्यामृचि तु स्वाहाकृतयो देवताः) स्वाहा, स्वं स्वीयं भागं प्रत्याजिहीते आगतिमानिति वा– सुष्ठ्वा समन्तान्नहीयत इति वा सुष्ठ्वा समन्तान्न ह्रियते केनापि नापह्रियत इति वा 'स्वाहा' इत्युक्तः स्त्रीरूपो हरिः। यज्वनः, यजमानस्य। गृहे (वर्तमानम्) यज्ञं इन्द्राय। कृणोतन, करोतु, इन्द्रं प्रापयत्विति यावत्, 'तप्तनप्तनथनाश्च' इति तस्य तनबादेशः। 'स्वाहाकारं यजति' इति वाक्योक्तोत्तमप्रयाजाख्ये यज्ञे स्वाहा यक्ष्यमाणा, न तत्रेन्द्रसम्बन्धोऽस्ति, इति मते इन्द्राय, इन्द्रस्य सम्बन्धिनः। यज्वनः गृहे (वर्तमानम्) यज्ञम्। कृणोतन, प्रवर्तयतु। इति योजना। किं च, तत्र, यज्ञे। देवान् उप ह्वये। 'स्वाहा' इत्यस्याद्येऽर्थे– स्वशब्दे कर्मण्युपपद आङ्पूर्वात् 'ओहाङ् गतौ' इत्यतः कर्तर्यकारप्रत्ययः, स्त्रियां टाप्। द्वितीये– 'सु, आङ्' इत्यतो उभयपूर्वात् 'ओहाक् त्यागे' कर्मण्यकारप्रत्यये टाप्। तृतीये च– स्वाङ्पूर्वात् 'हृञ् हरणे' इत्यतो डप्रत्यये टाप्। प्रसिद्धस्वाहायां यथायोगमवयवार्थोज्ञेयः ॥ १२ ॥ इति पञ्चविंशो वर्गः ॥ २५ ॥ त्रयोदशं सूक्तम् ॥ १३ ॥

## पदार्थप्रकाशिका

नक्तोषासा सुपेशसा । अपररात्रिदेवतेति पाठः । अपररात्रिकृद्देवतेत्यपि पाठः । अंजतेः क्त इति । अंजु व्यक्तिश्लक्षणकान्तिगतिष्विति धातोः अंजत इति कर्मार्थक्तप्रत्यये ककारलोपे अनुनासिकस्येत्यनेन अनुस्वारलोपं जकारस्य कुत्वे अक्तेति रूपम् । ननु तर्हि न अक्तेति स्थिते न लोपो नञ इति नञो नकारस्य लोपे अक्तेति जाते तस्मान्नुडचीति नुडागमे अनक्तेति स्यात् । इत्यत आह ॥ नसमास इति ॥ तथाच नञ्समासत्वाभावात् नोक्तसूत्रेण लोपादिप्रसक्तिरिति भावः । ननु तर्हि न अक्तेति स्थिते सवर्णदीर्घे नाक्तेति स्यादित्यत आह । शकंध्वादित्वादिति । तथाच शकंध्वादिषु पररूपं वाच्यमिति सवर्णदीर्घापवादकत्वेन पररूपविधानादस्यापि शकंध्वादिगणस्थत्वात् शकंधुरित्यादिवन्नक्तेति रूपं युक्तमिति भावः । तर्हि नक्त इति स्यात् नक्तेति स्त्रीलिंगप्रयोगो भगवत्ययुक्त इत्यत आह । स्त्रीरूपत्वादिति ॥ उक्तमेवेति । अनन्तरातीतभाष्य इत्यर्थः । उषा इत्येतत् साधयति ॥ वश कान्ताविति ॥ वसधातोः कसुन्प्रत्यये ककारलोपे ग्रहिज्यनेत्यादिना वकारस्य डकारे संप्रसारणे व्रश्चभ्रश्चसृजमृजयजराजभ्राजच्छशांष इत्यनेन शकारस्य षत्वे उषस् इति प्रातिपदिकसिद्धिः । पश्चात् स्वाद्युत्पत्तौ उषा इति रूपं भवतीति द्रष्टव्यम् । अत्र कित्वात् गुणाभावो द्रष्टव्यः । अन्यथा ओषेति स्यात् । सुरूपे इति रूपनामसु पाठादिति भावः । पेशो जरायुरुद्दिष्टः सुवर्णः पेश उच्यते । मधुबिन्दुश्च पेशः स्यात् । क्वचिद्भेदमपीष्यत इति एकादशतात्पर्यं हृदि निधाय सुभद्र इति भाष्यं प्रवृत्तमित्याह । सुभद्र इति । सम्पदादित्वात् क्विबिति । आङ्पूर्वकात् सदधातोः सम्पदादिगणस्थत्वात् सम्पदादिभ्यश्चेति सूत्रेण क्विपि तस्य लोपे आसदिति रूपम् । तस्य चतुर्थी आसद इतीति द्रष्टव्यम् ॥ ७ ॥

तासु जिह्वा उपह्वये । सूचयतीति । न केवलं नक्तोषासां उपह्वये । किन्तु होतारौ देवगावपी-त्यपिपदेनोपह्वय इत्यनेनान्वयः सूच्यत इत्यर्थः । होतारौ होतृसंस्थौ यज्ञं यज्ञभागौ ॥ ८ ॥

इलासरस्वतीमही । व्याख्यास्यमानत्वादिति । द्वितीयाध्याये कोनोमह्यामदीतये पुनर्दा इत्येतद्व्याख्यानावसर इत्यर्थः । कर्मणीति । रीङ्धातोः ईड्यत इति कर्मार्थे अकारप्रत्यय उकारस्थाकारलोपे धातोरीकारस्य ह्रस्वे ऋक्षु डस्य लः प्रायेणेति डस्य लत्वे ततः स्त्रियां टापि इलेति रूपम् । तत्कथमिति । मह्याः स्त्रीरूपत्वं कथमित्यर्थः । भूरूपस्येति । श्रीभूदुर्गेतिभेदेन महालक्ष्मीः त्रिरूपिणी इति वचनादिति भावः । भारतीचेति । नकेवलं भूरूपा श्रीः मही । किन्तु भारतीचेत्यर्थः । तुशब्दो अवधारणार्थ इत्याशयेनाह । इलेति । भारतीतु भारत्येव मही नेला ।

पूर्वोक्तभूरूपा श्रीरित्येवं श्रीरूपेलाव्यावृत्यर्थस्तुशब्द इत्यर्थः । ब्रह्माण्यां ब्रह्मणः पत्न्यां सरस्वत्यां प्रसिद्धत्वादिति । भारती सरस्वती साधयन्ती विश्वमूर्तिर्ब्रह्माणीति सरस्वतीनामसु पाठादिति भावः । इलामहिम्भ्याम् । श्रीवायुपत्नीभ्याम् । बहुवचनम् । तिस्रो देवीरिति बहुवचनम् । सुखाश्रयभूता इति । मयःशब्दस्य सुखनामसु पाठादिति भावः । इह त्वष्टारमग्रियम् । त्विषधातोरिति । त्विषदीप्ताविति धातोरित्यर्थः । बलमिति । धातूनामनेकार्थत्वादिति भावः ॥ ९ ॥

त्वष्ट्रितिरूपं साधयति । त्विषेरिति । त्विषेर्धातोः देवतायां वाच्यायां उपधायाः अकारः स्यादिति उणादिसूत्रादित्यर्थः । अनिट्त्वंचेति । नत्पृनेष्ट्रत्वष्ट्र इति सूत्रेणानिट्त्वं च निपातितमिति भावः । तृन्प्रत्ययश्च सूत्रान्तरेण ज्ञातव्यम् । एवं च त्विष् अस्मात् तृन् प्रत्यये नकारलोपे इकाररूप उपधायाः अकारे त्वेष् इति जाते ष्टुना ष्टुरिति ष्टुत्वे त्वष्ट्रिति रूपम् ।

अनिट्त्वं च विवक्षितम् । अन्यथा सेट् धातुत्वे इडागमप्राप्तौ त्वीष्ट्रि इति रूपापत्तेरिति ध्येयम् । त्विषेर्देवतायाः मकारश्चोपधायां अनिटंचेति समग्रं तत्र चशब्दात् तृन् इत्यर्थ इत्यप्याहुः । केवलशब्दोऽवधारणार्थः । पालयितेति च शेष इत्यभिप्रेत्याह । अस्माकमेवेति ॥ १० ॥

अवसृजावनस्पते । वनतेरिति । वनषणसम्भक्ताविति धातोः कर्मण्यसुन् प्रत्यये वनस इति प्रातिपदिकं वनभार इति वनधातोः अकारप्रत्यये वनेति रूपम् । तर्हि वनपतेरिति समासः स्यात् । न तु वनस्पत इति । तत्राह । पारस्करपृभृतित्वादिति । पारस्करादिगणस्थत्वादिति भावः । पारस्करप्रभृतिभ्यश्चेति सूत्रेणेति भावः । तेनेति । समासकाल एव सुट् यतोतो वनानां पतिरिति विग्रहो युक्त इत्यर्थः । देवेभ्य इति सम्प्रदाने चतुर्थीदर्शनादिति भावः । तेन देवेभ्यो हविर्दानेनार्चतीत्यत्र ईकारो अनुबन्धार्थः । चित् इत्येव धातुः भावे ल्युडिति चिद्धातोः भावे ल्युटि यकारस्य युवोरनाकाविति अनादेशे इकारस्य एकाररूपे गुणे चेतनेति रूपम् ॥ ११ ॥

स्वाहा यज्ञं कृणोतन । ओहाङिति । हूइत्येवधातुः । अन्यत्सर्वम् अनुबन्धार्थः । एवमुत्रत्रापि तथाच स्वशब्देन कर्मण्युपपदे आङ्पूर्वकात् हु इत्यस्मात् कर्तर्यकारप्रत्यये ततः स्त्रीत्वविवक्षायां टापि सवर्णदीर्घे स्वाहा इति रूपम् । कर्मणीति सु आङ्पूर्वकात् ओहाकृत्यागे अस्मात् कर्मणि अकारप्रत्यये सु आ इत्यत्र यणादेशे स्त्रीत्वविवक्षायां टापि स्वाहेति रूपम् । हरतेरिति । तथाच स्वाङ्पूर्वकात् हृञ्हरणे अस्मात् कर्मणि डप्रत्यये डित्वात् टीभूतस्य ऋञ् इत्यस्य लोपे प्रत्ययाकार सम्बद्धे सु आ इत्यत्र यणादेशे स्त्रीत्वविवक्षायां टापि स्वाहेतिरूपम् । भाष्ये अमोष इत्यस्य मुषस्तेय इति धातोःअस्तेय इति अर्थः । उत्तमप्रयाजा स यज्ञेति । इडो यजति बर्हिर्यजति तनूनपातं

यजति स्वाहाकारं यजति समिधो (स्वधाकारं यजति) इति पञ्चप्रयाजाः सन्ति। तत्रान्तिम-प्रयाजाख्ये यज्ञे स्वाहायज्ञमाणहविरादिभिः इज्या देवता तत्र चेन्द्रसम्बन्धाभावात् इन्द्रं प्रति यज्ञभागप्रापकत्वोक्तिरयुक्तेत्यर्थः। अस्मिन् मत इति वचनेन स्वाहागायत्रं वेपसे हव्यमिन्द्राय कर्तन स्वाहाकृतं वृषभवक्षि हव्यं इत्याद्युत्तमप्रयाजमन्त्रेषु स्वाहायाः स्पष्टं इन्द्रं प्रति यज्ञभागप्रापकत्वोक्तेः तद्विरोध इति सूचयति। इन्द्रस्य सम्बन्धिन इति। वस्तुगत्या यज्वनो यजमानस्य इन्द्रं प्रति यज्ञकर्तृत्वेन इन्द्रसम्बन्धित्वादित्यर्थः ॥ १२ ॥ २५ ॥ १३ ॥

## पदार्थदीपिका

॥ अञ्जतेः क्त इति ॥ अज्यते इति अक्त इति अञ्जतेः कर्मणि क्तप्रत्यये अनुनासिकस्य क्विझलोरिति अनुनासिकलोपे चोः कुरिति कुत्वे चर्त्वे सति अक्त इति सिध्यतीति भावः। ननु नञ् समासत्वात् न लोपो नञ इति नलोपे तस्मान्नुडचीति नुटि अनक्त इति स्यात् अक्तेति कथमित्यतो नसमासत्वान्न दोष इत्याह ॥ न समास इति ॥ नञ् समासेति पाठे नक्तं दिवेति निपातनात् नलोपाभावादिकमिति द्रष्टव्यम्। ननु तथापि न अक्ता नाक्तेति स्यात् नक्तेति तु कथमित्यत आह ॥ शकन्ध्वादित्वादिति ॥ कसुनिति ॥ तथा च वष्टेः कसुनि कित्वात् ग्रहिज्येत्यादिना सम्प्रसरणे परपूर्वत्वे व्रश्चेत्यादिना षत्वे च विवक्षितरूपसिद्धिरिति द्रष्टव्यम् ॥ सुपेशसावित्यादि ॥ यद्यपि पेशो जरायुरुदिष्टः सुवर्णं पेश उच्यते। मृदुपिण्डस्य पेशः स्यात् क्वचित् भद्रमपीष्यते' इत्यभिधानात् साक्षादेव पेशशब्दो भद्रवाचकः। तथापि पिष्टपेशः कृशानमिति रूपनामसु पाठात् प्रकारान्तरशिक्षणार्थमेवैवमुक्तमित्याहुः ॥ नक्तोषसाविति ॥ अन्येषामपि दृश्यत इति संहितायां दीर्घः। सम्पदादित्वात् आङ्पूर्वात् सदेर्भावे क्विप्। प्रादिसमास इति भावः ॥ ७ ॥

॥ सूचयतीति ॥ न केवलं पूर्वमन्त्रोक्ते नक्तोषसा उपह्वये किन्तु होतारौ देवगौ अपीत्येवमपि पदेन उपह्वये इत्यनेनान्वयः सूच्यत इत्यर्थः इति केचित्। न केवलं यज्वनामित्यनेन सम्बन्धः किन्तु उपह्वये इत्यनेनापि स इति भावः इत्यन्ये। वस्तुतस्तु होतारौ देवगावपीति भाष्ये अपि पदं उपह्वय इत्यनेनान्वयसूचकं ततश्च होतारौ देवगौ उपह्वय इति भाष्यार्थ इति योज्यम् ॥ सुजिह्वाविति ॥ संहितायां अवादेशः। वस्य लोपः शाकल्यस्येति लोपः ॥ देव सम्बन्धिनाविति ॥ देवाद्यञञाविति देवानामिमावित्यर्थे यञ्। ञित्वादादिवृद्धिः। यस्येति चेत्यकारलोपः। यक्षतामिति। लोटि शपि परतः सिप् बहुलं लेटीति बहुलग्रहणात् शपि परतः सिप्। व्रश्चादिना

षत्वम् । षढोः कःसि इति कुत्वम् । आदेशप्रत्यययोः इति सिप् प्रत्ययसकारस्य षत्वं कषयोगे क्षत्वमिति भावः ॥ ८ ॥

ननु इलाशब्दवत् सरस्वतीमहीशब्दयोरपि भगवद्विषयत्वज्ञापनायावश्यं वक्तव्यत्वात् विशेषशब्दद्वयमव्याख्यायेलाशब्दस्यैव तद्विषयतया व्याख्याने को हेतुरित्यत आह ॥ सरस्वती शब्दस्येति ॥ प्रागिति ॥ पावकानः सरस्वती इत्येतदृक्व्याख्यानावसर इत्यर्थः । ॥ व्याख्यास्यमानत्वादिति ॥ कस्य नूनमिति मन्त्रव्याख्यानावसर इति भावः ॥ कर्मण्यकार इति ॥ ईड्यत इति कर्मण्यकारप्रत्ययः । ततः स्त्रियां टाबिति भावः । ह्रस्वता चेति । छान्दसं धातोः ह्रस्वमित्यर्थः । श्रीरेवेति । अतो वक्ष्यमाणरीत्या महीशब्देन भारती विवक्षायामपि श्रुत्युक्तं देवी त्रित्वमुपपन्नमिति भावः । यद्यप्यत्र भूभारत्योः महीशब्दार्थत्वेनैक्यं विवक्षित्वा त्रित्वमुपपादयितुं शक्यम् । अत एव वक्ष्यति इलासरस्वतीमहीत्येता इति । तथापि होत्राविष्टा भारती इलासरस्वती मही भारती पवमानस्य सरस्वतीळामहीत्यादौ भारत्याः पृथगुक्त्या महीशब्देन भुव एवादौ विवक्षणीयतया शब्दैक्येन त्रित्वस्योपपादयितुमशक्यत्वात् इळामह्योः स्वरूपैक्यविवक्षया त्रित्वमुपपादनीयमिति ज्ञापयितुं इयमुक्तिः । यद्यपि च भारतीळासरस्वती साधयन्ति धियं न इलादेवीभारती विश्वमूर्तिरित्यादौ महीशब्दो नास्ति तथापि तत्र भारतीपदेनैव भरतशब्दवाच्यवायुसम्बन्धात् भूरपि विवक्षितैवेत्यवधेयम् । श्रियोऽपि श्रीरूपेणैव महीशब्दवाच्यत्वं न युक्तम् । तथात्वे इळासरस्वतीभ्यामन्येत्यस्यासामञ्जस्यप्रसङ्गात् इत्यभिप्रायेण पृच्छति ॥ तत्कथमिति ॥ इळाव्यावृत्यर्थो वेति ॥ श्रीर्यथा भूरूपेण महीशब्दवाच्यापि इळाशब्दवाच्या तथा भारत्यपि किमित्याशङ्कानिवृत्यर्थ इत्यर्थः । ननु सूक्तहतिर्मात्र विवक्षायामेव तद्धितप्रत्यय विधानात् न भारत्या वायव्यत्वमित्यतस्तद्धिता इति बहुवचनबलादेव भार्यार्थत्वेऽपि यत् प्रत्ययसिद्धेरदोष इत्याह ॥ वायुभार्येति ॥ मयोभुव इति ॥ भवत्यासु इति भुवः आश्रयाः । भवतेः क्विप् । मयसो भुवो मयोभुवः । मीङ् हिंसायां हिनस्ति दुःखमिति सुखं मयः इत्युच्यते । तेन सुखाश्रयत्वलाभ इति द्रष्टव्यम् । मयः सुखमिति सुखनामसु मयःशब्दस्य पाठात् मयः शब्दः तदर्थ इत्यप्याहुः । अस्रिध इत्यत्र हिंसार्थात् स्रिधेः सम्पदादित्वात् भावे क्विपि नञा बहुव्रीहिरित्याशयेन आह ॥ अविनाश इति ॥ तिस्र इति ॥ त्रिशब्दाज्जसि त्रिचतुरो स्त्रियां तिसृचतस्रिति तिस्रादेशः । अचि र ऋत इति रेफादेश इति ज्ञेयम् । देवीः देव्यः । देवानां पत्न्यो देव्यः । पुंयोगादाख्यायामिति ङीप् । यस्येति चेत्यकारलोपः । जसि दीर्घाज्जसिचेति निषिद्धस्य दीर्घस्य वा छन्दसीति पक्षेऽप्यनुज्ञानात् दीर्घत्वमिति भावः ॥ ९ ॥

॥ बलमपीति ॥ अत एवैतद्धातुनिष्पन्नस्तवीषीशब्दो नृणां तविषां शुष्यमिति बलनामसु पठित इति भावः । इति तृनिति । यद्यपि तृन् इति तृन् विहितस्तथापि अताच्छील्यार्थमुपसंख्यानारम्भः । अत्र ताच्छील्ये तृनिति वक्तव्ये तृन्मात्रग्रहणम् एकाच उपदेशेऽनुदात्तादित्यनित्यत्वं सिद्धमेवेति नत्वरेनिद्धगुणमुपसंख्येयमिति युक्तिसूचनार्थम् । उपधाया अकारस्तु संख्यानादेवेति द्रष्टव्यम् ॥ अग्रियमिति ॥ अग्रादित्यनुवृत्तौ यच् । आयनेयीयेत्यादिना यकारस्य इयादेशः । यस्येति च इत्यकारः लोपः इति भावः ॥ १० ॥

॥ अकार इति ॥ कर्मणीत्यनुवर्तते । प्रत्यय इति शेषः ॥ देहीति ॥ देवेभ्यः इति सम्प्रदानम् । चतुर्थी दर्शनादिति भावः ॥ ल्युडिति ॥ तस्यानादेशः । लघूपधगुण इति भावः ॥ ११ ॥

॥ अकारप्रत्यय इति ॥ किञ्चेति शेषः । तेनातो लोप इटि चेत्यालोप इति भावः ॥ कर्मणीदं रूपमिति ॥ घञर्थे कविधानात् क इति भावः ॥ कर्मणि ड इति ॥ डित्वात् टिलोप इति भावः । ॥ यज्वन इति ॥ यज देवपूजासङ्गतिकरणदानेषु । सुयजोङ्वनिप् इति ङ्वनिप् । भसंज्ञायामलोपे प्राप्ते न संयोगाद्वमन्तात् इति निषेध इति भावः ॥ गृह इति ॥ ग्रह उपादाने अस्मात् कप्रत्यये ग्रहिज्येत्यादिना सम्प्रसारणमिति भावः ॥ कृणोतनेति ॥ कृवि हिंसाकरणयोश्चेत्यादि । इदित्वान्नुमि लोण्मध्यमपुरुषबहुवचनस्य तस्थस्थमिपामिति तादेशे तप्तनप्तनथनाश्चेति तनादेशे शपोपवादत्वेन धिन्विकृण्व्योरचेत्यप्रत्यये तत्सन्नियोगेन वकारस्य चाकारे तस्यातो लोपेति लोपे तस्याचः परस्मिन् पूर्वविधाविति स्थानिवद्भावात् अकारस्य लघूपधलक्षणगुणभावे तनपः पित्वेनाङित्वात् उकारस्य तु गुणे च सति कृणोतनेति रूपं निष्पद्यते । न तु प्रथमपुरुषैकवचनस्य तत्कथमेतदिति चेन्न, तथा सति हे ऋत्विज इत्यध्याहारप्रसङ्गात् तेषामेव कर्तव्यत्वापत्या स्वाहा गायत्रवेपस हमिन्द्रायकर्तनेत्यादिषूत्तमप्रयाजमन्त्रेषु प्रायेण श्रुतस्य स्वाहाकर्तृत्वस्य भङ्गप्रसङ्गाच्च सर्वे विधयः छन्दसि विकल्प्यन्ते इत्युक्तेः प्रथमपुरुषैकवचनस्य तनादेशे कृणोतनेति सिध्यतीति भावेन पुरुषव्यत्ययेन करोत्विति व्याख्यानमिति भावः ॥ इत्यस्मिन्मत इति ॥ उदाहृतमन्त्रेषु वाय्वादीनां विश्वेषामेव देवानां उत्तमप्रयाजसम्बन्धश्रवणात् । तदाहुः का देवता स्वाहाकृतय इति । विश्वेदेवा इति ब्रूयादिति ब्राह्मणवचनाच्च सर्वदैवसम्बन्धस्य विद्यमानत्वात् मत इत्युक्तमित्यवधेम् ॥ १२, २४, १३ ॥

## टीकाविवृतिः

नक्तोषासा ॥ अत्रोषासानक्तादेवता ॥ रात्रिदेवतेति ॥ रात्रिनामसु पाठाद्रात्र्यभिमानिनीदेवता दुर्गेत्यर्थः ॥ अपररात्रिकृदिति ॥ उषाबाणसुताराज्योरिति विश्वोक्तेराकारान्तोषाशब्दस्यानिरुद्ध

भार्यावाचकत्वात्सकारांतोषश्शब्दस्याश्विभार्यावाचकत्वादश्विनोर्भार्येत्यर्थः । पापादिनेति ॥ आदिशब्दाद्भयदुःखादि ग्राह्यम् । नसङ्गत इति ॥ अंजूव्यक्तिम्लक्षणकान्तिगतिषु इत्यत्र म्लक्ष्ण शब्देन सम्बन्धोक्तेरिति भावः ॥ अस्मात् क्तप्रत्ययेऽनिदितामिति नलोपे निष्पन्नस्याक्तेति रूपस्य नञ्समासे नञो नलोपे तस्मान्नुडचीति नुडागमे अनक्तेति भाव्यमित्यत आह ॥ न समास इति ॥ ञ नुबन्धनशब्देन समासे हि नलोपः नंक्तेति नायं नञ्समासः किन्तु अमानोनाः प्रतिषेध इति सूत्रपठित नशब्देन समासः अतो नलोपो नेत्याशयः । तर्हि न अक्तेत्यत्र सवर्णदीर्घे नाक्तेति स्यादित्यत आह ॥ शकंध्वादित्वादिति ॥ शकंध्वादेराकृतिगणत्वादित्याशयः । नञ्समास इति पाठे नक्तं दिवेति निपातनान्नलोपाभावादि ज्ञेयमित्याहुः ॥ वशकान्ताविति ॥ कान्तिः प्रकाशोऽत्रगृह्यते ॥ क्वचित्कान्तिरितीच्छापि गृहीतावृत्तिकृद्भिः । कसुन्निति ॥ कित्वाद्ग्रहिज्येति सम्प्रसारणमिति भावः । सुपेशसौ सुरूपे इति ॥ पेशः कृशनमिति रूपनामसु पाठात् । सुभद्रे इति तु तात्पर्यार्थ इति भावः ॥ अन्येषामपि दृश्यत इति संहितायां दीर्घ इति भावेनाह ॥ नक्तोषसाविति ॥ आङ्पूर्वसदेः कर्तरिक्विपि संस्थित्यर्थत्वानुपपत्तेर्भावार्थत्वसम्पादनायाह ॥ सम्पदादित्वादिति ॥ ७ ॥

तासुजिह्वा । अत्र प्रचेतसनामकौ दैव्यौ होतारौ देवते ॥ अपिपदेनेति ॥ होताराविंत्यस्येति शेषः । न केवलं पूर्वमन्त्रोक्तौ नक्तोषसावुपह्वये किं तु होतारौ देवगावपीत्येवमन्वयसूचनार्थोऽपि शब्द इत्यर्थः । देवशब्दाद्देवाद्यञञाविति प्राग्दीव्यतीयार्थे विधानाद्यञ्प्रत्ययः सम्बन्धार्थ इति भावेनाह ॥ देवसम्बन्धिनाविति ॥ देवगौ देवान्प्रति गच्छन्ताविति भाष्यं तात्पर्यार्थकथनपरमिति भावः ॥ यक्षतामिति ॥ यजेर्लोटि शपि सिब्बहुलं लेटीत्युक्तोपि सिप् बहुलग्रहणाल्लोटचपि परतो जातः षत्वकत्वे सिपः षत्वं चेति भावः । आधिक्येऽधिकमिति सूत्रादधिकस्य सिपोऽर्थः सदेति ॥ ८ ॥

इळासरस्वती ॥ सरस्वतीळाभारत्यस्तिस्रो देव्योऽत्रदेवताः । सरस्वतीमहीशब्दौ विहायेळाशब्द मात्रव्याख्याने निमित्तमाह ॥ सरस्वतीशब्दस्येति ॥ पावकानः सरस्वतीत्यत्रेति शेषः ॥ व्याख्यास्यमानत्वादिति ॥ कोनोमह्या अदितये पुनर्दादित्यस्य व्याख्यावसर इति भावः ॥ कर्मण्यकार इति ॥ औणादिक इति शेषः । ततःस्त्रीत्वे टाबिति भावः ॥ तत्कथमिति ॥ श्रियः इळात्ववन्महीत्वे श्रौतं देवीत्रित्वं अपरेति भाष्योक्तिश्चायुक्तेत्याशयः । श्रिय इळेतिरूपमेकं भूरूपं द्वितीयमिति रूपद्वयं सरस्वतीनैकेति त्रित्वोपपत्तिमभिप्रेत्याह ॥ भूरूपेति ॥ तुशब्दइति ॥ तु पादपूरणेभेदे समुच्चायेऽवधारण इति विश्वोक्तेरिति भावः । भेदार्थत्वाश्रयेणाह ॥ इळाव्यावृत्त्यर्थो

वेति ।। तथाचेळा लक्ष्मी:सरस्वतीच मही भारतीति तिस्र इत्यर्थ उक्तोभवति । वायव्येतिभाष्ये
वायुर्देवतास्तुत्योऽस्याः भारत्या इति विवक्षायां वायुशब्दात् वाय्वृतुपित्रुषसोयदिति देवताधिकारे
विहितयत्प्रत्ययो वायव्यो मन्त्र इतिवद्बोध्य इति भावेन तात्पर्यमाह ।। वायुभार्येति ।। सरस्वतीत्यर्थ
इति ।। श्रुतौ सरस्वतीशब्देनोक्तेत्यर्थः ।। सुखाश्रयभूता इति ।। मयः सुग्ममितिसुखनामसु
पाठात् । मयः प्रधानमुद्दिष्टं स्वरूपं कार्यमेवचेत्यभिधानाद्वा सुखस्य सर्वत:प्राधान्यान्मयस्
सुखस्य भुवो भूमिभूता आश्रयभूता इति यावत् । पूर्वपदस्य सकारागम इति भावः ।
स्रिधेर्हिंसार्थात्क्विपि नञ्समास इति भावेनाह ।। अस्रिधोऽविनाशा इति ।। ९ ।।

इहत्वष्टारम् ।। अत्र त्वष्टा देवता ।। बलमपि वाच्यमिति ।। धातूनामनेकार्थत्वाश्रयणादिति
भावः । अत एवारुच्याह ।। यद्वेति ।। त्विषेर्देवतायामिति ।। इदं वार्तिकमुपधाया अकारादेशार्थं
तच्छीलाद्यविवक्षायां तृन्विधानार्थं च । अनुदात्तत्वादनिट्त्वस्य सिद्धत्वादनिट्त्वमित्यनुवादः ।
अग्रे भवमिति ।। घच्छौचेत्यग्रशब्दाद्घप्रत्यय इति भावः । अवयवार्थमुक्त्वाभिधानिकमर्थमाह ।
प्रधानमिति ।। प्राग्प्राग्प्राग्रीयमित्यमरोक्तेरिति भावः ।। १० ।।

अवसृज ।। अत्र वनस्पतिर्देवता । भाष्ये वनस्पतिशब्दस्य विशेषानुक्तेस्तद्वदन् ज्ञानं
चेतनमिति भाष्येऽश्रौतज्ञानपदार्थ:कथ्यत इति भ्रान्तिं वारयितुं संगतिमाह ।। वनस्पतिशब्दमिति
।। अवसृज देहीति ।। सृजविसर्ग इति धातोर्विसर्गस्य त्यागरूपत्वाद्दानस्यापि तथात्वादिति
भावः ।। ११ ।।

स्वाहायज्ञम् ।।। अस्यामृचि स्वाहाकृतयो देवताः ।। अकारः प्रत्यय इति ।। अनेनातोनुपसर्गेक
इत्युक्त:कप्रत्ययो विवक्षितः । तेन आतोलोप इटिचेत्याकारलोप इति भावः ।। कर्मणीदमिति ।
घञर्थेकविधानमिति कर्मादौ कप्रत्ययविधानादिति भावः । यज्वन इति ।। यजे:सुयजोर्ङ्वनिबिति
ङ्वनिप्प्रत्ययः ।। कृणोतन करोत्विति ।। कृञो व्यत्ययेन श्नुप्रत्यये लोडात्मनेपदप्रथमपुरुषतशब्दस्य
तप्तनप्तनथनाश्चेतितनबादेशे अस्य पित्वाच्छ्नोर्गुणः । यद्यपि वृत्तिकारैर्मध्यमपुरुषतशब्दस्य
तबाद्यादेशा इति व्याख्यातं तथापि तस्य तादित्यत्र तस्येति सामान्योक्त्योभयग्रहण
संभवात्प्रथमपुरुषतशब्दस्यापि एते आदेशा इति व्याख्यातुं शक्यत्वात् । कृवि हिंसाकरण्योरिति
धातोरिदं रूपमित्यंगीकारे मध्यमपुरुष तशब्दादेशाङ्गीकारे च हे ऋत्विज इत्यध्याहार
स्वाहाकृतयो देवतेत्यनुक्रमणिकाविरोधश्च स्यादिति भावः ।। उत्तमप्रयाजाख्य इति
स्वाहागायत्रवेपसे स्वाहाकृतीषुरोचते इत्यादिषूत्तमप्र्याजमन्त्रेष्विन्द्रसंबन्धादर्शनादिति भावः । क

देवताःस्वाहाकृतय इति विश्वेदेवा इतिब्रूयादिति ब्राह्मणेवाय्वादिसर्वदेवसंबन्धोक्तेर्मत इत्युक्तम् । अत्रोत्तमशब्दोंऽत्यवचनः । समिधादिपञ्चप्रयाजेषु स्वाहाकाराख्यप्रयाजस्यान्तिमत्वात् ॥ १२,२५,१३ ॥

## ऋक्संहिता पदपाठसहिता

(१३५) ऐभिरग्नेदुवोगिरोविश्वेभिः सोमपीतये ॥ देवेभिर्याहियक्षिच ॥ १ ॥

(प०) आ । एभिः । अग्ने । दुवः । गिरः । विश्वेभिः । सोमऽपीतये ॥ देवेभिः । याहि । यक्षि । च ॥ १ ॥

(१३६) आत्वाकण्वांअहूषतगृणन्तिविप्रतेधियः ॥ देवेभिरग्नआगहि ॥ २ ॥

(प०) आ । त्वा । कण्वाः । अहूषत । गृणन्ति । विप्र । ते । धियः ॥ देवेभिः । अग्ने । आ । गहि ॥ २ ॥

(१३७) इन्द्रवायूबृहस्पतिंमित्राग्निंपूषणंभगम् ॥ आदित्यान्मारुतंगणम् ॥ ३ ॥

(प०) इन्द्रवायूइति । बृहस्पतिम् । मित्रा । अग्निम् । पूषणम् । भगम् ॥ आदित्यान् । मारुतम् । गणम् ॥ ३ ॥

(१३८) प्रवोभ्रियन्तइंदवोमत्सरामादयिष्णवः ॥ द्रप्सामध्वश्चमूषदः ॥ ४ ॥

(प०) प्र । वः । भ्रियन्ते । इंदवः । मत्सराः । मादयिष्णवः ॥ द्रप्साः । मध्वः । चमूऽसदः ॥ ४ ॥

(१३९) ईळतेत्वामवस्यवःकण्वासोवृक्तबर्हिषः ॥ हविष्मन्तोअरंकृतः ॥ ५ ॥

(प०) ईळते । त्वाम् । अवस्यवः । कण्वासः । वृक्तऽबर्हिषः ॥ हविष्मन्तः । अरम्ऽकृतः । ५ ॥

(१४०) घृतपृष्ठामनोयुजोयेत्वावहन्तिवह्नयः ॥ आदेवान्त्सोमपीतये ॥ ६, २६ ॥

(प०) घृतऽपृष्ठाः । मनःऽयुजः । ये । त्वा । वहन्ति । वह्नयः ॥ आ । देवान् । सोमऽपीतये ॥ ६, २६ ॥

## ऋग्भाष्यम्

कामदोहा दुवःस्मृताः ॥ १ ॥ ॥ २ ॥
बृहन्पतिर्बृहत्या वा वाच एव बृहस्पतिः ।
मित्रेति मित्रावरुणौ पूषानाम सपोषणात् ।
पूर्णत्वाद्वा भगः प्रोक्तः पूर्णैश्वर्यादिकत्वतः ।
आदिस्थत्वात्स आदित्य आददानः प्रयाति वा ।
बहुरूपत्वतश्चैव मानोक्तत्वात्तु मारुतः ॥ ३ ॥
मत्सरा मदकारित्वात्ताच्छील्यादुत्तरं पदम् ।
द्रप्सास्ते द्रवणाच्चैव चमसस्थाश्चमूषदः ।
शिरश्च चमसं प्रोक्तमिष्टदानात्तथेन्दवः ॥ ४ ॥
अवस्युर्यजमानः स्यादवनार्थप्रवृत्तितः ।
आत्मस्थं वा बहुवचो बहवो मुनयोऽत्र वा ।
उत्तराणां वचस्त्वेन स्वयं वदति चेश्वरः ।
अरङ्कृतोतिकर्तारस्त्वलङ्कर्तार एव वा ॥ ५ ॥
स्निग्धपृष्ठास्समारूढा हरिणा वा विदोषिणा ।
मनोमात्रेण योज्या श्चत्वां देवांश्च वहन्ति ये ॥ ६, २६ ॥

## ऋग्भाष्यटीका

ऐभिरग्ने । द्वादशर्चमिदं वैश्वदेवसूक्तम् । दुव इति व्याख्याति ॥ कामेति ॥ दुहप्रपूरणे अस्मादुप्रत्ययो डिच्च । कामस्य योग्यतया सम्बन्धः । हे अग्ने दुहन्तीति दुवः कामदोहा अस्मदीयाःस्तुतिरूपा गिरः प्रति सोमपीतये चैभिः प्रसिद्धैः विश्वैर्देवैः सह आयाहि । आगत्य यक्षि च ॥ १ ॥

आत्वा । हे विप्र मेधाविन्नग्ने कण्वा वयमिति यावत् । त्वामाहूषत आहूतवन्तः । किञ्च ते तव धियो बुद्धीर्गृणंति स्तुवन्ति अतिशयेन बुद्धिमानसीत्यादि । स त्वं देवैः सहागहि आगच्छ ॥ २ ॥

इन्द्रवायू ॥ प्रागव्याख्यातत्वाद्बृहस्पत्यादिशब्दान् भगवति व्याख्याति ॥ बृहन्निति ॥ बृहन्पतिरित्येकं व्याख्यानम् । बृहत्याः पतिर्वेति द्वितीयम् । बृहत्या इत्यनुवादेन वाच इति व्याख्यानम् । तथाच श्रुतिः एष उ एव बृहस्पतिर्वाग्घिबृहती तस्या एष पतिस्तेनेति । एवशब्दो

विष्णुरेवेति सम्बध्यते। तथाचोक्तं तद्बृहतोः करपत्योश्चोरदेवतयोः सुट्तलोपश्चेति। एकस्मिन्मित्रेमित्रेति द्विवचनं कथमित्यत आह ॥ मित्रेति ॥ साहचर्यात् द्वयोरेकं नाम दस्रेति यथा। पुषपुष्टावित्यस्मात्कनूप्रत्यय उपधादीर्घत्वं च । धातोश्च ण्यर्थान्तर्भावानन्तर्भावाभ्यां पोषणात्पूर्णत्वाद्वा पूषेति व्याख्यानद्वयम्। भगःप्रोक्त इत्यैश्वर्यस्य समग्रस्येत्यादिवचनात्। अव्ययात्त्यबित्यत्र त्यबिति योगविभागेनादिस्थत्वादादित्यः। आददानः पृथिवीरसंगृह्णानः आङ्पूर्वाद्दाञ इतङ्प्रत्ययः। यातेश्चाकारः। आदिश्चासौ यश्चेत्यादित्यः। तथाच श्रुतिः एतेहीदं सर्वमाददाना यन्तीति। बहुरूपत्वतश्चशब्दात् द्विरूपत्वतश्चादित्यानित्यादि युक्तम्। मा मानं वेदः तेन रुतः शब्दितो मारुत इत्यर्थः। रुशब्दे मरुच्छब्दे तु पूर्वपदह्रस्वतोत्तरपदाकारलोपश्च वक्तव्यः। इन्द्रवायू इत्यादीनामाहूषतेति पूर्वेण सम्बन्धः ॥ ३ ॥

प्रवः। मत्सरादिसोमविशेषणानि व्याख्याति। मत्सरा इति ॥ मत् मदं सरन्ति सारयन्ति गमयन्तीति मत्सरा इत्यर्थः। तर्हि मादयिष्णव इति पुनरुक्तिरित्यत आह ॥ ताच्छील्यादिति ॥ मदकारित्वशीलत्वमधिकं वक्तुं मादयिष्णव इत्युत्तरं पदमुक्तम्। णेःछन्दसीति स्मरणात्। द्रवणात् द्रप्सा इत्यनेन द्रुगतावित्यस्येदं रूपमिति दर्शितम् । एवशब्देन द्रप्सा रसवन्त इति व्याख्यानमपाकरोति ॥ चमूशब्दश्चमसस्य वाचकः तत्र सीदन्तीति चमूषद इत्यर्थः। हे देवाः मत्सरा मादयिष्णवो द्रप्सा मध्वो मधवः स्वादवश्चमूषद इदं वः सोमा वोर्थे प्रभ्रियन्ते सम्पाद्यन्ते तान्पिबतेत्याशयः। मत्सरादिशब्दानामध्यात्मं मनोवृत्तिषु सुघटत्वाच्चमसस्थानत्वं घटयति ॥ शिरश्चेति ॥ इदं तच्छिर इति हि श्रुतिः। मनश्च शिरसि तिष्ठति। ता एताः शीर्षन्निति श्रुतेः। इन्दुशब्दं सोमेषु मनोवृत्तिषु च व्याख्याति ॥ इष्टेति ॥ इकारः कामवाची इं कामं काम्यं ददतीतीन्दवः। अध्यात्मं प्रभ्रियंत इत्यस्य समाधीयन्त इत्यर्थः ॥ ४ ॥

ईळतेत्वाम्। अत्रावस्युपदं व्याख्याति ॥ अवस्युरिति ॥ प्रवृत्तिरत्रेच्छा। अवः अवनमात्मन इच्छतीत्यवस्युरित्यर्थः । क्याच्छन्दसीति स्मरणात् । ननु मेधातिथावेकस्मिन्यजमाने कथं बहुवचनमित्यत आह ॥ आत्मस्थमिति ॥ अस्मदो द्वयोश्चेति वचनादिति भावः । बहवो मुनयोऽत्रवा । तेनापि बहुवचनं युक्तम् । वाशब्दावितरेतरसमुच्चये । तेच बहवः कण्वासः कण्वप्रभृतय एव विवक्षिताः। नन्वस्य वाक्यस्य विष्णवादयोऽप्यृषयो भवन्ति तत्कथं कण्वा वयमित्याद्युपपद्यत इत्यत आह ॥ उत्तराणामिति ॥ उच्छब्दात्तरबयं नत्वखण्डंप्रातिपदिकम्। तेन सर्वनामसंज्ञाभावादुत्तराणामिति युक्तम् । उत्तराणामूर्ध्वतराणां मेधातिथ्यादीनामित्यर्थः ।

चशब्दाद् ब्रह्मादयश्च । तस्यां तस्यामवस्थायामित्युक्तस्योदाहरणप्रदर्शनार्थमिदमुक्तमित्यदोषः । अरंकृत इति व्याख्याति ॥ अरंकृत इति ॥ अतिकर्तारोतिशयेन कर्मणां कर्तारः । अलङ्कर्तारोदेवादीनां भूषयितार इति वाऽरंकृतः । लस्य रेफादेशः । हेदेव हविष्मन्तोऽवस्यवो वृक्तबर्हिषोऽरंकृतः कण्वासो वयमिति यावत् । त्वामीळते स्तुवन्ति ॥ ५ ॥

घृतपृष्ठाः ॥ स्निग्धपृष्ठाः । हे अग्ने ये घृतपृष्ठाः घृतमिव स्निग्धं पृष्ठं येषामिति । अथवा घृतः शुद्धो हरिः पृष्ठे येषां ते घृतपृष्ठाः । विदोषिणा हरिणा समारूढा इति यावत् । विशब्दो नञर्थे तस्मादिनिप्रत्ययस्यावैयर्थ्यम् । मनोयुजः सारथेर्मनोमात्रेण रथे योज्याः वाहकत्वाद्वह्नयोऽश्वाः सेमपीतये त्वां देवांश्च यज्ञं प्रत्यावहन्ति । यच्छब्दस्योत्तरत्र सम्बन्धः ॥ ६, २६ ॥

## मन्त्रार्थमञ्जरी

अथ 'ऐभिरग्ने' इति चतुर्दशं द्वादशर्चं वर्गद्वयात्मकं गायत्रीछन्दस्कं वैश्वदेवं सूक्तम् । (हे) अग्ने । दुवः, सर्वकामदोग्धारः, 'दुहप्रपूरणे' इत्यतो डुप्रत्ययः । गिरः, अस्मदियाः स्तुतिरूपा गिरः प्रति । सोमपीतये । एभिः, प्रसिद्धैः । विश्वेभिः, विश्वैः । देवेभिः, देवैः सह । आ याहि । आगत्य च यक्षि च, यज च ॥ १ ॥

(हे) विप्र, मेधाविन्, 'विप्रासो वा धियायवः' इत्युक्तेः । अग्ने । कण्वाः, कण्वसम्बन्धिनो वयमिति यावत् । त्वा, त्वाम् । आ अहूषत, आहूतवन्तः, 'ह्वेञ् शब्दे' 'लुङ्' । किं च– ते, तव धियः, बुद्धीः । गृणन्ति, स्तुवन्ति । त्वाम् 'अतिशयितबुद्धिमानसि' इत्यादिरूपेण स्तुवन्तीत्यर्थः । (स त्वम्) देवेभिः, देवैः सह । आ गहि, आगच्छ, 'इषुगमियमां छः' इति गमेः छादेशाभावेऽनुनासिकलोपे च रूपम् । भाष्यकृदव्याकृतेयमृक् ॥ २ ॥

इन्द्रवायू, भगवति कृतव्युत्पादनाविमौ शब्दौ 'वायवा याहि' 'इन्द्रवायू इमे' इत्यत्र । बृहँश्चासौ पतिश्चेति वा, बृहत्या वाचः पतिरिति वा, तं बृहस्पतिम्, 'तद्बृहतोः करपत्योश्चौरदैवतयोः सुट् तलोपश्च' इति तलोपसुडागमौ, तथा च कण्वश्रुतिः 'एष उ एव बृहस्पतिर्वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः' (३।३।२०) मित्रा, मित्रौ, मित्रसाहचर्याद्वरुणोऽपि मित्रपदेन गृह्यते, 'दस्रा' इत्येकनाम्नायथा द्वयोरुक्तिस्तद्वत्, 'मित्रं हुवे' इत्यत्र मित्रावरुणशब्दावपि निरुक्तौ । अग्निम् । पोषयति पूर्णत्वाद्वा पूषणम्, 'पुष पुष्टौ' इत्यतो ण्यर्थान्तर्भावानन्तर्भावाभ्यां क(नि)न्प्रत्यय उपधादीर्घत्वम् । भगम्, समग्रैश्वर्यादिरूपम् । आदिस्थत्वात्पृथिवीरसमाददाना यान्तीति हेतोर्वा आदित्यान्, रूपबहुत्वाद्बहुवचनम्, आद्येऽर्थे– 'अव्ययात्त्यप्' इत्यत्र

योगविभागादादिपदात्त्यप्, द्वितीये– आङ्पूर्वात् 'दाण् दाने' इत्यत इतङ्प्रत्यये टिलोपे 'आदित्' इति भवति, 'या प्रापणे' इत्यतोऽकारप्रत्यय आकारलोपे 'यः' इति रूपम्, 'आदिचासौ यश्चेत्यादित्यः' इति विग्रहः, (भत्वाज्जश्त्वाभावः) तथा च श्रुतिः 'एते हीदꣳ सर्वमाददाना यन्ति' (बृ० उ० ५।९।५) इति। माभिर्वेदप्रमाणै रुतं प्रतिपादितमिति मारुतम्, 'रु शब्दे' इत्यतः क्तप्रत्ययः। गणम्, समूहम्। (आ अहूषत) इत्यनुवृत्त्यान्वयः ॥ ३ ॥

(हे देवाः) मत्सराः, मदकारिणः, मत् = मदं सरन्ति, अन्तर्णीतणिच्, सारयन्ति गमयन्तीति व्युत्पत्तेर्मत्पूर्वात् 'सृ गतौ' इत्यतोऽकारप्रत्ययः। मादयिष्णवः, मदकरणशीलाः, ण्यन्तात् 'मदी हर्षे' इत्यतः 'णेश्छन्दसि' इति शीलार्थ इष्णुच्प्रत्ययः, मदकारित्वशीलत्वमधिकं वक्तुमिदं पदम्, अतो न (मत्सराः इति) पूर्वपदेन पुनरुक्तिरिति ज्ञेयम्। द्रप्साः, द्रवणरूपाः, 'द्रु गतौ' इत्यतः प्सप्रत्यय उकारस्याकारः। मध्वः, मधवः, यणादेशः, स्वादवः। चमूषदः, चम्वां चमसे सीदन्तीति तथा चमसस्थाः। इंदवः, सोमाः। वः, युष्मदर्थे। प्रभ्रियन्ते, सम्पाद्यन्ते, 'तान्पिबत' इत्याशयः। अध्यात्मं तु (हे तत्त्वदेवाः) मत्सराः, मदकारिणः। मादयिष्णवः, मदकरण शीलाः। द्रप्साः, चञ्चलाः। मध्वः, स्वादवः। चमूषदः, शिरोलक्षणचमसस्थिताः, 'ता एताः शीर्षञ्छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः' (ऐ०उ०२।१।४) इति श्रुतेर्मनसः शिरःस्थानकत्वात्, इदं तच्छिर एष ह्यर्वाग्बिलश्चमसः' (बृ०उ०४।२।३) इति श्रुत्या चमूशब्दितचमसस्य शिरोवाचित्वं ज्ञेयम्। इंदवः, इकारस्य कामवाचित्वादिं काममिष्टं ददतीतीन्दवो मनोवृत्तयः, इदं च निर्वचनं सोमेऽपि समम्। वः, युष्मदर्थे। प्र भ्रियन्ते, समाधीयन्ते इत्यर्थः, 'ताः पिबत' इति तत्पानाभिप्रायश्च 'वायवा याहि' इत्यत्रोक्तः ॥ ४ ॥

(हे देव) हविष्मन्तः। अवस्यवः, अवोऽवनमात्मन इच्छन्तीत्यवस्यवः, 'क्याच्छन्दसि' इत्युप्रत्ययः। वृक्तबर्हिषः, विस्तृतबर्हिषः। अरंकृतः, अरमलम्, कृतः कर्तारः, अतिशयेन कर्मणां कर्तारः, भूषयितार इति वा, लकारस्य रेफादेशः। कण्वासः, कण्वाः, वयमिति यावत्, 'अस्मदो द्वयोश्च' इत्येकस्मिन्नपि मेधातिथौ बहुवचनम्, कण्वप्रभृतीनां बहूनामृषित्वात्कण्वप्रभृतय इति वार्थः। त्वाम्। ईळते, स्तुवन्ति, 'ईड स्तुतौ' डस्य ळश्छन्दसि ॥ ५ ॥

(हे अग्ने) ये। घृतपृष्ठाः, घृतमिव स्निग्धं पृष्ठं येषामिति वा घृतः शुद्धो हरिः पृष्ठे येषामिति वा, निर्दोषेण हरिणारूढा इति यावत्। मनोयुजः, सारथेर्मनोमात्रेण रथे योज्याः। वाहकत्वात् वह्नयः, वहतेः निः, अश्वाः। सोमपीतये। त्वा, त्वाम्। देवान् (च यज्ञं प्रति) आ व हन्ति। 'ये' इत्यस्योत्तरमन्त्रे अन्वयः ॥ ६ ॥ इति षड्विंशो वर्गः ॥ २६ ॥

## पदार्थप्रकाशिका

एभिरग्ने दुवो गिरः । एभिर्वैश्वदेवमित्यनुक्रमणिकां हृदि निधायाह । द्वादशर्चमेतदिति । दुह प्रपूरण इति । तथाच दुहधातोः डप्रत्यये तस्य डित्कार्यकारितया विवक्षितत्वात् टीभूतस्य ह इत्यस्य लोपे दुइति प्रातिपदिकं ततश्च स्वाद्युत्पत्तौ दुः दू दुव इति उकारान्तशब्दो विष्णुशब्दवत् द्रष्टव्यः । स्तुतिरूपाः गिरः प्रतीति । तत्स्वीकारार्थमित्यर्थः । यक्षिचेति । यज्ञभागं यक्षि यज देवेभ्यः प्रयछेत्यर्थः ॥ १ ॥

आ त्वा कण्वा अहूषत । मेधाविन्निति । मेधावी कविर्विप्रेति विप्रशब्दस्य मेधाविनामसु पाठादिति भावः । कण्व इति परोक्षनिर्देशाभिप्रायमाह । वयमिति । मेधातिथेः कण्वगोत्रोत्पन्नत्वादित्यवधेयम् ॥ २ ॥

इन्द्रवायुबृहस्पतिम् । बृहस्पतिरितीति । बृहंश्चासौ पतिश्चेति विग्रहो द्रष्टव्यः । द्वितीयव्याख्याने बृहदारण्यकवाक्यं संवादयति । तथाचेति । वाकूलक्ष्मीः । विष्णुरेवेतीति । अध्याहृतेन विष्णुरित्यनेनैवशब्दः सम्बध्यत इत्यर्थः । ननु आद्ये व्याख्याने बृहत्पतिरिति स्यात् । द्वितीये च बृहतीपतिरिति स्यात् । बृहस्पतिरिति तु कथम् इत्यत आह । तथाचोक्तमिति । वार्तिककृतेति शेषः । तद्बृहतोरिति । तच्छब्दबृहछब्दयोः परतः सतोः चोरदेवतयोः वाच्ययोः सतोः समासे सुट् तकारलोपश्च भवतीति वार्तिकार्थः । एवं च तत्करोतीति तत्कर इति भाव्ये बृहछब्दपतिशब्दे परे देवतायां वाच्यायां सत्यां सुडागमे तकारलोपे बृहस्पतिरिति रूपं युक्तमिति भावः । मित्रेति द्विवचनमिति । द्विवचनस्य सुपां सुलुगिति आकारदेशस्य जातत्वादिति भावः । साहचर्यादिति । छत्रिन्यायेनोपचारादिति भावः । नेदमदृष्टचरमित्यत आह । दस्रेति । यथा अश्विनोर्मध्ये एको नासत्यः अपरो दस्रः इति परस्परं नामभेदेपि दस्रा युवाकवः सत्या इत्यत्र दस्रशब्दे तत्साहचर्यान्नासत्योऽप्युच्यते तद्वत् मित्रसाहचर्याद्वरुणोपि मित्रशब्दोनोच्यत इत्यर्थः । कन् इति । पुषधातोः कन्प्रत्यये ककारलोपे उपधाभूतस्य उकारस्य ऊकाररूपे दीर्घे सति पूषन्निति प्रातिपदिके पश्चात् स्वाद्युत्पत्तौ पूषेति रूपम् । अत्र कित्वाद्गुणाभावो द्रष्टव्यः । अन्यथा पोषेति स्यात् । पोषणादिति । तथाच पोषयतीति पूषेत्यर्थः । प्रोक्तमित्युक्तां उक्तिं दर्शयति । ऐश्वर्यस्येति । ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसःश्रियः । ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणेति वचनादित्यर्थः ।

ननु आदिशब्दात् त्यप्प्रत्यये पकारलेपे सति आदित्य इति रूपमस्ति । तद्युक्तम् । अव्ययात्यबिति । अव्ययादेव त्यप्प्रत्ययविधानात् अत्रत्यः इहत्यः तत्रत्यः कुत्रत्यः इत्यादिदर्शनात्

इत्यत आह। अव्ययात्यबित्यत्रेति। योगो वाक्यम्। तद्विभागेनेत्यर्थः। अव्ययादित्येकं वाक्यं त्यबित्यपरं वाक्यम्। अव्ययात् त्यप् भवति। शब्दादपि त्यप् प्रत्ययो भवतीत्यर्थः। एवं च आदिशब्दात् त्यप् प्रत्ययो युक्त इति भावः। आङ्पूर्वाद्दाणः इतुप्रत्यय इति। अत्र णकारो अनुबन्धार्थः। दा इत्येव धातुः। प्रत्यय इत्यनन्तरं स किच्चेति शेषः। इतुप्रत्यये उकारः तकारसंरक्षणार्थः। अन्यथा हलंत्यमिति तकारस्य लोपप्राप्तेः इति ध्येयम्। तथाच आङ्पूर्वकात् दाण्दाने इत्यस्मात् इतुप्रत्यये इकारलोपे इतुप्रत्यस्य कित्वात् आतोलोपः इटिचेति धात्वाकारलोपे आदित् इति रूपम्। ननु दाञ्दान इतिधातुं परित्यज्य दाण्धातुग्रहणे किं निमित्तमिति चेत् उच्यते। आददान इति शानजन्तस्य आत्मनेपदिनो गृहीतत्वात् दाणश्च आत्मनेपदित्वात् तस्यैव ग्रहणम्। न तु दाञः तस्य परस्मैपदित्वादित्यवधेयम्। अकार इति। स किच्चेति शेषः। तथा या प्रापणे अस्मादकारप्रत्यये तस्य कित्वात् आतोलोप इटि चेति धात्वाकारलोपे प्रत्ययाकारसम्बन्धे च सति येति रूपम्। विग्रहं दर्शयति आदिच्चासाविति। आदिच्च नः प्रयाति वेत्यर्थे श्रुतिमपि संवादयति। तथाचेति। आदित्वादित्यादिपदेन इन्द्रवायूमित्रेत्यनयोर्ग्रहणम्। रुशब्द इति।

तृतीयान्तान्मोपपदात् रुशब्द इति धातोः क्तप्रत्यये ककारलोपे मारुतेति रूपं द्रष्टव्यम्। एवं मारुतशब्द निर्वचनप्रसङ्गात् मरुतः पिब ऋतुना मरुद्भिरग्न आगहि। इत्यादौ स्थितस्य मरुशब्दस्यापि मानोक्तत्वमेव प्रवृत्रिनिमित्तम्। तर्हि मरुदिति कथमित्यतः तद्दर्शयति। मरुशब्देत्विति। मा इत्यस्य ह्रस्वः। रुतेत्युत्तरपदांत्यस्य तकारस्थस्य अकारस्य लोपो वक्तव्यः। निर्वचनत्वात्। तथाच मरुदिति रूपं युक्तमित्यर्थः॥ ३॥

प्रवो भ्रियन्त इन्दवः। ननु कथमत्र ताच्छीलत्वार्थकपूषाधिकार्थलाभः इत्यत आह। णेः छन्दसीति। णिजन्ताद्धातोः इष्णुच् प्रत्ययः स्यात्। छन्दसीति सूत्रार्थः। तथाच मदधातोः णिचि इकारं विहाय सर्वस्य लोपे अकारेकारयोः एकाररूपे गुणे तस्यायादेशे णित्वादादिवृद्धौ मादय् इति जाते पश्चात् णिजन्ताद्धातोः मादनशीला इति ताछील्यार्थ इष्णुच्प्रत्यये मादयिष्णु इत्युकारान्तप्रातिपदिके सिद्धे पश्चात् स्वाद्युत्पत्तौ मादयिष्णव इति भवतीति द्रष्टव्यम्। द्रवणादिति। सोमरसे द्रवत्वसद्भावादिति भावः। द्रु गतावित्यस्येति। अस्माद्धातोः प्सप्रत्यये तस्य टित्वात् टीभूतस्य उकारस्य लोपे द्रप्सेति रूपम्। एवशब्देनेति। द्रप्साश्च द्रविणा इत्येव व्याख्यानं नान्यथेति योज्यम्। सर्वतः। स्वादुरसवन्त इत्यर्थः। अपाकरोतीति। अपदार्थत्वात् मध्व इत्यनेन पुनरुक्तत्वाच्चेति भावः। चमसो यज्ञपात्रविशेषः। स्वादवः स्वादुरसवन्तः। मनोवृत्तिषु सुघटत्वादिति। इन्द्रव इत्यादि बहुवचनसद्भावात् मनोवृत्तिषु इति युक्तम्। मत्सरत्वं

मादयिष्णुत्वं च मनोवृत्तीनां सुखहेतुत्वाद्युक्तम् । मनोवृत्तीनां चञ्चलत्वात् द्रप्सत्वं च यु
मनोवृत्तीनां जिह्वेन्द्रियाधिष्ठानेन मधुररसास्वादनहेतुत्वात् मध्व इत्यपि सुघटमित्य
चमसस्थानत्वमिति । मनोवृत्तिरूपसोमानां चमूषद इत्युक्तं चमसस्थानत्वं च घटयति इत्य
प्रोक्तमित्युक्ताम् उक्तिं दर्शयति । इदं तच्छिर इति । एष ह्यर्वाग्बिलः चमस ऊर्ध्वबुध्न इति ।

ननु तथापि मनोवृत्तीनां कथं चमसस्थानत्वोपपत्तिः इत्यत आह । मनश्चेति । अ
श्रुतिमाह । ता वा एता इति । ता वा एताः शीर्षंश्रियः श्रिताः चक्षुः श्रोत्रं वाक् प्राण इति
मनसः शीर्षाश्रितत्वोक्तेः चमस इत्युक्तम् । चमसस्थानत्वं मनोवृत्तीनां युक्तमिति भावः
काममिति । इकारेणोच्यते काम इति वचनादिति भावः । काम्यमितीष्टशब्दार्थः । समाधि
इति । मनोवृत्तयः सम्यक् भगवति आधीयन्त इत्यर्थः ॥ ४ ॥

ईळते त्वामवस्यवः । क्यच् प्रत्ययस्य इच्छार्थकत्वादाह ॥ प्रवृत्तिरत्रेति । क्याच्छन्दसि
क्यजन्ताद्धातोः रुप्रत्ययः स्यात् छन्दसीति सूत्रार्थः । तथाच वस् इत्यस्मात् सुबन्तात् शब्दात्
आत्मनः क्यजिति सूत्रेण अवनमात्मने इछतीत्यर्थे क्यच् प्रत्यये यकारं विहाय सर्वस्य
क्यजन्तात् उप्रत्यये अवस्युरिति रूपम् ।

अस्मद इति । अस्मद एकत्वे द्वित्वे वा विवक्षिते सति बहुवचनं स्यादिति सूत्रार्थः । त
एकस्मिन्नपि मेधातिथौ बहुवचनं युक्तमित्यर्थः । इतरेतरेति । न केवलं बहुवचनमात्मस्थ
किन्नाम बहवो मुनयोऽत्र सन्ति अतोपि युक्तम् । न केवलं बहवो मुनय इति युक्तम् । कि
आत्मस्थं वेति परस्परसमुच्चय इत्यर्थः । के ते बहवो मुनय इत्यत आह । ते चेति । बहवो मु
आत्वा कण्वा अहूषतेत्युक्तत्वादाह । कण्वा इति । तदर्थमाह । कण्वप्रभृतय एवेति । तत्कथमि
विष्ण्वादीनाम् ऋषित्वं यदा तदेत्यर्थः ।

ननु उतरशब्दस्य सर्वादीनि सर्वनामानीति सर्वनामसंज्ञागणपाठात् । सर्वनामसंज्ञकादु
शब्दात् षष्ठीबहुवचने आमि सर्वनाम्नः सुडिति अवर्णान्तात् सर्वनाम्नः परस्यामः सुडागमविधा
सुडागमे उडित्यस्य लोपे उत्तरसूत्रे आमिति स्थिते अकारस्य एत्वे सस्य षत्वे सर्वेषामि
वदुत्तरेषामिति स्यात् । उत्तराणमिति कथमित्यत आह । शब्दान्तरोऽयमिति । अतिश
तरबीयसुनाविति सूत्रादतिशयार्थकतरप्रत्यय इत्यर्थः । नन्विति । सर्वनामसंज्ञकाखण्डरूढ
प्रातिपदिकमित्यर्थः । तथाचातिशयेन उत् ऊर्ध्वा उत्तमाः उत्तराः इत्युत्तरशब्दार्थो द्रष्टव्
ऊर्ध्वेतराणाम् अतिशयेनोर्ध्वाणामित्यर्थः । चशब्दादिति । तस्यां तस्यामवस्थ

तत्तत्प्राप्तिविशेषतः । तेषां वाक्यरूपेण प्रार्थनादिषु पश्यति । विष्णुर्ब्रह्मा सुपर्णो वा तत्तद्योग्यार्थभेदतः । इत्युक्तत्वात् पुनरुक्तिरित्यत आह । तस्यामिति । देवानां भूषयितार इति । आगतान् देवादीन् यजमानो वस्त्रगन्धादिभिरलङ्करोतीति भावः । तर्हि अलङ्कृत इति स्यादरंकृत इति कथम् । इत्यत आह । लस्येति ॥ ५ ॥

घृतपृष्ठंमनोयुजि । ननु विगतो दोषो यस्मादसौ विदोषो हरिः । तेनेत्येव बहुव्रीहिणो इनुप्रत्ययलाभात् इनेर्वैय्यर्थ्यम् । न बहुव्रीहिनिर्वाह्ये भवन्ति मतुबादयः इति वचनादतो विदोषेणेत्येव वक्तव्यम् । न तु विदोषिणेति । तत्राह । विशब्द इति । नञर्थ इति । तथाच दोषोस्यास्तीति दोषी न दोषी विदोषीति नञ्समास इत्यर्थः । मनोमात्रेणेति । तान्यजत्रा इत्युत्तरत्रेत्यर्थः ॥ ६-२६ ॥

## पदार्थदीपिका

॥ एभिरग्ने ॥ दुह प्रपूरण इति ॥ दुहेरुप्रत्यये तस्य डित्वात् टिलोपे जसादिषु छन्दोवचनं प्राङ्णौ चङ्युपधाया ह्रस्व इति वचनात् गुणाभावे इयङुवङ्करणात्तन्वादीनां छन्दस्युपसङ्ख्यानं बहुलमिति वचनादुवङादेश इति भावः ॥ यक्षीति ॥ व्याख्यातप्रायमेतत् ॥ १ ॥

आहूषतेति । ह्वयतेश्छन्दसि लुङ् लङ्लिटः इति वर्त्तमाने लुङ् । कित्वात् आत्मनेपदम् । झस्यात्मनेपदेष्वनत इति आदेशः । च्लेः सिच् । एकाच इति इत्वप्रतिषेधः । बहुलं छन्दसीति सम्प्रसारणम् । पररूपत्वम् । हल इति दीर्घत्वम् । आदेशप्रत्यययोरिति षत्वम् । छान्दसत्वादु-कारस्य न गुणः । अडागम इति बोध्यम् ॥ गृणन्तीति ॥ गृ शब्दे लट् झिः झोन्तः । क्र्यादिभ्यः श्ना । प्वादीनां ह्रस्व इति धातोर्ह्रस्वः । श्नाभ्यस्तयोरात इत्याकारलोपः । ऋवर्णाच्चेति वक्तव्यमिति णत्वमिति भावः ॥ आगहीति ॥ गम्लृगतौ लोटः सिप् । सेर्ह्यपिच्चेति सेर्हिः । कर्तरि शप् तस्य बहुलं छन्दसीति लुक् । अनुदात्तोपदेशेत्यादिना मकारलोपः । तस्यासिद्धवदत्राभादित्य सिद्धत्वात् अतो हेरिति हेर्लुक् न भवतीति ध्येयम् ॥ २ ॥

द्वितीयव्याख्याने श्रुतिसंमतिमाह ॥ तथाचेति ॥ ननु व्याख्यनद्वयेऽपि बृहत्पतिरित्येव स्यात् बृहस्पतिरिति तु कथमित्यत्राह ॥ तथाचेति ॥ तद्बृहतोरित्यादि ॥ पारस्करप्रभृतीनि च संज्ञायामित्यत्र पारस्करीयगणान्तर्गतगणसूत्रमिदम् । तत् बृहत् इत्येतयोः यथाक्रमं करपति शब्दयोः परतः यथाक्रमं चोरदेवतायां चाभिधेयायां सुट् स्यात् तलोपश्च तत्र करपतिशब्दयोः सुट्

स्यादित्यर्थ इति केचित्। तन्न, एवं हि सुडपि तद्बृहतोरेव स्यात् न करपत्योः सप्तमिनिर्दिष्टयोः आगमा अपि षष्ठी निर्दिष्टयोरेवोच्यन्ते इति भाष्योक्तेः। तलोपश्चेति ग्रहणं च अनर्थकम्। अलोन्त्यविधिनैव लाभात्। न च निपातनप्रपञ्चत्वादस्य यथेष्टं व्यवस्थेति वाच्यम्। तथापि गणसूत्रासामंजस्यानुद्धारात्। अन्ये तु व्याचक्षते। चोरदेवतयोरिति समुदायोपाधिनिर्देशात् समुदाययोरित्यध्याहारार्थम्। एवं च करपतिपरो यः तद्बृहतोः समुदायः तत्र यथायोगं लक्ष्यानुरोधेन सुट् तलोपश्च भवति। निपातनप्रपञ्चत्वात् व्यवस्थेति। अपरे त्वाहुः। तद्बृहतोरिति सम्बन्धषष्ठी च पौर्वापर्यलक्षणा करपत्योरित्यागमषष्ठी न सप्तमी सुट् तलोपश्चेति विधेयसमुच्चयमात्रम्। एकस्य सुट् अन्यस्य तलोप इति। अन्यथा पूर्वत्र षष्ठीनिर्देशो विगृहीतषष्ठीनिर्देशश्च अनर्थकः। तत् बृहद्भ्यामित्येव ब्रूयात्। अत्र नोभयोस्तलोपः। करशब्दे तदभावेनांशे बाधापत्तेः। द्वन्द्वात्साहित्येनोपस्थितानां तुल्ययोगित्वनियमात् एकेन निकृष्य सम्बद्धुमशक्यत्वाच्च। तस्मादबाधायोभयत्र षष्ठीनिर्देशात् तद्बृहतोरेव तलोपसम्बन्ध इति तग्रहणं नानर्थकम्। लोप इत्येवोक्ते हि करपत्योरप्यन्तस्य सम्भाव्येतेति सुट् तलोपश्चेति विगृहीतनिर्देशादपि द्वयोरेक एवाभावोवसीयत इति अत्र तद्बृहतोः स इत्येव वक्तव्यम्। एवं च तलोपो न वक्तव्यो भवति। अलोन्त्यस्यादेशेनैव सिद्धेः। असिद्धं बहिरङ्गमन्तरङ्ग इति न्यायस्यासिद्धत्वाच्चातिप्रसङ्गो नास्ति। तथापि प्रकारान्तरमित्येतदवधेयम्॥ साहचर्यादिति॥ एकस्यैव मित्रत्वेऽपि तत्साहचर्यात् वरुणस्य लक्षणया मित्रशब्देन ग्रहणमित्यर्थः॥ दस्रेति॥ अश्विनोरेकस्यैव दस्रत्वेऽपि तत्साहचर्यात् नासत्यस्य दस्रशब्देन लक्षणयार्थग्रहणं यथेत्यर्थः।॥ कन् प्रत्यय इति॥ कित्वान्नगुण इति भावः॥ उपधाया दीर्घत्वं चेति॥ पूषन्निति॥ निपातनादिति भावः॥ पोषणादिति॥ पोषयतीति पूषेति॥ व्युत्पत्तिः॥ पूर्णत्वादिति॥ पूष्णातीति व्युत्पत्तिरिति बोध्यम्। अनव्ययत्वात् कथमादिशब्दात्त्यप् प्रत्ययः। अव्ययात्त्याबिति तत्स्मरणात् इत्यत आह॥ योगविभागादिति॥ इतड्प्रत्यय इति॥ किच्चेति शेषः। तेन कित्वादातोलोप इटि चेत्याकारलोप इति ज्ञेयम्। उकारस्तकारपरित्राणार्थः। संज्ञासु धातुरूपाणि प्रत्ययश्च ततः परे। कार्याद्विधाद-नुबन्धमेतच्छास्त्रमुणदिष्विति वचनात् इति भावः॥ अकार इति॥ प्रत्ययः किच्चेत्यनुवर्तते। उक्तप्रकारेण प्रकृतिप्रत्ययकल्पनया आदित्यशब्दनिर्वचने श्रुतिसंवादमाह॥ तथा चेति॥ प्रसङ्गात् मरुच्छब्दं भगवति निर्वक्ति॥ मरुच्छब्देति॥ मारुतः एव मरुत्। पूर्वह्रस्व त्वोत्तराकारलोपश्च निर्वचनत्वादिति भावः। अत्र ऋचि इन्द्रश्च वायुश्चेन्द्रवायू इति॥ ३॥

अत्र देवता द्वन्द्वे चेति प्राप्तस्यानङादेशस्योभयवायोः प्रतिषेधो वक्तव्य इति प्रतिषेध इति ज्ञेयम्॥ मद् मदमिति॥ मद तृप्ति योग इत्यस्मात् सम्पदादिलक्षणात् भावे क्विप्। सरतेरन्तर्णीतण्यर्थात्

पचाद्यच् । मदः सराः मत्सराः इत्येव व्युत्पत्तिरिदं तु तात्पर्यकथनमित्याहुः ।। णेच्छन्दसीति स्मरणादिति ।। ण्यन्तात् च्छन्दसीष्णुच् भवतीत्यर्थः । आकेस्तच्छीलतद्धर्मतत्साधुकारिष्विति उक्त्वा णेः छन्दसीति इष्णुच् प्रत्ययविधानेन इष्णुच्प्रत्ययस्य ताच्छील्यार्थत्वादिति भावः । तथा च मदी हर्षग्लपनयोरित्यस्मात् ण्यन्तात् णेश्छन्दसीतीष्णुच् । णेरनिटीति णिलोपे प्राप्ते अयामन्ताल्वाय्येत्विष्णिष्विति अयादेश इति भावः ।। द्रुगतावित्यस्येति ।। द्रुगतावित्यस्मात् कर्तरि अप्सुप्रत्ययो डिच्चेति भावः ।। तत्र सीदन्तीति ।। सत्सूद्विषेत्यादिना क्विबिति भावः ।। मध्वो मधव इति ।। मधुशब्दः स्वादुद्रव्यविशेषवचने विशेष्यनिघ्नः । जसादिषु च्छन्दोवचनं प्राङ्णौ चङ्युपधाया इति वचनात् जसि चेति गुणाभावः । यणादेश इति बोध्यम् ।। भ्रियन्त इति ।। भृञः कर्मणि यक् प्रत्ययः । रिङ्शयग्लिङ्क्षिति रिङादेश इति भावः ।। ४ ।।

।। इच्छेति ।। कप्रत्ययस्येच्छार्थत्वात् इच्छेति व्याख्यानमिति बोध्यम् ।। अवः अवनमिति ।। अवतेर्भावे औणादिकोऽकारप्रत्यय इति भावः ।। अवस्युरित्यर्थ इति ।। सुप आत्मनः क्यजिति इच्छार्थे क्यजिति भावः । क्यचि चेतीत्वम् । अकृत्सार्वधातुकयोर्दीर्घ इति दीर्घत्वं न भवति नच्छन्दस्यपुत्रस्येति निषेधात् । सर्वप्रातिपदिकेभ्यो लालसायां सुग् वक्तव्य इति सुगागम इति ज्ञेयम् ।। धेति ।। तस्यार्धधातुकात्वादातो लोप इटि चेत्यकारलोप इति ज्ञेयम् ।। अस्मदो द्वयोश्चेति वचनादिति ।। नन्वत्रास्मदः प्रयोगो नास्तीति कथमेतत्सूत्रप्रवृत्तिः । तदङ्गीकारे च ईळत इति प्रथमपुरुषानुपपत्तिरेव । तद्योगे अस्मद्युत्तम इति उत्तमपुरुषस्यैव विधानात् तत्कथमेतदिति चेन्न, भावानवबोधात् । यतोऽत्रास्मद इति अस्मदः प्रयोगो नाभिमतः किन्त्वस्मद इति अभिधेय सम्बन्धे षष्ठी । पञ्चम्यन्तात्वे तत्र वर्तमान तिङन्तस्य न स्यात् । तथा चास्मदो योऽर्थस्तस्यैकत्वे द्विवचने बहुवचनमन्यतरस्यां भवतीति सूत्रार्थः । तथा च वयमित्यस्मदर्थसम्बन्धात् काण्वा इति बहुवचनोपपत्तिः । न चास्माच्छब्दः प्रत्यात्मनि वर्तते तस्य चैकत्वात् द्वित्वयोगः कथमिति वाच्यम् । यत्रान्यत्रात्मत्वमारोप्यते । अयं मे द्वितीय आत्मेति, यदा वा त्यदादीनि सर्वैर्नित्यमित्येकशेषः क्रियते । तदा सम्भवत्यनेकत्वम् । न च सविशेषणस्य प्रतिषेधो वक्तव्य इति वचनात् अवस्यवः कण्वास इत्यस्य च विशेषणत्वात् बहुवचनानुपपत्तिरेवेति वाच्यम् । कण्वा इत्यस्य विधेयत्वेन विशेषणत्वाभावात् । अत एव च पदमअर्यां त्वं राजावयवमाप्यु-पासितप्रज्ञामिमान्नोन्नत इत्यत्रोन्नतत्वमेव विधीयते । न च विधेयोऽर्थो विशेषणमित्युक्तमित्याहुः । तन्त्वा वयं जडधियो नविदाम भूमन् कूटस्थमादिपुरुषं इत्यादि अभियुक्त प्रयोगदर्शनाच्च नेति प्रतिषेधवचनं प्रायिकमित्यप्याहुः । केचित्तु अस्मद इति प्रयोग एव विवक्षितः । न चैवमीळत इति

प्रथमपुरुषानुपपत्तिरिति वाच्यम्। पुरुषव्यत्ययेन ईलत इत्यस्येड्महे इत्यर्थांगीकारात्। अत एव वक्ष्यति कण्वा वयं इत्यादीति । बहवो मुनयोवेति भाष्योक्तपक्षान्तरे पुरुष व्यत्ययस्या-नाश्रयणीयतया ईळत इति परोक्षनिर्देशेन मेधातिथेः अकण्ववत्वप्रयुक्त मुनित्वशङ्कानिरासाय तत्पक्षीययोजनायां कण्वासो वयमिति यावदित्युक्तमिति न तद्विरोधोऽपीत्याहुः । मास्तु पुरुषव्यत्ययाश्रयणमिति भावेन प्रवृत्तं बहव इत्यादि भाष्यं अनूद्य तदभिप्रायमाह ॥ बहव इति ॥ अनेन बहुवचनमाद्येऽर्थे कडाराः कर्मधारय इत्यादौ तद्दर्शनादित्युक्तं भवति। अत एव कण्वप्रभृतय इति कण्वाद्या इत्यर्थ इति योज्यम्। अत्र बहूनां द्रष्टृत्वाङ्गीकारे एककालावस्थासु एकेनैव ऋषिणा इत्यादि शतर्चित्वलक्षणस्यासम्भव इति प्रतिभाति। ननूत्तरशब्दः सर्वादिगणे पठितः। ततश्च सर्वनामतया तत्कार्ये उत्तरशब्दात् परस्यामो ह्रस्वनद्यापो नुडितिप्राप्त नुडागमं बाधित्वा आमि सर्वनाम्नः सुडिति सुडागमे एत्वे च सत्युत्तरेषामिति भवति उत्तराणामिति तु कथम्। न च पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायामित्यनेन यदि पूर्वादयः संज्ञा न भवन्ति तर्ह्येव सर्वनामसंज्ञा स्युरिति नियमितत्वात् अस्य संज्ञाशब्दत्वात् सर्वनामकार्याभावादिति इति वाच्यम्। आधुनिकसंकेतस्यैव संज्ञात्वेन चिरन्तनसंकेतस्य संज्ञात्वाभावात् उत्तरशब्दस्य हि दिक्षु चिरन्तनसङ्केतः। अत एव आधुनिकसंकेतो हि संज्ञा। न च दिक्षु सास्तीति। अस्तीति प्रकरणे कैयटहरदत्तादय आहुः। अत एव च विश्वशब्दस्य गणविशेषे देवप्रसिद्धत्वादेवाधुनिकसङ्केताभावात् विश्वेषां देवानमित्युपपन्नम्। ननु च पूर्वपरावरेति सूत्रेतु व्यवस्थायामित्युक्तम्। व्यवस्था हि स्वाभिधेयापेक्षोऽवधिनियम एव। स्वस्य पूर्वादिर्योऽभिधेयो दिग्देशकालरूपोऽर्थः तमपेक्षते तेन वापेक्ष्यते स स्वाभिधेयापेक्षः एतादृशोवधिनियमो अवधानं तत् तदा तस्य नियमावश्यं भावः। प्रकृते चोत्तरशब्दस्य कण्ववाचकत्वेन दिग्देशरूपाभिधेयस्यैवाभावात् सर्वनामगणे पठितस्यापि तदर्थविशिष्टस्यैव सर्वनामसंज्ञात्वादिति चेन्न, वाचितया व्यवस्थाविषयस्याप्युत्तरशब्दस्य उपचारात् कण्वेषु प्रयोगः। न च गौणतया पुनः सर्वनामसंज्ञात्वाभावस्तदवस्थ एवेति वाच्यम्। न हि लाक्षणिकत्वं उपसर्जनत्वं किन्तु स्वादिष्टविशिष्टार्थान्तरसङ्क्रमः। स च समासादि वृत्तावेव। अत एव भूवादिसूत्रे एतान्यपीत्येतत् प्रतिपाद्यानि वस्तूनि इत्यर्थः इति कैय्यटोक्तिः सङ्गच्छते। वस्तुतस्तु उत्तरशब्दस्य देशनिष्ठत्वादिकमेवार्थः। कण्वात्वादिकं त्वार्थिकोऽर्थः। न हि साक्षादर्थ एव ग्राह्यः न त्वार्थिक इत्यस्ति। अत एव हि कालिदासः श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां व्युधि चेति भावः। परेषां वैरिणामित्यर्थः। अपरे प्रत्यवतिष्ठन्त इत्यादिश्च प्रयोगः सार्वजनीनः। न चाधरे ताम्बूलरागः, उत्तरे प्रत्युत्तरे च शक्तः इत्यादिवत् उत्तराणामपीति वक्तुं शक्यम्।

अमुकस्मादुत्तरे प्रत्युत्तरे इति अवध्यन्वयसम्भवेऽपि तन्नियमाभावेन व्यवस्थाभावात् । अमुकस्माद्दक्षिणा गायका इतिवत् । प्रकृते च तन्नियमस्य सत्वात् । न चावाधिवाचिशब्दप्रयोगाभावात् न तन्नियम इति वाच्यम् । प्रसिद्धत्वादेवाप्रयोगोपपत्तेः । दिशः सपत्नी भव दक्षिणस्या इत्यादिवत् । तस्मादुत्तरेषामित्येव वक्तव्यं न तूत्तराणामित्यनुपपत्तिं मनसि निधायाह ॥ उच्छब्दात्तरबयमिति ॥ स्वार्थिक इति शेषः । ज्ञापकं चात्र प्रकरणान्तरे तरप् तमपौ घ इति गुरुसूत्रकरणम् । इदं हि लाघवात् आतिशयिकप्रकरण एव वा दीर्घ इति कपितौ घ इति वा वक्तव्यम् । एवं सति प्रकरणान्तरे गुरु क्रियते । तेन ज्ञायते, स्वार्थिकोऽपि तरबस्तीति । एतेनाल्पा लोपक्ष बलवत्तरमित्यादिकमपि व्याख्यातं भवति । घसंज्ञकतरबन्तात् अव्ययात् किमेतत्तिङव्ययधदान्वयद्रव्यप्रकर्ष इति आमस्तु न भवति द्रव्यप्रकर्षस्यैव विद्यमानत्वात् । तथाचोत्तराणामित्यपि साध्वेवेति दिक् ॥ ऊर्ध्वतरणामिति ॥ पश्चाद्द्रष्टॄणामित्यर्थः । तस्यां तस्यामवस्थायां तत्तत्प्राप्तिर्विशेषतः इत्यादि नोक्तस्यैवोत्तराणामित्यनेनाभिधानात् पौनरुक्त्यमित्यत आह ॥ तस्यां तस्यामिति ॥ अरंकृत इति । क्विप् चेति क्विप् । ह्रस्वस्य पिति कृति तुगिति तुक् ॥ लस्य रेफादेश इति ॥ कपिलादीनां संज्ञाछन्दसोर्वा लो रत्वमापद्यत इति लकारस्य रेफादेश इत्यर्थः ॥ ५ ॥

घृतमिवेति । उपमानपूर्वपदो बहुव्रीहिः । स्निग्धमित्युपमार्थकथनमिति ज्ञेयम् ॥ अथवेति ॥ समारूढा इत्यादिना भाष्येण घृतपृष्ठा इति श्रौतपदस्यार्थान्तरमुच्यत इति भावः ॥ विशब्दो नञर्थ इति ॥ नायं विदोषशब्दयोः प्रादिसमासः । नापि विगतो दोषो यस्मादिति बहुव्रीहिः । येन विदोषेणेत्येतावता पूर्त्या मत्वर्थीयप्रत्ययवैय्यर्थ्यं स्यात् । किन्तु नञर्थस्य विशब्दस्य दोषशब्देन सह कर्मधारय इति भावः । मनो युज इति मनोयुजेः अन्तर्णीत ण्यर्थात् सम्पदादिलक्षणात् कर्मणि क्विबिति भावः । सकारे परतो नकारस्य संहितायां सुडागमः । खरिचेति चर्त्वम् । तेन देवान् त्सोम पीतय इति युक्तमिति भावः । यच्छब्दस्येति । तैरश्वैरित्येवं रूप इत्यर्थः ॥ ६, २६ ॥

## टीकाविवृतिः

ऐभिरग्ने ॥ द्वादशर्चमिति ॥ ऐभिर्वैश्वदेवमित्यनुक्रमणिकायां द्वादशसङ्ख्यानुवृत्तेर्विश्वदेवदेवताकत्वमात्रमुक्तम् ॥ ङिच्चेति ॥ ङित्वाट्टिलोपे दु इत्युकारान्तात्प्रातिपदिकाज्जसि संज्ञापूर्वकविधेरनित्यत्वात्पूर्वसवर्णदीर्घस्य जसिचेति गुणस्य चाभावे इयङुवङ्प्रकरणे तन्वादीनां छन्दसि बहुलमुपसंख्यानमित्युवङादेश इति भावः ॥ १ ॥

आत्वाकण्वा: ।। हेविप्र मेधाविन्निति ।। विप्र:विग्र इति मेधाविनामसु पाठादिति भाव: ।। कण्वाइति ।। मेधाविनामसु पाठात्कण्वा: मेधाविन:कण्वगोत्रोत्पन्ना वेत्यर्थ: । विशेष्यानुक्तेराह ।। वयमिति यावदिति ।। यावदित्युक्तेस्तात्पर्यार्थत्वाद्वयमित्यध्याहारत्वाभावादहूषतेति नप्रथम-पुरुषान्वयानुपपत्ति: ।। अहूषतेति ।। ह्वेञो लुङि च्ले: सिचि बहुलंछन्दसीति संप्रसारणे हल इति दीर्घे संज्ञापूर्वकत्वेन सार्वधातुकार्धधातुकेति नगुण: ।। गृणन्तीति ।। गृशब्द इति धातो: प्वादीनांह्रस्व इति ह्रस्व: ।। २ ।।

इन्द्रवायू ।। बृहस्पत्यादीति ।। आदिशब्दात्पूषादिशब्दचतुष्टयसङ्ग्रह: ।। इन्द्रवायु-मित्राग्निशब्दानांपूर्वं व्याख्यातत्वादित्याशय: । वाच इत्यस्य तृतीयव्याख्यात्वभ्रान्तिं वारयति ।। बृहत्या इत्यनुवादेनेति ।। तर्हि बृहत्पतिरिति स्यादित्यत आह ।। तथाचोक्तमिति ।। अत्र सुट्तलोप इत्येतद्विना यथासङ्ख्यं ज्ञेयम् । तच्छब्दस्य करशब्दे परे चोरेवाच्ये करस्य सुडागम: तच्छब्दस्य तलोप: । एवं बृहच्छब्दस्य पतिशब्देपरे देवतायां वाच्यायां परस्य सुट्पूर्वस्य तलोप इति सूत्रार्थ: ।। साहचर्यादिति ।। एकहविर्ग्रहणे सहगमनादित्यर्थ: ।। दस्रेतियथेति ।। नासत्यदस्रनामकयोरश्विनो: सर्वव्यापारेषु साहचर्याद्दस्रनाम्ना नासत्योप्युच्यते । एतावांस्तुविशेष: । यज्ञादावेव मित्रावरुणयो: सहचारेण वरुणे मित्रशब्दस्य लक्षणया क्वाचित्क:प्रयोग: नासत्यदस्रयोस्तु सर्वव्यापारेषु साहचर्यादुभाभ्यां शब्दाभ्यां प्रत्येकमुभावपि वाच्यौ । अत एवामरोपि नासत्यावश्विनेयौच तावुभाविति । रूढलक्षणां वाश्रित्यामरोक्तिर्ज्ञेया ।। कन्प्रत्यय इति ।। श्वन्नुक्षन्पूषन्नितिसूत्रे पुषे: कन्प्रत्ययोपधादीर्घत्वयोर्निपातनादिति भाव: । कनिन्प्रत्यये नकारस्येत्वादिकारस्योच्चारणार्थ-त्वात्कन्नित्येवोक्त: ।। धातोश्चेति ।। ण्यर्थान्तर्भावे परपोषकत्वेन पोषणात्पूषेति ण्यर्थानन्तर्भावे स्वत:पूषत्वात्पूर्णत्वाद्वा पूषेति व्याख्यानमिति भाव: ।। इत्यादिवचनादिति ।। आदिशब्दाद्वीर्यस्य यशस:श्रिय: । ज्ञानविज्ञानयोश्चैव षण्णांभग इतीरणेति वाक्यशेषग्रहणाद्भाष्योक्तादि शब्दस्य पूर्णवीर्यत्वाद्यर्थ उक्तो भवति ।। आदिशब्दस्यानव्ययत्वात्कथं त्यबित्यत आह ।। त्यबिति योग विभागेनेति ।। पृथिवीरसमिति ।। अत्र रसशब्द उदकपर्याय: ।। इतड्प्रत्यय इति ।। संज्ञासुधातुरूपाणि प्रत्ययाश्चतत:पर इति वचनादौणादिकोऽयं अकारस्तकाररक्षणार्थ: । अस्य डित्वाश्रयणादाकारलोप इति भाव: ।। अकार इति ।। अत्रापि डित्वादाकारालोप: ।। एतेहीदमिति ।। एते सूर्या:हि यस्मादिदं सर्वं जगदाददाना: यन्ति गच्छन्ति तस्मादादित्या इत्युच्यन्त इत्यर्थ: । बहुरूपत्वतश्चैवेत्यस्यानन्वयादपेक्षितमध्याहरति ।। आदित्या नित्या युक्तमिति ।। आदिशब्दाद्देवतान्तरसमूहवाचिगणमिति द्विरूपत्वतो मित्रेतिच गृह्यते ।। रुशब्दइति ।। क्तप्रत्यय

इति शेषः । यदामरुतामिमं मारुतमिति गणविशेषणं तदामरुच्छब्दस्य भाष्योक्तव्याख्यां मरुद्भिरग्न आगहीत्यादेर्मरुतो मारुतत्वत इति भाष्याख्यानंच घटयति ॥ मरुच्छब्दे त्विति ॥ पृषोदरादित्वान्माशब्दे ह्रस्वता । रुतशब्दांत्यलोपश्च व्याख्येय इत्याशयः ॥ ३ ॥

प्रवो भ्रियन्ते ॥ मत् मदमिति ॥ मदीहर्ष इत्यतो भावे संपदादित्वात्क्विप् । तस्मिन्कर्मण्यु-पपदेऽन्तर्णीतण्यर्थात्सर्तेःपचाद्यजिति भावः । मदेःकृधूमदिभ्यः किदिति सरप्रत्यये पिति तुत्रतथसिसुसरकसेषुचेतीड भावात् मत्सरशब्दः साधयितुं शक्यते तथापि तस्य कोपादिरूढार्थे प्रवृत्तेर्मदकारित्वरूपार्थप्रदर्शनाय धातुरूपत्वाङ्गीकारः प्रकारान्तरप्रदर्शनाय वेति ज्ञेयम् ॥ णेश्छन्दसीतीति ॥ इति सूत्रेण ण्यन्तात्तच्छीलाद्यर्थे इष्णुज्विधानात् अयामन्ताल्वाय्ये-त्विष्णुष्विति णिलोपापवादो णेरयादेश इति भावः ॥ द्रुगतावितीति ॥ वृतॄवदिहनिक-मिकषिभ्यःस इत्युक्तःसो बहुलोक्तेरस्मादपि धातोरकारादेशः पुगागमश्च बोध्य इति भावः ॥ अपाकरोतीति ॥ अप्रामाणिकत्वादिति भावः ॥ चमसस्येति ॥ उच्छिष्टं चम्वोर्भरेत्यादौ चमूशब्दस्य चमसे प्रयोगादिति भावः ॥ तत्र सीदन्तीति ॥ सत्सूद्विषेति सदेः क्विबिति भावः ॥ मध्वो मधव इति ॥ स्वादुत्वार्थस्य मधुशब्दस्य विशेष्यलिङ्गत्वात्सोमविशेषणस्य मधुशब्दस्य जसिचेति प्राप्तगुणस्य जसादिषु छन्दसि वावचनं प्राङ्णौ चङ्युपधाया इति वार्तिकेन विकल्पनाद्गुणाभावाद्यणादेश इति भावः ॥ प्रभ्रियन्त इति ॥ भृञःकर्मणि यकिरिङ्शयग्लिङ्-क्ष्वितिरिङादेश इति भावः ॥ इतिहीति ॥ इतिशब्दस्य प्रभृत्यर्थकत्वादेष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न इति श्रुतिशेषो गृह्यते । चमूशब्देन शिरोग्रहणे चमूषदत्वमिंदुशब्दोक्तमनसः कथमित्यत आह ॥ मनश्चेति ॥ इति श्रुतेरिति ॥ श्रियः श्रिताश्चक्षुःश्रोत्रंमनोवाक्प्राण इति श्रुतिशेषेणास्यान्वयो ज्ञेयः ॥ कामवाचीति ॥ इकारःकुसुमास्त्रे चेत्येकाक्षररत्नमालोक्तेः । तत्पुरुषे कृतिबहुलमिति बहुलोक्तेर्द्वितीयाया अलुक् दाञ औणादिकःकुप्रत्यय इतिभावः ॥ समाधीयन्त इति ॥ मनोवृत्तयो वोर्थं समाधीयन्ते भवद्विषये सावधानाः क्रियन्त इत्यर्थः ॥ ४ ॥

ईळतेत्वाम् । नन्ववतेर्भावेऽकारप्रत्यये निष्पन्नादवशब्दात्क्यचि सर्वप्रातिपदिकेभ्यो लालसायामसुक् सुकौ वाच्यौ इति सुगागमे क्यचिचेति प्राप्तेत्वस्य न छन्दस्यपुत्रस्येति निषेधादवस्य शब्दसिद्धावपि क्यच इच्छार्थे विधानात्कथं भाष्ये प्रवृत्त्यर्थत्वकथनमित्यत आह ॥ प्रवृत्तिरत्रेति ॥ क्याच्छन्दसीति ॥ तथाचावतेरसुन्प्रत्यये क्यचि निष्पन्नावस्यशब्दादनेन सूत्रेणोप्रत्यये अतोलोपे अवस्युरिति सिद्ध्यतीति भावः ॥ आत्मस्थबहुवचनसद्भावे निदर्शनमाह ॥ अस्मद इति ॥ अस्मच्छब्दस्यैकत्वे द्वित्वे वा विवक्षिते बहुवचनं स्यादिति सूत्रार्थः ।

अस्मच्छब्दस्यात्मवाचित्वादिति भावः । महाभाष्ये इन्द्रियादिष्वात्मत्वारोपमाश्रित्य प्रत्येकमस्मच्छब्दप्रयोगांगीकारेण स्वातन्त्र्येण कर्तृत्वाद्बहुवचनं प्रसाध्य सूत्रं निराकृतम् । तद्वदत्रापि कण्वास इति शब्दस्य स्वात्मविषयकत्वान्मेधातिथेस्तदिन्द्रियाणां च स्वातन्त्र्येण पारोक्ष्येणं कर्तृत्वविवक्षायां बहुत्वाद्बहुवचनं युज्यते न तु वयमित्यध्याहारः येनेळत इति प्रथमपुरुषानुपपत्तिः सविशेषणे प्रतिषेधोवाच्य इति बहुवचनानुपपत्तिर्वास्यादित्याशयः । इन्द्रियाणां जडानामात्मत्वारोप आश्रयणीय इत्यरुचेः प्रवृत्तं बहव इति भाष्यमनूद्य तदाशयमाह ॥ बहव इति ॥ वाशब्दाविति ॥ इतरेतरव्यवस्थित विकल्पसमुच्चय इत्यर्थः । बहुमुनीनां कथं कण्वत्वमित्यत आह ॥ कण्वप्रभृतय इति ॥ बहुवचनबलाद्द्रष्टृत्वेन कण्वसहचरितेषु कण्वशब्दप्रवृत्तेरित्याशयः । कण्वा वयमित्यादीति ॥ आदिशब्दादवनेच्छुत्वस्तुतिकर्तृत्वादिकं गृह्यते । उच्छब्दादिति ॥ उच्छब्दादूर्ध्वार्थाद्विवचनविभज्येति तरप्प्रत्ययः । विष्ण्वादिऋष्यंतर विवक्षया मेधातिथ्यादीनामुत्तरत्वात्तरबुपपत्तिरिति भावः ॥ नत्वखण्डमिति ॥ औणादिकमित्यर्थः ॥ इति युक्तमिति ॥ तथाचामि सर्वनाम्नः सुडिति सुटच्युत्तरेषामिति भाव्यमिति नाशंक्यमिति भावः । अवैनं राजावरुणोमुमोक्त्वित्यादेर्मोचनप्रार्थनाद्ययोगेन विष्ण्वाद्यृषिकत्वासम्भवमाशंक्य तस्यां तस्यामवस्थायां तत्तत्प्राप्तिविशेषतः । तेषां वाक्यस्वरूपेण प्रार्थनादिषु पश्यति ॥ विष्णुर्ब्रह्मा सुपर्णो वेति परिहारादत्र पुनः परिहारे पुनरुक्तिः स्यादित्यत आह ॥ उदाहरणप्रदर्शनार्थमिति ॥ स्तुतिकर्तृत्वाद्यवस्थायां विष्ण्वादयः कण्वादिवाक्यत्वेन पश्यंतीति तस्यां तस्यामवस्थायामित्यस्योदाहरणमेतत् । लस्य रेफादेश इति ॥ पृषोदरादित्वादिति भावः ॥ हविष्मन्त इति ॥ भूमनिन्दाप्रशंसासु नित्ययोगेतिशायने । सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादय इत्युक्तेः प्रशस्तहविर्युक्ता इत्यर्थः । वृक्तबर्हिष इति ॥ आस्तृतबर्हिष इत्यर्थः ॥ वयमिति यावदिति ॥ कण्वा इत्यस्य तात्पर्यार्थकथनं वयमिति । नत्वध्याहृतं पदम् । तथात्वे वयमिति शेष इत्युक्तिः स्यात् । तथा त्वामीळते स्तुवन्तीत्युक्तिर्नस्यात् स्तुम इत्युक्तिः स्यात् ॥ ५ ॥

धृतपृष्ठाः । पृष्ठस्य घृतत्वाभावाद्घृतशब्दो घृतसादृश्यलक्षक इत्याशयेनाह ॥ घृतमिवेति ॥ स्निग्धमिति । सादृश्यधर्मकथनम् । उत्तमाश्वत्वेन पुष्टांगत्वेन स्निग्धपृष्ठत्वमिति भावः । हरिणा वेत्यध्यात्मं भाष्यं योजयति ॥ अथवेति ॥ ननु विदोषिणेत्यत्र विशिष्टो दोषो यस्येत्यर्थ स्य बाधितत्वाद्विगतो दोषेभ्यो विदोष इति प्रादिसमासे विगता दोषा यस्मात्स विदोष इति बहुव्रीहौ वा विदोषेणेति भाव्यं तत्कथमिनिप्रयोगो व्यर्थत्वादित्यत आह ॥ विशब्दोनञर्थ इति ॥ विर्लये चविशेषेच विद्यते विभवे तथा । विश्राण नेव्यवायेच वैपरीत्यादिषु स्मृत इत्येकाक्षररत्नमालायां

विशब्दस्योक्तलयाद्यर्थसमुदाये वैपरीत्यरूपार्थोक्तेरादिशब्दग्रहणाद्वा विशब्दो नञर्थः । तस्यदोष शब्देन प्रादिसमासे कर्मधारये वा दोषाभावो विदोषः सोऽस्यास्तीति विवक्षायामिनिरुपपद्यते । यद्यपि महाभाष्ये अथेहकस्मान्नभवति चित्रागावोस्य सन्तीति मतुपमाशंक्य परिहृतं अवयवादसामर्थ्यान्न भवति समुदायात्त्वप्रातिपदिकत्वान्न भवति समासात्तु समासेनोक्तत्वान्न भवतीति । तथापि तत्र समासशब्देन बहुव्रीहिर्गृह्यते । मत्वर्थस्य बहुव्रीहिणैवोक्तत्वादतो विगतो दोषोस्यास्तीति विशिष्टविवक्षामकृत्वा पूर्वं विशेषणविशेष्यभावमात्राश्रयेण कर्मधारयं कृत्वा पश्चात्सोस्यास्तीति विवक्षायां मत्त्वर्थीयः कार्यः । विवक्षा यावक्तुरधीनत्वादिति बोध्यम् । योज्या इति । मनोयुज इत्यत्र युजेः कर्मण्यौणादिकः क्विबित्याशयः । आदेवान्त्सोमपीतय इत्यत्र देवानित्यत्र संहितायां नश्चेति नकारात्परस्य सस्य धुडागमे चर्त्वादीति भावः । उत्तरत्रेति ॥ तान्यजत्रानिति ऋचीत्यर्थः ॥ ६, २६ ॥ इति षड्विंशोवर्गः ॥

## ऋक्संहिता पदपाठसहिता

(१४१) तान्यजंत्राँऋतावृधोऽग्नेपत्नींवतस्कृधि ॥ मध्वंःसुजिह्वपायय ॥ ७ ॥

(प०) तान् । यजंत्रान् । ऋतऽवृधंः । अग्नें । पत्नींऽवतः । कृधि ॥ मध्वंः । सुऽजिह्व । पायय ॥ ७ ॥

(१४२) येयजंत्रायईड्यास्तेतेंपिबन्तुजिह्वयां ॥ मधोंरग्नेवषंट्कृति ॥ ८ ॥

(प०) ये । यजंत्राः । ये । ईड्यांः । ते । ते । पिबन्तु । जिह्वयां ॥ मधोंः । अग्ने । वषंट्ऽकृति ॥ ८ ॥

(१४३) आकींसूर्यंस्यरोचनाद्विश्वांन्देवाँउंषर्बुधंः ॥ विप्रोहोतेहवंक्षति ॥ ९ ॥

(प०) आकीम् । सूर्यंस्य । रोचनात् । विश्वांन् । देवान् । उषःऽबुधंः ॥ विप्रंः । होतां । इह । वक्षति ॥ ९ ॥

(१४४) विश्वेंभिःसोम्यंमध्वग्नइन्द्रेंणवायुनां ॥ पिबांमित्रस्यधामंभिः ॥ १० ॥

(प०) विश्वेंभिः । सोम्यम् । मधुं । अग्नें । इन्द्रेंण । वायुनां ॥ पिबं । मित्रस्यं । धामंऽभिः ॥ १० ॥

(१४५) त्वंहोतामनुंर्हितोऽग्नेंयज्ञेषुंसीदसि ॥ सेमंनोअध्वरंयंज ॥ ११ ॥

(प०) त्वम् । होता । मनुःऽहितः । अग्ने । यज्ञेषु । सीदसि ॥ सः । इमम् । नः । अध्वरम् । यज ॥ ११ ॥

(१४६) युक्ष्वाह्यरुषीरथेहरितोदेवरोहितः ॥ ताभिर्देवाँइहावह ॥ १२, २७, १४ ॥

(प०) युक्ष्व । हि । अरुषीः । रथे । हरितः । देव । रोहितः ॥ ताभिः । देवान् । इह आ । वह ॥ १२ ॥

## ऋग्भाष्यम्

तैर्देवान्यजतः स्तोतॄन्ज्ञातेन ब्रह्मणैधितान् ।
पत्नीभिर्योजयागन्तुं सहमध्वश्च पायय ॥ ७ ॥
ते षष्ठ्यतोनुदात्तः स्यादुदात्तो बहुवाचकः ।
आवृत्तस्तु भवेदर्थस्ते पिबंतु वषट्कृतौ ॥ ८ ॥
सूर्यस्य रोचनात्स्वर्गादावक्षत्यग्निरिन्दुपान् ।
उषः प्रकाशनाद्ब्रह्म तद्विदस्त उषर्बुधः ॥ ९ ॥
देवास्ते विष्णुधामत्वान्मित्रधामान ईरिताः ॥ १० ॥ ॥ ११ ॥
अग्निवाहा अश्वतर्यो दूर्वा पद्माग्निसप्रभाः ।
लोहिताः कचिदश्वाश्च रोहिन्मृग्योपि कुत्रचित् ॥ १२, २७, १४ ॥

## ऋग्भाष्यटीका

तान्यजत्रान् । तैर्देवान् । हे अग्ने य एवंविधा अश्वास्तैर्यजत्रान्विष्णुं यजतः । स्तुत्यर्थो व यजिः । तस्य स्तोतॄन्वा ऋतवृधः ऋतेन सम्यग्ज्ञातेन ब्रह्मणैधितांस्तान्देवान्पत्नीवतस्कृधि कुरु यज्ञं प्रत्यागन्तुं पत्नीभिः सह योजय । पत्नीसहितानुक्तलक्षणैरश्वैरिहानयेति भावः । आनीय च हे सुजिह्वा मध्वो मधुं स्वादुं सोमं पायय । विष्णुपक्षे तु यजत्रानिज्यानिति व्याख्येयम् ॥ ७ ॥

ये यजत्राः । अत्र वीप्सया येय इति द्विर्वचनं दृश्यते यजत्राणामीड्यानां चापृथक्त्वात् । तेन तेत इत्यपि द्विर्वचनमिति प्रतीतिः स्यात् तां निराकर्तुमाह ॥ ते षष्ठीति ॥ अत्र द्वितीयस्तेशब्दः षष्ठी । षष्ठ्येकवचनान्तस्य युष्मदः पदस्यादेशः । कुतः । अत एव ह्यनुदात्तः स्वरः स्यात् । अनुदात्तं सर्वमपादादावित्यादेशस्यैवानुदात्तत्वस्मरणात् । आद्यस्तेशब्दो बहुवाचकः । प्रथमाबहुवचनान्तस्य तच्छब्दस्य रूपम् । कुतः । यत उदात्तः । अन्यथा सोप्यनुदात्तः प्रसज्येतेति । तर्हि येय

इत्यनेनान्वयो नस्यादित्यत आह ॥ आवृत्तस्त्विति ॥ यो बहुवाचकस्तेशब्दः स द्विरावृत्तः करिष्यते । ततश्चार्थोन्वितो(भवति) भवेत् । हे अग्ने यजत्रा यजन्त इज्यावा ईड्याः स्तुत्याश्च ये ये देवाः सन्ति ते ते सर्वे वषट्कृति सम्पदादित्वात्क्विप् । वषट्कृतौ सत्यां ते त्वदीयया जिह्वया मधोः मधु पिबन्तु ॥ ८ ॥

आकीम् ॥ सूर्यस्य । आकीमित्याङर्थे निपातः । होता विप्रोऽग्निः प्रकाशनादुषःशब्देन ब्रह्मोच्यते । तद्विदस्तद्बुध्यन्ति ते उषर्बुधः तान्विश्वान्देवानिन्दुपान् सोमपान्सूर्येणातिशयतः प्रकाश्यमानत्वात् सूर्यस्य रोचनात्स्वर्गादिह यज्ञं प्रत्यावक्षत्यावहेत् ॥ ९ ॥

विश्वेभिः । अत्र मित्रस्य धामभिरित्येतद्व्याचष्टे ॥ देवा इति ॥ विष्णुधामत्वात् मित्रस्य विष्णोरधिष्ठानत्वात् । धामशब्दं पुल्लिङ्गमाश्रित्य मित्रधामान इत्युक्तम् । (यद्वाविष्णुधामत्वान्मित्रधामान इति बहुव्रीहिद्वयम् । तथा सति मित्रेण धाम्ना धामभिर्धामवद्भिरिति व्याख्येयम्) । अग्ने मित्रस्य धामभिर्विश्वेभिर्देवैरिन्द्रेण वायुनाच सह सोम्यं सोमस्वरूपं मधु पिब । इन्द्रवाय्वोः प्राधान्यात्पृथग्ग्रहणम् ॥ १० ॥

त्वं होता । अग्ने मनुर्हितो होता त्वं यज्ञेषु सीदसि यज्ञानामधिष्ठाता भवसि । तस्मात्स त्वं न इममध्वरं यज देवेभ्यो देहि ॥ ११ ॥

युक्ष्व । अत्रारुषीरित्यादिनाग्नेर्वाहनान्युच्यन्ते । तद्विवृणोति ॥ अग्निवाहा इति ॥ हे अग्ने देव त्वं रथे अरुषीररुणा अग्निसप्रभा अश्वतरीर्युक्ष्व संयोजय । अथवा । अरुषीर्लोहिता अश्वाश्च युक्ष्व । हरितो हरिद्वर्णा दूर्वासप्रभा अश्वतरीश्च युक्ष्व । अथवा । रोहितो रोहिन्मृगीर्वा युक्ष्व । ताभिरश्वतरीभी रोहिद्भिर्वा युक्तेन रथेन देवानिह यज्ञे आवह । पद्मसप्रभा इत्यन्यत्रोक्तस्य विवरणम् ॥ १२, २७, १४ ॥

## मन्त्रार्थमञ्जरी

(हे) अग्ने । (ये) एवंविधा अश्वाः । (तान्) तैः (व्यत्ययात्) यजत्रान् विष्णुं यजतः, स्तोतॄनिति वा । ऋतवृधः, ऋतेन सम्यग्ज्ञानरूपेण हरिणैधितान् । तान्, देवान् । पत्नीवतः । कृधि, कुरु, यज्ञं प्रत्यागन्तुं पत्नीभिः सह योजय, पत्नीसहितानुक्तलक्षणैरश्वैरिहानयेति भावः । आनीय च (हे) सुजिह्व । मध्वः, मधु, स्वादु सोमम् । पायय । विष्णुपक्षे तु 'यजत्रान्' इति कर्मणि, 'इज्यान्' इति व्याख्येयम् ॥ ७ ॥

(हे) अग्ने । यजत्राः, यजन्तः, पूर्ववत् इज्या इति वा । ईड्याः, स्तुत्याः । (च) ये ये (देवाः सन्ति) ते (ते) (सर्वे) वषट्कृति, सम्पदादित्वाद्भावे क्विप्, वषट्कृतौ सत्याम् । ते, तव, त्वदीयया । जिह्वया । मधोः, मधु । पिबन्तु । अत्र द्वितीयः, 'ते' इति शब्दः षष्ठ्यन्तः, अनुदात्तत्वात्, आद्यः ('ते' इति शब्दः) प्रथमान्तो द्विरावर्तत इति ज्ञेयम् ॥ ८ ॥

होता विप्रः (अग्निः) उषर्बुधः, प्रकाशरूपत्वादुषर्ब्रह्म, तद्बुध्यन्त इत्युषर्बुधो ब्रह्मविदस्तान् । विश्वान् । देवान्, सोमपान् । सूर्यस्य रोचनात्, सूर्यस्य सम्बन्धेनातिप्रकाशमानत्वेन रोचनपदोक्तात्स्वर्गात् । इह, यज्ञं प्रति । आकीम् वक्षति, आवहेत्, 'आकीम्' इत्याङर्थे निपातः, वहतेः लेटि 'वक्षति' इति रूपम् ॥ ९ ॥

(हे) अग्ने । मित्रस्य धामभिः, 'मित्रं हुवे' इत्यत्रोक्तदिशा मित्रनाम्नो विष्णोर्धामभिरधिष्ठानभूतैः । विश्वेभिः, विश्वैर्देवैः । इन्द्रेण वायुना (च सह) । सोम्यम्, सोमस्वरूपम् । मधु पिब । इन्द्रवाय्वोः प्राधान्यात्पृथगुक्तिः ॥ १० ॥

(हे) अग्ने मनुर्हितः (मनुभ्यो देवेभ्यो हितः) होता त्वम् । यज्ञेषु सीदसि, यज्ञानामधिष्ठाता भवसि । तस्मात् सः (त्वम्) नः इमम् अध्वरम् । यज, देवेभ्यो देहि । 'सोऽचि लोपे चेत्पादपूरणम्' इति 'सेमम्' इति साधु ॥ ११ ॥

(हे अग्ने) देव (त्वम्) हि रथे । अरुषीः, अरुणाः अग्निसप्रभाः अश्वतरीः । युक्ष्व, संयोजय । अथ वा, अरुषीः, लोहिताः अश्वाः । (च) युक्ष्व, युङ्क्ष्व । हरितः, हरिद्वर्णाः दूर्वासप्रभाः अश्वतरीः । (च) (युक्ष्व) रोहितः, रोहिन्मृगीः । (वा) (युक्ष्व) ताभिः, (अश्वाभिः) अश्वतरीभी रोहिद्भिर्वा युक्तेन रथेन । देवान् । इह, यज्ञे । आ वह ॥ १२ ॥ इति सप्तविंशो वर्गः ॥ २७ ॥ चतुर्दशं सूक्तम् ॥ १४ ॥

## पदार्थप्रकाशिका

तान्यजत्रामृतावृधः । उतरत्र सम्बद्ध इत्युक्तमेव विवृणोति । य एवं विधा अश्वा इति द्वितीयायास्तृतीयांतत्वेन विपरिणाम इत्याशयेन तैरित्युक्तम् । विष्णुं यजत इति । यज्ञेन यज्ञमयजन्त देवा इति देवानामपि विष्णुयाजित्वावगमादित्यर्थः । स्तोतॄनिति । तृजंतेन तस्येत्युपपन्नम् । अग्निदेवताकत्वसिध्यर्थमाह । पत्नीसहितानिति । इज्यानिति । विष्णुं यजतः स्तोतॄनित्यर्थायोगादिति भावः । तथाच हे अग्ने जामदग्न्य एवंविधा अश्वास्तैर्यजत्रानिज्यान् ऋतवृधो नित्यवृद्धान् भगवद्रूपविशेषान् पत्नीवतस्कृधीत्यादि योज्यम् ॥ ७ ॥

ये यजत्रा य ईड्याः । ननु यजत्राणां ईड्यानां च देवानां भिन्नत्वात् ये यजत्राः ये च ईड्याः इति योजनायां न वीप्सालाभः । भिन्नव्यक्तिकस्थले वीप्सायाः अदर्शनात् योयो धूमवानिति व्यक्तैक्य एव तद्दर्शनात् । ननु तत्रापि धूमवद्व्यक्तीनां अनेकत्वान्नधूमव्यक्त्यैक्यमिति चेन्न । धूमत्वेन क्रोडीकृतानां धूमवद्व्यक्तीनामनेकत्वादित्यत आह । यजत्राणामीड्यानां चापृथक्-त्वादिति । तथाचात्रापि यजत्रत्वेन ईड्यत्वेन च क्रोडीकृतानां यजत्रेड्यवद्व्यक्तीनाम् ऐक्याद्वीप्सोपपत्तिरिति भावः । अत्र ते षष्ठी अन्त इति पदच्छेदः । तत्रान्त इत्यस्यार्थो द्वितीय इति । युष्मदः परस्येति । तवममौङसि युष्मदस्मदोर्मपर्यन्तस्य तवममादेशविधानात् । युष्मदादेशभूतस्य तवेतिपदस्येत्यर्थः । आदेश इति । युष्मदः पदस्य तेशब्दः आदेशः आदेशभूत इत्यन्वयः । तेमयावैकवचनस्येति सूत्रेण अपादादौ स्थितयोः युष्मदस्मदोः षष्ठी चतुर्थ्यैकवचनान्तयोः ते मे इत्यादेशविधानात् । तव ते तुभ्यं ते मह्यं मे मम मे इति दर्शनात् । युष्मदस्मदादेशभूतस्य तवेत्यस्य त इत्यादेश इत्यर्थः । कुत इति । द्वितीयस्तेशब्दो युष्मदःपदस्यादेश इति कुत इत्यर्थः । अत एवेति । आदेशत्वादेव । अन्यथा स न स्यादिति भावः । संहिताकाले उदात्तादुपरि पठ्यमानः स्वरः स्वरितः । तस्य द्वितीयस्य ते इत्यस्य पदकाले अनुदात्तस्वरदर्शनात् । अनुदात्तस्वरः कुत इत्यत आह । अनुदात्तमिति । आदेशस्य युष्मदः पदादेशभूतस्य ते इत्यस्येत्यर्थः । तच्छब्दस्य रूपमिति । अतः त इति तच्छब्दस्य प्रथमाबहुवचने रूपमित्यर्थः । कुत इति । तच्छब्दस्य रूपं कुतः युष्मदः पदादेश एव किं न स्यादित्यर्थः । उदात्त इति । संहितापदकाले चोदात्तस्वरयुक्त इत्यर्थः । अन्यथेति । आद्यस्यापि ते इत्यस्य युष्मदः पदस्यादेशरूपत्वे सोऽप्यनुदात्तस्वरयुक्तः स्यादित्यर्थः ।

तत्रायं भावः । ते ते इत्युभयोरपि तच्छब्दरूपत्वे उभयत्राप्युदात्तस्वर एव स्यात् । नत्वाद्ये उदात्तस्वरो वैदिकैः पठ्यमानो युक्त इति । नचानुदात्तं सर्वमपादादावित्युक्तत्वादस्य च पदादौ सत्वात् कथमिदमापादनमिति वाच्यम् । तर्ह्यपाददावित्युक्तत्वादेव तच्छब्दस्य रूपं कुतः युष्मदः पदस्यादेश एव किं न स्यादिति शंकाया एवायोगात् । तस्मादपादादाविति नञा निर्दिष्ट-मनित्यमित्याश्रित्य छान्दसत्वेन लाक्षणिकमेव वा युष्मदादेशत्वं त्वया शङ्क्यम् । तथैवानुदात्तत्वमप्यस्माभिरप्यापाद्यते । अपादादाविति । निषेधस्य नञा निर्दिष्टतया अनित्यत्वेन छान्दसत्वेन वाऽत्र प्रवृत्तेरित्याशयात् । अन्वयो न स्यादिति । ये य इति पदद्वयस्य त इत्यनेनान्वयो न युक्त इत्यर्थः । तेशब्द इति । आद्य इत्यर्थः । यजन्तः यजनकर्तारः । स्तुत्याश्च येदेवाः इत्यनेन यजत्राणामीड्यानां पृथक्त्वं दर्शितमिति भवति । तच्छब्दस्य द्विरावृत्तेरुक्तत्वादाह । तत इति ।

भगवद्रूपाभिप्रायेणाह । इज्येति । सम्पदादित्वादिति । वषट्कृच्छब्दात् क्विपि तस्य लोपे वषट्कृदिति रूपम् । तस्य सप्तमी वषट्कृतीति भवतीति भावः । वषट्कृतौ सत्यामिति । वषट्कारयुक्तमन्त्रैरवदानानन्तरमित्यर्थः । त इत्यस्यार्थः त्वदीयेति । षष्ठी द्वितीयार्थ इत्याह । मधोर्मध्विति । स्वादुभूतसोमरसमित्यर्थः ॥ ८ ॥

आकीं सूर्यस्य रोचनात् । तद्बुध्यन्तीति । भगवद्ज्ञानिन इत्यर्थः । तत् बुद्धौ बुध इति । बुच्छब्दस्य द्वितीयाबहुवचनं बुध इति भवतीति ज्ञातव्यम् । विश्वान्देवान् इत्युक्त्या असोमपानामपि यज्ञे सोमपानमस्तीति शङ्कावारणाय इन्दुपानिति ऋचि विशेष इत्याशयवानाह । इन्दुपानिति । सूर्येणेत्यादि । लक्षलक्षयोजनोच्छ्रितांतरिक्षोपरितनभागस्य द्युत्वात्तत्र सूर्यप्रकाशसद्भावादिदं युक्तम् । यद्वा सूर्येण सूर्यापेक्षयाप्यतिशयेनेत्यर्थः । इहेत्यस्यार्थो यज्ञं प्रतीति । आकीं वक्ष्यतीत्यस्यार्थः आवक्षतीति । तस्याप्यर्थमाह । आवहेदिति । तथाच लट्लिङर्थ इत्युक्तं भवतीति भावः ॥ ९ ॥

विश्वेभिः सोम्यं मधु । सोमस्वरूपं सोमाख्यम् । विश्वेभिरित्युक्त्यैवेन्द्रवाय्वोरपि प्राप्तत्वादिन्द्रेण वायुनेति पृथग्ग्रहणं व्यर्थमित्यत आह । अत्रेति । अत्र सोमपेषु देवेष्वित्यर्थः ॥ १० ॥

त्वंहोतामनुर्हितः । मनुहित इति । मनूनां ज्ञानिनां हित इत्यर्थः । यज्ञानामधिष्ठातेति । यज्ञानधिकृत्य विद्यमान इत्यर्थः । यज देवपूजासङ्गतिदानकरणेष्विति धातोराह । देहीति । सम्प्रदाने चतुर्थीदर्शनात् देवेभ्य इति पूरितमित्यवगन्तव्यम् ॥ ११ ॥

युक्ष्वा ह्यरुषी रथे । अग्नेर्वाहनानि अश्वतर्यः । अश्व्यः रोहिन्मृग्यश्च स्त्रीभूताः एवं सति तद्विशेषणान्यरुषीरित्यादिनोच्यन्ते । तत्र अरुषीरित्येतदश्वतरीणां अश्वीणां च विशेषणम् । हरित इत्येतदश्वतरीणामेव रोहित इत्येतद्रोहिन्मृगीणां विशेषणं इत्याशयेनाह । अरुषीररूणीरित्यादिना । अश्वाश्चेति । अश्वा अश्वे अश्वाः इति शब्दस्य द्वितीयाबहुवचनमिदम् । अश्वीरित्यर्थः । ताभिरश्वतरीभिरिति । अग्निसमप्रभत्वादरुषीर्वा दूर्वासमप्रभत्वाद्धरिद्भिरश्वतरिभिरित्यर्थः । उपलक्षणमेतत् । अग्निसमप्रभत्वात् अरुषीभिरश्वाभिश्चेति द्रष्टव्यम् । रोहिद्भिर्वेति । रोहिन्मृगभिरित्यर्थः । क्वचित् ग्रन्थान्तरे अग्निवाहानां पद्मसप्रभत्वोक्तेस्तदविरोधाय पद्मसप्रभा इत्युक्तं भाष्ये । अतो न वैय्यर्थम् । तदंशस्येत्याह । पद्मसप्रभा इति ॥ १२-२७-१४ ॥

## पदार्थदीपिका

॥ यजत्रानिति ॥ अमिनक्षि यजिवधियतिभ्योऽत्रन्निति यजेः कर्तरि अत्रप्रत्यय इति भावः । ॥ विष्णुमिति ॥ न लोकेति षष्ठी निषेधात् द्वितीयान्तशेषपूरणमिति बोध्यम् ॥ पत्नीवत इति ॥

पत्युर्नो यज्ञसंयोग इति ङीप् । इकारस्य नकारः ता एषां सन्तीति मतुप् । छन्दसीर इति वत्वमिति ज्ञेयम् ॥ कः करत्कर इति । कृधिकृतेष्वनदितेयित्विति विसर्जनीयस्य सत्वमिति भावः ॥ कृधीति ॥ कृञो लोटः सिः । सेर्ह्यपिच्चेति सेर्हिरादेशः । बहुलं छन्दसीति विकरणस्य लुक् । श्रुश्रुणुपृकृवृभ्यश्छन्दसीति हेर्धिरादेशः । ङित्वात् गुणाभाव इति भावः । कुरु । उतश्च प्रत्ययादसंयोग पूर्वादिति हेर्लुगिति भावः । पाययेति । पापाने पिब प्रयुक्त इति । हेतुमति चेति णिच् । शाछासाह्वाव्यया युगिति युगिति भावः । ननु देवानां यष्टृत्वं स्तोतृत्वं वा सम्भवतीति यजत्रानिति युक्तम् । विष्णुपक्षे तु कथम् । तस्यान्यमुद्दिश्य फलाद्यर्थं यष्टृत्वाद्यभावात् इत्यत्राह ॥ विष्णुपक्षे त्विति ॥ कर्मण्यन् प्रत्यय इति भावः । यद्यपि देवतान्तरपक्षेऽप्येवं व्याख्यातुं शक्यं तथापि इज्यदेवताक यागादिना ज्ञानेन ब्रह्मणैधितानति विशेषणयोर्हेतुहेतुमद्भावेनार्थविशेषलाभात् देवतापक्षे भाष्येऽन्यथा व्याख्यातमिति भावः ॥ ७ ॥

ननु कथमत्र वीप्सायां द्विर्वचनम् । ये अग्निदग्धा ये अनग्निदग्धा इत्यादिवदधिकरणेषु पृथग्विशेषणसम्बन्धात् इत्यत आह ॥ यजत्राणामिति ॥ भवेदत्र वीप्साविरहः यद्यग्निदग्धा इत्यादौ विरोधेन अग्निदग्धानग्निदग्धानामैक्याभावेन ये अग्निदग्धा अनग्निदग्धाश्चेत्येवं रूपान्वया-सम्भववत् प्रकृतेऽन्वयासम्भवः स्यात् । न चैवं यजत्रत्वेड्यत्वयोर्विरोधाभावेन यजत्राणामीड्यानां च ऐक्यात् ये ये यजत्रा इड्याश्चेत्यन्वयसम्भवात् वीप्सायां द्विर्वचनमिति भावः । षष्ठ्यन्तत्वमनुदात्तत्वेहेतुरिति भ्रान्तिं निवारयितुं यथावत् व्याचष्टे ॥ अत्रेति ॥ अप्रयोजकत्वं परिहरति ॥ अनुदात्तमिति ॥ पदस्य पदादनुदात्तं सर्वमपादादाविति वर्तमाने ते मयावेकवचनस्येति षष्ठ्येकवचनान्तस्य युष्मदः पदस्य ते इत्यादेशविधानेन तस्यैवानुदात्तत्व स्मरणादित्यर्थः । तथा चानुदात्तत्वानुपपत्तिरेव विपक्षे बाधिकेति नाप्रयोजकत्वमिति भावः । न चात्र द्वितीयस्य ते शब्दस्यानुदात्तत्वान्यथानुपपत्या षष्ठ्यन्तत्वाश्रयणं न युक्तम् । प्रथमस्य ते शब्दस्य तच्छब्दप्रथमाबहुवचनान्तस्यैव नित्यवीप्सयोरित्यनेन द्विर्वचनं विधाय तस्य परमाम्रेडित मित्यनेन परस्याम्रेडितसंज्ञायां अनुदात्तं चेत्यनुदात्तत्वसम्भवेन षष्ठ्यन्तत्वं विनापि तदुपपत्तेरिति वाच्यम् । तथा ते तुञ्जे योगे इत्यादिवदवग्रहस्वरयोरापत्या तद्रहितासंसृष्टभिन्नपदपाठो न स्यात् । जिह्वयेत्यत्रापेक्षितषष्ठ्यन्ताध्याहारापत्तेश्चेक्तमेव युक्तमिति भावः ॥ अन्यथेति ॥ यदि प्रथमाबहु-वचनान्ततच्छब्दरूपं न स्यात् इत्यर्थः । न चापादादिस्थस्यैवानुदात्तत्वविधानात् आद्यस्य तेशब्दस्य पदादिस्थत्वात् कथमनुदात्तत्वापादनमिति वाच्यम् । पादादिस्थत्वेऽपि ते इत्यादेशवदनु-दात्तत्वस्यापि सम्भवात् । अन्यथा ते इत्यादेशस्यापि अपादादिस्थत्वे एव विधानात् पादादिस्थत्वे

कथं ते इत्यादेशोऽपि स्यात् । यदि च तत्र नञा निर्दिष्टमनित्यमित्यभियुक्तैः अङ्गीक
पादादिस्थत्वेऽपि ते इत्यादेश इति मन्यसे तर्हि तत एव पादादिस्थत्वेप्यनुदात्तत्वं स्यात्
युक्तमेवापादनमिति भावः । तथा चोदात्तत्वरूपहेतूच्छित्तिरेव विपक्षे बाधिकेति नाप्रयोज
त्वमिति बोध्यम् ।। तर्हीति ।। यद्याद्यमेव ते पदं प्रथमाबहुवचनान्तपुल्लिङ्गतच्छब्दरूपं न तु द्वि
तर्हि तेते इति पदद्वयस्य ये ये इति पदद्वयेनान्वयो न स्यात् इत्यर्थः । ततश्च ये ये इत्ये
नन्वितं स्यादिति भावः ।। स द्विरावृत्त इति ।। तेभिः स्वरालसुनीतिमेतामित्यत्रत्यस्ते
शब्दो यथेत्यर्थः ।। ८ ।।

।। तद्बुध्यन्तीति ।। क्विप् । कर्तरि क्विबिति भावः । स्वतः प्रकाशमानस्य स्वर्गस्य
सूर्येणेत्यत आह ।। अतिशयतः प्रकाशमानत्वादिति ।। रोचनादिति ।। अनुदात्तेतश्च हलादे
यच् प्रत्यय इति भावः । आवक्ष्यतीति । वहेः प्रार्थनायां लिङर्थे लेट् । तस्य तिप् । कर्तरि श
शपि परतः बहुलं छन्दसीति सिप् । ढत्वकत्वषत्वानीति बोध्यम् । आवक्ष्यतीत्यतः प्राग्भ
आवहेदिति व्याख्यातत्वात् तदभिप्रायेण तथैव व्याचष्टे ।। आवहेदिति ।। ९ ।।

।। पुल्लिङ्गमाश्रित्येति ।। धा धातोरातो मनिन् क्वनिब्वनिपश्चेति मनिन्निति भावः ।। सोम्यं
स्वरूपमिति ।। सोमशब्दस्य यत्प्रत्ययस्य चानुवृत्तौ मये चेति मयडर्थे यत्प्रत्ययविधानात् तादात्म
विकारार्थे इति वचनेन तादात्म्यस्यापि मयडर्थत्वात् तादात्म्यार्थे सोमशब्दात् यत्प्रत्यय इति भ
।। प्राधान्यादिति । इन्द्रस्याधिपत्येन वायोस्तु स्वरूपेण प्राधान्यादित्यर्थः ।। १० ।।

सेममित्यत्र संहितायां सोचिलोपे चेत्पादपूरणमिति सोर्लोपे गुणः । नो अध्वरमित
संहितायाम् एङः पदान्तादतीति पूर्वरूपत्वं प्राप्तम् । प्रकृत्या तं पादमव्यपरे इति प्रकृतिभा
निवर्तत इति बोध्यम् ।। ११ ।।

वाहनानीति ।। अग्निवाहा इति भाष्यस्थो वाहशब्दो वहन्तीति वाहा इति यो
वाहनमात्रपरः, न तु रूढ्याश्वपर इति भावः ।। अरुषीरिति ।। श्रौतं पदं अग्निसप्रभा
भाष्यखण्डेन विवृतमित्याहारुषीरित्यादिना । अरुषीरित्येतदेव लोहिता इत्यादिना भाष्
प्रकारान्तरेण विवृतमित्याह ।। अथवेति ।। अश्वस्येति ।। वडवा इत्यर्थः । अत्राश्वतरीश
रासभान्तरजातिमानित्यमरः । अश्वाशब्दश्च अश्वस्त्रीपर इति भेदः ।। युक्ष्वेति ।। युजेर्लोट् । त
स्वरितेत्वादात्मनेपदं थासः से । सवाभ्यां वामौ । रुधादिभ्यः श्नम् । तस्य बाहुलत्
लुक् कुत्वषत्वे इति भावः । संहितायां द्व्यचोचस्तिङ इति दीर्घः । देवानित
पुर्ववदुत्वानुनासिकाविति बोध्यम् ।। १२,२७, १४ ।।

## टीकाविवृतिः

तान्यजत्रान् । श्रौततानित्यस्य विभक्तिव्यत्ययमाश्रित्य पूर्वऋङ्निष्ठयच्छब्दान्वयं दर्शयति ॥ य एवमिति ॥ यजत्रानिति ॥ यजेः अमिनक्षियजिवधिपतिभ्योऽत्रन्नित्यत्रन्प्रत्ययः कर्तरि कर्मणिवा । स्तुत्यर्थोवेति ॥ यजदेवपूजेत्युक्तेः स्तुतेरपि देवपूजारूपत्वादिति भावः ॥ सम्यग्ज्ञातेनेति ॥ ऋगतिप्रापणयोरिति धातोरिति भावः ॥ पत्नीवतस्कृधीति ॥ श्रुतौ कः करत्करतीत्यनेन कापवादो विसर्गस्य सः । पत्नीवत्त्वस्य पूर्वमेव सिद्धत्वात्कुर्विति प्रार्थना सम्भवाद्भाष्ये तत्तात्पर्यं पत्नीभिर्योजयेत्युक्तं तच्च पत्नीभिस्तेषां वियोगाभावाद्बाधितमतोऽभिप्रायमाह ॥ पत्नीसहितानिति ॥ विष्णोर्यागस्तुतिकर्तृत्वासम्भवात्तत्पक्षे कर्मण्यत्र प्रत्ययमाश्रित्याह । विष्णुपक्षेत्विति ॥ ७ ॥

येयजत्राः ॥ ये अग्निदग्धाये अनग्दिदग्धा इत्यादौ येय इति द्विर्वचनस्य वीप्सार्थ त्वादर्शनात्कथमत्र वीप्सार्थतेत्यत आह ॥ यजत्राणामिति ॥ अग्निदग्धत्वानग्निदग्धत्वयोर्विरोधे नैकाधिकरणत्वासम्भवादत्र यजत्रत्वेड्यत्वयोस्सामानाधिकरण्यसम्भवाद्वैषम्यमिति भावः । तेशब्दस्य षष्ठ्यंतत्वेनानुदात्तत्वं साध्यत इति भ्रांतिवारणाय यथावद्व्याख्याति ॥ अत्रेति ॥ षष्ठी षष्ठ्यन्त इत्यर्थः ॥ पदस्यादेश इति ॥ पदस्य पदादित्यनुवृत्तौ तेमयावेकवचनस्येति त इत्यादेश विधानादित्यर्थः । अत एव हीति ॥ षष्ठ्यन्तयुष्मदादेशत्वादेव हियस्मात्त इत्यस्यानुदात्तरूपः स्वरः स्यात्तथाचानुदात्तत्वं षष्ठ्यन्तत्वे हेतुरिति भावः ॥ अनुदात्तमिति ॥ अस्य सूत्रस्याप्यादेश विधानेऽनुवृत्तेरिति भावः ॥ इदं सर्वं तस्य परमाम्रेडितं अनुदात्तं चेत्येतदनाश्रित्योक्त मर्थविशेषलाभाय । तदाश्रयणेहि सूत्रद्वयेन द्विरुक्तस्य यद्वितीयं शब्दरूपं तस्याम्रेडित संज्ञानुदात्तत्वयोर्विधानादस्य तच्छब्दरूपत्वेप्यनुदात्तत्वस्य सिद्धत्वादिति रहस्यम् ॥ प्रथमते शब्दस्य तच्छब्दरूपत्वे पादादित्वं हेतुः युष्मच्छब्दरूपत्वे ह्यपादादाविति निषेधः स्यादिति युक्तेः स्पष्टत्वेन तदनुक्त्वा यत इति तच्छब्दत्वादेव हि उदात्तः । तथाचोदात्तत्वात्तच्छब्दरूपमिति भावः ॥ नञा निर्दिष्टमनित्यमित्यपादादावित्यस्यानित्यत्वेन त इत्यस्य युष्मदादेशत्वाङ्गीकारे बाधकमाह ॥ अन्यथेति ॥ अनुदात्तस्वरसहितस्यैव ते इत्यादेशस्य विधानादनुदात्तस्वरानङ्गीकारे तत्सन्नियोगशिष्टतइत्यादेशस्यापि सन्नियोगशिष्टानां सहवाप्रवृत्तिः सहवानिवृत्तिरिति परिभाषया निवृत्तिः स्यादिति भावः । तर्हीति ॥ यदि तेशब्दद्वयस्य भिन्नप्रकृतिकत्वमाश्रित्य वीप्सार्थतानाङ्गीक्रियेत तर्हि येय इति वीप्सार्थेन त इत्यस्यान्वयो नस्यादिति भावः ॥ सम्पदादित्वादिति ॥ भाव इति शेषः । वषट्कृताविति ॥ वषट्करणे वषडित्युच्चारणे इति यावत् ॥ ८ ॥

आकींसूर्यस्य । आङर्थ इति ।। क्रियाया अतिशयद्योतनाय क्रियायोग रूप इत्यर्थः । सूर्यस्य रोचनादित्यनेन स्वप्रकाशत्वात्सूर्यप्रकाश्यत्वं कथमित्यतो विभक्तिव्यत्ययार्थमाह ।। अतिशयत इति ।। रोचनादिति ।। अनुदात्तेतश्च हलादेरितियुच् । वहेर्लेटि सिप्प्रत्यये तिपि आडागमे ढत्वकत्वषत्वेषु वक्षतीति रूपसिद्धिं मत्त्वाह ।। आवक्षत्यावहेदिति ।। ९ ।।

विश्वेभिः सोम्यम् ।। ननु श्रुतौ मित्र धामान इति शब्दाभावात्कस्येदं व्याख्यानमित्यत आह ।। अत्रेति ।। मनूद्व्यच्कोऽकर्तरीति लिङ्गानुशासनसूत्राद्धामशब्दस्य नपुंसकत्वान्मित्रधामान इति कथमित्यत आह ।। धाम शब्दमिति ।। शलाकानित्यं स्त्रियामित्यत्र नित्यग्रहणेन विनापि स्त्रीत्वस्य नित्यत्वसिद्धेः पुनर्नित्यग्रहणेनान्यलिङ्गविधेरनित्यत्वज्ञापनान्मनूद्व्यच्क इत्यस्यानित्यत्वात् पुल्लिंगत्वमिति भावः ।। तथासतीति ।। श्रुतौ मित्रस्येति षष्ठ्याः शेषषष्ठीत्वात्तृतीयार्थत्वं धामभिरित्यस्य मतुबर्थे लक्षणेति भावः ।। सोम्यमिति ।। सोमशब्दात्सोममर्हति य इति यप्रत्ययाधिकारात् मयेचेति मयडर्थे यप्रत्यये मयटस्तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधेत्युक्तेः स्वरूपार्थत्वाद्यप्रत्ययस्य स्वरूपार्थत्वमिति भावः ।। विश्वेभिरित्यनेनेन्द्रवाय्वोर्ग्रहणसिद्धेरिन्द्रेण वायुनेति पुनरुक्तिरित्यत आह ।। प्राधान्यादिति ।। वायोः सर्वाधिकार्युत्तमत्वादिन्द्रस्य स्वर्गस्थदेवोत्तमत्वादिति भावः ।। १० ।।

त्वंहोता ।। मनुर्हित इति ।। मनुभ्योदेवेभ्योहित इति हेतुगर्भविशेषणम् । देवहितत्वाद्यज्ञे देवार्थमधिष्ठाता भूत्वा यज्ञं तेभ्यो देहीति भावः । सेममित्यत्र सोचिलोपेचेत्पाद पूरणमिति सुलोपे आद्गुण इति गुणः । नो अध्वरमित्यत्र प्रकृत्यान्तःपादमव्यपर इति प्रकृतिभावो ज्ञेयः ।। ११ ।।

युक्ष्वाह्यरुषीः ।। भाष्योक्तस्याग्निवाहा इति पदस्थवाहशब्दस्य वाजिवाहार्व गन्धर्वेत्यभिधानादश्वार्थत्वभ्रान्तिं वारयितुमाह ।। अत्रेति ।। प्रथमार्ध इत्यर्थः । तथाचाग्निं वहन्तीत्यग्निवाहा इति यौगिकोयं गृह्यते न रूढ इति भावः ।। अरुषीररुणा इति ।। पॄनहिकलिभ्य उषजित्युक्त उषच् बाहुलकत्वाद्दगतावित्यतोपि भवति ततः शार्ङरवादेराकृतिगणत्वात् ङीनि अरुषीरिति रूपमिति भावः ।। अरुषीशब्दस्य लोहितार्थत्वं त्वर्तेरुनन्प्रत्यये निष्पन्नारुण शब्दे दृष्टत्वादस्याप्यर्तिप्रकृतिकत्वाज्ज्ञेयम् । रोहित इत्येतत्तकारान्तत्वादभिधाने रोहितो लोहितो रक्त इत्यकारान्तरोहितशब्दस्य रक्तवर्णार्थत्वोक्तेर्न लोहितार्थकत्वेन व्याख्यातम् ।। अस्य तात्पर्यार्थोऽग्निसप्रभा इति भाष्योक्तिरिति भावः । अश्वतरीरिति ।। गर्दभजातिविशेषः । कर्नाटकभाषया हासरकत्ते इति महाराष्ट्रभाषया वेसरसत्युच्यते ।। अश्वाश्चेति ।। स्त्रीरूपा अश्वागृह्यन्ते । स्त्रीलिङ्गप्रयोगादिति भावः

॥ अश्वतरीश्चेति ॥ चशब्दादश्वग्रहणम् । अश्वतरीभिरिति ॥ इदमुपलक्षणम् । अश्वाभिरित्यपि बोध्यम् । पद्मसप्रभा इति भाष्यस्थपदस्य श्रौतं व्याख्येयं न प्रतीयत इत्यत आह ॥ पद्मसप्रभा इतीति ॥ तथाच प्रसङ्गात्स्थलांतरस्थ रक्तादिपदविवरणमिति भावः । अव्यक्तरागस्त्वरुण-इत्यभिधानादरुषीरित्यनेनेषद्रक्तत्वं विवक्षितमिति न तस्येदं विवरणम् । अत एवाग्निसप्रभाइति तत्रोक्तमिति भावः ॥ १२, २८, १४ ॥ सप्तविंशतितमोवर्गः ॥

## ऋक्संहिता पदपाठसहिता

(१४७) इन्द्रसोमंपिबंऋतुनात्वाविशन्त्विंदवः ॥ मत्सरासस्तदोकसः ॥ १ ॥

(प०) इन्द्र । सोमम् । पिब । ऋतुना । आ । त्वा । विशन्तु । इंदवः ॥ मत्सरासः । तत्ऽओकसः ॥ १ ॥

(१४८) मरुतःपिबतऋतुनापोत्राद्यज्ञंपुनीतन ॥ यूयंहिष्ठासुदानवः ॥ २ ॥

(प०) मरुतः । पिबत । ऋतुना । पोत्रात् । यज्ञम् । पुनीतन ॥ यूयम् । हि । स्थ । सुऽदानवः ॥ २ ॥

(१४९) अभियज्ञंगृणीहिनोग्नावोनेष्टःपिबऋतुना ॥ त्वंहिरत्नधाअसि ॥ ३ ॥

(प०) अभि । यज्ञम् । गृणीहि । नः । ग्नावः । नेष्टरिति । पिब । ऋतुना ॥ त्वम् । हि । रत्नऽधाः । असि ॥

(१५०) अग्नेदेवाँइहावहसादयायोनिषुत्रिषु ॥ परिभूषपिबऋतुना ॥ ४ ॥

(प०) सादय । योनिषु । त्रिषु ॥ परि । भूष । पिब । ऋतुना ॥ ४ ॥

(१५१) ब्राह्मणादिन्द्रराधसःपिबासोममृतूँरनु ॥ तवेद्धिसख्यमस्तृतम् ॥ ५ ॥

(प०) ब्राह्मणात् । इन्द्र । राधसः । पिब । सोमम् । ऋतून् । अनु । तव । इत् । हि । सख्यम् । अस्तृतम् ॥ ५ ॥

(१५२) युवंदक्षंधृतव्रतमित्रावरुणदूळभम् ॥ ऋतुनायज्ञमाशाथे ॥ ६, २८ ॥

(प०) युवम् । दक्षम् । धृतऽव्रता । मित्रावरुणा । दुःऽदभम् ॥ ऋतुना । यज्ञम् । अशाथेइति ॥ ६, २८ ॥

## ऋग्भाष्यम्

ऋतुर्मार्गस्तु नेतृत्वान्नेष्टाग्निर्हरिरेव वा ।
ईष्टेन कश्चिदस्येति ग्रा नद्यश्च समीरिताः ।
गतिशीलत्वतो ग्रास्ता ज्ञातृनेतृत्वतो हरिः ।
गमनान्नयनाद्वा ग्रा ऋतुपात्रमृतुस्तथा ।
सोमास्तदोकसः प्रोक्ता ऋतुपात्रस्थिता यतः ।
पत्नीनेतृत्वतो नेष्टा नेष्टर्त्विक्संप्रकीर्तितः ।
ज्ञापयन्ति स्वलिङ्गानीत्यृतवः षट्प्रकीर्तिताः ।
पावनाच्चैव पोतारो मरुतः पोतृदेवताः ।
अग्निस्तु देवता नेष्टुस्त्वष्टेन्द्रो विष्णुरेव वा ॥ १, २, ३ ॥
वेद्युत्तरा सदश्चैव प्राग्वंशो यो नयः स्मृताः ।
भूष भूष यनो यज्ञम् ॥ ४ ॥
ब्राह्मणाच्छंसि पात्रतः ।
पिबेन्द्र नो राधसोर्थे त्वामनु त्वृतुदेवताः ।
स्तृतं छिन्नमिति प्रोक्तम् ॥ ५ ॥
अस्तभ्यं दुर्दभं स्मृतम् । दक्षाख्यं यजमानं चापीशाथे यज्ञमेव च ।
सोमं पीत्वर्तुपात्रेण सहवातेन चर्तुना ॥ ६, २८ ॥

## ऋग्भाष्यटीका

इन्द्रसोमम् । द्वादशर्चमेतत्सूक्तमृतव्यम् । अवान्तरदेवताभेदश्च तत्र तत्र द्रष्टव्यः । अस्मिन्नृतुशब्दो बहुः श्रूयते । तस्य तावत्सामान्यतोर्थमाह ॥ ऋतुर्मार्ग इति ॥ ऋगतौ । अस्मात्करणेक्तुप्रत्ययः । मार्गश्चादित्यस्येति विशेष्टुं तुशब्दः । तथाचादित्यमार्गस्थाः कालदेवता ऋतुशब्दा इत्यर्थः । अभियज्ञमित्यस्यामृचि नेष्टः पिबेत्युच्यते । ऋत्विग्विशेषस्य च नेष्टुः सोमपानप्रार्थनं न सङ्गतमित्यत आह ॥ नेतृत्वादिति ॥ नयतेःषुगिति नयतेस्तृन् षुगागमश्च । ईष्टे न कश्चिदस्येत्यतश्च नेष्टा हरिः । न विद्यते ईष्टा ईशिता यस्यासौ नेष्टेत्यर्थः । तस्यामेवर्चि ग्राशब्दं व्याचष्टे ॥ ग्राइति ॥ चशब्दाद्धरिश्च । तत्कथमित्यत आह ॥ गतीति ॥ गमेस्ताच्छील्येन इतिप्रत्ययो डिच्च । ज्ञातॄणां नेतृत्वतः ज्ञातृत्वतो नेतृत्वतश्चेति वा गमेर्नयतेश्च डः । अनेनैव गमनान्नयनाद्वाग्रा इत्युक्तार्थम् । स्त्रीलिङ्गं बहुवचनं च हरौ व्याख्यातमेव । ऋतुशब्देन यदि देवताः

स्वीक्रियन्ते तर्हि मत्सरासस्तदोकस इत्यनुपपन्नं स्यात् । तदिति परामर्शस्य विषयाभावादित्यत आह ॥ ऋतुपात्रमिति ॥ सत्यमृतुशब्देन देवतोच्यते । किं तूपलक्षणया तत्रतद्देवतापात्रमपि गृह्यते । ततश्च किमित्यत आह ॥ तथेति ॥ तथा तथासति ऋतुशब्देन ऋतुपात्रग्रहणे सति यत्सोमास्तदोकसः प्रोक्तास्तद्युक्तमेव । कथमित्यत आह ॥ ऋतुपात्रेति ॥ नेष्टाग्निरिति नेष्टृदेवतात्वाभिप्रायेणाप्युक्तम् । तथाच वक्ष्यति । तत्र नेष्टापि कस्मान्नेष्टोच्यत इत्यत आह ॥ पत्नीति ॥ अनेन ग्नाशब्दस्य स्त्रीवाचित्वव्याख्यानमपि निरस्तं भवति । स्त्रीनामसु पठितत्वेपि ग्नावो नेष्टारित्यनर्थान्तरत्वप्रसङ्गात् । ऋतुशब्दो मार्गवाची तत्रत्या देवता लक्षणया तच्छब्दा इत्युक्तम् । इदानीमृतुशब्दं देवतास्वेव निर्वक्ति । ज्ञापयन्तीति ॥ अनेन धातुरन्तर्णीतण्यर्थ इत्युक्तं भवति । यद्वा करण एवप्रत्ययो ज्ञापयन्तीति तु तात्पर्यार्थः । स्वलिङ्गानि कुसुमोद्भवादीनि । अथवा । पूर्वमृतुशब्दो मार्ग एव निरुक्तः इदानीं पुनर्ऋतुदेवतास्विति भेदः । मरुतः पिबतेत्यत्र मारुतेन पात्रेणेति वक्तव्यं पोत्रादिति कथमुच्यते । मैवम् । पोतृशब्देन मरुतां विवक्षितत्वात् तदीयस्य पात्रस्य पोत्रशब्दार्थत्वादित्याशयेनाह ॥ पावनादिति ॥ पोतृदेवताः अतश्च पोतारः । नेष्टृशब्दस्याग्नाविष्ण्वोः प्रवृत्तौ कारणमुक्तं कारणान्तरं च वदन्नभिधेयान्तरमप्याह ॥ अग्निस्त्विति ॥ ततश्चायमर्थः ॥ इन्द्रसोमम् । हे इन्द्र ऋतुना मार्गेणागत्य ऋतुना पात्रेण ऋतुना ऋतुदेवतया सह सोमं पिब । तदोकसस्तदृतुपात्रमोको येषान्ते ऋतुपात्रस्थिता इति यावत् । मत्सरा इन्दवः सोमास्त्वामाविशन्तु त्वदुदरस्था भवन्तु ॥ १ ॥

मरुतः ॥ हेमरुतः ऋतुना पूर्ववत् । पोत्रात्पोतॄणां भवतां सम्बन्धिनः । पात्राच्च तृतीयार्थे पञ्चमी पिबत सोममिति शेषः । पीत्वाच यज्ञं पुनीतन पावयत । ततश्च यूयं हि यस्मात्सुदानवः सुदानशीलाः स्थ तस्मादस्मभ्यमभिमतं दत्तेति ॥ २ ॥

अभियज्ञम् । हे नेष्टः विष्णो इन्द्र अग्ने त्वष्टुर्वा ग्ना नद्यस्ता अस्य सन्तीति ग्नावान् तस्य सम्बुद्धिर्ग्नावः । नदीदेवताभिः सहित । ऋतुना पूर्ववत् । पिब सोमं पीत्वाच नो यज्ञमभिगृणीहि साधुरयमिति । त्वं हि यस्माद्रत्नधाः रतिधारकोसि तस्मादस्मभ्यं रतिं देहीति भावः ॥ ३ ॥

अग्नेदेवान् । हे अग्ने देवान् इह यज्ञे आवह । आगतांश्च त्रिषु तिसृषु योनिषु स्थानेषु सादयोपवेशय । तत्र कास्ता योनय इत्यत आह । वेद्युत्तरेति ॥ एवशब्देन सवनत्रयं निराचष्टे । स्थानशब्दस्य कालेऽनिरूढत्वात् । भूषेत्येतदन्तर्णीतण्यर्थमिति दर्शयंस्तस्य कर्मापेक्षत्वात्तद्दर्शयति ॥ भूषेति ॥ देवानामुपवेशनेन नो यज्ञं परिभूषय । पिब ऋतुनेति गतार्थम् ॥ ४ ॥

ब्राह्मणात्। ब्राह्मणाच्छंसि। हे इन्द्रत्वं राधसः। नो राधसोर्थे ऋतूननु ऋतुदेवता अनु अत्र ऋतुदेवतानामिन्द्रस्य च साहित्यमात्रं विवक्षितं न पुनरिन्द्रस्याप्राधान्यमित्यभिप्रायेण त्वामन्वृतु-देवता इति व्यत्यासेन व्याख्यातम्। ऋतुदेवताभिः सहेति यावत्। ब्राह्मणात् ब्रह्मेति ब्राह्मणा-च्छंस्युच्यते तस्येदं ब्राह्मणं ब्राह्मणाच्छंसि पात्रेणसोमं पिब। हि यस्मात्तवेत्तवैव सख्यमस्तृतम्। स्तृतं छिन्नमिति प्रोक्तम्। अस्तृतमच्छिन्नं तस्मादस्मत्सखा त्वं सोमं पिबेति ॥ ५ ॥

युवं दक्षम्। अस्तभ्यम्। हेमित्रावरुणौ धृतं व्रतं जगद्रक्षादिकं कर्म याभ्यां तौ धृतव्रतौ युवं युवामेव ऋतुना ऋतुपात्रेण सोमं पीत्वेति शेषः। दुर्दभमस्तभ्यं स्वकर्मणि तिष्ठन्तं दक्षाख्यं यजमानं च यज्ञं चाशाथे ईशाथे तदीयसोमपानेन प्रसन्नौ पुनस्तं प्रवर्तयथः। ऋतुनेत्येतत्सोमं पीत्वेत्यध्याहारेण योजितम्। अध्याहारमन्तरेणापि व्याचष्टे। सहवेति ॥ ऋतुना ऋतुदेवतया सापि यजमानस्य यज्ञस्य चेष्ट इति ॥ ६, २८ ॥

## मन्त्रार्थमञ्जरी

अथ 'इन्द्र सोमम्' इति पञ्चदशं द्वादशर्चं वर्गद्वयात्मकमृतव्यं (ऋतुदेवताकम्) गायत्रीछन्दस्कं सूक्तम्। अवान्तरदेवताभेदश्च तत्र तत्र ज्ञेयः। (तत्र) (आद्या तावदिन्द्रदेवतकापि) (हे) इन्द्र। ऋतुना, गतिहेतुत्वनिमित्तेन ऋतुशब्दित मार्गेण, गत्येति यावत्। ऋतुना, पुष्पोद्भवादिस्वलिङ्गावगतिहेतुत्वहेतुना ऋतुनामकऋतुदेवतया सह। ऋतुना, लक्षणया ऋतुसंबन्धिपात्रेण। सोमम् पिब, इत्यृतुपदस्यार्थत्रयम्, 'ऋ गतौ' इत्यतः करणे तुप्रत्ययः। तदोकसः, तदृतुपात्रमोको येषां ते तदोकसः ऋतुपात्रस्थाः। मत्सरासः, प्राग्वत् इंदवः। त्वा आ विशन्तु, त्वदुदरस्था भवन्तु ॥ १ ॥

(हे) मरुतः। ऋतुना, प्राग्वत् पोत्रात्, पावनहेतुना पोतृदैवतात्वहेतुना च पोतृनामकानां भवतां सम्बन्धिनः पात्रात्, तृतीयार्थे पञ्चमी, पोतृपात्रेण। पिबत। (सोमम्) इति शेषः। पीत्वा च यज्ञम्। पुनीतन, पावयत, 'त' इत्यस्य 'तप्तनप्तनथनाश्च' इति तनादेशः ॥ ततश्च यूयम्। हि, यस्मात्। सुदानवः, शोभनदानशीलाः। स्थ, ददातेः नुः, तस्मादस्मभ्यमभिमतं दत्तेत्यभिप्रायः ॥ 'हि ष्ठा' इति सुषामादित्वात्षत्वम् ॥ २ ॥

(तृतीयस्यां विष्णुरिन्द्रोऽग्निस्त्वष्टा वापि देवता) (हे) नेष्टः, नेतृत्वहेतुना नेष्टृः ज्ञातृत्वहेतुना च नेष्टृपदोक्त = विष्णो, इन्द्र, अग्ने, त्वष्टर्वा, 'नयतेः षुक्च' इति तृन्षुगागमश्च, 'पुगन्त' इति

गुणः, ष्टुत्वम् । ग्रावः, गमनशीलत्वाद् ग्रा नद्यः, गमेः नो डिच्च, ग्रा अस्य सन्तीति ग्रावान्, तस्य सम्बुद्धिर्ग्रावन्, 'मतुवसो रुः संबुद्धौ छन्दसि' इति रुः, ग्रावः, नदीदेवीभिः सहित । ऋतुना, प्राग्वत् । पिब (सोमम्) पीत्वा च नः यज्ञम् । अभि गृणीहि, 'साधुरयम्' इति प्रशंसावाक्यं ब्रूहि । त्वम् । हि, यस्मात् । रत्नधाः, रतिधारकः । असि, 'रत्नऽधातमम्' इत्यत्र व्युत्पादितमेवैतत्पदम्, तस्मादस्मभ्यं रतिं देहीति भावः । विष्णौ तु– न विद्यते ईष्टेईशिता यस्यासौ 'नेष्टा' इत्येवं व्युत्पत्त्यन्तरं च ध्येयम् ॥ ३ ॥

(चतुर्थ्यामग्निरपि देवता) (हे) अग्ने देवान् । इह, यज्ञे । आ वह । आगताँश्चत्रिषु, तिसृषु । योनिषु, स्थानेषु, उत्तरवेदिसदःप्राग्वंशेषु । सादय, उपवेशय । परिभूष, देवोपवेशनेन नो यज्ञं परिभूषय । 'पिब ऋतुना' इत्युक्तार्थम् ॥ ४ ॥

(पञ्चम्यपीन्द्रदेवतकापि) (हे) इन्द्र (त्वम्) राधसः, सो राधसोऽर्थे, इष्टसिद्ध्यर्थम् । ऋतून् अनु, ऋतुदेवताभिः सहेति यावत् । ब्राह्मणात्, 'ब्रह्मा' इति ब्राह्मणाच्छं सिरूपऋत्विग्विशेषः, तस्येदं ब्राह्मणम्, तस्मात्, तृतीयार्थे पञ्चमी, ब्राह्मणाच्छंसिपात्रेण । सोमम् पिब । हि, यस्मात् । तव इत्, तवैव । सख्यम् । अस्तृतम्, अच्छिन्नम्, तस्मादस्माकं सखा त्वं सोमं पिब इति ॥ ५ ॥

(षष्ठ्यां) मित्रावरुणावपि देवते । (हे) मित्रावरुणा, मित्रावरुणौ । धृतव्रता, धृतव्रतौ, धृतं व्रतं जगद्रक्षादिकर्म याभ्यां तौ । युवम्, युवामेव । ऋतुना, पात्रेण । (सोमं पीत्वा) इति शेषः । ऋतुदेवतया सहेति वा । दुर्दभम्, अस्तभ्यम्, स्वकर्मणि निष्ठितम् । दक्षम्, दक्षाख्यं यजमानम् । यज्ञम् । (च) आशाथे, ईशाथे, नियमयथः, ततस्तदीयसोम पानेन प्रसन्नौ पुनस्तं प्रवर्तयथ इति भावः ॥ अत्र 'धृतव्रत' इत्यादौ संहितायां ह्रस्वत्वं दीर्घान्ततया पदच्छेदस्तयोरैक्यद्योतनाय । तच्चैक्यम् = विष्णुरूपयोः स्वरूपैक्यम्, मित्रावरुणयोस्तु मत्यैक्यम्, इति ज्ञेयम् ॥ ६ ॥ इत्यष्टाविंशो वर्गः ॥ २८ ॥

## पदार्थप्रकाशिका

इन्द्रसोमं पिब ऋतुना । इन्द्रसोममित्यनुक्रमणिकां हृदि निधायाह । द्वादशर्चमेतदिति । ऋतव्यम् ऋतुदेवताकमित्यर्थः । अवान्तरेति । ऐन्द्रीमारुतीत्व आग्ने ऐन्द्रीमैत्रावरुणी चतस्रो द्राविणोदसः अश्विनोंते ऋतुदेवताः । सर्वत्रेत्यनुक्रमणिकानुसारेण इन्द्रसोममित्यादि द्वादशर्चमपीन्द्राद्यवान्तरदेवताः ज्ञातव्या इत्यर्थः । अस्मिन् सूक्ते । तुप्रत्यय इति । ऋगतावस्मात् गम्यते अनेनेति करणे त्तुप्रत्यये ककारलोपे ऋतुरिति भवति । कित्वाद्गुणाभावो द्रष्टव्यः । अन्यथा

अर्तुरिति स्यात् । विशेष्टुं विशेषं कथयितुम् । ऋतुशब्दः लक्षणया ऋतुशब्दप्रतिपाद्य इत्यर्थः । न सङ्गतमिति । देवानामेव सोमत्वेन ऋत्विजां तदभावादिति भावः । नयतेस्तृन्निति । तथा च नीञ्प्रापणे ञकारोऽनुबन्धार्थः । नीत्येवधातुः अस्मात् तृन् प्रत्यये नकारलोपे नयतेः षुगित्युणादिसूत्रेण षुगागमे गित्यस्य लोपे नीष् इति जाते इकारस्येकाररूपे गुणे नेष् तृ इति जाते ष्टुत्वे नेष्टिति प्रातिपदिकम् । ईष्टे नकश्चिदिति व्याख्याने विग्रहं दर्शयति । न विद्यत इति । गमेरिति । गमलृगतावित्यस्मात् ताच्छील्यार्थे न प्रत्यये तस्य टित्वाट्टीभूतस्याल इत्यस्य लोपे ततष्टापि ग्नेतिरूपम् । गमेर्नयतेश्चेति । गमलृगतौ । नीञ्प्रापणे आभ्यां उप्रत्यये उभयत्रापि टिलोपे गुन् इति जाते प्रत्ययोकारसम्बन्धे टापि ग्नेति रूपम् । अनेनेति । गमेर्नयतेश्च उ इति साधने-नेत्यर्थः । पूर्वं गमेर्ज्ञानार्थत्वम् । अधुनाऽनुगमनार्थत्वमिति भेदः । स्त्रीलिङ्गमित्यादि । इति स्त्रीलिङ्गम् । बहुवचनं चेत्यर्थः । व्याख्यातमेवेति । स्त्रीरूपत्वात् बहुरूपत्वाच्चेति व्याख्यातमित्यर्थः । विषयाभावादिति । मार्गस्थदेवताया वा तच्छब्देन परामर्शे आर्षसम्भवादिति भावः । तथेत्यनन्तरं सतीति विशेष इत्याह । तथासतीति । वक्ष्यतीति । अग्निस्तु देवता नेष्टुरिते वक्ष्यतीत्यर्थः । नेष्टापीति । ऋत्विगित्यर्थः । अनेनेति । पत्नीनेतृत्वतो नेष्टेति पत्नीनियामकत्वस्य नेष्टृशब्दार्थः तथा कथनेन ग्नाशब्दस्य स्त्रीवाचित्वमङ्गीकृत्य ग्नाः अस्य प्रेर्यत्वेन सन्तीति ग्नावान् । तस्य सम्बुद्धिः ग्नावन्निति व्याख्यानं निरस्तं भवतीत्यर्थः । कथं निरस्तं भवतीति अतः पुनरुक्त्यापत्तेरित्याह । स्त्रीनामस्विति । ग्नाशब्दस्येति शेषः । अतो ग्नाशब्दस्य स्त्र्यर्थत्वमङ्गीकृत्य नद्यर्थत्वमेवानङ्गीकार्यमिति भावः । अनेनेति । ज्ञापयन्तीति वचनेनेत्यर्थः । धातुः ऋगताविति धातुः । प्रत्यय इति पूर्वोक्तः क्तप्रत्यय इत्यर्थः । ऋगतावित्यतः स्वलिङ्गानि गम्यन्ते अनेनेति करणे क्तप्रत्यये ऋत्विति रूपम् । तर्हि ज्ञापयन्तीति कर्त्रर्थप्रदर्शनमसङ्गतमत आह । ज्ञापयन्तीति । करणे कर्तृत्वोपचार इति भावः । ऋतुशब्दो मार्गवाची तत्रत्या देवताः लक्षणया तच्छब्दवाच्याः इति व्याख्यानमभिमान्यधिकरणन्यायविरुद्धं देवतानामेव मुख्यतः शब्दवाच्यत्वादित्यस्वरसादाह । अथवेति । मार्ग एवेति । तत्रत्या देवताः लक्षणया तच्छब्दाः इत्येतन्नाभिप्रेतमिति भावः । तदीयस्य पात्रस्येति पात्रशब्दात्तस्येदमित्यर्थे अप्रत्यये पोतृशब्दस्तदीयपात्रवाचीत्यर्थः । आहेति । मरुतां पोतृशब्दवाच्यत्वे निमित्तमाहेत्यर्थः । कारणमुक्तमिति । नेतृत्वान्नेष्टाऽग्निर्हरिरेव चेत्यनेनेत्यर्थः । कारणान्तरं चेति । नेष्टृदेवतात्वरूपं अभिधेयान्तरं त्वष्ट्रिन्द्रविष्णुरूपम् । अयमर्थः ऋक्त्रयार्थ इत्यर्थः । सामान्यतः प्रतिज्ञायाद्यां ऋचं प्रतीकग्रहणपूर्वकं व्याचष्टे । इन्द्रसोममित्यादिना । मत्सराः मत् मदं सारयन्तीति मत्सरा इत्यर्थः ॥ १ ॥

मरुतः पिबत ऋतुना । पूर्ववदिति । ऋतुना मार्गेणागत्यर्तुना पात्रेणर्तुना देवतया सहेति पूर्ववदित्यर्थ इत्यर्थः । एवमत्तरत्रापि द्रष्टव्यम् ॥ २ ॥

अभियज्ञं गृणीहि नः । सम्बुद्धिः तस्य इति ग्राव । ननु हे ग्रावन् इति स्यात् । ग्राव इति कथमिति चेत् । उच्यते । ग्रा अस्य सन्तीत्यर्थे मतुप्प्रत्ययेन मादुपधायाश्च मतोर्वोयवादिभ्य इतिसूत्रेण मतुपो मकारस्य वकारे उप् इत्यस्य लोपे ग्राववदिति नकारान्तप्रातिपदिकसम्पत्तौ सत्यां पश्चात् मतुवसोरुः सम्बुद्धौ छन्दसीति सूत्रेण अलोंत्यपरिभाषया तकारस्य रुत्वे विसर्गे च ग्राववरिति सम्बुद्धिर्युक्ता । अधीहि भगव इतिवदिति ज्ञातव्यम् ॥ ३ ॥

अग्ने देवाँ इहावह । सवनत्रयमिति । त्रिषु योनिषु सवनेष्विति व्याख्यानमित्यर्थः । स्थानवाचिनो योनिशब्दस्येत्यर्थः ॥ ४ ॥

गतार्थमिति । इन्द्र सोमं पिब ऋतुनेति पूर्वोक्तन्यायेनेत्यर्थः । ब्राह्मणादिन्द्रराधसः । ऋचि हे इन्द्र ऋत । ननु त्वं पिबेत्युक्तत्वात् तदतिक्रमेण त्वामनुत्वर्तुदेवता इति व्यत्यासेन किं निमित्तमित्यत आह । अत्रेत्यादिना । अप्राधान्यं ऋच्युक्तप्रकारेणेति शेषः । इन्द्रापेक्षया मरुतां नीचत्वादिति भावः । ब्राह्मणाच्छंसीति । ब्राह्मणेन शंसनकर्ता कश्चित् ऋत्विक् ब्रह्मेत्युच्यते । तथाच ब्रह्मशब्दात्तस्येदमित्यर्थे अण् प्रत्यये यस्येति चकारस्थाकारलोपे ञित्वादादिवृद्धौ ब्राह्मणेति रूपम् । तृतीयार्थे पञ्चमीत्याशयेन ब्राह्मणादित्यस्यार्थमाह । ब्राह्मणाच्छंसिपात्रेणेति । ब्राह्मणाच्छंसि सम्बन्धिना पात्रेणेत्यर्थः । इन्द्रस्यत्वेति । इन्द्रशब्दवाच्यस्य हरेरित्यर्थः । किमर्थं त्वदीयसोममहं पास्यामि इत्यतस्तवेति वाक्यं प्रवृत्तं इत्याशयेनाह ॥ यस्मादिति । भाष्ये स्तृतशब्दार्थस्यैवोक्तत्वादाह । अस्तृतमिति । यस्मादिति । तव मम च सख्यमस्ति यस्मात्तस्मादित्यर्थः ॥ ५ ॥

युवं दक्षं धृतवृतः । वाशब्दश्चार्थे । द्वावपि परस्परसमुच्चय इति भावेन यजमानं चेत्युक्तम् । संहितायां ऽकारस्य यकाररूपवर्णविकारो द्रष्टव्यः । ईशाथ इति । तृतीया अतिशय इति भावः । पुनस्तंप्रति यज्ञादिकरण इति शेषः । ऋतुदेवतया सह युवं यज्ञं च आशाथ इत्युक्तौ ऋतुदेवतायाः अपि दक्षादीशितृत्वं प्राप्नोति । तदयुक्तम् । तस्यास्तादृशसामर्थ्याभावादित्यत आह । सापीति । ऋतुदेवतापीत्यर्थः ॥ ६-२८ ॥

## पदार्थ चन्द्रिका

॥ ऋतव्यमिति ॥ वाय्वृतृपितृषसो यदिति यत् । ओर्गुण इति गुणः । वान्तो यि प्रत्यये इति अवादेश इति भावः ॥ अवान्तरेति ॥ यद्यपि कृत्स्नमेतत्सूक्तमृतुदेवताकं तथापि प्रत्यृचं देवतान्तर

भेदोऽप्यस्तीति भावः ।। तावदिति ।। अर्थविशेषस्य वक्ष्यमाणत्वादिति भावः ।। ऋगताविति ।। ऋगताविति धातोस्त्वित्यादि स्मार्तधातुपाठानुकरोऽयमिति बोध्यम् । अस्मात्करणे क्तुप्रत्यय इति । अर्तेश्चतुरित्यत्र चकारेण किच्चेत्यस्मात् किदित्यस्य चानुकर्षणात् अस्मात् करणे क्तुप्रत्ययः किच्चेत्यर्थः । कित्वाच्च न गुण इति भावः । केचित्तु अनेनाकारेण धातुपाठाभावात् स्वरत्यर्तितु विदिभ्यः इति स्वादिष्विव ऋगतिप्रापणयोरिति भौवादिकस्य ऋगताविति जौहादिकस्य चेदं ग्रहणमिति ज्ञापनाय ऋगताविति सामान्येन पठितमन्यथान्यतराकारेणैव पठेत् । तथा च ऋच्छतेरिर्तेर्वा करणे क्तुप्रत्ययः किच्चेत्यर्थ इत्याहुः ।। ऋत्विग्विशेषस्येति ।। नेष्टृशब्दस्य तत्र रूढत्वादिति भावः । नयतेः षुगागम इत्युपलक्षणम् । गुणो द्रष्टव्य इत्यपि बोध्यम् । यद्वा कृते गुणे षुगागमो द्रष्टव्यः । यद्यप्यस्मिन् वक्तव्ये ऋत्विक्षु चानुपसर्गस्येति वक्तव्यम् । ऋत्विक्षित्यनुवर्तते । तथापि अग्न्यादेः नेष्टृऋग्देवतात्वेन तावच्छब्दमस्त्येव अत एव वक्ष्यति नेष्टाग्निरिति नेष्टृदेवतात्वाभिप्रायेणाप्युक्तमितीति भावः ।। इष्टेति ।। इडागमाभावश्छान्दस इति भावः ।। न इति प्रत्यय इति ।। औणादिको न प्रत्यय इति । इति शब्दो निषेधार्थत्वप्रतीतिप्रसङ्गवारणायेति ज्ञातव्यम् ।। डिच्चेति ।। डित्वात् टिलोप इति भावः ज्ञातॄणामिति ।। द्वितीयान्ते ग शब्दे उपपदे नयतेः डप्रत्ययः । उपधाकारलोपो निरुक्तत्वादिति भावः ।। अनेनैवेति ।। णिजन्तार्थान्तर्भावमात्रमत्र विशेष इति भावः ।। वक्ष्यतीति ।। यतो अग्निहोतृदेवता नेष्टुरित्यनेनाग्नेर्नेष्टृत्वं वक्ष्यतीत्यर्थः । अतः प्रागपि तदभिप्रायो ज्ञायत इति भावः । व्याख्यानमिति ।। अभियज्ञमित्यस्यां ऋचीति शेषः ।। स्त्रीनामस्विति ।। यास्केन स्त्रीनामतयोक्तत्वेऽपीत्यर्थः । अनेनेति ।। ज्ञापयन्तीति वचनेनेत्यर्थः । धातुः ऋगताविति धातुः । ।। अन्तर्णीतेति ।। अर्पयन्तीति ऋतवः अन्तर्णीतण्यर्थः । तुप्रत्ययश्च कर्तरीत्युक्तं भवतीत्यर्थः । ।। प्रत्यय इति ।। तुप्रत्यय इत्यर्थः । कथं तर्हि ज्ञापयन्तीति भाष्यमित्यत आह ।। ज्ञापयन्तीति ।। करणेष्वपि स्वव्यापारं प्रति प्राधान्येन कर्तृत्वविवक्षेति भावः ।। मार्ग एवेति ।। लक्षणया तद्देवतापर्यन्तविवक्षा नेति भावः ।। कथमुच्यत इति ।। परकीयपात्रेण पानायोगादिति भावः । ।। तदीयस्येति ।। पोतृ शब्दात्तस्येदमित्यणि छान्दसो वृध्यभाव इति भावः ।। पावनादितीति ।। ऋत्विक्षु चानुपसर्गस्येति पुनातेस्तृन्निति भावः ।। अतश्चेति ।। पोतृनामकऋत्विग्देवतात्वादित्यर्थः । अनेनर्त्विक्षु युक्तत्वात् कथं पोतृशब्दात्तृन् इति शंका निरस्ता भवति । भाष्ये पदार्थानामेवोक्तत्वात् । मन्त्रत्रययोजनां प्रतिजानीते ।। ततश्चेति ।। १ ।।

अत्र संहितायामाद्गुण इति प्राप्तस्य गुणस्य ऋत्यक इति शाकल्यमते प्रकृतिभावात् अभावः ।। पोतॄणां भवतां सम्बन्धिन इति ।। पोतृसम्बन्धि पोत्रम् । तस्येदमित्यण् । तद्धितेष्वचामादेः इति

प्राप्ता वृद्धिः सर्वे विधयः छन्दसि विकल्प्यन्त इति न भवतीति । नन्वेवमन्त्यस्य ऋकारस्याचोञ्णिति वृद्धिः प्राप्नोति । त्वाष्ट्रो जात इत्यत्र हि विप्रतिषेधे परं कार्यमिति पराया अदिवृध्याः अन्त्योपधालक्षणा वृद्धिर्बाध्यत इत्युक्तम् । इह तु परस्या आदिवृद्धेः छान्दसत्वेना नित्यत्वात् अन्त्यवृद्धिः प्राप्नोत्येवेति चेत् एवं च यत्रापि अदिवृद्धिरौकारः क्रियताम् । तस्य तु छान्दसः ओकारो भविष्यतीति न कश्चिद्दोषः ॥ पुनीतनेति ॥ पूङ् पवने अन्तर्भावितण्यात् अस्माल्लोट् प्रथमपुरुषबहुवचनम् । तथा लोटो लङ्वद्भावात् तस्य तस्थस्थमिपामिति तादेशः । तप्तनप्तनथनाश्चेति तनादेशः । क्र्यादिभ्यः श्ना । ईहल्यघोरितीकारः । प्वादीनां ह्रस्व इति ह्रस्वः । प्रत्ययद्वयस्यापि सार्वधातुकमपिदिति ङित्वात् स्वस्य पूर्वयोरिकोर्गुणाभावः इति भावः ॥ सुदानशीला इति ॥ दाभाभ्यामिति विहितो नुस्ताच्छील्ये इति भावः ॥ स्थेति ॥ अस भुवि इत्यस्माल्लटि मध्यमपुरुषबहुवचनम् । तस्य अदिप्रभृतिभ्यः शप इति शपो लुक् । श्नसोरल्लोप इत्यकारलोपः । व्यत्ययेन षत्वम् । संहितायामन्येषामपि दीर्घत्वं दृश्यत इति दीर्घत्वमिति भावः ॥ २ ॥

॥ ग्राव इति ॥ व्यत्ययेन वत्वम् । सम्बद्धौ मतुवसोरुरिति रुत्वम् । विसर्ग इति भावः । गृणीहि । गृ शब्दे लोट् सिप् । सेर्ह्यपिच्च । क्र्यादिभ्यः श्ना । हेर्ङित्वात् ईहल्यघोरितीत्वम् । श्नाप्रत्ययस्य ङित्वात् गुणाभावः । प्वादीनां ह्रस्व इति ह्रस्व इति भावः । रतिधारकोत्तमत्वात् स रत्नधातम इति भाष्यं मनसि निधायेह रत्नधाशब्दार्थमाह । रतीति ॥ ३ ॥

श्रुतौ लिङ्गव्यत्यय इति भावेनाह । तिसृष्विति । स्थानशब्दस्येति । स्थानवाचकयोनि शब्दस्येत्यर्थः । अत्र भाष्यटीकायोः त्वामनुदृतुदेवता इत्येव पाठः । न तु त्वामनुत्वर्तुदेवता इति । मूलकोशेष्वदर्शनादिति अवधेयम् ॥ ४ ॥

॥ व्यत्यासेनेति ॥ एवं सति ऋतुदेवत्वमानप्रधानत्वमिति वाच्यम् । व्यत्यासो न साहित्य मात्रस्यैव विवक्षितत्वादिति भावः । अत एवाह ऋतुदेवताभिः सहेति । तस्येदमिति । इदमर्थेऽण् प्रत्यय इति भावः ॥ ५ ॥

॥ युवं युवामिति ॥ प्रथमाद्विवचनस्य ङे प्रथमयोरमिति अमादेशः । युवावौ द्विवचन इति मपर्यन्तस्य युवादेशः शेम लोप इति टिलोपो वा । अमिपूर्वत्वं प्रथमायाश्च द्विवचने भाषायामेव ह्यात्वमिति भावः । दुर्दभमिति । संहितायां दुरित्यस्य दूभावो दस्य लत्वंचेति छान्दसमिति भावः ॥ ६, २८ ॥

## टीकाविवृतिः

इन्द्रसोमम् । द्वादशर्चमिति ॥ तथाचानुक्रान्तम् । इन्द्रसोममृतव्यं तत्रैन्द्रीमारुतीत्वाष्ट्री-आग्नेय्यैन्द्रीमैत्रावरुणीचतस्रोद्रविणोदसे आश्विन्याग्नेय्यृतुदेवताः सर्वत्रेति ॥ अस्यार्थः । इन्द्रसोममिति सूक्तं संख्यानुवृत्त्या द्वादशर्चं सर्वत्र ऋतुदेवताकम् । वाय्वृत्वित्यादिना यत् । ओर्गुण इति गुणः । अवान्तरदेवताश्चाह ॥ तत्रैन्द्रीति ॥ तत्र ऋतव्ये सूक्ते ऐन्द्रीप्रथमा द्वितीयामारुती तृतीयात्वाष्ट्री चतुर्थी आग्नेयी पञ्चमी ऐन्द्री षष्ठीमैत्रावरुणी । अत्र दीर्घाच्च वरुणस्येत्युत्तरपदवृद्धि निषेधः । ततश्च तस्रोद्रविणोदसे तादर्थ्ये चतुर्थी तद्देवताकाः एकादश्यश्विनी द्वादशीपुनराग्नेयी । एवमेतद्देवताका अपि सर्वाऋचो ऋतुदेवता इति ॥ तुप्रत्यय इति ॥ अर्तेश्चतुरित्यत्रपः किच्चेत्यतः कित्वानुवृत्तेरेवमुक्तम् । ऋगताविति तु ऋगति प्रापणयोरित्यस्यैकदेशानुवादोयम् । तथाचार्यते गम्यतेनेनेति ऋतुर्मार्ग इत्यर्थ उक्तो भवति ॥ ऋतोः कालरूपत्वेन जडत्वात्सोमपानाद्य योगात्कथं सूक्तप्रतिपाद्यत्वमित्यत आह ॥ तथाचेति ॥ ऋतुशब्दाः ऋतुरिति शब्दो यासां ताः तथोक्ताः । ऋतुशब्दवाच्या इत्यर्थः । नयतेः षुगितीति ॥ नप्तृनेष्टृत्वष्टृ होत्रिति पञ्चपाद्युणादि सूत्रे नयतेः षुगागमतृन्गुणा निपात्यन्ते । दशपादीपाठानुसारेण तु टीकोक्तिर्ज्ञेया । षुगागमश्चेति-चशब्दाद्गुणोगृह्यते । इत्यतश्चेति ॥ न केवलं नेतृत्वान्नेष्टा किं त्वीशितुरभावाच्चेत्यर्थः । ईष्टे नकश्चिदस्येति भाष्यं तात्पर्यार्थपरत्वेन संयोज्य साक्षाद्विग्रहमाह । न विद्यत इति ॥ अनित्यमागमशासनमित्युक्तेरीष्टे इत्यत्र नेडागम इति ज्ञेयम् । तस्यामेवेति ॥ ग्राव इति पदैकदेशभूतमिति शेषः । गमेस्ताच्छील्य इति ॥ धापॄवस्यज्यतिभ्योन इत्यौणादिको न प्रत्ययो बहुलोक्तेर्गमेरपि ताच्छील्येति भावः । गमेरिति ॥ गम् धातोरौणादिके कर्तरि ड्विप्रत्यये तस्य वेरपृक्तस्येति लोपे डित्वसामर्थ्याद्धातोष्टिलोपे गकारमात्रं व्यंजनं प्रातिपदिकं तदुपपदान्नयतेः कर्तरिड इत्यर्थः । कर्तरिड्विप्रत्यय डप्रत्ययावाश्रित्याह ॥ अनेनैवेति ॥ स्त्रीलिङ्गमिति ॥ स्त्रीरूपत्वाद्बहुरूपत्वाच्चेति शेषः । तदिति परामर्शस्येति ॥ ऋतुदेवतानां सोमौ कस्त्वासम्भवादित्यर्थः । यत्सोमा इति ॥ सोमास्तदोकसः प्रोक्ता इति यत्तद्युक्तमित्यन्वयः । तद्युक्तमेवेत्याशयकथनम् । वक्ष्यतीति ॥ अग्निस्तु देवतानेष्टुरित्यनेनाग्नेर्नेष्टृदेवतात्वमिति शेषः ।

ननु ग्नाशब्दस्य नद्याद्यर्थत्वाङ्गीकारे धेनाग्नाविपेति वागुपलक्षितस्त्रीनामसु पाठात् ग्नागच्छंत्येना इति निरुक्ते व्याख्यानाच्च तद्विरोधः स्यादित्यत आह । स्त्रीनामस्विति ॥ नेष्टृशब्दस्य पत्नीनेतृत्वाद् ग्नाव इत्यस्यापि स्त्रीयुक्तत्वार्थाङ्गीकारे पत्नीशालां प्रति पत्नी नेतृत्वरूपार्थपर्यवसानात्पौनरुक्त्यं स्यादिति भावः ॥ करण एवेति ॥ ऋच्छंति जानंत्यनेन ऋतुदेवेन कुसुमोद्भवादिकं स ऋतुरिति

विग्रह इति भावः । कथमुच्यत इति ॥ परकीयपात्रेण पानस्य निषेधादिति भावः ॥ पोतृशब्दस्य ऋकारान्तस्यमरुद्वाचकत्वात्तस्मात्तस्येदमित्यणि यणादेशेछान्दसत्वादादिवृद्ध्यभावे पोत्र शब्द-निष्पत्तिमभिप्रेत्याह ॥ तदीयस्येति ॥ ऋत्विक्षुचानुपसर्गस्येति पुनातेस्तृन्निति भावः ॥ अतश्चेति ॥ पोत्राख्यऋत्विग्देवतात्वादित्यर्थः ॥ ततश्चेति ॥ भाष्ये ऋक्त्रयगतपदानां व्याख्यातत्वा-त्सर्वव्याख्यानार्थ मृक्त्रयव्याख्यान प्रतिज्ञेयम् । ऋक्त्रयव्याख्यान सांकर्याभाव प्रदर्शनाय गृहीतप्रतीकस्यापि पुनः प्रतीकं गृह्णाति । इन्द्रसोममिति ॥ ऋतुनिमार्गेणेति ॥ सूर्यमार्गभूतेन वसन्तादिऋतुनेत्यर्थः । सोमपानविवरणात्मकत्वाविशंत्वित्यादि वाक्यमन्वय क्रमेण व्याख्याति ॥ तदोकस इति ॥ १ ॥

मरुतः पिबत ॥ पुनीतनेति ॥ पूञ्पवन इत्यतोंतर्णीतण्यर्थाल्लोण्मध्यमपुरुषबहुवचनतशब्दस्य तप्तनप्तनथनाश्चेति तनादेशे क्र्यादित्वात् श्नाप्रत्यये तस्य ईहल्यघोरितीत्वे इप्वादीनां ह्रस्व सति धातोर्ह्रस्वत्वे श्नाप्रत्ययस्यङित्त्वान्न गुण इति भावः । एवं गृणीहीत्यत्रापि ज्ञेयम् । सुदानवः सुदानशीला इति ॥ दाभाभ्यां नुरिति विहितोनुप्रत्यय उणादयोबहुलमित्युक्तेस्ताच्छील्य इति भावः । तस्मादित्याद्यभिप्रायोक्तिरिति ज्ञेयम् ॥ २ ॥

अभियज्ञम् । हेनेष्टः विष्णो इन्द्र अग्ने त्वष्टर्वेति ॥ अनेनास्या ऋचोऽनुक्रमणिकोक्तं त्वष्टृदेवताकत्वमुपलक्षणमित्युक्तं भवति । त्वष्टृमात्रग्रहणे विशेषप्रमाणाभावादिति भावः ॥ ३ ॥

अग्नेदेवान् । त्रिषु तिसृष्विति ॥ त्रिशब्दस्य तिस्रादेशाभावश्छांदस इति भावः ॥ स्थानशब्दस्येति ॥ योनिश्छर्दिरिति योनिशब्दस्य गृहनामसु पाठात्स्थानवाचकत्वम् । तस्य च काले बहुप्रयोगाभावादित्यर्थः ॥ ४ ॥

ब्राह्मणादिन्द्र ॥ ऋतूनिति ॥ संहितायां दीर्घादटिसमानपाद इति रुत्वम् । श्रुतौ ऋतूँरन्वितीन्द्रस्य ऋतुदेवतानंतर्योक्तेर्भाष्ये त्वामन्विति तद्विरुद्धमिन्द्रानन्तर्यं कथमुच्यत इत्यत आह ॥ साहित्यमात्रमिति ॥ भाष्यं तु श्रौतानुशब्दस्य साहित्यार्थकत्वेन तद्युक्तऋतूनामप्राधान्य सूचनात्तात्पर्यार्थ कथनपरमित्याशयेनाह ॥ सहेति यावदिति ॥ सहयुक्तेऽप्रधान इत्यप्रधाने तृतीयोक्तेस्तदर्थे व्यत्ययेन द्वितीयेति बोध्यम् । ब्रह्मेतीति ॥ ब्राह्मणाच्छसीति ऋत्विग्विशेषस्य नाम । ब्रह्मगणान्तर्गतत्वेनास्यापि ब्रह्मत्वादिति भावः । तस्येदमिति ॥ अण् प्रत्यये अन्निति प्रकृतिभावे ब्राह्मणशब्देन पात्रमुच्यत इति भावः ॥ ५ ॥

युवं दक्षम् । युवं युवामिति ॥ प्रथमायाश्चद्विवचने भाषायामित्यत्र भाषायामित्युक्तेरात्वा भाव इति भावः ॥ दुर्दभमिति ॥ संहितायां दुरित्यस्य रेफलोपो दीर्घश्च दस्य ळत्वं च पृषोदरादित्वादिति भावः । ईशनेसाहित्यमुपपादयति ॥ सापीति ॥ ६, २८ ॥ अष्टाविंशोवर्गः ॥

## ऋक्संहिता पदपाठसहिता

(१५३) द्रविणोदाद्रविणसोग्रावंहस्तासोअध्वरे ॥ यज्ञेषुंदेवमीळते ॥ ७ ॥

(प०) द्रविणःऽदाः । द्रविणसः । ग्रावंऽहस्तासः । अध्वरे ॥ यज्ञेषुं । देवम् । ईळते ॥ ७ ॥

(१५४) द्रविणोदार्ददातुनोवसूनियानिंशृण्विरे ॥ देवेषुतावंनामहे ॥ ८ ॥

(प०) द्रविणःऽदाः । ददातु । नः । वसूनि । यानिं । शृण्विरे ॥ देवेषुं । ता । वनामहे ॥ ८ ॥

(१५५) द्रविणोदाःपिंपीषतिजुहोतप्रचंतिष्ठत ॥ नेष्ट्रादृतुभिरिष्यत ॥ ९ ॥

(प०) द्रविणःऽदाः । पिपीषति । जुहोतं । प्र । च । तिष्ठत ॥ नेष्ट्रात् । ऋतुऽभिंः । इष्यत ॥ ९ ॥

(१५६) यत्त्वांतुरीयंमृतुभिर्द्रविणोदोयजांमहे ॥ अधस्मानोददिर्भव ॥ १० ॥

(प०) यत् । त्वा । तुरीयंम् । ऋतुऽभिंः । द्रविणःऽदः । यजांमहे ॥ अधं । स्म । नः । ददिः । भव ॥ १० ॥

(१५७) अश्विनापिबंतंमधुदीद्यंग्रीशुचिव्रता ॥ ऋतुनांयज्ञवाहसा ॥ ११ ॥

(प०) अश्विना । पिबंतम् । मधुं । दीद्यंग्रीइतिदीदिंऽअग्री । शुचिऽव्रता ॥ ऋतुनां । यज्ञऽवाहसा ॥ ११ ॥

(१५८) गार्हंपत्येनसंत्यऋतुनांयज्ञनीरंसि ॥ देवान्देंवयतेयंज ॥ १२, २९, १५ ॥

(प०) गार्हंऽपत्येन । संत्य । ऋतुनां । यज्ञऽनीः । असि ॥ देवान् । देवऽयते । यज ॥ १२, २९, १५ ॥

## ऋग्भाष्यम्

होताच होतृकाश्चैव द्रविणोदा द्रवीणसः ।
अग्निश्चैवाग्नयस्तेषां देवता विष्णुमीळते ॥ ७ ॥ ॥ ८ ॥
पातुमिच्छति सोमं स सोमास्तस्मै प्रतिष्ठिताः ।
ऋतुपात्रैर्देवताभिः सहैवैनमभीप्सत ॥ ९ ॥
चतुर्थवारमपि यत्त्वां यजामो ददिर्भव ॥ १० ॥
दीद्यग्नी इति दीप्ताग्नी ॥ ११ ॥
संत्योग्निः सन्ततत्वतः ।
विष्णुर्वर्त्वधिपो विष्णुः केशवादिस्वरूपतः ।
ग्रहान्सोमस्य मिमत इति तस्यैव कथ्यते ।
गार्हपत्येन पात्रेण यजमानस्तु देवयन् ।
देवान्पातीति ॥ १२, २९, १५ ॥

## ऋग्भाष्यटीका

द्रविणोदाः । अत्र पदद्वयं व्याख्याति ॥ होताचेति ॥ यथा संख्यं व्याख्यानम् । एवशब्देन द्रविणोदा इति प्रथमां द्वितीयात्वेन विपरिणाम्याग्निमिति व्याख्यानं निराकरोति । यद्यत्र होता द्रविणोदास्तदा द्रविणोदा ददातुन इत्यादिकमयुक्तं स्यादित्यत आह ॥ अग्निश्चेति ॥ यद्यप्यत्र होता द्रविणोदास्तथापि तद्देवतात्वेनाग्निरपि द्रविणोदा इति न कोपि विरोधः । अत्राप्यग्निरेव किं न स्यात् । मैवम् । देवतास्तुतौ कर्तृत्वेन श्रवणादिति भावेन देवमीळत इत्येतद्व्याचष्टे । विष्णुमिति ॥ विभक्तिव्यत्यासेन व्याख्यानं त्वगतिकागतिः । द्रविणोदा होता द्रविणसो होतृकाश्चाध्वरे अध्वरेषु यथाविध्यनुष्ठितेषु यज्ञेषु ग्रावहस्तासः सोमसवनार्थं ग्रावहस्ताः सन्तो देव विष्णुमग्निभिः सहितं प्रधानाग्निं वेळते स्तुवन्ति ॥ ७ ॥

द्रविणोदा ददातु ॥ द्रविणोदा अग्निः यानि वसूनि शृण्विरे श्रूयन्ते प्रसिद्धानीति यावत् । तानि नोस्मभ्यं ददातु । तानि च वयं देवेषु देवनिमित्तमेव वनामहे सम्भजामः । न तु स्वशरीरपोषणार्थम् । यद्वा तानि वयं देवेषु देवेभ्यो वनामहे वनतिर्दानार्थः । दद्मः ॥ ८ ॥

द्रविणोदाः पिपीषति । पातुम् । स द्रविणोदा अग्निः पिपीषति पीङ्पाने सोमं पातुमिच्छति सोमाश्च तस्मै प्रतिष्ठत प्रातिष्ठन्त तदुद्देशेनैव प्रतिष्ठिताः सन्ति । अतस्तांस्तस्मैजुहोत जुहुत । किं

च । नेष्ट्रात् नेष्टुः सम्बन्धिना पात्रेण ऋतुभिः ऋतुपात्रैश्च ऋतुदेवताभिः सहेति वा । एनमग्निमिष्यत अभीप्सत पूज्यत्वेनेति शेषः ॥ ९ ॥

यत्त्वा । चतुर्थ । द्रविणोदः अग्ने ऋतुभिर्ऋतुपात्रैस्तद्देवताभिः सहवा तुरीयं चतुर्थवारमपि यद्यस्मात्त्वां यजामहे । चतुर्थी हीयमृग्द्राविणोदसी । अध अथ तस्मान्नोऽस्मभ्यं ददिर्दाता भव स्म ॥ १० ॥

अश्विना । अत्र दीद्यग्नी इति व्याचष्टे ॥ दीद्यग्नी इति ॥ दीव्यतेर्यङ्लुगन्ताड्डिप्रत्ययः । हे अश्विनौ दीद्यग्नी'दीप्ताग्नी अतिशयेन दीप्ताग्निसदृशौ शुचिव्रतं कर्म ययोस्तौ शुचिव्रतौ यज्ञवाहसौ यज्ञानां प्रवर्तकौ युवामृतुना पूर्ववन्मधु सोमं पिबन्तम् ॥ ११ ॥

गार्हपत्येन । संत्यपदमग्राविष्ण्वोर्योजयति ॥ संत्य इति ॥ सम्पूर्वात्तनोतेर्ड्यः । सन्ततत्वतः अग्नेरजस्रत्वाद्विष्णोर्व्याप्तत्वात् । अत्र प्राक् ऋतुशब्देन देवता विवक्षिता कासावित्यतोधिदेवतामाह ॥ ऋत्वधिप इति ॥ एकैकस्यर्तोर्मासभेदेन द्वे द्वे रूपे । तत्कुत इत्यत आह ॥ ग्रहानिति ॥ सुपर्णं विप्राः कवयो वचोभिरेकं संतं बहुधा कल्पयन्ति । छन्दांसिच दधतो अध्वरेषु ग्रहान्त्सोमस्य मिमते द्वादशेति श्रुतौ तस्यैव विष्णोरेव ऋत्वाधिपत्यं कथ्यते । तथाहि । कवयो विप्राः सुपर्णं सुष्ठुपरमानन्दरूपं विष्णुमेकमेव सन्तं वचोभिः ऋतुशब्दैरेव बहुधा केशवादिद्वादशधास्थितं कल्पयन्ति चिन्तयन्ति । किंच । तं द्वादशधास्थितं प्रत्यध्वरेषु छन्दांसि मन्त्रान् दधतो दधानाः सोमस्य ग्रहान् मिमते निर्मिमत इति । गार्हपत्यादेव यच्छब्दौ व्याख्याति ॥ गार्हपत्येनेति ॥ हे संत्याग्ने त्वं गार्हपत्येन पात्रेण ऋतुना ऋतुपात्रेण च सोमं पीत्वेति शेषः । ऋतुदेवतया सहेति वा । यज्ञनीर्यज्ञानां प्रवर्तकोसि । स चत्वं देवान्यातीति देवयन्यजमानस्तस्मै तत्प्रयोजनाय देवान्यज ॥ १२, २९, १५ ॥

## मन्त्रार्थमञ्जरी

एतदृक्चतुष्टयस्य द्रविणोदा अपि देवता । द्रविणोदाः, होता । द्रविणसः, होतृकाः । (च) अध्वरे, अध्वरेषु, 'अग्ने यं यज्ञम्' इत्यत्र व्युत्पादितमेतत्पदम्, यथाविध्यनुष्ठितेषु । यज्ञेषु । ग्रावहस्तासः, सोमसवनार्थं ग्रावहस्ताः सन्तः । देवम्, विष्णुम्, अग्निभिः सहितं प्रधानाग्निं च । ईळते, स्तुवन्ति ॥ ७ ॥

द्रविणोदाः होतृदेवतात्वादग्निरत्र द्रविणोदा ग्राह्यः । यानि वसूनि । शृण्विरे, श्रुतानि, प्रसिद्धानीति यावत् । (ता) तानि । नः, अस्मभ्यम् । ददातु । ता, तानि । (च वयम्) देवेषु,

देवनिमित्तमेव वनामहे, सम्भजामः, न तु स्वदेहपोषणार्थमित्यर्थः ॥ यद्वा ता, तानि । (वयम्) देवेषु, देवेभ्यः । वनामहे, वनतिः अत्र दानार्थः, दद्मः ॥ ८ ॥

द्रविणोदाः । पिपीषति, 'पीङ् पाने' पातुमिच्छति ॥ (सोमाः) च (तस्मै) प्र तिष्ठत, प्रातिष्ठन्त, तदुद्देशेनैव प्रतिष्ठिताः सन्ति । (अतस्ताँस्तस्मै) जुहोत, जुहुत । किं च नेष्ट्रात् नेष्टुः, पत्नीनेतृत्वतो नेष्टृनामकऋत्विजः लक्षणया तत्सम्बन्धिपात्रात्, पञ्चमी तृतीयार्थे, नेष्टृपात्रेण । ऋतुभिः, ऋतुपात्रैः, ऋतुदेवताभिः सहेति वा । (एनम्) अग्निम् । इष्यत, अभीप्सत । (पूज्यत्वेन) इति शेषः ॥ ९ ॥

(हे) द्रविणोदः, अग्ने । ऋतुभिः, ऋतुपात्रैः, तद्देवताभिः सह वा । तुरीयम्, चतुर्थवारमपि । यत्, यस्मात् । त्वा, त्वाम् । यजामहे । अध, अथ, तस्मात् । नः, अस्मभ्यम् । ददिः भव, 'दद दाने' किप्रत्ययः, (डुदाञ् दाने आदृगमहन इति किप्रत्ययो वा) दाता भव । स्म ॥ १० ॥

(एकादश्यामश्विनावपि देवते) अश्विना, निरुक्तमेतत् 'अश्विना यज्वरी' इत्यत्र, हे अश्विनौ । दीद्यग्नी, दीप्ताग्नी, अतिशयेन दीप्ताग्नि सदृशाविति यावत्, 'दीपी दीप्तौ' इत्यतो यङ्लुगन्ताड्डिप्रत्यये टिलोपे 'दीदि' इति सिद्धेः । शुचिव्रता, शुचिव्रतौ, शुचि पवित्रं व्रतं कर्म ययोस्तौ शुचिव्रतौ । यज्ञवाहसा, यज्ञवाहसौ, यज्ञानां प्रवर्तकौ । (युवाम्) ऋतुना पूर्ववत् । मधु, सोमम् । पिबतम् ॥ ११ ॥

(द्वादश्यां विष्णुरग्निर्वापि देवता) (हे) संत्य, अजस्रत्वरूप व्याप्तत्वरूपसंततत्वहेतुना यथाक्रमं 'संत्य!' इत्युक्त = हे अग्ने, हे विष्णो, सम्पूर्वात् 'तनु विस्तारे' इत्यतो ड्यप्रत्ययः । (यस्त्वम्) । गार्हपत्येन, पात्रेण । ऋतुना, पात्रेण । (च), ऋतुदेवतया सहेति वा । (सोमं पीत्वा) इति शेषः । यज्ञनीः, यज्ञानां प्रवर्तकः । असि । (स च त्वम्) देवयते, देवानेतीति व्युत्पत्त्या देवयन्यजमानः, इणः शतृप्रत्ययः, तस्मै, तत्प्रयोजनाय । देवान् यज ॥ अत्र सूक्ते सर्वत्र 'ऋतुदेवतया सह' इत्युक्तऋतुदेवताः द्वादशमासाधिपेषु केशवादिषु द्वादशसु यथाक्रमं केशवादिद्वयं द्वयं षड्ऋतुषु च ज्ञेयम् । (ऋत्वधिपत्वं) मासाधिपत्वं च विष्णोः 'सुपर्णं विप्राः' (ऋ० म० १०।११४।५) इति श्रुतिसिद्धम् । श्रुत्यर्थष्टीकायां व्यक्तः ॥ १२ ॥ इत्येकोनत्रिंशो वर्गः ॥ २९ ॥ पञ्चदशं सूक्तम् ॥ १५ ॥

## पदार्थप्रकाशिका

द्रविणोदाद्रविणसः । यथासंख्यमिति । होता कश्चिद्रविणोदाः होत्रा कश्चिद्रविणस इति यथा संख्यमित्यर्थः । द्रविणोदा प्रथमामिति । द्रविणसो द्रविणोदाः द्रविणोदसमग्निदेवमील इति व्याख्यानमित्यर्थः । निराकरोति इति । होता च होत्रकाश्च द्रविणोदा द्रविणस इत्येव व्याख्यानं नान्यथेति भाष्यार्थो द्रष्टव्यः । अयुक्तं स्यादिति । द्रविणोदसो होतुः वसुदातृत्वासम्भवादिति भावः । न कोपि विरोध इति । होतृदेवतायाः अग्नेर्वसुदातृत्वासम्भवादिति भावः । अत्रापीति । द्वितीयान्तद्रविणोदाःशब्दस्याग्निवाचकत्वात्तदनुसारेण द्रविणोदा द्रविणस इत्याद्यायामप्यृचि द्रविणोदाःशब्देनाग्निरेव वाच्यः किं न स्यादित्यर्थः । कर्तृत्वेनेति । देवमीळत इत्युक्त देवतास्तुतौ कर्तृत्वेन द्रविणोदःश्रवणात् अग्नेश्च स्तुत्यत्वेन स्तुतिकर्तृत्वायोगादतो नात्राग्निर्द्रविणोदा इत्यर्थः ।

नन्वत्रापि द्रविणोदःशब्देनाग्निं गृहीत्वा प्रथमां द्वितीयात्वेन विपरिणाम्याग्नेरपि स्तुत्यत्वमेव व्याख्यायते । अतो न स्तुतिकर्तृत्वविरोध इत्यत आह । विभक्तिव्यत्यासेनेति । अगतिकागतिरिति । गतिर्गमनिका व्याख्या । गतिशून्या गतिरित्यर्थः । गत्यन्तराभावे ह्येषा गमनिका । गत्यन्तरं च अस्मदुक्तव्याख्यानरीत्या अस्तीति भावः । होतृकाश्चेति । होतुः शिष्याः त्रयः सन्ति । ते सर्वे होतृका इत्युच्यन्त इत्यर्थः । एकवचनं बहुवचनार्थ इत्यभिप्रेत्य अध्वरे अध्वरेष्वित्युक्तम् । अध्वरयज्ञपदयोरैक्यादध्वरशब्दो यौगिक इत्याह । यथा विध्यनुष्ठितेष्विति । अग्नेयं यज्ञमध्वरमित्यत्र विधिमार्गास्थितमिति अध्वरशब्दस्य प्राक् व्याख्यातत्वादिति भावः ॥७॥

द्रविणोदा ददातुनः । तानि अग्निदत्तानि वसूनि सम्प्रदाने चतुर्थी विधानादाह देवेभ्य इति ॥ ८ ॥

द्रविणोदाः पिपीषति । पञ्चमी तृतीयार्थ इत्याह । नेष्ठः सबन्धिना पात्रेणेति । अभीप्सत इच्छां कुरुत इत्यर्थः ॥ ९ ॥

यत्वातुरीयमृतुभिः । तं देवताभिः । चतुर्थवारमपीत्युक्तमुपपादयति । चतुर्थीयमृगिति । द्रविणोदा द्रविणस इत्यपेक्षया द्रविणोदःसम्बन्धिनी चतुर्थीयमृक् अतः चतुर्थवारमपीत्युक्तमिति भावः ॥ १० ॥

अश्विना पिबतं मधु । दीव्यतेर्यङ्लुगन्तात् डिप्रत्यय इति । कांत्यर्थात् दिवधातोर्यङि सन्यङोरिति द्वित्वे हलादिः शेषे यङोलुकि दिदिव इति जाते पश्चात् डिप्रत्यये डित्वात् टीभूतस्य

दिव इत्यस्य लोपे यङ्लुकोरिति प्राप्तगुणापवादकत्वेन दीर्घोऽकितो इत्यभ्यासस्य इकारस्य ईकाररूपे दीर्घे प्रत्ययेकारसंबन्धे च सति दीदि इति रूपम् ॥ ११ ॥

गार्हपत्येन सत्यम् । सम्पूर्वादिति । सम्पूर्वकात् तनुविस्तारे अस्मात् ड्यप्रत्यये डित्वात् टीभूतस्य न् इत्यस्य लोपे संत्येति रूपम् । अजस्रत्वादिति । अग्निहोत्राणां गेहे आहिताग्नेः सन्ततं अजस्रं सत्वादित्यर्थः । व्याप्तत्वादिति । सम्यक् तत्वतो व्याप्तत्वादित्यर्थः । अत्र अंत्यायाम् ऋचि प्राग्गृचेति ऋक्पञ्चक इत्यर्थः । अधिदेवतां प्रधानदेवताम् एकैकस्य द्वेद्वे रूपे इति सम्बन्धः । तत्कथमित्यतो मासभेदेनेत्युक्तम् । हिमन्तर्वादेः मार्गशीर्षपुष्यादिसंज्ञौ द्वौद्वौ मासौ भवतः । तत्र केशवनारायणसंज्ञे द्वेद्वेरूपे इत्यर्थः । तत्कुत इति । विष्णोः ऋत्वधिपत्वं कुत इत्यर्थः । शब्दैरेवेति । न स्वरूपेणेत्यर्थः । चिन्तयन्तीति । ऋत्वधिपत्वेन चिन्तयन्तीत्यर्थः । स्थितं प्रतीति । ऋत्वधिपत्वेन केशवादिद्वादशधा स्थितं भगवन्तमुद्दिश्येत्यर्थः तदधिष्ठानायेति यावत् । दधानाः विप्राः ऋत्विजः सोमस्य द्वादशग्रहानिति । ऋतुदेवताकान् द्वादशपात्रविशेषानित्यर्थः । ऋतुदेवताकद्वादशपात्राणां केशवादिभगवदुद्देश्यकत्वेन तद्देवताकत्वे भगवत एव ऋतुदेवतात्वं प्राप्तमित्याशयः । अत एव द्वादशमासाः द्वादशग्रहाः इत्यत्रैकदेवताकत्वेन समसंख्याकतया गणनमित्युक्तं तत्वप्रकाशिकायां इति द्रष्टव्यम् । देवान् यजेति यज्ञभागं देवेभ्यो देहीति यावत् ॥ १२-२९-१५ ॥

## पदार्थदीपिका

॥ निराकरोतीति । अस्मादुक्तप्रकारेण विभक्त्यपरिणामेनैव व्याख्यानसम्भवे विभक्ति विपरिणामाश्रयेण तद्व्याख्यानस्यानुचितत्वादिति भावः । अयुक्तं स्यादिति । होतारं प्रति द्रविणप्रार्थनाया असम्भवादिति भावः । न कोऽपि विरोध इति । उत्तरस्यामृचि द्रविणोदा इत्यनेनाग्नेरेव ग्रहणादिति भावः । पूर्वस्यामपीति । पूर्वस्यामपि ऋचीत्यर्थः । स्तुतीति । स्तुतिकर्तृत्वं च होतुरेवोपपद्यते नत्वग्नेरिति भावः । ननु नात्र द्रविणोदास्तुतिकर्तृतया अभिप्रेयते येन तद्ग्रहणेऽनुपपत्तिः स्यात् किन्तु विभक्तिव्यत्ययेन द्रविणोदमिति स्तुतिकर्मत्वेनैव । तत्कथमग्नि ग्रहणे विरोध इत्यत आह । विभक्तीति । द्रविणसो होतृकाश्चेति । द्रविणमात्मान इच्छन्ति । द्रविणस्यन्ति सुप आत्मनः क्यच् । सर्वप्रातिपदिकेभ्यो लालसायां सुग्वक्तव्य इति क्यचि परतः सुगगमः । धातुसंज्ञायां क्विप् चेति क्विप् । अतोलोपः । कौलुप्तं न स्थानिवद्भवतीति प्रतिषेधात् वेरपृक्तलोपात् वलिलोपस्य बलीयस्त्वाच्च यलोपः । एवं च द्रविणस् द्रविणेच्छुकवाचक इति

भावः । भाष्ये दीर्घश्छान्दसः । इन् प्रत्ययस्थाने इनन् प्रत्ययो वेति ज्ञेयम् । यथाविधीति । यज्ञेष्विति । पृथगुक्तेर्वेधिमार्गमिति भाष्योक्तरीत्या व्याख्येयमिति भावः ॥ ७ ॥

॥ श्रुण्विर इति ॥ श्रुश्रवणे छान्दसि लुङ्लिट इति लिट् । कर्मणि इरेच् । छन्दस्युभयथेति सार्वधातुकत्वे व्यत्ययेन श्नुः । तत्सन्नियोगेन श्रुभावश्च । उवङि प्राप्ते हुश्नुवोस्सार्वधातुक इति यणादेश इति भावः । वनामहे सम्भजाम इति । व्यत्ययेनात्मनेपदमिति भावः । पीङ् पान इति । पीयतेः रूपमेतत् नतु पिबतेः । तथा सति पिपासतीत्येव रूपापत्या इकारस्य छान्दसता वर्णनीया स्यात् । ङित्वेऽपि व्यत्ययेन परस्मैपदमिति भावः ॥ ८ ॥

॥ प्रतिष्ठतेति ॥ समवप्रविभ्यस्स्थ इत्यात्मनेपदम् । आत्मनेपदेष्वनत इत्यस्य तूद्देशेनानित्यत्वात् । झस्यादादेशः बहुलं छन्दस्यमाङ्योगेपीत्यडभावः । जुहुतेत्यादि । जुहोते र्लोण्मध्यमपुरुषबहुवचनम् । तस्य लङ्वद्भावात् तस्थस्थमिपामिति तादेशः । तस्य तप्तनप्तनथनाश्चेति तपादेशः । तस्य पित्वेनाङित्वात् श्रुतौ गुणादेश इति भावः । नेष्ट्रात् इति । पोत्रादितिवत् व्युत्पाद्यम् । इष्यतेति । यद्यपि इषु गतावित्यस्य दैवादिकस्य लोण्मध्यमपुरुष बहुवचने इष्यतेति रूपं तथापि भाष्यं तात्पर्योक्तिपरमिति भावेन आह । अभीप्सतेति ॥ ९ ॥

ददिरित्यादि । डु दाञ् दाने । आदृगमहनजनःकिकिनौ लिट्चेति किप्रत्ययः । लिड्वद्भावात् द्विर्वचनादि आतो लोप इटि चेत्याकारः लोपः । इति ज्ञेयम् ॥ १० ॥

॥ यङ्लुगन्तादिति ॥ दिवु क्रीडादौ । धातोरेकाचो हलादेः क्रियासमभिहारे यङ् इत्यतिशयार्थे यङ् । यङोचि चेति तल्लोपः । यङ्लुङन्तङिप्रत्ययलक्षणे सन्यङोरिति द्विर्भावः । हलादिः शेषः । तुजादीनां दीर्घोभ्यासस्येत्यभ्यासदीर्घः । संज्ञापूर्वको विधिरनित्य इति गुणो यङ्लुकोरित्यभ्यासस्य गुणाभावः । डित्वात् टिलोप इति भावः । अश्विनोरतित्वाभावात् यङर्थकथनपूर्वकं तत्पदतात्पर्यमाह । अतिशयेनेति । यज्ञवाहसाविति । वहिहाधाञ्भ्यः छन्दसीत्यसुन् । तत्र हि गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं चेति वचनात् स्वोपपदानामपि भवतीत्युक्तम् । निदित्यनुवृत्तेरुपधावृद्धिः । सुपां सुलुगित्यादिना विभक्तेराकार इति भावः ॥ ११ ॥

॥ अधिदेवतामिति ॥ द्वादशादित्यादीनामेवावान्तरदेवतानामपि सिद्धत्वादिति भावः । छन्दांसि मन्त्रानिति । छन्दोबहुत्वात् मन्त्राः छन्दःपदेनोच्यन्त इति भावः । यज्ञनीरिति । सत्सूद्विषेत्यादिना क्विप् । देवान् यातीति । यातीत्यर्थकथनम् । इण एव शतृप्रत्ययः । व्युत्पत्तिस्तु

एतीति यन्निति आकरे एव द्रष्टव्या। श्रितादिषु गम्यादीनामुपसंख्यानात् द्वितीया समास इति ज्ञेयम् ॥ १२, २९, १५ ॥

## टीकाविवृतिः

द्रविणोदाद्रविणसः ॥ यथासङ्ख्यमिति ॥ यथाक्रममित्यर्थः । प्रातिपदिकानांक्यचिलालसायामसुक् सुकौवाच्यावित्युक्तेर्द्रविणशब्दात्क्यचि परतःसुगागमे कर्तरि क्विपि अतो लोपे तस्य क्वौलुप्तं नस्थानिवदितिस्थानिवद्भावनिषेधात् वेरपृक्तस्येत्यतो वलि लोपस्य बलवत्त्वाच्च यलोपे द्रविणस्शब्देन द्रविणेप्सुरुच्यते । तथाच द्रविणोभ्यो द्रव्येच्छुभ्यो ददातीति द्रविणोदाः । ददातेरसुनि औणादिकत्वात्कित्वे आतोलोपे चतुर्थीति योगविभागात्समासः । द्रवीणस इति भाष्येदैर्घ्यं छान्दसम् । द्रव्येच्छव इत्यर्थः । यज्ञशब्देन पुनरुक्तेरध्वरशब्दस्य विधिमार्गस्थितमित्यग्रेयं यज्ञमध्वरमित्यत्रत्यभाष्योक्तरीत्यार्थमाह ॥ यथाविध्यनुष्ठितेष्विति ॥ देवं विष्णुमिति भाष्योक्ताधिदैवार्थमुक्त्वाधिभौतिकार्थमाह ॥ प्रधानाग्निंवेति ॥ अग्निभिःसहितमितितु शेषोक्तिः । अग्निपुत्राणामप्येतन्मन्त्रदेवतात्वसूचनायेति ज्ञेयम् ॥ ७ ॥

द्रविणोदाददातु ॥ श्रुश्रवण इत्यतश्छन्दसिलुङ्लृट इति कर्मणिवर्तमानार्थे लिटि लिटस्तझयोरेशिरे जिति झस्येरेजादेशे छान्दसत्वाद्द्वित्वाद्यभावे छन्दस्युभयथेति सार्वधातुकत्वे व्यत्ययेन यगभावे श्रुवःशृचेति श्रुविकरणे शृभावो सार्वधातुके इति यणादेशे शृण्विरे इति रूपमित्याशयेनाह ॥ श्रूयन्त इति ॥ ८ ॥

द्रविणोदाःपिपीषति ॥ ननु पिबतेःसनि पिपासतीति भाव्यं कथं पिपीषतीत्यत आह ॥ पीङ्पान इति ॥ संज्ञापूर्वको विधिरनित्य इत्युक्तेःपूर्ववत्सन इत्यात्मनेपदं न ॥ प्रतिष्ठत प्रातिष्ठन्तेति ॥ समवप्रविभ्यःस्थ इत्यात्मनेपदे झस्य आत्मनेपदेष्वनत इत्यदादेशः । अनत इति निषेधश्छान्दसत्वान्नेत्याशयः । श्रुतौजुहोतेर्लोण्मध्यमपुरुष बहुवचनस्य तप्तनप्तनथनाश्चेति तपादेशे तस्य पित्वाद्गुण इति भावेनाह ॥ जुहोतजुहुतेति ॥ नेष्टुरिति ॥ नेष्टृशब्दात्तस्येदमित्यर्थेऽकारप्रत्ययस्तद्धिता इति बहुवचनादिति भावः । इषुइच्छायामित्यतो लोण्मध्यमपुरुषबहुवचने व्यत्यये नश्यन्निति भावेनाह ॥ इष्यत अभीप्सतेति ॥ ९ ॥

यत्वा ॥ चतुर्थवाचकतुरीयशब्दस्य प्रकृतार्थेनान्वयाभावाल्लक्षणया चतुर्थवारमिति व्याख्यातम् । तदुपपादयति ॥ चतुर्थीहीयमिति ॥ द्रविणोदा देवता यस्याःसा द्राविणोदसी । यजामह इत्यस्य

देवपूजार्थत्वेन ऋक्चतुष्टये द्रविणोदसःस्तुतिरूपपूजायाः विवक्षितत्वादिति भावः ।। अध अथेति ।। थकारस्यस्थानेधकार इतिभावः ।। ददिरिति ।। ददातेराद्दगमहनजनः किकिनौलिट्चेति किप्रत्यये लिड्वद्भावे द्वित्वादौ आतोलोप इतिभावः ।। १० ।।

अश्विनापिबतम् ।। दीव्यतेरिति ।। संज्ञापूर्वकस्यानित्यत्वाद्गुणो यङ्लुकोरिति न ।। ऋतुना पूर्ववदिति ।। ऋतुनेत्यस्य ऋतुपात्रेण । ऋतुदेवताभिर्वेत्यर्थः पूर्ववदित्यर्थः ।। ५ ।।

गार्हपत्येन संत्य ।। अजस्रत्वादिति ।। गार्हपत्यस्य नित्यं गृहे स्थितत्वादित्यर्थः ।। अधिदेवतामिति ।। मुख्यदेवतामित्यर्थः । अवान्तरदेवतास्तु द्वादशादित्यादय इति भावः । ऋतूनां षट्त्वेन केशवादिद्वादशदेवताकत्वमुपपादयति ।। एकैकस्येति ।। सुष्ठु परमेति ।। सुपूर्वपरशब्देन णशब्दस्य कर्मधारये पृषोदरादित्वात्परशब्दान्तलोपे सुपर्णशब्दनिष्पत्तिः । णहिनिर्वृतिवाचक इत्युक्तेर्णशब्दःसुखार्थः ।। शब्दैरेवेति ।। नतुस्वरूपेणेत्यर्थः ।। केशवादीति ।। ऋत्वधिपतित्वेनेति शेषः । संकल्पः कर्ममानसमिति संकल्पशब्दस्य ध्याने प्रयोगदर्शनादाह ।। कल्पयन्ति चिन्तयन्तीति ।। अन्यत्रापि केशवादीनामाधिपत्यमाह ।। किञ्चेति ।। छन्दांसि मन्त्रानिति ।। छन्दःपद्ये च वेदेचेति विश्वोक्तेरितिभावः ।। दधाना इति ।। ऋत्विज इति शेषः ।। यज्ञनीरिति ।। सत्सूद्विषेतिक्विप् ।। देवान्यातीति ।। यातेः शतृप्रत्यये च्छान्दस आकारलोपे देवयन्निति रूपम् । अथवा इणःशतृप्रत्ययः देवान्यातीति त्वर्थनिर्देश इति भावः ।। ६,२९,१५ ।।

## ऋक्संहिता पदपाठसहिता

(१५९) आत्वांवहन्तुहरयोवृषणंसोमंपीतये ।। इन्द्रंत्वासूरऽचक्षसः ।। १ ।।

(प०) आ । त्वा । वहन्तु । हरयः । वृषणम् । सोमऽपीतये ।। इद्रं । त्वा । सूरऽचक्षसः ।। १ ।।

(१६०) इमाधानाघृतस्नुवोहरीइहोपवक्षतः ।। इन्द्रंसुखतमेरथे ।। २ ।।

(प०) इमाः । धानाः । घृतस्नुवः । हरीइति । इह । उप । वक्षतः ।। इन्द्रम् । सुखऽतमे । रथे ।। २ ।।

(१६१) इन्द्रंप्रातर्हवामहइन्द्रंप्रयत्यध्वरे ।। इन्द्रंसोमस्यपीतये ।। ३ ।।

(प०) इन्द्रम् । प्रातः । हवामहे । इन्द्रम् । प्रऽयति । अध्वरे ।। इन्द्रम् । सोमस्य । पीतये ।। ३ ।।

(१६२) उप॑नः॒सुतमाग॑हि॒हरि॑भिरिन्द्रके॒शिभि॑ः ॥ सु॒तेहित्वा॒हवा॑महे ॥ ४ ॥

(प०) उप॑ । न॒ः । सु॒तम् । आ । ग॒हि॒ । हरि॑ऽभिः । इ॒न्द्र॒ । के॒शि॒ऽभि॑ः ॥ सु॒ते । हि । त्वा॒ । हवा॑महे ॥ ४ ॥

(१६३) सेमं॑न॒ःस्तोम॒माग॒ह्युपे॒दंसव॑नंसु॒तम् ॥ गौ॒रोनतृ॑षि॒तःपिब ॥ ५, ३० ॥

(प०) सः । इ॒मम् । न॒ः । स्तोम॑म् । आ । ग॒हि॒ । उप॑ । इ॒दम् । सव॑नम् । सु॒तम् ॥ गौ॒रः । न । तृ॒षि॒तः । पि॒ब ॥ ५, ३० ॥

## ऋग्भाष्यम्

सुष्ठूरीकुर्वति विषयान्यतः ।
चक्षूंपीन्द्रस्य हरयस्तेनोक्ताः सूरचक्षसः ॥ १ ॥
भक्तिस्रुतानि धानानि बुद्धेर्धाना इति ह्यपि ॥ २ ॥
प्रातरित्यादिवाक्येन सवनत्रयमीरितम् ।
समाप्तत्वात्सोमपीतिस्तृतीयं सवनं स्मृतम् ।
सदा ॥ ३, ४, ५ - ३० ॥

## ऋग्भाष्यटीका

आत्वा । नवर्चमेतदैंद्रं सूक्तम् । अत्र सूरचक्षस इत्येतद्व्याख्याति ॥ सुष्ठ्विति ॥ ऊरशब्द ऊरीशब्दार्थश्छन्दसि धातुना विनापि प्रयुज्यते । सुष्ठु ऊराणि विषयान् उरीकुर्वन्ति गृह्णन्तीति सूराणि चक्षांसि चक्षूंषि येषां ते सूरचक्षस इत्यर्थः । चक्षूंषि हरीणामिति शेषः । हे इन्द्र वृषणं वर्षितारं त्वा त्वां सोमपीतये सोमपानाय सूरचक्षसस्त्वा तव हरय आवहन्तु ॥ १ ॥

इमाः । अध्यात्मं व्याख्याति ॥ भक्तीति ॥ हे हरी मनोबुद्धी इन्द्रार्थमिमा वृतस्नुवः स्नेहसाम्याद्घृतं भक्तिः तया स्नुताः ष्णुप्रस्रवणे आर्द्राः धानाः बुद्धेर्धानानि वृत्तिविशेषाः सन्ति तस्मादिह सुखतमे रथे शरीरे इन्द्रं उपवक्षतः उपवहतं सन्निधापयतम् । बाह्येत्वाह ॥ धाना इति ॥ धानाशब्देन प्रसिद्धाधना अपीत्यर्थः । हे हरी अश्वौ युवयोरर्थे इमा घृतस्नुवो धानाः सन्ति । तस्मादिन्द्रं सुखतमे रथे स्थितं सुखतमेन रथेनेति वा इह यज्ञमुपवक्षतः ॥ २ ॥

इन्द्रम् । ऋचस्तात्पर्यमाह ॥ प्रातरिति । कथं सोमपीतिशब्देन तृतीयं सवनमुच्यते सोमपानस्यान्यत्र सद्भावात् अत आह ॥ समाप्तत्वादिति ॥ सोमपानस्यान्यत्र सद्भावेपि

तृतीयसवने तस्य समाप्तत्वात्पूर्णत्वादसाधारण्येन च व्यपदेशा भवन्तीति तद्विवक्षया सोमपीतिशब्देन तृतीय सवनं स्मृतम् । अभिप्रायमाह ॥ सदेति ॥ ततश्च वयं प्रातः प्रातःसवने इन्द्रं हवामहे अध्वरे यज्ञे प्रयति प्रवर्तमाने माध्यंदिने सवन इति यावत् । इन्द्रं हवामहे । सोमस्य पीतये तृतीयसवनेपि सोमपानायेन्द्रं हवामहे । एवं सदा तं हवामह इति । अन्यथा पुनरिन्द्रमिति व्यर्थं स्यात् । क्रियाशब्दोयमिति चेन्न पूर्वस्यापि तथात्वेन विशेषणत्वायोगात् ॥ ३ ॥

उपनः । हे इन्द्र केशिभिः केशवद्भिः प्रलम्बकेशैः हरिभिरश्वैः नःसुतं सोमं उपागहि उपागच्छ । हि यस्मात् त्वा त्वां सोमे सुतेसति हवामहे । तस्मात् ॥ ४ ॥

सेमम् । हे इन्द्र सत्वं न इमं स्तोमं स्तुतिमिदं सवनं च सुतं सोमं चोपागहि । आगत्य च तृषितो गौरो न गौरो मृगविशेषः । स इव सोमं पिब ॥ ५, ३० ॥

## मन्त्रार्थमञ्जरी

अथ 'आ त्वा' इति षोडशं नवर्चं वर्गद्वयात्मकमैन्द्रं गायत्रीछन्दस्कं सूक्तम् । (हे) इन्द्र । वृषणम्, वर्षितारम् । त्वा, त्वाम् । सोमपीतये, सोमपानाय । सूरचक्षसः, सुष्ठूराणि सम्यग्विषयविषयकाणि चक्षांसि चक्षुंषि येषां ते सूरचक्षसः, ऊरीशब्दपर्याय ऊरशब्दः, 'सुष्ठूरीकुर्वन्ति विषयानिति सूराणि' इति व्युत्पत्त्या सम्यग्वस्तुविषयकत्वं सूरशब्दस्य ज्ञेयम् । त्वा, तव । हरयः, अश्वाः । आ वहन्तु ॥ १ ॥

(हे) हरी, इन्द्रसम्बन्ध्यश्वौ । (युवयोरर्थे) इमाः धानाः । घृतस्नुवः, घृतार्द्राः सन्ति, 'ष्णु प्रस्रवणे' इति धातोर्विच् तस्मात् इन्द्रम् । सुखतमे रथे (स्थितम्) इति शेषः, सुखतमेन रथेनेति वा इह, यज्ञे । उप वक्षतः, उपवहतम् । अध्यात्मं तु (हे) हरी, मनोबुद्धी । (इन्द्रार्थाः) इमाः । घृतस्नुवः, स्नेहसाम्याद्घृतं भक्तिस्तया स्नुवः स्नुता आर्द्राः, भक्तियुक्ता इति यावत् । धानाः, बुद्धिवृत्तिविशेषाः सन्ति । तस्मात् इह सुखतमे । रथे, शरीरे । इन्द्रम् । उपवक्षतः, वहतेः लेट्यडागमे सिपि ढत्व-कत्व-षत्वेषु रूपम्, उपवहतम् (संनिधापयतम्) इत्यर्थः ॥ २ ॥

प्रातः, प्रातः सवने । इन्द्रम् (वयम्) हवामहे । अध्वरे, यज्ञे प्रयति, प्रवर्तमाने, माध्यंदिनसवन इति यावत् । इन्द्रम् (वयम्) (वहामहे) सोमस्य पीतये, तृतीयसवने सोमपानस्य पर्यवसानात् 'असाधारण्येन व्यपदेशा भवन्ति' इति सोमपीतिशब्देन तृतीयसवनग्रहः, (तृतीयसवनेऽपि) सोमपानार्थम् । इन्द्रम् (वयम्) (हवामहे) आह्वयामः ॥ ३ ॥

(हे) इन्द्र । केशिभिः, प्रलम्बकेशयुक्तैः । हरिभिः, अश्वैः । नः । सुतम्, सोमम् । उप आ गहि, उपागच्छ । हि, यस्मात् । त्वा, त्वाम् । (सोमे) सुते (सति) हवामहे (तस्मात्) ॥ ४ ॥

(हे इन्द्र) सः (त्वम्) नः इमम् । स्तोमम्, स्तुतिम् । इदम् सवनम् (च) सुतम्, सोमम् । (च) उप आ गहि । आगत्य च तृषितः । गौरः न, मृगविशेष इव । (सोमम्) पिब ॥ ५ ॥ इति त्रिंशो वर्गः ॥ ३० ॥

## पदार्थप्रकाशिका

आत्वावहन्तुहरयः । ऊरशब्द इति । ऊरेत्युपसर्ग इत्यर्थः । ऊरीशब्दार्थः ऊरीत्युपसर्गार्थे इत्यर्थः । ननु ऊर्यादिच्विडाचश्चेति सूत्रेण ऊरीत्यादीनां गतिसंज्ञायाः विहितत्वात् गत्युपसर्गाणां च ते प्राग्धातोरिति धातोः पूर्वं प्रयोगविधानात् ऊरीकरोति इत्यादिदर्शनात् । प्रकृते धातुसम्बन्धं विना कथमूरेत्युपसर्गप्रयोग इत्यत आह । छन्दसीति । छन्दसिपरेऽपि व्यवहिताश्चेत्यत्रापिशब्दात् धातुं विनापि प्रयोगस्य व्याख्यातत्वादिति भावः । विषयान् गम्यप्रदेशान् । इन्द्रस्य चक्षुषीत्यन्यथाप्रतीतिवारणाय चक्षुषीत्याद्यशेषं पूरयति । चक्षुंषीति । त्वेत्यनूद्य तवेति व्याख्यानम् । ऊरचक्षुषः त्वदीया वहंत्वित्यर्थः ॥ १ ॥

इमाधाना धृतस्नुवः । स्नेहसम्पदिति घृतभक्त्योः स्नेहरूपेण गुणेन साम्यात् घृतशब्देन भक्तिर्गृहीत इत्यर्थः । भक्तेः स्नेहात्मकत्वात् घृतस्यापि गुणगुणिनोरभेदेन स्नेहात्मकत्वात् इति भावः । प्रस्रव इति । तथाच प्रस्नुता इत्यर्थः । तत्तात्पर्यमाह । आर्द्रा इति । सन्ति यस्मादिति शेषः । धानाः सन्तीति । अश्वग्रासभूताः चणकाद्याः धानाः घृताक्ताः सन्तीत्यर्थः । सप्तमीं यथास्थितामङ्गीकृत्य स्थितमिति व्याख्यातमिदानीं सप्तमी तृतीयार्थ इत्याशयेनाह । सुखतमेनेति ॥ २ ॥

इन्द्रं प्रातर्हवामहे । अन्यत्रापि सद्भावादिति । तथाच सोमपीतिशब्दः सवनत्रयसाधारण इति भावः । पूर्णत्वादिति । त्रिवारं पानेन पूर्णत्वादिति भावः । तद्विवक्षयेति । पूर्णत्वनिमित्तकासाधारण्यव्यपदेशविवक्षयेत्यर्थः । अभिप्रायमाहेति । ऋगाभिप्रायमाहेत्यर्थः । प्रवर्तमाने सति तत्तात्पर्यमाह । माध्यन्दिन इति । सदेति भाष्यानुसारेण ऋक्तात्पर्यमाह । एवमिति । अन्यथेति । सोमस्य पीतय इत्यस्य तृतीयसवनपरतया व्याख्यानाकरणे सोमस्य पीतये इन्द्रं प्रति हवामहे इन्द्रं प्रयत्यध्वरे हवामहे इत्येतावतैव पूर्णत्वेन तृतीयपादे पुनरिन्द्रमिति व्यर्थं

स्यादिति भावः । ननु न तृतीयपादस्येन्द्रशब्दवैय्यर्थ्यम् । तस्य यौगिकत्वाङ्गीकारेण इन्द्रविशेषणत्वात् । तथाचेन्द्रपरस्यैश्वर्यादिसम्पन्नं इन्द्रं सोमस्य पीतये प्रातर्हवामह इत्यादियोजनोपपत्तेरित्याशङ्कते । क्रियाशब्दोयमिति । ऐश्वर्यादिधात्वर्थरूपे क्रियाप्रतिपादनपरोऽयं शब्द इत्यर्थः । तथाच यौगिकत्वेन विशेषणमेवेदं न रूढत्वेन विशेष्यमित्याशयः । यद्यस्यैवेन्द्र-शब्दस्य योगिकत्वेन विशेषणत्वमङ्गीकृत्य वैय्यर्थ्यं परिह्रियते तर्हि विनिगमनाविरहात् पूर्वस्यापि इन्द्रशब्दस्य यौगिक त्वसम्भवेन विशेषणत्वोपपत्तेः । द्वितीयस्य रूढत्वेन विशेष्योपपत्तेः तृतीयपादस्थस्यैव विशेषणत्वायोगात् । तस्मात् तद्व्याख्याने विनिगमनाभावप्रसक्तेः अस्मद्व्याख्याने चाधिकार्थलाभादिदमेव साध्वित्याशयेनाह । पूर्वस्यापीति ॥ ३ ॥

उपनः सुतमागहि । भूमनिन्दाप्रशंसासु भवन्ति मतुबादयः । इत्युक्तत्वेन इनेः प्रशंसार्थत्वादाह । प्रलम्बकेशैरिति । ननु भवद्भिरधुनापि सोमस्याताडितत्वेनालस्यादिदानीं सूत्या गत्या किं कार्यमित्याशङ्कायामाह । हियस्मादिति ॥ ४ ॥

सेमं नस्तोममागहि । स्तुतिं श्रुत्वेति शेषः । इदं सवनम् अस्मिं सवने । सोममुद्दिश्येति शेषः । स इवेति । स यथाजलं पिबति तद्वदित्यर्थः ॥ ५-३० ॥

## पदार्थदीपिका

॥ ऊरीशब्दार्थ इति ॥ अङ्गीकारार्थ इत्यर्थः । ऊर्यादिषु ऊरशब्दोऽपि गणनीय इति भावः । ननु तर्हि ऊर्यादिच्विडाचश्चेति गतिसंज्ञायां ते प्राग्धातोः छन्दसि परेऽपि व्यवहिताश्चेति धातुसम्बन्ध नियमोक्तेः गतिसंज्ञकस्यास्य कथं धातुना विना प्रयोगः इत्यतः व्यवहिताश्चेति च शब्देन धातुना विनापि उपसर्गाणामिव गतिसंज्ञानामपि प्रयोगस्याभ्युपगतत्वात् न दोष इत्याह । छन्दसीति । ऊराणि विषयानूरीकुर्वन्तीति । उपसर्गाणामिव धातुसम्बन्धाभावे गतिसंज्ञानामपि स्वार्थविशिष्टससाधनक्रियावाचित्वादिति भावः । विषयाणां तु योग्यतया सम्बन्धः । चक्षांसिति । चक्षेर्बहुलं शिच्चेति करणेऽसुनि शित्वेति तिङ्शित्सार्वधातुकमिति सार्वधातुकत्वात् न चक्षिङः ख्यञिति ख्या इति भावः । सूर्यचक्षसः सूर्यसमानप्रकाशयुक्ताः । ऋत्विजः त्वा मन्त्रैः प्रकाशयन्त्विति परकीयं व्याख्यानमसत् । पुनस्त्वा श्रुतेः विभक्तिव्यत्ययेनैकवाक्यत्वोपपत्तौ अध्याहारेण वाक्यभेदाश्रयणस्यानुपपन्नत्वात् इत्याशयेन व्याख्याति । त्वा तवेति ॥ १ ॥

॥ साम्यादिति ॥ स्नेहरूपसाम्यादित्यर्थः । तत्र तु भक्तिः स्नेहरूपैव । माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः स्नेहो भक्तिरित्यादेः । घृतमपि स्नेहरूपगुणाभिन्नत्वात् स्नेहरूपमिति भावः ।

ष्णु प्रस्रवण इति। अस्मात् सम्पदादित्वात् क्विप्। ह्रस्वस्य पिति कृति तुगिति तुक् न सम्भवति। छन्दसि सर्वे विधयो विकल्प्यन्त इति वचनात्। अनेकाचो संयोगपूर्वस्येति वर्तमाने ओः सुपीति यणादेशविधानात् ष्णोरुकारस्य संयोगपूर्वत्वेन यणादेशायोगात् उवङादेश इति भावः। उपवक्षत उपवहतम्। वहतेः प्रार्थनायां लिङर्थे लेट्। तस्य मध्यमपुरुषबहुवचनस्य व्यत्ययेन प्रथमपुरुषद्विवचनम्। तस्। लेटो डाटावित्यडागमः। शपि प्राप्ते सिब्बहुलं लेट इति सिप् ढत्वकत्वषत्वेषु वक्षत इति सिध्यति। तत्र लट्लेटोरैक्यात् वहतमिति लोडन्तं प्रतिपदं दत्तमिति ज्ञेयम्। यद्यप्यत्र वहतामिति अपव्याख्यानेन व्यत्ययाश्रयणं तथाप्यस्यामृचि इन्द्रस्य परोक्षतया निर्देशनं हर्योरपि परोक्षतया निर्देशन्यस्य प्रार्थनीयत्वप्रसङ्गात् व्यत्ययाश्रयणमिति बोध्यम्॥ २॥

॥ अन्यत्रेति॥ प्रातःसवनमाध्यंदिनसवनयोरित्यर्थः। पीतवे द्वे प्रातः सवनमित्यादि श्रुतेरिति भावः। समाप्तत्वात् पूर्णत्वादिति। पूर्तेरिति कर्मनिर्णयोक्तेरिति भावः। प्रयति प्रवर्तमान इति। इण् गतावित्यस्मात् लटि तस्य शतरि अदिप्रभृतिभ्यः शप इति शपोलुकि शतुर्ङित्वात् गुणाभाव इति भावः। प्रातःप्रयत्यध्वरे सोमस्य पीतये इन्द्रं हवामहे इत्येकवाक्यतया प्रातः सवनविषयतयैव कस्यचित् व्याख्यानमपाकरोति। अन्यथेति। या पुनः इति। इन्द्रं सोमस्य पीतये इत्युत्तरार्धस्थेन्द्रपदस्येत्यर्थः। ननु परियदिन्द्र रोदसी उभे अबुभोजीरित्यादाविव पूर्वार्धस्येन्द्र शब्दस्य संज्ञात्वेनोत्तरार्धस्थस्य च यौगिकत्वेन एकवाक्यतया व्याख्यानेऽपि इन्द्रशब्दान्तर वैय्यर्थ्यमिति शङ्कते। क्रियाशब्द इति। विशेषणशब्द इत्यर्थः। इषुगमियमां छ इति छत्वं न भवति। न लुमताङ्गस्येति प्रतिषेधात्। अनुदात्तोपदेश इत्यादिनानुनासिकलोपः। तस्या अयमिति। उत्तरार्धर्चे इत्यर्थः। तत्रेन्द्रशब्दद्वयस्यैव सत्वेन विशेषणविशेष्यशब्दत्वाश्रयणेन तत्र वैय्यर्थ्योपपादनसम्भवेऽपि प्रकृते पूर्वार्धेऽपि इन्द्रशब्दद्वयस्य सत्वेनाद्यस्य विशेष्यशब्दत्वेन द्वितीयस्य विशेषणशब्दत्वेनैव सार्थक्यं वाच्यम्। तथा च पूर्वार्धर्चस्य द्वितीयेन्द्रशब्दस्यापि विशेषणशब्दत्वेनोत्तरार्धर्चस्येन्द्रशब्दस्य विशेषणत्वेन वैय्यर्थ्योपपादनं युक्तमेवेत्याह। पूर्वस्यापीति॥ ३॥

प्रलम्बकैशैः हरिभिरिति। मत्वर्थीयस्यैवेनिशब्दस्य प्रशंसार्थत्वात् इति भावः। उपागहीति। गमेर्लोट्। सेर्हिः। शप इत्यनुवृत्तौ बहुलं छन्दसीति शपो लुक्। असिद्धवदत्राभादिति असिद्धत्वात् अतो हेरिति लुक् इति भावः॥ ४॥

गौरोन तृषितः सन् पिबेति परव्याख्यानमसत्। इन्द्रस्य पिपासाभावादित्याशयेना न्यथा योजयति। तृषितो गौर इति॥ ५, ३०॥

## टीकाविवृतिः

आत्वा ॥ नवर्चमिति ॥ अनुवृत्त्यैव ऋषिछन्दसोरनादेशपरिभाषयेन्द्रदेवताकत्वस्य च सिद्धत्वादात्वानवेत्यनुक्रमणिकायां सूक्तर्क्संख्यामात्रमुक्तमिति भावः ॥ ऊरशब्दऊरीशब्दार्थ इति ॥ ऊरीशब्दस्याङ्गीकारार्थत्वात्तत्समानप्रकृतिकत्वादूरशब्दस्याप्यंगीकारार्थत्वमित्यर्थः । ऊर्यादिष्वयं शब्दो ज्ञेय इति भावः । ननूर्यादीनां क्रियायोगे गतिसंज्ञाविधानाद्धातुना विना क्रियाया अप्रतीतेः तथा ते प्राग्धातोः छन्दसि परेऽपि व्यवहिताश्चेति सूत्रैर्धातुसम्बन्धनियमोक्तेः कथं केवलोरशब्दप्रयोग इत्यत आह ॥ छन्दसीति ॥ गत्युपसर्गाणां क्रियासन्निधाने तद्विशेषद्योतकत्वस्य तदभावे ससाधनक्रियावाचकत्वस्य शाब्दिकैरंगीकारात् । विषयानिति योग्यतयासंबध्यत इति भावः ॥ चक्षांसि चक्षूंषीति ॥ चक्षिङः चक्षेर्बहुलं शिच्चेति करणेऽसुनः शित्वात्सार्वधातुकत्वेन ख्याञादेशो नेति भावः ॥ त्वा तवेति ॥ पुनस्त्वाग्रहणा-द्विभक्तिव्यत्ययेनान्वय इति भावः ॥ १ ॥

इमाधानाः ॥ स्नेहसाम्यादिति ॥ स्नेहशब्दवाच्यत्वगुणसाम्यादित्यर्थः । भक्तेः माहात्म्य-ज्ञानपूर्वस्तु सुदृढः सर्वतोधिकः । स्नेहोभक्तिरिति प्रोक्त इत्युक्तेः स्नेहशब्दवाच्यत्वम् । घृततैलादीनां चिक्कणतागुणयोगाद्रूढ्या च स्नेहशब्दवाच्यत्वम् । अतो घृतशब्दो भक्तौ गौण इतिभावः ॥ ष्णुप्रस्रवण इति ॥ तत औणादिके कर्मणि क्नौ संयोगपूर्वत्वेन ओःसुपीति यणादेशाभावे उवङादेश इतिभावः ॥ वृत्तिविशेषा इति ॥ विज्ञानवैराग्यश्रद्धाधृत्यादय इत्यर्थः । उपपूर्वाद्वहेर्लेटि मध्यमपुरुषद्विवचनस्य व्यत्ययेन प्रथमपुरुषद्विवचनादेशे तसि लेटोडाटावित्यडागमे सिब्बहुलं लेटीति सिपि होढ इति ढत्वे षढोःकसीति कत्वे षत्वे चोपवक्षत इति रूपमितिभावेनाह ॥ उपवहतमिति ॥ लिङर्थे लेडित्युक्तेर्लिङ्लोटोश्चैकार्थ्याल्लोडन्तं प्रतिपदमुक्तमिति भावः । वहतामिति व्याख्यानेयद्यपि नव्यत्ययस्तथाप्यपरोक्षतया प्रार्थनायाः विशेषप्रीतिसाधनत्वाद्व्यत्ययाश्रयणमिति ज्ञेयम् ॥ प्रसिद्धा धाना इति ॥ चणकादय इत्यर्थः ॥ २ ॥

इन्द्रं प्रातः ॥ अन्यत्रेति ॥ प्रातःसवनमाध्यंदिनसवनयोरित्यर्थः । पीतवद्वै प्रातःसवनमिति श्रुतेरिति भावः ॥ पूर्णत्वादिति ॥ तृतीयसवनानन्तरं सोमपानाभावादिति भावः ॥ प्रयति प्रवर्तमान इति ॥ प्रपूर्वादिणः शतुर्ङित्वान्न गुण इतिभावः ॥ अन्यथेति ॥ सदेत्यर्थानङ्गीकार इत्यर्थः । ननु तृतीयेन्द्रशब्दस्य इदि परमैश्वर्य इत्यतो ऋज्रेन्द्राग्रेत्युणादिसूत्रेण रक्प्रत्ययांतत्वेन निपातितस्य यौगिकत्वाद्विशेषणत्वं पूर्वपादस्थस्येन्द्रशब्दस्य रूढत्वेन विशेष्यत्वमतो न वैयर्थ्यमिति भावेन शंकते ॥ क्रियाशब्दोयमिति ॥ क्रियामाश्रित्य प्रवर्तमानःशब्दः क्रियाशब्दः यौगिक इति

यावत् ॥ पूर्वस्यापीति ॥ द्वितीयेन्द्रशब्दस्यापि यौगिकत्वेन विशेषणत्वसंभवात्तृतीयस्य वैयर्थ्येन विशेषणत्वायोगादित्यर्थः । यद्यपि परियदिन्द्ररोदसी उभे अबुभोजीर्महिनाविश्वतस्सीम् । अमन्यमानाँ अभिमन्यमानैर्निर्ब्रह्मभिरधमोदस्युमिन्द्रेत्येदृग्व्याख्याने एकस्येन्द्रशब्दस्य रूढत्वमाश्रित्यापरस्य यौगिकत्वमाश्रितम् । तथापि तत्र द्वयोरेव सत्त्वेन वैतदाश्रयणोपपत्तेरत्र तृतीयस्येन्द्रशब्दस्य सत्त्वेन वैयर्थ्यात्तदाश्रयणं नोपपद्यत इति बोध्यम् ॥ ३ ॥

उपनः ॥ प्रलंबकेशैरिति ॥ नित्ययोगेऽतिशायने इत्युक्तेरतिशयार्थ इनिरिति भावः ॥ उपागहीति ॥ गमेर्लोटःसेर्हौ अनुदात्तोपदेशेत्यनुननासिकलोपः ॥ ४ ॥

सेमंनः ॥ सेमंन इत्यत्र सोचिलापेचेत्पादपूरणमित्यनेन सोर्लोपे गुण इत्युक्तं स्मर्तव्यम् । एवमुत्तरत्रापि ॥ सवनंचेति ॥ कण्डनस्थलमित्यर्थः । सुतमिति ॥ कण्डितमित्यर्थः ॥ स इवेति ॥ मृगवत् पिपासायुक्तः । पिपासाभावे पानायोगादित्यर्थः । क्वचित्पिपासाक्षुधादिराहित्योक्तिस्तु तन्निवर्तकविषयालाभप्रयुक्तदुःखाभावपरेति ज्ञेयम् ॥ ५,३० ॥

## ऋक्संहिता पदपाठसहिता

(१६४) इमेसोमासइंदवःसुतासोअधिबर्हिषि ॥ ताँइन्द्रसहंसेपिब ॥ ६ ॥

(प०) इमे । सोमासः । इंदवः । सुतासः । अधि । बर्हिषि ॥ तान् । इन्द्र । सहसे । पिब ॥ ६ ॥

(१६५) अयंतेस्तोमोअग्रियोहृदिस्पृगंस्तुशंतमः ॥ अथासोमंसुतंपिब ॥ ७ ॥

(प०) अयम् । ते । स्तोमः । अग्रियः । हृदिऽस्पृक् । अस्तु । शम्ऽतमः ॥ अथ । सोमम् । सुतम् । पिब ॥ ७ ॥

(१६६) विश्वमित्सवनंसुतमिन्द्रोमदायगच्छति ॥ वृत्रहासोमपीतये ॥ ८ ॥

(प०) विश्वम् । इत् । सवनम् । सुतम् । इन्द्रः । मदाय । गच्छति ॥ वृत्रऽहा । सोमऽपीतये ॥ ८ ॥

(१६७) सेमंनःकाममापृणगोभिरश्वैःशतक्रतो ॥ स्तवामत्वास्वाध्यः ॥ ९, ३१, १६ ॥

(प०) कामम् । आ । पृण । गोभिः । अश्वैः । शतक्रतोइतिशतऽक्रतो ॥ स्तवाम । त्वा । सुऽआध्यः ॥ ९, ३१, १६ ॥

## ऋग्भाष्यम्

विष्णुविवक्षायां यजमानबलं सहः ।
तदिष्टस्यैव दानाय तद्गुणव्यक्तिरेव वा ।
पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
हेयोपादेयरहितगुणपूर्णो हरिः सदा ।
अनुग्रहव्यक्तिरेव तद्गुणानां च नान्यथा ।
इत्यादिवेदवाक्येभ्यो नैव वृद्धिर्हरेः क्वचित् ॥ ६, ७, ८ ॥
पृणसम्पूरय स्वाध्यः सुधीतय इतीरिताः ॥ ९, ३१, १६ ॥

## ऋग्भाष्यटीका

इमेसोमासः । हे इन्द्र इमे इन्दवः इष्टदाः सुतासः अभिषुताः सोमासः सोमाः अधिबर्हिषि बर्हिष उपरि सन्ति तान्सोमान्सहसे बलार्थं पिब । इदं प्रसिद्धेन्द्रे घटते । सोमपानादिना तस्य बलवृद्धिसद्भावात् । परमेश्वरे तु योजनान्तरं सूचयति ॥ विष्ण्विति ॥ इन्द्रशब्देन विष्णुविवक्षायां यजमानबलं सहः । कथं तर्ह्यन्वय इत्यत आह ॥ तदिष्टस्येति ॥ सहसे बलाय यजमानस्य यदिष्टं बलं ज्ञानादिरूपं तस्य दानाय सोमं पिबेति योजनीयमित्यर्थः । अथ सहःशब्देन परमेश्वरबलमङ्गीकृत्य घटयति ॥ तदिति ॥ तस्य विष्णोर्यो गुणो बलाख्यस्तस्य व्यक्तिर्वात्रोच्यते । सहसे बलाय तव बलव्यक्त्यै । व्यक्तिश्च बलसाध्यमभीष्टसम्पादनम् । एवशब्दाभ्यां परमेश्वरबलस्य सोमेन वृद्धिं निराकरोति ॥ तत्कुत इत्यत आह ॥ पूर्णमिति । अनुग्रह इति पराभीष्टसम्पादनमुच्यते ॥ ६ ॥

अयन्ते । हे इन्द्र शंतमः स्तोतॄणामतिशयेन सुखप्रदोऽयं स्तोमः स्तुतिः ते हृदि स्पृक् हृदयंगमोस्तु । अथ स्तुत्या प्रीतस्त्वं सुतमभिषुतं सोमं पिब ॥ ७ ॥

विश्वमित् । वृत्रहा इन्द्रः मदाय यजमानहर्षाय स्वगुणस्य व्यक्तये वा सोमपीतये विश्वं सर्वं सवनं सर्वेष्वपि सवनेषु सुतं सोमं प्रतिगच्छति ॥ ८ ॥

सेमम् । अत्र पृणेति स्वाध्य इति पदद्वयं व्याख्याति । पृणेति । हे शतक्रतो सत्वं नोऽस्माकमिमं गवादिविषयं काममभिलाषं गोभिरश्वैश्च गवाश्वं दत्वा आपृण सम्पूरय । धातूनामनेकार्थत्वात् । पृण प्रीणन इत्यस्येदं रूपम् । वयं तु स्वाध्यः स्वाङ्पूर्वाद्ध्यायतेः क्विप् । यणादेशश्छान्दसः ।

नभूसुधियोरिति नञानिर्दिष्टमनित्यमिति वा । रूपग्रहणाद्वा । सुधीतयो भूत्वा त्वा त्वाम् । स्तवाम ॥ ९, ३१, १६ ॥

## मन्त्रार्थमञ्जरी

(हे) इन्द्र इमे । इंदवः, इष्टदाः सुतासः, अभिषुताः । सोमासः, सोमाः । अधि बर्हिषि, बर्हिष, उपरि । (सन्ति) तान्, सोमान् । सहसे, बलार्थम् । पिब । हरिपक्षे– यजमानस्य बलार्थमिति वा त्वदीयबलाभिव्यक्त्यर्थं वेति व्याख्या । बलाभिव्यक्तिर्भक्ताभीष्टदानं ज्ञेयम् ॥ ६ ॥

(हे) इन्द्र । अग्रियः, अग्र्यः । शंतमः, श्रोतॄणामतिशयेन सुखप्रदः । अयम् । स्तोमः, स्तुतिः । ते । हृदिस्पृक्, हृदयंगमः । अस्तु । अथ (स्तुत्या प्रीतस्त्वम्) सुतम्, अभिषुतम् । सोमम् पिब ॥ ७ ॥

वृत्रहा इन्द्रः । मदाय, यजमानस्य हर्षाय, स्वगुणव्यक्तये वा । सोमपीतये । विश्वम्, सर्वम् । इत्, एव । सवनम्, सर्वेष्वपि सवनेषु । सुतम्, सोमं प्रति । गच्छति ॥ ८ ॥

(हे) शतक्रतो सः (त्वम्) । नः अस्माकम् । इमम्, गवादिविषयकम् । कामम्, अभिलाषम् । गोभिः अश्वैः, गवाश्वं दत्त्वा । आ पृण, सम्पूरय, 'पृण प्रीणने' इत्यस्येह पूर्त्यर्थत्वं धातूनामनेकार्थत्वात् । (वयम्) स्वाध्यः, स्वाधियः, 'सुः आङ्' इत्युपसर्गद्वयपूर्वस्य धीशब्दस्य बहुवचनम्, यणादेशश्छान्दसः, 'नञा निर्दिष्टमनित्यम्' इति 'न भूसुधियोः' इति यण्निषेधस्यानित्यत्वाद्वा सूत्रे 'सुधी' इति रूपग्रहणादिह यण्निषेधस्याप्राप्तेर्वा, सुधियो भूत्वा । त्वा, त्वाम् । स्तवाम, 'ष्टुञ् स्तुतौ' लोट् ॥ ९ ॥ इत्येकत्रिंशो वर्गः ॥ ३१ ॥ षोडशं सूक्तम् ॥ १६ ॥

## पदार्थप्रकाशिका

इमे सोमास इन्दवः । बर्हिषि उपरि सन्तीति । दूर्वाया उपरि स्थापिताः सन्तीत्यर्थः । परमेश्वरे त्विति । अन्याधीनवृद्धेः पूर्वं निरस्तत्वादिति भावः । योजनान्तरमिति । सहशब्दस्यैवेत्यर्थः । ज्ञानादिरूपमिति । द्विविधं बलमुद्दिष्टं बाह्यमान्तरमेव च । बाह्यं बलं तु शरीरं ज्ञानादि त्वान्तरं बलमिति प्रमाणादिति भावः । सोमं पीत्वा यजमानाय ज्ञानादिरूपमान्तरं बलं देहीत्याशयः उच्यते । सहशब्देन भगवद्बलस्य सदाऽव्यक्तत्वादाह । व्यक्तिश्चेति । अभीष्टेति ।

यजमानाभीष्टसम्प्रदानरूपव्यक्त्यर्थमिति यावदित्युक्तं भवति । निराकरोतीति । यजमानबलं सहः तथाच तस्येष्टस्य दानाय सोमं पिबेत्येव नत्वीश्वरबलस्य सोमेन वृद्धिः । तथाच यजमानेष्ट-सम्प्रदानरूपतद्गुणव्यक्तिर्वा सह इत्येव न परमेश्वरबलस्य सोमेन वृद्धिरित्येवम् एवशब्दाभ्यां निराकरोतीत्यर्थः । कुत इति । एवशब्दाभ्यां परमेश्वरबलस्य सोमेन वृद्धिनिराकरणं कुत इत्यर्थः । भाष्ये हेयोपादेयरहितगुणपूर्ण इत्यत्र गुणेषु हेयत्वसहितोपादेयराहित्यं व्याख्येयम् । तथाचात्युपादेयगुणपूर्ण इत्यर्थो द्रष्टव्यः । प्रकृतोपयोगायानुग्रहशब्दार्थमाह । अनुग्रह इति । अनेन तदिष्टस्यैव दानायेति व्याख्यानं प्रमापितं भवतीति ज्ञातव्यम् ॥ ६ ॥

अयं ते स्तोमो अग्रियः । हृदिस्पृगित्येकं पदम् । तत्र सप्तम्याः अलुक् इत्याशयेन तदर्थमाह । हृदयंगमेति । मनोहरेत्यर्थः ॥ ७ ॥

विश्वमित्सवनम् । इन्द्रेण सोमः पीतश्चेन्मदीयः सोमः सार्थको जात इति यजमानस्य हर्षो भवतीत्यर्थः । स्वगुणव्यक्तय इति । यजमानाभीष्टसम्प्रदानरूपस्वगुणव्यक्तये इत्यर्थः । गछति आगछतु ॥ ८ ॥

सेमन्नः काममापृण । द्वन्द्वैकवद्भावं नपुंसकत्वं चाश्रित्याह । गवाश्वमिति । गो अश्वमित्यत्र अवङ्स्फोटायनस्येति ओकारस्यावाङादेशे गवाश्वेतिरूपं द्रष्टव्यम् ।

ननु पृणसम्प्रीणन इत्येवधातोः प्रसिद्धत्वात् पृणेत्यस्य पूरयेति कथं व्याख्यानं सम्प्रीणयेति वक्तव्यत्वादाह । धातूनामिति । 'क्रियावाचित्वमाख्यातुम् एकैकोऽर्थः प्रकाशितः । प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः' इति वचनादिति भावः । इत्यस्येदं रूपमिति । पृणधातोः क्विपि तस्य लोपे च सति पृणेति रूपमिति भावः । किमर्थमहं गवाश्वं दत्वा तवाभिलाषं पूरयामीत्यत आह । वयंत्विति । यद्वा कामरूपेण क्रियमाणे सति त्वं किं करिष्यसीत्यत आह । वयं त्विति । स्वस्थांतःकरणा वयमित्यर्थः । स्वाङ्पूर्वकात् ध्यायतेः क्विबिति । सु आङित्युपसर्गद्वयपूर्वात् ध्यैचिंतायाम् इत्यस्मात् क्विपि तस्य लोपे कित्वादादेच उपदेशेऽशितीति धात्वैकारस्यात्वे स्वाध्या इति जाते आतोलोप इटिचेति धात्वाकारलोपे स्वाध्य इति जाते यकारस्य इकाररूपसम्प्रसारणे स्वाध् इ स्वाधीति प्रातिपदिकनिष्पत्तौ पश्चात्सुप्रत्यये तस्य रुत्वे विसर्गे च स्वाधीरिति भवति । प्रधीरितिवदित्यर्थः । अत एव समानमङ्गीकुरुते । स्वाधीरिति वैदिकप्रयोगाः ।

ननु तर्हि स्वाधीशब्दस्य प्रथमाबहुवचनं स्वाध्य इति कथम्। स्वाधीः स्वाधीयौ स्वाधीयः इति शब्दः। तथाच प्रथमाबहुवचने स्वाधी जस् इति स्थिते जकारलोपे स्वाधी अस् इति जाते इकोयणचीति यणादेशे सस्य रुत्वे विसर्गे च स्वाध्य इति रूपविकारे प्राप्त अचिश्नुधातुभ्रुवांय्वोरियङुवङाविति यणादेशापवादकत्वेनेयङादेशविधानात्। इह च धातो-रियङादेशे ङिकारलोपे स्वाधि यस् इति जाते सस्य रुत्वे विसर्गे च स्वाधिय इति वक्तव्यत्वादित्यत आह। यणादिश्छान्दस इति। यणादेशापवादकत्वेनेयङादेशे विहितेऽपि छन्दस्त्वात् यणादेश एव जातः। तथाच स्वाध्य इति युक्तमिति भावः।

ननु यणादेशोऽपि न सम्भवति। नभूसुधियोः एतयोरचि परे यण् न स्यादिति सुधीशब्दस्य यणादेशनिषेधादित्यत आह। नभूसुधियोरिति। अतो यणादेशो जात इति भावः। अङ्गीकृत्य चेदमुदितम्। नभूसुधियोरिति सूत्रप्राप्तिरेव नास्ति। तत्राखण्डस्य शब्दस्यैव ग्रहणात्। अत्र तु सू आङ् इत्युपसर्गद्वयपूर्वकाद् ध्यायतेर्निष्पन्नस्य स्वाधीशब्दस्य न भूसुधियोरिति सूत्रगृहीत सुधीशब्दभिन्नत्वादित्यत आह। रूपग्रहणाद्वेति। नभूसुधियोरिति। सूत्रे रूपस्य रुढत्वेनाखण्डस्य ज्ञानिपर्यायस्य सुधीशब्दविशेषस्वरूपस्यग्रहणादित्यर्थः। स्वाध्य इत्यस्यार्थमाह। सुधीतयो भूत्वेति। सम्यक्त्वद्विषयकचिन्तावन्तो भूत्वेत्यर्थः॥ ९-३१-१६॥

## पदार्थदीपिका

॥ योजनान्तरमिति॥ प्रसिद्धेन्द्रविषययोजनाभिन्नां योजनामित्यर्थः। नित्यव्यक्तबलस्य का नाम व्यक्तिरित्यत आह। व्यक्तिश्चेति। एवशब्दाभ्यामिति। यजमानबलमेव सहःशब्देनोच्यते न नित्याभिवृद्धपरमेश्वरबलम्। यद्वा परमेश्वरबलव्यक्तिरेव सहःशब्देनोच्यते न तु बलवृद्धिरित्येवं वाक्यद्वयस्यैवशब्दाभ्यामित्यर्थः। ननु पूर्वं बलसाध्यमभीष्टसम्पादनं व्यक्तिरित्युक्तम्। तत्कथमिदानीमनुग्रहो व्यक्तिरिति तद्विरुद्धाभिधानमित्यत आह। अनुग्रह इति॥ ६॥

॥ अतिशयेन सुखप्रद इति॥ सुखकरद्रव्यवचनोऽत्र संशब्दः। ततस्तमप्। अत्र सुखप्रकर्षस्य गुणद्वारा गुणिनि द्रव्येति सङ्क्रान्तत्वात्। अद्रव्यप्रकर्ष इति निषेधात्। किमेत्तिङव्ययेतु न भवति। द्रव्यस्य स्वतः प्रकाशाभावात् ईदृगर्थ एवहि स निषेध इति भावः। हृदिस्पृगिति। हृदिस्पृशतीति स्पृशोनुदके किन्। हृद्युभ्यां हेरुपसंख्यानमिति। तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक्। किन् प्रत्ययस्य कुरिति शकारस्य कुत्वमिति भावः॥ ७॥

॥ वृत्रहेति ॥ ब्रह्मभ्रूणवृत्रेषु क्विन् इन् इत्यादिना विवृतं दीर्घत्वं सौ चेति प्रतिप्रसवात् भवतीति भावः । मदायेति । मदी हर्षे इत्यस्मात् मदोऽनुपसर्ग इत्यप्प्रत्यय इति भावः । गच्छतीति । इषु गमि यमां छ इति छत्वमिति भावः ॥ ८ ॥

आपृणेत्यस्य सम्पूरयेति व्याख्यानमुपपादयति । धातूनामनेकार्थत्वादिति । धातुपाठोक्तार्थ एव किं न स्यात् इत्यत आह । पृण प्रीणने इत्यस्येति । पृण प्रीणन इत्यस्मात् लोटः तुदादिभ्यः शः । तस्य ङित्वात् लघूपधगुणाभावः । अतो हेरिति हेर्लुगिति भावः । कामस्य प्रीणानायोगात् पूरणार्थत्वेन व्याख्यातमिति भावः । ध्यायतेः क्विबिति । भ्राजभासेत्यतः क्विबिति वर्तमाने अन्येभ्योऽपि दृश्यन्ते इति क्विप् । दृशिग्रहणस्य विध्यन्तरोपलक्षणार्थत्वात् । अत्र सम्प्रसारणं पररूपत्वं ढ्लोपे पूर्वस्य दीर्घोण इति सम्प्रसारणस्यांगस्येति वर्तमाने हल् इत्यङ्गावयवहलुत्तर सम्प्रसारणस्य दीर्घ इति भावः । यणादेशश्छान्दस इति । इको यणचीति प्राप्त यणादेशापवादत्वेनाचिश्नुधात्वित्यादिना विहितेयङुवङपवादत्वेन एरनेकाच इति विहितयणादेशे न भूसुधियोरिति निषिद्धे इयङादेशप्राप्तौ छन्दस्युभयथेति छान्दसो यणादेश इत्यर्थः । रूपग्रहणाद्वेति । सुशब्दाव्यवहितपूर्वस्यैव ध्यायतेः क्विपि रूपस्यैव न भूसुधियोरित्यत्र ग्रहणात् प्रकृते च स्वाङ् पूर्वकत्वात् न तन्निषेध इति भावः । स्तवामीति । ष्टुञ् स्तुतौ । धात्वादेः षः सः । लोडुत्तमपुरुषैकवचनस्य लोटो लङ्वदिति लङ्वद्भावेन नित्यं ङित इति सकारलोपः आडुत्तमस्य पिच्चेति आडागम इति भावः ॥ ९, ३१, १६ ॥

## टीकाविवृतिः

इमेसोमासः ॥ इन्दवइति ॥ इंकामंकाम्यंददातीति इन्दुः । दाञः कुः । तां इन्द्रसहस इत्यत्रातोटिनित्यमित्यतोनुनासिकादेशः ॥ व्यक्तिश्चेति ॥ भक्तेष्टदानानुकूलो व्यापारः । तथाच विष्णोर्नित्याभिव्यक्तसर्वत्वात्कथं बलाभिव्यक्तिरिति शङ्कानवकाशः ॥ एवशब्दाभ्यामिति ॥ यजमानेष्टबलदानायैव सोमपानं नतु बलवृद्ध्यै । यद्वा विष्णोर्बलाभिव्यक्तिरेव सहःशब्दवाच्या नबलवृद्धिरिति भावः । पूर्णमद इति श्रुत्यर्थस्तु । अदो नारायणमूलरूपं पूर्णं ज्ञानादिगुणव्यक्तिमत् इदमवताररूपं रामकृष्णादिच पूर्णं पूर्णान्मूलरूपात्पूर्णमवताररूपं उदच्यते उत्पूर्वादंचतेः कर्मणि यकि अनिदितामिति नलोपः । उदच्यते उद्रिच्यते अभिव्यज्यत इति । अत्र पूर्णत्वोक्त्या नित्याभिव्यक्तिरुच्यते । तथा हेयोपादेयेतिं श्रुत्यन्तरेपि । अनुग्रहव्यक्तिरिति तृतीयश्रुतेरुक्तार्थे प्रामाण्यघटनायानुग्रहशब्दार्थमाह ॥ अनुग्रह इतीति ॥ अवस्थाविशेषो व्यक्तिरिति सुधोक्तस्याप्ययमेवार्थो ज्ञेयः ॥ ६ ॥

अयन्ते ॥ शंतम इति ॥ शंशब्दस्य सुखवाचित्वेपि सिद्धार्थस्य चाब्दिकमते द्रव्यत्वात्त-द्वाचित्वाददद्रव्यप्रकर्षे इति निषेधात्किमेत्तिङव्ययेत्याम्न ॥ हृदिस्पृगिति ॥ स्पृशेः स्पृशोनुदके क्विन्निति क्विन् हृद्द्युभ्यांचेति वार्तिकेन सप्तम्या अलुगिति भावः । अग्रियः श्रेष्ठः घछौचेतिघः तस्येयादेश इति द्रष्टव्यम् ॥ ७ ॥

विश्वमित्सवनम् ॥ प्रसिद्धेन्द्रपक्षे मदायेत्यस्यात्महर्षायेत्यस्य सिद्धत्वाद्विष्णुपक्षे तदिष्टस्यैव दानाय तद्गुणव्यक्तिरेव वेत्येतदनुसारेणार्थद्वयमाह ॥ यजमानहर्षायेति ॥ मदीहर्ष इत्यतो मदोनुपसर्ग इत्यप्प्रत्यय इतिभावः ॥ ८ ॥

सेमन्नः । पूरणस्य पृणधात्वर्थत्वसंभवात्कुतःपृणेरनेकार्थाश्रयणमित्यत आह ॥ पृणप्रीणन इत्यस्येति ॥ तुदादित्वाच्छे तस्य ङित्वाद्गुणाभावे हेर्लुकीति शेषः । कामस्य प्रीणनायोगात्पूरणार्थत्वेन व्याख्यातमिति भावः ॥ स्वाङ्पूर्वादिति ॥ भ्राजभासेत्यतः क्विबनुवृत्तौ अन्येभ्योपि दृश्यत इति क्विपि दृशिग्रहणात्संप्रसारणे अङ्गस्येत्यनुवृत्तौ हल इत्यनेनांगाव-यवहलुत्तरसंप्रसारणस्य दीर्घ इति भावः । ननु तर्हि स्वाधीशब्दाज्जसि इकोयणचीत्ये-तदपवादेनाचिश्नुधात्वित्यनेनेयङ्प्राप्तौ तदपवादे एरनेकाच इति विहितयणादेशे नभूसुधियोरिति निषिद्धे पुनरियङ् स्यादित्यत आह ॥ यणादेशश्छान्दस इति ॥ छन्दस्युभयथेत्यनेनेति भावः ॥ नञानिर्दिष्टमिति ॥ इयंच परिभाषा यद्वृत्तान्नित्यमित्यनेन तिङ्ङतिङ इतिप्राप्तनिघात-प्रतिषेधेसिद्धेपुनर्निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चणकच्चिद्यत्र युक्तमिति यद्यदि यत्रशब्दैर्योगे निघातप्रति-षेधकरणाज्ज्ञाप्यते । यद्वृत्तशब्देन यथाकथंचिद्यच्छब्दग्रहणादिति बोध्यम् ॥ रूपग्रहणादिति ॥ स्वंरूपं शब्दस्येत्युक्तेः सुशब्दमात्रपूर्वधीशब्दस्य नभूसुधियोरित्यत्रग्रहणात्स्वाधीशब्दे आङआधिक्यान्न निषेध इतिभावः । सुधीतयः समीचीन ज्ञानवन्त इत्यर्थः ॥ ९,३१,१६ ॥

## ऋक्संहिता पदपाठसहिता

(१६८) **इन्द्रावरुणयोरहंसम्राजोरवआवृणे ॥ तानोमृळातईदृशे ॥ १ ॥**

(प०) **इन्द्रावरुणयोः । अहम् । सम्ऽराजोः । अवः । आ । वृणे ॥ ता । नः । मृळातः । ईदृशे ॥ १ ॥**

(१६९) **गन्तारााहिस्थोऽवसेहवंविप्रस्यमावतः ॥ धर्तारांचर्षणीनाम् ॥ २ ॥**

(प०) **गन्तारा । हि । स्थः । अवसे । हवम् । विप्रस्य । माऽवतः ॥ धर्तारा । चर्षणीनाम् ॥ २ ॥**

(१७०) अनुकामंतर्पयेथामिन्द्रांवरुणरायआ ॥ तावांनेदिंष्ठमीमहे ॥ ३ ॥
(प०) अनुऽकाम् । तर्पयेथाम् । इन्द्रांवरुणा । रायः । आ ॥ ता । वाम् । नेदिंष्ठम् । ईमहे ॥ ३ ॥

(१७१) युवाकुहिशचीनांयुवाकुंसुमतीनाम् ॥ भूयामंवाजदाव्नांम् ॥ ४ ॥
(प०) युवाकुं । हि । शचीनाम् । युवाकुं । सुऽमतीनाम् ॥ भूयामं । वाजऽदाव्नांम् ॥४॥

(१७२) इन्द्रंःसहस्रदाव्नांवरुणःशंस्यांनाम् ॥ ऋतुर्भवत्युक्थ्यंः ॥ ५, ३२ ॥
(प०) इन्द्रंः । सहस्रऽदाव्नांम् । वरुंणः । शंस्यांनाम् ॥ ऋतुंः । भवति । उक्थ्यंः ॥ ५, ३२ ॥

## ऋग्भाष्यम्

अविकारेण संस्थानमीदृक्त्वं नाम कीर्तितम् ॥ १ ॥
मावतो ज्ञानयुक्तस्य प्रजाश्चर्षणयः स्मृताः ॥ २ ॥
नेदिष्ठत्वं समीपत्वं क्षिप्रं शरणमीमहे ॥ ३ ॥
युवयोरेव वाक्यानां सुमतीनां च सर्वशः ।
भवेमान्नप्रदातॄणां सर्वदा विषया वयम् ॥ ४ ॥
ऋतुः प्रधानउक्थ्यश्च शस्त्रैः स्तुत्यो विशेषतः ॥ ५, ३२ ॥

## ऋग्भाष्यटीका

इन्द्रावरुणयोः । नवर्चमिदमैन्द्रावरुणसूक्तम् । अत्रेदृश इत्येतद्व्याख्याति ॥ अविकारेणेति ॥ अहं संम्राजोः सम्यग्दीप्तयोरिन्द्रावरुणयोः तत्कर्तृकमिति यावत् । अवोऽवनं रक्षा मावृणे प्रार्थये तौ चेन्द्रावरुणौ नोऽस्मानीदृशे भावप्रधानो निर्देशः । इदानीं यथा सर्वदा तथा भावोऽविकारेण संस्थानम् ईदृक्त्वम् । तस्मै मृळातो रक्षेताम् ॥ १ ॥

गन्तारा । अत्र मावत इति पदं चर्षणिशब्दं च व्याख्याति ॥ मावत इति हे इन्द्रावरुणौ । चर्षणीनां प्रजानां धर्तारौ युवां मावतो ज्ञानयुक्तस्य विप्रस्य हवमाह्वानं प्रत्यवसे तस्य रक्षायै गन्तारौ स्थौ हियस्मात्तस्मादागच्छतमिति ॥ २ ॥

अनुकामम् । अत्र नेदिष्ठमिति पदं व्याख्याति ।। नेदिष्ठत्वमिति ।। तर्हि कथमन्वय इत्यत आह ।। क्षिप्रमिति ।। तच्च समीपत्वमिह कालतो विवक्षितम् । ततश्च क्षिप्रमिति भवति । तस्य चेमह इत्यनेन सम्बन्ध इत्यर्थः । हे इन्द्रावरुणावस्मान् रायो वित्तस्य विषये अनुकामं यथेष्टमातर्पयेथां तृप्तान्कुरुतम् । वयं च तौ वां युवां नेदिष्ठं क्षिप्रमीमहे शरणमिति शेषः ।। ३ ।।

युवाकु ।। युवयोः । हे इन्द्रावरुणौ वयं युवाकु । लुप्तषष्ठीबहुवचनान्तमेतत् । युवयोरेव सम्बन्धिनीनां शचीनां वाक्यानां साधवो यूयमित्येवं रूपाणां तथा युवाकु सुमतीनां शोभनानां मतीनां सर्वशः काले विषया भूयाम भवेम विकरणस्य लुक् । किंच वाजदाव्नां अन्नप्रदातॄणां सर्वदाविषयाभवेम । सर्वपूज्या भवेमेति ।। ४ ।।

इन्द्रः । अत्र ऋतूक्थ्यशब्दार्थमाह ।। ऋतुरिति ।। ऋतुरिव क्रतुः यथा क्रतुः कर्ममध्ये विशिष्टस्तथा प्रधानः ऋतुः । उक्थानि शस्त्राणि तैः स्तुत्य उक्थ्यः । तर्हि शंस्यानां ऋतुरित्यनेन पुनरुक्तिरित्यत आह ।। विशेषत इति ।। शंस्यानां ऋतुरिति सामान्येनोक्तम् । उक्थ्य इति विशेषतः । अतो नदोषः । इन्द्रः सहस्रदाव्नां भूरिदातॄणां शंस्यानां स्तुत्यानां च क्रतुर्भवति । उक्थ्यश्च। एवं वरुणोपीति योज्यम् ।। ५, ३२ ।।

## मन्त्रार्थमञ्जरी

'अथ इन्द्रावरुणयोरहम्' इति सप्तदशं नवर्चं वर्गद्वयात्मकमैन्द्रावरुणं सूक्तम् । एते विना गायत्रीछन्दस्कम् । अहम् । सम्राजोः सम्यग्दीप्तयोः, 'राजृ दीप्तौ' इति धातोः क्विप् । इन्द्रावरुणयोः । अवः, अवनम्, इन्द्रवरुणकर्तृकं रक्षणम् । आवृणे, प्रार्थये ।। ता, तौ चेन्द्रावरुणौ । नः, आस्माकम् । ईदृशे, भावप्रधानम्, ईदृक्त्वाय, अविकारेणैवावस्थानायेति यावत् । मृळातः, रक्षेताम् ।। १ ।।

(हे) इन्द्रावरुणौ) चर्षणीनाम्, प्रजानाम् । धर्तारा, धर्तारौ, धारकौ । (युवाम्) मावतः, ज्ञानयुक्तस्य । विप्रस्य । हवम्, आह्वानं प्रति । अवसे, तस्य रक्षायै । गन्तारा, गन्तारौ । स्थः । हि, यस्मात् । (तस्मादागच्छतम्) इति ।। २ ।।

इन्द्रावरुणा, हे इन्द्रावरुणौ । (अस्मान्) रायः, वित्तस्य विषये । अनुकामम्, यथेष्टम् । आ तर्पयेथाम्, तृप्तान्कुरुतम् । (वयं च) ता वाम्, तौ युवाम् । नेदिष्ठम्, क्षिप्रम् । ईमहे (शरणम्) इति शेषः, शरणं प्राप्नुम इत्यर्थः ।। ३ ।।

(चतुर्थी• गायत्रीविशेषपादनिचृच्छन्दस्का) (हे इन्द्रावरुणौ वयम्) युवाकु, लुप्तषष्ठीकं बहुवचनान्तम्, युष्मद आकुः, युवयोः सम्बन्धिनीनाम्। शचीनाम्, वाक्यानाम्, 'साधवो यूयम्' इत्येवं रूपाणाम्। तथा युवाकु सुमतीनाम्, युष्मत्सम्बन्धिबुद्धीनाम्। (सर्वदा विषयाः) भूयाम, भवेम, विकरणस्य लुक्। किं च, वाजदाव्नाम्, अन्नप्रदातॄणाम्। (सर्वदा विषयाः) (भूयाम) सर्वपूज्या भवेम इति। आतो वनिप् हि ॥ ४ ॥

(पञ्चमी पादनिचृद्ध्रसीयसी वा गायत्रीविशेषश्छन्दः) इन्द्रः। सहस्रदाव्नम्, भूरिदातॄणाम्। शंस्यानाम्, स्तुत्यानाम्। (च) ऋतुः भवति, ऋतुरिव क्रतुः, यथा क्रतुः कर्ममध्ये प्रधानस्तथा प्रधान इत्यर्थः। उक्थ्यः, उक्थैः शस्त्रैः स्तुत्यः। (च) एवम् 'वरुणः (अपि)' इति योज्यम् ॥ ५ ॥ इतिद्वात्रिंशो वर्गः ॥ ३२ ॥

## पदार्थप्रकाशिका

इन्द्रावरुणयोरहम्। इन्द्रावरुणयोरैन्द्रावरुणमित्यानुक्रमणिकां मनसि निधायाह। नवर्चमिति। इदानीं यथा तथा सर्वदा भावः इत्यन्वयः। सर्वदेत्यस्य अतीतानागतकालयोरित्यर्थः। इदानीं यथा तथा सर्वदा अभावविकारस्यैव प्राप्तेरित्याशयः। तस्मा इति। सर्वदैकप्रकारेण संस्थानाय रक्षेतामित्यर्थः ॥ १ ॥

गन्तारा हि स्थोवसे। आह्वानं प्रतीति। आह्वानं श्रुत्वेति यावत्। गन्तारौ गमनस्वभाववन्तौ यस्मादित्यर्थः। तस्मादिति। ब्राह्मणत्वात् सदाह्वानं श्रुत्वा ममावसे आगच्छेत्यर्थः ॥ २ ॥

अनुकामं तर्पयेथाम्। नेदिष्टत्वमिति। अन्तिकबाढयोर्नेदसाधावित्यन्तिकशब्दस्य नेदादेशविधानात्। अतिशायने तमबिष्ठनाविति इष्ठनूप्रत्ययार्थस्यातिशयार्थत्वादतिशयेन समीपस्थो नेदिष्ठः। तस्य भावो नेदिष्टत्वं इत्यर्थो द्रष्टव्यः। कथमन्वय इति। वामित्यनेनान्वयायोगादिति भावः। ततश्चेति। कालतः सामीप्यार्थत्वे विवक्षिते सतीत्यर्थः। अनेन कथं तस्यान्वय उक्त इत्यत आह। तस्येति। क्षिप्रार्थकस्य नेदिष्ठमित्यस्येत्यर्थः। ईमहेति। इणगताविति धातोः महिङिप्रत्यये सति रूपम्। तथाच भवद्भ्यां यथेष्टद्रव्यदानेना स्मत्तृप्तिकरणानन्तरं अन्तःकरणस्वास्थ्येन युवां क्षिप्रं शरणं प्राप्नुम इत्यर्थः ॥ ३ ॥

युवाकु हि शचीनाम्। लुप्तेति। तथाच युवाकूनामित्यर्थः। मतीनामिति। तथाच सर्वदा अस्मान् संरक्ष्यतया जानीहीति भावः। ननु भूयामेति कथम्। भूधातोः लिङि परस्मैपदिन

उत्तमपुरुषबहुवचने मस्प्रत्यये सकारलोपे पश्चात् शपि अकारं विहाय तस्य लोपे भू आ इतिजाते वोकाररूपगुणे तस्यां वादेशे भवेति जाते यासुट्परस्मैपदेषूदात्तोङिच्चेति यासुडागमे सुडित्यस्य लोपे अतो येयः इति अकारान्तात् परस्य यासुड इत्यादेशे यकारलोपे भव इति जाते गुणे भवेमेति वक्तव्यत्वादित्यत आह। विकरणस्य लुगिति। शप्विकरणस्य लुगित्यर्थः। तथाच भू इत्यस्मात् मस् प्रत्यये सकारलोपे यासुडागमे भु इत्यस्य उकारान्तत्वे यासुटः अकारान्तात्परत्वाभावेन अतोयेय इत्यस्याप्रवृत्त्या यासुटो ङित्कार्यकारित्वात्क्ङिति परे गुणनिषेधात् भु इत्यत्र उकारस्य ओकाररूपगुणाभावे अचःपरतोऽभावेन तस्यावादेशाभावे च भूयामेति रूपं युक्तमिति भावः ॥४॥

इन्द्रः सहस्रदाव्नां तथाप्रधान इति। देवानां मध्ये विशिष्ट इत्यर्थः। प्रधानः ऋतुरित्युच्यते पुनरुक्तिरिति। मन्त्रे शंस्यानां मध्ये ऋतुः प्रधान इत्यर्थस्य ऋतुरुक्थ्य इत्यनेनैव लाभादिति भावः। स्तुत्यानां स्तुतिभिः स्तुत्यानां उक्थ्यः स्तुतिविशेषैः शस्त्रैः स्तुत्य इत्यर्थः। एवं वरुणोपीति। सहस्रदा शंस्यानाम् ऋतुरुक्थ्यं भवतीत्यर्थः ॥ ५-३२ ॥

## पदार्थदीपिका

॥ सम्राजोरिति ॥ राजृदीप्तौ। अस्मात्सत्सूद्विषेत्यादिना क्विप् समो मोऽनुस्वार इति अनुस्वारे प्राप्ते मो राजि समः क्वौ इति मकारादेश इति भावः। तत्कर्तृकमिति। यावदिति। कर्तृकर्मणोः कृतीति कर्तरि षष्ठीति भावः। अवोऽवनमिति। अवरक्षणादिषु। अस्मात् भावेऽसुन्निति असुन्निति भावः। रक्षणमिति मृळात इति रक्षणोक्तेरिति भावः। मृळात इति। मृड्सुखन अस्मात् प्रार्थनायां लिङर्थे लेट्। द्विवचनं तस्। लेटोऽडटाविति अडागमः। तुदादिभ्यः शः। इति शस्य ङित्वात् लघूपधगुणाभावः इति भावः। रक्षेतामिति। धातूनामनेकार्थत्वमाश्रित्य लिङ्लेटोरैकार्थ्याल्लिङन्तं प्रतिपदं दत्तमिति भावः ॥ १ ॥

धर्ताराविति। धृञ् धारणे ण्वुल् तृचाविति तृच्। एकाच उपदेश इति इट् प्रतिषेधः। गुणो रपरत्वम्। उपधादीर्घः। सुपां सुलुक् इत्याकार इति भावः। हवमिति। प्राग् व्याख्यातमेतत्। गन्ताराविति। गमेः ताच्छील्ये तृन्। द्विवचनस्य सुपां सुलुगित्यादिना आकारादेशः। ऋदृशोङि गुणः अप्तृन्नित्यदिनो उपधादीर्घत्वमिति भावः। स्थाविति। अस् भुवि लण् मध्यमपुरुष द्विवचनं थस् अदिप्रभृतिभ्यः शप इति शपो लुक् श्नसोरल्लोप इत्यकारस्य लोप इति भावः। अवसे इति। अवरक्षण इत्यस्मात्तुमर्थे सेसनित्यस्य सन्प्रत्ययः इति भावः ॥ २ ॥

नेदिष्ठे त्वमिति । अतिशयेनान्तिकं अतिकृशब्दात् अतिशायेने इष्ठन् । अन्तिका बाढयोर्नेद साधाविति नेदादेशः । यस्येति चेत्यकारलोप इति भावः । अनुकामं यथेष्टमिति । वीप्सालक्षणे यथार्थेऽव्ययं विभक्तीत्यादिनाव्ययीभावसमासेऽव्ययीभावश्चेत्यव्ययसंज्ञायां 'अव्ययादाप्सुप्' इति प्राप्तस्य लुकोपवादो नाव्ययीभावादतोम्त्वपञ्चम्या इति विभक्तेरनादेश इति भावः । तर्पयेथामिति । तृपेः ण्यन्ताल्लोटि णिचश्चेत्यात्मनेपदं मध्यमद्विवचनयायां टेरेत्वं आत्मनेपद इत्यमादेशः । शपि सति । अतो येये इति अकारस्येयादेशः । आद्गुणः यलोपश्चेति भावः । ईमह इति । इङ् गतौ णित्वादात्मनेपदं बहुलं छन्दसीति श्यनो लुगिति भावः ॥ ३ ॥

युवयोरिति भाष्यपदं युवाक्विति श्रौतस्य प्रतिपदमिति गतिप्रयुक्तां लुप्तषष्ठीद्विवचनांतत्वप्रतीतिं निवारयितुमाह । लुप्तेति । तथा च युवाकु शचीनामिति समानाधिकरणोपदे भाष्ये तु युवयोरिदमित्यर्थे तद्धिता इत्युकुप्रत्यय इति ज्ञापयितुं युवयोरित्युक्तं संबन्धीनीनामिति शेषः । दस्रा युवाकव इत्यत्र संबन्धिनोहि वां सुता युवाकव इत्युक्तेरिति भावः । युवयोरेवेति । श्रौतो हिशब्दोऽवधारणार्थतया भाष्ये व्याख्यात इति भावः । नन्वाशीर्लिङ्न्तस्य भूयामेति श्रौतपदस्य कथं प्रार्थनालिङन्तभाष्ये भवेमेति प्रतिपदमित्यतः न श्रुतावाशीर्लिङ तथा सत्यार्धधातुकतया सुटः सकारलोपो न स्यात् । किन्तु प्रार्थनायामेव लिङ् नित्यंङितः इति सकारलोपः । या सुट्परस्मैपदेष्वुदात्तो ङिच्चेति उदात्तयासुडागमः लिङ् सलोपो नयसेति सकारलोपः बहुलं छन्दसीति विकरणस्य शपोलुक् ततश्चातीयोय इत्यनेन या इत्यस्येयादेश प्रसक्तिरिति भावेनाह । विकरणस्य लुगिति । वाजदाव्नामिति । वाजं ददातीति वाजदावान् आतोमनिन् क्वनिब्वनिपश्चेति ददातेर्वनिप् आमि अल्लोपोनः इत्याकारलोपः तस्या चः परस्मिन्निति स्थानिवद्भावात् लोपोव्योर्वलीति वकारलोपो भवतीति ध्येयम् । अन्नदायकत्वं प्रार्थ्यत इत्यभिप्रायमाह । सर्वेति ॥ ४ ॥

भाष्योक्तं क्रतुशब्दस्य प्रधानार्थत्वं गौणीवृत्तिमाश्रित्योपपादयति । ऋतुरिवेति । भवेदेतत् यदि क्रतोः प्राधान्यं प्राधान्यार्थे उपमानत्वं च प्रसिद्धं स्यात् । तदेव कुत इत्यत आह । अनेन इति । भूम्नः क्रतुवज्ज्यायस्त्वं तथाच दर्शयतीति ब्रह्मसूत्रस्थं तस्माद्भूमा गुणतो वैशिष्ट्यो यथा क्रतुः कर्ममध्ये विशिष्ट इति श्रुतिस्थां च प्रसिद्धिं सूचयति । अत एव प्रधान इति वक्तव्ये विशिष्टा इत्युक्तमिति ध्येयम् । तैःस्तुत्य इति । स्तुत्यत्वेन तत्र प्रभव इत्यर्थे भवेः छन्दसीति यत्प्रत्ययः । यस्येति लोप इति भावः । इन्द्रो वरुणश्च सहस्रदाव्नामित्यादियोजनायां तृतीयपादे एकवचनानुपपत्तेस्तदनुसारेण इन्द्रः सहस्रदाव्नां वरुणः शंस्यानामुक्थ्यः इति यथा सङ्ख्यं

एकैकविशेषणसम्बन्धेन योज्यमित्यपव्याख्यानं प्रत्येकं अखिलवाक्यार्थयोजनायां एकैकस्य महात्म्यविशेषलाभात् गुणाधिक्यं येन भवेद्वेदस्यार्थः । स एव हि इति प्रागुक्तेरिति भावेन तथैव योजयति । एवं वरुणोपीति योज्यमिति । ततश्च नैकवचनानुपत्तिरिति भावः ।

## टीकाविवृतिः

इन्द्रावरुणयोः ॥ नवर्चमिति ॥ ऋक्संख्यर्षिछन्दसामनुवृत्त्या सिद्धेः सूक्तदेवताछन्दोभेदाः इन्द्रावरुणयोरैन्द्रावरुणं युवाकुपादनिचृताविन्द्रो ह्रसीयसीवेत्यनुक्रान्ताः । युवाकुहिशचीनामिन्द्रः सहस्रदाव्नामिति ऋग्द्वये सप्ताक्षरपादवत्त्वान्निचृच्छन्दस्कत्वमन्यत्र गायत्रीछन्दस्कत्वं ऊनाधिकेचैकेन निचृद्भुरिजावित्येकाक्षरन्यूने गायत्रीपादे निचृत्संज्ञाया एकाक्षराधिक्ये भुरिक्संज्ञायाश्चोक्तेः । इन्द्रः सहस्रदाव्नामित्यस्यामृचि तुवर्णद्वयन्यूनपादयुक्तत्वाद्ध्रसीयसीछन्दोवेत्यनुक्रमणिकार्थः ॥ सम्यगिति ॥ राजतेः सत्सूद्विषेति क्विपि मोराजिसमःक्वाविति मकारस्य मकारादेशः । कर्तरि षष्ठीमाश्रित्याह ॥ तत्कर्तृकमिति यावदिति ॥ अवतेर्भावेऽसुनित्याशयेनाह ॥ अवोऽवनमिति ॥ ईदृक् शब्दस्याविकारेणेति भाष्योक्तार्थं घटयति ॥ इदानीं यथेति ॥ यथेदानीं स्थितिस्तथा सर्वदा भावः सदा सत्त्वं ईदृक्त्वं तस्य तात्पर्यमविकारेण संस्थानमित्यर्थः । मृडसुखन इत्यतो लिङर्थे लेडिति लेटि तसि आडागमे तुदादित्वाच्छे तस्य ङित्वाद्गुणाभावे रूपमित्याशयेनाह ॥ मृळातो रक्षेतामिति ॥ धातूनामनेकार्थत्वादिति भावः ॥ १ ॥

गन्तारा ॥ धर्ताराविति ॥ श्रुतौधृधारणे इत्यतस्तृचिऋतोङीतिगुणे अप्तृन्तृजितिदीर्घे सुपांसुलुगित्यौकारस्याकारादेश इतिभावः । एवं गन्तारा इत्यत्रापि । अत्र तृनंतत्वेनाद्युदात्तं विशेषः । विप्रस्येत्यस्योभयत्रान्वय इतिभावेनाह ॥ तस्येति ॥ साध्यमध्याहरति ॥ तस्मादिति ॥ २ ॥

अनुकामम् ॥ नेदिष्ठशब्दस्यान्तिकबाढयोर्नेदसाधावित्यन्तिकशब्दादतिशयार्थ इष्ठनि नेदादेशे निष्पन्नस्य सामीप्यार्थत्वेपि वस्तुसामीप्यमर्थः स्यात्कथं क्षिप्रार्थकत्वमित्यत आह ॥ तच्चेति ॥ अनुकामम् ॥ यथेष्टमिति ॥ वीप्सार्थकानुशब्दस्याव्ययं विभक्तीति यथार्थेऽव्ययीभाव इति भावः ॥ ३ ॥

युवाकुहि ॥ लुप्तषष्ठीति ॥ न युवाकुशब्दस्य युवयोरिति भाष्यं प्रतिपदं किन्तु सम्बन्धार्थकथनपरम् ॥ युष्मच्छब्दात्तस्येदमित्यर्थे तद्धिता इति बहुवचनादाकुप्रत्यये युवादेशे

चैतद्रूपमिति भावः ॥ युवयोरेवेति ॥ हिपादपूरणे हेतौ विशेषेप्यवधारण इति विश्वोक्तेर्हि-शब्दोवधारणार्थ इति भावः ॥ शचीनां वाक्यानामिति ॥ शचीशब्दस्य वाङ्नामसु पाठादितिभावः । भूयामेत्यत्राशीर्लिङ्याशीरर्थस्य प्रकृतानुपयोगाद्यासुटः सकारस्य श्रवणप्रसङ्गाच्च प्रार्थनालिङाश्रयणे शपि अतोयेय इतीयादेशे भवेमेति स्यादित्यत आह ॥ विकरणस्येति ॥ सर्वविधिभ्यो लुग्विधेर्बलवत्त्वादादौ शब्लुकि वर्णाश्रयेनास्तिप्रत्ययलक्षणमित्युक्तेरतोयेय इति नेति भावः ॥ वाजदाव्नामिति ॥ ददातेरातोमनिन्निति वनिबिति भावः । तात्पर्यार्थमाह ॥ सर्वेति ॥४ ॥

इन्द्रः ॥ ऋतुरिवेति ॥ गौण्यावृत्त्या क्रतुशब्दः प्राधान्यार्थ इतिभावः । तदुपपादयति ॥ यथेति ॥ अनेन तस्माद्भूमा गुणतोवै विशिष्टो यथाक्रतुः कर्ममध्ये विशिष्ट इति श्रुतिः सूचिता ॥ उक्थ्य इति ॥ विशेषत इति ॥ यद्यपीन्द्रः सहस्रदाव्नां क्रतुः वरुणःशंस्यानामुक्थ्य इति योजनायां पुनरुक्तिर्नास्ति तथाप्येकैकस्य विशेषणद्वयोक्तगुणलाभायैतदुक्तमिति भावः । तर्ह्येतौ क्रतू उक्थ्यौचेति द्विवचनं स्यादित्यत आह ॥ एवंवरुणोपीति ॥ यथेन्द्र एवं वरुणः क्रतुरुक्थ्यश्चेत्यर्थः ॥ ५,३२ ॥

## ऋक्संहिता पदपाठसहिता

(१७३) तयोरिदवसावयंसनेमनिचधीहि ॥ स्यादुतप्ररेचनम् ॥ ६ ॥

(प०) तयोः । इत् । अवसा । वयम् । सनेम । नि । च । धीमहि ॥ स्यात् । उत । प्रऽरेचनम् ॥ ६ ॥

(१७४) इन्द्रावरुणवामहंहुवेचित्रायराधसे ॥ अस्मान्त्सुजिग्युषस्कृतम् ॥ ७ ॥

(प०) इन्द्रावरुणा ॥ वाम् । अहम् । हुवे । चित्राय । राधसे ॥ अस्मान् । सु । जिग्युषः । कृतम् ॥ ७ ॥

(१७५) इन्द्रावरुणनूनुवांसिषासन्तीषुधीष्वा ॥ अस्मभ्यंशर्मयच्छतम् ॥ ८ ॥

(प०) इन्द्रावरुणा । नु । नु । वाम् । सिसासन्तीषु । धीषु । आ ॥ अस्मभ्यम् । शर्म । यच्छतम् ॥ ८ ॥

(१७६) प्रवामश्नोतुसुष्टुतिरिन्द्रावरुणयांहुवे ॥ यामृधाथेसधस्तुतिम् ॥ ९,३३,१७,४ ॥

(५०) प्र । वाम् । अश्नोतु । सुऽस्तुतिः । इन्द्रावरुणा । याम् । हुवे ॥ याम् । ऋधाथेइति । सधऽस्तुतिम् ॥ ९, ३३, १७, ४ ॥

### ऋग्भाष्यम्

रक्षणेन तयोर्वित्तं ज्ञानं वाप्राप्नुमः सदा ।
निधीमहि च दानं च स्यादेवास्माकमर्थिने ॥ ६ ॥
ह्रस्वता संहितायां तु देवतैक्यप्रदर्शिनी ।
स्वरूपैक्यं हरौ तत्तु मत्यैक्यं भिन्नयोरपि ॥ ७ ॥
अद्यवांनु नुमो लोपः स्वातंत्र्यार्थे हि सूत्रतः ।
साधयन्तीषु धीष्वेव शर्मास्मभ्यं प्रयच्छतम् ॥ ८ ॥
यथास्थितस्तुतिं यां च वर्धयेथे सदैव मे ॥ ९, ३३, १७, ४ ॥

### ऋग्भाष्यटीका

तयोरित् ॥ रक्षणेन । वयं तयोरिन्द्रावरुणयोरिदेव अवसा रक्षणेन सनेम वित्तं ज्ञानं वा सदाप्नुमः । निधीमहि च निखायस्थापयामच । सदा ताविन्द्रावरुणौ चिन्तयामेति वा । किञ्च । अस्माकं प्रेरचनं विसर्जनमर्थिने दानमुत स्यादेव ॥ ६ ॥

इन्द्रावरुण । अत्रेन्द्रावरुणेति संहितायां ह्रस्वान्तं पठ्यते पदं तु दीर्घान्ततया विच्छिद्यते तत्र तात्पर्यमाह ॥ ह्रस्वतेति ॥ देवतयोरिन्द्रवरुणयोरैक्यं विभागेन दर्शयति ॥ स्वरूपेति ॥ तद्ध्रस्वतया प्रकाशितमैक्यं हरौ विवक्षिते स्वरूपैक्यं ज्ञेयम् । अन्ययोस्त्विन्द्रावरुणयोर्विवक्षायां मत्यैक्यं ज्ञातव्यमित्यर्थः । अपिशब्दोर्थद्वयसमुच्चयार्थः । हे इन्द्रावरुणावहं चित्राय भद्राय राधसे वा युवां हुवे आह्वयामि । युवामस्मान्सुजिग्युषः सुजितवतः कृतं कुरुतम् ॥ ७ ॥

इन्द्रावरुणनु । अद्य हे इन्द्रावरुणौ नु अद्य वां युवां नु नुमः णुस्तुतौ स्तुमः । ननु कथमेतत् मस्प्रत्ययस्यादर्शनात् । धातुमात्रस्य च प्रयोगायोगात् कारकालाभाच्च अत आह ॥ लोप इति ॥ लोपः मसुप्रत्ययस्य स्तुत्यादौ परमेश्वरस्यैव स्वातन्त्र्यं नस्तोतुर्जीवस्येत्येतदर्थप्रतिपादनायेत्यर्थः । सूत्रतश्चिरन्तनव्याकरणसूत्रात् । हिशब्देनास्यार्थस्यानुभवसिद्धतां च दर्शयति । प्रत्ययेन हि स्तोतुर्जीवस्य स्वातंत्र्यलक्षणं कर्तृत्वं वक्तव्यम् । तल्लोपेन च कर्तृत्वस्यापि लोपो ज्ञापितो भवति । धीष्वस्मद्बुद्धिषु वां युवां सिषासन्तीषु साधयतेः स्वार्थे सन् धातुलोप इडभावश्च । साधयन्तीषु

सम्यक्प्रकाशयन्तीषु सतीष्वेव अस्मद्बुद्धयो युवां प्रकाशयन्ति यतस्तस्मादिति यावत्। अस्मभ्यं शर्म यच्छतम् ॥ ८ ॥

प्रवाम् । यथास्थित । हे इन्द्रावरुणावहं यां हुवे आह्वयामि सम्पादयामि । यद्वा तृतीयार्थे द्वितीया । यया वां हुवे सा सुष्टुतिः शोभनास्तुतिर्वां प्राश्नोतु सम्यक्प्राप्नोतु । तस्यां च न मम स्वातन्त्र्यं किन्तु यां सधस्तुतिं सधेति सहार्थे अर्थसहितां स्तुतिं यथास्थितस्तुतिं मे सदैव ऋधाथे । ऋधवृद्धौ विकरणव्यत्ययोंतर्णीतण्यर्थताच । वर्धयेथे प्रवर्तयथः । सा वां प्राश्नुतामिति सम्बन्धः ॥ ९, ३३, १७, ४ ॥

## मन्त्रार्थमञ्जरी

वयम् । तयोः इत्, इन्द्रावरुणयोरेव । अवसा, रक्षणेन । सनेम, वित्तं ज्ञानं वा सदाप्नुमः । नि धीमहि च, निखाय स्थापयाम च, सदा ताविन्द्रावरुणौ चिन्तयाम चेति वा । किं च, (अस्माकम्) प्रेरेचनम्, विसर्जनम्, अर्थिने दानम् । स्यात् उत, स्यादेव ॥ ६ ॥

(हे) इन्द्रावरुणा, इन्द्रावरुणौ । अहम् । चित्राय, भद्राय । राधसे, संसिद्ध्यर्थम् । वाम्, युवाम् । हुवे, आह्वयामि । (युवाम्) अस्मान् । सु जिग्युषः, सुजितवतः । कृतम्, कुरुतम् । अत्र 'इन्द्रावरुण' इत्यत्र संहितापदयोर्वैरूप्यतात्पर्यम् 'युवं दक्षं धृतव्रत' इत्यत्रोक्तम् ॥ ७ ॥

(हे) इन्द्रावरुणा, इन्द्रावरुणौ । नु, अद्य । वाम्, युवाम् । नु, नुमः, 'णु स्तुतौ' कर्त्रर्थकलादेशस्य 'मस्' इति प्रत्ययस्य लोपेन धातुमात्रनिर्देशः 'अस्माकं स्तुतौ न कर्तृत्वम्, तवैव स्वातन्त्र्यम्' इति ज्ञापनाय, कर्त्रर्थकप्रत्ययाभावे कर्तृत्वाभावस्य सुज्ञानत्वात्, 'लोपः स्वातन्त्र्यार्थे' इति चिरंतनव्याकरणोक्तेः, इति ज्ञेयम् । धीषु, अस्मद्बुद्धिषु । (वाम्) युवाम् । आ सिसासन्तीषु, साधयन्तीषु, सम्यक्प्रकाशयन्तीष्विति यावत्, साधयतेः स्वार्थे सन्, द्विर्वचनम्, अभ्यासस्य 'सन्यतः' इतीत्वम्, इडभावधकारलोपौ छान्दसौ, शतृ– ङीपौ । अस्मभ्यम् । शर्म, सुखम् । यच्छतम्, प्रयच्छतम्, यतो युवामस्मद्बुद्धयः प्रकाशयनित तस्मात्सुखमस्मभ्यं दत्तमिति भावः ॥ ८ ॥

हे इन्द्रावरुणा, इन्द्रावरुणौ, वैरूप्यतात्पर्यं प्राग्वत् । (अहम्) याम्, सुष्टुतिम् । हुवे, आह्वयामि, सम्पादयामीति यावत्, तृतीयार्थे वा द्वितीया, यया स्तुत्या वां हुव इत्यर्थः । (सा) सुष्टुतिः, शोभना स्तुतिः । वाम् । प्र अश्नोतु, प्राश्नुताम्, प्राप्नोतु, सम्यगाप्नोतु, 'अशू व्याप्तौ'

लोट्, ॥ तस्यां च न मे स्वातन्त्र्यम्, किं तु, याम् । सधस्तुतिम्, 'सध' इति सहशब्दपर्यायः, अर्थसहितस्तुतिम्, यथास्थितस्तुतिम् । (मे सदैव) ऋधाथे, वर्धयेथे, प्रवर्तयथ इति यावत्, 'ऋधु वृद्धौ' व्यत्ययेन लुग्विकरणम्, अन्तर्णीतणिजर्थत्वं च 'सा वाम् प्र अश्नोतु' इत्यन्वयः ॥ ९ ॥ इति त्रयस्त्रिंशो वर्गः ॥ ३३ ॥ सप्तदशं सूक्तम् ॥ १७ ॥ चतुर्थोऽनुवाकः ॥ ४ ॥

## पदार्थप्रकाशिका

तयोरिदवसावयम् । बाह्यं वित्तं प्रसिद्धम् । अध्यात्मं वित्तं ज्ञानम् । नीत्यस्यार्थो नियेति । धीमहीत्यस्यार्थः स्थापयाम इति । भूखननं कृत्वा तत्र स्थापयाम इति भावः । निधीमहीति भाष्यस्यार्थान्तरमाह । सदेति । नीत्यस्यार्थः सदेति । धीमहीत्यस्यार्थः चिन्तयामेति । निस्वापय । स्थापितस्य द्रव्यस्य दानादिना सार्थक्याकरणे वैय्यर्थ्यादाह । किं चेति ॥ ६ ॥

इन्द्रावरुणवामहम् । विभागेनेति । हरिरूपविवक्षायां देवातान्तरविवक्षायां चैक्यं विविच्य दर्शयतीत्यर्थः । मत्यैक्यमिति । स्वरूपैक्यस्य बाधादिति भावः । अर्थद्वयेति । स्वरूपैक्य-मत्यैक्ययोः परस्परसमुच्चयार्थ इत्यर्थः । चित्रं भद्रमिति पूर्वं व्याख्यातत्वादाह । चित्रं भद्रायेति । सुजितवत इति । सम्यग्वैरिजयवत इत्यर्थः ॥ ७ ॥

इन्द्रावरुण नू नुवाम् । कथमेतदिति । नु इत्यस्य नुम इति व्याख्यानं कथमित्यर्थः । कुत इति चेत्तत्राह । मस्प्रत्ययस्येति । ननु ऋचिप्रत्ययाप्रयोगेपि नु इतिधातुमात्रमेव प्रयुक्तमस्ति इति चेत्तत्राह । धातुमात्रस्येति । अस्तु वा योगस्तथापि कर्त्रर्थकप्रत्ययप्रयोगे खलु जीवस्य स्वातन्त्र्यरूपं कर्तृत्वं लभ्यते । स्वतन्त्रः कर्तेत्युक्तेः । प्रत्ययमप्रयुज्य धातुमात्रप्रयोगे तु कर्तृकारकालाभान्नुम इति व्याख्यानमनुपपन्नमित्याह । कारकालाभाच्चेति । स्तुत्यादाविति । न ऋत इत्यादिश्रुतेरिति भावः । तदुपपादयति । प्रत्ययेन हीति । स्वातन्त्र्येति स्तुत्यादाविति शेषः । नलोपेनेति । प्रत्ययलोपेनेत्यर्थः । अस्मभ्यं शर्म यच्छतमित्यत्र सिषासन्तीषु धीष्वेति प्रवृत्तमित्याशयेनाह । धीष्विति । साध्यतेरिति । साध संसिद्धाविति धातोः सन् प्रत्यय इत्यर्थः । इच्छायां सन्निति सन इच्छार्थकत्वेन प्रकृत इच्छारूपार्थे सम्भवात् स्वार्थ इत्युक्तम् ।

नन्वथापि सिषासन्तीष्विति कथम् । साधु संसिद्धावित्यस्मात् सनूप्रत्यये सन्यङोरिति धात्वादिसकारस्य द्वित्वे ससाधसनिति जाते अभ्यस्थसकारस्थाकारस्य इकारादेशे सिसाधेति जाते आदेशप्रत्यययोरिति इणः परस्य सस्य षत्वे सिषाधेति जाते नकारस्यानुस्वारे सिषाधसमिति

जाते पश्चाच्छतृप्रत्यये शकारऋवर्णयोर्लोपे सिषाधसन्त् इति जाते उगितश्चेत्यनेन शतृप्रत्ययस्यो-गित्वात् ङीपि सिषाधसन्तीति जाते साधधातोः सेट्धातुत्वाद्धातोः षस्येडागमे सिषिधसन्तीति प्रातिपदिकनिष्पत्तौ सप्तमीबहुवचने सिषिधसन्तीष्विति वक्तव्यत्वादित्यत आह। धातुलोप इति। धात्वंतधकारलोप इत्यर्थः। इडभावश्चेति। छान्दस इत्यर्थः। ततश्च धात्वन्तधकारलोपे छान्द-सत्वादिडागमाभावे सिषासन्तीति प्रातिपदिकसिद्धौ सत्यां पश्चात्स्वाद्युत्पत्तौ सिषासन्तीष्विति युक्तमिति भावः। सम्यगित्याङोर्थः। युवां प्रकाशयन्तीति। भगवद्रूपद्वयविषयक इत्यर्थः॥ ८॥

प्रवामश्नोतु सुष्टुतिः। प्राप्नोत्विति। भगवद्विषयिणी भवत्वित्यर्थः। तस्यां भगवद्विषय-स्तुतिकरणे। सहार्थ इति। तथाच सहस्तुतिमित्यर्थः। स्तुतेः केन साहित्यमित्यत आह। अर्थेति। ननु ऋ वृद्धावित्यस्मात् लोट आत्मनेपदिनि द्विवचने आथामित्यादेशे ऋध् आथामिति स्थिते श्नुविकरणे शकारलोपे ऋधआथामिति जाते अचिश्नुधातुभ्रुवांय्वोरियङुवङावित्यनेन श्नुप्रत्ययान्तत्वादुकारस्य उवङादेशे ऋध्नुव आथामितिजाते अस्य धातोः णिजन्तत्वात् णिच्प्रत्यये णकारचकारयोर्लोपे ऋध्नुव इ ऋध्नुवि आथामिति जाते इकारस्यैकाररूपे गुणे तस्य अयादेशे ऋध्नुव् अय् आथाम् ऋध्नुवयाथामिति जाते टित आत्मनेपदानां टेरे इति टीभूतस्य आथामित्यस्य टेरेत्वे ऋध्नुवयाथ इति स्यात्। ऋधाथ इति कथमित्यत आह। विकरणव्यत्यय इति। श्नुविकरणस्य लुग्विकरणत्वम्। श्नुविकरणलोप इत्यर्थः। अन्तर्णीतिति। तथाच णिचः सर्वस्यापि लोप इत्यर्थः। तथाच ऋध धातोः श्नुविकरणलोपे णिचश्च लोपे ऋधाथ इति रूपं युक्तमिति भावः। प्रवर्तयथ इति। यां सधस्तुतिं युवां हृदिस्थत्वात् प्रेरयथ मम तत्र स्वातन्त्र्याभावात् सा भवत्प्रेरिता भवद्विषयिणी स्तुतिर्मे भवत्वित्यर्थः॥ ९-३३-१७॥

## पदार्थदीपिका

सनेमेति। आशिषि लिङ् तस्य नित्यंङितः इति सकारलोपः। दाशिषीति सुट् छन्दस्युभयथेति सार्वधातुकमस्तीति लिङ् सलोपोऽनंत्यस्येति सकारलोपः अतोयेय इति इयादेशः। लोपोव्योर्वलीति यलोपः लिङ्याशिष्यङिति अङ् आद्गुण इति गुणश्चेति भावः। निधीमहि। डुधाञ धारणपोषणयोः आशिषि लिङो महिङ् तस्य छन्दस्युभयथेति सार्वधातुकार्धधातुकसंज्ञे तत्र सार्वधातुकत्वेन लिङ् सलोपोऽनंत्यस्येति सकारलोपः। सार्वधातुकमपिदितितिङ् शप्प् बहुलं छन्दसीति जुहोत्यादेरपि शपोलुक् आर्धधातुकत्वादातो लोपइट् चेत्याकारलोप इति भावः। केचित्तुसनि मीमाघुरभलभशकपतपदामच इस् अभ्यासलोपश्चेत्येवेति। अत्र लोपोऽभ्यासस्येति

पृथग्योगकरणस्यैव सिध्यर्थत्वात् । अत्र ग्रहणस्यसर्वलोपार्थत्वात् अभ्यासलोपः । न चाभ्यासादर्शानात् । आशीर्लिङ्रुपतयैव व्याख्येयमिति वाच्यम् । अनेकव्यत्ययाश्रयणप्रसङ्गात् प्रार्थनालिङ्मध्यस्थत्वाच्चेति भावः इत्याहुः । चिन्तयामेति वेति । ध्यायतेः सम्प्रसारणं विकरणलोपः । आत्मनेपदं च छान्दसं व्यत्ययो बहुलमिति वचनादिति । गायत्र्यर्थं कथं टीकानुसारेणेदं व्याख्यानमिति बोध्यम् । विसर्जनमिति । रवि रविरेचन इत्यस्माद्भावे ल्युट् युवोरनाकाविति योरनादेशाः । गुणश्चेति भावः ॥ ६ ॥

हे इन्द्रावरुणाविति । अचि सुपां सुलुगित्यादिना सम्बोधनस्याकारः देवताद्वन्द्वेचेति पूर्वपदस्यानङ् संहितायां छादसं ह्रस्वत्वमिति भावः । हुवे आह्वयामीति ह्वयतेर्लडुत्तमैकवचनं विमिप् शप् इत्यनुवृत्तौ बहुलं छन्दसीति लुक् । ह्व इत्यनुवृत्तौ बहुलं छन्दसीति सम्प्रसारणं पररूपत्वम् अचिश्नुधात्वित्यादिनोवङ् न च बहुश्नुवोरित्यादिना यणादेश प्रसङ्गः । जुहोतेरेवहि प्रतिपदोक्तस्य तत् शब्दस्य न पुनरस्य लाक्षणिकत्वादिति भावः । अस्मानिति । शसि द्वितीयायां चेत्यात्वं शसो न इति नत्वमिति भावः । जिग्युष इति । जी जये लिटः क्वसुश्चेति क्वसुः द्विर्भावः सन् लिटोर्जेरिति द्वितीयस्य कुत्वं च्छसोः कित्वाद्गुणाभावः । क्र्यादिनियमात् प्रत्यस्येटो वस्वेकाचाद्घसांमिति नियमेन निवृत्तिः । द्वितीयाबहुवचनं शस् भवनसंज्ञायां वसोः सम्प्रसारणं पररूपत्वम् एरनेकाच इति यणादेशः । शासिवसिघसीनां चेति षत्वमिति भावः । कृतमिति । डुकृ करणे । अस्माद्व्यत्ययेन शप्लोपामध्यमद्विवचनस्य लङ्वद्भावात् तमादेशः । शपो बहुळं छंदसीति लुगिति भावः ॥ ७ ॥

धातुमात्रस्येति । न केवलं प्रकृतिः प्रयुज्यते नापि केवलः प्रत्यय इति वचनादिति भावः । कारकेति । कर्तृकारकलाभादित्यर्थः । कर्तृभावकर्मणामन्यतरस्यालाभादित्यप्याहुः । लोप इत्यत्र शेषमाह । मस् प्रत्ययस्येति । अनुभवसिद्धतामेवोपपादयति । प्रत्ययेन हीति । साधतेरिति । अन्तर्णीतण्यर्थादिति शेषः । स्वार्थे सन्निति । ततश्च सनि सन्यङोरिति द्विर्भावः हलादिशेषः । आदेशप्रत्ययोरिति षत्वं इति भावः । ननु सिसाधयिष्विति भाव्यामित्यत आह । धातुलोप इत्यादिना । धात्वंतर्गतधकारलोप इत्यर्थः । ततः सनाद्यन्ताधातवः इति धातुसंज्ञायां लटि तस्य शतरि कर्तरि शप् उगितश्चेति ङीप् शप्श्नोर्नित्यमिति नुगागम इति भावः । यच्छतामिति । दाण्दाने इपि प्राघ्राध्मे यच्छादेश इति भावः । सम्पादयामीति । इति यावदिति भावः ॥ ८ ॥

आश्नोत्विति । अशूङ्व्याप्तौ लोट्चेत्यादिना तिप् स्वादित्वात् श्नुरिति भावः । सहार्थ इति । हकारस्य व्यत्ययेन धकारादेश इति भावः । विकरणव्यत्यय इति । श्नुविकरणस्य व्यत्ययेन शप् तस्य

बहुळं छन्दसीति लुगित्यर्थः । प्राश्नुतमिति । अनेनाश्नोतेः अनुदात्तेतो व्यत्ययेन श्रुतौ परपदमित्युक्तं भवति ।

## टीकाविवृतिः

तयोरित् ॥ सनेमेति ॥ षणसंभक्तावित्यतः प्रार्थनालिङित्यर्थः । लिङः कालविशेषानुक्तेर्लभ्यमर्थमाह ॥ सदेति ॥ वित्तमित्यादित्वपेक्षिताध्याहाररूपमिति बोध्यम् ॥ निखायेति ॥ भूमिं खनित्वेत्यर्थः । धाञः प्रार्थनालिङि शपः श्लौ सर्वेविधयश्छन्दसि विकल्प्यन्त इत्युक्तेः श्लाविति नद्वित्वमित्याशयः । ज्ञानकर्मत्वेभूस्थापनायोगात्कर्मान्तराध्याहारपूर्वं निधीमहीति पदं प्रकारान्तरेण व्याचष्टे ॥ ताविन्द्रावरुणौ चिन्तयामेति वेति ॥ ध्यैचिन्तायामित्यतो लिङि व्यत्ययो बहुलमित्यनेनात्मनेपदविकरणलोपसंप्रारणेष्विदं रूपमिति भावः ॥ प्रेरेचनमिति ॥ रिचवियोजनसंपर्चनयोरिति चुरादिण्यंताल्युटि णिलोपः । स्वस्माद्वियोजनं स्वत्वत्यागः पदार्थो दानमिति तात्पर्यार्थ इति भावः ॥ ६ ॥

इन्द्रावरुणवाम् ॥ विभागेनेति ॥ मुख्यामुख्यप्रतिपाद्यभेदेनेत्यर्थः ॥ हुवइति ॥ ह्वेञो लडात्मनेपदोत्तमपुरुषैकवचने बहुलं छन्दसीति शपोलुकि संप्रसारणेच बहुलं छन्दसीत्यनेनैव जाते उवङादेशे सति हुव इति रूपं सिध्यतीति द्रष्टव्यम् ॥ सुजिग्युष इति ॥ जिजय इत्यतो लिटः क्वस्वादेशे द्वित्वे सन्लिटोर्जेरित्यभ्यासात्परस्य जिशब्दस्य कुत्वे शसि वसोः संप्रसारणमिति संप्रसारणे यणादेश इति भावः ॥ कृतमिति ॥ कृञो लोटि व्यत्ययेन शप् । तस्य बहुलं छन्दसीति लुगिति भावः ॥ ६ ॥

इन्द्रावरुणनु ॥ नु अद्येति ॥ नुशब्दस्य क्षिप्रनामसुपाठादिति भावः । भाष्ये श्रौतधात्वनुवादपूर्वं व्याख्यानात्तथैवानूद्य व्याचष्टे ॥ नु नुम इति ॥ कथमेतदित्येतद्विवृणोति ॥ मस्प्रत्ययेत्यादिना ॥ धातुमात्रस्य चेति ॥ नकेवला प्रकृतिः प्रयोक्तव्येति निषेधादितिभावः । भूः श्रीरित्यादौ केवलधातोरपि प्रयोगदर्शनादाह ॥ कारकेति ॥ तत्र क्विपो लोपात्कर्तृकारकप्रतीतेर्नु इत्यत्रतु तदभावात्कारकप्रतीतिर्न स्यादिति भावः । अनुभवसिद्धतामुपपादयति ॥ प्रत्ययेन हीति ॥ स्वार्थ इति ॥ अन्तर्णीतण्यर्थात्साधेः कालहलच्स्वरकर्तृयङांचेतिवचनेन यङ्प्रत्याहारमध्ये सनः पतितत्वाद्व्यत्ययेन स्वार्थे सन्निति भावः ॥ धातुलोप इति ॥ पृषोदरादित्वाद्धात्वंतधकारलोप इत्यर्थः ॥ इडभावइति ॥ आगमशासनस्यानित्यत्वात् । ततः शतरि उगितश्चेति ङीबिति भावः । निमित्तसप्तमीत्वाश्रयेण तात्पर्यमाह ॥ अस्मद्बुद्ध्य इति ॥ यच्छतमिति ॥ दाणः पाघ्राध्मेति यच्छादेश इतिभावः ॥ ८ ॥

प्रवामश्नोतु ॥ हुव इति ॥ ह्वेञ्स्पर्धायां शब्देचेत्यतो लटि बहुलं छन्दसीति शब्लुकि ह्व:संप्रसारणं बहुलं छन्दसीति संप्रसारणे उवङादेश इतिभावः । हुव इत्यस्य संपादयामीति तात्पर्यार्थकल्पनायाः लघुप्रकारमाह ॥ यद्धेति ॥ सहार्थ इति ॥ हस्य धकार:पृषोदरादित्वादिति भावः ॥ ऋधे:श्नुविकरणत्वेपि व्यत्ययेन शप् तस्य लुकेत्याशयेनाह ॥ विकरणव्यत्यय इति ॥ प्राश्नोत्विति व्यत्ययेन परस्मैपदमिति भावः ॥ ९,३३,१७,४ ॥

## ऋक्संहिता पदपाठसहिता

(१७७) सोमानंस्वरंणंकृणुहिब्रंह्मणस्पते ॥ कक्षीवन्तंयऔशिजः ॥ १ ॥

(प०) सोमानंम् । स्वरंणम् । कृणुहि । ब्रह्मणः । पते ॥ कक्षीवन्तम् । यः । औशिजः ॥ १ ॥

(१७८) योरेवान्योअंमीवहावंसुवित्पुंष्टिवर्धंनः ॥ सर्नःसिषक्तुयस्तुरः ॥ २ ॥

(प०) यः । रेवान् । यः । अमीवऽहा । वसुऽवित् । पुष्टिऽवर्धंनः ॥ सः । नः । सिषक्तु । यः । तुरः ॥ २ ॥

(१७९) मानः शंसोअररुषोधूर्तिःप्रणङ्मर्त्यस्य ॥ रक्षांणोब्रह्मणस्पते ॥ ३ ॥

(प०) मा । नः । शंसः । अररुषः । धूर्तिः । प्रणंक् । मर्त्यस्य ॥ रक्ष । नः । ब्रह्मणः । पते ॥ ३ ॥

(१८०) सघांवीरोनरिष्यतियमिन्द्रोब्रह्मंणस्पतिः ॥ सोमोहिनोतिमर्त्यम् ॥ ४ ॥

(प०) सः । घ । वीरः । न । रिष्यति । यम् । इन्द्रः । ब्रह्मणः । पतिः ॥ सोमः । हिनोति । मर्त्यम् ॥ ४ ॥

(१८१) त्वंतंब्रह्मणस्पतेसोमइन्द्रश्चमर्त्यम् ॥ दक्षिणापात्वंहसः ॥ ५, ३४ ॥

(प०) त्वम् । तम् । ब्रह्मणः । पते । सोमः । इन्द्रः । च । मर्त्यम् ॥ दक्षिणा । पातु । अंहसः ॥ ५, ३४ ॥

## ऋग्भाष्यम्

सौम्यं शब्दं कृणु त्वं नो विष्णो वायो सुवाक्पते ।
कक्षीवन्तं प्रति ह्यियो दत्तोयः स उशिक्सुतः ।
विवक्षितो मुनिः सोपि तस्मादर्थोपि मां प्रति ॥ १ ॥
वित्तवान्रोगहा ज्ञानवेत्तास्माभिः सयुग्भवेत् ।
तुरो वेगाद्धरिर्वायुः ॥ २ ॥
अररुट्चातिरोषणात् ।
तस्य धूर्तिर्वचो नास्मान् पूरयेद्रक्ष नो हरे ॥ ३ ॥
घेतिहावधृतिश्चैव सोमः सौम्यत्वतो हरिः ।
उना मयाच युक्तत्वादूमैर्युक्तत्वतोपि वा ।
अमः स इति वा ॥ ४ ॥
साक्षाच्छ्रीर्दक्षेणेति दक्षिणा दक्षिणा चतुरत्वाद्वा स्वयमेव जनार्दनः ॥ ५, ३४ ॥

## ऋग्भाष्यटीका

सोमानम् ॥ नवर्चमिदं सूक्तम् । अत्र पञ्चब्राह्मणस्पत्याः चतुर्थ्यामिन्द्रश्च सोमश्च । पञ्चम्यां दक्षिणाच शिष्टाश्च दस्रः सादसस्पत्याः । अंत्यानाराशंसीवा । ब्राह्मणस्पत्यादिशब्दार्थस्तु भाष्ये । सौम्यम् । हे ब्रह्मणस्पते सुवाक्पते ब्रह्मणो वेदस्य पते विष्णो वायो वा त्वं नोस्मान्प्रति कारुण्यात्सोमानं स्वरणं सौम्यं शब्दं कृणुहि कुरु । यः शब्दः प्राक् कक्षीवन्तमृषिं प्रति दत्तः तादृशम् । कः कक्षीवान् य औशिजः य उशिक् सुतः सः । कक्षीवन्तमिति परोक्षत्वोक्त्यान्यत्वमाशंक्य परिहरति ॥ विवक्षित इति । योत्र मुनिर्विवक्षितो मेधातिथिः स एव कक्षीवानपि तस्मात्कक्षीवन्तं प्रतीत्यस्य मां प्रतीत्येवार्थो भवति ॥ १ ॥

योरेवान् वित्तवान् । यो रेवान् रैशब्दस्य रयेर्मताविति सम्प्रसारणं वित्तवान् । यश्चामीवहा रोगहा वसुवित् ज्ञानवसुवेत्ता ज्ञातव्यं सर्वं जानातीति यावत् । यश्च पुष्टिवर्धनो भक्तानाम् । एवं भूतो यस्तुरः तुरत्वरण इत्यस्येदं रूपम् । वेगान्निमित्ताद्धरिर्वायुर्वा स नोऽस्मान् सिषक्तु षचसमवाये अस्माभिः सयुग्भवेत् ॥ २ ॥

मानः । अररुट् । चस्त्वर्थः । यस्त्वतिरोषणादररुट् । अरशब्दोऽलंशब्दार्थे । अलं रुष्यतीति क्विप् । तस्याररुषो मर्त्यस्य धूर्तिः शंसो धूर्तिर्वचः । धुर्वी हिंसार्थः । उपद्रवकारिवचनम् ।

नोऽस्मान्मा प्रणक् प्रापूरण इत्यस्येदं रूपम् । न पूरयेत् । स्वार्थे णिः । न प्रविशेत् । मा प्रापदित्यर्थः । हे ब्रह्मणस्पते हरे वायो वा नोस्मान्रक्ष । यथा तद्वचोऽस्मान्न प्राप्नुयात्तथा रक्षेत्यर्थः ॥ ३ ॥

सघ । घेति ॥ घेतिशब्दो हेत्यस्यार्थे प्रसिद्धिद्योतक इत्यर्थः । एवार्थे वा । ततश्चावधृतिस्तस्य प्रतिपाद्येत्यर्थः । सोमशब्दं हरौ व्याख्याति ॥ सोम इति । सौम्यत्वमक्रौर्यं उना उद्रेण मया लक्ष्म्याच उश्च माच उमे सहोमाभ्यां वर्तत इति सोम इत्यर्थः । ऊमैर्भूतैः । भूतानि वै विश्व ऊमा इति श्रुतेः । सह ऊमैर्वर्तत इति सोमः । सर्वभूतानि प्रेरयतीत्यर्थः । न विद्यते मा प्रमा इयत्ता यस्यासा वमः सारत्वात्सः सरतेर्डः । सश्चासावमश्चेति सोमः प्रथमाया अलुक् । डस्वाप्रत्ययः । सघ स एव वीरो विक्रान्तो न रिष्यति नहिंस्यते ह । यं मर्त्यमिन्द्रो ब्रह्मणस्पतिः सोमश्च हिनोति हिगतौ वृद्धौ च । गच्छति वर्धयति च ॥ ४ ॥

त्वन्तम् । अत्र दक्षिणाशब्दार्थमाह ॥ साक्षादिति ॥ साक्षाच्छ्रीरिति सरस्वत्यादिव्यावृत्त्यर्थम् । दक्षे दक्षिणभागे इनः स्वामी विष्णुरस्या इति दक्षिणेत्यर्थः । शकंध्वादित्वात्पररूपत्वम् । दक्षिणे सरलोदारावित्यभिधानाच्चतुरत्वात्स्वयमेव जनार्दनो वा दक्षिणेत्यर्थः । अत्र तच्छब्दश्रवणाद्योग्यार्थो यच्छब्दोध्याहार्यः । हे ब्रह्मणस्पते यस्त्वद्भक्तस्तं मर्त्यं त्वमंहसः पापात्पाहि । सोम इन्द्रो दक्षिणाच पात्विति प्रत्येकं सम्बन्धः ॥ ५, ३४ ॥

## मन्त्रार्थमञ्जरी

अथ 'सोमानम्' इत्यष्टादशं नवर्चं वर्गद्वयात्मकं गायत्रीछन्दस्कं सूक्तम् । अत्रादितः पञ्च ब्राह्मणस्पत्याः, चतुर्थ्यां पञ्चम्यां चेन्द्र सोमोऽपि च, पञ्चम्यां दक्षिणापि, शिष्टाश्चतस्रः सादसस्पत्याः, अन्त्या नाराशंसी वा । (हे) ब्रह्मणः पते, ब्रह्मणो वेदस्य पते, पारस्करादि-त्वात्सुट् (षष्ठ्याः पतिपुत्र' इत्यादिना सत्वम्) विष्णो, वायो वा (त्वम्) (नः) अस्मान्प्रति । (कारुण्यात्) सोमानम् स्वरणम्, सौम्यं शब्दम् । कृणुहि, करु । यः, शब्दः । (प्राक्) कक्षीवन्तम्, ऋषिम्, मामिति यावत् । (प्रति दत्तः) तादृशम् । कः कक्षीवान् ? (यः) औशिजः, उशिक्सुतः । सः ॥ १ ॥

यः रेवान्, वित्तवान्, 'रयेर्मतौ' इति रयिशब्दयकारस्य मतुपि परतः सम्प्रसारणे पूर्वरूपे 'आद्गुणः' । यः (च) अमीवहा, रोगहा । वसुवित्, ज्ञानाख्यवसुनो वेदिता, ज्ञातव्यं सर्वं

जानातीति यावत् । (यः) (च) पुष्टिवर्धनः, भक्तानामेवं भूतः । यः । तुरः, वेगवत्त्वहेतुना विष्णुर्वायुर्वा, 'तुर त्वरणे' इत्यतः कप्रत्ययः । सः । नः, अस्मान् सिषक्तु, समवैतु, 'षच सामवाये' श्लुविकरणम्, अस्माभिः संयुक्तो भवेदिति यावत् ॥ २ ॥

अररुषः, अरशब्दोऽलंशब्दपर्यायः, 'रुष हिंसायाम्' क्विप्, अतिहिंसकस्य । मर्त्यस्य । धूर्तिः, 'धुर्वी हिंसायाम्' क्तिन्, हिंसकः । शंसः, वचनम्, उपद्रवकारि वचनामिति यावत् । नः, अस्मान् । मा प्राणक्, 'पृची सम्पर्के' न प्रविशेत्, मा प्रापदित्यर्थः । (हे) ब्रह्मणः पते, हरे, वायो वा । नः, अस्मान् । रक्ष, यथा तद्वचोऽस्मान्न प्राप्नुयात्तथा रक्षेत्यर्थः ॥ ३ ॥

'घ' इति 'ह' इत्यस्यार्थे प्रसिद्धिद्योतकः, एवार्थे च । यम् मर्त्यम् इन्द्रः ब्रह्मणः पतिः सोमः (च) । हिनोति, 'हि गतौ वृद्धौ च' घच्छति वर्धयति च । सः घ, स एव मर्त्यः । वीरः, विक्रान्तः । न रिष्यति, 'रिष हिंसायाम्' न हिंस्यते । (घ) प्रसिद्धमेतत् । इन्द्रब्रह्मणस्पतिशब्दयोः पूर्वत्रैव हरौ निरुक्तिर्व्यक्ता । सोमशब्दस्य तु – उश्च मा चोमे रुद्रलक्ष्म्यौ– ताभ्यां सहित इति वा, 'भूतानि वै विश्व ऊमाः' इति श्रुतेरूमैर्भूतैः सह प्रेरकतया वर्तत इति वा, न विद्यते मा परिमितिर्यस्यासावमः, सारत्वात्सः 'सृ गतौ' इत्यतो डस्, सस्य रुत्वोत्वे, गुणः, पूर्वरूपम्, सश्चासावमश्चेति वा निरुक्तिर्ज्ञेया ॥ ४ ॥

(हे) ब्रह्मणः पते (यस्त्वद्भक्तः) तम् मर्त्यम् त्वम् । अंहसः, पापात् । (पाहि) 'सोमः इन्द्रः दक्षिणा च पातु' इति प्रत्येकमन्वयः । दक्षे दक्षिणभाग इनः स्वामी यस्य असाविति शकन्ध्वादितया पररूपेण दक्षिणात्र श्रीर्ज्ञेया, 'दक्षिणे सरलोदारौ' (अम० ३।१।८) इत्यभिधानाच्चतुरत्वहेतुना स्त्रीरूपो हरिर्वा ज्ञेयः ॥ ५ ॥ इति चतुस्त्रिंशो वर्गः ॥ ३४ ॥

## पदार्थप्रकाशिका

सोमानं स्वरणम् । सोमानमिति । पञ्चब्राह्मणस्य चतुर्थ्यामिन्द्रश्च सोमश्च पञ्चम्या दक्षिणाचा सादसस्पत्याः नाराशंसीचान्येत्यनुक्रमणिकां हृदि निधायाह । नवर्चमिति । तथाचानुक्रमणिकायां सोमानिति सूक्तप्रतीकमात्रग्रहणम् । नवर्चसूक्तमिति तत्र शेषः पूरणीय इति भावः । चतुर्थ्याम् ऋचि विशेषमाह । चतुर्थ्यामिति । न केवलं ब्रह्मणस्पतीति चार्थः । पञ्चम्याम् ऋचि विशेषमाह । पञ्चम्यामिति । अत्रापि न केवलं ब्रह्मणस्पतीति चार्थः । अनुक्रमणिकास्थान्या इत्यस्यार्थमाह । शिष्टा इति । तत्र नवम्यां ऋचि विशेषमाह । अन्त्येति । न केवलं सादसस्पतीत्यर्थः । ननु

ब्रह्मणस्पतिदक्षिणासदस्पतिनराशंसशब्दार्थः क इत्यत आह । ब्रह्मणस्पतीत्यादि । विलो वायो सुवाक्पते साक्षाच्छ्रीः सदसस्पतिर्हरिः । नरैस्तुत्य इत्यादिनोत्तरे भाष्ये द्रष्टव्या इत्यर्थः । सौम्यशब्दं भगवद्यज्ञं प्रति मया आगम्यते इत्यादिरूपम् । दत्त इति । कृत इति यावत् । अन्यत्वं मेधातिथ्यन्यत्वं भाष्ये अपिशब्द एवार्थो द्रष्टव्यः । मा प्रति । मेधातिथिं प्रति ॥ १ ॥ छ ॥

यो रेवान् यो अमीवह । ननु रैशब्दात् मतुप् रैमानिति स्यात् । रेवानिति कथमित्यत आह । रयेर्मताविति । रयिशब्दस्थयकारस्य मतुप्प्रत्यये परे इकाररूपे संप्रसारणे रइ इति जाते गुणे रे इति जाते पूर्वरूपे छन्दसि मतुपो मकारस्य वकारे तकारस्य नकारे सर्वनामस्थानेचासम्बुद्धौ इति दीर्घे रेवानिति युक्तमित्यर्थः । एवंभूत इति । रेवानित्यादिनोक्तगुणवानित्यर्थः । त्वर त्वरण इति क्विपि वकारस्य उकाररूपे संप्रसारणे सति तुरेतिरूपम् । समवायः संमेलनम् । सयुग्भवेदिति । अस्मत्सखाभवेदिति यावत् ॥ २ ॥ छ ॥

मानः शंसो अररुषः । अलंरुष्यतीति । अलंशब्दोपपदात् रुट्रोषे अस्मात् क्विप्प्रत्यये अलंरुट् इति प्रातिपदिकमित्यर्थः । अररुषोरिति । अतिकोपिष्ठस्येत्यर्थः ॥ ३ ॥ छ ॥

सघा विरो न रिष्यति । अवधृतेरेवकारार्थत्वात् घेत्यस्यावधृतिः कथमर्थ इत्यत आह । एवार्थे वेति । अक्रूराः सौम्य उच्यत इति भगवत्पादोक्तिं मनसि निधायाह । सौम्य त्वमिति । भगवानपि सज्जनान् प्रत्यक्रूर इति भावः । सहोमाभ्यामिति । तथाच सहशब्दस्य सादेशे सोम इति भवति । भूतैः सह वर्तमानत्वस्य महिमानापादकत्वादाह । सर्वभूतानीति । इयत्तेति । मर्यादित्यर्थः । मानं ज्ञानं मितिश्चैव मर्यादा चापि कथ्यत इति वचनादिति भावः । सरतेर्ड इति । सृगतावित्यस्मात् डप्रत्यये डित्वात् टीभूतस्य ऋइत्यस्य लोपे स इत्यकारान्तं प्रातिपदिकमिति भावः । ननु तर्हि सश्चासावमश्चेति विगृह्य समासे सशब्दात् परस्य सोर्लोपे सवर्णदीर्घे च सति सामेतिस्यात् सोमेति तु कथमित्यत आह । प्रथमायाः अलुगिति । तथाच सारत्वार्थकात् सशब्दात् प्रथमैकवचने सुप्रत्यये ससजुषोरुरिति तस्य रुत्वे तस्य चोत्वे स उ इति जाते गुणे सो अमेति जाते एङः पदान्तादतीति अकारस्य पूर्वरूपे सोमेतिरूपं युक्तमिति भावः ।

समाध्यन्तरमाह । डस्येति । सृगतावित्यस्मात् डस्प्रत्यये डित्वात् टिलोपे सस् इति जाते तस्य रुत्वे उत्वे गुणे सोऽमेति जाते अकारस्य पूर्वरूपे सोमेति भवति । तथाचास्मिन् पक्षे ससशब्दः सकारान्त इत्युक्तं भवतीति द्रष्टव्यम् । विक्रान्त आरब्धान्तगामी । यं मर्त्यमिति । यं मर्त्यं गच्छति योऽस्मिन् मर्त्ये संनिहितो भवतीत्यर्थः । तथाचायं मर्त्यमिन्द्रो ब्रह्मणस्पतिः सोमो हिनोति सघावीरो नरिष्यतीति ऋच्यन्वयो ज्ञेयः ॥ ४ ॥ छ ॥

त्वं तं ब्रह्मणस्पते । सरस्वत्यादीति । आदिपदेन शचीशामलोषसां ग्रहणम् । सरस्वतीशब्देन भारती ग्राह्या । शंरूपे तु रतेर्वायौ श्रीरित्येव च कीर्त्यते । भारतीतिवचनेन भारत्याः श्रीशब्दवाच्यत्वोक्तेः चन्द्रधर्मनासत्यसंश्रयाच्छ्रिय ईरिताः इति वचनेन शच्यादीनामपि श्रीशब्दवाच्यत्वावगमादिति भावः । दक्षिणभाग इति । स्वस्याः दक्षिणभाग इत्यर्थः । अर्धनारीनारायणस्य प्रसिद्धत्वादत्यन्तं भगवद्रतियोगस्था दक्षिणेति संप्रदायविदः । तर्हि दक्षेणेति स्यादित्यत आह । शकंध्वादित्वादिति । शकंध्वादिषु पररूपं वाच्यमिति वार्तिकादस्यापि तद्गणस्थत्वात् क्षकारस्थ इकारस्य पररूपे दक्षिणेतिरूपं युक्तमित्यर्थः । दक्षिणे सरलोदाराविति । सरलश्चतुरः । सरलोदारशब्दो दक्षिणे वर्तते दक्षिणसरलोदारशब्दाः एकार्थवाचकत्वेन पर्याया इत्यर्थः । चतुरत्वात् सरलत्वात् कुशलत्वादित्यर्थः । योग्यार्थ इति । भगवत्कर्तृकरक्षणत्वेन योग्यो योर्थस्तदर्थक इत्यर्थः । योग्यार्थमेव दर्शयति । यस्त्वभक्त इति । ननु सोमइन्द्रश्च दक्षिणा चेत्येताः पांत्विति वक्तव्यत्वे पात्विति कथं एकवचनोक्तिरित्यत आह । पात्विति । प्रत्येकं संबन्ध इति ॥ ५ ॥ ३४ ॥

## पदार्थदीपिका

अत्रेति । अत्रसूक्ते आद्याः पञ्चर्चो ब्रह्मणस्पतिदेवताका इत्यर्थः । चतुर्थ्यामिति । तासां पञ्चानामपि मध्ये चतुर्थ्यां सघावीर इत्यस्यामृचि नकेवलं ब्रह्मणस्पतिः किंत्विद्रश्च सोमश्च देवतेत्यर्थः । पञ्चम्यामिति । त्वं तमिति पञ्चम्यामृचि ब्रह्मणस्पतीन्द्रंसोमा दक्षिणा चेति चतस्रो देवता इत्यर्थः । शिषाणा इति षष्ठीमारभ्य चतस्रः सदसस्पतिदेवताका इत्यर्थः । अन्त्येति । अन्त्याया नवम्याः सदसस्पतिर्नराशंसो देवता विकल्प्यन्त इति भावः ।

ब्रह्मणो देवस्येति षष्ठ्याः पतिपुत्रेत्यादिना संहितायां विसर्जनीयस्य सत्वमिति भावः । शब्दमिति । स्वशब्दोपतापनयोरित्यस्माच्छब्दार्थाभावे कृत्यल्युटो बहुलमिति ल्युडिति भावः । कृणुहीति । कृविहिंसाकरणयोश्चेति इदितोनुम् धातोर्लोपः इति लोपः । तस्य स्थानिवद्भावान्न पूर्वस्य लघूपधगुणः । उतश्च प्रत्ययाच्छन्दो वाचनमिति । हे लुँगिति भावेन निष्पन्नस्य श्रौतपदस्य प्रतिपदमाह । कुर्विति ॥ १ ॥

सम्प्रसारणमिति । रयस्यास्तीति मतुप् रये रमन्तो बहुळमिति यकारस्य सम्प्रसारणं सम्प्रसारणाच्चेति परपूर्वत्वाच्छन्दसीर इति मतुपो मस्य वत्वं आद्गुणेत्याशयः । ननु नत्वस्यासिद्धत्वाद्बहिरंगत्वाच्च प्रागेव गुणे कृते उवर्णाभावात् न चान्तादिवच्चेत्यादिवद्भावेन

वर्ण सम्पादनम् । वर्णाश्रयविधौ तत्प्रतिषेधात् । अथ षड्वाभिरित्यत्र सवर्णदीर्घस्य अन्तवद्भावे च अतो भिस एस् इत्यैसादेशः स्यात् । न च निरवकाशत्वेन वत्वस्यानवकाशत्वम् । अग्निर्वैदर्भ उपब्रह्माणि हरिवः इत्यादौ अवकाशलाभादिति । सत्यम् । अत्र गुणप्रवृत्तेः प्रागिकारात्परो मतुप् कदाचिदिवर्णात् परस्य मतुपः पश्चादेकारादेशो न इवर्णाभावेपि न भवति वत्वमिति छन्दसीर इति सूत्रकृता विवक्षितम् । अमुनैवाभिप्रायेण हरिव इत्यादिकमुदाहृत्यापि अन्ते वृत्तिकृता आरेवानित्यप्युदाहृतम् । ह्रस्वनुड्भ्यामित्यत्र आरेशब्दान्मतुप इत्युदात्तत्वं वक्तव्यमित्यत्र आरेशब्दस्याप्युपलक्षणम् । अत एव हि रेवा इन्द्रेत्यादौ मतुपः उदात्तत्वं दृष्टम् । अथवा ह्रस्वनुडभ्यामित्यत्रापि कदाचित् ह्रस्वात्परस्य रस्य मतुप उदात्तत्वमित्येव व्याख्येयम् । एवं च सम्प्रसारणपरपूर्वत्वयोः कृतयोर्गुणात्प्राक् ह्रस्वात्परो मतुबिति रेवा इत्यादौ सर्वत्रोदात्तत्वं सिध्यति । अयमेव सूत्रकृतोऽभिप्रायो वृत्तिकृता व्याख्यातः । इति सर्वमनवद्यम् ।

अमीवहेति । अ इरोग इत्येतस्माद्वन् प्रत्ययेनामीवशब्दो निपातितः । तं हन्तीति बहुळं छन्दसीति किबिति आहुः । ज्ञातव्यमिति । जानातेः कर्मणि ल्युटि ज्ञाने ज्ञातव्यमित्यर्थः । भक्तानामिति । वर्धयतेर्नद्यादित्वात् कर्तरि ल्युडित्यर्थः । इदं रूपमिति । इगुपधज्ञाप्रीकिरः क इति कप्रत्ययः कित्वाद्गुणाभाव इति भावः । सिषक्त्विति । षच समवाये लोटि बहुळं छन्दसीति । शयः श्लुश्लाविति द्वित्वे हलादिशेषे बहुलं छन्दसीति अभ्यास सकारस्येकार आदेशप्रत्ययोरिति षत्वमिति भावः ॥ २ ॥

इति किबिति । इत्यर्थे किप् चेति किप् प्रत्ययः । कोपनादिति भाष्यानुसारादिति भावः । हिंसार्थ इति उरिगुविधुविहिंसार्था इति दण्डकृदिति भावः । उपद्रवकारीति । क्तिच क्तौच संज्ञायामिति क्तिच् तितुत्रतथसिसुसरकेषुचेतीतुप्रतिषेधः । उपधायाश्चेति उपधाया दीर्घत्वं वलि लोपबाधितत्वाद्रूढिप्राप्तौ राल्लोप इति चकारलोप इति भावः । वचनमिति भावे घञिति भावः । प्रणगिति । श्रौतपदस्य पूरयेदिति व्याख्यानमुपपादयति । प्रा पूरण इत्यस्येदं रूपमिति । प्रपूरण इत्यस्मात् लङ्स्तिप् इतश्च लोपः परस्मैपदेष्विति ईकारलोपः हलङ्याभ्य इति तकारलोपः कुत्वं रुधादित्वात् श्नम् माङ्योगापवादश्चेत्याशयः । यत्तु पृचीसम्पर्के इत्यस्माल्लङि इतो लोप हलूङ्चादि लोपे कुत्वे रुधादित्वात् श्नसि विकरणप्रत्यये श्नसो व्यत्ययेनाडागमे यणादेशे माङ्योगादडाग्माभावे च प्रणगिति श्रौतपदनिष्पत्तिरिति केषांचिदत्र व्युत्पादनं तु वेदापव्याख्यानाभ्यां सम्पाटवमात्र मूलकत्वात् प्रपूरण इत्यस्येदं रूपमिति मूलग्रन्थादर्शनमूलकत्वाच्चोपेक्षणीयम् । पूरयेदिति भाष्यपदे णिचो विधायकाभावेनाप्राप्ते तमुपपादयति । स्वार्थ इति । पूरी आप्यायन इत्यस्मात् बहुळमेतन्निदर्शनमिति चुरादित्वात् स्वार्थे णिच् व्यत्ययेन वेति भावः ॥ ३ ॥

नन्वेवं सति सुपोधातुप्रतिपदिकयोरिति सशब्दात् परस्याः प्रथमायाः लुकि सवर्णदीर्घे च साय इति भवेत् सोम इति तु कथमित्यत आह । अत्रेति (सोमेति) तत्पुरुषे कृतिबहुवचनमिति बहुळग्रहणादिति भावः । डस्वेति तथा च पक्षद्वयेऽपि कृत्वोत्वे इति भावः । ननु रिष्यतीत्येतत् कस्य रूपं न भौवादिके दण्डके पतितस्य हिंसार्थस्य रिषेः कर्तरि व्यत्ययेन श्यन् विकरणस्येदं रुपमिति वाच्यम् । तथासति न रिष्यतीत्यस्य हिनस्तीत्यर्थप्रसङ्गेनासङ्गतिप्रसङ्गादित्यत आह । नरिष्यति न हिंस्यत इति । तथाच रिषेः कर्मणि सार्वधातुके च व्यत्ययेन परस्मै-पदमिति भावः । यमित्यादि । अत्र यमिन्द्रो हिनोतीत्यादि रूपेण योजनीयम् । टीकायां तु सङ्ग्रहोक्तिरिति ध्येयम् ॥ ४ ॥

सरस्वतीत्यादीति । अत्रादिपदेन शच्यादीनां सङ्ग्रहः । शं रूपमाश्रिता वायुं श्रीरित्येव च कीर्तिता । ताश्चेन्द्रं धर्मनासत्यश्रयणाच्छ्रिय ईरिताः । इत्युक्तेरिति भावः ।

नन्वेवं दक्षेणेति भवितव्यं दक्षिणेति तु कथमित्यत आह । शकंध्वादित्वादिति । दक्षिण इति दक्षिणादित्रिकं चतुरवाचीत्यभिधानार्थः । योग्यत्वार्थ इति । पापाद्रक्ष्यत्वयोग्यत्व इत्यर्थः । अत एवाह यद्भक्त इति । पाहीति । पाहीत्येतत्पुरुषविपारिणामेन सम्बध्यत इति भावः ॥ ५, २४ ॥

## टीकाविवृतिः

सोमानम् ॥ ऋक्संख्यर्षिच्छन्दसामनुवृत्त्यासिद्धेः सूक्तदेवते अनुक्रान्ते सोमानमिति पञ्चब्राह्मणस्पत्याश्चतुर्थ्यामिन्द्रश्च सोमश्च पञ्चम्यां दक्षिणा चान्याः सादसस्पत्या नाराशंसीवांत्येति तत्स्पष्टयति ॥ नवर्चमिति ॥ अत्रेति ॥ अस्मिन्सूक्ते आद्याः पञ्चर्चो ब्रह्मणस्पतिदेवताकाः । सास्य देवतेत्यस्य प्राग्दीव्यतीयत्वात्प्राग्दीव्यतीयाधिकारिकाद्दित्यदित्यादित्यपत्युत्तरपदाण्ण्य इति ब्रह्मणस्पतिशब्दाण्ण्यप्रत्ययः । षष्ठ्या आक्रोश इत्यत्र षष्ठ्या इति योगविभागाद् ब्रह्मण इत्यत्रालुगिति भावः । चतुर्थ्यामिति । तासु पञ्चस्वेव मध्ये चतुर्थ्यां सघावीर इत्यत्रेन्द्रसोमौ चाद्ब्रह्मणस्पतिरित्यर्थः ॥ पञ्चम्यामिति ॥ तंत्वमित्यत्र चादिन्द्रासोमौ ब्रह्मणस्पतिश्चेत्यर्थः ॥ अंत्येति ॥ नवमी नराशंसदेवताकावा सादसस्पत्यावेति विकल्प इति भावः ॥ ब्राह्मणस्पत्यादीति ॥ षष्ठ्याः पतिपुत्रेत्यादिना संहितायां विसर्जनीयस्य सत्वे एतद्रूपम् । एवमुत्तरत्रापि । आदिशब्दात्सोमदक्षिणा सदसस्पतिनराशंसशब्दाः गृह्यन्ते । षुञ्अभिषव इत्यतो मनिन्प्रत्ययो भावप्राधान्यं चेत्याशयेनाह ॥ सोमानमिति ॥ स्वरणमित्यत्र स्वृशब्दोपतापयोरित्यतो भावे ल्युडिति भावः । कृणुहीत्यत्र कृञो व्यत्ययेन श्नुः । उतश्चेत्यत्र छन्दोवा वचनमित्युक्तेर्नहि लुक् । एवं भाष्येपीत्याशयेनाह ॥ कुर्विति ॥ औशिज इति ॥ ऋष्यंधकेत्यण् ॥ १ ॥

योरेवान् ॥ रयेर्मतावितीति ॥ रयिशब्दस्य मतुप्प्रत्यये परे संप्रसारणं स्यादिति वार्तिकार्थः । ततः संप्रसारणाच्चेति पूर्वरूपत्वे छन्दसीर इतीकारान्ताद्रेफान्ताच्च परस्य मतोर्वत्त्वविधानादत्रापि वत्त्वे आद्गुण इति भावः ॥ ज्ञातव्यमिति ॥ भाष्ये ज्ञानशब्दः कृत्यल्युटो बहुलमिति कर्मणिल्युडन्त इति भावः ॥ पुष्टीति ॥ पुष्टिं वर्धयतीति विग्रहः । ण्यन्ताद्वृधे:कृत्यल्युटो बहुलमिति कर्तरि ल्युडिति भावः ॥ तुरत्वरण इत्यस्येति ॥ इगुपधज्ञेति कप्रत्यये सतीतिशेषः ॥ निमित्तादिति ॥ प्रवृत्तिनिमित्तात्तुरशब्दवाच्य इतिभावः ॥ षचसमवाय इति ॥ बहुलं छन्दसीति शपःश्लौ द्वित्वे बहुलंछन्दसीत्यभ्यासस्येत्वमिति भावः । भाष्यं तात्पर्योक्तिपरमित्याह ॥ अस्माभिरिति ॥ सोस्माभिर्युक् युक्तो भवेदित्यन्वयः ॥ २ ॥

मानः ॥ तस्याररुष इति ॥ अस्थाने कोपयुक्तदैत्यादिरूपमर्त्यस्येत्यर्थः ॥ शंसइति ॥ शंसकथन इत्यत:पचाद्यचि शंसशब्दो वचनार्थ इति भावः । यथोक्तं प्रजावै नरो वाक् शंस इति श्रुतौ ॥ हिंसार्थ इति ॥ तुर्वीधुर्वीहिंसायामित्यतः क्तिच् क्तौच संज्ञायामिति क्तिच्प्रत्यये तितुत्रेति नेट् । उपधायांचेत्युपधादीर्घे राल्लोप इति वलोप इति भावः । प्रणगिति ॥ प्रापूरण इत्यतो बहुलोक्तेरौणादि के डनचूप्रत्यये चोः कुरिति कुत्वम् । स्वार्थे णिरिति ॥ भाष्ये पूरयेदिति तिङंतेपद इति शेषः । बहुलमेतन्निदर्शनमित्युक्तेः चुरादिव्यतिरिक्तधातुभ्योपि स्वार्थे णिजिति भावः ॥ ३ ॥

सघावीरः । घेतिशब्द इति ॥ तथाच भाष्ये इतिशब्द आवृत्तः हेत्यनेन एवेत्यनेन च सम्बध्यत इत्युक्तं भवति । तत्र हेत्यस्य भाष्येऽर्थानुक्तेस्तमाह ॥ प्रसिद्धीति ॥ अवधृतिश्चेति भाष्यं योजयति ॥ ततश्चेति ॥ उना रुद्रेणेति ॥ उकारः शङ्कारः शङ्करः प्रोक्त इति वररुच्युक्तेः ॥ मयेति ॥ इन्दिरालोकमाता मेत्यमरोक्तेरिति भावः ॥ सारत्वादिति ॥ सारत्वात्स इति प्रोक्त इति वचनादिति भावः ॥ प्रथमाया इति ॥ तत्पुरुषे कृति बहुलमिति बहुलग्रहणादिति भावः । तथाच स अम इत्येतयोः कर्मधारये सुपोधातुप्रातिपदिकयोरिति सुब्लुगभावात्सस्य रुत्वोत्वयोस्सोम इति भवति ॥ डस्वेति ॥ औणादिकोबहुल ग्रहणादिति भावः ॥ वीरो विक्रान्त इति ॥ शूरवीरविक्रान्ताविति चुरादिंकात्पचाद्यजिति भावः ॥ नरिष्यति नहिंस्यते हेति ॥ हिंसार्थाद्रिषेः कर्मणि यकि व्यत्ययेन परस्मैपदम् । भौवादिकरिषेर्व्यत्ययेन श्यनङ्गीकारेतु रिष्यतीत्यस्य हिनस्तीत्यर्थप्रसङ्गेन यमिन्द्र इत्याद्यसङ्गतिः स्यादिति भावः ॥ यं मर्त्यमिति ॥ यमिन्द्रो हिनोति यं च सोम इत्यादि प्रत्येकं क्रियासम्बन्धो ज्ञेयः । हिनोतेर्गत्यर्थत्वे प्राप्त्यर्थाश्रयेणाह ॥ गच्छतीति ॥ वृद्ध्यर्थत्वेंतर्णीतण्यर्थाश्रयेणाह ॥ वर्धयति चेति ॥ ४ ॥

त्वन्तम् ॥ सरस्वतीत्यादीति ॥ आदिपदाच्छच्यादिसङ्ग्रहः । शंरूपमाश्रिता वायुं श्रीरित्येव चकीर्तिता । ताश्चेन्द्रधर्मनासत्यश्रयणाच्छ्रिय इत्युक्तेरिति भावः । इनः स्वामीति ॥ इनः सूर्येनृपे पत्याविति विश्वोक्तेरिति भावः ॥ शकंध्वादित्वादिति ॥ शकंध्वादेराकृतिगणत्वादिति भावः ॥ दक्षिण इति ॥ दक्षिणः सरला वामपरच्छंदानुवर्तिष्विति विश्वकोशे परच्छंदानुवर्तिशब्देन परेच्छानुसारप्रवृत्तिरूपचातुर्योक्तेरत्रापि इतिशब्दस्याद्यर्थ त्वेनोत्तरशेषेण चातुर्यार्थोक्तेः ॥ यद्वा सरलशब्दस्य चातुर्यार्थकस्य दक्षिणे वृत्तिकथनेन पर्यायत्वलाभादिति भावः ॥ तच्छब्देति ॥ ऋचितमित्यत्रेति शेषः ॥ योग्यार्थ इति ॥ रक्षणयोग्यो भक्तरूपार्थ इत्यर्थः ॥ पात्वित्येतत्पुरुष-व्यत्ययेनान्वीयत इति भावेनाह ॥ पाहीति ॥ ५, ३४ ॥ चतुस्त्रिंशोवर्गः ॥

## ऋक्संहिता पदपाठसहिता

(१८२) सदसस्पतिमद्भुतंप्रियमिन्द्रस्यकाम्यम् ॥ सनिंमेधामयासिषम् ॥ ६ ॥

(प०) सदसः । पतिम् । अद्भुतम् । प्रियम् । इन्द्रस्य । काम्यम् ॥ सनिम् । मेधाम् । अयासिषम् ॥ ६ ॥

(१८३) यस्मादृतेनसिध्यतियज्ञोविपश्चितश्चन ॥ सधीनांयोगमिन्वति ॥ ७ ॥

(प०) यस्मात् । ऋते । न । सिध्यति । यज्ञः । विपःऽचितः । चन ॥ सः । धीनाम् । योगम् । इन्वति ॥ ७ ॥

(१८४) आदृध्नोतिहविष्कृतिंप्राञ्चंकृणोत्यध्वरम् ॥ होत्रांदेवेषुगच्छति ॥ ८ ॥

(प०) आत् । ऋध्नोति । हविःऽकृतिम् । प्राञ्चम् । कृणोति । अध्वरम् ॥ होत्रा । देवेषु । गच्छति ॥ ८ ॥

(१८५) नराशंसंसुधृष्टममपश्यंसप्रथस्तमम् ॥ दिवोनसद्ममखसम् ॥ ९, ३५, १९ ॥

(प०) नराशंसम् । सुऽधृष्टमम् । अपश्यम् । सप्रथःऽतमम् ॥ दिवः । न । सद्मऽमखसम् ॥ ९, ३५, १८ ॥

## ऋग्भाष्यम्

सदसस्पतिर्हरिः साक्षाद्वायुरग्निरथापि वा ।
लाभज्ञानस्वरूपोऽसौ शरणं तमयासिषम् ॥ ६ ॥
धीप्रेरकः स ध्येयश्च धीभिर्योगं तदाप्नुते ॥ ७ ॥
तस्माद्धविष्कृतस्त्वृद्धिं करोति यजतो विभुः ।
करोति चोत्तमं यज्ञं देवाह्वानानि गच्छति ॥ ८ ॥
नरैःस्तुत्यो नराशंसो हरिर्धृष्टतमश्च सः ।
गुणानां प्रथिमाधिक्यात्सप्रथस्तमईरितः ।
यस्य स्वर्गादपि गृहं मखः प्रियमिवेयते ॥ ९, ३५, १८ ॥

## ऋग्भाष्यटीका

सदसस्पतिम् । अत्र सदसस्पतिशब्दार्थमाह ॥ सदसस्पतिरिति ॥ साक्षादिति मुख्यया वृत्त्या । सहि सदसः पालयिता । साक्षाद्वायुर्मुख्यो वायुरपि । अथवा । साक्षादग्निर्मुख्योग्निः सदसस्पतिः सनिं मेधाशब्दार्थमाह ॥ लाभेति ॥ अयासिषमित्येतच्छेषोक्त्या पूरयति ॥ शरणमिति ॥ अहमद्भुतमाश्चर्यमिन्द्रस्य प्रियं सर्वजनानामपि काम्यं सनिं लाभरूपं मेधां ज्ञानस्वरूपं सदसस्पतिमयासिषं शरणं गतोस्मि ॥ ६ ॥

यस्मात् । यस्मात्सदसस्पते ऋते विपश्चितश्चन ज्ञानिनोपि यज्ञो न सिध्यति सधीनां बुद्धीनां योगं सम्बन्धमिन्वति । प्राप्तिकर्मायम् । अत्र सदसस्पतेर्धिया योगः कथमित्यत आह ॥ धीप्रेरक इति ॥ यस्मात्सधीप्रेरको यस्माच्च ध्येयस्तस्माद्धीभिर्योगमाप्नुत इति युक्तम् ॥ ७ ॥

आत् । तस्मात् । सदसस्पतिं विना यज्ञो न सिध्यतीत्येतदत्रोपपाद्यते । यस्माद्विभुः सदसस्पतिः हविष्कृतिमृध्नोति हविष्कृतो यजतः स्वृधिं करोति । यस्माच्चाध्वरं यज्ञं प्रांचं उत्तमं प्रकृष्टतयांऽचति प्रवर्तत इति कृणोति करोति यस्माच्च देवेषु देवविषयाणि होत्रा होत्राणि । ह्वयते रूपमेतत् । देवाह्वानानि गच्छति प्राप्नोति स्वीकरोति । आत्तस्मात्तेन विना यज्ञो न सिध्यति । अत्र वृद्धिकरणं सफलीकरणम् । उत्तमकरणं तु देवोपभोग्यतापादनम् । त्रयाणां चोत्तरोत्तरो हेतुः ॥ ८ ॥

नराशंसम् । अत्र नराशंसशब्दार्थमाह ॥ नरैरिति ॥ नरैः पुरुषैः ब्राह्मणादिभिः आशंस्यते स्तूयत इति नराशंसः । सुधृष्टमशब्दार्थमाह ॥ धृष्टेति ॥ समाने लोप इति सूत्रात्तशब्दस्य लोप

इत्युक्तं भवति । तमबर्थे मप्रत्यय इति वा । सप्रथस्तमशब्दार्थमाह ॥ गुणानामिति ॥ प्रथप्रख्याने । ततो भावेऽसुन् । सह प्रथसा गुणानां प्रथिम्ना वर्तत इति सप्रथाः । आधिक्येन सप्रथाः सप्रथस्तम इत्युक्तं भवति । तृतीयपादं योजयति ॥ यस्येति ॥ अत्र यस्येति प्रियमित्यपि चाध्याह्रियते । गृहं मख इत्यनेन मखस(स्) शब्दो मखपर्यायो नपुंसकलिङ्गः कर्मधारयश्च समास इत्युक्तं भवति । यद्वा गृहं मख इत्यनेन द्वन्द्वैकवद्भावं सूचयति । तदयमर्थः । यस्य नराशंसस्य सद्ममखसं गृहरूपो मखः । यद्वा अग्निगृहं मखश्च दिवः स्वर्गादप्यतिशयेन प्रियमिवेयते प्रतीयते तं सुधृष्टमं प्रगल्भतमं सप्रथस्तमं अतिशयेन गुणविस्तारयुक्तं नराशंसं अहमपश्यमिति ॥ ९, ३५, १८ ॥

## मन्त्रार्थमञ्जरी

(अहम्) अद्भुतम्, आश्चर्यम् । इन्द्रस्य प्रियम् । सर्वजनानामपि काम्यम् । सनिम्, लाभस्वरूपम् । मेधाम्, ज्ञानस्वरूपम् । सदसः पतिम्, विष्णुम्, प्रधानवायुम्, प्रधानाग्निं वा । अयासिषम्, 'या प्रापणे' 'लुङ्' शरणं गतोऽस्मि ॥ ६ ॥

यस्मात्, सदसस्पतेः । ऋते । विपश्चितः चन, ज्ञानिनोऽपि । यज्ञः न सिध्यति सः । धीनाम्, बुद्धीनाम् । योगम् । इन्वति, प्राप्नोति, 'इविव्याप्तौ' लट्, नुमागमः, बुद्धिप्रेरकत्वाद्ध्येयत्वाच्च 'धीयोगमाप्नोति' इत्युक्तम् ॥ ७ ॥

'सदसस्पतिं विना यज्ञो न सिध्यति' इत्येतदत्रोपपाद्यते (यस्माद्विभुः सदसस्पतिः) हविष्कृतिम्, यजमानम् । ऋध्नोति, हविष्कृतो यजतः स्वृद्धिं करोति । (यस्माच्च) अध्वरम्, यज्ञम् । प्राञ्चम्, उत्तमम्, प्रकृष्टतयाऽचति प्रवर्तत इति व्युत्पत्तेः । कृणोति, करोति । (यस्माच्च) देवेषु, देवविषयाणि । होत्रा, होत्राणि, देवाह्वानानि, ह्वयतेः क्रप्रत्ययः, यजादित्वात्संप्रसारणम्, 'नञानिर्दिष्टमनित्यम्' इति 'क्ङिति च' इति निषेधाप्राप्तेर्वा बहुलग्रहणाद्वा गुणः । गच्छति, प्राप्नोति, स्वीकरोति । आत्, तस्मात् । तेन विना यज्ञो न सिध्यति । इति । अत्र स्वृद्धिकरणं सफलीकरणम्, उत्तमकरणं तु देवोपभोग्यतापादानम् (अन्यत्स्पष्टम्), त्रयाणां पूर्वं पूर्वं प्रत्युत्तरोत्तरो हेतुः ॥ ८ ॥

अत्र 'यस्य' इति 'तम्' इति च ग्राह्यम् ॥ (यस्य) नराशंसस्य । सद्ममखसम्, सद्म गृहरूपम्, मखसम्– मखशब्दपर्यायोऽत्र मखसशब्दो नपुंसकलिङ्गः, यद्वा, सद्म अग्निगृहम् मखसम् यज्ञश्च । दिवः, स्वर्गादप्यतिशयेन । 'प्रियम्' इति शेषः (प्रियम्) न, प्रियमिव प्रतीयते (तम्) सुधृष्टमम्,

सुधृष्टतमम्, 'समाने लोपः' इति (म० व्या०) सूत्रान्निष्ठातकारलोपः, अतिशयार्थे मप्रत्ययो वा, प्रगल्भतमम् । सप्रथस्तमम्, प्रथसातिशयितगुणविस्तारेण सहितम्, 'प्रथ प्रख्याने' ततोऽसुन्, अतिशायने तमप् । नराशंसम्, नरैर्ब्रह्मादिपुरुषैः शंस्यते स्तूयत इति नराशंसस्तं नराशंसं विष्णुम् । (अहम्) अपश्यम् इति ॥ ९ ॥ इति पञ्चत्रिंशो वर्गः ॥ ३५ ॥ अष्टादशं सूक्तम् ॥ १८ ॥

## पदार्थप्रकाशिका

सदसस्पतिमद्भुतम् । मुख्ययावृत्त्येति । वाय्वग्न्योस्त्वमुख्यया वृत्या तच्छब्दवाच्यत्वमिति भावः । मुख्यतो हरेः सदसस्पतित्वमुपपादयति । सहीति । पालयितेत्युक्त्या पतिशब्दः पालनार्थ इत्युक्तं भवति । साक्षादित्यस्य वायुरग्निरित्याभ्यामपि संबन्ध इत्याह । साक्षाद्वायुरिति । मुख्यो वायुर्मुख्यप्राणः । प्रियं प्रीत्यास्पदम् । काम्यं इष्टत्वादिति भावः । लाभरूपमिति । उत्तमाधिकारिणां तस्यैव लाभरूपत्वादिति ॥ ६ ॥

यस्मादृते न सिध्यति । न सिध्यतीति सफलो न भवतीत्यर्थः । प्राप्तिकर्माऽयमिति । प्राप्त्यर्थक इत्यर्थः । इविप्राप्ताविति धातोरिति भावः । इविइत्यस्माल्लिटि तिबादेशे शपि तस्य लोपे धातुवकारस्थेकारलोपे इदित्वान्नुमागमे इनु अन्ति इन्वन्तीति रूपम् । धीयोग इति धीनां योगमिन्वतीत्यनेनोक्त इत्यर्थः । प्रेरको धियश्चेत्युक्त्या प्रैर्यप्रेरकभावेन वा विषयविषयितात्वेन वा धीयोग उपपादित इति ज्ञातव्यम् ॥ ७ ॥ छ ॥

अदृध्नोति हविष्कृतिम् । उत्तमत्वं कथं प्रांचशब्दार्थ इत्यत आह । प्रकृष्टतयाऽञ्चति प्रवर्तत इति । अञ्चुगतिपूजनयोरितिधातोः गच्छति इत्यर्थः । प्रवर्तत इति तु तात्पर्यार्थ इति ज्ञातव्यम् । प्रवर्तत इति हेतोः प्रांचं उत्तममिति सम्बन्धः । होत्राणीत्यस्य देवाह्वानानीति व्याख्यानमुपपादयति ह्वयतेरिति । ह्वे आह्वान इत्यस्मात् त्रप्रयत्यये वकारस्य उकाररूपे संप्रसारणे तस्य गुणे होत्रेति रूपं द्रष्टव्यम् । हविष्कृतं रुघ्नोतीति इत्युक्तं यजमानऋद्धिकरणं नाम कीदृशं तथाध्वरं प्राञ्चं कृणोतीत्युक्तं यज्ञस्योत्तमत्वकरणमपि कीदृशमित्याशङ्कायामाह । अत्रेति ॥ यजमानयज्ञादेः सफलीकरणमेव हविष्कृदधिकरणमित्यर्थः । देवोपदेवभोग्येति । हविरादेर्यथा देवोपदेवभोग्यता स्यात्तथा करणमेवाध्वरस्योत्तमत्वकरणमित्यर्थः । ननु कथं अनेन सदसस्पतिं विना यज्ञो न सिध्यति इत्येतदुपपादितम् । परस्य सङ्गत्यभावात्पदत्रयमपि व्यर्थमित्यत आह । त्रयाणामिति । पादत्रयोक्तानां हविऋद्धिकरणाध्वरोत्तमत्वकरणदेवाह्वानस्वीकर्तॄणां मध्ये इत्यर्थः । हेतुरिति । अत्र हविष्कृदधिकरणे अध्वरोत्तमकरणं हेतुस्तव च देवाह्वानस्वीकर्तृत्वं हेतुः । तथाच सदसस्पतिर्हरिः हविष्कृतः फलदाने । ऋद्धिकर्ता यज्ञस्य देवाद्युपभोग्यतापादनरूपोत्तमताकर्तृत्वात् । सदसस्पति-

रध्वरोत्तमताकर्ता देवाह्वानस्वीकर्तृत्वात् इत्यनुमानं कर्तव्यम् । तथाच देवाह्वानानि स्वयं स्वीकृत्यामुष्य यज्ञो युष्माभिर्गन्तव्य इति तान् प्रबोध्य तैः सहागत्य हविरादेः देवोपभोग्ता-पादनेनाध्वरस्योत्तमत्वं संपाद्य एतादृशोत्तमयज्ञस्य फलदानेन साफल्यं संपाद्य हविष्कृद्वृद्धिं करोत्येवं सदसस्पतिनैव सिध्यमानत्वात्तं विना यज्ञो न सिध्यतीत्येवं हेतुहेतुमद्भावेनोपपादितं द्रष्टव्यमिति भावः ॥ ८ ॥ छ ॥

नराशंससुधृष्टमम् । नरैः कर्तृभिः ब्राह्मणादिभिः करणैः । ननु तर्हि ऋचि सुधृत्तममित्येव वक्तव्यम् । सुधृष्टममिति कथं तकारलोपविधायकाभावात् । इत्यतो अथर्वणभाष्योदाहृत-महाव्याकरणसूत्रमत्र नियामकमस्तीत्याह । लोपः समान इति । समाने वर्णे परे पूर्वस्य लोपो भवतीत्यर्थः । तथाच स्वित्युपसर्गपूर्वकात् धृष् प्रागल्भ्य इति धातोः कर्तरि क्तप्रत्यये ककारलोपे पश्चादतिशयार्थे मतुप् प्रत्यये पकारलोपे सुधृष्तातमिति जाते लोपः समान इति सूत्रेण पूर्वतकारलोपे सुधृष्तमेति जाते ष्टुनाष्टुरिति ष्टुत्वे सुधृष्टमिति भावः । मतुबर्थ इति । अतिशयार्थ इत्यर्थः । अतिशयने तमबिष्ठनाविति सूत्रादिति भावः । तथाच सूपपदात् धृष्धातोः कर्तरि क्तप्रत्यये ककारलोपे ष्टुत्वे पश्चादतिशयरूपे मतुबर्थे तमप् प्रत्यये सुधृष्टममिति रूपं युक्तम् इत्यर्थः । ननु प्रथशब्दस्याकारांतत्वात् स प्रथतममिति स्यात् सप्रथस्तम इति कथम् । इत्यतः प्रथस्शब्दः सकारान्त इत्याह । ततो असुनिति । प्रथधातोरसुन् प्रत्यये उनित्यस्य लोपे थकारस्थाकारलोपे प्रथस् इति सकारान्तप्रातिपदिकमित्यर्थः । सप्रथा इति । समासे सहस्य स इति सूत्रेण सहेत्यस्य सकारादेशो द्रष्टव्यः । गृहं मख इत्यनेनेति । सद्ममखसमित्यस्य गृहं मख इति व्याख्यानकरणेनेत्यर्थः । नपुंसकलिङ्ग इति । मखसमित्यस्य मख इति प्रथमैकवचनतया व्याख्यानकरणेन मखसमित्येतत् न सकारान्तपुल्लिङ्गद्वितीयैकवचनम् । किं नामाकारान्तनपुंसक लिङ्गस्य प्रथमैकवचनमित्युक्तं भवतीत्यर्थः । कर्मधारय इति । सद्मचतत् मखं चेति कर्मधारय इत्यर्थः । द्वन्द्वेति । सद्मच मखसं चेति द्वन्द्वैकवद्भावं नपुंसकं चेत्यर्थः । अन्यथा सद्ममखसं इति स्यात् इत्यर्थः । कर्मधारयाभिप्रायेण गृहरूपोमख इत्युक्तम् । द्वन्द्वाभिप्रायेणाह । यद्वाग्निगृहमिति । युक्तमिति सेत्यस्यार्थः । अपश्यमिति । यज्ञं प्रत्यागतमहमपश्यमित्यर्थः ॥ ९-३५-१८ ॥

## पदार्थदीपिका

पालयितेति । पातेर्डतिरिति डप्रत्यये पाति रक्षतीति पतिरिति भावः । सनिमिति । सनिकषीत्यादि सासनतेरीकारप्रत्यय इति भावः । अयासिषमिति । याप्रापणेत्यस्मात् लुङि मिपोमादेशः यमरमनमातां सक्चेति सच इडागमः । धातोः सगागमश्चेति भावः ॥ ६ ॥

यस्मादिति । अन्यारादितरर्ते इति पञ्चमीति भावः । सिध्यतीति । षिधुसंराद्धाविति दिवादिपाठात् श्यन्नित्यर्थः । व्यासीति । इति व्याप्तौ इदितोनुम् धातोरिति इदित्वात् नुम् शप् चेति भावः । युक्तमिति । इत्युक्तं युक्तमित्यर्थः । तथाच प्रेर्यप्रेरकभावरूपो विषयविषयिभावरूप सम्बन्धश्च योगशब्दार्थ इति भावः ॥ ७ ॥

हविष्कृतिमित्यादि । हविषः कृतिः सम्पादनं यस्य यजमानस्य स हविष्कृतिदिति बहुव्रीहिरिति भावेन भाष्ये हविष्कृतोयजत इत्युक्तं भवति । प्रांचमिति श्रौतपदस्य भाष्योक्तमुत्तममिति प्रतिपदं घटयति । इति प्रांचमुत्तममिति पूर्वेण सम्बन्धः । ह्वयते रूपमेतदिति । ह्वयमासुभसिभ्य स्वन्निति सूत्रे बहुळं छन्दसीति वचनात् कृतसम्प्रसारणो ह्वयतिरपि हशब्देन गृह्यत इति ह्वयतेर्भावे त्रप्रत्यये सम्प्रसारणे परपूर्वत्वे गुणे च कृते होत्र शब्द निष्पत्तिः । यद्यपि त्रन् प्रत्ययांतोऽनेन सूत्रेण निष्पन्नो होत्रशब्दस्त्रिलिङ्गो वाङ्नामसु पठितः तथापि बाहुलकान्नपुंसकमिति भावः । पौनरुक्त्यं परिहरति । अत्र वृद्धिकरणमित्यादिना । नन्वेवं सति पौनरुक्त्येऽपि वैयर्थ्यं स्यादेवेत्यतः पादत्रयोक्तानामर्थानां मध्ये पूर्वपूर्वस्मिन्नुत्तरोत्तरस्य हेतुत्वान्न वैयर्थ्यमपीत्याह । त्रयाणामपीति ॥ ८ ॥

ब्राह्मणादिभिरिति । प्रजावैनरोवावसंस इति ब्राह्मणोक्तेरिति भावः । समान इति । समाने शब्दे परे पूर्वस्य शब्दस्य लोप इति चिरन्तनव्याकरणसूत्रार्थः । गुहाशयां निहिताः सप्तसप्तेत्यत्र माशब्दस्य यथेति भावः । चिरन्तनव्याकरणसूत्र विषये विप्रतिपन्नं प्रति समाधानान्तरमाह तमबर्थ इति । तद्धिता इति सूत्रेणेति भावः । मप्रत्यय इति प्रकृतिः परमं ब्रह्मेत्यत्र यथेति भावः । ततोऽसुन् इति सर्वधातुभ्योऽसुन् वक्तव्य इति वचनात् भावेऽसुन् प्रत्यय इति भावः । सहप्रथसेत्यादि । तेन सहेति तुल्ययोग इति बहुव्रीहिसमासः । वोपसर्जनस्येति सहस्य सादेशः । अपश्यमिति । पाघ्राध्मेत्यादिना पश्यादेश इति भावः ॥ ९, ३५, ८ ॥

## टीकाविवृतिः

सदसस्पतिम् ॥ पारक्षण इत्यतः पातेर्डतिरिति डतिप्रत्यय इत्याशयेनाह ॥ पालयितेति ॥ साक्षाद्वायुरिति ॥ तेन प्रवहादिव्यावृत्तिरिति भावः । अग्निपुत्राणामप्यग्निशब्दवाच्यत्वात्तद्व्यावृत्तये साक्षादितिपदमग्निपदेनापि संयोजयति ॥ साक्षादग्निरिति ॥ सनिमिति ॥ लाभार्थसनेरौणादिक इकारप्रत्यय इति भावः ॥ अयासिषमिति ॥ यातेर्लुङि यमरमनमातां सक्चेतिधातोः सगागमेसिच इडागम इति भावः ॥ ६ ॥

यस्मादृते ॥ सदसस्पतेर्ऋत इति ॥ तत्प्रसादं विनेत्यर्थः ॥ धीनामिति ॥ धीशब्दादामिवामीति नदीसंज्ञाया विकल्पान्नदीत्वपक्षे ह्रस्वनद्याप इति नुडिति भावः ॥ प्राप्तिकर्मेति ॥ इविव्याप्ता वित्यत इदित्वान्नुमि लटि शप् । इन्वति व्रजतीति गतिकर्मसु पाठाच्च गत्यर्थानां प्राप्त्यर्थत्वादिति भावः । तदाप्नुत इत्यत्र त्यतच्छब्दस्य तस्मादित्यर्थकत्वमाश्रित्य तदपेक्षितयच्छब्दाध्याहारेण योजयति ॥ यस्मादिति ॥ इति युक्तमिति ॥ श्रुत्युक्तमिति शेषः ॥ ७ ॥

आदृध्नोति ॥ आदितिपदस्य सार्थक्यमाह ॥ सदसस्पतिं विनेति ॥ हविषःकृतिर्यस्मिन्यजमाने सा हविष्कृतिरिति बहुव्रीहिरिति भावेन भाष्ये व्याख्यातमित्याशयेनाह ॥ हविष्कृतिमिति ॥ प्राञ्चमित्यस्य भाष्योक्तोत्तमार्थत्वं घटयति ॥ प्रकृष्टतयेति ॥ इतिशब्दात्परं प्राञ्चमुत्तममिति योज्यम् । ह्वेञो बहुलं छन्दसीति संप्रसारणे निष्पन्नहुशब्दादपि हुयामाश्रुभसिभ्यस्त्रन्निति त्रनो विधानाद्ध्वावेकरणेवा त्रन्प्रत्यये निष्पन्नहोत्राशब्दस्याह्वानार्थत्वमिति भावेनाह ॥ ह्वयतेरिति ॥ होत्रा गीर्गाथेति वाङ्नामसु पठितःस्त्रीलिङ्गो होत्राशब्दस्त्वत्र नगृह्यते । प्रथमान्तत्वेन गच्छतीत्येतं प्रति कर्तृत्वप्राप्त्या पूर्वार्धोक्तसदसस्पतिकर्तृकक्रियासहपाठविरोधादिति भावः । अत्र वृद्धिकरणं सन्तानाभिवृद्धिकरणं उत्तमकरणंचदक्षिणादिनेत्यर्थप्रतीतेराह ॥ अत्रेति ॥ स्वर्गादिफलयुक्त-त्वकरणमित्यर्थः । त्रयाणां हेतूनां प्रत्येकं पूर्वोक्तार्थोपपादकत्वायोगादाह ॥ त्रयाणामिति ॥ त्रयाणां मध्ये पूर्वपूर्वप्रतीतिशेषः । देवाह्वानानां विष्णुविषयत्वेनानुसन्धाने यज्ञस्य देवोपभोग्यत्वं स्यात् । अवैष्णवकृतगीतातात्पर्यादौ दैत्योपभोग्यत्वोक्तेः । देवोपभुक्तेन यज्ञेन यजमानस्य फलदर्शनात् । एतत्सर्वं च त्वमेव करोषि अतस्त्वां विना यज्ञो नसिध्यतीत्युक्तमुपपन्नमिति भावः ॥ ८ ॥

नराशंसम् ॥ शंस्यत इति ॥ शंसेःकर्मण्यौणादिकोकारप्रत्यय इति भावः । यद्वा आङ्पूर्वाच्छंसेर्हलश्चेति कर्मणि घञिति भावः ॥ समानेलोपइति ॥ सवर्णेशब्दे परे सवर्णस्य लोपःस्यादिति महाव्याकरणसूत्रार्थः । धृषेःपरस्य क्तप्रत्ययस्य तमपस्तकारलोपो यथागुहायांनिहिताःसप्तसप्तेत्यत्रेति भावः । प्रसिद्धव्याकरणानुसारेणाह ॥ तमबर्थ इति ॥ तद्धिता इतिबहुवचनात् । प्रकृतिं परमं ब्रह्मेत्यत्र यथेति भावः ॥ अत्रेति ॥ तृतीयपाद इत्यर्थः । भाष्यकारैरिति शेषः ॥ मखसुशब्द इति ॥ गत्यर्थमखेरसुन्प्रत्यय इतिशेषः । प्रियमिवेयत इति भाष्यानुसारेणाह ॥ नपुंसकलिङ्गइति ॥ स्वमोर्नपुंसकादित्यत्र संज्ञारूपलुग्ग्रहणात्संज्ञापूर्वको विधिरनित्य इति सोर्लुगभावे व्यत्ययेनामादेश इति भावः । मखसशब्द इतिक्वचिदकारान्त-

पाठेनकाप्यनुपपत्तिः । कर्मधारयपक्षआह ॥ गृहरूपोमख इति ॥ द्वन्द्वैकवद्भावपक्ष आह ॥ अग्निगृहं मखश्चेति ॥ अग्निगृहस्य देवप्रियत्वात् ग्रहणं नगृहमात्रमिति भावः ॥ ९, ३५,१८ ॥ पञ्चत्रिंशोवर्गः ॥

## ऋक्संहिता पदपाठसहिता

(१८६) प्रतित्यंचारुमध्वरंगोपीथायप्रहूयसे ॥ मरुद्भिरग्नआगहि ॥ १ ॥

(प०) प्रति । त्यम् । चारुम् । अध्वरम् । गोऽपीथाय । प्र । हूयसे ॥ मरुत्ऽभिः । अग्ने । आ । गहि ॥ १ ॥

(१८७) नहिदेवोनमर्त्योमहस्तवक्रतुंपरः ॥ मरुद्भिरग्नआगहि ॥ २ ॥

(प०) नहि । देवः । न । मर्त्यः । महः । तव । क्रतुम् । परः ॥ २ ॥

(१८८) येमहोरजसोविदुर्विश्वेदेवासोअद्रुहः ॥ मरुद्भिरग्नआगहि ॥ ३ ॥

(प०) ये । महः । रजसः । विदुः । विश्वे । देवासः । अद्रुहः ॥ ३ ॥

(१८९) यउग्राअर्कमानृचुरनाधृष्टासओजसा ॥ मरुद्भिरग्नआगहि ॥ ४ ॥

(प०) ये । उग्राः । अर्कम् । आनृचुः । अनाधृष्टासः । ओजसा ॥ ४ ॥

(१९०) येशुभ्राघोरवर्पसःसुक्षत्रासोरिशादसः ॥ मरुद्भिरग्नआगहि ॥ ५, ३६ ॥

(प०) ये । शुभ्राः । घोरऽवर्पसः । सुऽक्षत्रासः । रिशादसः ॥ ५, ३६ ॥

## ऋग्भाष्यम्

यज्ञं प्रति प्रति त्यं तं सम्यक् शास्त्रोक्तलक्षणम् । आहूयसे ॥ १ ॥
महान्नैव त्वदन्यो स्ति क्रतुं प्रति ।
विष्णौ हि मुख्यतोऽर्थोयमग्नौ कांश्चिद्दते सुरान् ॥ २ ॥
महतो रंजकात्स्वर्गादद्रोग्धारोऽखिलं विदुः ॥ ३ ॥
प्राप्ता अर्कं विशेषेण सन्निधिस्तत्र यद्धरेः ॥ ४ ॥
शुद्धाघोरबलाः क्षेत्रत्रातारः क्षतितोऽपि वा ।
रम्यसत्सुखभोक्तारो मरुतो मारुतत्वतः ।
एतादृशानि रूपाणि प्राणाग्निस्थानि चेशितुः ।
पृथग्वा तादृशान्येव देवगान्यपि सर्वशः ॥ ५, ३६ ॥

## ऋग्भाष्यटीका

प्रतित्यम् । नवर्चमाग्निमारुतमिदं सूक्तम् । यज्ञम् । हे अग्ने गोपीथाय रक्षणाय चारुं भद्रं सम्यक् शास्त्रोक्तलक्षणं त्यं तं प्रसिद्धमध्वरं यज्ञं प्रतिप्रति प्रतिरयं वीप्सायां कर्मप्रवचनीय इति दर्शयितुं द्विर्वचनम् । सर्वान्यज्ञान्प्रति प्रहूयसे आहूयसे यस्मात्तस्मान्मरुद्भिः सहागहि आगच्छ ॥ १ ॥

न हि । महान् । हे अग्ने क्रतुं प्रत्यागन्तुमिति शेषः तव सकाशात्परोन्यस्त्वदन्यो देवो वा महो महान्पूज्यो नहि नैवास्ति । मर्त्यस्तु नैवास्तीति किमु । तस्मान्मरुद्भिः सहागहि । अत्राग्नेः सर्वोत्तमत्वमुक्तं तद्विभागेन व्याख्याति ॥ विष्णौ हीति ॥ अयमर्थस्त्वदन्यो महान्नैवेत्य-यमर्थोऽग्निशब्देन विष्णौ विवक्षिते मुख्यतः संकोचेन विना व्याख्यातव्यः । प्रसिद्धाग्नौ तु विवक्षिते कांश्चित्सुरान्विनेति संकोचेन व्याख्यातव्य इत्यर्थः ॥ २ ॥

येमहः । महतः । ये अद्रुहो नद्रुह्यन्तीति अद्रोग्धारः साधूनामिति शेषः । विश्वेदेवासो मरुतो महो महतो रजसो रंजकात्स्वर्गादिति यावत् । ल्यब्लोपनिमित्तापञ्चमी । स्वर्गमधिष्ठायैव विदुरखिलमिति शेषः । तैर्दूरदर्शनादिमद्भिर्मरुद्भिरग्न आगहि ॥ ३ ॥

य उग्राः । अत्रार्कमानृचुरित्येतावद्व्याख्याति ॥ प्राप्ता इति ॥ सर्वगतस्य हरेरर्कप्राप्तिः कस्माद्विशेषेणोच्यत इत्यत आह ॥ विशेषेणेति ॥ तत्रार्के तस्माद्विशेषोक्तिर्युक्तेति शेषः । ये उग्राः क्रूरा दैत्यान्प्रति ओजसा सामर्थ्येनानाधृष्टासोऽनाधर्षिता अनभिभूता अर्कमानृचुः प्राप्ताः । अर्चतेर्गत्यर्थस्येदं रूपम् । अर्के विशेषेण संनिहिताः तैर्मरुद्भिरग्न आगहि ॥ ४ ॥

येशुभ्राः । शुद्धाः ॥ शुभ्राः शुद्धाः । घोरं दैत्यान्प्रतिक्रूरं वर्पो बलं येषान्ते घोरवर्पसः । सुक्षत्रासः क्षि निवासगत्योरित्यतोधिकरणे डः । क्षं क्षेत्रं तस्मिन्नुपपदे त्रायतेतोनुपसर्गे क इति कः । सुष्ठु क्षेत्रत्रातारः । क्षतितोपि त्रातार इति वा सुक्षत्राः । क्षिक्षय इत्यस्य क्षमिति रूपं अन्यत्समानम् । रिशादसः रमेर्डिः । रि रम्यम् । कथं सत् निर्दोषं शं सुखं तददन्तीति रम्यसत्सुखभोक्तारः । एवंभूता ये मरुतो माभिः वेदैः रुतत्वतः कारणात् । तैर्मरुद्भिरग्नआगहि । अत्र मरुदग्निशब्दाभ्यां मुख्यतो विष्णुरभिधीयत इति सिद्धमेव । रूपविशेषं तु प्रतिपादयन्नाह । एतादृशानीति ॥ इदमध्यात्ममुक्तम् । एतादृशानीत्युक्तगुणकानि । प्राणस्थानीन्द्रियस्थानि प्राणादिवायुस्थानिवा । मरुच्छशब्दानि अग्निस्थानि जाठराग्निस्थान्यग्निशब्दानि पृथगधिष्ठा-नांतरस्थतां विनेत्यर्थः । देवगानीति मरुदग्निगतानि । अनेन बाह्यमुक्तम् ॥ ५, ३६ ॥

## मन्त्रार्थमञ्जरी

अथ 'प्रति त्यम्' इत्येकोनविंशं नवर्चं वर्गद्वयात्मकमाग्निमारुतं गायत्रं सूक्तम्। (हे) अग्ने, विष्णो, प्रधानाग्ने च। गोपीथाय, रक्षणाय। चारुम्, भद्रम्, सम्यक्छास्त्रोक्तलक्षणम्। त्यम्, तम्, प्रसिद्धम्। अध्वरम्, यज्ञम्। प्रति, 'लक्षणेत्थं भूताख्यानभागवीप्सासु प्रतिपर्यनवः' इति वीप्सायां कर्मप्रवचनीयः प्रतिशब्दः, सर्वान्यज्ञान्प्रति। प्र हूयसे, आहूयसे। (यस्मात्तस्मात्) मरुद्भिः (सह)। आ गहि, आगच्छ ॥ १ ॥

(हे) अग्ने क्रतुम् (प्रत्यागन्तुम्) इति शेषः। तव (सकाशात्) परः, अन्यः। देवः। महः, महान्, पूज्यः। न हि, नैवास्ति। मर्त्यः। (तु) न (एवास्तीति किमु ? तस्मात्) मरुद्भिः आ गहि, पूर्ववत्। अत्र प्रतीतं सर्वोत्तमत्वं विष्णावग्नौ च यथायोगं ज्ञेयम् ॥ २ ॥

ये। अद्रुहः, न द्रुह्यन्तीति सतामद्रोग्धारः। विश्वे। देवासः, मरुतः। महः, महतः। रजसः, रञ्जकात्स्वर्गादिति यावत्, ल्यब्लोपनिमित्ता पञ्चमी, स्वर्गमधिष्ठायैव। विदुः (अखिलम्) इति शेषः। (तैः) दूरदर्शनादिमद्भिः। मरुद्भिः अग्ने आ गहि ॥ ३ ॥

ये। उग्राः, क्रूराः, दैत्यान्प्रति। ओजसा, सामर्थ्येन। अनाधृष्टासः, अनाधर्षिताः, अनभिभूताः। अर्कम्। आनृचुः, प्राप्ताः, 'अर्च गतिपूजनयोः' लिट्। (तैः) अर्के सूर्ये विशेषेण संनिहितैः। मरुद्भिः, माभिर्वैदैरुतत्वहेतुना भगवद्रूपैः प्रसिद्धमरुद्भिश्च। अग्ने आ गहि ॥ ४ ॥

ये। शुभ्राः, शुद्धाः। घोरं दैत्यान्प्रति क्रूरं वर्पो बलं येषां ते घोरवर्पसः। सुक्षत्रासः, सुष्ठु क्षेत्रत्रातारः, सुष्ठु क्षतितस्त्रातार इति वा, सुपूर्वात् 'क्षि निवासे' इत्यतः 'क्षि क्षये' इत्यतो वा डप्रत्ययः, 'त्रैङ् पालने' इत्यतः 'आतोऽनुपसर्गे कः' 'आज्जसेरसुक्'रिशादसः, रम्यसत्सुखभोक्तारः, रमेः डिः, रि रम्यं शं सुखमदन्तीति व्युत्पत्तेः, अत्तेः असुन्। एवं भूता ये मरुतः (तैः) मरुद्भिः अग्ने आ गहि ॥ ५ ॥ इति षट्त्रिंशो वर्गः ॥ ३६ ॥

## पदार्थप्रकाशिका

प्रतित्यं चारुमध्वरम्। प्रतित्यं चाग्निमरुतमित्यनुक्रमणिकां मनसि निधाय प्रतित्यमिति सूक्तप्रतीकग्रहणम्। नवर्चमिति सूक्तऋक्संख्याद्रष्टव्येत्याशयेनाह। नवर्चमग्निमारुतमिदं सूक्तमिति। वीप्सायां कर्मप्रवचनीय इति। लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनव इति वीप्सायां प्रतेः कर्मप्रवचनीयसंज्ञाविधानात्। तद्योगे कर्मप्रवचनीययुक्तेति सूत्रेणाध्वरमिति द्वितीयोपपद्यत इति भावः। वीप्साभिप्रायं दर्शयति। सर्वानिति ॥ १ ॥

नहि देवो न मर्त्यः । विभागेनेति । अग्निशब्देन विष्णुप्रसिद्धाग्न्योरूभयोरपि विवक्षितत्वात् । विविच्य व्याख्यातीत्यर्थः । कांश्चित्सुरानिति । ब्रह्मादीनारभ्यनारदान्तानुत्तमान् विनेत्यर्थः ।।२।।

येमहो रजसो विदः । रंजकादिति । मनोहरादित्यर्थः । ल्यब्लोपेति । ल्यब्लोपे कर्मण्यधिकरणे च पञ्चमी वाच्येति वार्तिकादित्यर्थः । प्रासादात्प्रेक्षते आसनात्प्रेक्षते इत्युदाहरणम् । प्रासादमारुह्य आसने उपविश्य प्रेक्षत इति तदर्थः । पूर्वार्धतात्पर्यार्थानुसारेणानुवादस्तैर्दूरदर्शनादि-मद्भिरिति ।।३ ।।

य उग्रा अर्कमानृचुः । अनभिभूताः सन्त इति शेषः । अर्चतेर्गत्यर्थस्येदं रूपमिति । अर्चगतावित्यस्मात् प्रथमपुरुषबहुवचने लिटोससीत्यादेशे परस्मैपदानां णलतुसुस्थलतुसणल्वमा इत्यनेन लिटिति बादीनां णलादिनवादेशविधानादत्र झीत्यस्य उस् इत्यादेशे लिटिधातोरनभ्यासस्येति द्वित्वे अअ उसिति जाते अभ्यासदीर्घे आअरच् उसिति जाते द्वितीयाकारस्य पूर्वरूपे आरच् उसिति जाते तस्मान्नुट् द्विहल इति दीर्घभूतादाकारात् परेद्विहलः पूर्वनुडागमे उडित्यस्य लोपे आन् । ऋच् । उस् । आनृचुस् इति जाते सस्य रुत्वे विसर्गे च आनृचुरिति रूपं द्रष्टव्यम् ।। ४ ।।

येशुभ्रा घोरवर्पसः । क्षिनिवासगत्योरित्यतो अधिकरणे ड इति सूपपदात् क्षिधातोः क्षियन्ति विनाशं यंत्यस्मिन्नित्यधिकरणे डप्रत्यये डित्वात् टीभूतस्येकारस्य लोपे प्रत्ययाकारसम्बन्धे च सति क्षेतिरूपम् । तस्मिन्नुपपद इति । द्वितीयान्ते क्षेत्रवाचिनि क्षशब्दे उपपत्यर्थः । त्रायतेरिति । त्रैङ्पालने इति धातोरित्यर्थः । तथाच धात्वेकारस्यादेच उपदेशेऽशितीत्यनेनात्वे पश्चादातो अनुपसर्गे क इति कप्रत्यये कित्वादातोलोप इटि चेति धात्वाकारलोपे त्रेतिरूपम् । तथाच क्षियंत्यस्मिन्निति क्षं क्षेत्रं शरीरं सुष्ठु क्षं त्रायन्त इति सुक्षत्रास इत्यर्थः तदिदमाह । सुष्ठ्वेति । क्षिक्षय इत्यस्येति । भावे डप्रत्यये सति डित्वात् टिलोपे क्षेतिरूपम् । अन्यत्समानमिति । क्षं क्षतिस्तंस्मिन् पञ्चम्यन्त उपपदे त्रायतेरातोनुपसर्गे क इति कप्रत्यये सति पूर्ववत् त्रेतिरूपं भवति इत्येवं त्रेतिरूपसाधनं पूर्ववत् द्रष्टव्यमित्यर्थः । तथाच क्षं क्षतिस्तस्मात् सुष्ठु त्रायन्त इति सुक्षत्रास इति अर्थो द्रष्टव्यः । रमेर्डिरिति । रमुक्रीडायामस्मात् डिप्रत्यये डित्वात् टीभूतस्यामित्यस्य लोपे रीतिरूपम् । कथमिति शंशब्दोक्तसुखस्य रिशब्दोक्तरम्यत्वं कथमित्यर्थः । सन्निर्दोषमिति । निर्दोषत्वाद्रम्यत्वम् इत्येवं रम्यत्वोपपादकं निर्दोषत्वं बहिरेव द्रष्टव्यमित्याशयेन भाष्ये सदित्युक्तमिति भावः । माभिर्वैदैरिति । मरुछब्दे तु पूर्वपदह्रस्वतोत्तरपदाकारलोपश्च वक्तव्यमिति

पूर्वमुक्तत्वात् । माशब्दोपपदात् रुशब्दे अस्मात्कर्मणि क्तप्रत्यये ककारलोपे पूर्वपदस्य ह्रस्वतायां रुतपदांत्यस्य तकारस्थस्याकारलोपे मरुदिति प्रातिपदिकं द्रष्टव्यमिति भावः । उक्तगुणकानीति । शुभ्रत्वादिगुणकानीत्यर्थः । प्राणस्थानि च अग्निस्थानि च प्राणाग्निस्थानि चेति द्वन्द्वं हृदि निधाय प्राणस्थानीत्यस्यार्थद्वयमाह । प्राणस्थानीन्द्रियस्थानि प्राणादिवायुस्थानि वा मरुछब्दानीति वा । प्राणादीति । श्वासादिरूपप्राणादिवायुस्थानि इत्यर्थः । मरुच्छब्दानि । मरुछब्दवाच्यानीत्यर्थः । अग्निशब्दानीति । अग्निशब्दवाच्यानीत्यर्थः । पृथगधिष्टानान्तरेति । अध्यात्मोक्तइन्द्रियप्राणादिरूपश्वासवायुजाठराग्निरूपाधिष्टानान्तरेत्यर्थः ॥ ५ ॥ ३६ ॥

## पदार्थदीपिका

अग्निनामरुतमिति । गोपीथाय रक्षणायेति । निशीथागोपीथवगथा इति गुप् रक्षण इत्यस्मात् थक्प्रत्ययो इडागमो गुणनिश्चया इत्यत इति भावः । श्यन् प्रत्यय एवात्र निपात्यत इत्यन्ये । केचित्तु रक्षणायेत्यत्र टीकायां गवामिति शेषः । ततश्च गोपूर्वात् पातेस्थक् इत्वं च निपात्यते । पिबतेस्तु पातृतुदिवयीत्यादिनाथक्प्रत्ययस्य घुमास्थेतीत्वस्य च सिद्धत्वात् तुमुक्विकरणपरिभाषयापातेगृह्याणां गवां ज्ञानादीनां रक्षणायेत्यर्थो नतु पानायेति इत्यभिप्राय इत्याहुः । त्यंतमिति । सर्वनामसु पठितस्य तच्छब्दस्य पर्याय इति भावः । ननु श्रुतौ अविद्यमानं प्रतिशब्दस्य द्विर्वचनं भाष्ये किमर्थमित्यत आह । प्रतिरिति । अध्वरमिति । द्वितीयोपपत्यर्थं कर्मप्रवचनीयत्वे प्रतिशब्दस्याङ्गीकर्तव्ये लक्षणादाबर्थविशेषलाभात् वीप्सायां तल्लाभात् तदर्थत्वं द्योतयितुं द्विर्वचनमित्याशयः ॥ १ ॥

नद्रुह्यन्तीति । नञुपपदात् दुह्यतेः क्विबिति भावः । अद्रोग्धार इति । कर्तरि द्रुह्यतेस्तृचि गुणे हकारस्य कुत्वेन घकारे तस्य जस्त्वं झषस्तथोर्दोध इति अनेन तकारस्य धकारेच सति अद्रोग्धृशब्दनिष्पत्तिरिति बोध्यम् । शेषः शेषोक्तिरित्यर्थः ॥ २ ॥

पूर्वपदतात्पर्यं मरुद्भिरिति ॥ ३ ॥

अर्चतेर्गत्यर्थस्येदंरूपमिति । यद्यप्यर्चतिः पूजार्थस्तथापि एष इममभ्यार्चमित्यादि प्रयोगाद्गत्यर्थत्वमपीति भावेन गत्यर्थस्येत्युक्तम् । इदं रूपमिति । अर्चतेर्लिटि उसि अपस्पृधेथामानृचुरित्यादिना संप्रसारणमकारलोपश्च निपातितः । ततो द्विर्भावः । उरदित्यत्वं अत आदेरिति दीर्घत्वं तस्मान्नुड् द्विहल इति भावः ॥ ४ ॥

शुभ्राः शुद्धाः । शुभेरौणादिकरक्प्रत्ययान्तस्य शुभ्रशब्दस्य ऋजेन्द्रेत्यादौ निपातनादिति भावः । यद्यप्यत्र वृशीभ्यां रूपस्वांगयोः पुट्चेति वृञोऽसुनि पुडागमे च निष्पन्नो वर्पःशब्दो रूपनामसु पठितः । अत एव अग्निरूपधरा इति वेदापव्याख्यात्रा व्याख्यातम् । तथापि वरणीयत्वम् । बलमपि वर्पशब्दमिति भावेनैवमुक्तमिति भावः । अधिकरण इति । क्षियंत्यस्मिन् इत्यधिकरण इत्यर्थः । ड इति । डित्वाट्टिलोपे क्षमिति सिध्यतीति भावः । क इति । अदित उपदेशेऽशितीति कृतत्वात् । अस्मादातोऽनुपसर्गे क इति क इत्यर्थः । अतोलोप इटि चेत्याकारलोप इति भावः । क्षिपंत्यस्मिन्निति क्षं, क्षं त्रायंते इति क्षत्रास इति व्युत्पत्तिरत्र दृष्टव्या । इदं रूपमिति । क्षम् इति भावे प्रत्यये डित्वाट्टिलोपे क्षमिति सिध्यति तस्मात् त्रायत इति क्षत्रास इति व्युत्पत्तिरिति ज्ञेयम् । डित्वाट्टिलोप इति भावः । कथमिति रम्यत्वस्योपपादकतयैव भाष्ये सत्वमुक्तं न तु कस्यचिच्छब्दस्या याथार्थतयेति भावः । अदंतीति । सार्वधातुभ्योऽसुन् वक्तव्यः इति वचनात् अत्तेः कर्त्तर्यसुन् प्रत्यय इति भावः । अध्यात्ममुक्तमिति । एतादृशानीत्यारभ्य तादृशानिवेत्येतावत्पर्यन्तमित्यर्थः । अनेनेति । देवगान्यपि सर्वश इत्यनेनेत्यर्थः ॥ ४ ॥

## टीकाविवृतिः

प्रतित्यम् ॥ नवर्चमिति ॥ प्रतित्यमाग्निमारुतमित्यनुक्रमणिकोक्तेः । अग्नामरुतोदेवता अस्येतिविग्रहे सास्यदेवतेत्यणि देवताद्वन्द्वेचेत्युभयपदवृद्धौ आनङपवाद इद्वृद्धावित्यनेनाग्नि-पदस्येकारादेश इति भावः ॥ गोपीथायेति ॥ गुपेर्निशीथगोपीथावगथा इति ईथप्रत्ययो निपात्यते ॥ त्यंतमिति ॥ त्यद्शब्दस्तच्छब्दपर्याय इतिभावः । श्रुतावविद्यमानः प्रतिशब्दे द्विवचनप्रयोगो भाष्ये किमर्थ इत्यत आह ॥ वीप्सायामिति ॥ लक्षणेत्थंभूतेति प्रतिशब्दस्य लक्षणाद्यर्थे कर्मप्रवचनीयसंज्ञायां विशेषार्थालाभाद्वीप्सायां तल्लाभात्तदर्थत्वद्योतनाय द्वित्वोक्तिरिति भावः॥१॥

नहिदेवः ॥ श्रुतौ क्रतुमित्यस्य भाष्ये क्रतुंप्रतीत्यस्य चाध्याहारेण विनाऽऽयोगाच्छेषं पूरयति ॥ प्रत्यागन्तुमितिशेष इति ॥ श्रुतौ प्रतिसहितस्यागन्तुमित्यस्य भाष्येतु केवलस्येति भावः । तवपर इत्यस्य त्वदन्य इति व्याख्यानं घटयितुं शेषं पूरयति ॥ तवसकाशादिति ॥ मह इति ॥ महपूजायामित्यत औणादिकः कर्मण्यजिति भावः ॥ तद्विभागेनेति ॥ तत्सर्वोत्तमत्वं विष्णुप्रसिद्धाग्निभेदेनेत्यर्थः ॥ कांश्चित्सुरानिति ॥ विष्ण्वादिनारदपर्यन्तानिति शेषः ॥ २ ॥

येमहः ॥ अद्रुह इति ॥ द्रुहेःकर्तरि क्विबिति भावः ॥ महो महत इति ॥ महशब्दात्पंचम्याः सुपां सुलुगिति स्वादेश इति भावः । ल्यब्लोपे कर्मण्यधिकरणे पञ्चम्युक्तेर्विवक्षितमाह ॥ स्वर्गमधिष्ठायेति ॥ पूर्वार्धोक्तेन तृतीयपादोक्तं संगमयति ॥ तैरिति ॥ ३ ॥

य उग्राः ।। अनाधृष्टास इति ।। आधृष्टाःसम्यक्शक्तिबन्धनयुताःपरैः प्रतिबद्धशक्तयोऽभिभूता इति यावत् । धृषुशक्तिबन्धने इत्यतःक्तप्रत्ययः । नआधृष्टाः अनाधृष्टा इति विग्रह इति भावः ।। आनृचुरिति ।। अर्चपूजायामित्यतो लिटि झेरुसादेशे अपस्पृधेथामानृचुरिति निपातनात् इत्यस्य ऋकारादेशे द्वित्वे उरत्वे हलादिशेषे अत आदेरिति दीर्घे ऋकारान्तर्गतरेफस्य तस्मान्नुड्द्विहल इत्यत्र हल्त्वेनाश्रयणान्नुडितिभावः ।। ४ ।।

येशुभ्राः ।। शुभ्राः शुद्धाइति ।। शुभ्रं प्रदीप्ते धवलेऽभ्रकेचेतिविश्वोक्तेः प्रदीप्ताः शुद्धा इत्यर्थ इति भावः ।। वर्पोबलमिति ।। वृङ्शीङ्भ्यां रूपस्वांगयोः पुट् चेति वृङोरूपार्थेऽसुनि पुगागमे निष्पन्नत्वाद्रूपनामसु पाठाच्च वर्पस्शब्दो यद्यपि रूपवाची तथाप्युणादयो बहुलमित्युक्ते रर्थान्तरेपीत्याशयेन बलार्थत्वं युक्तमिति भावः ।। त्रायतेरिति ।। आदेच उपदेशे शितीत्यात्वे कृत इति शेषः ।। क्षेत्रं त्रातार इति ।। शरीरस्य भूम्यादेर्वा रक्षितार इत्यर्थः ।। क्षतित इति ।। द्रव्यादिनाशादित्यर्थः ।। अन्यत्समानमिति ।। ड प्रत्ययार्दात्यर्थः ।। रमेर्डिरिति ।। कर्मणीति शेषः ।। रिशादस इत्यत्र रिच तत् शंच रिशं तददन्तीति विग्रह इति भावः ।। तर्हि भाष्योक्तसच्छब्दस्य वैयर्थ्यपरिहाराय शङ्कते ।। कथमिति ।। रम्यत्वं कथमित्यर्थः । रम्यत्वोपपादनाय भाष्ये सदित्युक्तं न तु कस्यचिच्छ्रौतपदव्याख्यानरूपमिति भावेनाह ।। सदिति ।। अत्तेः कर्तर्यसुन्नित्याशयेनाह ।। अदंतीति ।। रुतत्वत इति ।। रुशब्द इत्यतः कर्तरि क्विपि तुगागम इति भावः । रूपविशेषमित्युक्तं विशदयति ।। इदमध्यात्ममिति ।। एतादृशानीत्येतदर्थोक्तमित्यर्थः ।। उक्तगुणकानीति ।। नहिदेव इत्यादिनेति शेषः ।। प्राणादीति ।। आदिशब्दादपानादयो गृह्यंते ।। मरुच्छब्दानीति ।। मरुदिति शब्दो येषां तानि मरुच्छब्दवाच्यानीत्यर्थः ।। पृथगिति पदं परमेश्वररूपाणां भेदशंकां वारयितुं व्याचष्टे ।। अधिष्ठानांतरस्थतां विनेति ।। मरुदग्निशब्दवाच्यभगवद्रूपाणां रामकृष्णादिरूप वत्प्रत्येकं सत्त्वादिति भावः ।। अनेनेति ।। देवगानीत्यनेनाधिदैवगतमुक्तमित्यर्थः ।। ५, ३६ ।। षट्त्रिंशोवर्गः ।।

## ऋक्संहिता पदपाठसहिता

**(१९१) येनाकस्याधिरोचनेदिविदेवासआसंते ।। मरुद्भिरग्नआगहि ।। ६ ।।**

**(प०) ये । नाकस्य । अधि । रोचने । दिवि । देवासः । आसंते ।। ६ ।।**

**(१९२) यईङ्खयंन्तिपर्वतान्तिरःसंमुद्रमंर्णवम् ।। मरुद्भिरग्नआगहि ।। ७ ।।**

(प०) ये । ई॒ङ्खय॑न्ति । पर्व॑तान् । ति॒रः । स॒मु॒द्रम् । अ॒र्ण॒वम् ॥ ७ ॥

(१९३) आयेत॒न्वन्ति॑रश्मिभि॑स्ति॒रःस॑मु॒द्रमोज॑सा ॥ म॒रुद्भि॑रग्न॒आग॑हि ॥ ८ ॥

(प०) आ । ये । त॒न्वन्ति॑ । र॒श्मिऽभि॑ः । ति॒रः । समु॒द्रम् । ओज॑सा ॥ ८ ॥

(१९४) अ॒भित्वा॑पू॒र्वपी॑तयेसृ॒जामि॑सो॒म्यंमधु॑ ॥ म॒रुद्भि॑रग्न॒आग॑हि ॥ ९,३७,१,१९ ॥

(प०) अ॒भि । त्वा॒ । पू॒र्वऽपी॑तये । सृ॒जामि॑ । सो॒म्यम् ॥ मधु॑ ॥ ९,३७,१,१९ ॥

इति प्रथमोऽध्यायः

## ऋग्भाष्यम्

स्वर्गोपरि प्रकाशेच सूर्यादावासते सुराः ।
नाको निर्दुःखरूपत्वाद् द्यौः प्रकाशस्वरूपतः ॥ ६ ॥
प्रतोलयन्ति च गिरींस्तिरस्कृत्य च सागरम् ।
पुरुषान्प्रकृतिं वापि पर्ववन्तोहि जन्मना ।
पुरुषाः सुसमुद्रेकात्समुद्रः प्रकृतिर्मता ।
प्रकृतेः पुरुषाणां च प्रेरकः सन्सदाहरे ।
स्वरूपैर्बहुभिर्युक्त आयाहि समसद्गुणैः ॥ ७,८,९-३७,१९ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमदृग्भाष्ये प्रथमोऽध्यायः ॥ १ ॥

## ऋग्भाष्यटीका

येनाकस्य । स्वर्गोपरि । ये देवासः सुरा मरुतो नाकस्याधि स्वर्गोपरि दिवि रोचने रुचदीप्तौ सूर्यादौ प्रकाशे आसते । तैर्मरुद्भिरग्न आगहि । अत्र नाकस्याधि दिवीति पुनरुक्तिरित्यतोर्थभेदमाह ॥ नाक इति । कं सुखम् । तद्विरुद्धं दुःखमकम् । न विद्यते अकमस्मिन्निर्दुःखरूपत्वान्नाकः । द्यौः प्रकाशस्वरूपतः । दीव्यतेर्हिरूपमेतत् ॥ ६ ॥

य ईंखयन्ति । प्रतोलयन्ति । ये पर्वतान् गिरीनींखयन्ति । ईंखिर्गत्यर्थः । गमयन्ति प्रतोलयन्तीति यावत् । तथार्णवमुदकवन्तं समुद्रं सागरं च तिरस्तिरस्कृत्य वर्तन्ते । विष्णुविषये पर्वतान्समुद्रं चेति व्याचष्टे ॥ पुरुषानिति ॥ कथं पुरुषाः पर्वतशब्दार्था इत्यत आह ॥ पर्ववन्तो

हीति ॥ यस्मात्पुरुषाज्जन्मना पर्ववन्तो जन्मलक्षणपर्ववन्तः तस्मात्पर्वताः । मत्त्वर्थेतः । प्रकृतिः कथं समुद्रशब्देत्यत आह ॥ सुसमुद्रेकादिति । अर्णवत्वं च तस्याजलादिभूताधारत्वं पुरुषादीनामींखनादिकं व्याकुर्वन् मरुद्भिरग्न आगहीत्येतदपि व्याख्याति ॥ प्रकृतेरिति ॥ मरुद्भिरिति सहयोगलक्षणा तृतीया ततः सहयुक्तेऽप्रधान इति मरुतामप्राधान्यं प्रसक्तं तन्निरासार्थमाह ॥ समसद्गुणैरिति ॥ ७ ॥

आये । ये रश्मिभिस्तेजोभिः सर्वमातन्वन्ति व्याप्नुवन्ति । तथा ओजसा समुद्रं तिरस्कुर्वन्ति । तैर्मरुद्भिरग्न आगहि ॥ ८ ॥

अभित्वा । अहं त्वा अभि त्वां प्रति पूर्वपीतये प्रथमपानाय सोम्यं सोमरूपं मधुस्वादुद्रव्यं सृजामि निर्मिमामि । तस्मान्मरुद्भिरग्न आगहि ॥ ९,३७,१९ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्य विरचितस्य श्रीमदृग्भाष्यस्य विवरणे
श्रीमज्जयतीर्थमुनिविरचिते प्रथमोऽध्यायः ॥ १ ॥

## मन्त्रार्थमञ्जरी

ये देवासः, सुराः, मरुतः । नाकस्य, निर्दुःखस्य स्वर्गस्य । अधि, स्वर्गस्योपरि । दिवि रोचने, 'रुच दीप्तौ' ल्युट् (युच्) सूर्यादौ प्रकाशे च । आसते, तिष्ठन्ति । (तैः) मरुद्भिः अग्ने आ गहि ॥ ६ ॥

ये । पर्वतान्, गिरीन् । ईङ्खयन्ति, 'ईखि गतौ' गमयन्ति, प्रतोलयन्तीति यावत् । तथा– अर्णवम्, (अर्णांसि जलान्यत्र सन्तीत्यर्णवस्तम्, 'अर्णसो लोपश्च' इति वः सलोपश्च) समुद्रम्, सागरम् । (च) तिरः, तिरस्कृत्य । (वर्तन्ते) । विष्णौ तु– 'पर्वतान्, जन्मलक्षण-पर्ववत्त्वात्पुरुषान्, पर्वनूशब्दान्मतुबर्थे (तप्पर्वमरुभ्याम्' इति) तप्प्रत्ययः । ईङ्खयन्ति, प्रेरयन्ति । अर्णवम्, जलादिभूताधारत्वादुदकवन्तम् । समुद्रेकहेतुना 'समुद्रम्' इत्युक्तां प्रकृतिम् । तिरः, तिरस्कुर्वन्ति, नियमयन्ति । इति व्याख्या । (तैः) मरुद्भिः मरुन्नामकैर्देवैः सह, मरुदन्तर्गतैः पृथक्स्थितैर्वा रूपविशेषैः सह । अग्ने, विष्णो, प्रसिद्धाग्ने वा । आ गहि ॥ ७ ॥

ये । रश्मिभिः, तेजोभिः । (सर्वम्) आ तन्वन्ति, व्याप्नुवन्ति । यथा– ओजसा, सामर्थ्येन । समुद्रम् तिरः, तिरस्कुर्वन्ति । (तैः) मरुद्भिः अग्ने आ गहि ॥ ८ ॥

(अहम्) त्वा अभि, त्वां प्रति। पूर्वपीतये, प्रथमपानाय। सोम्यम्, सोमरूपम्। मधु, स्वा
द्रव्यम्। सृजामि, निर्मिमामि। तस्मात्। मरुद्भिः अग्ने आ गहि ॥ ९ ॥ इति सप्तत्रिंशो वर्गः।
३७ ॥ आद्याध्यायस्थमन्त्रार्थान्भाष्यटीकानिरूपितान्। समग्रहीष्म बालानां बोधाय प्रार्थित
वयम् ॥ ४ ॥ इति प्रथमाष्टके प्रथमोऽध्यायः ॥ १ ॥ एकोनविंशं सूक्तम् ॥ १९ ॥

## पदार्थप्रकाशिका

ये नाकस्याधिरोचने। रुचिदीप्ताविति। रुचिधातोः ल्युटि तस्यानादेशे गुणे रोचनेति रू
भवतीति द्रष्टव्यम्। दुःखमकमित्यादि। दुःखमकं तन्न विद्यते अस्मिन्निति निर्दुःखरूपत्वात् नाक
इति योज्यम्। द्यौः प्रकाशस्वरूपत इत्यर्थमुपपादयति दीव्यतेरिति। दिवुक्रीडाविजिगीषाद्युति
स्तुतिमोदमदस्वप्नकान्तिगतिष्विति धातोरिति भावः। नाकस्याधि स्वर्गोपरि ये आसते दि
प्रकाशरूपे सूर्यादौ च ये आसते रोचते दीप्तौ तत्प्रकाशे च ये आसत इत्यर्थः ॥ ६ ॥

य ईंखयन्ति पर्वतान्। भाष्यं तात्पर्यकथनपरमित्याह। प्रतोलयन्तीति। यावदिति
अर्णवसमुद्रशब्दयोः पुनरुक्तिपरिहाराय अर्णवशब्दो यौगिक इत्याह। अर्णवमुदकवन्तमिति
उदकवाचिनो अर्णस्शब्दान्मत्वर्थे वप्रत्यय इति भावः। ऋचि अर्णवशब्देन कूपादिप्रसक्तिवारणा
समुद्रमित्युक्तम्। तदनूद्य भाष्यं संगमयति। समुद्रं सागरं चेति। इतस्ततः समुद्रजलचालनेन मरुत
तत्तिरस्कर्तृत्वं ज्ञातव्यम्। पर्वतशब्दाः पर्वतशब्दवाच्याः। पर्वते अवस्थावन्तः। कथम
पर्वतशब्दार्थ इत्यत आह। मत्वर्थे त इति। पर्वशब्दात् तत् एषामस्तीति मत्वर्थे तप्रत्यये पर्वते
रूपमिति भावः। समुद्रशब्दाः समुद्रशब्दवाच्याः। एवं प्रकृते समुद्रशब्दवाच्यत्वोपपत्ताव
अर्णवशब्दवाच्यत्वं कथमित्युत्तरमाह। जलादीति। तथाचार्णवत्वं नाम जलवत्वम्। जलशब्द
सजातीयभूतांतरोपलक्षकः तद्वत्वं चाधाराधेयभाव सम्बन्धेनेत्यभिप्रायः। पुरुषादेरिति। पर्वत
शब्दवाच्यपुरुषादेरित्यर्थः। अत्रादिपदेन समुद्रशब्दोक्तप्रकृतिसङ्ग्रहः। ईशानादिकमित्यत्रादिपदे
तिरस्करणपरिग्रहः। व्याकुर्वन्निति। प्रेरक इत्यनेन इंखनतिरस्करणयोर्व्याकरणं द्रष्टव्यम्
इत्येतदपीति। स्वरूपैर्बहुभिर्युक्त आयाहीत्यनेन तद्व्याख्यानं द्रष्टव्यम्। तथाच हे अग्ने भगवन् मरु
मरुद्भिर्मानप्रतिपाद्यैः बहुभिः स्वरूपैः स्वस्य स्वतन्त्रस्य तव विद्यमानै रूपविशेषैः स
आयाहीति योजना द्रष्टव्या। समसद्गुणैरिति भाष्यमवतारयति। मरुद्भिरितीत्यादिना
सहयोगलक्षणेति। सहयुक्त इति सूत्रप्रापिता तृतीयेत्यर्थः। ततःकिमित्यत आह। तत इति सहयो
तृतीयाङ्गीकारे सहयुक्ते अप्रधान इति सूत्रेण सहार्थेन युक्ते अप्रधाने तृतीयायाः विहितत्वात्। पुत्रे
सहागतः पितेत्यादौ सहयोगेनाप्राधान्यदर्शनादिहापि मरुद्भिः सरूपैः सहागहि इत्युक्तम
रुच्छब्दवाच्यानां स्वरूपाणामेव सहयोगेनाप्राधान्यं प्रसक्तम्। तदयुक्तम्। भगवत्स्वरूपे

प्रधानाप्रधानभावाभावादिति भावः । हे सद्गुणैः सर्वभूतेषु समेत्यग्निनामकस्य भगवतः सम्बोधनमिदम् । तथाच सर्वरूपाणामपि समत्वेन न तत्र विशेषाभावात्तदप्राधान्यादि प्रतीतिरज्ञदृष्टेचेति भावः ॥ ७ ॥

आये तन्वन्ति रश्मिभिः । व्याप्नुवन्तीति । अत्र सर्वत्रापि जगति मरुता व्याप्नुवन्तीति भावः । तिरस्कुर्वन्तीति । समुद्रजलचालनादिति भावः ॥ ८ ॥

अभित्वा । प्रथमं पानायेति । विष्णुपक्षे तस्य सर्वदेवोत्तमत्वेन सर्वापेक्षया प्रथमं पानायेत्यर्थः । प्रसिद्धाग्निपक्षे तु अग्निद्वारैव सर्वदेवानामाहुतिप्राप्तेः तदपेक्षया प्रथमपानाय इत्यर्थो द्रष्टव्य इत्यशेषमतिमङ्गलम् ॥ ९ ॥

श्रीमदृग्भाष्यटीकायां श्रीनिवासेन दुर्गमः ।
विवृतः प्रथमाध्यायो गुरूणां सत्कृपाबलात् ॥

इति श्रीमद्यदुपत्याचार्यपूज्यपादपादुकाराधकेन श्रीनिवासेन विरचितायां श्रीमदृग्भाष्यटीकाविवृतौ पदार्थप्रकाशिकायां प्रथमोऽध्यायः सम्पूर्णः ।

## पदार्थ चन्द्रिका

स्वर्गस्योपरीति । अधिशब्द उपर्यर्थ उपसर्गे प्रतिरुपको निपात इति भावः । रुचदीप्ताविति । अनुदात्ते तश्च हलादेरिति कर्त्तरि व्युच् भावे ल्युड्वेति भावः । न विद्यत इति । न भ्राडित्यादिनानञः प्रकृतिभावात् नलोपो नञ इत्यनेन लोपो नेति भावः । दीव्यतेरिति । दीव्यतेर्द्युत्यर्थाद्भावे डुवुप्रत्यय इति भावः ॥ ६ ॥

इखिर्गत्यर्थ इति । उखीत्यादिगत्यर्थकदण्डके इखीवीतिपाठादिति भावः । अस्मात् हेतुमिति चेति ष्विच् इदितोनुम् धातोरिति नुम् इति बोध्यम् । अर्णवमुदकवन्तमिति । अर्णसोलोपश्चेति मत्वर्थीयो वप्रत्ययः । सलोपश्चेति भावः । समुद्रेकादिति । समुत्पूर्वाद्रि येर्डप्रत्ययः इति भावः । तन्निरासार्थमिति । शब्दतोऽप्राधान्यप्रतीतावपि । नार्थतस्तदिति भावः ॥ ७ ॥

पूर्वपीतय इति । पूर्वाचासौ पीतिश्चेतिकर्मधारयेत्यादिना पूर्वशब्दस्य पुंवद्भाव इति भावः ॥९॥
व्यासं चिन्तयते तमेव श्रुणुते कर्तेति तं चेहते तेनैवैथ त इंगतेस्पृहयते तस्मै वरं याचते । तन्नो दर्शयते तमेव भजते तस्य द्विषं स्पर्धते तं गच्छे शरणं गुरुं मम परं व्यासैकवृत्तिं सदा ।

इति श्रीमत्पदवाक्यप्रमाणविदां श्रीमद्विद्याधीशतीर्थपूज्यपादानां शिष्येण केशवभट्टारकेण विरचितायां श्रीमदृग्भाष्यटीकाविषमपदवाक्यार्थदीपिकायां प्रथमोऽध्यायः ।

## टीकाविवृतिः

येनाकस्य । नाकस्याधि स्वर्गस्योपरीति ।। नलोकाव्ययनिष्ठेत्यत्र कर्तृकर्मणोः कृतीत्यतोनु वृत्तकृतीत्यस्याव्ययशब्देनान्वयात्कृदव्यययोग एव षष्ठीनिषेधादधिशब्दोपरिशब्दयोगे षष्ठी ज्ञेया भाष्ये स्वर्गोपरीति षष्ठीसमासस्य पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणे नेति न निषेधः पूर्वोत्तरकृत्साहचर्यात्कृदव्ययेनैव षष्ठी समासनिषेधादिति ज्ञेयम् ।। रुचदीप्ताविति ।। भावे ल्युडि शेषः ।। सूर्यादौ प्रकाश इति ।। दिवीत्यस्य सूर्यादाविति प्रतिपदं रोचन इत्यस्य प्रकाश इति बोध्य ।। नाकइति ।। नभ्राडित्यादिना नञः प्रकृतिभाव इति भावः । स्वर्गः सर्वथा दुःख शून्यत्वान्नाकशब्दवाच्य इत्यर्थः ।। दीव्यतेर्हिरूपमिति ।। कर्तरि दिवेर्डिच्चेति डिविप्रत्यय इति शेष ।। तथाच दिवीति पदं न स्वर्गार्थकं किंतु योगेन सूर्याद्यर्थकम् । ततश्च स्वर्गोपरि विद्यमाने दिवि सूर्यादिरूपे रोचने प्रकाशे मरुतः सन्निहिताः सन्तीत्यर्थ उक्तोभवति ।। ६ ।।

यईंखयन्ति । ईंखिर्गत्यर्थ इति ।। उखउखीति दण्डके ईंखईंखीति गत्यर्थेषु पाठादिति भावः समुद्रशब्देन पुनरुक्तिपरिहारायार्णवशब्दं व्याख्याति ।। तथार्णवमिति ।। अर्तेः क्युरुच्चेत्यत अर्तेरित्यनुवृत्तौ उदके नुट्चेत्यसुनुडागमयोः अर्णस्शब्द उदकार्थः । तस्मात् अर्णसो लोपश्चेत्यनेन मत्त्वर्थे वप्रत्ययः सलोपश्चेति भावः ।। मत्त्वर्थेत इति ।। तप्पर्वमरुद्भ्यामिति मत्त्वर्थे तप्रत्यय इति भावः । समुत्पूर्वाद्रिचेरौणादिकोड्प्रत्यय इति भावेन भाष्ये सुसमुद्रेकात्समुद्र इत्युक्तमिति ज्ञेयम् । मरुतामप्राधान्यमिति ।। इतिसूत्रेणाप्रधानेतृतीया विधानादप्राधान्यं प्राप्तमित्यर्थः ।। तन्निरा- सार्थमिति ।। शब्दतः प्राप्तमपि वस्तुतो न विवक्षितं राज्ञा सहमन्त्री समागत इतिवदिति भावः समाः स्वेनान्यूनानधिकाः सद्गुणा येषां ते तथोक्तास्तैरिति भाष्योक्तसमसद्गुणैरित्यस्यार्थः ।। ७ ।

आये रश्मिभिस्तेजोभिरिति ।। ज्ञानविशेषैः प्रकाशैर्वेत्यर्थः ।। तिरस्कुर्वंतीति ।। तदपेक्षयाधिक गाम्भीर्ययुक्ता इत्यर्थः ।। ८ ।।

अभित्वा पूर्वपीतय इति ।। पूर्वाचसापीतिश्चेति कर्मधारये पुंवत्कर्मधारयेति पूर्वशब्दस्य पुंवद्भाव इति भावः ।। ९, ३७, १९ ।। सप्तत्रिंशोवर्गः ।।

इतीरितायां नरसिंहनाम्ना छलारिनारायणवर्यजेन ।<br>ऋग्भाष्यटीकाविवृतौ स्फुटोऽयमध्याय आद्यो हरितुष्टये स्यात् ।। १ ।।

इति श्रीमदानन्दतीर्थ भगवत्पादाचार्यकृतऋग्भाष्यस्य जयतीर्थविरचितायाः<br>टीकाया विवृतौ प्रथमोध्यायः ।। १ ।।

## श्रीसत्यनाथतीर्थरचितः
## रूपावतारापरनामा ऋग्भाष्यटीकाप्रकाशः

### प्रथमाष्टके प्रथमोऽध्यायः

लक्ष्मीपतिं वेदवेद्यमनन्तगुणबृंहितम् ।
सूर्यमण्डलगं देवं नारायणमुपास्महे ॥ १ ॥
नमामि ज्ञानसिद्ध्यर्थं पूर्णप्रज्ञं जगद्गुरुम् ।
जयतीर्थमुनिं सर्वशास्त्रज्ञं वरदं गुरुम् ॥ २ ॥
कीटेन कारयामास यथा कृष्णस्तथा मया ।
कृपामात्रेण साम्राज्यं तं सत्यनिधिमाश्रये ॥ ३ ॥

जयतीर्थश्रीचरणः मङ्गलमनुष्ठाय शिष्यशिक्षार्थं ग्रन्थादौ निबध्नाति ॥ नारायणेति ॥ प्रत्यूहाश्च ध्वान्तानि च प्रत्यूहध्वान्तानि । तेषां शान्तिकृत् । सूर्यमण्डलान्तर्गतस्य हरेः उभयनिवारकत्वं सुप्रसिद्धमेवेति भावः । कमला च कमलानि च कमलाकमलानि तानि आनन्दयतीति कमलाकमलानन्दम् तत् ॥ अन्तः स्वान्तम् । स्वान्तस्य अन्तः मनोमध्य इति यावत् । ''अव्ययं विभक्ति'' (२।१।६) इति विभक्त्यर्थेऽव्ययीभावः ॥ १ ॥

ऋचां पदानीति ॥ संवादितामात्रम् ॥ समानार्थतामात्रम् । ऋक्पदानां भाष्यपद-व्याख्येयतामात्रम् इति यावत् । कुर्मः । प्रकटीकुर्म इत्यर्थः । इह खल्विति ॥ संसारलक्षणस्य अकूपारस्य समुद्रस्य पारं जिगमिषताम् इत्यर्थः ॥ अप्रतिपत्तिविप्रतिपत्तिभ्यामिति । पदार्थस्य उपक्रमादिलिङ्गानां च अप्रतिपत्तिविप्रतिपत्तिभ्याम् इत्यर्थः । एतेन वाक्यर्थाप्रतिपत्तौ विद्यमानायामेव वाक्यस्य बोधकत्वात् अप्रतिपत्त्या न तत्कारणतामश्नुवत इति अयुक्तमिति परास्तम् ॥ प्रारिप्सितस्येति । लौकिकानां पुरुषाणाम् अविघ्नेन परिसमाप्तये प्रचयाय च ये नारायणप्रणामस्तवने कर्तव्यत्वेन प्रसिद्धे ते शिष्यशिक्षार्थं कुर्वन् स्वव्याख्यानप्रयोजनं दर्शयतीत्यर्थः । प्रारिप्सितस्य अविघ्नेन समाप्तये प्रचयाय चेत्येतत्प्रयोजनसद्भावात् । शिष्यैरपि नारायणप्रणामस्तवने कार्ये इति शिष्यशिक्षा कृतेति ज्ञापनार्थम् ॥ अनवधारितस्वरूपस्येति ॥ अनवधारितस्वरूपस्य प्रणामस्तवनायोगात् स्वरूपावधारणस्य लक्षणेन विना असम्भवात् अस्माभिः प्रणामस्तवनानुष्ठानेन शिक्षिता अपि शिष्याः प्रणामस्तवने न करिष्यन्तीत्यालोच्य शिष्याणां तत्र प्रवृत्तये तान् प्रति लक्षणमाहेत्यर्थः । एतेन-स्वरूपनिर्धारणेन विना प्रणामस्तवनायोगश्चेत् तर्हि स्वेनैव लक्षणं ज्ञातव्यम् । वचनं तु व्यर्थम् । वचनस्य परार्थत्वात् इति

निरस्तम् ॥ अर्ण इत्युदकनामेति ॥ उदके नुक् च (उ०६३६) इति सूत्रेण उदके अभिधेये अर्त्तेरसुन् प्रत्ययस्य नुगागमस्य च विधानादिति भावः ॥ तत इति ॥ अर्णस् शब्दात् 'तद्धिताः' (४।१।७६) इति बहुवचनज्ञापितो मत्वर्थे डप्रत्ययः । ततश्च अकारान्तमर्ण इति पदं समुद्रवाचीति भावः ॥ 'कडाराः कर्मधारये' (२।२।६८) इतीति । अनेन सूत्रेण विशेषणपूर्वनिपातनियमस्य कडारादिषु त्याजितत्वात् ऐच्छिकः अमितशब्दस्य परनिपात इति भावः । एतेन - अस्य सूत्रस्य पूर्वनिपातविकल्पाभिधायकत्वात् अनेन परनिपात इत्ययुक्तम् - इति परास्तम् । यद्यपि कडारादिषु अमित शब्दस्य पाठो नास्ति । तथापि तेष्वस्य उपसंख्यानं कर्तव्यमिति भावेन इदं सूत्रम् उदाहृतमिति निबोध्यम् ॥ तैरमितेति ॥ तैरुपमानैः इयदिति अवच्छिन्नतया ज्ञातुमशक्या द्युतिः यस्य स तथोक्त इति व्याख्येयमित्यर्थः ॥ ऋक्प्रतिपाद्यतया नतमिति ॥ निर्दोषवेदप्रतिपाद्यत्वार्थक नारायणपदप्रयोगादिति भावः । उत्तरमाह । सकलेति ॥ भगवत्प्रतिपत्तिहेतुत्वात् इत्यस्य अनुवृत्तेन अतितुष्टिकरमित्यनेनान्वयः । अशेषगुणाधारत्वस्य ओंकारप्रवृत्तिनिमित्तत्त्वेऽपि परमेश्वरस्य तद्वाच्यत्वं कुतः ? अन्यस्याऽपि किं न स्यात् ? अविशेषात् इति शङ्कते ॥ कुत इत्यतश्चेति ।

भूधातोः सत्ताप्राप्त्यर्थकत्वेन कथं भूधातुनिष्पन्नस्य भूशब्दस्य पूर्णत्वं प्रवृत्तिनिमित्तम् इत्यत आह ॥ भूबहाविति ॥ भवतेरौणादिक इति । धातूनामनेकार्थत्वात् भूत्यर्थकात् भवतेः औणादिको डुप्रत्यय इत्यर्थः । वरशब्दस्येति । अन्त्यस्याकारस्य लोप इत्यर्थः । निरुक्तत्वादिति ॥ पृषोदरादीनि यथोपदिष्टम् (६।३।१०९) इति सूत्रेण पृषोदरादिशब्दानां प्रामाणिकप्रयोगानुसारेण साधुत्वस्य प्रतिपादितत्वादित्यर्थः । एवमन्यत्रापि द्रष्टव्यम् । सूत्रस्योक्तार्थत्वे वार्तिकसंमतिमाह ॥ यथोक्तमितीति । वर्णागमः - अधिकस्य वर्णस्य आगमः । वर्णविपर्ययः - पूर्ववर्णस्योत्तरत्वम् उत्तरस्य पूर्वत्वम् तथाच ॥ वर्णविकारनाशाविति द्वौ ॥ धातोः । धात्वर्थातिशयेन योगः । अर्थविशेषवृत्तिः । तत् । प्रामाणिकप्रयोगान्तर्गतत्त्वेन प्रसिद्धं पञ्चविधं कार्यं सूत्रकृता 'पृषोदरादीनि यथोपदिष्टम्' (१।३।१०९) इत्यनेन पृषोदरादिषु निरुक्तम् निरूपितमिति अभिज्ञैरुच्यत इत्यर्थः । एतेन-वर्णनाशस्यैव निरुक्तत्वात् निरुक्तत्वादन्तलोप इत्ययुक्तमिति परास्तम् । स्वरिति पाठ इति ॥ इतःपरं टीकायां श्रूयमाणं शब्दस्वभावादव्ययत्वमिति वाक्यं प्रक्षिप्तम् न टीकावाक्यम् । सुवः स्वरिति शब्दयोरव्ययत्वे मानाभावात् । न च स्वरादि-निपातमव्ययम् (१।१।३७) इत्यभिधानमेव अव्ययत्वे मानम् इति वाच्यम् । तत्र स्वर्गवाचकस्य अव्ययत्वविधानात् । बहुव्रीहिप्रातिपदिकस्यास्य तद्भिन्नत्वात् । अव्ययत्वाभिधानप्रयोजनाभावाच्च । तदिति रूपसिद्धिमाह त्यजियजितनिभ्य इति । अत्र त्यजियजितनिभ्यो डित् इति (उणा १२९) तनोतेरदिप्रत्यय इत्येव पाठः । ततश्च डित्वात् टिलोपे दकारस्य चर्त्त्वे तद् इति रूपं सिध्यति । क्वचित्पुस्तके त्यजियजितनिभ्यो डिदिति तनोतेर्डत्प्रत्यय इति पाठो दृश्यते । स तु लेखकदोषात् प्रक्षिप्तः । सूत्रस्यादिप्रत्ययविधायकत्वेन डत्प्रत्यय विधायकत्वाभावादिति द्रष्टव्यम् ।

षूङ्प्राणिप्रसव इतीति । षूङ् इत्येतस्मात् तृच् प्रत्यये तस्येडागमे गुणे अवादेशे सवितृशब्दसिद्धिः । वृङ (ञ) एण्य इति (२-१७-१८) वृङ्सम्भक्तौ इत्येतस्मात् कर्मणि एण्यप्रत्यये गुणे रपरत्वे च वरेण्यमिति रूपसिद्धिः । क्वचित् वृञ एण्यः (उणादि ३७८) इति पाठो दृश्यते । स प्रामादिकः । टीकाकृता वरणीयो भजनीय इति वृङर्थत्वव्याख्यानात् । 'वृङ्एण्य'' इत्येव सूत्रपाठदर्शनाच्च । एवं च वृङएण्य इति वृणोतेः कर्मण्येण्य इति टीकापाठः इति द्रष्टव्यम् । यद्यपि वृणोतेरेण्यप्रत्यये प्रत्ययस्याद्युदात्तत्वे ''अनुदात्तं पदमेकवर्जम्'' (६-१-१५८) इति शेषनिघाते मध्योदात्तत्वं वरेण्यपदस्य प्राप्नोति । तथापि 'वृषादीनां च' (६।१।२०३) इति सूत्रेण वृषादीनामाद्युदात्तत्वविधानात् वरेण्यशब्दस्य वृषादित्वात् आद्युदात्तत्वमेवेति द्रष्टव्यम् ।

धातुसमुदायादसुनिति । यद्यपि प्रत्ययः एकस्मादेव विहितः तथापि उणादयो बहुलम् (३-३-१) इति सूत्रकृता उक्तत्वात् धातुसमुदायादपि प्रत्ययो भवतीति द्रष्टव्यम् । अत एव वृत्तिकृता ''यतोविहितास्ततोऽन्यतोऽपि भवन्ती''त्युक्तम् । अदिभूभ्यामिति । यद्यप्याधुनिकैर्वृत्तिकारैः अदिभुवोडुतच् (उणादि ६७९) इति पाठमङ्गीकृत्य सूत्रं व्याख्यतम् । तथापि चिरन्तनैः वृत्तिकारैः अदिभूम्यां डुतच् (उणादि ६७९) इति पाठस्याङ्गीकृतत्वात् तथैवोदाहृतम् । 'सरूपाणामेकशेष एकविभक्तौ' (२।२।६४) इति प्रातिपदिकसमुदायात् प्रत्ययं वदतः पाणिनेः धातुसमुदायादपि प्रत्ययस्याभिमतत्वेन 'अदिभूभ्यां डुतच्' इति । पाठस्यैव युक्तत्वाच्च । असुन् प्रत्ययसंनियोगेनेति ॥ उणादयो बहुलम् (३-३-१) इत्युक्ते ह्रस्वत्वटिलोपलाभाय प्रत्यय संनियोगाश्रयणं कृतम् । नहि औणादिकप्रत्ययाभावे 'उणादयो बहुलमि'त्यनेन कार्यसम्पादनमस्ति । येन प्रत्ययसंनियोगाश्रयणं व्यर्थं स्यादिति भावः । एतेन- अलाक्षणिकस्य कार्यस्याश्रयणे असुन् प्रत्ययस्य अनपेक्षणात् असुन् प्रत्ययसंनियोगेनेत्यभिधानं व्यर्थमिति परास्तम् । ननु ध्यायतेः शब्विकरणस्य परस्मैपदिनो मस् प्रत्यये ध्यायेमेति भाव्यम् । कथं धीमहीति रूपम्? इत्यत आह ध्यायतेरिति । ध्यै धातोः छान्दसमात्मनेपदम् । ततो महिङ्, सम्प्रसारणम्, 'संप्रसारणाच्च' (६।१।१०६) इति एकारस्य पूर्वरूपत्वम् । हलः (६।४।२) इति सूत्रेण इकारस्य दीर्घः । बहुलं छन्दसि (२।४।७३) इति शपो लुक् । ततश्च धीमहीति रूपं भवति । बहु वचनार्थ इति । धीमहीति बहुवचनेन ज्ञापितोऽर्थ इत्यर्थः । न इतीति ॥ अहं च अन्ये चेति स्थिते 'त्यदादीनि सर्वैर्नित्यम्'' (१।१।७४) इति अस्मदः शेषविधानात् न इत्यस्याशेषार्थकत्वमित्यभिप्रेत्य अशेषेत्युक्तमिति भावः ।

ननु णिजन्तात् चुदेः शप् प्रत्यये गुणे अयादेशे च अनन्तरं यासुटि तस्य 'अतो येयः' (२।२।८०) इति इयादेशे च सति चोदयेत् इति भवेदिति अत आह । चुद प्रेरण इतीति । णिजन्तात् चुदेः 'लिङर्थे लेट्' (३।४।७) इति लेटि गुणे 'लेटोऽडाटौ' (३।४।९४) इत्याडागमे

अयादेशे 'इतश्चलोपः परस्मैपदेषु' (३।४।९७) इति लेडादेशतिप इकारलोपे चोदयात् इति रूपं सिध्यतीति भावः । एकवाक्यतासिद्धये तदित्यस्यावृत्या योजनमाह । एवं योजनीयमिति । ननु भाष्ये सम्पूर्णत्वात् पुरुषो नामेति वक्तव्यम् । कथं 'पुमान्नामेति'' उक्तम्? इत्यत आह । पुमान् पुरुषो नामेति पुमान् शब्देन पुरुषशब्दार्थे लक्षयित्वा भाष्यकृता पुरुषनामवत्वं विष्णोरुक्तमिति भावः ।।

पृ पालन इति । अस्मात्कुषन् प्रत्ययः कित्वाद् गुणाभावः । 'उदोष्ठ्यपूर्वस्येति' (७।१।१०२) ऋकारस्योत्वं तस्य रपरत्वं चेति द्रष्टव्यम् । सर्व शब्दार्थ इति । समुद्रघोषादि सर्वशब्दार्थ इत्यर्थः । तेषामिति । समुद्रघोषादिशब्दानां भगवत्तात्पर्यकत्वेन । तावा एता इति वेदप्रतिपाद्यत्वादित्यर्थः । सर्ववेदार्थ इत्येवता पूर्णत्त्वात् सर्वशास्त्रार्थः सर्वशब्दार्थ इत्येतद्द्वयमसङ्गतमित्यत आह इत्येतद् द्वयमिति । ननु इत्येतमर्थं तावाएता इति उपनिषदाहेति व्याख्यानमनुपपन्नम् । विशेषेण ऋगर्थतामित्यनेन तावा एताऋच इत्यस्यान्वितत्वादित्यत आह ।। तावा एता इति । तावा एता इत्यस्यावृत्त्या तावा एता इति परा उपनिषदित्याह तथा तावा एता इत्युपनिषत् विशेषेण ऋगर्थतामाहेति मूलं योज्यम् । आपाततः कर्मादिप्रतिपत्तिपरस्येति । झटिति कर्मादि स्वरूपप्रतिपादकस्येत्यर्थः । ऋचांत्विति ।। ऋचां भगवत्परत्वावधारणं सुकरमिति यत् तदेव विशेषतः भगवत्परत्वमिति शब्देनोच्यत इत्यर्थः । अग्निनामवतः प्रथम प्रतिपादन इति । अग्निनाम्ना प्रथमप्रतिपादने को हेतुरित्यर्थः । एतेन- अग्निनामवतः प्रथमप्रतिपाद्यत्वे हेतोरुत्तरत्रानभिधानात् अवतारिकेयमनुपपन्ना - इति परास्तम् । विसंवाद इति । परिहारार्थं विसंवादोऽनादरणीय इति भावः ।

## प्रथमसूक्ते प्रथमोवर्गः

अग्निमीळे ।। भाष्ये अग्निशब्दोऽयमिति । नन्विदमनुपपन्नम् । एकस्यैव अग्निशब्दस्य अग्रशब्द निप्रत्ययाभ्यां तथा अग्रशब्दनयतिधातुडिप्रत्ययैस्तथा अदिनिप्रत्ययाभ्यां तथा अङ्गशब्दनयति-धातुडिप्रत्ययैः तथा अगशब्दनयतिडिप्रत्ययैः उत्पत्तेरभिधानात् । न चैतद्युक्तम् । कैश्चिदव-यवैर्जातस्य अन्यैरवयवैरुत्पादायोगात् जातस्य जनेरयोगाच्चेति चेत् । उच्यते । न ब्रूमो वयं धात्वादिभिः शब्दा जायन्त इति पदानां नित्यत्वाङ्गीकारात् । उक्तं च महाभाष्ये—

> सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः ।
> एकदेशविकारे हि नित्यत्वं नोपपद्यते ।। इति ।।

ननु कथं तर्हि धात्वादीनामग्न्यादिशब्दावयवत्वं कथं च पङ्कजादि शब्दानां यौगिकत्वम् अवयवशून्यानामवय वार्थाङ्गीकारायोगात् इति चेत् । न ब्रूमो वयं धात्वाद्यवयवानां च तन्तुपटवत्

जन्यजनकभावेन अवयवावयविभाव इति येनोक्तदोषः स्यात् । किं नाम धातुप्रत्ययादिस्थाने अयमखण्डः शब्दः प्रयोक्तव्य इति भगवत्कल्पितत्वम् । तत्र धात्वादिस्थानि समुदायस्य पारिभाषिककमवयवत्वम् । पारिभाषिकावयवार्थान्बोधयतः अखण्डस्याऽऽदेशस्य अवयवित्वमपि पारिभाषिकमेव । न चैवं सत्यनुपत्तिरस्ति । तत्तद्धातुतत्तत्प्रत्यय समुदायस्थाने तथा तत्तच्छब्दतद्धितादिप्रत्ययस्थाने तत्तदर्थप्रतिपादनाय एकस्यैव शब्दस्य पाणिन्यादिभिः प्रयोगनियमस्य कर्तुं शक्यत्वात् । उक्तं च महाभाष्ये 'मृजिरस्माविशेषेणोपदिष्टः प्रकृतिपाठे सर्वत्र मृजिबुद्धिप्रसङ्गे अक्ङितिमार्जिः साधुर्भवति' इति । अत एव पङ्के जायत इति पारिभाषिकावयवार्थ प्रतिपादकत्वात् पङ्कजशब्दस्य यौगिकत्वं लोके सिद्धं सिद्धम् । एवं राजपुरुष इति समासपदानामपि सावयवत्वमूह्यम् । एवमेवानेकधा पदविच्छेदस्थले समाधानमूह्यम् । अत एव अग्निशब्दे अदेरवयवतया अदर्शनं न दोषाय पारिभाषिकावयवत्वस्योक्तत्वेन तदेकदेशत्व-रूपमुख्यावयवत्वानङ्गीकारात् । पङ्कजादिशब्देष्वपि अवयवाः तदेकदेशतया दृश्यन्त इति भ्रम एव । अवयवत्वेनाङ्गीकृतानां पङ्कजशब्दजनिड प्रत्ययानामन्यत्वात् । पङ्कजादि शब्दावयवतया दृश्यमानानां पङ्कजादिशब्दानामन्यत्वात् ।

अग्रशब्दादिति । सप्तम्यन्तादग्रशब्दात् 'तद्धिताः' (४।१।७६) इति बहुवचनज्ञापितो निप्रत्ययः । रशब्दलोपः । 'सुपोधातुप्रातिपदिकयोः' (२।४।७१) इति उपपद सुलोपः । ततश्च अग्नि इति रूपम् । पूर्ववदिति । सप्तमीसमर्थात् भवार्थे निप्रत्ययः । रशब्दलोपः । सप्तमीलोपश्चेति भावः । नयतेः कर्तरि डिप्रत्यय इति । यद्यपि 'अच इः' (उणादि ५७८) इति सूत्रेण इकारप्रत्ययः प्राप्नोति । तथापि तं बाधित्वा बाहुलिको डिप्रत्ययो भवतीति द्रष्टव्यम् । ननु अदेर्भावे क्तिन् प्रत्यये 'अदोजग्धिर्ल्यप्तिकिति' (२।४।३६) इति जग्ध्यादेशे आदेश इकारस्य इत्संज्ञायां लोपे प्रत्ययतकारस्य 'झषस्तथोऽर्धोधः' (८।२।४०) इति धत्वे जग्धिमिति भवितव्यम् । अत्तिमिति कथं निर्देश इत्यत आह धातुनिर्देशोऽयमिति । कर्तरि निप्रत्यय इति । 'वीज्याज्वरिभ्यो निः' (उणा.४९७) इति सूत्रेण वीज्याज्वरिभ्यो विधीयमानो निप्रत्ययः 'उणादयो बहुलम्' (३।३।१) इत्युक्तेः अदेरपि भवतीत्यर्थः । पूर्ववन्निरुक्तिरिति ॥ अगशब्दोपपदात् नयतेर्डिप्रत्ययः उपपदाकारलोपश्च ।

ननु अङ्गागनेतृतामिति षष्ठीसमासोऽनुपपन्नः । 'कर्तरि च' (२।२।१६) इति सूत्रेण कर्त्रर्थकतृचा षष्ठी समासनिषेधात् इत्यत आह । नेतृशब्द इति । 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' (२।३।३९) इति षष्ठीनिषेधात् 'कर्मणि द्वितीया' (२।३।२) इति सूत्रेण अङ्गागशब्दे द्वितीया भवति । श्रितादिषु गमिगाम्यादीनामुपसंख्यानात् 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः'

(२।३।२) इति सूत्रेण द्वितीयासमासो भवतीति भावः । ईड स्तुताविति ॥ अस्माल्लिट् । कर्तरि शप् । अदिप्रभृतिभ्यः शपः (२।४।७२) इति शपो लुक् लटः 'तिपतसृझि (३।४।७८) इति सूत्रेण इडादेशः । इटः 'टित आत्मनेपदानां टेरे' (३।४।९७) इति एत्वम् । तथाच ईड इति रूपम् । ऋक्षु डकारस्य ळकारादेशः प्रायेण दृष्ट इति अत्रापि डकारस्य ळकार इति भावः । पुरः पूर्वमेवेति । 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' (५।३।३९) इति पूर्वशब्दादसि प्रत्ययः पूर्वशब्दस्य पुरादेशश्चेति भावः । अशेषस्येति शेषोक्तिरिति ॥ अतः परं टीकायां श्रूयमाणं ''चतुर्थ्यर्थे बहुलं छन्दसि'' (२।३।६२) इति चतुर्थ्यर्थे षष्ठीति इति वाक्यं प्रक्षिप्तम् न टीकावाक्यम् । 'सर्वे विधयः छन्दसि विकल्प्यन्त' इति वचनात् । हितशब्दयोगेऽपि 'हितयोगेचे'ति वार्तिकेण न चतुर्थीति वाक्यमुच्छिन्नम् । अवश्यं चैतदेवं विज्ञेयम् । अशेषस्य सम्प्रदानादित्वाभावेन चतुर्थ्यर्थे बहुलं छन्दसीति सूत्रोदाहरणायोगात् । सम्प्रदानादिरूपार्थे षष्ठीदर्शन एवास्य सूत्रस्योदाहर्तव्यत्वात् अशेषस्येत्यत्र चतुर्थ्यर्थाभावात् चतुर्थ्यर्थे षष्ठीति वचनायोगाच्च । उदात्तस्वरार्थ इति । अग्निशब्दनिष्ठोदात्तस्वरार्थ इत्यर्थः । जातावेकवचनमिति । समुदाये एकवचनमित्यर्थः । ऋत्विङ्नियामकत्वं कथं स्तुतावुपयुक्तमित्यत आह । कर्माङ्गत्वादिति । ऋचां कर्माङ्गत्वात् ऋत्विग्भिः कर्मणि ऋच उदाहर्तव्याः । ततश्च ऋचां ऋत्विग्वाक्यतायां स्थितायाम् अग्निमीळ इति वाक्येन स्तुतिकर्तारो ऋत्विज इति सिद्धं भवति । ततश्च ऋत्विजां नियामकस्य तेषां ज्ञानप्रदस्य स्तुतिरुपपन्ना भवति । स्तावकेन स्वनियामकस्य तेषां ज्ञानप्रदस्य तेन रूपेण स्तोतव्यत्वादिति भावः । भाष्यस्थानि 'द्योतनात् विजयादि' त्यादीनि षट्पदानि प्रतीकत्वेनोपादाय व्याख्याति । द्योतनादिति । अत्र इति शब्दान्तं भाष्यस्य प्रतीकत्वेनोपादानम् । द्योतनादेः कर्तृत्वादिति व्याख्यानम् । तथाच द्योतनकर्तृत्वात् देवमित्यादि ज्ञेयम् । स्तुत्येति भाष्यस्थपदं प्रतीकत्वेनोपादाय व्याख्याति । तथा स्तुत्येति । दीव्यतेरिति । इगुपधज्ञाप्रीकिरः कः (३।१।१३५) इति कं (क प्रत्ययं) बाधित्वा पचादिपाठात्पचाद्यचिति भावः । स्तुत्यर्थादिति ॥ अअकर्तरि च कारके संज्ञायाम्' (३।३।१९) इति कर्मणि घञिति भावः । रत्नशब्दं निर्वक्ति । रमतेर्भावे न प्रत्यय इति । रमतेर्नप्रत्ययः तकारश्चान्तादेश इति भावः । क्वचित्पुस्तके रमेर्भावे क्त्न इति पाठो दृश्यते । तस्मिन् पाठे 'अनुदात्तोपदेश वनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' (६।४।३७) इति सूत्रेण मकारलोपे रूपम् आतोमन्निति चकारेण विचोऽनुवर्तनादिति भावः ॥ १ ॥

अग्निः पूर्वेभिः । नू शब्द इति । नवशब्दादेशो नूशब्दः अद्यशब्दपर्याय इत्यर्थः । ततस्तन इति ॥ शब्दप्रकृतेर्नवशब्दात् तनप्रत्ययः 'नवस्य नू त्नप्तनखाश्च प्रत्यया वक्तव्याः' (वा. ५।४।२५

सू) इति वार्तिकेण भवतीत्यर्थः । नवशब्दात् तनप्रत्यये नवस्य नू इत्यादेशे नूतनमिति भवतीति भावः । अत्र 'नूशब्दोऽद्यपर्यायः । ततस्तन' इत्येव टीकावाक्यपाठः । नतु पुस्तकेषु परिदृश्यमानोऽपि ततःसायं चिरमिति ॥ (त्यादिना) तनः इति पाठः । अस्य सूत्रस्य टच्युल् प्रत्ययविधायकत्वेन तनप्रत्यय विधायकत्वाभावात् । न च ट्युल् प्रत्ययस्य जायमानमनाऽऽदेशं तुडागमं च विवक्षित्वा यथानिर्देश इति वाच्यम् । अव्ययेषु नूशब्दस्य पाठाभावेन अव्ययप्रकृतिकस्य टच्युप्रत्ययस्यायोगात् । न च 'ऋचितनुघमक्षुतङ्कुत्रोरुष्याणाम्' । (६।३।१३३) इति कृतदीर्घकस्य नुशब्दस्य निर्देश इति वाच्यम् । पदकाले ह्रस्वतया श्रूयमाणस्य संहितायां दीर्घत्वदर्शनेन तदुपादानार्थमेवास्य सूत्रस्य प्रवृत्तत्वेन सर्वदा दीर्घतया श्रूयमाणस्य अनेन सूत्रेण दीर्घत्वाभिधानायोगात् । ननु 'लृटः सद्वा' (३।३।१४) इति शत्रादेशे भाष्ये एष्यभिः इति भवितव्यम् । कथमेष्यैरिति प्रयोग इत्यत आह । लृटः सद्वेत्यत्रेति व्याख्यायत इति । प्रामाणिकैरिति शेषः । इण्धातोर्लृटि तस्याकारादेशे 'स्यतासी लृलुटोः' (३।१।३३) इति स्यप्रत्यये धातोः 'सार्वधातुकार्धधातुकयोः' (७।३।८४) इति गुणे आदेशप्रत्यययोः (८।३।५९) इति षत्वे एष्य शब्दः अकारान्तः सिद्ध्यतीति भावः । ऋष (ज्ञाने) इत्यस्मात् कि प्रत्यय इति । अर्थानुवादोऽयं 'इगुपधात् कित्' (उणादि ५५९) इति सूत्रेण इन् प्रत्ययो भवति स कित् चेति भावः । ऋषेरिन् प्रत्यये कित्वाद्गुणाभावे ऋषिरिति रूपसिद्धिरिति ज्ञेया । नकारस्य रुरिति । देवानिति नकारस्य रुत्वे 'आतोऽटि नित्यम्' (८।३।३) इति आकारस्य सानुनासिकाकारादेशे 'भोभगो-अघोअपूर्वस्य योऽशि' (८।३।१७) इति रोर्यत्वे 'लोपः शाकल्यस्य' (८।३।१९) इति यलोपे च देवाँ इति रूपसिद्धिः । आइत्युपसर्गस्य चेति । 'व्यवहिताश्च' (१।४।८२) इति सूत्रेण व्यवहितस्य आ इत्युपसर्गस्य व्यवहितेन वक्षतीत्याख्यातेन सम्बन्ध इत्यर्थः । वहतेर्लेडिति । वहेर्लेटि तस्य तिबादेशे 'लेटोऽऽडाटौ (३।४।९४) इत्यडागमे 'सिब्बहुलं लेटि' (३।१।३४) इति सिपि 'हो ढः' (८।२।३१) हकारस्य ढत्वे 'षढोः कःसि' (८।२।४१) इति ढकारस्य कत्वे 'आदेशप्रत्यययोः' (८।३।५९) इति सिपः षत्वे च वक्षतीति रूपम् ॥ २ ॥

अग्निना रयिम् । अश्नवदिति । अश्नोतेर्लेट् तस्य तिप् 'इतश्च लोपः परस्मैपदेषु' (३।४।९७) इति इकारलोपः 'लेटोऽडाटौ' (३।४।९४) इत्याडागमः 'स्वादिभ्यः श्नुः' (३।१।७३) इति श्नुः गुणावादेशौ । ततश्चाश्नवदिति रूपम् । ननु यशः शब्दात् 'स्वमोर्नपुंसकात्' (७।१।२३) इति अमो लुका भाव्यम् इत्यत आह । यशः शब्दादिति । अध्यात्मपक्षे अन्वयं दर्शयति । वीरवत्तमं यश इति । यशः शब्दस्य ज्ञानं सुखं चेति व्याख्यानम् ॥ ३ ॥

अग्ने यम्। यज्ञमिति पृथग्वचनादिति। यज्ञमिति विशेष्यवाचकशब्दसद्भावात् अध्वरमित्यस्य अध्वनि रतमित्यर्थो बोद्धव्य इति भावः। ञमन्ताड्ड (उणादि १११) इति ड इति। न च दण्डोवण्डोरण्डेत्यादौ डकारश्रवणात् अत्रापि तच्छ्रवणप्रसंग इति वाच्यम्। तत्र बाहुलकस्यैव लोपाभावस्याङ्गीकारात्। अत्र लोपस्य न्याय्यप्राप्तत्वात्। ततश्च अध्वन् शब्दे उपपदे रमेरौणादिको ड प्रत्ययः। प्रत्ययस्य च डित्वात् धातोष्टिलोपः अध्वन् शब्दनकारस्य 'नलोपः प्रातिपदिकान्तस्य' (८-२-७) इति लोपः सति चैवम् अध्वरम् इति रूपम्। ननु यज्ञस्य कर्मत्वाभावात् अस्तेरकर्मकत्वाच्च परेश्च (परि इत्युपसर्गस्य) कर्मप्रवचनीयसंज्ञाभावाच्च द्वितीयानुपपन्नेत्यत आह ॥ ततोऽन्यत्रापीति ॥

उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु। द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥

इति वार्तिकेण कर्मण्यपि द्वितीया भवतीति भावः। एवशब्दतात्पर्यमिति। इच्छब्दव्याख्यान-रूपभाष्यस्यैवशब्दतात्पर्यमित्यर्थः ॥ ४ ॥

अग्निर्होता। नन्वखिलप्रेरकत्वस्य विवक्षितत्वात् अखिलं यच्छतीति वक्तव्यम्। यमयतीति णिजन्तप्रयोगोऽनुपपन्न इत्यत आह। यमयतीति स्वार्थो णिजिति ॥ यमेर्णिचि शपि तिपि गुणे अयादेशे यमयतीति रूपमिति भावः। लुङ्लेड्वेति। गमेः लुङि तिबादेशे इकारलोपे च्लिप्रत्यये 'पुषादिद्युताद्युलृदितः परस्मैपदेषु' (३-१-५५) इति च्लेरङादेशे छान्दसत्वादडभावे गमत् इति रूपम्। अथवा 'गमेर्लेटि' लेटोऽडाटौ (३।४।९४) इत्यडागमे गमत् इति रूपमिति भावः ॥ ५-१ ॥

## प्रथमसूक्ते द्वितीयो वर्गः

यदङ्ग। पूर्वपदस्येति ॥ अङ्गशब्दान्त्याकारस्य इकारो रसशब्दान्तलोपश्चेति भावः। निपातनादिति ॥ दाशुष इति साधुरिति शेषः। एतेन अन्वयाभावात् निपातनादिति पञ्चमीप्रयोगोऽनुपपन्न इति परास्तम्। 'सनर्थे लृट्' इति कृञः सनर्थे लृटि तस्य 'स्यतासी लृलुटोः' (३-१-३३) इति स्यप्रत्यये 'ऋद्धनोस्ये' (७।२।७०) इति इडागमे धातोश्च गुणे करिष्यसि इति रूपम् ॥ १ ॥

उपत्वा। भाष्ये नमसमिति पदभ्रमं निवारयन् अकारान्तशब्दार्थमाह ॥ नमनं नम इति। अत्र नमननमः शब्दयोः लेखकदोषात् पौर्वापर्यम्। नमो नमनम् इत्येवं टीकावाक्यपाठः। व्याख्येयपदमुपादाय व्याख्यानस्य कर्तव्यत्वात्। नमेरसुन् प्रत्यये नम इति वास्तवं रूपम्। औणादिके अकारप्रत्यये नम इत्यकारान्तं भाष्ये रूपं सिद्धं भवति इति ज्ञेयम्। ननु इणो मस्

प्रत्यये शपि तस्य 'अदिप्रभृतिभ्यः शपः' (२-४-७२) इति लुकि मसः सकारस्य विसर्गे उपेम इति रूपं भवेत्। कथं उपेमसीति इकार इत्यत आह। इदं तोमसीति इदिति (७।१।४६) 'इदंतोमसि' छन्दसि विषये मसि मस् शब्दे इत् इकारो भवति। सच अन्तः अन्तावयव आगमः स्तुतित्वसिद्ध्यर्थमिति। ईश्वरमुच्चगुणम् इत्यपि शेषो वक्तव्यो भवतीत्येव टीकावाक्यपाठः न तु ईश्वरत्वादुच्चगुणमित्यपि शेषो वक्तव्यो भवतीति टीकावाक्यपाठः। शेषोक्तिसमये भाष्य ईश्वरत्वादिति पञ्चम्यन्तपदाभावात्॥ २॥

राजन्तम्। औणादिको झ इति। राजन्तमित्यस्य शत्रन्तत्वे दीप्यमानत्वार्थकत्वप्राप्त्या दीदिवमित्यनेन पौनरुक्त्यं स्यादिति झप्रत्ययो व्याख्यातः। ततश्चौणादिकानामव्युत्पन्नत्वादवय-वार्थानामनुगत्यभावेन राजन्त शब्द ईशत्वार्थको भवतीति भावः। दीव्यतेरिति। दीव्यतेर्यङि 'सन्यङोः' (६।१।९) इति द्वित्वे इकारप्रत्यये 'यङोऽचि च (८।२।४१) इति यङो लुकि अभ्यासस्य 'दीर्घोऽकितः' (७।४।८३) दीर्घत्वे दीदिवि इति रूपमिति भावः। शानजिति। वृद्धेर्लट् तस्य शानजादेशः। शप्। 'आनेमुक्' (७।२।८२) इति मुक्। गुणः। ततश्च वर्धमानमिति रूपमिति द्रष्टव्यम्। इगुपधलक्षणः क इति 'इगुपधज्ञाप्रीकिरः कः' (३।१।१३५) इति सूत्रेण क प्रत्ययः। ततश्चाकारान्तो वृद्धशब्द इति भावः। धकारान्तो वृध्शब्द इत्यभिप्रेत्याह। क्विब्वेति॥ ३॥

सनःपितेव। सूनोरिति भाव्यम् सूनव इति चतुर्थी प्रयोगः कथमित्यत आह। छन्दसीति। वक्तव्यत्येतः परमिति वचनात् (दिति) षष्ठ्यर्थे चतुर्थीति ग्राह्यम्। 'एतेन वक्तव्येत्येतदनन्वितमिति परास्तम्। ननु स्वस्तीत्यस्य अव्ययत्वात् स्वस्तय इति कथमयं प्रयोग इत्यत आह। विभक्तीति॥ ४, २॥

## उपोद्घातः

उत्पत्यनन्तरमेवेति। सत्तयेति शेषः। एतेन परमात्मनः अतीतानागतदर्शित्वादुत्पत्त्यनन्तरमेव दर्शनमित्य युक्तम् इति परास्तम्। उत्पत्तेः पूर्व एष्यत्वेन दर्शनसद्भावेऽपि वर्तमानतया दर्शनाभावात्। तत्स्त्रिय इति। अत्र तत्स्त्रियो मन्वादिस्त्रिय इति प्रक्षिप्तम् तत्स्त्रीमनुस्त्रीति उच्छिन्नं सूर्यसोमधर्ममनुस्त्रीणां चतुर्णामेव समत्वेन दक्षादिस्त्रीणां सूर्याद्यवरत्वेन तत्स्त्रीशब्देन ग्रहणायोगात्। आदिपदगृहीतानां प्रसूत्यादिस्त्रीणां तदवरत्वम्। इति वाक्यं टीकावाक्यमिति मन्यमानस्य तद्विरोधाच्च। नहि टीकाकारः स्वयमेव तत्स्त्रीशब्देन प्रसूत्यादिसंग्रहं कृत्वा प्रसूत्यादीनां सूर्यादिसाम्य शङ्कापरिहाराय आदि पदगृहीतानां प्रसूत्यादि स्त्रीणां तदवरत्वमिति

वदतीति सम्भवतीति। एवं तर्हि 'धर्मादि' (ऋग्भाष्ये) इत्यादिपदस्य कोऽर्थ इति चेत्। उच्यते। यमाद्यवतारभूतविदुरादयः आदिपदार्थाः। ततश्चैवं विग्रहः। धर्म आदिर्येषां धर्मादयः। तस्य स्त्री तत्स्त्री। सूर्यश्च सोमश्च धर्मादयश्च तत्स्त्री च सूर्यसोमधर्मादितत्स्त्रियः इति। ननु ये भिन्नपदेनोपात्ताः तेषां तारतम्यं ज्ञातुं शक्यते कस्यचित् पूर्वग्रहणं कृत्वाऽपरस्य पश्चाद्ग्रहणस्य उत्तमाधमभावनिबन्धनत्वात्। ये द्वन्द्वनिर्दिष्टाः तेषां तारतम्यं कथं ज्ञेयं समूहालम्बनज्ञानेनेव द्वन्द्वप्रातिपादिकेनापि युगपदेव सर्वार्थविषयीकरणात् इत्यत आह अत्र प्रायो द्वन्द्वगृहीतानामिति। 'प्रधानमरुतो वारिपतिरग्निश्च मरुत' इत्यत्र मरुच्छब्देन विवक्षिता इत्यत आह प्रधानमरुत्स्विति प्रधानमरुत्सु विद्यमानो यः प्रवहवायुः स एक एव सूर्यादिभ्यः पूर्वं विज्ञेयः। तदन्ये अत्र विवक्षिता इति भावः। इतः परं टीकायां श्रूयमाणं सूर्यसोमधर्मादि तत्स्त्रिय इत्यत्र सूर्यसोमधर्माणां मनुपत्न्याश्च साम्यं आदिपदगृहीतानां प्रसूत्यादिस्त्रीणां तदवरत्वम् इति वाक्यद्वयं प्रक्षिप्तम्। न टीकावाक्यम्। अवश्यं चैतदेवं विज्ञेयम्। आदिपदेन प्रसूत्यादिस्त्रीणामगृहीतत्वात् सङ्करप्रसक्त्यभावेनविवेककथन वैय्यर्थ्यात्। ननु प्रधानमरुद्भ्यः वारिपतिरुत्तमः स कथं तदनन्तरं पठित इत्यत आह वारिपतिरिति। उपलक्षणमेतत्। अग्निरपि प्रधानमरुद्भ्यः पूर्वं ग्राह्य इति द्रष्टव्यम्। ततश्चायं क्रमः। आदौ सूर्यसोमधर्ममनुपत्न्यः ततो वारिपतिः ततोऽग्निः ततः प्रवह व्यतिरिक्ताः प्रधान मरुतः तदनन्तरं मारुता इति॥

न किरिन्द्र इति 'न किरिन्द्र त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन्नि'त्यस्यायमर्थः। हे इन्द्र त्वदुत्तरः त्वदुत्तमः न किः। नैवास्ति। हे वृत्रहन् त्वत्तः ज्यायान् प्रशस्तः नास्ति इति। माकिर्नेशदिति॥ 'माकिर्नेशन्माकीं रिषन् माकीं संशारि केवटे। अथारिष्टाभिरागही'ति। अस्यार्थः। हे पूषन् भवान् भक्तहृदयात् मा किः नैव नेशत् अगच्छत्। नेशगताविति धातुव्याख्यानात्। भक्तहृदयं परित्यज्य नैवान्यत्र गन्तेति यावत्। यथा भक्तान् माकीं नैव, रिषत् हिंसितवान् तथा स्वयं केनापि शत्रुणा केवटे कूपे, कूपनामसु पाठात्। उपलक्षणमेतत्। कुत्रापि स्थाने माकीं नैव संशारि मारितः। सर्वथा अवध्य इति यावत्। अथ तस्मात् त्वम् अरिष्टाभिः अरिष्टं सूतिकागृहमिति वचनात् सूतिकागृहं यासां ताभिः सह स्त्रीभिः सह इति यावत्। आगहि अगच्छेति। स्मसि स्थातरिति। त्वावतः पुरूवसो वयमिन्द्र प्रणेतः। स्मसि स्थातर्हरीणामिति (ऋग्वेदे)। अस्यार्थः हे पुरूवसो पुरु उत्कृष्टं धनं यस्य तस्य सम्बोधनम्, हे प्रणेतः, जगत्प्रवर्तक हरीणाम् अश्वानां स्थातः स्थापक इन्द्र वयं त्वावतः त्वद्वन्तः त्वत्स्वामिकाः स्मसि स्मः।

चिन्तनादिक्रियाणां च मुक्तावुछेदतः सदा।<br>
किं मया कार्यमादीनां भेदाभेद उदाहृतः॥ (बृहदारण्यक भाष्यम्)

इति प्रमाणानुसारेणाह। चिन्तनादिभिरिति। अत्र चिन्तनादिशब्देन तज्जन्यनीचत्वादयो धर्मा गृह्यन्ते। प्रमाणे चिन्तनादिशब्देन तत्कार्यनीचत्वादीनां ग्रहणात्। रूढलक्षणेयमिति ज्ञेयम्। एतेन-चिन्तनादिधर्माणां मनोधर्मत्वात् आत्मना तेषां भेदाभेदकथनम् अयुक्तम् इति परास्तम्।

मनुष्यगन्धर्वपितृगणकार्मिकतात्त्विकाः। देवाःशक्र(ऋग्भाष्ये) इत्यत्र देवा इति पदम् एकपदोपात्तमनुष्यादीन्विहाय कार्मिकतात्त्विकयोरेव कथं विशेष्यम् इत्यत आह। देवा इत्येतदिति ॥ 'यः पश्यति स्वयं वाक्यम्' इत्यादिनोक्तमर्थं विस्मृत्य स्थितस्य शङ्कानिरासकत्वेन 'एवं स्थित' इति मूलमवतारयति। तत्किमग्न्यादि देवता इति। एतेन-मधुच्छब्दादीनां ततोप्यधमानाम् ऋषित्वस्य पूर्वमुक्तत्वेन शङ्कानुदय इति परास्तम्॥ इति ऋषिच्छन्दोदेवतास्वरार्थादिनिर्णयः

## द्वितीयसूक्ते प्रथमोवर्गः

वायवायाहि। आद्यस्तृच इति। तिसृणाम् ऋचां समाहारस्तृचः। सुपो धातुप्रातिपदिकयोः (२।४।७१) इति सुपो लुकि कृते सुब्निमित्तकस्य तिसृ इत्यादेशस्याप्यगमे त्रिऋच इति स्थितं भवति। 'ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि' (सू ६।१।३४) इति वार्तिकेण त्रेः सम्प्रसारणम् उत्तरपदादि ऋकारस्य लोपश्च भवति। अस्य वार्तिकस्य ऋच्शब्दे परतः त्रिशब्दस्य सम्प्रसारणं भवति उत्तरपदादेर्लोपो भवतीत्यर्थाभिधायकत्वात्। तथा 'ऋक्पूरब्धूःपथामानक्षे' (५।४।७४) इति समासान्ते अप् प्रत्यये सति 'संप्रसारणाच्च' (६।१।१०८) इति त्रिशब्देकारस्य पूर्वरूपत्वे सति च तृच सत्यकारान्तः शब्दः सिद्धो भवति। वायव्य इति। वायुशब्दात् वायुर्देवतास्येत्यस्मिन्नर्थे 'वाय्वृतुपित्रुषसोयत्' (४।३।३१) इति यत्प्रत्यये 'ओर्गुणः' (६।४।१४६) इति गुणे 'वान्तो यि प्रत्यये' (६।१।७९) इति अवादेशे वायव्य इति रूपं सिद्धं भवति। वशब्दो बलवाचीति। 'नपुंसके बले बः स्यादि' त्यभिधानात् बशब्दो बलवाची। वबयोरभेदात् वशब्दोऽपि बलवाचीति भावः। अयतेरिणोवेति अयतेर्बाहुलिके उणि कृते 'अत उपधायाः' (७।२।११६) इति उपधाया वृद्धौ आयुः इति रूपम्। तथा इणः 'छन्दीणः' (उणादि २) इति उणि कृते वृद्धावयादेशे आयुरिति रूपं सिद्ध्यतीति भावः। 'वात्यायु' रिति भाष्यं योजयति। वाति गच्छतीति। कथमीश्वर आयुरित्यत आह। लोकस्येति। अत्र टीकायां 'वातेः क प्रत्यय इत्यन्तरम् इणः छन्दसीति इणः उण्' इति वाक्यं प्रक्षिप्तं न टीकावाक्यम्। आयुशब्दात् ददाति इत्यस्मिन्नर्थे तद्धितो डुप्रत्यय इत्युच्छिन्नम्। ततश्चैवं टीकावाक्यपाठः। वातेः क प्रत्ययः आयुः शब्दात् ददातीत्यस्मिन्नर्थे तद्धितोडुप्रत्यय इति। अवश्यं चैतदेवं विज्ञेयम्। वात्यायुरिति भाष्ये वायुशब्दनिष्पत्यर्थम्, आयुः प्रदत्वार्थकायुः शब्दान्तर्गतत्वेनायुः शब्दस्यो-पात्तत्त्वेन टीकायामपि लोकस्य प्राणधारण हेतुत्वादित्यनेन आयुः शब्दप्रवृत्तिनिमित्तस्योक्तत्वेन

इण् धातुं गृहीत्वा रूपसिद्धिकथनायोगात् । छन्दसीण (उणादि २) इति सूत्रपाठं विहाय इणश्छन्दसि इति अन्यथा पाठाच्च । वातेर्गत्यर्थत्त्वेति । भाष्यकारीयं ज्ञानात् इति वातेर्व्याख्यानं उपपन्नमिति शेषः । कृवापाजीति । (उणादि १) अनेन वातेरुण् 'आतो युक् चिण् कृतोः' (७।३।३३) इति युगागमः । एवं च वायुरिति रूपं सिद्धं भवतीत्युक्तं भवति ।

वृणोतेरिति । वृणोतेर्डायुप्रत्ययः डित्वाट्टिलोपः ततश्च वायुरिति रूपम् । वातेरधिकरण इति । वातेरुण् प्रत्यये 'आतो युक् चिण् कृतोः' (७।३।३३) इति युगागमे च सति वायुरिति रूपं सिद्धमिति भावः । 'वयबन्धन इति' भाष्यस्यानन्वितत्वात् भाष्यमनूद्य शेषमाह वयबन्धन इत्यस्मादिति । वयबन्धन इत्यस्मादिति भाष्यानुवादः । धातोः कर्तर्युणि कृते बन्धकत्वाच्च वायुर्भवतीति शेषोक्तिः । उपसर्गेकारस्येति । तृतीयोतिशये (महाव्याकरणे) इति वचनात् इकारस्याकार इत्यर्थः । वेत्यस्मिन्निति । भाष्याभिप्रेतरूपसिद्धिमाह । विपूर्वादिति । विपूर्वादिणः 'छन्दसीणः' (उणादि २) इति उण् इत्यर्थः । वय श्रेष्ठत्व इति भाष्यस्यापूर्णत्वात् भाष्यमनूद्य शेषमाह । वयः श्रेष्ठत्व इतीति । 'वयः श्रेष्ठत्व' इति भाष्यानुवादः । धातोरुणि कृते श्रेष्ठत्वात् (अपि) वायुरिति शेषोक्तिः । अपि शब्दस्तु भाष्यस्थ एव, अन्वयप्रदर्शनाय शेषेण सहोक्त इति द्रष्टव्यम् । श्रेष्ठत्ववाचित्वात् अक्रियावाचिनो वयतेः कथं धातुत्वमित्यत आह । श्रेष्ठत्वं नामेति । धातुव्याख्याने लक्षणायाः क्वाप्यदृष्टत्वात् कथमत्र लक्षणेत्यत आह ।। गडि वदनैकदेश इतीति । वदनैकदेश इत्यस्य यथा क्रियालक्षणत्वं तथाऽत्रापीति भावः । ये धर्माः अन्यत्र निषिद्धाः अन्यत्र तज्ज्ञानमनर्थहेतुरिति ये उक्ताः त एवान्यत्र न प्रतिपत्तव्याः । उक्तप्रकारेण अनिषिद्धास्तु यथायोगम् अन्यत्र प्रतिपत्तव्या इति मूलार्थं मनसि निधाय भगवद्धर्माणाम् अन्यविज्ञान-निषेधकवाक्यं स्फोरयितुं भाष्यस्थपदमनूद्य स्फोरकमाह । अनिषिद्धा इति । अनिषिद्धा इति भाष्यानुवादः । ये भगवतो लक्षणभूता न भवन्ति इति तु 'हरेर्गुणाः सुरा प्रोक्ताः ते मे स्युरिति चिन्तनम् । सुरापानमिति प्रोक्तम् ....' इति वचनस्य स्फोरकमिति विवेकः । ये लक्ष्मीपतित्वादयः नान्यत्र प्रतिपत्तुं योग्यास्तेऽन्यत्र न सन्त्येव बलत्वादयनाच्चैवेत्यादिना उक्तास्तु अन्यत्रापि तारतम्येन सन्तीति भावः । ननु भाष्ये दृष्टिततत्वात् इति वक्तव्यम् । कथं ततदृष्टित्वात् इत्युक्तिरित्यत आह । दर्शत इत्यस्य तात्पर्यमिति प्रयोजकत्वादिति । वेदो हि प्राणिनां फलप्राप्तये प्रवृत्तः । अतः यादृशार्थविज्ञाने अधिकारिणां फलं भवति स एव वेदार्थ इत्यर्थः । गुणाधिक्यविरोधिन इति । गुणाधिक्यविरोधिनः वेदार्थता नास्ति । तद्विज्ञानेन फलाभावा-दित्यर्थः । नहि स्वार्थज्ञानद्वारा प्राणिनां फलप्राप्तये प्रवृत्तो वेदः फलसाधनमर्थं न प्रतिपादयति इति भावः । वेदमात्रे अयमस्यार्थ इति विशेषः कथं प्रतिपत्तव्य इति पृच्छति । फलवत्त्वेपीति ।

वेदस्य प्राणिनां फलार्थं प्रवृत्तत्वेऽपि अयमेवार्थः कुतः अर्थान्तरप्रतिपादनेऽपि फलवत्त्वसम्भवात् नियामकाभावादिति भावः । यत्र यस्यार्थस्यानुकूला इति । इतः परं टीकायां श्रूयमाणम् उपक्रमादयः खल्वर्थस्य निश्चायकाः तत्र च फलं सर्वाधिकम् । इति वाक्यद्वयं प्रक्षिप्तम् । न टीकावाक्यम् । अवश्यं चैतदेवं विज्ञेयम् । वाक्यार्थनिर्णायकमात्रस्य पृष्टत्वेन तदुत्तरस्य 'उपक्रमादयो यत्र तात्पर्यार्थः स एव हि' इति भाष्येणैव जातत्वेन उपक्रमादयः खल्वर्थस्य निश्चायकाः तत्र च फलं सर्वाधिकम् इत्युक्तिप्रयोजनाभावात् । ननु तान्पाहीति विभक्तिव्यत्ययः कुत इति शङ्कानिवारणाय 'गुणाधिक्यं येन भवेद्वेदस्यार्थः स एवहि । प्रयोजकत्वान्नान्यस्य फलाभावस्तदर्थता' इत्यनेन येन फलं भवेत् स एव वेदार्थ इत्युक्तौ अस्तु फलं 'तेषां पाहि' इत्यस्य तान्पाहीति व्याख्यानं कुतः अन्यदेव व्याख्यानं किं न स्यात् इति शङ्का प्राप्नोति । तन्निवारणाय मूलकृता 'उपक्रमादयो यत्र तात्पर्यार्थः स एव हि' इत्युक्तम् । न च तान् पाहीति व्याख्यानं कर्तव्यमित्यत्रोपक्रमादयो नियामकाः सन्ति । ततश्च भाष्यमयुक्तमिति शङ्कानिवारणाय टीकाकृता 'उपक्रमादयः खल्वर्थस्य निश्चायकाः तत्र च फलं सर्वाधिकम्' इति फलमेव तान् पाहीति व्याख्यानस्य ग्राह्यत्वे नियामकमुक्तमिति प्रतिपादितमित्युक्तमिति चेन्न । उपक्रमाद्यन्तर्गतस्य फलस्य फलप्रतिपादकवाक्यरूपत्वे नात्रोक्त फलरूपत्वाभावात् । भावेऽनुपसर्गस्य इति । सूत्रस्यायमर्थः । अनुपसर्गस्य ह्वयतेः भावे अप् प्रत्ययः सम्प्रसारणं चेति । ततश्च ह्वेञ् इत्यतः अप् प्रत्यये (य) ह्वयतेः सम्प्रसारणे 'सम्प्रसारणाच्च' (६।१।१०६) इति पूर्वरूपे हु अप् इति स्थितं भवति । ततो गुणे अवादेशे हवमिति रूपम् । शृशृणुपृकृवृभ्यश्छन्दसीति श्रुशृणुपृकृवृ इत्येतेभ्यः छन्दसिविषये हेर्धिरादेशो भवतीति सूत्रार्थः ॥ १ ॥

वायउक्थेभिः । स्तुतिकर्मस्विति । स्तुत्यर्थकेषु गृणाति जरते ह्वयते इति पाठादित्यर्थः ॥ २ ॥

वायो तव । उरुशब्दात् 'वोतो गुणवचनात्' (४।१।४४) इति ङीषि उर्वीतिभाव्यं तदभावपक्षे उरुरिति भाव्यम् एवमपि यत् ऊरू इति दीर्घस्य ची इति चकारस्य यदाधिक्यं तेन लब्धमर्थमाह । अतिमहतीति । आतोनुपसर्गे क इति । पा पान इत्यस्मादनेन सूत्रेण कप्रत्यये 'आतो लोप इटि च' (६।४।६४) इत्याकारलोपे सोमप इत्यकारान्तं रूपं भवति । दाशृधातोर्लिटि तस्य क्वस्वादेशे द्विर्वचने वसोः सम्प्रसारणम्' (६।४।१३१) इति सम्प्रसारणे ददाशुष इति भवितव्यम् । दाशुष इति कथं साधुरित्यत आह । निपातनादिति । 'दाश्वान्साह्वान्मीढ्वांश्च' (६।१।१२) इति सूत्रेण दाश्वानिति निपातनात्साधुरित्यर्थः । जिगातीति । स्युत्यर्थकात् गाधातोर्लटि शपि तस्य श्लौ (६।१।१०) इति द्विर्वचने 'भृञामित्' (७।४।७६) इत्यधिकृत्य उक्तेन 'बहुलं छन्दसि' (७।४।७८) इति सूत्रेण अभ्यासस्येत्वे जिगाति इति रूपं भवति । उरुं अश्नतीति । उरुशब्दे

उपपदे अञ्च् धातोः 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च' (६।२।५९) इति सूत्रेण क्विन् प्रत्यये नकारलोपे उगितश्च इति ङीपि भसंज्ञायां 'अचः' (६।४।१३८) इति सूत्रेण अकारलोपे 'चौ' (६।३।१३८) इति सूत्रेण उकारस्य दीर्घत्वे उरूचीति रूपमिति भावः ॥ ३ ॥

द्वितीयस्तृच इति । तृचः । तिसृणाम् ऋचां समाहारः । ऐन्द्रवायवः । इन्द्रवायुदेवताकः । इन्द्रवायुशब्दात् अस्य देवतेत्यर्थे अण् आदिवृद्धावैन्द्रवायव इति रूपम् ।

इन्द्रवायू । औणादिको रप्रत्यय इति । 'ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्र भेरीभेलशुक्र शुक्लगौरवभ्रेरामालाः' (उणादि १९६) इति सूत्रेण ऋज्रेन्द्रादीशब्दानां रन् प्रत्ययान्तानां निपातनात् औणादिको रन् प्रत्यय इति भावः । पूर्ववदिति । इदंशब्दोपदात् दृशेर्ड इत्यर्थः । दृशेः द्रुधातुना इदं शब्दोपपदत्वेन साम्यमिति भावः । रप्रत्यय इति । रन् प्रत्यय इत्यर्थः । रातेः क इति । इदं शब्दोपपदात् रातेः क आकारलोपः इदं शब्दस्येन्दादेशश्च । ततश्चेन्द्र इति रूपमिति भावः । मनोवृत्तय इति । मनोवृत्त्यभिमानिदेवता इत्यर्थः । ननु ऋचि कथं प्रयोभिः इति प्रयोग इत्यत आह । ईयसुन इति । यद्यपि प्रियशब्दादीयसुन् प्रत्यये 'प्रियस्थिर.....' (६-४-१५७) इति सूत्रेण प्रियशब्दस्य प्रे इत्यादेशे गुणे च प्रेयोभिरिति भाव्यम् तथापि ईयसुन इकारस्य अकारादेशे प्रशब्दाकारस्यापि लोपे प्रयोभिरिति छान्दसं रूपमिति भावः । ननु गमेर्लोटि तस्य थस् आदेशे तस्य 'तस्थस्थमिपां तान्तन्तामः' (३।४।१०१) इति सूत्रेण तमादेशे शपि 'इषुगमियमां छः' (७।३।७७) इति मकारस्य छत्वे गच्छतमिति भाव्यं कथं गतमिति प्रयोग इत्यत आह । छान्दस इति । उपलक्षणमेतत् । शपो लुक् चेत्यपि द्रष्टव्यम् । ननु परमेश्वर इति । द्विवचनस्य वस्त्वन्तरसहिते प्रयोगनियमात् कथं केवले परमेश्वरे द्विवचनप्रयोग इत्यत आह । द्विरूपत्वादितीति । भिन्नवस्तुसाहित्यं विनापि भगवतो द्विरूपत्वात् द्वयोः रूपमिव रूपं यस्यासौ द्विरूपः । तस्य भावः द्विरूपत्वं तस्मात् घटपटयोरिव द्वित्वसंख्यावच्छिन्नत्वात् द्विवचनमिति भावः । एतेन रूपद्वयत्वेऽपि न द्विवचनमुपपन्नं भवति । द्विवचनवाच्यसंख्याया अलाभात् । अन्यथा बहुधर्मवत्वात् घटोऽपि बहुवचनविषयः स्यादिति निरस्तम् । द्वित्वसंख्याया भगवत्युक्तत्वात् । नन्वेकस्यैव हरेरिति । केवलस्य हरेः घटपटयोरिव कथं द्वित्वम् । येन सह यस्य द्वित्वं तयोर्भेद इति नियमात् स्वस्य च स्वस्माद्भेदाभावादिति भावः । काठके तं दुर्दर्शमित्यादिनेति । अत्र काठके तं दुर्दर्शमित्यादिना परमेश्वरस्यानेकान् धर्मानुक्त्वा इत्यतः परं टीकायां श्रूयमाणं 'एकमेवाद्वितीयम्' इति वाक्यं प्रक्षिप्तम् । 'नेह नानास्ति किंचन' इति वाक्यमुच्छिन्नम् । अवश्यं चैतदेवं विज्ञेयम् । काठके एकमेवाद्वितीयमिति वाक्याश्रवणात् । नेह नानास्ति किंचनेति वाक्यस्य श्रवणात् । ततश्चैवं टीकावाक्यपाठः । काठके तं दुर्दर्शमित्यादिना परमेश्वरस्यानेकान् धर्मान् उक्त्वा नेह नानास्ति किंचनेत्येवं पुनः पृथक्त्वस्य निषेधात् ॥ ४ ॥

वायविन्द्रश्च चेतथः । वाजमन्नमिति वाजशब्दे उपपदे नयतेः 'सत्सूद्विष...' (३।२।६१) इत्यादिना क्विपि वाजिनीरिति भवति । ततो वसतेरुकारप्रत्यये वाजिनीवसुरिति उकारान्तरूपं भवतीति भावः । ननु विपूर्वकात् ज्ञा धातोः लटि तस्य थसादेशे कृते 'कन्यादिभ्यश्चा' (३।१।८१) इति श्नप्रत्यये ईहल्यघोः (६।४।११३) इति इकारे 'ज्ञाजनोर्जा' (७।३।७९) इति जादेशे विजानीथ इति भवितव्यम् । विजानत इति रूपं कथमित्यत आह । द्विविकरणतेति । श्नाविकरणत्वं शब्विकरणत्वं चेत्यर्थः । विपूर्वकात् ज्ञाधातोः श्नाप्रत्यये छान्दसतौ दादिकशप्रत्यये 'श्नाभ्यस्तयोरातः' (६।४।११२) इत्याकारलोपे 'ज्ञाजनोर्जा' (७।३।७९) इति ज्ञाधातोर्जा इत्यादेशे थसस्थकारस्य तकारे विजानत इति रूपं भवतीति भावः । विजानत इति भाष्यस्थं पदं षष्ठ्यैकवचनमित्यभिप्रेत्याह । यद्वेति । चेतथ इति । अत्र तकारस्य थकारः छान्दस इति भावः ॥ ५, ३ ॥

## द्वितीयसूक्ते द्वितीयोवर्गः

वायविन्द्रश्च सुन्वतः । नपूर्वादिति । निषेधार्थकनशब्द पूर्वकत्वेन नञ्पूर्वकत्वाभावात् 'नलोपो नञः' (६।३।७३) इति नलोपाभाव इति भावः । रीङ् क्षय इति । नपूर्वात् रीङो डः तथा नपूर्वात् रिषेर्ड इति भावः । तृतीयस्तृच इति । तृतीयस्तिसृणां ऋचां समुदायः । मैत्रावरुणः । मित्रावरुणदेवताकः । मित्रश्च वरुणश्चेति विग्रहे 'देवता द्वन्द्वे च' (६।३।२९) इति सूत्रेण पूर्वपदस्याऽऽनङादेशे मित्रावरुणाविति स्थिते 'सास्य देवता' (४।२।२४) इत्यणि कृते मैत्रावरुण इति रूपम् ॥ ६ ॥

मित्रं हुवे । ननु त्रैङ् पालन इत्यस्यात्मानेपदित्वात् त्रायत इति भवितव्यम् । कथं त्रातीति भाष्ये प्रयोग इत्यत आह । प्रकृत्यन्तरस्येति । त्रा रक्षण इत्यस्येदं रूपमिति भावः । मा त्रा इत्येताभ्यामिति । माङ् माने त्रैङ् पालने इत्येताभ्यां कप्रत्ययः 'आदेच उपदेशेऽशिति' (६।१।४५) इति ऐकारस्य आत्वं ततो 'आतो लोप इटि च' (६।४।६४) इत्याकारलोपः । माङः आकारस्य इकारः । ततश्च मित्र इति रूपं सिद्धम् । मितशब्दोपपदादिति । मितशब्दोप-पदात् करोत्यर्थकात् रातेः कप्रत्यय उपपदान्त्यलोपश्चेत्यर्थः । कस्येत्संज्ञायामकारमात्रमवशिष्टं भवतीत्यभिप्रायेणाकार इत्युक्तमिति बोध्यम् । ञमन्ताड्ड (उणादि १११) इतीति । अत्र डकारस्येत्संज्ञा न्यायप्राप्ता रण्डावण्डेत्यादि रूपसिद्धिस्तु औणादिकप्रत्ययानां बाहुलिकत्वात् डकारस्येत्संज्ञाभावे भवतीति ज्ञेयम् । वृणोतेरुनदिति । गुणे कृते णत्वे च वरुणमिति रूपमिति भावः । वरशब्दोपपदादिति । वर उत् नी इति स्थिते ड प्रत्ययः वरशब्दान्तस्य उत् शब्दान्तस्य च

लोप इति भावः । ह्वयतेरिति ह्वयतेरात्मनेपदस्य इडादेशे 'बहुलं छन्दसी'ति (६।१।३४) सम्प्रसारणे 'सम्प्रसारणाच्च' (६।१।१०८) इति पूर्वरूपे शपो लुकि । 'टित आत्मनेपदानां टेरे' (३।४।९७) इति इटो एत्वे उवङादेशे च हुवे इति रूपं सिद्धं भवतीति भावः । यथार्थत्वमिति । बुद्ध्या विवेकेनेति शेषः ॥ ७ ॥

ऋतेन । तस्मात् ऋतावृध इति यस्मात् नित्यवृद्धः यस्मात् ऋतावृधशब्दार्थ इत्यर्थः । इतः टीकायां श्रूयमाणं ऋतमनुगतं सर्वकाल इति च प्रक्षिप्तम् । न टीकावाक्यम् । तस्मात् ऋतावृधः ऋतशब्दो नित्यपर्यायः इति टीकावाक्यपाठः । अवश्यं चैतदेवं विज्ञेयम् ऋतं अनुगतं सर्वकाल इति योगाश्रयणे सर्वकालवर्तिनो वस्तुविशेषस्य ऋतशब्दाल्लाभेऽपि सर्वकालस्यालाभात् । प्रकृते च ऋतशब्दार्थतया सर्वकालस्य वक्तव्यत्वात् । ऋतशब्दो नित्यपर्याय इति । कालवाचकनित्यशब्दपर्याय इत्यर्थः । यथार्थत्वादिति । यद्यपि यथार्थ्यं प्रमाणत्रितयानुगतं तथाप्यसाधारण्येन व्यपदेशा भवन्तीति न्यायेन ऋतशब्देन वेद उच्यत इति भावः । ननु क्रतुमित्यत्र 'अधीगर्थदयेशां कर्मणि' (२।३।५२) इति वचनात् षष्ठ्या भाव्यमित्यत आह । छन्दस्त्वादिति ॥ ८ ॥

कवीनः । अत्र दक्षमितीति । भाष्यस्थं दक्षमिति पदं दक्षं प्रति अपसं कर्तारं दक्षं दधात इति पूर्वोत्तरयोः संयोज्यमित्यर्थः । द्वादशर्चं सूक्तमिति । द्वादशानाम् ऋचां समाहारः द्वादशर्चम् । आश्विन इति । अश्विदेवताक इत्यर्थः । अश्विन् शब्दात् अस्य देवतेत्यर्थ अणि कृते आश्विन इति रूपम् । एवं उत्तरत्रापि द्रष्टव्यम् ॥९।४।२॥

## तृतीयसूक्ते प्रथमोवर्गः

अश्विना यज्वरीः । शुभाधिपाविति भाष्यस्थपदस्य व्याख्येयं पदद्वयमिति भावेन पदद्वयं संहितारूपेणानुवदति । शुभस्पती इति । शुभः पती इति स्थिते षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु, (८।३।५३) इति सूत्रेण भकारान्तशुभ्शब्दोत्तर षष्ठीविसर्गस्य सकारादेशे शुभस्पतीति संहितासिद्धिः । शुभधातोः क्विपि शुभ् इति शब्दस्य भकारान्तत्वमिति बोध्यम् । इतः परं टीकायां श्रूयमाणं पारस्करादित्वात्सुडिति वाक्यं प्रक्षिप्तम् । न टीकावाक्यम् । अस्य सूत्रस्य संज्ञायां ससुट्कशब्द निपातविधायकत्वेनानेनात्र सुडभिधानायोगाच्च । अत एव क्वचित्कोशे इदं वाक्यं न दृश्यते । यजतेरिति । यजेर्बाहुलिकः ङ्वरच् । टकारस्य लोपः । टित्त्वात् ङीबिति भावः । चनस्यतमिति । अनेकार्थत्वाद् धातूनां योगार्थायाश्चायतेः (चायृधातोः) बाहुलिकत्वात् असुन् प्रत्यये तस्य नुडागमे 'लोपो व्योर्वलि' (६।१।७६) इति यकारलोपे धातोर्ह्रस्वत्वे च सति चनस इति रूपम् । ततः स्वार्थे क्यचि 'सनाद्यन्ता धातवः' (३।१।३२)

इति धातुसंज्ञायां ततो लोट् मध्यमपुरुषद्विवचने चनस्यतमिति रूपमिति बोध्यम् । एतेन 'चायतेरन्ने ह्रस्वश्च' (उणादि ६४९) इति सूत्रेणान्ने वाच्ये असुन् प्रत्यये नुडागमह्रस्वत्वानां विधानात् चनस्शब्दोऽन्नवाची । ततश्च संयोजयतमिति व्याख्यानमनुपपन्नमिति परास्तम् । आशूपपदादिति । आशूपपदाद्गत्यर्थकात् वाधातोः इनिप्रत्ययः स च कित्वेन विवक्षितः । उपपदातेः ह्रस्वः अन्त्यलोपश्चेति भावः । अशूव्याप्तावित्यत इति । अस्माद्धातोर्विनिप्रत्ययो भवतीति भावः 'तद्धिताः' इतीनिति । तद्धिताः इति बहुवचनज्ञापित इनिरित्यर्थः ॥ १ ॥

अश्विना पुरुदंससा । नरौ पूर्ववदिति । नरौ अचलौ । अविनाशिनाविति पूर्ववद्व्याख्येयमित्यर्थः ॥ २ ॥

दस्रा । ततो र इति । दस् इत्येतस्मात् 'स्फायितं चिवंचि शकि क्षिपि क्षुदि सृपि तृषि दृषि वन्द्युन्दिश्विति वृत्त्यजिनीपदिमदि मुदि रिवदि छिदि भिदि मन्दि चन्दि दहि दसि दम्भि वसि वाशि शीङ् हसि सिधि शुभिभ्यो रक्' (उणादि १७८) इति रक् प्रत्यय इत्यर्थः । युवयोरिति । युष्मच्छब्दात् युवयोरिदमित्यर्थे आकुप्रत्ययः युष्मच्छब्दस्य युवादेश इति भावः । उपपदस्य (च) द इति । उपपदान्तस्य द इति । भावे अनिरिति । 'वृतेश्च' इति सूत्रेणानिप्रत्यय इति भावः । रूद्रमनुवृत्तिर्ययोस्ताविति । 'अनुर्लक्षणे' (१।४।८४) इति सूत्रेण अनोः कर्मप्रवचनीय संज्ञाविधानात् 'कर्मप्रवचनीययुक्ते द्वितीया' (२।३।८) इति द्वितीयेति भावः ॥ ३ ॥

इन्द्रायाहि चित्रभानो । एकोऽर्थ इति । इतः परं टीकायां श्रूयमाणं चित्रमालेख्यमद्भुत-मित्याभिधानात् इति वाक्यं प्रक्षिप्तम् । न टीकावाक्यम् । प्रतिज्ञातस्य चित्रभद्रशब्दयोः पर्यायत्त्वस्यानुपपादकत्वात् । भानुशब्दार्थमिति । भानुशब्दस्य अर्थो यस्य रश्मय इति पदस्य तद्रश्मय इति पदमनूद्य ज्ञानमिति व्याख्यातमित्यर्थः । एतेन व्याख्यानाय व्याख्यातव्यपद-स्यैवानुवाद्यत्वे नार्थस्यानुवाद्यत्वायोग इति परास्तम् । युष्मद इति । युष्मदः क्यचि 'प्रत्ययोत्तर-पदयोश्च (७।२।९७) इति त्वादेशे 'युष्मदस्मदोरनादेशे' (७।२।८६) इति अविभक्तावपि व्यत्ययेनाऽऽत्वे 'क्याच्छन्दसि' (३।१।१७०) इति डकारप्रत्यये जसि च त्वायव इति रूपं भवति इति भावः । अनेनेति । सोमेष्वभिमानिसद्भावव्युत्पादनेनेत्यर्थः ॥ ४ ॥

इन्द्रायाहि । इषितोऽधीष्ट इति । इष्धातोः क्तप्रत्यये 'तीषसह...' (७।२।४८) इति इडागमे इषित इति रूपम् । वेट्त्वादिडभावे अधीत्युपसर्गयोगे अधीष्ट इति टीकायां प्रयुक्तं रूपमिति द्रष्टव्यम् । विप्रजूत इति । जुगतावित्यस्मात् अन्तर्णीतण्यर्थात् क्तप्रत्यये धातोर्दीर्घे च जूत इति रूपम् । वाघत इति । वच परिभाषण इत्यस्मात् लटि तस्य शत्रादेशे चकारस्य छान्दसे घकारे आदेश्च छान्दसे दीर्घे जसि च वाघत इति रूपम् । अनर्थान्तरमिति । न विद्यते अर्थान्तरं यस्य तदनर्थान्तरम् । पर्याय इति यावत् ॥ ५ ॥

इन्द्रायाहि तूतूजानः । तुज गत्यर्थ इति । अस्मात् यङि तस्मिन् द्विर्वचनं अभ्यासलोपः । दीर्घोऽकितः (७।४।९४) इति अभ्यासस्य दीर्घः यङो लुक् ततश्चानश् इति भावः । हरिनामकैरिति । अश्वविशेषाणां हरिरिति संज्ञा । यद्यपि 'हरिवातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु । सिंहाश्वकपिभेकादिशुकलोकान्तरेषु च' इति विश्वकोशोक्तेर्हरिशब्दः अश्वमात्रवाची । तथापि इह हरिशब्देन नाश्वमात्रं विवक्षितं किन्तु येषामश्वानां हरिरिति विशेषसंज्ञा त एवात्र विवक्षिता इति भावेन हरिनामकैरित्युक्तम् । अन्यथा हरिभिरश्वैरित्यवक्ष्यत् । अन्तर्णीतण्यर्थ इति । वृतेरन्तर्णीतण्यर्थात् असुन् डिच्चेति भावः । वातेर्वेति । वातेरसुन् डिच्चेति भावः । हरिनामकाश्ववानितीति । पूर्वं हरिवा इत्येतत् हरिशब्दपूर्वकस्य वृते रूपमित्यङ्गीकृत्य व्याख्यातम् । इदानीं तु हरिवा इत्येतत् हरिशब्दात् मतुपि हरिवा इति रूपं भवतीत्यभिप्रेत्य व्याख्यातमिति भेदः । अथवा हरिणेति । हरिशब्दोपपदात् वृतेरसुन् प्रत्ययो डिच्चेति भावः । चनो मन इति । मनु अवबोधन इत्यस्मात् असुन् प्रत्यये व्यत्ययेन मकारस्य चकारे चन इति रूपमिति भावः । दधिष्व धत्स्वेति । धाञोर्लोटि थासि तस्य 'थासः से' (३।४।८०) इति सेभावे 'सवाभ्यां वामौ' । (३।४।९१) इति एकारस्य वकारे शपः 'जुहोत्यादिभ्यः श्लुः' (२।४।७५) इति श्लुशब्दाभिधेयलोपे 'श्लौ' (६।१।१०) इति द्विर्वचने अभ्यासस्य जस्त्वे, 'छन्दस्युभयथा' (३।४।११७) इति आर्धधातुकत्वात् इडागमे 'आतो लोप इटि च' (६।४।६४) इति धात्वाकारलोपे षत्वे च दधिष्व इति छन्दसि रूपम् । धाञोर्लोटि थासि शपः श्लुर्द्विर्वचनं अभ्यासस्य जस्त्वं 'श्नाभ्यस्तयोरात' (६।४।११२) इति धात्वाकारलोपः । एकाचो बशो भष् झषन्तस्य स्ध्वोः (८।२।३७) इति दकारस्य धकारे 'खरि च' (८।४।५५) इति चर्त्वे धत्स्व इति भाषायां रूपमिति ज्ञेयम् ॥ ६ ॥ ५ ॥

## तृतीयसूक्ते द्वितीयोवर्गः

ओमासः ॥ ओंशब्दसमानार्थ इति । ततश्च ओशब्दोपपदात् मानिर्माण इत्यस्मात् कर्माणि कप्रत्ययः आकारलोप इति भावः । अवतिरूपत्वादिति । अवतेः क्विपि ज्वरत्वर.... (६।४।२०) इति उपधायाः वकारस्य च ऊठि द्वयोरूठोः सवर्णदीर्घे ऊकारस्य बाहुलिके ओकारादेशे ओ इति रूपमिति भावः । उपसर्जनस्येति । शौण्डादेराकृतिगणत्वात् 'सप्तमी शौण्डैः' (२।१।४०) इति समासे मा इत्येतस्य सप्तम्यन्तस्योपसर्जनत्वात् यद्यपि पूर्वनिपातः प्राप्नोति तथापि छान्दसः परनिपात इति भावः । वः किच्चेति । 'अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्', (उणा. १५७) इति विहित क्वन् प्रत्ययस्यानुवाद इति भावः । आगत आगच्छतेति । गमेर्लोटि तस्य थादेशे तस्य 'तस्थस्थमिपां तां तन्तामः' (३।४।१०१) इति तादेशे बहुलं छन्दसि (२।४।७६) इति शपो

लुकि 'इषुगमियमां छः' (७।३।७७) इति छत्वाभावे 'अनुदात्तोपदेश....' (६।४।३७) इति मकारलोपे आगतेति रूपम् ॥ ७ ॥

विश्वेदेवासः। एवशब्देनेति। उस्रास्तु रश्मयश्चैवेत्येवशब्देन उस्रशब्दस्य रश्मिवाचिकत्वम् अभिधानसिद्धमिति न निर्वचनापेक्षेति भावः ॥ ८ ॥

विश्वे देवासो अस्रिधः ॥ द्रुहः क्लेशार्थ इति। अनेकार्थत्वाद्धातूनां द्रुहःक्लेशार्थः। न विद्यते द्रुगिति द्रुहेः क्विपि 'वा द्रुहमुहष्णुहष्णिहाम्' (८।२।३३) इति हस्य धत्वे चर्त्वे भष् भावे च ध्रुगिति रूपम्। जुषन्त जुषतेति जुषी प्रीतिसेवनयोः इत्यस्मात् लोटि तस्य व्यत्ययेन परस्मैपदे तस्य थादेशे तस्य तस्थस्थमिपामिति तादेशे प्राप्तेऽपि तं बाधित्वा छान्दसे अन्तादेशे जुषन्त इति छन्दसि रूपम्। तादेशे सति जुषत इति भाषायां रूपमिति द्रष्टव्यम्। वहतेरिति। 'वहिश्रिश्रुयुग्लाहात्वरिभ्यो नित्' (र्) (उणादि ५००) इति निप्रत्यय इत्यर्थः ॥ ९ ॥

पावकानः ॥ सरसः ससार इति। अत्र सरस इति भाष्यपदानुवादः। तस्य ससार इति व्याख्यानमिति द्रष्टव्यम्। रसाकारलोप इति। सरसशब्दान्तस्याकारस्य लोप इत्यर्थः। तद्वत्वात् तत्प्रियत्वत इति। वायुः सरस्वानिति शब्दित इति शेषः। तत्प्रियेति। वायुप्रियेत्यर्थः। त एवेति। गुणा एव धनमित्यर्थः। अस्मिन् निर्वचने सरःशब्दान्तलोपो द्रष्टव्यः। ननु हराविति। हरौ कथं स्त्रीलिङ्गप्रयोगः। न च स्त्रीत्वात् स्त्रीलिङ्गप्रयोग इति वक्तुं शक्यम्। अग्न्यादिषु पुल्लिङ्गशब्द-प्रयोगानुपपत्तिप्रसङ्गादित्यर्थः। पृच्छति। एवं चेदिति। नन्वयमर्थः भाष्यान्न लभ्यत इत्यत आह। अस्य तात्पर्यमितीति। स एव वाजिनी इति। एकारस्य इकारः। अकारस्य ईकारः छब्दस इति भावः ॥ अविभक्तिक इति। वाजिनी सूर्य उच्यत इति भाष्ये वाजिनीत्यविभक्तिको निर्देश इत्यर्थः। ननु वाजिनामीश इति व्याख्यानादेकमेव व्याख्यानं युक्तं वाजिनामश्वानामन्नवतां वेति ऋक्पदस्य व्याख्यानमयुक्तमित्यत आह। पूर्ववदुभयथेति। यथा पूर्वमन्नेन इति पदेन वाजिनीति ऋक्पदं अन्नप्रवर्तकत्वेन अन्नस्वामित्वार्थकत्वेनेति द्वेधा विवृतं तथा वाजिनामीश इत्यनेनापि ऋक्पदं अश्वस्वामित्वेन अन्नवत्स्वामित्वेन चेति द्वेधा व्याख्यातमित्यर्थः। वष्ढिति रूपं साधयति। विकरणलोप इति। वहेर्लोट् तस्य तिप्। 'एरुः' (३।४।८६) इति उत्वं शपो लुक्। हकारस्य षत्वं छान्दसम्। 'ष्टुना ष्टुः' (८।४।४१) इति ष्टुत्वं चेति भावः ॥ १० ॥

चोदयत्री ॥ ननु सुमतनिमिति न कर्मणि षष्ठी। किन्तु शेषे षष्ठी 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' (२।३।६९) इति कर्मणि षष्ठ्याः निषेधादिति भ्रमं परिहरति। द्वितीयार्थे इति। सुमतीनामिति कर्मण्येव षष्ठी। नञा निर्दिष्टस्यानित्यत्वेन न लोकाव्ययेति निषेधस्याप्रवृत्तेरिति भावः ॥ ११ ॥

महो अर्णः ॥ विराजतीति । राजतेरात्मनेपदित्वेपि जिजन्तस्य धात्वन्तरत्वात् परस्मैपदमुपपन्नमिति द्रष्टव्यम् ॥ १२-६-३-१ ॥

## चतुर्थसूक्ते प्रथमोवर्गः

उक्तस्यापवादमिति । सूक्तस्य मूलवेदक्रमानुसारित्वमिति नियमस्यापवादमाहेत्यर्थः । मूले वेदानन्तत्वविज्ञप्त्या इति । वेदानामनन्तत्वेन कारणेन तेन मन्दानां ज्ञानासंभवात् मन्दानामपि यज्ञतदङ्गकलापविज्ञप्त्यै बादरायणः आवोपौ चक्र इत्यर्थः । इदं तु वक्ष्यमाणेति । आवापोद्वापयोर्वेदानां तत्वप्रतीत्यर्थं 'अनन्तत्वात्तु वेदानां प्रायः कर्मानुसारतः । संक्षेपं कृतवान् देवः शिष्याश्च तदनुज्ञया । इति वक्ष्यमाणविवरणानुसारेण प्रतिपत्तव्यमित्यर्थः । ननु ऋचः स ऋच उद्धृत्येति प्रमाणेन मूलवेदादुपवेदानामुपवेदेभ्यः अवान्तरवेदानामुद्धारः कथं उक्त इत्यत आह । ऋङ्निगदेति । अस्मिन्प्रमाणे ऋङ्निगदसामशब्दैः मूलवेदोद्धृतोपवेदात्मक ऋङ्निगदसामान्युच्यन्त इत्यर्थः । ततः किमित्यत आह । तत इति । ऋगादि शब्दैरुद्धृत वेदग्रहणात् मूलवेदादुपवेदाः उपवेदादवान्तरवेदा उद्धृता इत्येवं पुराणवचनादवगम्यत इत्यर्थः । अनेन ऋचः स ऋच उद्धृत्येति मूलस्य मूलवेदादुद्धृतायाः ऋचः ऋक् संज्ञकोपवेदादिति यावत् ऋग्वेदमवान्तर वेदं कृतवान् तथा मूलवेदादुद्धृतनिगदसंज्ञकोपवेदात् यजूंषि कृतवानित्यादि योजनोक्ता भवति । पूर्वोत्तरार्धयोरसम्बन्धार्थत्वेनेति । मानः स्तेनेभ्य इति पूर्वार्धस्य ये अभिद्रुहस्पदे अभितो द्रोहास्पदे अन्धेतमसि स्थातुं योग्याः निरामिणः रामरुद्धाः तत एव तस्य रिपवः अन्नेषु भोग्येष्वेव जागृधुः । आकाङ्क्षां कृतवन्तस्तेभ्यः स्तेनेभ्यः नः अस्मान् मा इत्यर्थः । आदेवानामित्युत्तरार्धस्य तु हे बृहस्पते ये देवानां व्रयः वरत्वे सति नियामकं ब्रह्म हृदि व्योहते वहन्ति ये च साम्नः विष्णोः परं न विद्युरित्यर्थः । इदं तु वायुं प्रति विद्याभिमानिदेवतावचनम् । एवं च पूर्वोत्तरार्धयोरेकवाक्यत्वाभावः स्पष्टः । उद्धृत्योपवेदादिकरणस्य वेदानन्त्यज्ञापनं फलत्वेनोक्तमिति मन्यमानः शङ्कते । वेदानन्तविज्ञप्त्या इति । अनन्तत्वादिति । अस्माभिरुपवेदादेः अज्ञानां कर्मादि ज्ञानसिद्धिरेव प्रयोजनमुक्तं न तु वेदानन्त्यज्ञापनं फलत्वेनोक्तमिति भावः । यत्र वाक्यद्वयस्येति । छन्दोनिबन्धशून्योपनिषद्वाक्यद्वयस्यार्थ इत्यर्थः । छन्दोनिबद्धेष्वेवंविधवाक्येषु पौनरुक्त्यपरिहाराय वाक्यमेवोच्छिन्नं ज्ञेयमिति भावः । ननु वर्गस्वरूपं कुतो नोक्तमित्यत आह । अनेनेति । सूक्तानुवाकयोः स्वरूपमनुक्त्वा वर्गस्वरूपस्य निरूपणेन सांकेतिको वर्गशब्दः न तु तच्छब्दप्रवृत्तौ निमित्तमस्तीति सूचितमिति भावः । इति सूक्तानुवाकवर्गाणां स्वरूपनिरूपणम् ।

स्वरूपकृत्तुम् । सम्पदादित्वात्किबिति । इतः परं टीकायां श्रूयमाणं गां दोग्धीति गोधुक् तस्मै गोदुहे । तदर्थं दोहयेति शेषः । इत्येतावत्प्रक्षिप्तम् । न टीकावाक्यम् । अवश्यं चैतदेवं विज्ञेयम् ।

गोदुह इत्यस्य भावार्थकक्विबन्तत्वेन अनुपदमेव व्याख्यातत्वात् । न हि गोदुह इत्यस्य दोहनापरत्वमुक्त्वा दोहनकर्तृपरत्वाभिधानं सङ्गतं येनेदं वाक्यं प्रक्षिप्तं न स्यात् । न चेदं व्याख्यानान्तरमिति वाच्यम् । तज्ज्ञापकस्याथवेत्यादिशब्दस्याभावात् । दोहाय सुदुघामिव विष्णुं जुहूमसीत्येवं भाष्यकृता व्याख्यातत्वेन उद्भाष्योक्तिप्रयोजनाभावात् । बहुकोशेष्वस्य वाक्यस्या-दर्शनाच्च 'दुहः कब् घश्च (३।१।७०) इति । दुहः कप् प्रत्ययो भवति घश्चान्तादेश इति भावः । ततः टापि सुदुघेति आकरान्तं रूपमिति ज्ञेयम् । जुहूमसीति । ह्वयतेर्लटि तस्य मसादेशे तस्य 'इदं तो मसि' (७।१।४६) इति मसिरिकारान्तो भवति ततः शप् तस्य व्यत्ययेन श्लुः वकारस्य संप्रसारणं एकारस्य पूर्वरूपम् । 'श्लौ' (६।१।१०) इति द्विर्वचनम् । 'कुहोश्चुः' (७।४।६२) इति चुत्वं 'अभ्यासे चर्च' (८।४।५४) इति जश्त्वं 'हलः' (६।४।२) इति उकारस्य दीर्घः । एवं च जुहूमसीति रूपं सिद्धमिति ज्ञेयम् । इतः परं टीकायां श्रूयमाणम् । दार्ष्टान्तिके ऊतय इति प्रयोजनस्य श्रुतत्वात् दृष्टान्तेऽपि दोहायेत्युक्तं दृष्टान्ते गोदुह इत्युक्तत्वात् दार्ष्टान्तिकेऽपि तत्स्थितेरिति शेषोऽभिहितः ।' इति वाक्यं प्रक्षिप्तम् । न टीकावाक्यम् । अवश्यं चैतदेवं विज्ञेयम् । दोहायेति भाष्यस्य श्रुतिशेषकथनरूपत्वे गोदुह इति श्रौतपदवैय्यर्थ्यप्रसङ्गात् । गोदोहाय सुदुघामिव विष्णुं जुहूमसीत्येतावतैव पूर्णत्त्वात् । दृष्टान्ते गोदुह इत्यस्य दोहनकर्तृपरत्वाभावाच्च । कर्तृपरत्वे वैय्यर्थ्यप्राप्त्या कर्तृपरत्वाभिधानायोगाच्च । बहूकोशेष्वदर्शनाच्च । ततश्चेयं ऋग्योजना । यजमानस्य ऊतये द्यवि द्यवि अहर्नामसु पाठात् दिवसे दिवसे गोदुहे गोर्दोहाय सुदुघां कामधेनुमिव सुरूपकृत्नुं विष्णुं जुहूमसि स्वाह्याम इति ॥ १ ॥

उपनः । उपागहीति । विकरणलोपे मलोपे च उपागहीति रूपम् ॥ २ ॥

अथाते । अन्तमानां सुमतीनामिति श्रौतपदद्वयस्य आवृत्तिं प्रथमान्तत्वं द्वितीयान्तत्वं चाभिप्रेत्य भाष्यकृता सुमतीरिति द्वितीयान्तत्वमुक्त्वा मतय इति प्रथमान्तत्वमुक्तमित्यभिप्रेत्य व्याचष्टे । यस्मात् त्वमिति । विभक्तिविपरिणामेन प्रथमान्तस्य अन्तमानामित्यस्य व्याख्यानं अन्ते मिताः प्रमिता उत्तमोत्तमा इति यावदिति विभक्तिव्यत्ययेन सुमतीनामित्येतत् प्रथमान्तमित्यभिप्रेत्य सुमतयः इत्युक्तम् । अन्तमानां सुमतीनामिति पद द्वयमनूद्य विभक्तिविपरिणामं दर्शयति अन्तमाः सुमतीरिति विद्याम लभेमेति । अत्र ननु लाभार्थकविदेः शब्विकरणत्वात् शप्रत्यये 'शेमुचादीनाम्, (७।१।५९) इति नुमि च सति विन्देमेति भवितव्यं विद्यामेति ऋचि कथं परस्मैपदप्रयोग इत्यत आह । व्यत्ययादिति । शब्विकरणस्य व्यत्ययेन लुकि विद्यामेति रूपं भवति । तथा व्यत्ययेनात्मनेपदिनो धातोः परस्मैपदे लभेमेति रूपमिति भावः । माख्य इति । 'अस्यतिवक्ति-ख्यातिभ्योऽङ्' (३।१।५२) इति श्लेरङादेशे 'न माङ्योगे' (६।४।७४) इति अडागमप्रतिषेधात्

ख्य इति लुङ् मध्यमपुरुषैकवचने रूपम् । ननु (३।३।१७) माङि लुङिति सर्वलकाराप
लुङो विधानात् कथं मा पश्येति भाष्ये प्रयोग इत्यत आह । माऽयमिति । भाष्ये प्रयुक्त
माशब्दः न माङ् । एवं च लोट् प्रयोगो नानुपपन्न इति भावः ॥ ३ ॥

परेहि । विपाः व्याप्ता चिद्यस्येति । विप् अस् इति स्थिते 'अत्वसन्तस्य चाध
(६।४।१४) इति दीर्घे सुलोपे च विपा इति स्त्रीलिङ्गप्रथमैकवचने रूपमिति ज्ञेयम् ।
विपश्चिच्छब्दस्याखण्डत्वेन पदद्वयसमाहार रूपत्वाभावात् पदद्वयं कल्पयित्वा व्याख्यानम
पन्नमित्यत आह । अवग्रहेति । अवग्रहदर्शनात् पदद्वयकल्पनं युक्तमिति भावः । मरणाथ
प्रतीतेरिति । यस्मिन् व्याख्याने अमङ्गलरूपमरणं भवति तद्व्याख्यानं न कर्तव्यमित्यर्थः ॥

उतब्रुवन्तु । अभिधानं वक्ष्यत इति । निदोदवीय इति तु विरुद्धार्थद्वयाभिधौ । दूरसामी
वचनावुभवपि महोदधौ (ऋग्भाष्ये) इत्यभिधानं द्वितीयाध्याये वक्ष्यत इत्यर्थः । योगायोगादि
निरो निषेधार्थकत्वात् आरतेत्यनेन सम्बन्धे आगमनरूपार्थालाभादित्यर्थः । निरः अर्थान्तरमु
आरतेत्यनेन सम्बन्धः क्रियतामित्यत आह । अधिकार्थेति ॥ ५, ७ ॥

## चतुर्थसूक्ते द्वितीयोवर्गः

उतनः । ततो म(क्)प्रत्यय इति । इषियुधीन्धि (न्धीधि) दसिश्याधूसूभ्यो म
(उणादि. १५०) इति सूत्रेण मक् प्रत्यय इत्यर्थः । वाचेयुरिति । वचेर्झेर्लिङ् तस्य 'झेर्जु
(३।४।१०८) छान्दसोऽङ्' वच उम् (७।४।२०) इति उम् यासुट् तस्य इयादेशः गुणः त
वाचेयुरिति रूपं सिद्धम् ॥ ६ ॥

येमाशुम् । ननु सखायं मन्दयदिति विग्रहे द्वितीया श्रितेति सूत्रेण समासो वक्तव्यः । श्रिता
गमिगाम्यादीनामुपसंख्यानात् । ततश्चोपसर्जनत्वात् सखिशब्दस्य पूर्वनिपातेन भाव्यमित
आह । मयूरव्यंसकादीति । उपसर्जनपूर्वनिपातशून्यानां मयूरव्यंसकादीनां दर्शनात् मन्दयत्सख
मित्युपपन्नमिति भावः । स्वीकुर्विति । इतः परं टीकायां श्रूयमाणं 'सोमस्य द्रवरूपत्वा
शुत्वमि'ति वाक्यं प्रक्षिप्तम् । न टीकावाक्यम् । आशुं क्षिप्रवेगवन्तं द्रवत्वादित्यनेन पूर्ववाक
गतार्थत्वात् बहुकोशेष्वदर्शनाच्च ॥ ७ ॥

अस्य पीत्वा । तमोऽसह्य इति । आहिताग्न्यादेराकृतिगणत्वेन गडुकण्ठ इत्यादीनामनिष्ठान्त
नामपि सङ्ग्रहात् निष्ठाप्रत्ययशून्यस्याप्यसह्यपदस्य च वाहिताग्न्यादिषु' (२।२।६७) इति सूत्रे
पूर्वनिपातविकल्पाभिधानात् असह्यपदस्य पूर्वनिपाताभावो न दोषायेति भावः । यदावृणोदिति
सर्वजीवान् तमः आवृणोदिति यत् तत् तदेवावरकत्वमेव वृत्रस्य तमसः वृत्रत्वं वृत्रशब्दवाच्य
निमित्तमित्यर्थः ॥ ८ ॥

तंत्वा । सातय इति । क्तिन्नन्तस्य षण् सम्भक्तावित्यस्य 'ऊतियूतिजूतिसाति हेतिकीर्तयश्च' (३।३।९७) इति सूत्रेण निपातनान्निष्पन्नः साति शब्दः लाभार्थकोऽपि भवति धातूनामनेकार्थत्वादिति भावः ॥ ९ ॥

यो रायः । अवनिरिवावनिराश्रय इति । इतः परं टीकायां श्रूयमाणं 'अवतेरैश्वर्यकर्मणः प्राप्तिकर्मणो वा कर्तर्यनिप्रत्ययः' इति वाक्यं प्रक्षिप्तम् । न टीकावाक्यम् । अवश्यं चैतदेवं विज्ञेयम् । अस्य वाक्यस्य पूर्वोत्तरवाक्याभ्यामन्वयाभावात् अवनिरिवावनिराश्रय इति गौणार्थाङ्गीकारविरोधाच्च । आश्रयत्वं प्रतिज्ञाय कर्तरि अवनिशब्दसाधनस्य विरुद्धत्वात् ॥ १०, ८, ४ ॥

## पंचमसूक्ते प्रथमोवर्गः

आत्वेता ॥ ननु स्तोमशब्दोपपदात् वाहतेः कर्मण्यपि स्तोम वाहशब्द अकारान्तः तस्माज्जसि 'आज्जसेरसुक्' (७।१।५०) इत्यसुगागमे प्रथमयोः पूर्वसवर्णदीर्घे स्तोमवाहासा इति भवितव्यम् । कथं स्तोमवाहस इति रूपमित्यत आह । छान्दसो ह्रस्व इति ॥ १ ॥

पुरूतमम् । अनुवृत्त्या सम्बन्ध इति । इतः परं टीकायां श्रूयमाणं 'अत्र पुरुतममिति तमपूछान्दस' इति वाक्यं प्रक्षिप्तम् । न टीकावाक्यम् । अवश्यं चैतदेवं विज्ञेयम् । पुरूणां पुरुरित्युक्त्या अतिशयस्य लाभेऽपि पुरूणां देवानां मध्ये यः पुरुः वायुः तदपेक्षयाप्यतिशयवानित्यर्थ बोधनाय तमपो विवक्षितत्वात् । अत एव भाष्यकृता सुपूर्णानां पूर्णतममित्युक्तम् । अन्यथा सुपूर्णानां पूर्णमित्यवक्ष्यत् । टीकाकारोऽपि ऋचीव भाष्येऽपि तमप् छान्दस इत्यवक्ष्यत् । ननु पुरुतममित्यत्र तमपोऽनुदात्तत्वेन भाव्यम् । 'अनुदात्तौ सुप्पितौ' (३।१।४) इति स्मरणात् इत्यत आह । व्यत्ययेनेति । यद्वेति । तमुधातोः 'घञर्थे कविधानम् (वार्तिकं. सू. ३।३।५८) इति कर्मणि कप्रत्यये तमशब्दो निष्पन्नः । स च प्रत्ययस्वरेणान्तोदात्तः । पॄपालनपूरणयोरित्यस्मात् 'पॄभिदिव्यधिगृधि धृषिभ्यः' (उणादि. २३) इति सूत्रेण कुप्रत्यये 'उदोष्टचपूर्वस्य (७।१।१०२) इति उत्वे रपरत्वे च निष्पन्नेन प्रत्ययस्वरेणान्तोदात्तेन पुरुशब्देन तृतीयातत्पुरुषे 'तत्पुरुषे तुल्यार्थ तृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः' (६-२-२) इत्यनेन पूर्वपदप्रकृतिस्वरत्वं प्राप्नोति । तं बाधित्वा परादिश्छन्दसि बहुलम् (६।२।१९९) इति परादेस्तकारस्थाकारस्योदात्तत्वं भवतीति भावः । अस्मिन्व्याख्याने पुरूणामित्यस्यान्वयमाह । पुरूणां वार्याणामितीति ॥ २ ॥

सघ । भुवत् । अभवदिति प्रक्षिप्तम् । उत्तरत्र श्रूयमाणं भवेदिति पदं भुवदित्यतः परं द्रष्टव्यम् । ततश्चैवं टीकावाक्यपाठः । 'भुवत् । भवेत् । विकरणव्यत्ययात् । कालव्यत्ययात्' इति भुवदिति ऋक्पदेन भवेदिति भाष्यपदस्य संवादमात्रस्य प्रदर्शनीयत्वेन अभवदित्युक्तिप्रयोजनाभावात् ।

भुवदिति श्रौतपदस्य साधुत्वं .... ..... ..... न भवेदित्यनेन व्यवधानकरणायोगात्। किंतु भुवदित्यस्योपपादकम् ॥ ३ ॥

यस्य संस्थे। घञर्थे कविधानमिति भावे क (प्रत्यय) विधानमित्यर्थः। वृण्वते। वृणत इति। अयं धातुः स्वादिषु क्र्यादिषु च पठ्यत इति द्विविकरणः। ततश्च वृ इत्येतस्मात् श्नुप्रत्यये आत्मनेपदलडादेश झप्रत्ययस्य 'आत्मनेपदेष्वनत' इति अदादेशे टेरेत्वे 'हुश्नुवोः सार्वधातुके' (६।४।८७) इति यणादेशे वृण्वत इति ऋग्गतं रूपं साधु। एवं वृधातोः श्नाप्रत्यये झस्य अदित्यादेशे श्नाभ्यस्तयोरातः (६।४।११२) इति आकारलोपे आत्मनेपदे टेरेत्वे वृणत इति भाष्यस्थं रूपं साधु ॥ ४ ॥

सुतपाव्ने। श्रुतौ दध्याशिर इत्यत्र जसः सु इत्यादेश इत्यभिप्रेत्याह। दध्याशिरः दध्याशिराः इति अन्येत्विति। यद्यप्यस्मिन्मते आशिरशब्दः अहोरात्रान्तरितदधिवाचकः। तथापि पृथग्दधिशब्दश्रवणात् अहोरात्रान्तरितत्वमात्रवाचीति ज्ञेयम्। वीगत्यादाविति। अस्मात् स्त्रियां क्तिनि वीति शब्दो निष्पन्न इति भावः। सुतपावृ इति सुतशब्दे उपपदे पाधातोर्वनिपि सुतपावन् शब्दो निष्पन्नः। तस्माच्चतुर्थ्येकवचने 'अल्लोपोनः' (६।४।१३४) इत्यकारलोपे सुतपाव्ने इति सिद्धं भवति। यन्तीति इणो रूपम्। यान्तीति याते रूपम्। ननु इन्द्रं यान्तीति वक्तव्यम्। कथमिन्द्रायेति चतुर्थीत्यत आह। गत्यर्थेति। दधिशब्दं साधयति। 'आदृगमहन' (३।२।१७१) इति धाञः किप्रत्यये लिड्वद्भावात् द्विर्वचने अभ्यासस्य इत्वे 'आतो लोप इटि च' (६।४।६४) इति धात्वाकारलोपे दधीति रूपसिद्धिरिति भावः ॥ ५, ९ ॥

## पंचमसूक्ते द्वितीयोवर्गः

त्वं सुतस्य। अहनीति। 'सद्यः परुत्परार्येषमः' (५।३।२२) इति सूत्रेण समानशब्दात् अहन्यर्थे द्यस् प्रत्ययः समान शब्दस्य सादेशश्च निपात्यत इति सद्यसूशब्दः समाने अहनीत्यर्थक इति भावः ॥ ६ ॥

आत्वा ॥ वनतेरसुनिति। वनतेरसुनि णत्वे च गिर्वण इति रूपम्। यद्वेति। वृञ् इत्येतस्मात् अनस् प्रत्यये टिलोपे णत्वे च गिर्वण इति रूपमिति भावः ॥ ७ ॥

त्वां स्तोमाः। त्वामित्यस्य पुनरुक्तेरिति। शब्दाधिक्यादर्थाधिक्यमिति भावः ॥ ८ ॥

अक्षितोतिः। यस्मिन्विश्वानि पौंस्येत्यनेनापीति ॥ 'त्वां स्तोमा' इति पूर्वस्यां ऋचि अवीवृधन्नित्यस्य वृद्ध्यर्थकत्वाङ्गीकारे भाष्यकृता अक्षितोतिरिति पूर्वभाष्येण

एतद्दग्गताक्षितोतिरिति पदेन पूर्वं विरोध उक्तः । अनेन तु भाष्येण यस्मिन्विश्वानि पौंस्येत्यपि भागेन विरोध उच्यत इति भावः ॥ ९ ॥

मानो मर्ताः । मर्ता इति मृङ् प्राणत्याग इत्यस्मात् 'हसिमृग्रिणवाऽमिदमिलूपूधुर्विभ्यस्तन्' (उणादि ३७३) इति तन् प्रत्यये गुणे मर्ता इति रूपमिति ज्ञेयम् । तनूनां शरीरेभ्य इति 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' (१।४।३७) इति सम्प्रदानसंज्ञाविधानात् भाषायां चतुर्थीप्रयोगः कर्तव्य इत्यभिप्रायेण शरीरेभ्य इति प्रतिपदं दत्तमिति बोध्यम् । यद्यपि 'क्रुधद्रुहोरुपसृष्टयोः कर्म' (१।४।३८) इति सोपसर्गद्रुहादियोगे सम्प्रदानसंज्ञापवादेन कर्मसंज्ञा विधीयत इति शरीराणीति भवितव्यम् तथापि नेह 'अभि' इत्यस्य द्रुहधातुना योगो विवक्षितः । असमीचीनद्रोहस्यानिवारण प्रसङ्गात् । अत एव भाष्ये 'मामर्तानस्तनूनां तु द्रोग्धार स्युः कथंचने'ति द्रोहसामान्याभाव उक्तः । अन्यथा विशेषेण द्रोग्धारो मा स्युरित्यवक्ष्यत् । किं तु कथं चनेत्यस्याभीत्यर्थकस्याभीत्यव्ययस्य मास्युरित्यनेन सम्बन्धः । ततश्च द्रुहेरुपसृष्टत्वाभावात्कर्म संज्ञा नास्तीति भावेन चतुर्थीप्रयोगः कृतः । वरमीशान इति । वरमिति अत्र प्रक्षिप्तम् । क्वचि भाष्ये च वरमित्यस्याश्रवणात् शेषाभिधानप्रयोजनाभावाच्चेति दृष्टव्यम् ॥ १०, १०, ५ ॥

## षष्ठसूक्ते प्रथमोवर्गः

युञ्जन्ति । अरुषमरुणमिति । अर्तेश्च (उणा. ३४७) इति सूत्रेणार्थेरुनत् प्रत्यये गुणे णत्वे च अरुणमिति भवति । पृषोदरादित्वात् णकारस्य षत्वे अरुषमिति भवतीति भावः । वृधवृद्धावित्यस्येति । वृधेः नक् प्रत्ययः धातोश्च व्रध इत्यादेश इति भावः । युञ्जन्ति नियुञ्जत इति । श्रुतिभाष्ययोः सूर्यनियोजनफलस्य कर्तृगामित्वाभावात् आत्मनेपदप्रयोगाभावः । टीकायां नीत्युपसर्गस्याजन्तत्वात् 'स्वराद्यन्तोपसृष्टाश्चेति वक्तव्यमि'(वार्ति १।३।६) ति वार्तिकेणात्मनेपदमिति द्रष्टव्यम् ॥ १ ॥

युंजन्त्यस्य । वासुदेवस्य पौंस्यानीति ॥ पूर्वमस्मत्कृतख्याने वासुदेवस्य पौंस्यानीति पदस्थाने देवा इति पदमूह्यम् । ततश्च देवतापरत्वे व्याख्यानं भवतीति भावः । ब्रह्मादीनामिति । व्यासप्रणीतनिरुक्तान्तर्गत मरुच्छब्दः सर्वदेवतापरः प्रतिपत्तव्य इत्यर्थः । व्यासप्रणीतनिरुक्ते मरुच्छब्दोऽस्तीति टीकाकारैः सम्प्रदायतो विज्ञातमिति द्रष्टव्यम् । अकारस्योकार इति अणशब्दादिभूतस्याकारस्य उकारः तत 'आद्गुणः' (६।१।८७) इति गुण इति भावः । तस्यार्थ इति । अकारस्योकाररूपो यो व्यत्ययस्तदर्थः । इदं सर्वत्रेति (सर्वत्रेदमिति) तावु भाविति पदद्वयं काम्यावित्यादिभिः सम्बध्यत इत्यर्थः ॥ २ ॥

केतुम् । वशकान्तावित्यस्येदमिति । अस्मात् लट् तस्य शत्रादेशः शप् । तस्य लुक् । 'ग्रहिज्या वयि...'(६।१।१६) इति सूत्रेण सम्प्रसारणं शकारस्य षत्वम् । ततश्चोषदिति रूपम् ॥ ३ ॥

आदह । स्वाधामन्विति । 'कर्मप्रवचनीययुक्ते द्वितीया' (२।३।८) इति द्वितीयेति भावः । एरिर इति । आङ् पूर्वकात् इर गतावित्यस्मात् लिट् तस्य झः तस्येरेच् अभ्यासेकारस्य धात्वाकारेण सवर्णदीर्घः । 'आद्गुणः' (६।१।७७) इति आङा सह गुणः ततश्चेरिर इति ॥ ४ ॥

वीळुचित् । आरुजत्नुभिरिति । आङ्पूर्वकात् रुजेः त्नुप्रत्ययः । तस्याडागमः छान्दसः । ततश्चारुजत्नुभिरिति वैदिकरूपं ज्ञेयम् । भाष्ये तु रुजेर्लटि शत्रादेशे शप्रत्यये गुणाभावे चाऽऽरुजदिति शत्रन्तं रूपं ज्ञेयम् । उस्रिया इति । रश्मिनामसुपठितात् उस्रशब्दात् तद्धिताः (४।१।७६) इति बहुवचनज्ञापितो घ प्रत्ययः । घस्य आयनेयीति (७।१।२) सूत्रेण इय् इत्यादेशः । ततश्च उस्रिय इत्यकारान्तशब्दो निष्पन्नो भवति । अविन्द इति । लाभार्थकविदेर्लङि तस्य तिपादेशे शप्रत्यये 'शेमुचादीनाम्' (७।१।५९) इति नुमागमे अडागमे अविन्द इति रूपम् ॥ ५, ११ ॥

## षष्ठसूक्ते द्वितीयोवर्गः

देवयन्तः लिङ्गव्यत्यास इति । देवयन्त इति ऋचि प्रद्योतयन्त इति भाष्ये च लिङ्गव्यत्ययः छान्दस इत्यर्थः । कर्तृसाधन इति । गृणन्ति स्तुवन्तीति गिर इति कर्तरि क्विपि 'ऋत इद्धातोः' (७।१।१००) इति इदादेशे जसि च गिर इति रूपम् । ननु विदद्वित्तमित्यत्र विददिति रूपमनुपपन्नम् । यगात्मनेपदयोः सतोर्विद्यमानवित्तमिति भवितव्यमित्यत आह । विददिति कर्मणि छान्दसमिति । विदेः कर्मणि व्यत्ययेन परस्मैपदे लस्य शत्रादेशे यगभावे शप्रत्यये नुमभावे च विददिति कर्मणि छान्दसं रूपम् । महामिति । अकारान्तात् महशब्दात् अमि छान्दसे पूर्वसवर्णदीर्घे महामिति रूपम् । अनूषतेति । णु स्तुतावित्येतस्मात् लुङि व्यत्ययेनात्मनेपदे तस्य झादेशे तस्य 'आत्मनेपदेष्वनतः' (७।१।५) इति अदादेशे सिचि इडभावे षत्वे छान्दसे धातोर्दीर्घे अडागमे चानूषत इति रूपम् ।

इन्द्रेण । वाचशब्दाविति । भाष्यस्थौ वाचशब्दौ व्यत्यासेन योज्यावित्यर्थः । मन्दुरिति । मंशब्दोपपदाद्ददातेरौणादिको डुः उपपदविभक्त्यलोपश्च । एवं च मन्दुरिति रूपम् । तुमर्थे कसेन् प्रत्यय इति । दृशेः 'तुमर्थे सेसेनसे' (३।४।९) इति सूत्रेण कसेन् प्रत्यय इत्यर्थः । दृशेः कसेन् प्रत्यये छान्दसे सुडागमे 'व्रश्च भ्रस्ज...' (८।२।३६) इति सूत्रेण शकारस्य षकारे 'षढोः कःसि' (८।२।४१) इति तस्य कत्वे 'आदेश प्रत्यययोः' (८।३।३९) इत्यनेन प्रत्ययागमसकारस्य षत्वे

दृक्षस इति रूपमिति भावः। अविभ्युषेति। ञिभी भय इत्यस्मात् 'लिटः क्वसुश्चे'ति लिटः क्वस्वादेशे द्वित्वे अभ्यासजश्त्वे ह्रस्वत्वे च तृतीयैकवचने 'वसोः सम्प्रसारणम्' (६।४।१३१) इति सम्प्रसारणे धातोरीकारस्य यणादेशे क्वसोः सकारस्य षत्वे बिभ्युषेति रूपम्। ततो नञ्समास इति ज्ञेयम्। संजग्मान इति। सम्पूर्वकात् गमेर्लिटि तस्य कानजादेशे द्वित्वादौ 'गमहनजनखनघसां लोपः क्ङित्यनङि' (६।४।९८) इति गमेरुपधाकारलोपे 'सुपां सुलुक्' (७।१।३९) इति द्विवचनस्य सु इत्यादेशे संजग्मान इति रूपमिति ज्ञेयम्॥ ७॥

अनवद्यैः। सहस्वदिति। लिङ्गव्यत्ययेन सहस्वानित्युक्तमिति बोध्यम्॥ ८॥

अतः। परितो ज्मामिति। परिज्माशब्दात् वर्तत इत्यर्थे डान (छ. कनिन्) प्रत्ययः। ततश्च परिज्मन्निति नकारान्तरूपम्। अन्यथानुवादशङ्कापरिहाराय तद्वचनमुपपादयति। यथायुंजन्तीति। अत्र युंजन्तीत्येतत् सूक्तप्रतीकग्रहणम्। अन्यत् ऋचां देवतानिरूपणमिति द्रष्टव्यम्। अवशिष्टानां चतसृणां ऋचां देवतामाह। अनाख्यातेत्विति। चतस्र ऐन्द्र्यः इति भावः। यथा कथंचिद्व्याख्यान इति। ब्रध्नमिन्द्रं परितस्थुषः परितः स्थिताः सेवका देवादयो युंजन्ति सङ्गच्छन्ते अनुचरन्तीति व्याख्यान इत्यर्थः। उत्तरासु चतसृष्विति। देवयन्त इत्यादिचतसृष्वित्यर्थः। मतिमित्यादेर्मरुद्गणमित्याद्यध्याहृतेन योजना किं न स्यादित्यत आह। कथंचिद्योजनेति॥ ९॥

इतोवा। षणु सम्भक्तावित्यस्मात् भावे क्तिनि सत्वे 'जनसनखनां सन् झलोः' (६।४।४२) इति नकारस्यात्वे च सातिमिति रूपम्॥ १०, १२, ६॥

## सप्तमसूक्ते प्रथमोवर्गः

इन्द्रमित्। श्रुतौ लिङ्गव्यत्ययेन प्रयोग इति भावेनाह। बृहत् बृहन्तमिति॥ गाथिन इति। गैशब्द इत्यतः उषिकुषिगार्तिभ्यः स्थन् (उणादि. १६९) इति थन् प्रत्यये स्त्रियां टापि च गाथाशब्द आकारान्तः। ततो व्रीह्यादित्वात् मत्वर्थे इनि प्रत्यये गाथिन इति रूपम्। अनूषतेति। णु स्तुतावित्यस्मात् सार्वकालिके लुङि झस्य अत इत्यादेशे सिचि तस्य षत्वे अडागमे छान्दसे धातुदीर्घे अनूषतेति रूपम्। अर्का ऋच इति। ऋच स्तुतावित्यन्तं 'पुंसि संज्ञायां घः प्रायेण' (३।३।११८) इति करणे घप्रत्यये 'चजोः कु घिण्यतोः (७।३।५२) इत्यनेन चकारस्य कुत्वे लघूपधगुणे च अर्का इति रूपम्। उभयत्रेति। यद्यपि अर्केभिरिति एकत्रैव करणं दृश्यते तथापि अन्यवाणीभिरिति मुख्यार्थस्य विवक्षितत्वात् उभयत्रेत्युक्तमिति बोध्यम्॥ १॥

इन्द्र इत् । सुपामित्यनेनैवादेश इति । 'सुपां सुलुक्' (७।१।३९) इति सूत्रेणैव ओस आकारादेश इत्यर्थः । युजेः 'सत्सूद्विषे (३।२।६१)ति क्विपि ओसि तस्य अलोन्त्यपरिभाषया सकारस्य आ इत्यादेशे ओकारस्य छान्दसे लोपे युजेति षष्ठीद्विवचनस्य रूपं भवतीति भावः । (हिरण्ययः) हितश्चेत्यत्रेति हितशब्दे तशब्दलोपः, रमणीयशब्दे मलोपः, णीत्यत्र ईकारस्य यकारादेशश्चेति विज्ञेयम् । 'ऋत्व्यवास्त्यवास्त्वमाध्वीहिरण्ययानि छन्दसि' (६।४।१७५) इति निपातनात् । अलाक्षणिकमेतत्सर्वं कार्यं विज्ञेयम् ॥ २ ॥

इन्द्रो दीर्घाय । चक्षस इति । चक्षिङः 'चक्षेर्बहुलं शिच्च' (उणादि. ६८२) इति असुन्प्रत्ययः । ततश्च चक्षस इति रूपम् । अद्रिरिति । दृङ् आदर इत्यस्मात् कर्मणि औणादिकः क्रिप्रत्यय इति भावः ॥ ३ ॥

इन्द्रं वाजेषु । स्वयं तु सद्भिरिति ॥ दुष्टानां कर्मवशात् उग्रैः स्वयं तु अनुग्रैरिति भावः ॥ ४ ॥

इन्द्रं वयम् । आद्यर्थ इति । विभक्त्यर्थेन सह आद्यर्थे वर्तते । ततश्च वृत्रादिष्वित्यर्थलाभ इति भावः । इदं रूपमिति । वृजी वर्जन इत्यस्मात् रिनिप्रत्यये ऋ कारस्याकारे वज्रीति रूपम् । अर्भ इति । ऋगतावित्यस्मात् 'अर्तिगृभ्यां भन्' (उणादि. ४४०) इति भन् प्रत्यये गुणे च अर्भ इति रूपम् ॥ ५, १३ ॥

## सप्तमसूक्ते द्वितीयोवर्गः

सनो वृषन् । वर्षित इति । वृष् सेचन इत्यस्मात् 'कनिन्युवृषि...' (उ० १६२) इति सूत्रेण कनिन् प्रत्यये निष्पन्नो वृषन् शब्दः वर्षणकर्तृत्ववाची ज्ञेयः । सहार्थो वेति । 'साकं सत्रासमं सह' इत्यमरोक्तेरिति भावः । कर्मण्युकार इति । 'भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः' (उणशदि. २७) इति उप्रत्यय इति भावः । अपावृधीति । अपूपूर्वात् वृञः 'श्रुशृणुकृवृभ्यश्छन्दसि' (६।४।१०२) इति हेर्धिरादेशे श्नुप्रत्ययलोपे 'निपातस्य च' (६।३।१२६) इति उपसर्गदीर्घत्वे च अपावृधीति रूपम् ॥ ६ ॥

तुंजे तुंजे । क्रियाया इति शेष इति । ततश्च तुंजे इत्यस्य क्रियाया गमने प्रापणे क्रियाया दापन इति वाऽर्थः सम्पद्यते । वर्णव्यत्यासादिनेति । विन्दत इत्यत्र दकारस्य धकारे अकार-नकारतकाराणां लोपे विन्द इति भवतीति भावः ॥ ७ ॥

वृषायूथेव । इयर्तीति । ऋ गतावित्यस्मात् तिपि शपि तस्य श्लौ द्वित्वे 'अर्तिपिपर्त्योश्च' । (७।४।७७) इति इत्वे 'अभ्यासस्यासवर्णे' (६।४।७८) इति इयङादेशे धातोर्गुणे इयर्तीति रूपम् ॥ ८ ॥

य एकः। इरज्यतीति। इरज ऐश्वर्य इत्यस्मात् 'कण्ड्वादिभ्यो यक्' (३।१।२७) इति यकि तिपि च इरज्यतीति रूपम्॥ ९॥

इन्द्रं वो विश्वतः। कथमाह्वानमिति। सर्वगतस्य किमर्थमाह्वानमित्यर्थः। केवल इति। असहाय इत्यर्थः॥ १०, १४, ७, २॥

## अष्टमसूक्ते प्रथमोवर्गः

एन्द्रसानसिम्। वर्षिष्ठमिति। वृद्धशब्दादिष्ठन् प्रत्यये 'प्रियस्थिर...' (६।४।१५७) इत्यादिना वर्षादेशे वर्षिष्ठमिति रूपम्। भरेति। हृधातोः सिपि शपि सिपो हि इत्यादेशे लुकि च गुणे 'हृगृहोर्भश्छन्दसि' (वा० सू० ३।१।८४) इति हकारस्य भत्वे भरेति लोट् मध्यमपुरुषैकवचनम्॥ १॥

नियेन मुष्टि। त्वोतास इति रूपं साधयति छन्दसि युष्मदस्मदोरिति। 'युष्मदस्मदोरनादेशे' (७।२।२६) इति सूत्रेण छन्दसि प्रत्ययोत्तरपदयोः युष्मदस्मदोः आकारादेश उपसंख्येय इति भावः। युष्मद् ऊतास इति स्थिते 'प्रत्ययोत्तरपदयोश्च' (७।२।९७) इति मपर्यन्तस्य युष्मच्छब्दस्य त्व इत्यादेशे दकारस्यात्वे त्वोतास इति रूपम्। धात्वन्तरस्येदं रूपमिति। भाष्यस्थं निरुन्धाम इति रूपं रुधेर्भौवादिकस्य रूपमित्यर्थः। रुधिर् आवरण इत्यस्मात् लोटि आत्मनेपदे महिङि टेरेत्वे 'एत ऐ' (३।४।९३) इति तस्य ऐत्वे श्नमि महिङः 'आडुत्तमस्य पिच्च' (३।४।९२) इत्याडागमे रुणधामहै इति ऋग्गतं रूपम्। रुन्धधातोः लोटि परस्मैपदे मसि शपि अडागमे छान्दसे सकारलोपाभावे रुन्धामः इति भाष्यस्थं रूपम्। अभ्यासकल्पनेति। एक एवोपसर्गः आदरार्थं पुनः पुनरुच्चार्यत इति कल्पनानुपपत्तेरित्यर्थः। नन्वेवं तर्हि 'प्रपवस्त्रिष्टुभमि'त्यत्र एकस्यैवोपसर्गस्य प्रकर्षेणेत्यर्थलब्धये द्विरुच्चारणमिति न स्यात्। किंतु तत्रापि धात्वन्तरमध्याहृत्य अपरस्य प्रशब्दस्यान्वयः स्यात् इत्यत आह। प्रप्रवस्त्रिष्टु-भमित्यादाविति। इषमित्यादिकर्मकारकाणामेक वचनत्वेन वाक्यस्य भेत्तुमशक्यत्वाद-भ्यासकल्पनमिति भावः॥ २॥

इन्द्र त्वोतासः॥ घनेति। घनशब्दात् तृतीयैकवचनटाप्रत्यये तस्या डादेशे घनेति तृतीयैकवचनतमिति बोध्यम्। आददीमहीति। आङ्पूर्वाद्दाञः लिङि शपि तस्य श्लौ द्वित्वे सीयुटि 'लिङः सलोपोऽनन्त्यस्य' (७।२।७९) इति सलोपे 'श्नाभ्यस्तयोरातः' (६।४।११२) इति धात्वाकारलोपे लिङो महिङादेशे च सति आददीमहीति रूपं ज्ञेयम्। युद्धानि वेति। अस्मिन्व्यास्याने युदीत्येकवचनं बहुवचनार्थे। सतिसप्तमीयम्। ततश्च युद्धेषु प्रसक्तेषु सत्सु स्पृधः युद्धा(धा)नि संजयेमेति योजना॥ ३॥

वयं शूरेभिः । अस्तृभिः अस्त्रिभिरिति । ऋचि सम्प्रसारणं छान्दसमिति भावः । पृतन्यत इति । पृतनाशब्दात् 'सुप आत्मनः क्यच्' (३।१।८) इति क्यचि 'कव्यध्वरपृतनस्यर्चि लोपः' (७।४।३९) इति आकारलोपे लटः शत्रादेशे पृतन्यच् छब्द इति ज्ञेयम् । ससह्यामेति । सहेर्यासुटितस्य लुकि द्वित्वे संज्ञापूर्वकविधेरनित्यत्वेन 'दीर्घोऽकितः' (७।४।८३) इति दीर्घाभावे लिङि तस्य मस् आदेशे शपि 'चर्करीतं च' (गणसूत्र) इत्यन्तादिवद्भावेन तस्य लुकि यासुटि सलोपे ससह्यामेति रूपमिति ज्ञेयम् । सहामहै इति । सहेरात्मनेपदित्वात् सहामहै इत्युक्तमिति ज्ञेयम् । 'उपसर्गप्रादुर्भ्याम्...' (८।३।८७) इति । उपसर्गेणः प्रादुषश्च परस्यास्तेः सस्य षः स्यात् यकारे अचि च परे इति सूत्रार्थः ॥ ४ ॥

महाँ इन्द्रः । प्रथिनेति । पृथुशब्दात् 'पृथ्वादिभ्य इमनिज्वा' (५।१।१२२) इति इमनिचि 'टेः' (६।४।१४३) इति टिलोपे 'ऋतो हलादेर्लघोः (६।४।१६१) इति ऋकारस्य रादेशे प्रथिमन् शब्दः निष्पन्नो भवति । ततस्तृतीयैकवचने 'अल्लोपोनः' (६।४।१३४) इत्यकारलोपे छान्दसे मकारलोपे प्रथिनेति रूपमिति ज्ञेयम् ॥ ५, १५ ॥

## अष्टमसूक्ते द्वितीयोवर्गः

समोहे । आशत अश्नुवतेति । अशू व्याप्तावित्यतः श्नुप्रत्यये तस्य छान्दसे आशतेति रूपम् ॥ ६ ॥

यः कुक्षिः । पिन्वत इति । पिवि सेचन इत्यस्मात् व्यत्येयनात्म पदे टेरेत्वे शपि नुमि च पिन्वत इति रूपं ज्ञेयम् । अकारलोपादिति । ककुच्छब्दात् भवार्थे अणि आदिवृद्धौ अणोऽकारलोपे काकुदिति हलन्तं छान्दसं रूपमिति भावः ॥ ७ ॥

एवाह्यस्य । प्रत्ययान्तर्भाविनेति । स्त्रीप्रत्ययलोपेनेत्यर्थः । त्रिरप्शिन् शब्दः बलिष्टवाची । तत्सम्बन्धात् लक्षणया तद्वाणीप्रतिपादक इति भावः ॥ ८ ॥

एवाहिते । दाशुष इति । 'दाश्वान् साह्वन् मीढ्वां (६।१।१२) इति निपातनात् दाशुष इति रूपं साधु ॥ ९ ॥

एवाह्यस्य काम्या ॥ स्तोम इत्येकवचनं बहुवचनार्थ इत्यभिप्रेत्याह । स्तोमाश्चेति ॥ १०, १६, ८ ॥

## नवमसूक्ते प्रथमोवर्गः

इन्द्रे हि। ननु सोमस्य पर्वाणि येषामिति षष्ट्यर्थः क इत्यतस्तमाह। यो हि यस्येति। दीर्घाभाव इति। परसवर्णदीर्घबाध इति भावः। विकरणादिति। भविष्यत्कालस्यापेक्षितत्वात् लृटा भाव्यम्। कालव्यत्ययेन लटि दिवादित्वात् श्यना भाव्यम्। विकरणव्यत्ययेन श्यन् लुकि सिपि मत्सीति रूपमिति भावः ॥ १ ॥

एमेनम्। करणे इकार इति। 'मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु' इति धातोरिकारः नुमृचेति भावः। 'आदृगम...'(३।२।१७१) इति कृधातोः कि प्रत्यये लिड्वद्भावेन द्वित्वे च चक्रिशब्द-निष्पत्तिरिति भावः। करणे किरित्यनेन कारणे किरित्येवोक्तं भवति। ततश्च चक्रिमित्यस्य कर्मकारणमित्यर्थो बोध्यः ॥ २ ॥

मत्स्वाशु शिप्र। सुशिप्रेति ॥ अनेकार्थत्वाद्धातूनां सुखवाचिनः शमेर्डप्रत्यये 'छन्दसि परेऽपी' (१।४।८१) त्युक्तेः प्रेत्युपसर्गस्य परनिपाते शप्रेत्यानन्दवाचि। 'तृतीयोतिशय' (महाव्या) इति वचनात् शकारस्थाकारस्य इकारे शिप्रेति रूपम् ॥ ३ ॥

असृग्रम्। असृग्रमनारतमिति। सृजेः कर्मणि रक् प्रत्ययः। 'न्यङ्क्वादीनां च' (७।३।५३) इति कुत्वं ततो नञ्समासे असृग्रमिति रूपम्। अत्यक्तवाचि क्रियाविशेषणम्। ततश्च असृग्रमित्यस्यानारतमित्यर्थो लभ्यत इति भावः। अहासतेति। ओहाङ्गतौ लुङ् तस्य झः 'आत्मनेपदेष्वनतः(७।१।५)इति झस्य अतादेशः अडागमः सिच् ततश्चाहासतेति रूपम् ॥ ४ ॥

संचोदय। विभुप्रभ्विति रूपसिद्धिं स्फोरयितुं सूत्रं पठति। विप्रसंभ्य (३।२।१८०) इति। लडर्थ इति। अस्तेर्व्यत्ययेन लडर्थे लेटि तस्य तिपि 'इतश्चलोपः परस्मैपदेषु' (३।४।९७) इति इकारलोपे 'लेटोऽडाटौ' (३।४।९४) इत्यडागमे असदिति रूपम्। अच्युतमित्यर्थः। प्रभुशब्दस्य कथमित्यत आह। प्रभु प्रभूतमिति। प्रभ्वित्यनेन प्रभूतमित्यर्थः प्रतीयते। प्रकर्षेण विद्यमानं च क्षयशून्यम्। तदेवाच्युतमित्युच्यत इति भावः ॥ ५, १७ ॥

## नवमसूक्ते द्वितीयोवर्गः

अस्मान्त्सु। तु विद्युम्नेति। बहूनामसु पाठात् तुविशब्दो बहुत्ववाची। 'द्युम्नं द्योततेर्यशो वे'ति वचनात् द्युम्न शब्दः यशोवाचीति ज्ञेयम्। रभस्वत इति। रेभ शब्द इत्यस्मात् असुन् प्रत्यये एकारस्याकारे रभस् शब्दो भवति। ततो मतुपि रभस्वच्छब्द इति ज्ञेयम् ॥ ६ ॥

संगोमत् । सन्धेहीति । डुदाञ्दान इत्यतः लोटि सिपि शपः श्लौ द्वित्वादौ 'घ्वसोरेद्धावभ्यासलोपश्च' (६।४।११९) इति एत्वे अभ्यासलोपे छान्दसे दकारस्य धकारे धेहीति रूपमिति ज्ञेयम् ॥ ७ ॥

अस्मे धेहि । सहस्रसातममिति । सहस्रशब्दोपपदात्सनेः 'जनसनखनक्रमगमो विट्' (३।२।६७) इति विट्प्रत्यये 'विड्वनोरनुनासिकः स्यात् (६।४।४१) इति नकारस्यात्वे सहस्रसाशब्दः ततस्तमपि सहस्रसातम शब्द इति ज्ञेयम् ॥ ८ ॥

वसोरिन्द्रम् । वसोरित्यस्य वसुमित्यनेनान्वय इत्यभिप्रेत्याह । वसोर्वसुपतिमिति । ऋग्मियमिति । ऋग्मेयशब्दे व्यत्ययेन एकारस्य इकारे ऋग्मियमिति रूपम् । होमेति । ह्वेञः लटि तस्य मसि छान्दसे सकारलोपे शपो लुकि 'ह्वः सम्प्रसारणम्' (६।१।३२) इत्यतः परेण 'बहुलं छन्दसि' (६।१।३४) इति सूत्रेण सम्प्रसारणे छान्दसे गुणे होमेति रूपमिति ज्ञेयम् ॥ ९ ॥

सुते सुते । नरीयते वेत्यरिरिति । रीङ्क्षय इत्यतो डिः ततो नञ्समास इति भावः । शूषमिति । सुखनामसु पाठात् शूषशब्दः सुखवाची । प्रतिसोमसवनमिति । इतः परं ओकस इत्यतः पूर्वं नीत्युच्छिन्नं गृहायेत्यतः पूर्वं सदित्युच्छिन्नम् । सदिति योग्यतया सम्बन्ध इति वाक्यं प्रक्षिप्तम् । सतामिति च प्रक्षिप्तम् । समीचीनेत्युच्छिन्नम् । न्यर्चतीत्यत्र नीति प्रक्षिप्तम् । ततश्चैवं टीकावाक्यपाठः । न्योकसे सद्गृहाय समीचीनाश्रयाय बृहते पूर्णाय इन्द्राय देवाय अर्चतीति । अवश्यं चैतदेवं विज्ञेयम् । न्योकस इत्यस्यैकपदत्वेनार्चतीत्यनेन सम्बन्धायोगात् भाष्ये समीचीनाश्रयायेत्यभिप्रायेण न्योकस इत्यस्य सद्गृहायेत्यर्थस्योक्तत्वात् अत एव क्वचित्पुस्तके न्योकसे अर्चतीति पाठः ॥ १०, १८, ९ ॥

## दशमसूक्ते प्रथमोवर्गः

गायन्ति । अरंकरमिति । अरंकरमिति शब्दे अरंशब्दस्य टिलोपे अर्कमिति रूपम् ॥ १ ॥

यत्सानोः । पूर्वमस्पष्टेति सम्बुद्ध्यन्तत्वेन व्याख्यानम् । अधुना क्रियापदत्वमभिप्रेत्याह । अस्पष्टेति । स्पशधातोः लुङि तस्य तादेशे श्लेः सिचि आगमशासनस्यानित्यत्वेनेडभावे सिचो लोपे धातुशकारस्य षत्वे ष्टुत्वे अडागमे च सति अस्पष्टेति । रूपमिति ज्ञेयम् । तृचो लेप इति । कर्तृत्वमिति शब्दे तृचो लोपे कर्त्वमिति रूपम् ॥ २ ॥

युक्ष्वाहि । सेचकाविति । रेतस इति शेषः । तस्य तात्पर्यमाह । युवानाविति । युक्ष्व । युङ्क्ष्वेति । युजेर्लोटि थासि थासः से इत्यादेशे 'सवाभ्यां वामौ' (३।४।९१) इति एकारस्य

वकारे श्नमः छान्दसे लोपे 'चोः कुः' (८।२।३०) इति जकारस्य कुत्वे युक्ष्वेति छान्दसं रूपम्। विकरणलोपाभावे युङ्क्ष्वेति भाषायां रूपं ज्ञेयम् ॥ ३ ॥

एहि स्तोमान्। गृणीहीति ॥ गृशब्द इत्यस्मात् लोटि सिपि तस्य हित्वे श्नाप्रत्यये 'ईहल्यघोः' (६।४।११३) इतीत्वे 'दीनां ह्रस्वष्वा' (७।३।८०) इति धातोः ह्रस्वत्वे गृणीहीति रूपम्। आरुवेति। आङ्पूर्वात् रु शब्द इत्यस्मात् लोटि सिपि हित्वे विकरणप्रत्ययेन शप्रत्यये उवङादेशे लुकि आरुवेति रूपम् ॥ ४ ॥

उक्थमिन्द्राय। निष्पिदिति। निस्पूर्वात् षिधेः क्विपि धात्वादेः सत्वे छान्दसे धातोः सस्य षत्वे निसः सकारस्य 'ष्टुना ष्टुः' (८।४।४१) इति षत्वे निष्पिदिति रूपम्। ननु 'कर्तृकर्मणोः कृति' (२।३।६५) इति स्मरणात् भाष्ये शत्रूणामिति वक्तव्यं कथं शत्रूनित्युक्तमित्यत आह। उपपदमिति। कृदुत्पत्तेः पूर्वं पुरु इत्युपपदं द्वितीयान्तं कर्मवाचीति दर्शयितुं शत्रूनित्युक्तमित्यर्थः। अन्यथेति। अत्र अन्यथेति प्रक्षिप्तम्। अथवेत्युच्छिन्नम्। ततश्चैवं टीकावाक्यपाठः। अथवा विभक्तिव्यत्ययेन शत्रूणामित्यर्थः इति। एतेना'न्यथा विभक्तिव्यत्ययेन शत्रूणामित्यर्थ' इति वाक्ये पदानां परस्परमनन्वय इति परास्तम्। यङलुगन्तादिति। रण शब्द इत्यस्मात् यङि 'यङोऽचि च' (३२।४।७४) इति यङो लुकि द्वित्वे लेटि लेटोऽडागमे लेडादेशतिप इकारलोपे रारणदिति रूपम् ॥ ५ ॥

तमित्सखित्वे। शकदिति। शक्लृ धातोः लुङि च्लिप्रत्यये तस्य 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु (३।१।५५) इति अङादेशे छान्दसे अडभावे शकदिति रूपम्। अशकदिति भाषायां रूपम्। दयमान इति। दयधातोः लटः शानचि शपि 'आने मुक्' (७।२।८२) इति मुकि रूपमेतदिति ज्ञेयम् ॥ ६, १९ ॥

## दशमसूक्ते द्वितीयोवर्गः

सुविवृतम्। अपवृधीति ॥ वृञः लोटि तस्य हीत्यादेशे 'श्रुशृणुपृकृवृभ्यश्छन्दसि' (६।४।१०२) इति हेर्ध्यादेशे छान्दसे विकरणलोपे वृधीति रूपम्। कृणुष्वेति। कृधातोर्लोटि व्यत्ययेन श्नुप्रत्यये कृणुष्वेति रूपमिति ज्ञेयम् ॥ ७ ॥

नहित्वा। कण्ड्वादिरिति। ऋघ शब्दात् यकि शानचि मुकि 'अकृत्सार्वधातुकयोर्दीर्घः' (७।४।२५) इति दीर्घे ऋघायमाणमिति रूपमिति ज्ञेयम्। इन्वत इति। इवि व्याप्तावित्यस्मात् लटि तस्य तसादेशे नुमि शपि च इन्वत इति रूपम्। लङर्थे लेडिति। जिधातोर्लेटि तस्य सिबादेशे

'सिब्बहुलं लेटि' (३।१।३४) इति सिपि लेट् अडागमे धातोर्गुणे जेष इति रूपम् । संधूनुहीति । धूञ्कम्पन इत्यस्मात् श्नुप्रत्यये 'छन्दसि वेति वक्तव्यम्' (वार्ति. सू. ६।१।१) इति वचनात् उतश्च प्रत्ययादसंयोगपूर्वात्' (६।४।१०६) इति प्राप्तस्य हेर्लुकोऽभावे धूनुहीति रूपमिति ज्ञेयम् ॥ ८ ॥

आश्रुत्कर्ण ॥ आश्रुत्कर्णेति ॥ आङ् पूर्वात् श्रुधातोः क्विपि 'ह्रस्वस्य पिति कृति तुक्' (६।१।७१) इति तुकि आश्रुत् इति रूपम् । दधिष्वेति । धाञो लोटि द्विर्वचने 'छन्दस्युभयथा' (३।४।११७) इति आर्धधातुकत्वादिडागमे आकारलोपे दधिष्वेति रूपम् । कृष्वेति । कृञो बाहुलिके विकरणलोपे कृष्वेति रूपम् । च शब्दा इति । भाष्यस्था इति शेषः ॥ ९ ॥

विद्माहित्वा । विद्मेति ॥ 'विदो लटो वा' (३।४।८३) इति मसो मादेशे विद्मेति रूपम् । सहस्रसा इति । सहस्रशब्दोपपदात् सनोतेः 'जनसनखनक्रमगमो विट्' (३।२।६७) इति विट्प्रत्यये 'विड्वनोः....' (६।४।४१) इत्यात्वे सहस्रसा इति रूपम् । हूमह इति । ह्वेञः महिङि टेरेत्वे छान्दसे शपो लुकि छान्दसे सम्प्रसारणे 'हलः' (६।४।२) इति दीर्घे च हूमह इति रूपम् । ननु श्रोतारमित्यस्य तृजन्तत्वात् 'कर्तृकर्मणोः कृति' (२।३।६५) इति आह्वानशब्दात् षष्ठ्या भाव्यमित्यत आह । श्रोतारमिति तृनिति । 'न लोकाव्यय....' (२।३।६९) इति निषेधात् न षष्ठीति भावः ॥ १० ॥

आतून । मन्दो मद इति । मदी हर्ष इत्यस्मात् क प्रत्यये इदित्वाभावान्नुमभावे अनुस्वारोऽधिक इति भावः । नव्यमिति । णु स्तुतावित्यस्मात् 'अचो यत्' (३।१।९७) इति यत्प्रत्यये 'धातोस्तन्निमित्तस्यैव' (६।१।८०) इति अवादेशे नव्यमिति रूपमिति भावः । तिरेति । तॄधातोर्लोटि शपि हेर्लुकि 'इत्वोत्वाभ्यां गुणवृद्धी पूर्वविप्रतिषेधेन' (वार्ति, सू. १।१।१००) इति गुणे तरेति रूपम् । तृतीयोऽतिशय इति अकारस्येकारे तिरेति रूपमिति ज्ञेयम् । सहस्रसामिति सहस्रशब्दोपपदात् सनोतेः 'जनसनखनक्रमगमो विट्' (३।२।६७) इति विटि 'विड्वनो-रनुनासिकः स्यात्' (६।४।४१) इति आत्वे विटः सर्वापहारिलोपे सहस्रसा शब्दः आकारान्तपुलिङ्गः । कृधीति । कृधातोः छान्दसे विकरणाभावे 'श्रुशृणुपृकृवृभ्यश्छन्दसि' (६।४।१०२) इति हेर्ध्यादेशे कृधीति छान्दसं रूपम् ॥ ११ ॥

परित्वा । आयो लाभो यस्यासाविति । अनेनायशब्दस्य व्यत्ययेनाकारस्योकारे आयुरिति रूपम् ॥ १२, २०, १० ॥

## एकादशसूक्तम्

इन्द्रं विश्वा । समुत्पूर्वादिति । सम् उत् पूर्वात् रिचेर्डप्रत्यये टिलोपे जश्त्वे समुद्रेति रूपमिति भावः ॥ १ ॥

सख्ये त । मा भेमेति । भीधातोर्लुङि तस्य मसि छान्दसे सिचो लुकि । सिच् प्रयुक्तवृद्ध्यभावे 'छन्दस्युभयथा' (६।४।६४) इति मस आर्धधातुकत्वेन ङित्वाभावात् गुणे 'नित्यं ङितः' (३।४।९९) इति सलोपे माङ्योगादडभावे भेमेति रूपम् । प्रणोनुम इति । णुस्तुतावित्यतः लटि तस्य मसि यङलुकि द्वित्वे 'गुणो यङ्लुकोः' (७।४।८२) इति अभ्यासस्य गुणे शपो लुकि 'उपसर्गादसमासेऽपि णोपदेशस्य' (८।४।१४) इति णत्वे प्रणोनुम इति रूपम् ज्ञेयम् ॥ २ ॥

पूर्वीरिन्द्रस्य । नविदस्यन्त इति । यद्यपि दस्यतिः परस्मैपदी तथापि भाष्यकृता न भिद्यन्त इति व्यत्ययेन कर्मणि व्याख्यातमिति दस्यन्त इति कर्मणि रूपं प्रत्युक्तम् ॥ ३ ॥

पुरां भिन्दुः । भिदेः 'पॄभिदिव्यधिगृधिधृषिभ्यः' (उणा. २३) इति कुप्रत्यये 'छन्दस्युभयथा' (६।४।११७) इति सार्वधातुकसंज्ञायां श्नमि भिन्दुरिति श्रौतं रूपम् ॥ ४ ॥

त्वं वलस्य । छान्दसो विकरणलोप इति । अपपूर्वात् वृञो लङि तस्य सिपि श्नुप्रत्ययस्य छान्दसे लोपे गुणे 'हल्ङ्याब्भ्यो दीर्घात्' (६।१।६८) इति सिपो लोपे अपावरिति छान्दसं रूपम् । भाषायां तु अपावृणोरिति रूपं ज्ञेयम् । अबिभ्युष इति । ञिभीभय इत्यस्मात् धातोर्लिटः क्वस्वादेशे द्वित्वादौ बिभीवसिति रूपम् । नञ् समासे अबिभीवसिति रूपम् । अस्मात् व्यत्ययेन जसः स्थाने शसि 'वसोः सम्प्रसारणम्' (६।४।३१) इति सूत्रे 'क्वसोरपि ग्रहणमिष्यत' इति वचनात् सम्प्रसारणे यणादेशे षत्वे च अबिभ्युष इति रूपम् । आविषुरिति । अवतेर्लुङि इयादेशे सिचि इडागमे झेर्जुसि धातोः 'आडजादीनाम्' (६।४।७२) इति आडागमे आविषुरिति रूपम् । ज्ञात्वाभित्वेत्यादीनां गावो यत्र प्रतिष्ठिता इत्यनेनान्वय इति भ्रमं वारयति । ज्ञात्वेत्यादीनामिति ॥ ५ ॥

तवाहम् । प्रत्यायमिति । प्रतिपूर्वादिणो लङःमिपोऽमादेशे अडागमे 'आटश्च' (६।१।९०) इति वृद्धौ आयादेशे प्रत्यायमिति रूपम् । कारव इति । 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' (उणा. १) इति कृधातोरुणि वृद्धौ जसि कारव इति रूपम् । उपातिष्ठन्त इत्यत्रात्मनेपदमयुक्तम् । मन्त्रकरणाभावात् । उपान्मन्त्रकरण इत्यनेन मन्त्रकरण एव तिष्ठतेरात्मनेपदविधानात् इत्यत आह । मन्त्रैस्त्वामपूजयन्निति ॥ ६ ॥

मायाभिः । ननु 'अस्मायामेधास्रजोः विनिः' (५।२।१२१) इति वचनात् मायाविनि
भाव्यमित्यत आह । व्रीह्यादित्वादिति । तृतीयस्येति । 'मेधः क्रतौ क्रियायां च
विश्वोक्तेर्मेधशब्द अकारान्तः । मेधशब्दोपदात् रमेर्डप्रत्यये मेधरशब्दः । तत्राकारस्थाने य इक
स अतिशयार्थकः । तृतीयवर्णस्यातिशयार्थकत्वादिति भावः। उत्तिरेति । उत्तरेत्यत्र तृतीयोऽति
इत्यकारस्येकार उत्तिरेति रूपम् ॥ ७ ॥

इन्द्रमीशानम् । अभ्यनूषतेति । णूस्तवन इत्यस्मात् 'छन्दसि लुङ्लङ्लिटः' (३।४।६) इ
सार्वकालिके लुङि व्यत्ययेनात्मनेपदझस्यात् इत्यादेशे सिचि छान्दसे इडभावे धातोरडाग
अनूषतेति रूपमिति ज्ञेयम् ॥ ८, २१, ११, ३ ॥

## द्वादशसूक्ते प्रथमोवर्गः

मानादिति । प्रत्येकमिति । ऋक्संहितायाः मानात् स्वाध्यायात् व्यासनिर्मितात् प्रबन्धा
मानात् ब्रह्मणेभ्यो मानादिति प्रत्येकमभिसम्बध्यत इत्यर्थः । ऋक्संहिताया इत्यादि पञ्चम
तृतीयार्थ इत्यभिप्रेत्य योजनान्तरमाह । यद्वेति । ननु शतस्य ऋचां समाहार इति विगृह्य समा
एकवचनेन भाव्यं कथं शतर्ग्भिरित्युक्तमित्यत आह । विशेषणसमासोऽयमिति । शतं च ता
ऋचश्चेति विगृह्य 'विशेषणं विशेष्येण बहुलम् । (२।१।५७) इति विशेषणसमासाङ्गीकारान्नैक
वचनप्रसक्तिः । समासान्तविधेरनित्यत्वात् समासान्तोऽपि शतर्ग्भिरिति साधुरिति भावः
शतसंख्याभ्य उत्तरा इति । इतःपरं टीकायां श्रूयमाणम् एकोनचत्वारिंशदपीति वाक्
प्रक्षिप्तम् । त्रयश्चत्वारिंशदपीति वाक्यमुच्छिन्नम् । अवश्यं चैतदेवं विज्ञेयम् । शतसंख्याभ्
उत्तरासां कस्य नूनमित्यतः प्राक्तनीन ऋचां त्रयश्चत्वारिंशत्त्वेन एकोनचत्वारिंशत्वाभावात्
इति ऋष्यादिविचारः ॥

अग्निं दूतम् । वृणीमह इति । वृङ् संभक्तावित्यतः महिङि टेरेत्वे श्नाप्रत्यये 'ईहल्यघोः'
(६।४।११३) इति ईत्वे वृणीमह इति रूपम् ॥ १ ॥

अग्निमग्निम् । कंचिद्विशेषमिति । जामदग्न्यत्वरूपं विशेषं चाहेत्यर्थः । हवीमभिरिति । ह्वेञः
बाहुलिके ईमनिन् प्रत्यये छान्दसे सम्प्रसारणे पूर्वरूपे गुणे अवादेशे भिसि च हवीमभिरिति
रूपम् । हवन्तेति । ह्वेञो लङि 'बहुलं छन्दसि' (६।१।३४) इति सम्प्रसारणे अडभावे
झस्यान्तादेशे हवन्तेति रूपम् ॥ २ ॥

अग्ने देवान् । जज्ञान इति । जनी प्रादुर्भाव इत्यतः लिटि तस्य कानचि द्वित्वादौ 'गमहनजनखनघसां लोपः क्ङित्यनङि' (६।४।९८) इति उपधालोपे 'स्तोश्चुनाश्चुः' (८।४।४०) इति श्चुत्वे जज्ञान इति रूपम् ॥ ३ ॥

ताँ उशतः । आसत्सीति । आङ्पूर्वात् सदो सिपि शब्लुकि आसत्सीति वैदिकं रूपम् । आसीदसीति आङ्पूर्वात् सदेः शपि 'पाघ्राध्मा...' (७।३।७८) इत्यादिना धातोः सीद इत्यादेशे सिपि आसीदसीति भाषायां रूपम् । भाष्ये उपविशसीति कालव्यत्ययेनोक्तमिति सूचयितुम् उपविशसीत्यनूद्य उपवेक्ष्यसीत्यक्तम् ॥ ४ ॥

घृताहवन । युङ्लुगन्तादिति । यङ्लुगन्ताद्दीव्यतेरसुनि द्वित्वादौ संज्ञापूर्वकविधेरनित्यत्वेन 'गुणो यङलुकोः' (७।४।८२) इति गुणाभावे दीर्घोऽकितः (७।४।९४) इति दीर्घे दीदिव इति रूपम् । रिषत इति । इतः परं टीकायां श्रूयमाणम् अन्तर्णीतण्यर्थोऽयमिति वाक्यं प्रक्षिप्तम् । न टीकावाक्यम् । अवश्यं चैतदेवं विज्ञेयम् । नाशकानितीति नाशकर्तृत्वेन व्याख्यानात् तथा रक्षःस्विन इति पदस्य रक्षःसम्बन्धिन इति व्याख्यानात् । अन्यथा रक्षःस्वामिन इति व्याकुर्युः । रक्षःस्विन इति । रक्षःशब्दात् 'अस्मायामेधास्रजोविनिः' (५।२।१२१) इति विनिप्रत्यये शसि च रक्षःस्विन इति रूपम् ॥ ५ ॥

अग्निनाग्निः । जुह्वास्य इति । यद्यपि हु दानादानयोरित्यस्मात् 'द्युतिगमिजुहोतीनां द्वे च' (वा. सू. ३।२।१७८) इति वार्तिकेन क्विपि द्वित्वे च 'जुहोतेर्दीर्घश्च (वा. सू. ३।२।१७८) इति वार्तिकेन दीर्घे जुहूरिति रूपम् । तथापि नपुंसकत्वविवक्षया 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१।२।४७) इति ह्रस्वत्वे जुहु होमाधिकरणं आस्यं यस्येति व्याख्यानमुपपन्नमिति बोध्यम् ॥ ६, २२ ॥

## द्वादशसूक्ते द्वितीयोवर्गः

कविमग्निम् । होतृगं प्रतीति । होतारं च प्रतीति ग्राह्यम् ॥ ७ ॥

यस्त्वाम् । सपर्यतीति । सपर् पूजायामिति धातोः कण्ड्वादित्वात् यकि लिटि तिपि सपर्यतीति रूपम् ॥ ८ ॥

यो अग्निम् । धातुपाठेन 'देववीतिस्तु तद्गतिरि'ति व्याख्यानं घटयति वीगतीति ॥ ९ ॥

सनः पावक । पूञ् पवन इत्यस्मात् कर्तरि ण्वुल्प्रत्यये पावकेति रूपम् । दीदिव इति । दीव्यतेर्यङ्लुगन्तादसुनि द्वित्वादौ संज्ञापूर्वकविधेरनित्यत्वेन गुणाभावे 'दीर्घोऽकितः (७।४।९४) इति अभ्यासस्य दीर्घत्वे दीदिव इति रूपम् ॥ १० ॥

सन:स्तवान: । नवीयसेति । नवशब्दादीयसुनि तृतीयैकवचने नवीयसेति रूपम् । स्तवान इति । ष्टुञ् स्तुतावित्यत: कर्मणि लटि तस्य शानचादेशे 'छन्दस्युभयथा' (६।४।६४) इति आर्धधातुकत्वेन यगाद्यभावे गुणे स्तवान इति छन्दसि रूपम् ॥ ११ ॥

अग्ने शुक्रेण । हूतिभिरिति । ह्वेञ: क्तिनि संप्रसारणे तृतीयाबहुवचने हूतिभिरिति रूपम् ॥ १२, २३, १२ ॥

## त्रयोदशसूक्ते प्रथमोवर्ग:

सुसमिद्ध: । आप्रीसूक्तमिति । आसम्यक् प्रीत्यते याभि: ऋग्भिर्भगवान् ता ऋच: आप्रिय इत्युच्यन्ते । 'आप्रीभिराप्रीणाति' इति ब्राह्मणवाक्यात् । आप्रीभिर्युक्तं सूक्तम् आप्रीसूक्तमित्यर्थ: । यक्षीति । यजेर्लोट: सिपि शब्लुकि 'वा छन्दसि' (३।४।८८) इति सेर्हित्वाभावे 'व्रश्च...' (८।२।३६) इति षत्वे कत्वे 'आदेशप्रत्यययो:' (८।३।५९) इति सस्य षत्वे यक्षीति छान्दसं रूपम् । बहुवारमुच्यत इति । मेधातिथिना देवानावहेति बहुवारमुच्यते । तेन तस्य यज्ञादरे तात्पर्यं गम्यते अत: आदरात् यजेत्याहाचार्यो भाष्यकार इत्यर्थ: । एतेन ऋचि यज्ञादरसूचकपदस्याभावादादराद्यजेति कथनमनुपपन्नमिति परास्तम् ॥ १ ॥

मधुमन्तम् । कृणुहीति । कृवि हिंसायां करणे चेति धातो: 'इदितो नुम्धातो:' (७।१।५८) इति नुमि लोट: सेर्ह्यादेशे 'धिन्विकृण्व्योरच' (३।१।८०) इति उप्रत्यये वकारस्याकारादेशे 'अतो लोप' (६।४।४८) इति अकारस्य लोपे 'छन्दसि वेति वक्तव्यम्' (वा.सू. ६।१।१) इति वार्तिकेन हेर्लुगभावे कृणुहीति रूपम् ॥ २ ॥

नराशंसम् । शंस स्तुताविति । आङ्पूर्वादस्मात् कर्मणि घञि आशंसमिति रूपम् । नरैराशंस्यत इति । अत्रानुस्वार: प्रक्षिप्त: । शंस स्तुतावित्यस्मात्कर्मणि यकि 'अनिदितां हल उपधाया: क्ङिति' (६।४।२४) इति नलोपावश्यंभावात् ॥ ३ ॥

अग्ने सुखतमे । मनुस्शब्दोऽयमिति । मनेरुसि प्रत्यये मनुस् इति शब्दो निष्पद्यत इति ज्ञेयम् । ननु 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितै:' (२।१।३६) इति सूत्रेण हितशब्दयोगे चतुर्थीसमासविधानात् ज्ञापकात् 'मनूनां च हितत्वेने'ति भाष्ये चतुर्थ्या भाव्यं कथं षष्ठीप्रयोग इत्यत आह । चतुर्थ्यर्थ इति । मूले मनुर्हित इत्यत्र चतुर्थी लुप्तास्ति तदर्थज्ञापनाय तदर्थज्ञापनार्थमिति यावत् षष्ठी प्रयुक्ता भाष्यकृतेत्यर्थ: । मूले चतुर्थीविभक्तिरुपपदविभक्तिरेव, न कारकविभक्ति: । ततश्च चतुर्थ्या न सम्प्रदानत्वमर्थ इति प्रतिपत्तव्यम् । अपि तु षष्ठ्यर्थ एव चतुर्थ्या अर्थ इति प्रतिपत्तव्यमिति ज्ञापनाय षष्ठीप्रयोग: कृत इति भाव: ॥ ४ ॥

स्तृणीत । चक्षिङः ख्याञभाव इति । इतः परं असनयोश्चेति वाक्यमुच्छिन्नं छान्दसः । छन्दस्युभयथेति वा प्रकृत्यन्तरं वेत्येतावत्प्रक्षिप्तम् । अवश्यं चैतदेवं विज्ञेयम् । 'असनयोश्च' इति वार्तिकेनैव ख्याञादेशप्रतिषेधेन ख्याञाभावस्य छान्दसतानुसरणायोगात् । वार्तिकेनैव ख्याञो निषिद्धत्वेन ल्युटः 'छन्दस्युभयथा' (६।४।१६७) इति सार्वधातुकत्वमाश्रित्यार्धधातुकाधिकारविहितः ख्याञ् इह न भवतीति समाधानायोगात् । प्रयोजनाभावे प्रकृत्यन्तरत्वानुसरणायोगात् ॥ ५ ॥

विश्रयन्ताम् । श्रौतं पदद्वयमुपादाय भाष्यस्थपदद्वयेन संयोजयति । द्वारो देवीः । द्वारो देव्य इति । द्वार इति षष्ठ्यन्तं पदम् । तेन तत्सम्बन्धोक्त्या देवीनां दासीत्वं लभ्यते । श्रिय इति योग्यतया सम्बध्यत इति भावेन श्रियो दास्य इति भाष्य कृता उक्तमिति बोध्यम् । यष्टव इति । यजेः 'तुमर्थे सेसेनस' (३।४।९) इति तवेन् प्रत्यये षत्वे च यष्टव इति रूपम् ॥ ६, २४ ॥

## त्रयोदशसूक्ते द्वितीयोवर्गः

नक्तोषासा । कसुनिति । अस्मात् । कसुनि 'ग्रहि ज्या....' (६।१।१६) इति सम्प्रसारणे उषा इति रूपमिति भावः ॥ ७ ॥

ता सुजिह्वा । यक्षतामिति । यजेर्लोटि तस्य तामादेशे शपि 'सिब्बहुलं लेटि' (३।१।३४) इति बहुलग्रहणात् शपः पूर्वं सिपि षत्वकत्वयोः यक्षतामिति छान्दसं रूपम् ॥ ८ ॥

इळा ॥ इळा व्यावृत्त्यर्थो वेति । तु शब्द एवार्थः । सा च भारती मही एव न त्विळेति इळाव्यावृत्तिबोधनार्थ इत्यर्थः । यथा महीशब्देन भारती उक्ता तथा इळाशब्देनापि गुणातिशय प्रतिपादनाय उक्तेति शङ्कानिरासाय इळाशब्दोक्तत्वव्यावृत्त्यर्थ इति भावः ॥ ९ ॥

इह त्वष्टारम् । त्विषेर्देवतायामिति । त्विषेर्धातोर्देवतायामभिधेयायां तृन् प्रत्ययो भवति । उपधायाः अकारः इडभावश्चेति वार्तिकार्थः ॥ १० ॥

अवसृज । नस्(सन्) शब्दस्य लोकेऽप्रसिद्धत्वादाह । यद्वेति ॥ ११ ॥

स्वाहा । अकारप्रत्यय इति । कप्रत्यय इत्यर्थः । कर्मणीदं रूपमिति । हा धातोः कर्मणि कप्रत्यये आकारलोपे नञ्समासे टापि आहेति रूपम् । ततः सु आ इति उपसर्गद्वययोगे स्वाहेति रूपम् । कृणोतनेति । कृवि हिंसाकरणयोः इत्यस्य इदित्वान्नुमि लोटि 'धिन्विकृण्व्योरच' (३।१।८०) इति उप्रत्यये वकारस्याकादेशे 'अतो लोपः' (६।४।४८) इत्यकारलोपे लोटस्तिपि

तिपो व्यत्ययेन 'तप्तनप्तनथनाश्च' (७।१।४५) इति तनबादेशे कृते गुणे कृणोतने छान्दसं रूपम् ॥ १२, २५, १३ ॥

## चतुर्दशसूक्ते प्रथमोवर्गः

ऐभिरग्ने । अस्मादिति । दुहेरुत्प्रत्यये डित्वात् टिलोपे शसि इयङुवङ्प्रकरणे 'तन्वादी छन्दसि बहुलमुपसंख्यानम्' (वा. सू. ६।४।८६) इति उवङादेशे दुव इति रूपम् ॥ १ ॥

आत्वा कण्वाः । अहूषतेति । ह्वेञो लुङि तदादेशझस्यान्तादेशे सिचि सम्प्रसारणे 'हल (६।४।२) इति दीर्घे गुणाभावे 'आदेशप्रत्यययोः' (८।३।५९) इति षत्वे अडागमे च अहूषते रूपम् । आगहीति । गमेर्लोटि तस्य सिपि तस्य हित्वे मकारलोपे विकरणलोपे च आङ्यो छान्दसं रूपम् ॥ २ ॥

इन्द्रवायू । एवशब्द इति । 'त्वष्टा तेजस्वतो विष्णुरि'त्यतो अनुवृत्तेन विष्णुरित्यतो सम्बध्य इत्यर्थः । मरुच्छब्देत्विति । मरुच्छब्दे व्याख्येये सतीत्यर्थः । मारुतशब्दो गणविशेषणम् । ततः मरुच्छब्दो व्याख्येय इति भावः ॥ ३ ॥

प्रवोभ्रियन्त । णेश्छन्दसीतीति । ण्यन्तान्मदेः 'णेश्छन्दसि' (३।२।१३७) इति इष्णुच्प्रत्य णिचि उपधावृद्धौ ''अयामन्ताल्वाय्येत्न्विष्णुषु' (६।४।५५) इति णेरयादेशे जसि मादयिष्ण इति रूपम् । द्रुगताविति । अस्मात् सप्रत्यये धातोरुकारस्याकारे पुगागमे जसि द्रप्सा इति रूपम् मध्व इति । मधुशब्दात् जसि गुणाभावे यणादेशे मध्व इति छान्दसं रूपम् । प्रभ्रियन्त इति । भृञ कर्मणि यकि 'रिङ्शयग्लिङ्क्षु' (७।४।२८) इति रिङादेशे भ्रियन्त इति रूपम् ॥ ४ ॥

ईळते त्वाम् । भाष्यस्थं अवनार्थप्रवृत्तित इति अवस्युपदव्याख्यानं घटयति । अवः (वं अवनमिति । अवशब्दात् 'सुप आत्मनः क्यच्' (३।१।८) इति क्यच्प्रत्यये 'सर्वप्रातिपदिकेभ्यो लालसायामसुग्वक्तव्यः' (वा.सू. ७।१।५१) इत्युक्त्वा 'सुगित्येक' इत्युक्तत्वात् । अत्र सुगागमे अवस्यशब्दो भवति । अस्मात् 'क्याच्छन्दसि' (३।२।१७०) इति उप्रत्यये अकारलोपे अवस्युरिति रूपमिति ज्ञेयम् । ननु मेधातिथाविति । अत्र प्रतीकग्रहणानन्तरं टीकायां श्रूयमाणम् अस्मदो द्वयोश्चेति वचनादिति भाव इति वाक्यं प्रक्षिप्तम् । आत्मभिन्नधर्माणां बहुत्वात् वाक्यप्रयोक्तृमात्रविषयं बहुवचनान्तं पदमिति भाव इत्युच्छिन्नम् । अवश्यं चैतदेवं विज्ञेयम् 'अस्मदो द्वयोश्च' (१।२।५९) इति सूत्रस्यास्मदः एकत्वे द्वित्वे च बहुवचनमन्यतरस्यां भवतीत्यर्थकत्वेन प्रकृते चास्मच्छब्दाभावेनानुदाहार्यत्वात् । बहुवचनं युक्तमिति । इतःपरं टीकायां

श्रूयमाणं वाशब्दावितरेतरसमुच्चय इति वाक्यं प्रक्षिप्तम् । न टीकावाक्यम् । अवश्यं चैतदेवं विज्ञेयम् । भाष्यस्थयोरितरेतरविकल्पार्थकत्वेनेतरसमुच्चयार्थकत्वाभावात् । कण्वा वयमित्याद्युपपद्यत इति वाक्ये वयमिति प्रक्षिप्तम् । ऋचि वयमिति पदाभावेन तदनुपपत्तिशङ्कायोगात् । ननु उत्तरेषामिति भवितव्यं कथमुत्तराणामित्यत आह । उच्छब्दादिति । 'तस्यां तस्यामवस्थायां तत्तत्प्राप्तिविशेषतः । तत्तद्वाक्यस्वरूपेण प्रार्थनादिषु पश्यती' (ऋग्भाष्य) ति समाधानस्याभिहितत्वात्पुनः समाधानाभिधानं व्यर्थमित्यत आह । तस्यां तस्यामिति । कण्वासो वयमिति यावदिति । वयमित्युक्ते योऽर्थोऽवगम्यते कण्वास इत्यनेनापि स एवार्थोऽवगम्यत इति भावः । न चैवं सति उत्तमपुरुषप्रयोगापत्तिः । अस्मच्छब्देनार्थविशेषप्रतिपादनेच्छायामेवोत्तमपुरुषस्य विहितत्वेन प्रकृते तेन शब्देन कण्वविवक्षा भवति ॥ ५ ॥

घृतपृष्ठाः । ननु विदोषिणेत्यत्र विगता दोषा यस्मात्स इति बहुव्रीहौ विदोषेणेति भाव्यम् । कथं इनिप्रत्ययप्रयोगः व्यर्थत्वादित्यत आह । विशब्दो नञर्थ इति । ततश्च दोषस्याभावो विदोषः सोऽस्यास्तीत्यर्थे इनिप्रत्यय इति भावः ॥ ६, २६ ॥

## चतुर्दशसूक्ते द्वितीयोवर्गः

तान्यजत्रान् । यजत्रानिति । यजेः अमिनक्षियजिवधिपतिभ्योऽत्रन् (उ. ३९२) इत्यत्रन् प्रत्यये यजत्रानिति रूपम् ॥ ७ ॥

ये यजत्राः । अनुदात्तं सर्वमपदादाविति । 'अनुदात्तं सर्वमपदादौ' (८।१।१८) इति अधिकार सूत्रेणैकवाक्यतापन्ने 'तेमयावेकवचनस्य' (८।१।२) इति सूत्रेणानुदात्तत्वस्मरणादित्यर्थः । ननु द्वितीयस्य ते शब्दस्य तच्छब्दरूपत्वाङ्गीकारेऽपि अनुदात्तत्वं भविष्यति । 'तस्य परमाम्रेडितम्' (८।१।२) इत्यनेनाम्रेडितसंज्ञां विधाय 'अनुदात्तं च' (८।१।३) इति अनुदात्तत्वविधानादिति चेन्न । 'तुञ्जेऽतुञ्जे, योगेऽयोगे' इत्यादाविवावग्रहैकपदत्वयोः प्रसङ्गात् । यत उदात्त इति । ततशब्दः फिट् स्वरेणान्तोदात्तः । जसादेशस्य शी इत्येतस्य सुप्त्वादनुदात्तस्योदात्तशब्दाकारेण एकादेशो 'एकादेश उदात्तेनोदात्तः' (८।१।५) इति उदात्तत्वे त इति बहुवचनान्तमुदात्तमिति भावः । अन्यथा सोप्यनुदात्त इति । आद्यस्य ते शब्दस्य नञा निर्दिष्टमनित्यमित्यङ्गीकृत्य पादादित्वेऽपि युष्मच्छब्दरूपत्वाङ्गीकारे आद्यस्तेशब्दोऽपि नञा निर्दिष्टस्यानित्यत्वादेव पादादित्वेऽपि अनुदात्तत्वे प्रसज्येतेत्यर्थः । द्विरावृत्त इति । अङ्गीकारवादेन द्विरावृत्तत्वाभिधानमिति द्रष्टव्यम् ॥ ८ ॥

आकीम् । आवक्षतीति । वहेर्लेटि अडागमे 'सिब्बहुलं लेटि' (३।१।३४) इति सिपि च 'हो ढः' (८।२।३१) इति हकारस्य ढत्वे षत्वे च 'इतश्च लोपः' (३।४।९७) इति इकारस्य लोपाभावे वक्षतीति रूपम् ॥ ९ ॥

विश्वेभिः । ननु 'मनु द्व्यच्कोऽकर्तरि' (३४) इति लिङ्गानुशासनसूत्रात् धामशब्दस्य नपुंसकत्वात् मित्रधामान इति कथमित्यत आह । धामशब्दमिति । 'शलाका नित्यं स्त्रियाम्' (लिङ्गानु. सू. ३४) इत्यत्र नित्यग्रहणेन विनापि स्त्रीत्वस्य नित्यत्वसिद्धेः पुनर्नित्यग्रहणेनान्यलिङ्ग विधेरनित्यत्वज्ञापनात् 'मनुद्व्यच्क' इत्यस्यानित्यत्वात् पुल्लिङ्गत्वमिति भावः । बहुव्रीहिद्वयमिति । विष्णुधामत्वादित्येको बहुव्रीहिः । मित्रधामान इत्यपरो बहुव्रीहिरिति बहुव्रीहिद्वयमित्यर्थः ॥ १० ॥

त्वं होता । 'सेमंनो अध्वरमि'ति श्रुतौ स इमं नः इति पदच्छेदमभिप्रेत्याह । स त्वमिति ॥ ११ ॥

युक्ष्व । अग्निसप्रभा इति । अत्र पद्मेत्युच्छिन्नं ग्राह्यम् । ततश्चैवं टीकावाक्यपाठः । पद्माग्निसप्रभा इति । काञ्चनाश्वतर्य अग्निसप्रभाः काञ्चन पद्मसप्रभा इति भावः । युक्ष्वेति । युजेः स्थासि तदादेशस्य से इत्यस्य 'सवाभ्यां वामौ' (३।४।९१) इति एकारस्य वत्वे विकरणलोपे कुत्वचर्त्वयोः सकारस्य षत्वे च युक्ष्वेति रूपम् । आवहेति । इतः परं टीकायां श्रूयमाणं पद्मसप्रभा इति अन्यत्रोक्तस्य विवरणमिति प्रक्षिप्तम् । अरुषीनित्येतद्विवरणत्वसम्भवेनानुपयोगकथनायोगात् । भाष्ये पद्मसप्रभ इति पुल्लिङ्गपदाभावाच्च ॥ १२, २७, १४ ॥

## पञ्चदशसूक्ते प्रथमोवर्गः

इन्द्रसोमम् । ऋतव्यमिति । ऋतुशब्दात् 'साऽस्य देवता' (४।२।२४) इत्यर्थे 'वाय्वृतुपित्रुषसोयत्' । इति यत्प्रत्यये 'ओर्गुणः' (६।४।१४६) इति गुणे 'वान्तो यि प्रत्यये' । (६।१।७९) इति अवादेशे ऋतव्यमिति ज्ञेयम् । सामान्यतोऽर्थमाहेति । सर्वशब्दसाधारणमेकमाहेत्यर्थः अत्रत्याः सर्वे ऋतुशब्दाः मार्गपात्रदेवता रूपार्थत्रयप्रतिपादकाः । अत्र मार्गरूप एकार्थ इदानीमुच्यत इति भावः । क्तुप्रत्यय इति । अर्तेश्चतुः (उ. ७४) इत्यनेन तु प्रत्ययः सः किच्चेति भावः । विशेष्टुं तुशब्द इति । इतः परं टीकायां श्रूयमाणं तथा चादित्यमार्गस्थाः कालदेवता ऋतुशब्दा इत्यर्था इति वाक्यं प्रक्षिप्तम् । न टीकावाक्यम् । अवश्यं चैतदेवं विज्ञेयम् । भाष्ये 'ऋतुमार्गस्त्विवति । मार्गपरतयैव ऋतुशब्दस्य व्याख्यातत्वेन आदित्यमार्गस्था इत्युक्त्ययोगात् । 'ज्ञापयन्ति स्वलिङ्गानि' इति ऋतुशब्दस्य देवतापरत्वेन

व्याख्यास्यमानत्वाच्च । गमेस्ताच्छील्ये न इति नप्रत्ययो डिच्चेति । अत्र न इतीति पदं प्रक्षिप्तम् । ततश्चैवं टीकावाक्यपाठः । गमेस्ताच्छील्ये नप्रत्ययो डिच्चेति । अवश्यं चैतदेवं विज्ञेयम् । ताच्छील्येन इति औणादिकसूत्राभावेन गमेस्ताच्छील्येऽर्थे बाहुलिकनप्रत्ययस्यैवाश्रयणीयत्वात् ।

उक्तार्थमिति । गमेर्नयतेश्च ड इत्युक्तावयवार्थमित्यर्थः । ऋतुशब्देन यदि देवताः स्वीक्रियन्त इति । अत्र देवताः स्वीक्रियन्त इति प्रक्षिप्तम् । मार्गः स्वीक्रियत इत्युच्छन्नम् । ततश्चैवं टीकावाक्यपाठः । ऋतुशब्देन यदि मार्गः स्वीक्रियते तर्हीति । अवश्यं चैतदेवं विज्ञेयम् । ऋतुशब्दस्य मार्गवाचकत्वेन पूर्वं व्याख्याततत्वात् । ऋतुशब्दस्य मार्गवाचकत्वे तदोकस इत्युनुपपन्नं स्यात् । सोमानां मार्गस्थानत्वाभावादित्याक्षेपसम्भवाच्च । सत्यमृतुशब्देनेति । ऋतुशब्देन मार्गग्रहणे तदोकस इत्यनुपपन्नमिति सत्यम् । तथापि तस्य देवतावाचित्वेन व्याख्यास्यमानत्वात् ऋतुशब्देन देवतोच्यते । नचैवमपि किं प्रकृत इति वाच्यम् । देवतापात्रमपि देवतावाचकेन शब्देन गृह्यते । एवं च तदोकस इत्यत्र ऋतुपात्रपरामर्शे न काप्यनुपपत्तिरिति भावः ।

नेष्टापि कस्मादिति । नेष्टृनामक ऋत्विगपि कुतो नेष्टेत्युच्यत इत्यत आहेत्यर्थः । अनर्थान्तरत्वप्रसङ्गादिति । पत्नीशालां प्रति स्त्रीनेतृत्वस्य नेष्टृशब्दार्थत्वेन ग्राव इत्यस्यापि स्त्रीमत्त्वरूपार्थत्वे स्त्रीनेतृत्वे पर्यवसानादनर्थान्तरत्वप्रसङ्ग इत्यर्थः । ऋतुशब्दो मार्गवाचीति । इतः परं टीकायां श्रूयमाणं 'तत्रत्या देवता लक्षणया तच्छब्दा' इत्येतावत् प्रक्षिप्तम् । ततश्चैवं टीकावाक्यपाठः । ऋतुशब्दो मार्गवाचीत्युक्तम् । इदानीं ऋतुशब्दं देवतास्वेव निर्वक्तीति । अवश्यं चैतदेवं विज्ञेयम् । पूर्वं भाष्यकृता ऋतुमार्गस्त्वित्येवोक्तत्वेनान्यथानुवादप्रसङ्गात् । करण एवेति । करणे क्तुप्रत्ययः । ऋच्छन्ति जानन्त्येभिरिति विग्रह इति भावः । कुसुमोद्भवादीनीति । इतः परं टीकायां श्रूयमाणं 'अथवा पूर्वं ऋतुशब्दो मार्ग एव निरुक्तः । इदानीं पुनः ऋतुदेवतास्विति भेदः । इति वाक्यं प्रक्षिप्तम् । न टीकावाक्यम् । ऋतु शब्दव्याख्यानयोरभेदप्रसक्त्यभावेन भेदाभिधानायोगात् । तदीयस्थपात्रस्येति । पोतृशब्दात्तस्येदमित्यर्थे 'तद्धिताः' (४।१।७६) इति बहुवचनज्ञापितोऽकार प्रत्यय इति भावः ॥ १ ॥

मरुतः । पुनीतनेति । पूञ् पवन इत्येतस्मात् लोट्मध्यमपुरुषबहुवचने तदादेशतशब्दस्य 'तप्तन प्तनथनाश्च' (७।१।४५) इति तनादेशे श्नाप्रत्यये तस्य 'ईहल्यघोः' (६।४।११३) इति ईत्वे 'प्वादीनां ह्रस्व' इति धातोः ह्रस्वत्वे पुनीतनेति रूपमिति ज्ञेयम् । सुदानव इति । सुपूर्वात् दाञः 'दाभाभ्यां नुः' (उ. ३१९) इति नु प्रत्यये जसि गुणेऽवादेशे सुदानव इति रूपम् ॥ २ ॥

अभियज्ञम् । अभिगृणीहीति । गॄ शब्द इत्यतः लोटः सिपि सेर्हि इत्यादेशे श्नाप्रत्यये तस्य ईत्वे प्वादीनां ह्रस्वत्वे गृणीहीति रूपम् ॥ ३ ॥

अग्ने देवान् । स्थानशब्दस्येति । स्थाने निरूढस्य योनिशब्दस्य काले निरूढत्वा-भावादित्यर्थः ॥ ४ ॥

ब्राह्मणादिन्द्र । तस्येदमिति । ब्रह्मन् शब्दात् 'तस्येदम्' (४।३।१२०) इत्यर्थे अणि कृते । (अन् ६।४।१६७) प्रकृतिभावे ब्राह्मणशब्दः पात्रविशेषवाचक इति भावः ॥ ५ ॥

युवं दक्षम् । युवमिति । युष्मद् औ इति स्थिते 'ङे प्रथमयोरम्' (७।१।२८) इति औकार-स्यामादेशे 'युवावौ द्विवचने' (७।२।९२) इति मपर्यन्तस्य युवादेशे 'प्रथमायाश्च द्विवचने भाषायाम्' (७।२।८८) इत्यत्र भाषायामित्युक्तेरात्वाभावेन त्यदाद्यत्वे युवमिति रूपम् । दुर्दभमिति । संहितायां दुरित्यस्य रेफलोपः दीर्घश्च दस्य ळत्वं च पृषोदरादित्वात् । ततश्च दूळभमिति रूपम् ॥ ६, २८ ॥

## पंचदशसूक्ते द्वितीयोवर्गः

द्रविणोदाः । यद्यत्र होतेति । अस्यां ऋचि द्रविणोदा इत्यस्य होतृवाचकत्वं स्यात् तर्हि उत्तरस्यां ऋचि द्रविणसुशब्देन अग्निग्रहणमनुपन्नं स्यात् प्रायपाठविरोधादिति भावः । एतेनात्र द्रविणोदस् शब्दस्य होतृवाचकत्वेऽपि उत्तरस्यामृचि(तस्याग्निवाचकत्वात्) ददात्विति प्रार्थनं युक्तमेवेत्ययुक्तत्वाभिधानमयुक्तमिति परास्तम् । प्रायपाठविरोधे तात्पर्यात् । न कोऽपि विरोध इति । प्रायपाठविरोधो नेत्यर्थः । अत्राप्यग्निरेवेति । उत्तरत्रेवात्राप्यग्निरेव द्रविणोदाः न होतृदेवतात्वेनाग्निरिति किं न स्यादित्यर्थः । देवतास्तुताविति स्तावकान्तर्गताग्निरूपस्यैव यज्ञे स्तुतिकर्तृत्वसंभवादन्यस्यासम्भवादित्यर्थः । द्रविणोदा इत्यत्र विभक्तिविपरिणामेन व्याख्याने स्तुतिकर्तृत्वमसिद्धमित्यत आह । विभक्तिव्यत्यासेनेति । ऋचं योजयति द्रविणोदा इति । अत्र होतेत्यतः परं अग्निरित्युच्छिन्नम् । होतृका इत्यतः परमग्नय इत्युच्छिन्नम् । ततश्चैवं टीका-वाक्यपाठः । द्रविणोदा होता अग्निश्च द्रविणसः होतृका अग्नयश्चाध्वर इति । अवश्यं चैतदेवं विज्ञेयम् । भाष्यकृता 'अग्निश्चैवाग्नयस्तेषामिति' 'द्रविणोदा द्रविणस' इति शब्दार्थतया अग्नीनां कथितत्वात् ददातेरसुन् प्रत्ययो डिच्च ततश्च दा इति रूपम् । द्रविणशब्दपर्यायस्य छान्दस द्रविणसुशब्दस्य श्रितादिषूपसंख्यानात् द्वितीयासमासः । ततश्च द्रविणोदा इति रूपम् । द्रविणसुशब्दात् होतृवाचकात् जसि द्रविणस इति रूपम् । देवमिति । अत्राग्निभिः सहितं प्रधानेति प्रक्षिप्तम् । ततश्चैवं टीकावाक्यपाठः । 'देवं विष्णुमग्निं चेळत' इति । अवश्यं

चैतदेवं विज्ञेयम्। अस्यां श्रुतौ अग्निमित्येतदर्थकदेवमिति शब्दवत् अग्निभिः सहितमित्येतदर्थक शब्दाभावात्॥ ७॥

द्रविणोदाः। पिपीषति॥ प्रतिष्ठतेति। स्थाधातोः 'समवप्रविभ्यः स्थः' (१।३।२२) इत्यात्मनेपदे लङो झस्य छान्दसे अत् इत्यादेशे शपि 'प्राघ्राध्मा...' (७।३।७८) इति धातोस्तिष्ठादेशे छान्दसत्वात् अडभावे प्रतिष्ठतेति छान्दसं रूपम्। जुहोतेति। जुहोतेर्लोट्-मध्यमपुरुष बहुवचनस्य 'तप्तनप्तनथनाश्च' (७।१।४५) इति तप इत्यादेशे गुणे श्रुविकरणत्वात् द्वित्वे रूपम्॥ ९॥

यत्त्वा तुरीयम्। तुरीयमित्येतत् न यज्ञविशेषणं किंतु यज्ञावृत्तिविशेषणमिति भावेनाह चतुर्थवारमिति। यज्ञावृत्तेस्तुरीयत्वं साधयितुमाह। चतुर्थ्या हीति। स्तावकऋचस्तृतीयत्वात् स्तुतिरूपयज्ञानुष्ठानस्यापि तुरीयत्वमिति भावः। ददिरिति। दाधातोः 'आदृगमहनजनः किकिनौ लिट् च' (३।२।१७१) इति किप्रत्यये तस्य लिड्वद्भावेन द्वित्वादौ आकारलोपे ददिरिति रूपमिति ज्ञेयम्॥ १०॥

अश्विना। दीव्यतेरिति। संज्ञापूर्वकविधेरनित्यत्वात् 'गुणो यङ्लुकोः' (७।४।८२) इति न गुणः॥ ११॥

गार्हपत्येन। कवयो विप्रा इति। द्वादशग्रहाणां ऋतुदेवताकत्वात् अनेन मन्त्रेण विष्णोः ऋत्वाधिपत्यं सिद्धमिति भावः॥ १२, २९, १५॥

## षोडशसूक्ते प्रथमोवर्गः

आत्वाहन्तु। ऊरशब्द इति। इतः परं टीकायां श्रूयमाणं 'छन्दसि धातुना विनापि प्रयुज्यत' इति वाक्यं प्रक्षिप्तम्। न टीकावाक्यम्। अवश्यं चैतदेवं विज्ञेयम्। (२।४।९४) ते प्राग्धातोरित्यादिना गत्युपसर्गसंज्ञकानामेव धातुसाहित्यनियमविधानेऽपि ऊरीशब्दसमानार्थक-स्योरशब्दस्य ऊर्यादिगणे पाठालाभेन गतिसंज्ञारहितस्य धातुसाहित्यनियमाभावेन छान्दसत्व-माश्रित्य धातुना विना प्रयोगसमर्थनवैय्यर्थ्यात्। ऊराणीति प्रतीकम्। विषयानूरीकुर्वन्तीति व्याख्यानमिति विवेकः। चक्षांसीति 'चक्षेर्बहुलं शिच्च' (३-६८३) इति असुन्प्रत्यये शित्त्वात् ख्याञादेशाभावे जसि चक्षांसीति रूपम्॥ १॥

इमा धानाः। स्नेहसाम्यादिति। भोक्तुः घृतस्नेहः भजनीयस्य भक्तौ स्नेहः इति स्नेहसाम्यात् इत्यर्थः। घृतशब्दः योगवृत्त्या भक्तौ वर्तत इति भावः। उपवक्षत इति। उपपूर्वात् वहेर्लेटि

मध्यमपुरुषद्विवचनस्य व्यत्ययेन प्रथमपुरुषद्विवचनादेशतसि 'लेटोऽडाटौ' (३।४।९४) इत्यडागमे 'सिब्बहुलं लेटि' (३।१।३४) इति सिपि 'हो ढः' (८।२।३१) इति ढत्वे 'षढोः कः सि' (८।२।४१) इति कत्वे षत्वे च उपवक्षतः इति छान्दसं रूपम्। उपवहतमिति। लोण्मध्यमपुरुषद्विवचनरूपम्॥ २॥

इन्द्रं प्रातर्हवामहे। क्रियाशब्दोऽयमिति। इन्द्र शब्दः परमैश्वर्यरूपधात्वर्थमाश्रित्य प्रवृत्त इति क्रियाशब्दः। क्रियाशब्द इति प्रकृताभिप्रायेणोक्तम्। धातोरिन्द्रशब्दावयवत्वात् अवयवार्थमाश्रित्य प्रवृत्तत्वात् यौगिकशब्द इत्यत्र तात्पर्यम्॥ ३॥

उपनः। हवामह इति। ह्वेञः लटि तस्य महिङि शपि 'बहुलं छन्दसि'। (६।१।३४) इति सम्प्रसारणे 'सम्प्रसारणाच्च' (६।१।१०८) इति एकारस्य पूर्वरूपत्वे गुणेऽवादेशे 'अतो दीर्घो यञि' (७।३।१०१) इति दीर्घे टेरेत्वे हवामह इति रूपम्॥ ४॥

सेमं नः स्तोमम्। सेमं न इत्यत्र 'सोऽचि लोपे चेत्पादपूरणम्'। (६।१।१३४) इति सोर्लोपे सेममिति संहितासिद्धिः॥ ५, ३०॥

## षोडशसूक्ते द्वितीयोवर्गः

इमे सोमासः। ईश्वरबले व्यक्तिर्नाम क इत्यत आह। व्यक्तिश्चेति। व्यक्तिश्च बलसाध्यमभीष्ट सम्पादनमित्युक्तार्थे अनुग्रहो नाम कः इत्यत आह। व्यक्तिश्चेति। 'व्यक्तिश्च बलसाध्यमभीष्ट सम्पादनमि'त्युक्तार्थे अनुग्रहो व्यक्ति(भाष्ये)रिति वाक्यं कथं प्रमाणमित्यत आह। अनुग्रह इतीति। 'अनुग्रहो व्यक्तिरेवेत्येव भाष्यपाठः। अनुग्रहव्यक्तिरिति पाठस्तु प्रामादिकः। अत एव टीकायां अनुग्रहेतीति प्रतीकधारणं स्यात्। अनुग्रहपदेनैव पराभीष्टसम्पादनस्य प्राप्तत्वात् व्यक्तिपदवैय्यर्थ्यप्रसङ्गश्च। अनुग्रहो व्यक्तिरिति पाठे तद्गुणानां व्यक्तिरनुग्रह इत्यन्वयः सङ्गच्छते॥ ६॥

अयं ते स्तोमः। इन्द्रेति। इतः परं अग्रियः अग्र्य इति वाक्यमुच्छिन्नम्। अवश्यं चैतदेवं विज्ञेयम्। सर्वाणि पदानि व्याख्याय अग्रिय इति पदस्यैवाव्याख्याने कारणाभावात्। हृदि स्पृगिति। स्पृशेः 'स्पृशोऽनुदके क्विन्' (३।२।५८) इति क्विन् प्रत्यये 'हृद्द्युभ्यां ङेरिति वाच्यम्' इति वार्तिकेन ङेरलुकि हृदिस्पृगिति रूपम्॥ ७॥

विश्वमित्। मदायेति। मदी हर्ष इत्यतः मदोऽनुपसर्गे (३।३।६७) इत्यप् प्रत्यये मदशब्दो निष्पन्नः॥ ८॥

सेमं नः कामम् । पृणप्रीणन इति । पृण प्रीणन इत्यतः शप्रत्यये हेर्लुकि पृणेति रूपमिति भावः । ध्यायतेः क्विबिति । ध्यायतेः 'अन्येभ्योऽपि दृश्यते' इति क्विपि दृशिग्रहणात् (३।२।१७८) सम्प्रसारणे 'हलः' (६।४।२) इत्यनेनाङ्गावयवहल उत्तरस्य सम्प्रसारणस्य दीर्घे स्वाधीति रूपम् । इतः परं टीकायां श्रूयमाणं 'यणादेशः छान्दसः । न भूसुधियोरिति । नञा निर्दिष्टमनित्यमिति वा रूपग्रहणाद्वा' (४३।१३।१४) इति वाक्यत्रयं प्रक्षिप्तम् । न टीकावाक्यम् । अवश्यं चैतदेवं विज्ञेयम् । स्वाधीशब्दात् जसि 'एरनेकाचोऽसंयोगपूर्वस्य' (६।४।८२) इति विहितयणादेशस्य छान्दसत्वाश्रयणायोगात् । 'न भूसुधियोः' (६।४।८५) इति सूत्रे सुधीति रूपग्रहणेन यणादेशनिषेधस्याप्रवृत्तेः तदनित्यत्वाभिधान वैय्यर्थ्यात् । रूपग्रहणाद्वेत्यत्र यणादेशनिषेधाभाव इति साध्यस्यानुक्तत्वेनानन्वितत्वाच्च ॥ ९, ३१, १६ ॥

## सप्तदशसूक्ते प्रथमोवर्गः

इन्द्रावरुणयोः । मृळात इति । मृड सुखे इत्यतो 'लिङर्थे लेट्' (३।४।७) इति लेटि तस्य तसि अडागमे शप्रत्यये गुणाभावे मृळात इति रूपम् ॥ १ ॥

गन्तारा । धर्ताराविति । धृ धारण इत्यतः तृचि गुणे प्रथमाद्विवचने 'ऋतोऽङि...' (७।३।११०) इति गुणे 'अप्तृन्...' (६।४।११) इति दीर्घे 'सुपां सुलुक्' (७।१।३९) इति औकारस्याकारादेशे धर्तारेति छन्दसि रूपम् ॥ २ ॥

अनुकामम् । नेदिष्ठमिति । अन्तिक शब्दादतिशयार्थे इष्ठनि अन्तिकशब्दस्य 'अन्तिकबाढयोर्नेदसाधौ' (५।३।६३) इति नेदादेशे नेदिष्ठमिति रूपम् ॥ ३ ॥

युवाकु । लुप्तषष्ठीति । युष्मच्छब्दात् युवयोरिमा इत्यर्थे आकुप्रत्यये युवादेशे षष्ठीबहुवचनस्य लुकि एतद्रूपमिति भावः । विकरणस्येति । शपो लुगित्यर्थः ॥ ४ ॥

इन्द्रः । उक्थ्य इति । उक्थशब्दात् 'भवे छन्दसि' (४।४।११०) इति सूत्रेण उक्थेषु स्तुत्यत्वेन भवतीत्यर्थे यत् प्रत्यये उक्थ्य इति रूपम् ॥ ५, ३२ ॥

## सप्तदशसूक्ते द्वितीयोवर्गः

तयोरित् । निधीमहीति । ध्यै चिन्तायामित्यतो लिङि तस्य व्यत्ययेनात्मनेपदे महिङि विकरणलोपे सम्प्रसारणे चैतद्रूपम् ॥ ६ ॥

इन्द्रावरुण । सुजिग्युष इति । जि जय इत्यतः लिटि तस्य क्स्वादेशे द्वित्वे 'सन्लिटोर्जेः' (७।३।५७) इति अभ्यासात्परस्य जिशब्दस्य कुत्वे शसि' 'वसोः सम्प्रसारणम्' (६।४।१३१) इति सम्प्रसारणे यणादेशे च एतद्रूपम् । कृतमिति । कृञः लोट्मध्यमपुरुषद्विवचने विकरणलोपे च कृतमिति रूपम् ॥ ७ ॥

इन्द्रावरुण नु । कारकालाभाच्चेति । कर्तुस्तिङ्वाच्यत्वात् तदभावे कर्तृकारकालाभादित्यर्थः । साधयतेरिति । (४४।१२) साधयतेः सनि 'सन्यङोः' (६।१।९) इति द्वित्वे 'सन्यतः' (७।४।७९) इति अभ्यासाकारस्येत्वे पृषोदरादित्वेन धात्वन्तधकारलोपे सनः इडभावे शतृप्रत्यये 'उगितश्च' । (६।३।४५) इति ङीपि शतुर्नुमागमे सप्तमीबहुवचने सिसासन्तीष्विति रूपम् ॥ ८ ॥

प्रवामश्नोतु । हुव इति । ह्वेञो लटि तस्येडादेशे तस्येत्वे विकरणलोपे सम्प्रसारणे उवङादेशे हुव इति छान्दसं रूपम् । ऋधाथ इति । ऋधेः श्नुविकरणत्वेऽपि व्यत्ययेन शपि 'बहुलं छन्दसि' (४।२।७३) इति शपो लुकि लट आथामादेशे टेरेत्वे च ऋधाथे इति छान्दसं रूपम् ॥ ९, ३३, १७, ४ ॥

## अष्टादशसूक्ते प्रथमोवर्गः

सोमानम् । ब्रह्मणस्पत्यादिशब्दार्थ इति । ब्रह्मणस्पतिसोमदक्षिणासदसस्पति नराशंसशब्दार्थाः भाष्ये स्पष्टा इत्यर्थः । कृणुहीति । कृवि हिंसाकरणयोरित्यतः 'इदितो नुमधातोः' (७।१।५८) इति नुमि धिन्विकृण्व्योर च' (३।१।८०) इति उप्रत्यये तत्संनियोगेन वकारस्याकारे 'अतो लोपः' (६।४।४८) इति अकारलोपे 'उतश्च...' (६।४।१०६) इत्यत्र 'छन्दो वा वचनमित्युक्तत्वेन हेर्लुगभावे कृणुहीति छान्दसं रूपम् ॥ १ ॥

यो रेवान् । रेवानिति । रयिशब्दात् मतुपि सम्प्रसारणे पूर्वरूपत्वे 'छन्दसीरः' (८।२।१५) इति मतोर्वत्वे आद्गुणे रेवानिति रूपम् । तुरत्वरणे इत्यस्येति । 'इगुपधाज्ञाप्रीकिरः कः' (३।१।३१) इति क प्रत्यये रूपमेतत् । सिषक्तु इति । षच समवाय इत्यस्मात् 'बहुलं छन्दसि' (७।१।१०३) इति अभ्यासस्य इत्वे एतद्रूपम् ॥ २ ॥

मा नः । धुर्वी हिंसार्थ इति । अस्मात् 'क्तिच् क्तौ च संज्ञायाम्' इति क्तिच्प्रत्यये 'तितुत्र...' (७।२।९) इति निषेधादिडभावे 'उपधायाश्च' (७।१।१०१) इति उपधाया दीर्घत्वे 'राल्लोपः' (६।४।२१) इति वकारलोपे धूर्तिरिति रूपम् । प्रणगिति । प्रा पूरणे इत्यतः डनक् प्रत्यये प्रणगिति कृदन्तं पदम् ॥ ३ ॥

स घा । न रिष्यतीति । हिंसार्थात् रिषेः कर्मणि यकि व्यत्ययेन परस्मैपदे रिष्यति इति रूपम् ॥ ४ ॥

त्वं तम् । दक्षिणेसरलोदाराविति । अस्याऽर्थो न ज्ञातः ॥ ५, ३४ ॥

## अष्टादशसूक्ते द्वितीयोवर्गः

सदसस्पतिम् । आयासिषमिति । यातेर्लुङि तस्य सिपि तस्यामादेशे 'यमरमनमातां सक्च' (७।२।७३) इति धातोः सगागमे सिच इटि अयासिषमिति रूपम् ॥ ६ ॥

यस्मात् । इन्वतीति । इवि प्राप्तावित्यतः लटि शपि नुमागमे इन्वतीति रूपम् ॥ ७, ८ ॥

नराशंसम् । ब्राह्मणादिभिः आशंस्यत इति । अत्र शस्यत इत्येव पाठः । शंस्यत इति पाठस्तु प्रामादिकः । संश स्तुतावित्यस्मात्कर्मणि यकि 'अनिदितां हल उपधायाः क्ङिति' । (६।४।२४) इति नकारलोपस्यावर्जनीयत्वात् । नराशंस इति । 'अन्येषामपि दृश्यते' (६।३।१३७) इति दीर्घः । समाने लोप इति । (महा. व्या.) समाने शब्दे परतः लोपो भवतीति सूत्रार्थः ॥ ९, ३५, १८ ॥

## एकोनविंशतिसूक्ते प्रथमोवर्गः

प्रतित्यम् । भाष्ये 'यज्ञं प्रति प्रतीति यज्ञमिति शब्दः प्रथमप्रतिशब्दानन्तरमनुवर्तते । तस्य द्वितीयप्रतिशब्देन सम्बन्धः । ततश्च प्रसिद्धं शास्त्रोक्तलक्षणं यज्ञं प्रति यज्ञं प्रति आहूयस इत्यर्थः । टीकायां अध्वरं यज्ञं प्रति प्रतीति । अत्र यज्ञं प्रतीत्यनन्तरं यज्ञमिति यज्ञशब्दः उच्छिन्नः । ततश्चैवं टीकावाक्यपाठः । यज्ञं प्रति यज्ञं प्रतीति ॥ अवश्यं चैतदेवं विज्ञेयम् । 'नित्यवीप्सयोः' (८।१।४) इति सूत्रेण वीप्सायां गम्यमानायां द्विर्वचनस्य विहितत्वेन यज्ञशब्दे द्विर्वचनस्यावश्यंप्रयोज्यत्वात् । अन्यथा लक्षणप्राप्तद्विर्वचनाप्रयोगो दोषः स्यात् । ननु भाष्ये यज्ञ शब्दमात्रस्य द्विर्वचनप्रकृतत्वात् प्रतिशब्दस्य द्विर्वचनं कृत्वाऽनुवृत्तेन यज्ञशब्देन सम्बन्धः किमर्थमभिप्रेतः इत्यत आह । प्रतिरयमिति । अयं प्रतिशब्दः वीप्सायां कर्मप्रवचनीयसंज्ञः । ततश्च यज्ञशब्दस्य द्विर्वचनम् । द्वाभ्यामपि यज्ञशब्दाभ्यां प्रतिशब्दसम्बन्ध विधुरे यज्ञशब्दे द्वितीया न स्यादिति सूचयितुं प्रतिशब्दं द्विरुच्चार्य यज्ञ शब्दमनुवर्त्य सम्बन्धः कृत इति भावः । अनेन वृक्षं वृक्षं प्रति सिंचतीत्याद्युदाहरणेषु प्रतिशब्दस्य प्रत्येकं सम्बन्धो विवक्षित इति सूचितमिति बोध्यम् । एतेन- यज्ञ शब्द एव द्विर्वचनस्य भाव्यत्वात् भाष्यकारीयं प्रतिशब्दे द्विर्वचनमनुपपन्नम् । प्रतिरयं

वीप्सायां कर्मप्रवचनीय इति ज्ञापनस्य यज्ञ शब्दद्विर्वचनेनैव कर्तव्यत्वात् इति परास्तम् । द्विरुच्यमानशब्दद्वयेऽपि कर्मप्रवचनीय सम्बन्धो विवक्षित इति ज्ञापनार्थत्वात् ॥ १ ॥

नहि ॥ मह इति । महपूजायमित्यस्मात् अदन्तात् चुरादिण्यन्तात् 'एरच्' (३।३।५६) इति कर्मण्यच् प्रत्यये णिलोपे मह इति रूपम् ॥ २ ॥

ये महः । महः महत इति । मह शब्दात् पञ्चम्याः 'सुपां सुलुक्...' (७।१।३९) इति स्वादेश इति भावेन मह इत्यनूद्य महत इति व्याख्यातमिति बोध्यम् ॥ ३ ॥

य उग्रा । आनृचुरिति । अर्चपूजायामित्यस्माल्लिटि झेरुसि 'अपस्पृधेथामानृचुरानृहुश्चिच्युपेतित्याजश्रातास्श्रितमाशीराशीर्ताः' (६।१।३६) इति निपातनात् अर् इत्यस्य ऋइत्यादेशे द्वित्वे अभ्यासस्य उरदत्वे 'अत आदेः' (७।४।७०) इति अकारस्य दीर्घे 'तस्मान्नुड् द्विहलः' (७।४।७१) इति नुडागमे च आनृचुरिति रूपमिति भावः ॥ ४ ॥

ये शुभ्रा । रिशादस इति । 'बहुलं तणि' (महाभाष्ये) इति माशब्दस्य ह्रस्वत्वे मरुत् इति रूपम् ॥ ५, ३६ ॥

## एकोनविंशतिसूक्ते द्वितीयोवर्गः

ये नाकस्य । नाक इति । 'नभ्राड्...' (६।३।७५) इत्यादिना प्रकृतिभावविधानात् नलोपाभावः । दीव्यतेरिति । दिव् इत्यतः डि प्रत्यये रूपमेतत् ॥ ६ ॥

य ईङ्खयन्ति । मत्वर्थे त इति । 'पर्वमरुद्भ्यां तन्' इत्यनेन मत्वर्थे तन् प्रत्यय इति भावः ॥७॥

आ ये । तन्वन्तीति । तनु विस्तार इत्यतः लटि उप्रत्यये झस्यान्तादेशे यणादेशे तन्वन्तीति रूपम् ॥ ८ ॥

अभि त्वा । नि(र्मि) र्ममामीति । निर् पूर्वकात् मानिनिर्माण इत्यस्मात् श्लौ द्वित्वे अभ्यास ह्रस्वत्वे निर्ममामीति रूपम् ॥ ९, ३७, १९ ॥

*इति श्रीमत्सत्यनिधितीर्थश्रीचरण चरणाराधकश्रीमत्सत्यनाथयतिविरचिते ऋग्भाष्यटीकाप्रकाशे रूपावतारे प्रथमोऽध्यायः ।*

★★★